चौखम्भा-प्राच्यविद्या-ग्रन्थमाला संख्या ५



श्रीश्वैतायनीयं

# विशिष्टं न्यायशास्त्रम्

# तत्त्वप्रभावली

पण्डितधुरन्धर-

श्रीकृष्णवल्लभाचार्यस्वामिनारायणविरचितम्




चौखम्भा ओरियन्टालिया

पो० आ० चौखम्भा, पो० बाक्स नं० ३२

वाराणसी ( भारत )

चौखम्भा-प्राच्यविद्या-ग्रन्थमाला
संख्या ५



श्रीश्वैतायनीयं

# विशिष्टं न्यायशास्त्रम्

# तत्त्वप्रभावली

रचयिता
श्रीवैष्णवविद्वत्सार्वभौम,-दार्शनिकपञ्चानन,-षड्दर्शनाचार्य,-नव्यन्यायाचार्य,-सांख्ययोग-
वेदान्तमीमांसातीर्थ,-काव्यकुशलः पण्डितश्री-
**श्रीकृष्णवल्लभाचार्य्यः**




चौखम्भा ओरियन्टालिया
पो० आ० चौखम्भा, पो० बाक्स नं० ३२
वाराणसी (भारत)

CHAUKHAMBHA PRACHYAVIDYA GRANTHAMALA
NO. 5

# TATTVAPRABHĀVALĪ

( A Prominent Logic work based on Svetayan )

By

Pt. ŚRĪ KṚṢṆAVALLABHĀCĀRYA

( *Ṣaḍdarśnācārya, Navyanyāyācārya, Sāṁkhyayoga Vedāntācārya* )

CHAUKHAMBHA ORIENTALIA
P. O. Chaukhambha, Post Box No. 32
VARANASI ( INDIA )

# ॐ तत्त्वप्रभावल्या हार्दिकम्

श्रीगौतममूलकं न्यायशास्त्रं, कणादमूलकं वैशेषिकशास्त्रं, गंगेशमूलकं तत्त्वशास्त्रं, तन्मूलको नव्यन्यायः, एनमधीत्य दिगन्तविजयाः पण्डिताः प्रभवन्ति, एतद्युगे मीमांसावेदान्तसांख्ययोगसाहित्यव्याकरणादिग्रन्था न्यायसंभृताः, यत्र न्यायस्तत्र प्रगल्भविजयः, सर्वसम्प्रदायेषु न्यायप्रवेशः, न्यायग्रन्थरचनाऽपि परिष्कृतिं भजते, श्रीस्वामिनारायणसम्प्रदायेऽपि सुपरिष्कृतविशिष्टन्यायग्रन्थाऽस्तित्वार्थं मय्यन्तर्यामिप्रेरणाऽभवत्, ततस्तत्त्वचिन्तामण्यनुजा भगिनीरूपेयं तत्त्वप्रभावली मया परमेशसरस्वतीविद्यागुर्वादीनां कृपाभिर्विरचिता, पूर्वपूर्वतरपूर्वतमन्यायादिशास्त्राणां प्रसादरूपैषा भवत्यपि कारुकृत्यादिक्लृप्तनावत् श्रीस्वामिनारायणसम्प्रदायीयतत्तद्ग्रन्थगर्भगतपदार्थान् समाकृष्याऽऽधुनिकरीत्येयं विशिष्टक्लृप्तना समुद्भाविता, मया यथा न्यायसिद्धान्तमुक्तावल्याः किरणावली तथा तत्त्वमुक्ताकलापस्य च किरणावली लिखिता, तद्वत् तत्त्वप्रभावली तु मूलग्रन्थरूपा सारल्येन लिखिता, प्राचीनाऽवलम्ब्यर्वाचीनस्य सारल्यं भवत्येव, मन्येऽत्र तत्त्वजिज्ञासुभिर्नूतनं नूतनमपि विवेचनं तत्र तत्र लप्स्यते, नव्यदार्शनिकतत्त्वविचारात्मकोऽयं पदवाक्यप्रमाणतात्पर्यरसपरिशीलनपुलकितो न्यूनाऽधिकाऽऽवश्यकस्वीकाराऽनुगृहीतसम्मानो ग्रन्थो वर्तते, अयं प्रमेय-प्रमाण-प्रमिति-प्रमात्रात्मकखण्डचतुष्टयतनुको विद्यते, अत्र चतुर्दशपरिच्छेदाः—१–पदार्थनिरूपणम्, २–पदार्थसाधर्म्यम्, ३–द्रव्यनिरूपणम्, ४–गुणनिरूपणम्, ५–तत्तद्गुणनिरूपणम्, ६–ज्ञाननिरूपणम्, ७–तर्कनिरूपणम्, ८–नवप्रमाणनिरूपणम्, ९–विविधविप्रतिपत्तिप्रदर्शनम्, १०–अनुमानपरिच्छेदः सर्वकारणद्वारकरणोपकरणांगोपांगसाधनादिपरिष्कृतिप्रगल्भः, ११–शब्दपरिच्छेदः शक्तिलक्षणाव्युत्पत्तिप्रयोगाऽलंकारविध्यविधिशाब्दबोधादियावच्छाब्दाऽर्णवव्याप्तोऽस्ति, १२–प्रमितिपरिच्छेदः प्रमितीनां ज्ञाननां यावद्विधविभागैर्व्यवस्थानवतां चिच्चैतन्यपर्यन्तानां बाह्याऽऽन्तराणां वृत्तिसंवृत्यादिसमुपचारलेशनिह्नवशालिनां यावद्विविधविभागैर्विशदतमो विद्योतते, १३–प्रमातृविषये दार्शनिकानां पद्धतिभिश्चाऽऽत्मचिन्तनचमत्कृतिविभूतिकः, १४–जीवात्मेश्वरमायाब्रह्मपरब्रह्मात्मकतत्त्वानां वैशद्यवितरणपरायणः, चास्म्येतु सर्वसाक्षात्कारसूत्रसंवेशायनो वर्तते ।

अत्र द्वाविंशतिसंगतयः, अष्टौ पदार्थाः, दश द्रव्याणि, पञ्चत्रिंशत् गुणाः, षोडशकर्माणि, त्रिविधा अपि विविधाः शक्तयः, पंचाऽधिसंसर्गाः, जातय उपाधयो धर्माः, विशेषाः, पञ्चधाऽभावाः, एतत्तलातिस्पर्शिनो विचाराः, सर्वविधतत्त्वसंगतिकविविधतार्किकरीतिभिः सिद्धान्तिताः पदार्था उद्देशलक्षणपरीक्षणन्यायाऽऽयोजनादिभिः शुद्धीकृताः, षोडशपदार्था अपि तत्तत्प्रसंगाद्यैः प्रान्तस्वरूपेषु निरूपिताः, प्रामाण्याऽप्रामाण्ययोर्यावन्ति दार्शनिकानां मतानि तावन्ति निहितानि, विशिष्टविचारा आदृताः, ख्यातयोऽपि पञ्च-

त्रिंशत्स्वरूपाः सविप्रतिपत्तयस्तत्त्वनिर्णयफलोत्तरा अत्र विशदीकृत्य निहिताः, सत्समुच्चयख्यातिसिद्धान्तः श्रीस्वामिनारायणसम्मतोऽत्र प्रमापितः, अस्याऽभिधानं 'श्वैतायनीयं विशिष्टं न्यायशास्त्र'-मिति मया सुरक्षितम्, किम्बहुना यावद्बुद्धिवैशद्यं तावत्पदार्थवैशद्यमत्र वितरितम्, परं परमेश्वरं विनाऽन्यकृत-प्रस्थानास्तर्काऽप्रतिष्ठानेऽपि सुयुक्तिका मननार्हा भवन्तीति भगवन्तं संयमे समुपस्थानीकृत्य भगवन्मननमेत-न्मया कृतमिति वैदुष्याऽभिमतिक्षान्तिं याचे, मन्ये च विदुषां चतुर्विधसिद्धान्तस्नातकाऽन्यतमानां समुप-कारायाऽयं भविष्यन्नपि सुतरां साम्प्रदायिकानां हृदयंगमो भवितेति मद्रचितचतुश्चत्वारिंशत्प्रबन्धमण्डलाऽऽ-पूरकमेनं भगवति श्रीहरिकृष्णे सद्गुरुषु विद्यागुरुश्रीवामाचरणभट्टाचार्येषु श्रीदामोदरलालगोस्वामिषु समर्पितमेवाऽन्यविद्वन्मण्डलस्याऽतिप्रमोदाय तत्तत्समर्पणं करोमि—

**श्रीकृष्णवल्लभाचार्यः स्वामिनारायणः**

श्रीवैष्णवविद्वत्सार्वभौम,–दार्शनिकपञ्चानन,–षड्दर्शनाचार्य,

नव्यन्यायाचार्य,–सांख्ययोगवेदान्तमीमांसातीर्थ,–

काव्यकुशलः, श्रीसौराष्ट्रे जीर्णदुर्गवास्तव्यः ।

श्रीस्वामिनारायणमन्दिरम्,

जूनागढ, महागुजरात, सौराष्ट्र ।

# तत्त्वप्रभावल्या अनुक्रमणिका


पृष्ठं

मंगलम्, परमात्मनिरूपणप्रस्तावः, द्वाविंशतिसंगतयः। १
नित्यज्ञानानुमानानि, सकर्तृकत्वादौ स्वार्थपक्षपातादिशून्यत्वम्। २
अष्टपदार्थोद्देशादि, सादृश्यस्वत्वाद्यतिरिक्तपदार्थत्वाऽऽशंका, तेषां क्लृप्ताऽन्तर्भावः। ३
दशद्रव्योद्देशादि, द्रव्यत्वसिद्धिः, अव्याप्त्यादिस्वरूपाणि, लक्षणलक्षणम्। ४
अधिकद्रव्याऽऽशंका, सुवर्णप्लेटिनमरेडियमहीरकादीनां क्लृप्ताऽन्तर्भावः। ५
पञ्चत्रिंशद्गुणोद्देशादि, गुणत्वसिद्धिः, आशंकितस्थौल्यादिगुणानां क्लृप्ताऽन्तर्भावः, न्यूनताशंका-समाधानम्। ६,७,८
षोडशविधक्रियोद्देशादि, शंकिताऽऽधिक्यन्यूनत्वादिसमाधानम्। ९,१०
प्रामाणिकचेष्टाक्रियाया मण्डनम्, त्रिविधशक्तिसाधकनिदर्शनानि। ११
योगयज्ञप्रतिष्ठामन्त्रपाकादिजन्यशक्तिप्रकाराः, तत्र विशदता। १२,१३
पञ्चविधाः संसर्गाः, तत्सिद्धिप्रकाराः, सम्बन्धत्वेनाऽऽशंकिताऽन्यसमाधानम्। १४,१५,
पर्याप्तिसंसर्गः, जात्यादिधर्मसिद्धिः, उपाधिधर्माः, तत्र जातिप्रतिबन्धानि। १६,१७,१८
विशेषपदार्थस्वीकृतिः, तत्र युक्तयः, पञ्चधाऽभावपदार्थः। १९,२०,२१
अभावानामधिकरणात्मकवादिविचारः, सप्तपदार्थसाधर्म्यम्। २२,२३
न्यूनपदार्थसाधर्म्यम्, गुणादिसाधर्म्यम्, यथायथं साधर्म्यम्। २४
अभावसाधर्म्यम्, वृत्त्यनियामकत्वम्, द्रव्यारम्भकत्वादि। २५
द्रव्याणामन्तर्वर्गसाधर्म्यम्, अव्याप्यवृत्तिविशेषगुणवत्त्वादि। २६
कारणलक्षणम्, समवाय्यसमवायिनिमित्तलक्षणानि। २७
अन्यथासिद्धिलक्षणानि, गुणाश्रयनिर्देशः। पृथिवीलक्षणम्। २८,२९
पाकजगुणाः, पृथिवीविभागः, क्षणभंगुरवादपरमाणुपुञ्जवादादिनिरासः। ३०,३१
पार्थिवशरीरेन्द्रियविषयाः, शरीरत्वे जातित्वाऽभावः। ३२
सुवर्णहीरकादीनां पार्थिवत्वविचारः, जलविविधता, लक्षणानि। ३३,३४
जलविषयेषु मरुमरीचिकाजलादिविचारः। ३५,३६
तेजोविभागलक्षणादीनि, वायुविभागलक्षणादीनि। ३७,३८
त्रुटिप्रत्यक्षता, अवकाशप्रत्यक्षता, वायोः प्रत्यक्षताऽनुमानता च। ३९
आकाशलक्षणम्, आकाशसिद्धिप्रकारः, तद्विभुता, श्रोत्रमाकाशम्। ४०
कालनिरूपणम्, प्रलयादिव्यपदेशता, क्षणाद्याश्च। ४१
दिक्स्वरूपविभुत्वादि, तद्व्यपदेशलक्षणादि। ४२
जीवाऽणुत्वं, जीवात्मसिद्धिप्रकारः, परात्मानुमेयता, सगुणत्वादि। ४३,४४
शरीरात्मवादिनिरासः, इन्द्रियप्राणमनोमायाद्यात्मवादनिरासः। ४५,४६
क्षणिकविज्ञानात्मवादनिरासः, नित्यविज्ञानजीवात्मादिविचारः। ४७
आत्मनि भाट्टप्राभाकरमाध्यमिकसांख्यादिमतपूर्वपक्षनिरासादि। ४८
आत्मनो विभुत्वप्रतिबिम्बत्वमिथ्यात्वांऽशखण्डत्वादिनिरासः। ४९

प्रातिभासिकभेदनिरासः, आत्मनानात्वम् , परमात्मस्वरूपलक्षणादि । ५०
परमात्मनः सार्वज्ञ्यं वेदवक्तृत्वं प्रतिरूपनिवासित्वसच्चिदानन्दत्वसर्वाधारत्वसर्वशरीरित्वसर्वनियामकत्वादि । ५१,५२
तद्वेदनभक्त्यादिभिरपुनरावर्तनमुक्तिः, दिव्यस्वरूपम् । ५३
तमसो द्रव्यत्वम् , तत्र युक्तयः, तमसस्त्रिविधता । ५४
मायास्वरूपलक्षणादि, महत्तत्त्वमनोरूपतादि । ५५,५६
आत्मनो ज्ञानशक्तिप्रसरणम् , मनसि मीमांसकमतम् , प्रतिबिम्बविचारः । ५७
मायायाः स्वाप्नव्यपदेशभाक्त्वम् , अविद्यादिमतनिरासः । ५८
गुणसाधर्म्यादि, सर्वद्रव्यगुणत्वम् , तत्तद्द्रव्यगुणत्वम् , मूर्तवृत्तिगुणत्वम् , अमूर्तवृत्तिगुणत्वम् , अनेकवृत्तिगुणत्वम् , एकैकवृत्तिगुणत्वम् । ५९
विशेषगुणत्वम् , सामान्यगुणत्वम् , द्वीन्द्रियगोचरगुणत्वम् , एकैकेन्द्रियगोचरगुणत्वम् , अतीन्द्रियगुणत्वम् । ६०
अकारणगुणाऽजन्यगुणत्वम् , पाकजगुणत्वम् , विजातीयाऽसमवायिकारणजन्यगुणत्वम् , अपाकजगुणत्वम् , असमवायिसजातीयगुणजन्यगुणत्वम् , अशमवायिहेतुगुणत्वम् । ६१
आत्मविशेषगुणेष्वन्यथासिद्धताविचारः निमित्तकारणगुणत्वम् , द्विविधकारणगुणत्वम् , क्रियाजन्यगुणत्वम् , व्याप्यवृत्तिगुणत्वम् । ६२
अव्याप्यवृत्तिगुणत्वम् विशेषपाकजगुणत्वम् , संयोगजगुणत्वम् ज्ञानापेक्षोत्पत्तिकगुणत्वम् , अस्वसमानजातीयाऽऽरम्भकगुणत्वं, स्वसमानाऽसमानजात्यारम्भकगुणत्वम्, सविषयकगुणत्वम्, वैधर्म्यनिर्देशः ।। ६३
गन्धरसरूपनिरूपणम् , तद्विभागनित्याऽनित्यत्वादि । ६४
कर्बुररूपं, स्पर्शनिरूपणम् , स्पर्शविभागादि । ६५
पीलुपाकवादिकाणादमतम् , तत्र विभिन्नाः क्षणप्रक्रियाः । ६६
पिठरपाकविचारः, शब्दस्य संख्यायाश्च निरूपणम् । ६७,६८
व्यासज्यवृत्तिसंख्यानिरूपणम् , अपेक्षाबुद्धिजन्यसंख्यानिरूपणम् । ६९
अपेक्षाबुद्धिस्वरूपम् , परिमाणगुणतद्भेदादिनिरूपणम् । ७०
एकावयवविश्लेषेऽपि अवयविनाशइतिविचारः, पृथक्त्वगुणनिरूपणम् । ७१
पृथक्त्वस्याऽन्योन्याभावाऽनन्तर्भूतत्वविचारः, अव्याप्यवृत्तिसंयोगनिरूपणम् । ७२
विभागगुणतद्भेदादिनिरूपणम् , विभागजवीभागांऽगिकारविचारः । ७३,७४
दैशिककालिकपरत्वाऽपरत्वविचारः, परत्वाऽपरत्वयोः स्वतन्त्रगुणत्वम् । ७५,७६
गुरुत्वलघुत्वनिरूपणम्, स्वच्छत्वद्रवत्वनिरूपणम् । ७७
स्नेहरूक्षत्वनिरूपणम् , रजःसत्त्वतमोगुणनिरूपणम् , रजआदीनां व्याप्यवृत्तित्वम् । ७८,७९
धर्मस्याऽधर्मस्य च निरूपणं, तयोः पुद्गलरूपत्वादिनिरासः । ८०,८१
सुखस्य दुःखस्य च निरूपणम् , तयोर्न मिथोऽभावात्मकत्वम् । ८२
द्वेषस्य, प्रवृत्तिनिवृत्तिजीवकत्रिविधप्रयत्नस्य च निरूपणम् । ८३
प्रवृत्तिकारणानि, मीमांसकसम्मतविध्यर्थः, विध्यर्थे विशेषविचारः । ८४
यजेतेत्यत्र विध्यर्थनिदर्शनम् , प्राभाकरमतनिरसनं, विध्यर्थे सिद्धान्तः, बलवदनिष्टाऽननुबन्धित्वस्याऽपि विध्यर्थत्वे विचारः । ८५

प्रवृत्तिं प्रति बलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वज्ञाननिष्ठं कारणत्वम्। अत्र भाट्टमण्डन-मिश्रादिमतानि। विश्वजिन्न्यायार्थः। स्वर्गादिफलम्॥ ८६
अर्थवादतापण्डापूर्वाद्यकल्पनम्, रात्रिसत्रन्यायविचारः, नव्याचार्यमतम्, कलंजं न भक्षयेत्, श्येनेनाऽभिचरन् यजेत, इत्यादिनिदर्शनेन विध्यर्थसमाधानम्, हिंसात्वविचारः। ८७,८८
हिंसायाः कल्पान्तरता, क्रियाया हिंसात्वम्, विध्यर्थे उदयनाचार्यमतम्। ८९
निवृत्तितत्कारणनिरूपणम्, जीवकयत्ननिरूपणम्, इच्छातद्विशेषभेदादिनिरूपणम्। ९०
परमेश्वरस्य नित्येच्छाज्ञानयत्नादिगुणवत्त्वं, निद्रानिरूपणम्। ९१
वासनाभावनादिविभागः, वेगस्थितिस्थापकनिरूपणम्, भयनिरूपणम्। ९२
मोह-शौर्य-ज्ञाननिरूपणम्, ज्ञानप्रभेदाः, स्मृतिः। ९३
स्मृतिकारणमनुभवः, स्मरणस्य सविकल्पकता, प्रमात्वमप्रमात्वम्। ९४
भ्रान्तिनिर्वचनं तद्विचारः, दोषाणां गुणानां च प्रदर्शनम्। ९५
प्रमात्वादेः स्वतोग्राह्यत्वादिविचारः, निर्विकल्पकस्य प्रमात्वं, न्यायमतप्रदर्शनम्। ९६
सांख्यमतं, पूर्वोत्तरमीमांसामतं, कुमारिलभट्टमतम्। ९७
मुरारिमिश्रमतं, वेदान्तिमतं, शांकरमतं, सौगतमतं, तदनुपपत्तिः, प्रभाकररीत्याऽख्यातिः। ९८
न्यायमीमांसकीयमतेन विज्ञानत्वपक्षकविप्रतिपत्तिः, विधिनिषेधप्रसिद्ध्यादिविचारः। ९९
प्राभाकराऽनुमानं, नैयायिकसामान्यमतं, तत्र प्रयोगाः, उपपत्तयश्च। १००
निम्बार्कस्य भेदाऽभेदस्वीकारात् सत्यरजततादात्म्याऽन्यथाख्यातिमतम्। चिन्तामणिकारस्य धर्मभ्रमात् अभिनवाऽन्यथाख्यातिः, नवीनरजतोत्पत्तेः मुरारिमिश्रमते सत्ख्यातिः, रामानुजमते स्वल्पावयवं विरलं रजतं सदिति सत्ख्यातिः, स्वामिनारायणमते स्फीतं रजतं त्रिकसमुच्चयितमिति १०१
सत्समुच्चयितख्यातिः। १०२
वाल्लभमतं, शांकरमतम्, उदयनाचार्यमतम्। १०३,१०४
अनिर्वचनीयत्वपूर्वपक्षः, उदयनाऽऽचार्यमतविशदतादि, योगाचाराऽऽत्मख्यातिविवेचनम्। १०५
वैभाषिकमते आत्मधर्मख्यापनादात्मख्यातिः, सौत्रान्तिकमते रजतस्य, ज्ञानधर्मत्वात् ज्ञानात्मख्यातिः, माध्यमिकस्य सर्वस्य शून्ये पर्यवसानात् असत्ख्यातिः, तत्तन्मतभेदप्रदर्शनम्। १०६
माध्वानामसत्ख्यातिः, कुमारिलस्याऽसत्संसर्गख्यातिः, वाचस्पतिस्तामेवाऽन्यथाख्यातिमाह।
जैना असत्ख्यातिमाहुः, विज्ञानभिक्षुः संसर्गशून्यां सदसत्ख्यातिमाह, तद्विप्रतिपत्तिः, प्रमायाः करणं प्रमाणं, दश प्रमाणानि। १०७
सविकल्पकनिर्विकल्पकभेदेनाऽनुभवद्वैविध्यं, सविकल्पकनिर्विकल्पकस्वरूपलक्षणे, आद्यज्ञानस्यापि विशिष्टज्ञानत्वम्। १०८
न्यायमतादौ सविकल्पकम्, सविकल्पकं प्रमाऽप्रमोभयम्, अप्रमायाः संशयविपर्ययस्वप्नतर्कभेदाः, संशयस्वरूपलक्षणे, संशयकारणानि च। १०९
निश्चयस्य लक्षणम्, विपर्ययलक्षणम्, स्वाप्नाऽनुभवकारणानि, तर्कनिरूपणम्, आहार्यलक्षणम्। ११०,१११
तर्कस्य द्वैविध्यं, तर्ककारणानि, तर्कस्याऽऽत्माश्रयादिरूपाणि, असत्तर्के दोषत्रैधाऽन्यतमत्वं, दोष-शून्यस्य सत्तर्कत्वम्। ११२
११३
तर्कस्य प्रतिबन्धकत्वमपि, फलमपि, तर्कव्यूहप्रदर्शनम्, व्याघातस्वरूपम्। ११४
उपस्थिति-लाघव-गौरवोत्सर्गविनिगमनाविरहाद्या अपि तर्कसमाः। ११५
अनुभवो नवधा, तत्करणान्यपि नवधा, स्मृतिकरणमपि दशमी प्रमा। प्रत्यक्षप्रमा सप्तविधा।

गन्धरसशब्दस्पर्शतद्धर्मतत्संसर्गतदभावादिप्रत्यक्षम्, आत्मतद्धर्मसंसर्गाऽभावाद्या मानसगोचराः, आत्मगुणतच्छक्तिधर्मतदभावाद्या अपि मनोग्राह्याः, अदिव्या अस्मद्ग्राह्या दिव्या योगिमुक्तादिग्राह्याः। ११६
द्रव्यगुणकर्मधर्मसंसर्गाऽभावशक्तिप्रभृतिग्रहे यथायथं संयोगाद्याः सन्निकर्षाः, संयोगः समवायः स्वरूपः तादात्म्यः विशेषणताद्याश्च योजनया द्वाररूपाः सम्बन्धा बहवः, रूपरूपत्वाद्यभावादिप्रत्यक्षेऽपि रूपं तादात्म्यादिना कारणमिति विचारः। ११७
सन्निकर्षतया षोडशाऽधिकाः, संसर्गतया सप्त, ज्ञातताविचारः। ११८
इन्द्रस्य शक्तयः इन्द्रियाणि, अलौकिकसंसर्गाश्चत्वारः। ११९
दिव्याश्चापि षड्विधाः संयमाद्याः सन्निकर्षा उक्ताः, प्रत्यक्षादिप्रमाणानि वर्णितानि। १२०
उपमानत्रैविध्यं, गंगेशोपाध्यायमतादीनि, रघुनाथादिमतानि, मीमांसकमतम्। १२१
अर्थापत्तिः प्रमाणं, दृष्टार्थापत्तिः, श्रुतार्थापत्तिः, अभिधानाऽनुपपत्तिः, अभिहिताऽनुपपत्तिश्च। १२२
अनुपलब्धिप्रमाणं, संभवप्रमाणम्, ऐतिह्यप्रमाणम्। १२३,१२४
चेष्टाप्रमाणं, तद्द्वैविध्यं, ज्ञानयाथार्थ्याऽवबोधार्थं विविधा विप्रतिपत्तयः। १२५,१२८
अनुमानप्रमाणं, तत्फलं, तत्र द्वारं, अनुमितिनिवर्चनानि, लिंगपरामर्शस्य व्यापारत्वं, व्याप्तिस्मरणस्याऽनुमितिकरणत्वं, संभावनया नाऽनुमानगताऽर्थता। १२९,१३०
साक्षात्त्वोपपत्तिविचारः, व्याप्तिरचनाऽनैक्यं, पञ्चलक्षणानि, लक्षणद्वयं, व्याधिकरणधर्मेण व्याप्तिलक्षणं, लक्षणान्तराणि। १३१,१३२
अनौपाधिकसम्बन्धात्मकव्याप्तिघटकोपाधित्वविवेचनम्, व्यतिरेकयोरपि व्याप्तयः, व्याप्तिपरिष्काराः। १३३
अवच्छेदकत्वस्वरूपविवेचनम्, अनतिरिक्तवृत्तित्वात्मकत्वादिविचारः, पारिभाषिकाऽवच्छेदकत्वपरिष्काराः। १३४
विशेषाऽभावकूटात् सामान्याभावस्य पृथक्त्वम्। १३५
विशेषव्याप्तिस्वरूपाऽनुसरणं, सोपाधौ त्वन्यूनवृत्तित्वम् अवच्छेदकत्वम्। १३६
व्याप्तिग्रहोपायनिरूपणम्, सहचारादिदर्शनस्य व्याप्तिग्रहोपायत्वम् अत्र बहवो विकल्पाः, व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्रहोपायः, तर्कस्तत्फलं तल्लक्षणं तत्प्रकाराश्च। १३७,१३८
तर्कस्य विषयपरिशोधकत्वं, व्याप्तिग्राहकत्वं, व्यभिचारशंकानिवर्तकत्वं च, आत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थादिविवेचनम्। १३९
इष्टापत्तिर्मूलशैथिल्यं विपर्यये तर्ककोटिमात्राऽपर्यवसानमिति तर्के त्रयो दोषाः। क्रियाव्यापारप्रवृत्तिव्याघातकं शंकात्रयम्। १४०
व्यभिचारशंकाविरहोऽनुकूलतर्कश्च स्वरूपसन्नेव व्याप्तिग्रहोपायः, पुनस्तर्कान्तराऽपेक्षत्वेऽनवस्थादि, नाऽन्यथा। अन्योन्याभावगर्भिता अपि व्याप्तयः, सायान्यलक्षणाया अपि व्याप्तिग्राहकत्वम्। १४१,१४२
सामान्यलक्षणाया मण्डनम्, उपाधिनिरूपणं, पक्षेतरत्वादि निदर्शनम्, दूषकत्वादिविचारः, उपाधीनां समविषमव्याप्तत्वादि। १४३
उपधित्वपरिष्कारः उपाधीनां वैविध्यम्, उपाधेर्हेत्वाभासत्वम्। १४४,१४५
उपाधिर्निश्चितः सन्दिग्धश्च स्फुटतयोपपादितः, तत्र तत्रोन्नायकत्वम्। १४६
उपाध्याभासप्रदर्शनम्, पक्षताया निरूपणम्, नव्यमतेन पक्षता। १४७
सिद्धिनिष्ठं विरोधित्वं, तृतीयलिंगपरामर्शः कारणम् १४८

मीमांसकीयज्ञानद्वयस्याऽनुमितिकारणत्वमिति पूर्वपक्षः, परामर्शस्याऽऽवश्यकतेति सोपपत्तिकं मण्डनम्, तत्र युक्तयः। १४९
लिंगमात्रस्य हेतुत्वाऽनुपपत्तिः, लिंगज्ञानस्य त्रिविधलिङ्गविषयकत्वम्। १५०,१५१
केवलान्वयी केवलव्यतिरेकी अन्वयव्यतिरेकी हेतुरिति तत्र विचारः, व्यतिरेकव्याप्तेस्तु व्यतिरेकगर्भकतयाऽपि अन्वयव्याप्तित्वमेव, सपक्षवत् विपक्षस्यापि दृष्टान्तत्वेन ग्रहणात्, व्यतिरेकविषयकाऽनुमानानामुपन्यासो विशदतादि च। १५२,१५३
व्यतिरेक्यनुमानमण्डनम्, अर्थापत्तिस्वरूपविभागादि, पृथक्प्रमाणता च। १५४
विषयेषु प्रमाणसांकर्येऽपि स्वस्वविषये स्वतन्त्रप्रामाण्यमिति। अत्र निदर्शनानि। १५५
स्वार्थपरार्थानुमानयोः परार्थे तत्र पञ्चावयवन्यायप्रयोज्यत्वम्। १५६
प्रतिज्ञाहेतूदाहरणोपनयनिगमनानां मध्ये प्रतिज्ञात्वविवेचनम्, लिङ्गलक्षणादि, दृष्टान्तलक्षणादि। १५७,१५८
उपनयलक्षणादि, निगमनलक्षणादि, स्वार्थाऽनुमानेऽवयवाऽप्रयोगः, पक्षसत्त्वादिपञ्चरूपाणि, हेत्वाभासत्वनिर्वचनम्। १५९
व्यभिचारदोषस्य साधारणाऽसाधारणाऽनुपसंहारित्वविभागः, साधारणदोषलक्षणफलादि, असाधारणदोषलक्षणफलादि, अनुपसंहारिदोषलक्षणफलादि। १६०
विरोधदोषलक्षणफलादि, सत्प्रतिपक्षदोषलक्षणफलादि, सत्प्रतिपक्षे विविधमतानि, अनेकाऽसिद्धिदोषस्वरूपादि। १६१,१६२
व्याप्यत्वाऽसिद्धिलक्षणादि, उपाधिस्वरूपाणि, तन्निदर्शनानि। १६३,१६४
बाधदोषतत्फलतद्विभागादि, हेत्वाभासानां सदुत्तरत्वोपपत्तिः, त्रिविधकथायां वादे षट्पक्ष्याः प्रयोगाः, षट्पक्ष्यन्तरम्। १६५,१६६
वादस्वरूपविशदता, जल्पः, वितण्डा, त्रिविधं छलम्। जात्युत्तराणि चतुर्विंशतिः, तत्स्वरूपाणि, निग्रहस्थानानि। १६७तः१७२
निग्रहस्थलानाम् असाधकतासाधकत्वम्, दृष्टान्तानि। १७३
चतुर्विधसिद्धान्तविशेषस्वरूपोपपत्तिः, दृष्टान्तस्वरूपम्, प्रयोजनस्वरूपम्, त्रिक्षणाऽवस्थायिबुद्धिविवेचनम्। १७४
विषयता ज्ञानगताऽपि ज्ञाननिष्ठविषयितानिरूप्या च यथार्थविषयविषयिवृत्तितामतीति सा ज्ञानयाथार्थ्यनिवेदिनीति विवेचनम्। १७५
अत्र बह्व्यो युक्तयः, प्रकारताविशेष्यतादितथाविधविचारः। १७६,१७७
अभावः, नञर्थाऽनैक्यम्, गुरुधर्मस्याऽप्यवच्छेदकत्वम्, प्रतियोगितावच्छेदकतादिविचारः। १७८,१७९
नञार्थो निवर्तनाऽपि, विकल्पपर्युदासविरोधनिषेधेतरताद्यर्थाः अर्थानां व्यवहारानुसारजीवनम्, केवलान्वयित्वेशंकासमाधानम्, उपपत्तिः, केवलान्वयित्वोपपत्तिपरिष्कारादिः। १८०,१८१
पर्याप्तिनिवेशप्रकाराः, भेदसत्यत्वं, मिथ्यात्वबाधादि, षड्विधतात्पर्यवत्ताविचारः, अभेदतात्पर्यभंगः। १८२,१८४
भेदाऽभेदश्रुतीनाम् अविरोधः, अवस्थाभेदः, अपृथक्सिद्धतादात्म्यं, पञ्चदशभेदप्रदर्शनम्, पञ्चदशतत्त्वस्वरूपाणि। १८५
परमात्मनिरूपणं, सकर्तृकत्वादिविचारः, तटस्थलक्षणम्, अनुमाने शंकासमाधानादि, विशिष्टस्य कारणत्वं, विशिष्टस्य च कार्यत्वम्, व्याप्तिग्रहादिसुकरत्वम्, शरीरिणः परमात्मनः कार्यसमर्थत्वम्। १८६,१८७
परिच्छिन्नत्वाशंकासमाधानानि, व्यापकत्वोपपादनम्, संकल्पादिभिर्व्यष्टिसमष्टिसृष्टिकर्तृत्वोपपत्तिः, समूहितकारणभावेन कार्यजननम्। १८८

साध्यतावच्छेदकत्वादिविचारः, नित्यज्ञानादिमत्कर्त्रनुमितेर्निराबाधत्वम् , तत्रोत्थतर्काणामाभासत्वकथनम् , लाघवसहकारित्वेन सृष्ट्येककर्तृकत्वसिद्धिः, भ्रान्तिज्ञस्य न भ्रान्तत्वम् , क्रमिकाऽदृष्टादीनां समवधानसत्त्वम् । १८९,१९०

कार्याद्यनुकूलाऽसंख्याऽनन्ताऽचिन्त्यशक्तिमत्त्वमपि, शक्तिसाधकयुक्तयः । १९१

अभावस्य कारणत्वाऽनुपपत्तिः कारणत्वेऽपि वा शक्तेर्निष्प्रत्यूहत्वम् , संसर्गाऽभावहेतुत्वाऽपेक्षयाऽपि शक्तिनिष्ठहेतुत्वं सुवचम् । १९२

प्रतिबन्धकाऽभावस्याऽपि शक्तिसाहाय्यकत्वेन हेतुत्वम्, यद्वा प्रतिबन्धकतावच्छेदिका जनकतावच्छेदिका वा सती शक्तिः कारणम् , सर्वत्र व्यापिका शक्तिः, कार्याऽयोगव्यवच्छेदस्य नियतपूर्ववर्तित्वस्य सामग्रीरूपस्य सहकारिविशिष्टस्य वा कारणत्वस्य शक्तौ विश्रामः, अर्थापत्त्या संस्कारैश्चाऽपि सत्फलायाः शक्तेः सिद्धिः । १९३

वेदमन्त्रेऽपि शक्तेर्वर्णनात्, सहजाः शक्तयोऽपि कारणोद्भाव्या बहुरूपिण्यो भवन्तीति । १९४

कारणलक्षणं, कारणत्रैविध्यादि, अपवर्गस्वरूपं, तत्राऽनेकमतानि, मोक्षाऽधिकारित्वं, भक्त्या मुक्तिरिति, साकारताऽनुभवः । १९५ तः १९८

शब्दस्वरूपलक्षणादीनि, नित्यत्वव्यापकत्वादिशंकासमाधानानि, संकेतस्याऽपि शाब्दबोधपरिष्काराः, वाच्यत्ववाचकत्वपक्षपरिष्कारवैशद्यम् । १९९,२०१

शक्त्या लक्षणया वा बोधरीतयः, शक्तिग्रहजनकानां निरूपणम् । चतुर्विधा शक्तिः, सर्वनामपदानां शक्तयः, समासकृदन्ततद्धितानां पदानां शक्तयः । २०२,२०३

अनुमाप्रमाकारणेभ्यः शाब्दप्रमाकारणानां भिन्नत्वम् , शब्दप्रमाणतोपपत्तयः, प्रकृतिप्रत्ययनिपातविकरणाऽऽगमाऽऽदेशानां लकाराणां विभक्तीनां शक्तिमत्त्वस्य प्रदर्शनम् , अत्र न्यायमीमांसाकोशकारमतानि, विभिन्नप्रत्ययादीनां शक्यार्थाः । २०४,२०७

शाब्दबोधः सखण्डोऽखण्डश्च, न्याये प्रथमान्तार्थमुख्यविशेष्यकः, व्याकरणे धात्वर्थमुख्यविशेष्यकः, मीमांसायाम् आख्यातार्थमुख्यविशेष्यकः शाब्दबोधः, विभक्त्यर्थाः, अव्ययार्थाः । २०८

क्त्वान्तल्यबन्ततुमन्तपदार्थाः, अव्ययार्थाः, नामधातुप्रातिपदिकार्थाः, क्रियाविशेषणार्थाः, आधुनिकसंकेतः, मीमांसकानां वाक्यमपि लक्षकम् , आलंकारिकाणामपि तथा । २०९,२१०

समासानां समुदायशक्तत्वम् , व्यंजना शक्तिः, अभिधा शक्तिः, मीमांसकाः पदनित्यत्ववादिनः, कुमारिलप्राभाकरमतानि । २११

सर्वपदैकपदयत्पदतत्पदेदमेतददःस्वपदैकपदादिशक्यार्थप्रदर्शनम् । २१२

मीमांसकानां कुब्जाशक्तिः, मण्डनमिश्रप्राभाकरादिमतानि, धर्माऽधर्मनिरूपणम् , न्यायमीमांसकवैष्णवजैनादिमतानि । २१३

लौकिकवाक्ये लिङादिवाच्यार्थः, वैदिके तु व्यापारे मुग्धाकाराशक्तिः, मण्डनमिश्रपार्थसारथितार्किकमीमांसकमतानि, विध्यर्थः, प्राशस्त्यविशेषवाचकोऽर्थवादः, लिङ्त्वांऽशार्थः शब्दभावना, आख्यातार्थः प्रयत्नः, व्यापारोऽपि, अधिकारी लाक्षणिकः, व्यापाराण्यदृष्टानि लक्ष्याणि । २१४

शब्दान्तराऽभ्याससंख्यासंज्ञागुणभेदप्रकरणान्तरैः कार्यभेदैर्भावना भिन्नाः, वेदत्वं विधित्वं मन्त्रत्वम् , विधिप्रकरणे निषेधः पर्युदासो विध्यनुगुणः । सोमेन, उद्भिदा, चित्रया, श्येनेन, वैश्वदेवेन, इति तत्र तत्र पदे यथायोगार्थं लक्षणावृत्तिः, प्रशंसानिन्दापरकृतिपुराकल्पात्मकोऽर्थवादः । २१५

गुरुमते भट्टमते विध्यर्थः, यागरूपं, लक्ष्यं द्रव्यं देवता च, क्वचिद्विधिनाऽङ्गत्वज्ञापनम् , आक्षेपपदं लाक्षणिकम् , , प्रकृतिविकृतिप्रकरणमहाप्रकरणसंदंशन्यायसन्निपत्योपकारकाऽऽरादुपकारकादिनिर्वचनम् , क्रमः, अपच्छेदन्यायः, नियमविधिः, परिसंख्याविधिः, यज्ञीयशब्दार्थवैशद्यम् । २१६

यज्ञे कर्मपरकोपकरणपरकसाधनपरकद्रव्यपरकदेवतापरकपर्वपरकभूतभौतिकपरकमन्त्रस्तोत्रशस्त्रसदस्यशालामिश्रणाऽनुष्ठातृग्रहसदनहोमसंस्थाहविष्येष्टयादिपरकशब्दानां शक्यलक्ष्यार्थवैशद्यम् । २१७,२१८

सौत्रामणीराजसूयसोमाऽश्वमेधपुरुषमेधसर्वमेधगवायनादिसत्रविशेषकर्म, धातुशब्दप्रत्ययकारकादिविशेषार्थाः, विभक्तिधात्वंशतद्धितकृत्कप्रभृत्यर्थाः, प्रथमाद्यर्थाः । २१९

कारकलक्षणम्, सम्बन्धस्याऽकारकत्वम्, क्रियाविशेषयोगे कारकार्था षष्ठीति, अन्वयबोधः शाब्दबोधः, आकांक्षाप्रयोज्या अन्वयविषयता, भेदोऽभेदश्चेति द्वेधाऽन्वयः । २२०

विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वम्, तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः, वेदाः प्रमाणमित्यादौ असमानवचनकप्रयोगः प्रमाणम्, विरुद्धसंख्याया अविवक्षितत्वाऽभावः, प्रमाणाऽभिन्नवेदा इति बोधः, एकत्वस्य प्रमितिकरणत्वेऽन्वयात्, परम्परया त्वन्वयाऽभावः, एवमन्यप्रयोगाऽन्वयबोधोपपत्तिरपि दर्शिता । २२१

व्युत्पत्तिसिद्धिनत्रर्थप्रदर्शनम्, तत्र तत्र च शाब्दबोधाः । २२२

उपस्थितेः कारणत्वम्, तत्र तत्र चाऽभेदाऽन्वयशाब्दबोधाः । भेदसम्बन्धेनाऽन्वयबोधे उपस्थितेः कारणताप्रदर्शनम् । २२३

न कलञ्जं भक्षयेदित्यत्र मीमांसकगुरुमतेन बोधः, न्यायमतेन प्रयोगान्तरेषु बोधाः । २२४

षष्ठ्यर्थः स्वत्वम्, पुरुषो न राज्ञ इति राजस्वत्वाऽभाववान्पुरुष इति बोधः । आख्यातस्याऽऽश्रयत्वे निरूढा लक्षणा, योग्यताज्ञानं कारणम्, अभाववति लक्षणाऽनौचित्यम्, एकद्विबहुवचनानाम् एकत्वद्वित्वबहुत्वत्वाऽवच्छिन्नेषु शक्तिः, यद्वा संख्यायां प्रकृतेर्लक्षणा, लाघवाच्छक्तिरपि, प्रादयो द्योतकाः । २२५

पर्याप्तिः स्वरूपसम्बन्धविशेषः, पर्याप्तेः संसर्गतया भाने तत्र तत्र शाब्दबोधाः, घटौ—इत्यादौ चैत्रकर्मकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसम्बन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नः, द्वित्वादिमत्त्वं तु प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसम्बन्धेन, बहुवचनकर्मके बहुत्वादिमत्त्वमिति । संख्याः प्रकृत्यर्थतावच्छेदकगताः क्वचित् प्रतीयन्ते, क्वचित्प्रकृत्यर्थघटादिगताः प्रतीयन्ते, त्रिशतं गाव इत्यत्र एकत्वविशिष्टशतत्वत्रिकावच्छिन्ना गाव इति बोधः, शतादिशब्दशक्तिः शतत्वादिसंख्यावच्छिन्ने संख्येये दशादिशब्दा विंशतिशतसहस्रादिशब्दाः संख्यावच्छिन्नवाचका इत्यादि निरूपितम् । २२६

आख्यातैकवचनस्यैकत्वे शक्तिः, तिबादिरपि संख्याबोधकः, कर्तरि प्रत्ययस्थले कर्मत्वाऽनभिधानम्, कर्मणि प्रत्ययस्थले कर्तृत्वानभिधानम्, आख्यातद्विवचनबहुवचनयोः संख्याबोधकत्वम् रूपरसावित्यत्र अपेक्षाधीविषयत्वं द्विवचनबोध्यम्, कर्तृत्वकारकलक्षणम् । २२७

उक्तत्वम्, अनुक्तत्वम्, शक्तिः कारकं, कर्मतामात्रशक्तिः । २२८

धात्वर्थे कर्तृत्वस्याऽन्वयबुद्धौ नाम्नस्तृतीया, कर्मत्वस्य द्वितीया, उत्सर्गतो हेतुः, सामान्यविधिरुत्सर्गः, 'सुपानः सोमो मया' इत्यादौ कर्तृत्वस्य, 'तेमनं पचन्ति'त्यादौ कर्मत्वस्य धात्वर्थे षष्ठीं विनैवाऽन्वयः, क्वचित्कर्मत्वे क्वचित्कर्तृत्वे क्वचिदुभयोरपि षष्ठीति विशदता । भावक्तान्तस्य धात्वर्थे कर्मत्वस्य कर्तृत्वस्य वाऽन्वये षष्ठ्यपि । २२९

प्रथमादीनां विभक्तीनामेकत्वादयोऽर्था न धात्वर्थे प्रकारीभूय भासन्ते, किन्तु प्रकृत्यर्थे, शलाकापरीत्यत्र नाम्नोऽर्थे प्रकारीभूतमेकत्वम्, सम्बोध्यत्वमिव प्रशंस्यत्वमपि सम्बुद्धिसुपामर्थः, कारीरीमनु वृष्टिरित्यत्र अनुहेतुतावाचि, ऋते इत्यस्याऽत्यन्ताऽभावोऽर्थः। २३०

उपर्युपरि अम्लानां मद्यमित्यत्र अतिशयाऽर्थः। अभितः सर्वावच्छेदार्थकः। खण्डशो वृत्तिः शक्तिः। मासं सुप्यते इत्यत्र द्वितीयार्थोऽभिव्याप्तिः। तृतीयार्थो विकृतत्वं वृत्तिमत्त्वं च। सहाऽर्थः कालीनत्वमपि, पुत्रेण सह गतिरित्यत्र सहस्य पुत्रकर्तृकगतिसमानकालीनत्वे निरूढा लक्षणा। २३१

तृतीयाया हेतुत्वं ज्ञापकत्वम् अभेदः अवच्छेद्यत्वम् अधिकरणत्वम् इत्यप्यर्थाः, चतुर्थ्याः प्रीत्युद्देश्यकत्वाद्यर्थाः, हविस्त्यागः, स्वधास्वाहार्थे चैत्राय सुखमित्यत्र आधेयत्वार्था चतुर्थी। २३२

पक्तुं व्रजतीत्यत्र समानकर्तृकत्वविशेष्यीभूतक्रियाकर्तृत्वं तुमर्थः, प्राणभावक्षणोत्पन्नत्वादिः, पूर्वत्वार्थः, घटात्पृथगिति पञ्चम्या अवधित्वम्, पञ्चम्यर्थः क्वचित् स्वरूपसम्बन्धरूपः, स्वत्वं समवेतत्वाद्यर्थकम्, भावे सप्तमी, अनेकार्था सप्तमी। २३३

क्रियाजन्यफलशालि कर्म, फलमात्रं कर्मप्रत्ययार्थः, धातोरेव फललाभे वृत्तिरेव द्वितीयार्थः, अनेकार्था द्वितीया, द्विकर्मकप्रयोगे दुह्यते गौः क्षीरमित्यत्र क्षीरनिष्ठविभागावच्छिन्नक्षरणानुकूलव्यापाराश्रयो गौरिति बोधः, विभागक्षरणव्यापारेषु शक्तित्रयम्। २३४,२३५

द्विकर्मकप्रयोगेषु बोधप्रकाराः, नव्यमते यत्राऽऽश्रयत्वं कर्तृत्वं तत्राऽऽधेयत्वं द्वितीयार्थः, यत्राऽनुकूलकृतिमत्त्वं कर्तृत्वं तत्र कृतिजन्यत्वं द्वितीयार्थः, यत्र प्रतियोगित्वं कर्तृत्वं तत्राऽनुयोगित्वं द्वितीयार्थः। २३६,२३७

द्वितीयाया अनेकेऽर्थाः, तत्प्रयोगशाब्दबोधाश्च, धात्वर्थेषु योग्याऽर्थाऽन्वयाश्च। २३८,२३९

अनुमित्याद्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा, उद्देश्यत्वम् उद्देश्यित्वं वा द्वितीयार्थः, व्यधिकरणधर्मेणाऽभावग्राहकप्रयोगे घटत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टो योऽनुयोगितासम्बन्धेन वह्निविशिष्टोऽभाव इत्यर्थः, रंग रजतं जानातीत्यत्र रजतपदस्य रजताऽभेदज्ञानविषये लक्षणा, लोहितवह्निं जानातीत्यत्र लोहितपदस्य लोहिताऽभेदज्ञानविषये लक्षणा। २४०

पाकं चिकीर्षतीत्यत्र कृतिप्रकारकपाकविशेष्यकेच्छाश्रयश्चैत्र इति बोधः, यद्वा कृतिविशेष्यकेच्छा चिकीर्षा, सन् धात्वर्थविशेष्यकेच्छाबोधकः, सर्वत्र सनः इच्छामात्रे शक्तिरस्त्येव, भृत्यं पुत्रीयतीति उपमानवाचकं पुत्रपदम्, आचारपदस्य व्यवहारकारणीभूतज्ञाने लक्षणा, यद्वा गौणी लक्षणा पुत्रतुल्यार्थे, क्यजर्थो ज्ञानमात्रम्, भृत्यकर्मकं पुत्रप्रतियोगिकं व्यवहारकारणीभूतं यत्सादृश्यज्ञानं तद्वानिति शाब्दबोधः। २४१

कर्म त्रेधा,—प्राप्यं प्राकृति विकृति, अथ काष्ठं भस्म क्रियते, काष्ठं भस्म भवति, काष्ठेन भस्मना भूयते, इत्यत्र शाब्दबोधाः। २४२

उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुह्वतीत्यत्र यावज्जीवमग्निहोत्रं जुहोतीत्यत्र, मासमधीते,—इत्यादौ च शाब्दबोधाः, विना-इवाद्यर्थाः। २४३

यावदित्यस्य व्यापकत्वाद्या विविधार्थाः, वृक्षं प्रति विद्योतते विद्युदित्यादौ प्रत्यर्थाः, तृतीयायाः कर्तृत्वं कारणत्वं चाऽर्थः। २४४

चैत्रेण पक्वमित्यत्र तृतीयावाच्या कृतिः, कर्मवाचकः क्तप्रत्ययः, अचेतनव्यापारे निरुढा लक्षणा, मत्वर्थीयेन विशेषणस्य सम्बन्धः, तृतीयया तु विशेषणोपलक्षणयोरुभयोः सम्बन्धः प्रत्याय्यते, चतुर्थ्यर्थः सम्प्रदानम्, ब्राह्मणाय गां ददातीत्यादौ बोधप्रकाराः। २४५

शिवाय नम इत्यादौ नमः पदार्थः, पञ्चम्या अपादानं भेदो विभागः शक्यार्थः, भेदप्रतियोगितावच्छेदकत्वे विभागे च शक्तिद्वयम्, व्याघ्राद्बिभेतीत्यादौ शाब्दबोधाः, पृथिवी इतरेभ्यो भिद्यते इत्यादौ शाब्दबोधाः, सम्बन्धार्थे षष्ठी, चैत्रस्येदमित्यादौ शाब्दबोधाः, नराणां क्षत्रियः शूरः,—इत्यत्र क्षत्रियपदं क्षत्रिये शक्तं तदन्यत्र लाक्षणिकम्, शूरपदं शूरे शक्तं शूरान्ये लाक्षणिकम्, षष्ठयर्थोऽभेदः, नराऽभिन्नः क्षत्रियः शूरः नराऽभिन्नक्षत्रियाऽन्यो न शूर इति बोधः, आधारसप्तम्या आधेयत्वमर्थः, तत्प्रयोगार्थाश्च। २४७

सम्बोधने प्रथमा, सम्बोधनार्थः अव्यवहितशब्दजन्यबोधाश्रयत्वप्रकारिका वक्तुरिच्छा, स्त्रीप्रत्ययाः स्त्रीत्ववाचकाः, वैयाकरणानां प्रादिपदिकार्थः स्त्रीत्वं, स्त्रीप्रत्ययास्तु द्योतकाः, योनिमत्त्वाऽभावे खट्वाप्रभृतौ नाऽर्थबोधकाः तद्धितप्रत्ययाः प्रकृत्यर्थेन स्वार्थैकदेशस्य स्वार्थस्य च क्वचिदन्वयबोधजनकाः। २४८

पौषी रात्रिः, पौषो मासः, पौषो वर्षः, पुष्येण युक्ता पौर्णमासी पौषी, तया घटितः। पौषपदं योगरूढं रुढमपि, चान्द्रमासे पौषादिशक्तिः, मासनामानि रुढानि, यौगिकान्यपि तन्नामकनक्षत्रपूर्णिमायुङ्मासनामानि। धातुप्रकृतिका लकारकृत्सन्यङ्णिच्प्रभृतयोऽधिकमर्थं ब्रुवते, केचिदाकांक्षादिनिर्वाहकाः। २४९

आख्यातवाच्या कृतिः, क्रियानुकूलव्यापाररूपे कर्तृत्वे निरूढा लक्षणा, गमनानुकूलव्यापारवान् रथः। मीमांसकास्तु व्यापारे शक्तिः, शाब्दी भावना शब्दनिष्ठा शब्देन पूर्यते, न तु कृतिरूपा इच्छारूपा वा, किन्तु व्यापाररूपा, नैयायिकास्तु कर्तृत्वं शक्तं कृतिरेव, आश्रयत्वमाख्यातार्थः, व्यापारादिर्धात्वर्थः,ईश्वरकृतिसाधारणयत्न आख्यातार्थः,गच्छति जानातीत्यादौ आख्यातस्याऽऽश्रयत्वे निरूढा लक्षणा, आख्यातस्य कर्तृशक्ततावच्छेदकं तिप्त्वादि, आख्यातसामान्यस्य कर्तृत्वे शक्तिः, तद्विशेषस्याऽऽत्मनेपदस्याऽऽख्यातस्य कर्मत्वे शक्तिः। २५०

तादीनां कर्मत्वे शक्तिः, तेत्वादिकं तु पृथगेव शक्ततावच्छेदकम्, फलावच्छिन्नव्यापारबोधकधातूनां फले व्यापारे च पृथक् शक्तिद्वयम्। अथवा कर्मप्रत्ययानां फले शक्तिः, धातवो व्यापारमात्रवाचकाः, लट्प्रत्ययस्य कालविशेषे वर्तमाने शक्तिः। २५१

लृटः लुटः लुङः लङः लिटः भिन्नविशेषकालार्थकत्वादि, लिङ्लोटोः विध्यर्थः, विधिः धर्मः प्रवर्तकज्ञानविषयः कृतिसाध्यत्वाद्यर्थात्मकः, मीमांसकास्तु नित्ये इष्टसाधनताबोधो निष्फल इति, चिकीर्षाकृतिसाध्यताज्ञाने-ष्टसाधनताज्ञानो-पादानप्रत्यक्षाणि प्रवृत्तिकारणानि। २५२

'अग्निष्टोमेन यजेत स्वर्गकामः,–इत्यत्र विधेः बलवदनिष्टाऽननुबन्धीष्टसाधनत्वविशिष्टकृतिसाध्यत्वमर्थः, भाट्टमते तु अभिप्रायोऽभिधा वा लिङर्थः प्रवर्तकः, वैदिकवाक्यत्रिविधता, विधेश्चतुर्विधता। २५३

विध्युदाहरणशाब्दबोधाः, यागादिफलम्, फलश्रवणशून्येऽपि स्वर्गं फलम्, सन्ध्योपासनाया विधूतपापत्वं श्राद्धस्य पितृप्रीतिः, अनुष्ठातृसुखादि फलम्, न कलंजं भक्षयेदित्यादौ विशिष्टाऽभावोऽभिमतस्तदभाववद्भक्षणवानित्यर्थः, श्येनेनाऽभिचरन् यजेतेत्यत्र कृतिसाध्यत्वविशिष्टेष्टसाधनत्वमात्रं विध्यर्थः, अदृष्टाऽद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसात्वम्, श्येनस्याऽदृष्टद्वारकत्वान्न हिंसात्वं, न विध्यर्थबाधः, तात्पर्ये विधिशक्तिः, वेदे परमेश्वरतात्पर्यम्, शब्दस्य ज्ञानवद् गुणद्रव्यत्वे व्यापकत्वेऽपि सुवचत्वम्, प्रवर्तकमिव निवर्तकं ज्ञानमपि जायते, तत्र तत्र न विरोधः। २५४,२५५

विधिप्रत्ययस्य एकैव शक्तिः, लुङः भूतभविष्यकालयोः शक्तिः। तिङो लडादिभेदेन दशधा नाम्नोऽर्थे स्वार्थसंख्याबोधकाः, लडाद्याः कालवाचिनः। २५६
शाब्दिकमते कृतिरिव कर्ताऽपि तिङर्थः, यङन्तस्य धातोरर्थस्य स्वार्थकर्तृत्वबोधनक्षमम् आत्मनेपदम्, यत्र कर्तृभिन्ननिष्ठं क्रियाफलं तत्र परस्मैपदम्। २५७
ज्वरार्तो नाऽम्लमन्नमश्नीयादित्यत्र ज्वरादिप्रयोज्यतत्तद्विजातीयदुःखाऽजनकत्वे लिङो लक्षणा, अथवा साध्यताविशिष्टं विध्यर्थः। २५८
तर्के प्रथमं स्यात्-पदम् आपादकार्थं द्वितीयमापत्त्यर्थकम्, ह्रदो धूमवान् स्यात् वह्निमान् स्यादित्यत्र धूमवद्भिन्नो ह्रदो धूमव्यापकवह्निमद्भेदवानिति बोधः। २५९
काशाञ्चक्रे, लोलूयामास, ईक्षाम्बभूव, इत्यादौ आम इव कृञादेरपि पदसाधुतामात्रम्। २६०
धात्वर्थप्रत्ययो नामप्रकृतिकः क्यच्क्यङादिः धातुप्रकृतिकः सन् यङादिः, चैत्रः पुत्रीयतीत्यत्र क्यजर्थेच्छा, श्येनायते काक इत्यत्र क्यङोऽपि आचारसदृशाचारोऽर्थः, गात्रं कण्डूयतीत्यत्र यङो गात्रस्य कण्डूं करोतीत्यर्थः, अशनायतीत्यर्थेऽशनेच्छार्थः। २६१
धातुप्रकृतिके चैत्रं भावयतीति प्रयोगादौ णेः व्यापारोऽर्थः, चिकीर्षतीत्यत्र सनर्थेच्छा, पापच्यते-इत्यत्र यङः पौनःपुन्यमर्थः, सन्नन्तात् न सन्, चिकीर्षिषतीति न प्रयोगः, वृक्षक इति ह्रस्वार्थकस्तद्धितः कः, तद्धितप्रत्ययार्थोदाहरणानि, अपत्याद्यर्थप्रत्ययाः। २६२,२६३
तत्र ज्ञातकृतशीलाद्यर्थप्रत्ययानां निदर्शनानि। २६४-२६५
समासलक्षणं समासभेदाः तत्पुरुषलक्षणम्। २६६
नित्यसमासनिदर्शनानि, द्विगुसमासलक्षणम्, तद्विग्रहस्वरूपनिदर्शनम्, समाहारद्विगुः। २६७
अव्ययीभावसमासः, बहुव्रीहिलक्षणम्, तद्विग्रहतत्समासतद्बोधादिकम्। २६८
समाहारद्वन्द्वः, इतरेतरद्वन्द्वः, समुच्चयाऽन्वाचयाद्यर्थाः। २६९
उपपदसमासः, एकशेषः, कृत्तद्धितसमासैकशेषसनाद्यन्तधातवः पञ्चवृत्तयः, कर्मधारयः, अलुक्समासाः। २७०
समासाश्रयविषयः, अन्वयाऽनुपपत्तिस्तात्पर्याऽनुपपत्तिश्च लक्षणाबीजे, समीपार्थजिज्ञासाऽपि वीजम्, लक्षकत्वलक्षणम्, वैयाकरणमतम्। २७१
लक्षणाभेदाः, लक्षितलक्षणा, निरूढा लक्षणा, व्यञ्जना लक्षणा। २७२
मीमांसकमते वाक्यस्यापि लक्षकत्वम्, वाक्ये स्वबोध्यसम्बन्धत्वं लक्षणेति पूर्वपक्षस्य समाधानम् बहुव्रीहिलक्षणम्। २७३
तत्पुरुषः, द्वन्द्वः, समाहारद्वन्द्वः, द्विगुसमासः, एकशेषः, तत्र तत्र तात्पर्यग्राहकतादिप्रदर्शनम्, लक्षणादि च, कर्मधारये न निरूढा लक्षणा, उपपदार्थः, तत्पुरुषे उत्तरपदे लक्षणा, समासे न लक्षणेति वैयाकरणाः, पदे शक्तिसत्त्वात् पदे एव लक्षणे ति तार्किका अपि, तात्पर्याऽऽसत्तियोग्यताऽऽकांक्षाज्ञानानि शाब्दबोधे कारणानि। २७४,२७६
तात्पर्यादिलक्षणानि, स्फोटा अनेके, स्फोटब्रह्मवादिमते द्रव्यगुणकर्मादिषु सर्वत्र स्फोटाः, परब्रह्म, ब्रह्म, अन्तर्यामी, ज्ञानं, स्वप्नमपि, स्फुटार्थवत्त्वेन स्फोटब्रह्ममयमिति पूर्वपक्षे समाधानम्। प्राभाकरमतम्। न्यायमतम्। २७७,२७८
योग्यतास्वरूपम्, मीमांसकाः संसर्गज्ञानमेव योग्यताज्ञानम्, नैयायिकमतम्। २७९
आकांक्षास्वरूपलक्षणादि, यत्पदाऽभावप्रयुक्तो यत्पदनिष्ठशाब्दबोधजनकत्वाऽभावस्तत्पदाऽभावाऽभावस्याऽऽकांक्षात्वाऽनुपपतिः। २८०
वक्तुरिच्छात्मकतात्पर्यस्य ज्ञानस्य सृष्टौ घटादौ चापि वेधःकुलालाद्यपेक्षितत्वेन सर्वाः सरस्वत्यस्तात्पर्यवत्यः। २८१

परमेशस्य नित्यप्रमाविषयता स्वतोग्राह्या, बुद्धेः स्वप्रकाशत्वस्योपपत्तयः। २८२
सावस्थं धर्मभूतं ज्ञानमपि सुषुप्तौ स्वविषयं स्वात्मविषयकं चिन्मात्राऽवलम्बनं प्रकाशते। एकाऽपि धीः बह्ववस्थाभिः विषयाऽनुरूपा जागरूका स्वाप्निका सुषुप्तिका चित्तदात्मिका चेति प्रभासते। अत्र बहुधा उपपत्तयः। २८३
प्रसरणशीलाया यत्राऽपसरणं तत्राऽतथाविधताव्यवहारास्पदा उपचारमात्रम्, सर्वत्र स्वभास्त्वं न जहाति। २८४
परेषां भ्रान्तिस्थलीयज्ञानानामपि सद्विषयकत्वोपपादनम्, सर्वत्र यथाकथञ्चित्सद्वित्तेः प्रवर्तकत्वम्। २८५
अविषमसमधर्मकल्पनात् संशयाऽस्पदेऽपि तत्र सजातीयस्वसत्त्वोपपादनम्। २८६
स्वप्रकाशप्रज्ञाया अक्षणिकत्वोपपादने स्थिरसत्त्वतासाधनम्, संवृत्यनुपपत्तिः। २८७
आत्मनश्चितश्चैतन्यस्य तादात्म्याऽपृथक्सिद्धत्वात्, साक्षिब्रह्मपरब्रह्मज्ञप्त्यंगतादात्म्यावस्थादिभिः स्वप्रकाशतादिविमर्शः, अन्येषां तु क्षणिकत्वादिना तदसंभवात्। २८८
सहोपलम्भभंगः, निरालम्बनस्य विलयः, स्वाप्नप्रकाशस्य स्वप्रकाशत्वस्य सर्वानुभवसिद्धत्वात्, संस्काराऽवलम्बने निरालम्बनत्वभंगात्, क्षणमात्रे बाह्यक्षणिकाऽऽकाराणाम् असंख्यानामान्तरेऽसमर्पणात्, समर्पणे क्षणव्याहतेः, अक्षणिकत्वप्रवेशात्। २८९
अर्थेष्वर्पणं सम्विदाम्, साक्षिप्रकाशप्रकाशवत्त्वं च, नर्तक्या लक्षावधिसंविदर्पणे एकत्वविरोधः स्यात्, निरधिष्ठानाया अधिष्ठानोत्पादकत्वेऽक्षणिकत्वम् ततः स्वाश्रयाऽधिष्ठानैव साकारा सा सिद्ध्यति, धर्मभूतस्याऽधिष्ठानाऽऽवश्यकत्वात्। २९०
स्वज्ञानिसाक्षिचिदन्वितसर्वज्ञानानाम् अन्तर्यामिपरब्रह्मज्ञानशक्तिप्रयोजितानां याथार्थ्यं स्वप्रकाशत्वं चेति, निर्विकल्पकस्य प्रकारज्ञानस्याऽपि भावे त्वव्यवहारसिद्धं धर्मिघटितधर्मधीत्वम्। २९०
व्यावर्त्यत्वेन ध्रियमाणस्याऽपि स्वतादात्म्यपदार्थान्तरविशिष्टत्वात्, समानविषयकधाराया अर्थार्थिव्यवहारास्पदत्वात्, अर्थो विषयो ज्ञानं वा घटो वाऽभावो वा संस्कारो वाऽऽत्माऽपि सर्वोऽपि ज्ञानार्थः विशिष्टताप्रकाशक एवेति। २९१
चितिसंविद्धि विशिष्टारम्भा विशिष्टमध्या विशिष्टविश्रान्ता मानवयोगीश्वरादीनाम्। २९१
घटाद्या बीजपिठरफलात्मका इव शुक्तिरूप्याद्या अपि तथा, स्वाप्ना अपि तथा, समुच्चितास्तत्र प्रज्ञाविषयाः, शैथिल्यस्याऽऽद्यमध्याऽन्तवर्तनात् पूर्णेष्टफलाऽनाधायके भ्रान्तिरिति व्यवहृतम्, ग्राह्यधार्यभोग्याऽऽकारात्मकघटस्य त्रिविधत्वं सत्ख्यापनपरम्, आदानयोग्ये दानयोग्ये ग्रहयोग्ये वृत्तियोग्ये मानसयोग्ये धीयोग्ये आत्मयोग्ये सति एव पदार्थे तथा तथाकारे ग्राह्ये साक्षिग्राह्ये सत्ख्यातेरपि सिद्धेः। २९२
सत्समुच्चयख्यातेरावश्यकत्वात्, बीजस्तम्भफलानां सोपपत्तिकविवेचनम्, यथाऽवस्थितव्यवहारानुगुणज्ञानत्वं प्रमाज्ञानत्वम्, तत्र स्वर्णस्वस्तिकज्ञानदृष्टान्तम्। २९२
स्वतोग्राह्यत्वस्य विविधा उपपत्तयः, अहमर्थः स्वप्रकाशः, आत्मैवाऽस्य ज्योतिर्भवति, अत्राऽयं पुरुषः स्वयंज्योतिर्भवति, इति तत्र प्रमाणम्। २९३
विशिष्टब्रह्माऽद्वैताऽतिरिक्तदृष्टिमत्त्वम् अज्ञानित्वमुपचर्यते, त्रिकुटिज्ञानं विशिष्टं स्वप्रकाशमित्युपपादनम्। २९४
ध्यानवृत्तीनां सर्वासां विशिष्टविषयकत्वं स्वप्रकाशत्वम् अपि च, तत्प्रमात्वस्य स्वतःप्रमात्वम्। २९४
अनित्यसर्वज्ञानानां विषयाकाराऽधीनाऽऽत्मलाभात् विशिष्टप्रामाण्यत्वाऽव्यभिचारात्, वस्तुतस्तु स्वतःप्रमात्वनिर्वचनम्, व्यवसायाऽनुव्यवसाययोः तथाविधप्रतीत्युपपत्तिः। २९४
अनुमानाद्यास्तु स्वतःप्रामण्येऽनुवादकाः, नैयायिकमतेऽपि स्वतस्त्वोपपत्तिः, शाब्दस्याऽपिस्वतस्त्वंध्रुवम्। २९५

परतः प्रकाशत्वपूर्वपक्षप्रयोगाः, अतिरिक्तविषयतापक्षेऽपि प्रयोगाः, तत्र तत्र वैशिष्ट्यतया सिद्धत्वस्योपपादनम् । २९५,२९६

उत्तरज्ञानानां परतस्त्वोपपत्त्यनुपपत्तिः, सम्बन्धस्य भासनात्, सप्रयोगभ्रमत्वोपपादनतदनुपपत्तयश्च, प्रमात्वनिर्वचनानि । २९७

'अथ—'अयं घट' इत्याद्यनुभवे विप्रतिपत्तयः, सविषयतापक्षेऽपि अनुभवे विप्रतिपत्तयः, प्रामाण्ये लिङ्गप्रदर्शनम्, परतस्त्वपूर्वपक्षः, तत्समाधानम् । २९८

अभ्यासदशोत्पन्ननिदर्शनम् , ज्ञानत्वपक्षकसामान्यविशेषविप्रतिपत्तयः, अथाऽनिर्वाच्यत्वाऽवलम्बिपूर्वपक्षः, तत्र प्रामाण्यादिपक्षकविप्रतिपत्तयः; विशिष्टवादिविधिनिघ्नविप्रतिपत्तिः, प्रमाणप्रामाण्यपक्षकविप्रतिपत्तिः सत्यस्याऽप्यवस्थाभेदेन सत्त्वमेव तज्ज्ञानस्य सद्विषयकत्वं स्वप्रकाशत्वमेव च, शुद्धसमुच्चयितग्राहकस्याऽभ्रान्ततैव, निरन्वयवादिन एव भ्रान्तताख्यापनात्, । २९९,३००

अध्यासपक्षकविप्रतिपत्तयः, शंखे पीतिमा न वास्तवीति श्वैत्ययाथार्थ्यं शंखे पीतिमयाथार्थ्यं वृत्तौ च न हीयते । ३०१

तद्विज्ञानप्रामाण्यपक्षकविप्रतिपत्तिः, सर्वाऽसत्ख्यात्यनुपपत्तिः, निरुपाख्यत्वाऽनुपपत्तिः, भंगीव्याघातोपपत्तिः, भंगीगोचरज्ञानविप्रतिपत्तिः, ३०२

शून्यवादिख्यातिप्रकारपूर्वपक्षः, वाचस्पतिमतम् , कुमारिलभट्टमतम् , वर्धमानमतम् , उदयनमतम् , विज्ञानभिक्षुमतम् , माञ्जुषिकमतम् , योगाचारमतम् । ३०३

रजतत्वपक्षकविप्रतिपत्तिः प्राभाकरमतम् , सांकर्यधर्मिकविप्रतिपत्तिः । ३०४

सदसत्ख्यातिमतेन विप्रतिपत्तिः, रजतत्वविशिष्टधर्मिकविप्रतिपत्तिः, रजतत्वधर्मिकविप्रतिपत्तिः, ज्ञानप्रामाण्यधर्मिका ज्ञानाऽप्रामाण्यधर्मिका च विप्रतिपत्तिः, मीमांसकमतम् । ३०४,३०६

रजतज्ञानपक्षकप्रयोगाः, सफलप्रवर्तनादौ भिन्नहेतुताकत्वे गौरवादि, स्वरूपयोग्येभ्योऽपि प्रचयितादि निष्पत्तिप्रदर्शनम् । ३०६

तद्धर्मप्रकारकज्ञानप्रमात्वपक्षकविप्रतिपत्तिः, गुरुभट्टमिश्रमतानि, प्रयोगाः, विप्रतिपत्तयश्च, व्यष्टिसमष्टि चराऽर्थज्ञानत्वपक्षकप्रयोगः, निर्वाचितज्ञानपक्षकविप्रतिपत्तिः प्रामाण्ये विप्रतिपत्तयः । ३०६,३०७

प्रामाण्याऽप्रामाण्ययोः नैयायिकादिमतानि, निभिन्नाः ख्यातयः, शास्त्रसम्मतिप्राबल्यम् , विशिष्टवादिचिन्तनानि, स्वाप्नादिज्ञानामपि सत्यत्वोपपत्तिः, प्रामाण्यादौ चत्वारः पक्षाः, उपबृंहणादि । ३०७,३०९,३१०

सदितरख्यात्यनुपपत्तिः, वेदान्तार्थस्वारस्यम् , त्रिकुटिविषयकज्ञप्तेः सत्त्वं स्वप्रकाशत्वं च, जडविशिष्टचेतनविशिष्टब्रह्मविशिष्टं परब्रह्मेति विशिष्टब्रह्माऽद्वैतस्वारस्यम् । ३१०,३११,३१२

प्रमातृगणाऽसित्वाऽपरोक्षत्वप्रसिद्धिः मायाकललज्ञानादितोऽपृथक्चेतनपूर्वपक्ष., तत्तत्प्रतिपत्तिभंगः । ३१२,३१३

केवलब्रह्मवादकेवलेश्वरवादकेवलात्मवादनिरासः, विशिष्टस्य प्रमातृत्वोपपादनम् , स्वयंप्रमातृत्वं सिद्धान्तितम् , आगन्तुकज्ञानवृत्त्वाऽनुपपत्तिः, सत्स्वरूपज्ञान-तद्वत्त्वादौ श्रुतयः, स्वरूपसच्चेतनत्वोपपत्तिः, ३१४,३१५,३१६,

ईश्वरात्मकपृथक्त्वे श्रुतिप्रामाण्यम् , शास्त्रादिमतानि, जीवेश्वरतत्त्वान्तरत्वविविक्तिः । ३१७,३१८,३१९

पञ्चतत्त्वपार्थक्ये श्रुतयः । ३२०

ब्रह्मस्वरूपादौ श्रुतिप्रमागम् , तत्र शास्त्रोक्तबृंहणानि, । ३२०

मुक्तानां पृथक्सत्त्वादिश्रुतिस्वारस्यानि । ३२१

परमात्मचिन्तनम् , औपनिषदादिसिद्धान्ताः, प्रमाणवाक्यानि, „
पञ्चतत्त्वनिर्णयः, तत्र जीवतत्त्वम् । „
ईश्वरतत्त्वम् , तल्लक्षणाद्युपपत्तयः । „
मायातत्त्वं, तल्लक्षणाद्युपपत्तयः । „
ब्रह्मतत्त्वं, तल्लक्षणाद्युपपत्तयः । „
परब्रह्मतत्त्वम् , तल्लक्षणाद्यपपत्तयः ।



# अथ सर्वसाक्षात्कारसूत्राणां विषयानुक्रमणिकासूत्राँऽकानि—

१—सर्वं साक्षादिति प्रतिपादकं शास्त्रमेतत्, अत्र साक्षात्त्वे अन्यप्रमाणानामुपसर्जनादि, सर्वदर्शनकारमतानि, सर्वं साक्षादिति स्वारस्यम् , सृष्टिरचयितुः सर्वमपि प्रत्यक्षम् । २—अवतारिपुरुषाणामपि तथा । ३—तत्सार्ष्टिप्राप्तानामपि तथा । ४—तद्योगिनामपि तथा । ५—मुक्तिस्थितानामपि तथा । ६—ईश्वराणामपि स्वव्याप्तिकं तथा । ७—तथाविधसिद्धानामपि तथा । ८—व्यूहविष्णुशिवब्रह्मयमादीनामपि स्वव्याप्तिकं तथा । ९—आवेशांशादितदात्मकानामपि तथा । १०—अलौकिकदृष्टिमतामपि स्वव्याप्तिकं तथा । ११—बहिःसुप्तस्य परब्रह्मणि जाग्रतोऽपि तदात्मकदृष्टया तथा । १२—विशिष्टेविशेषणस्य तद्दृष्टया तथा । १३—स्वप्रकाशस्य स्वेतरव्याप्तौसर्वप्रकाशता । १४—आत्मचैतन्यस्य सर्वगोलकव्याप्तिपूर्वकविषयव्याप्तत्वात् व्याप्ते साक्षात्त्वम् । १५—साक्ष्यन्वितस्य परिच्छिन्नद्रष्टुरपि तद्दृष्टया तथात्वम् । १६—प्रातिभस्य सर्वविषयित्वात् तथात्वम् । १७—सामान्यलक्षणयाऽपि साक्षात् ॥

सूत्रं—१८,—ब्रह्मेतरयावन्मिथ्यात्ववादिनो व्यवहारे तदनुपपत्त्याऽपि ब्रह्माहमितिदशायां सर्वात्मकस्वसाक्षात्त्वम् अव्याहतम् । १९—आकारज्ञप्त्यादिक्षणिकत्वे तदनुपपत्त्याऽपि स्वस्मिन् स्वत्वेन सर्वत्वेन ग्राह्यधार्यभोग्यत्वेन स्मरणकक्षायां सर्वसाक्षात्कारोपपत्तेरनपह्नवात् ॥ २०—विशेषात्मदृश्यं विशेषत्वेन सर्वमपि सामान्यदृश्यमव्याहतं भवति ॥ २१—सापेक्षत्वे तदनुपपत्तावपि यावत्सापेक्षकूटत्वेन तु साक्षात्त्वोपपतेर्निराबाधात् ॥ २२—भाषाभाष्यपरिच्छेदेऽपि भाष्यत्वं सर्वत्राऽव्याहतं दृष्टिमूलकं तदिति ॥

सूत्रम्—२३—बहुभवनत्वेऽप्येकत्वेन सर्वसाक्षात्त्वध्रौव्यात् । २४—चिदाकाशस्य ब्रह्मणः सर्वान्वितत्वेन द्रष्टृत्वं सर्वगोचरमुपपन्नं भवति । २५—ब्रह्मणि सर्वार्पणविधयाऽनन्तधाभवनविधया च सर्वेष्टत्वात् सर्वसाक्षात्कारतेति । २६—भेदेऽप्यपृथगधर्मधर्मिविधया सर्वसाक्षाद्ग्रहणात् । २७—ऐक्यप्रावण्यस्य तदैक्यसाक्षाद्विधिसातत्यात् । २८—दृशिशक्तेर्दृक्शक्तितदात्मकचैतन्यात्तथात्वम् । २९—साक्षिचैतन्यसाक्षात्कारखनिकत्वेन तथात्वात् । ३०—व्यतिरेकाऽनवस्थानादेव तत्सिद्धत्वात् ।

सूत्रं—३१ कृपादृष्टयाऽपि साक्षात्सार्वज्ञ्यात् । ३२—अनुमेयस्याऽप्यनुसाक्षात्त्वेन साक्षात्त्वव्यापनात् । ३३—उपमेयेऽपि साक्षाद्वृत्तेराद्यपस्थानात् तथात्वम् । ३४—साक्षान्निश्रिते शाब्दयोगात् । ३५—आपादनस्याऽपि साक्षादापादकाऽवलम्बनात् तथात्वम् । ३६—अनुपलम्भस्य प्रतियोगिसमुपलम्भमूलत्वात् तथात्वम् । ३७—संभवितस्याऽपि भागोत्प्रेक्षाकत्वात् तथात्वम् । ३८—ऐतिह्यमपि दर्शनमूलपरम्पराकृदिति तथात्वम् । ३९—चैष्टिककृतीनां साक्षद्दृष्टयधीनत्वात् तथात्वम् । ४०—प्रातिभासिकस्य ब्रह्मभासात्मकत्वेन स्वरूपलाभात् तथात्वम् ।

सूत्रं—४१—स्वाप्निकस्य चैतन्यदृङ्मयत्वात् तथात्वम् । ४२—प्रचयितव्यूहान्तर्दृग्वतः सर्वसाक्षात्त्वम् । ४३—एकजन्यस्यैकेन तादात्म्यात् तत्साक्षात्त्वात् । ४४—चिद्भासस्य चिदाभासस्य भासकत्वात् सर्वस्य साक्षात्त्वम् । ४५—सर्वजगतश्चैतन्यग्रन्थिकत्वात् तत्साक्षात्त्वम् । ४६—सर्वज्ञस्य साक्षात्त्वस्य केवलान्वयित्वात् तत्त्वम् । ४७—ब्रह्मतत्त्वस्य साक्षात्कृतः श्रोतत्वात् सर्वसाक्षात्त्वमिति ॥ इति ॥



॥ ॐ श्रीहरयेऽनादिश्रीकृष्णनारायणाय नमः ॥

॥ श्रीगणाधिपतये नमः ॥

# तत्त्वप्रभावली



आत्मा ब्रह्माऽधिवासोऽक्षरपद-
निलयः सत्परात्मानुपक्तः
स्नेहाऽप्यैंस्तत्र मुक्तिप्रभवसु-
तरुणानन्दमात्राशनार्थः ।
भक्तस्तत्त्वचिन्तामननम-
तिरतिध्यानवार्धिप्रमग्नो
यावद्विद्यानिधानोऽर्पयति
हरिमहे कृष्णयुग्वल्लभाऽऽर्यः ॥१॥

'नाऽमंगलं प्रयुञ्जीते'तिश्रुतेः शास्त्रारम्भेऽपि चरमवर्णध्वंसात्मकसमाप्त्यर्थं मंगलं कृतिविषयं भवति, तच्च प्रकृतवस्तुनिर्देशस्वेष्टदेवादिस्मरणनमस्काराऽऽशीर्वादाऽन्यतमरूपम्, तत्त्वं च कर्तव्यसिद्धिप्रतिबन्धकीभूतदुरिताद्यभावहेतुत्वम्। चतुर्विधादपि प्रतिबन्धकाऽभावद्वारा कर्तव्यसिद्धिः। तद्द्वारत्वं च तदुत्तरकालीन-तदधीनवृत्तिताकत्वे सति तज्जन्यजनकत्वम्। सर्वत्र प्रतिपाद्यतत्त्वस्मरणस्याऽनुपल्लवात् 'तत्त्वं तत्त्वविदेकात्मे'तिस्मृत्या तत्त्वस्य परमात्माऽभिधानत्वात् यथाबलं कर्तव्यसिद्धिसम्पादकत्वाच्च मंगलसमाप्त्योरन्वयव्यतिरेकसहचारध्रौव्यान्नाऽन्वयव्यतिरेकव्यभिचाराऽवकाशः।

अथ परमात्मा निरूपणीयः, संगतत्वात्। संगतिस्तु-अनन्तराऽभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयस्मरणाऽनुकूलसम्बन्धः।

इष्टता हेतुताऽऽकांक्षा योग्यता शेषनिवृतिः।
पारम्पर्यमुपोद्घातः प्रसंगो वृततानता ॥ २ ॥
कार्यताऽवसरः कार्यैकता निर्वाहकैकता।
वैशद्यं प्रतिपक्षश्चाऽनवधानमलंकृतिः ॥ ३ ॥
प्रश्नः समाधिरुन्मादो निरासो विरतिस्तथा।
संगतिर्वर्णवाक्यादौ द्वाविंशतिविधेष्यते ॥ ४ ॥

इष्टत्वं प्रतिपाद्येष्टविषयत्वम्, तच्चाऽपूर्वग्रन्थाद्यारम्भे वैदिकलौकिकगाने व्याख्यानादौ च। हेतुत्वं कारणत्वम्, तच्च विशिष्टबुद्धिनिरूपणे विशेषणज्ञाने प्रत्यक्षप्रमायां चेन्द्रियादौ। आकांक्षा अव्यवहितोत्तरत्वपूर्वत्वरूपा, सा च व्याकरणे प्रकृतिप्रत्ययादौ। योग्यता अर्थाऽबाधरूपा। सा च महावाक्यार्थबोधकपदादौ। शेषनिवृतिः समाप्तिबोधकत्वम्, तच्च इतिप्रभृतिसमाप्त्यन्तप्रयोगे। पारम्पर्यं दीर्घसंसर्गादि, तच्च परिष्कारे दीर्घसंसृष्टपदार्थे। उपोद्घातः ज्ञानजनकज्ञानविषयत्वम्, तच्च लक्षणज्ञानादौ पदसार्थक्यादि। प्रसंगः स्मृतस्योपेक्षानर्हत्वम्, स चात्र ग्रन्थे परमात्मनि। वृततानता वृतश्छान्दसादिमात्राणां यथास्थानमवस्थितिः, सा च श्लोकादौ उत्तरोत्तरशब्दादौ। कार्यता जन्यत्वम्, तच्चाऽनुमितिकरणमनुमानमित्यत्राऽनुमितौ। अवसरः अनन्तरवक्तव्यत्वं क्रमप्राप्तिविषयत्वमिति यावत्, तच्चात्र संगतिसमुदाये द्रव्यनिरूपणोत्तरं गुणे च। कार्यैकता एकका-

र्यकारित्वम्, तच्च व्याप्तिकार्यपरामर्शकारित्वं पक्षतायाम्। निर्वाहकैकता एकप्रयोजकप्रयोज्यत्वम्, तच्चाऽऽत्मतस्तद्गुणानां ज्ञानविभागानां वा, पृथिव्या वा विभिन्नगुणात्मकलक्षणानि। वैशद्यं बुद्धिविकासकारित्वम्, तच्चैकपदार्थस्य बहुरीत्या वर्णने। प्रतिपक्षः प्रकृतप्रतिपक्षिमतविषयत्वम्, तच्च प्रकृतपदार्थविषये परमतेऽलीकमते वा। अनवधानं प्रमादः स्वातन्त्र्यमिति यावत्, तच्च निष्प्रयोजनके पदे। अलंकृतिः रूपकाद्यलंकारविषयत्वम्, तच्च रूपकाद्याश्रये पदार्थान्तरे। प्रश्नः शंकानुरूपप्रयोगविषयत्वम्, तच्च मध्ये मध्ये नन्वित्यादिवाक्ये। समाधिः संशयनिवृत्तिप्रयोजनकत्वम्, तच्चोत्तरसिद्धान्तादौ। उन्मादः माहात्म्यम्, तच्च पुराणे आख्यायिकादौ। निरासः उद्भूतदोषप्रयोज्यच्छिन्नमूलकत्वम्, तच्चाऽपदार्थादौ। विरतिः अपेक्षितस्यापि त्यागः, सा च न्यूनलेखादौ। एताः संगतयः स्वस्वविशेषविषये प्रधाना इति नैकयाऽपरनिर्वाहः॥ २॥ ३॥ ४॥

**व्यवहारफलध्वंसक्रियाकार्यस्थितिप्रमा-**
**संख्यावाक्यादिभिः सृष्टेर्नित्यज्ञाताऽनुमीयते॥५॥**

परमात्मनि परमत्वं नित्यज्ञानेच्छाकृत्यैश्वर्याऽन्यतमवत्त्वरूपम्, परमात्मा व्यवहाराद्यनुमेयः। 'जगन्निर्माणपरम्परात्मकव्यवहारः अन्यव्यवहाराऽनधीनव्यवहारकर्तृचेतनप्रयोज्यः, आदिव्यवहारत्वात्, अभिनवलिप्यादिव्यवहारवत्। तथा च सर्गादावितरबाधात् परमेश्वरसिद्धिः। संसारात्मकर्मफलं स्वतन्त्राऽभिज्ञपुरुषप्रदेयम्, व्यवस्थितफलत्वात्, प्रत्यक्षफलवत्' । तथा च तत्राऽस्मदादीनां बाधात् परमेश्वरसिद्धिः। 'सर्गध्वंसः स्वतन्त्रप्रयत्नवच्चेतनजन्यः, ध्वंसत्वात्, कुविन्दकृतपटध्वंसवत्'। अत्राप्यीतरबाधात् परमेश्वरसिद्धिः। 'सर्गाद्यकालीनद्वयणुकारम्भकपरमाणुद्वयसंयोगजनकक्रिया चेतनप्रयत्नप्रयोज्या, कार्यारम्भकसंयोगजनकक्रियात्वात्, अस्मदादिशरीरक्रियावत्'। अत्र तादृशप्रयत्नवाँश्चेतनः परमेश्वर एव। 'द्वयणुकात्मककार्यम्, उपादानोपकरणसम्प्रदानप्रयोजनसंवेदिचेतनरचितम्, कार्यत्वात्, घटवत्'। उपादानं परमाणवः, उपकरणं क्षेत्रज्ञवर्ति अदृष्टम्, सम्प्रदानम् उपभोक्तारश्चेतनाः, उपभोगः प्रयोजनम्। अत्र तादृशो रचयिता चेतनः परमेश्वर एव। 'आकाशे गुरुत्ववतामण्डानामपतनानुकूलमहावायुस्थितिः पतनानुकूलचाञ्चल्यप्रतिबन्धकप्रयत्नवत्पुरुषप्रयोज्या, नियमितस्थितित्वात्, शिरःस्थजलकलशस्थितिवत्'। अत्र तथाविधस्थितिनियन्ता परमेश्वर एव। 'सर्गाद्यकालीनवेदजन्यप्रमा प्रमात्वघटितधर्मावच्छिन्नकार्यताप्रतियोगिगुणात्मककारणजन्या, प्रमात्वात्, प्रत्यक्षादिप्रमावत्'। अत्र तादृशप्रमाजनकयथार्थज्ञानानुकूलशब्दोच्चारयिता परमेश्वर एव। 'द्वयणुकपरिमाणजनिका परमाणुगतद्वित्वसंख्या अपेक्षाबुद्धिजन्या, एकत्वान्यसंख्यात्वात्, घटद्वित्वसंख्यावत्'। अत्र सर्गादौ तादृशद्वित्वसंख्या नाऽस्मदाद्यपेक्षाबुद्धिजन्या, अतस्तदानीन्तनाऽपेक्षाबुद्धिः परमेश्वरस्य, न हि सापेक्षत्वेऽनित्यत्वम्, नित्यानामपि सापेक्षत्वात्। 'वेदात्मकवाक्यानि पौरुषेयाणि, वेदवाक्यत्वात्, आयुर्वेदवाक्यवत्'। पौरुषेयत्वं च सजातीयोच्चारणाऽनपेक्षभ्रमादिशून्यपुरुषोच्चारणजन्यत्वम्। 'वेदवाक्यानि, पौरुषेयाणि, वाक्यत्वात्, अस्मदादिवाक्यवत्'। तादृशभ्रमादिशून्यः परमात्मैव। आदिनाऽनुमानान्तराण्यपि ग्राह्याणि। तथा हि—'महाप्रलयः समकालीनापरोक्षज्ञानवद्व्यक्तिवेद्यः, प्रलयत्वात्, खण्डप्रलयवत्'। न हि भावकार्यज्ञानमस्मदादीनां तदानीं संभवति, अतस्तदानीं यस्य ज्ञानं स परमेश्वरः। 'सर्गस्थसमर्थात्मानः क्वचित्पराधीनकार्यसिद्धिकाः, सर्गीयाऽऽत्मत्वात्, अस्मदादिवत्'। ससामग्रीकसमर्थस्यापि यदधीनकार्यसिद्धिः सः सिद्धिसम्पादकः परमेश्वरः। 'त्रैकालिकमुक्तिः त्रैकालिकसंसाराऽसंसृष्टपुरुषवृत्तिः, नित्यमुक्तित्वात्, यन्नैवं तन्नैवं यथा प्राप्यमुक्तिः'। इत्याद्यनुमानैः परमेश्वरसिद्धिः। न चाऽसर्वज्ञानां सर्गस्यं व्यवहारफलध्वंसक्रियादिप्रयोजकाऽपरोक्षज्ञानचिकीर्षायत्नादिमत्त्वं सम्भवति, यस्य तु तत् स्यात् स निखिलनिर्माणव्यवस्थानिपुणः परमेश्वरः। न च कस्यचिन्मुक्तात्मनस्तथात्वं कल्पनीयम्, मुक्तिपूर्वम् अव्यवस्थापत्तेः, न चाऽन्यो मुक्तस्तदानीं तथाकारतया कल्पनीयः, बहुषु स्वतन्त्रेषु वैमत्येन सर्गाऽव्यवस्थाऽऽपत्तेः। किञ्च 'ते न सृष्टिप्रलयादिव्यवस्थापकाः,

ज्ञानशून्यत्वात्, पूर्णसुषुप्तवत्' इति प्रतिप्रयोगसत्वात् ॥

वस्तुतस्तु अदृष्टाद्वारकोपादानगोचरजन्यकृत्यजन्यानि समवेतानि जन्यानि—अपरोक्षज्ञानचिकीर्षाप्रयत्नविषयीभूतोपादानकानि, समवेतत्वे सति प्रागभावप्रतियोगित्वात्, यदेवं तदेवं, यथा घटः, तथा चैतानि, तस्मात्तथे'त्यनुमेयम् । तादृशैकज्ञानचिकीर्षायत्नैश्वर्यान्यितमवत्त्वमेवाऽत्र कर्तृत्वं तद्वान् परमात्मैव ॥

ननु घटादौ शरीरसहकृतस्यैव कर्तुः कारणत्वं दृष्टम्, परमात्मनोऽशरीरित्वे कारणत्वमप्यनुपपन्नमिति चेन्न । घटत्वेन शरीरजन्यत्वनियमेऽपि कार्यमात्रे न तथानियमः, शरीराऽजन्यकार्येऽव्यापकत्वात्, कार्यत्वस्य कर्तृत्वेन सह कार्यकारणभावात्, सशरीरकर्तृत्वेन सह तथात्वे तु गौरवात्, त्रसरेण्वादौ मेघादौ च व्यभिचारात् । घटादावपि हस्तादिना कर्तृत्वनिर्वहणेन शरीरस्याऽप्रयोजकत्वात् । अत एव 'द्वयणुकादिकं न कर्तृजन्यं, शरीराऽजन्यत्वात्, आकाशवत्' इति सत्प्रतिपक्षोऽपि नाऽऽशंकनीयः, अप्रयोजकत्वात्, अप्रतीतप्रतियोगिकाऽभावस्य निरूपयितुमशक्यत्वात्, स्थापनाऽनुमानस्य पक्षधर्मतावलात् प्रसिद्धकर्तृभिन्नकर्तृकत्वसाधकत्वेन भिन्नविषयकत्वात् तेन सहाऽस्य प्रतिबध्यप्रतिबन्धकभावविरहात् । लाघवेनाऽजन्यत्वस्यैव व्याप्यत्वे शरीराऽजन्यत्वे व्यर्थविशेषणत्वात् ।

अथ यदि परमेश्वरः कर्ता स्यात् शरीरी स्यात्, इष्टसाधनताज्ञानवान् स्यात्, प्रयोजनवान् स्यात्, अनित्यज्ञानवान् स्यात्; पृथिव्यादि यदि सकर्तृकं स्यात् शरीरिकर्तृकं स्यात् इति तर्काणां विपर्यये आश्रयासिद्धिव्यर्थविशेषणत्वादिना विपर्ययाऽपर्यवसानेनाऽऽभासत्वात् । किन्तु सर्गादावदृष्टाधीनभूतेभ्यो मात्स्यशरीरोत्पत्तावदृष्टवदात्मसंयोगात् तददृष्टसहकृतप्रयत्नवत्परमेश्वरसंयोगाच्च सकलवेदार्थगोचरज्ञानात् विवक्षासहकृतात् मात्स्यतनुकण्ठताल्वादिक्रियातज्जन्याऽभिघाताद् वेदोत्पत्तिः । एवं कुलालादिशरीरावच्छेदेनाऽदृष्टसहकृतप्रयत्नवत्परमेश्वरसंयोगात् तद्बुद्धीच्छासहितप्रयत्नोत्पत्तौ सकलघटानुकूलव्यापाराद् घटोत्पत्तिः । एवं प्रयोज्यप्रयोजकज्ञानाय व्यापाराऽभिमतशरीरावच्छेदेनाऽदृष्टसहकृतपरमेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः, इत्येवं भूतावेशन्यायेन परमेश्वरो हि सृजति शरीरमिति बोध्यम् । तदनेन न्यायेन सशरीरस्य सर्वान्तर्यामिणो निखिलसर्गनिर्माणनिपुणस्य निरतिशयसकलज्ञानेच्छायत्नैश्वर्यशक्त्यतिशयस्य पुरुषधौरेयस्य तत्तदात्मनामदृष्टाऽपेक्षसर्गकारित्वं निरवद्यम् । परमेश्वरज्ञानादयो यदा पृथिव्यादितत्तदसाधारणक्रमिकाऽदृष्टादिसामग्रीसमवहिता भवन्ति तदा स जगदुत्पादयति, तदिच्छायां चिकीर्षात्वं संजिहीर्षात्वं च सर्गप्रलयाऽसाधारणक्रमिकाऽदृष्टादिसामग्रीसमवहितत्वरूपमेव । तथा च न स्वार्थकारुण्यव्यावृत्तिप्रयुक्तजगदनुत्पत्तिशंकाऽवकाशोऽपीति । वेदोऽपि 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात् । सम्बाहुभ्यां धमति स पतत्त्रैर्द्यावाभूमी जनयन् देव एकः' इति तत्र मानत्वेनाऽनुसन्धेयः ।

**द्रव्यं गुणः क्रिया शक्तिः संसर्गो धर्म एव च ।**
**विशेषोऽभाव इत्यष्टौ पदार्था अत्र सम्मताः ॥६॥**

पदार्थान् विभजते-द्रव्यमिति । द्रव्यं-गुणाश्रयः पृथिव्यादिः, गुणः—विशेषणम् अप्रधानं गन्धादि, क्रिया-गत्यादिकर्म, शक्तिः-सामर्थ्यम्, संसर्गः-सम्बन्धः, धर्मः-जात्युपाध्यादिः, विशेषः-विशेषपदार्थः, अभावः विरहो नास्तित्वमित्येते अष्टौ पदार्था इत्यर्थः । अभिधेयत्वं पदार्थसामान्यलक्षणम्, अभिधा च परमेश्वरेच्छा । पदार्थो द्विविधः-भावोऽभावश्च । तत्र सप्त भावाः, अष्टमस्त्वभावः, भावत्वं च समवायसामानाधिकरण्यान्यतरसम्बन्धेन सत्तावत्त्वं, भावपदजन्यप्रतीतिविषयत्वं वा, प्रतियोगिज्ञानसापेक्षज्ञानविषयत्वम् नञर्थबोधकपदजन्यप्रतीतिविषयत्वं वाऽभावत्वम् । एते च पदार्था व्यवहारानुभवसिद्धाः दार्शनिकानां सम्मताः । अष्टपदं पदार्थत्वं द्रव्याद्यष्टाऽन्यतमत्वव्याप्यमिति व्याप्तिलाभाय, द्रव्याद्यष्टान्यतमत्वं च द्रव्यादिभेदाऽष्टकाऽभाववत्त्वम्, अतो नाऽप्रसिद्धिः ।

ननु सादृश्यस्वत्वप्रतियोगित्वाऽनुयोगित्वाऽधिकरणत्वाऽऽधेयत्वकार्यत्वकारणत्वविषयित्वविषयत्वप्रकारत्वविशेष्यत्वाऽवच्छेदकत्वप्रसन्नतामूल्यादीनामतिरिक्तपदार्थत्वात् कथम् अष्टावेव ? तथाहि—प्रत्यक्षभागेषु प्रत्यक्षप्रतीतिसिद्धमन्यत्र चाऽनुमानेन सिद्धम्, यथा द्वयणुकपरिमाणानां सादृश्यं द्वित्वसंख्याजन्यतया सिद्धयति, यान्त्रिकोपकरणानां वायुयानादीनां च

सादृश्यं समगतिप्रभृतिफलदतया सिद्धयति, परात्मनां रासनादिभोगानुभवादिकं सदृशमेव समानेन्द्रियग्राह्यतया सिद्धयति, गोत्वसदृशं गवयत्वमिति धर्मसादृश्यं प्रसिद्धमेव अतः–'सादृश्यं द्रव्यत्वाद्यष्टपदार्थविभाजकधर्मभिन्नपदार्थविभाजकधर्मवत्, द्रव्यत्वादिसप्तान्यतमशून्यत्वे सति अभावत्वशून्यत्वात्' इत्यनेनाऽतिरिक्तं सिद्धयति । न च यदाश्रितं सादृश्यं तस्मिन्नेव लाघवादन्तर्भविष्यतीति वाच्यम्, अनन्ताश्रितात्मकत्वकल्पनाऽपेक्षया 'अत्राऽस्य सादृश्यमि'तिप्रतीतिसिद्धस्याऽतिरिक्तत्वकल्पनाया एव लघीयस्त्वात् । 'सादृश्यं न सप्तभावात्मकम्, धर्मेतरवृत्तित्वे सति धर्मवृत्तित्वात्; नाऽप्यभावात्मकं तत्, भावत्वेन प्रतीतिविषयत्वादिति चेत्? न । अनुयोगितासम्बन्धावच्छिन्नतद्गतभूयोधर्मवत्त्वं तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं वा सादृश्यं 'चन्द्रसदृशमाननमि'त्यादौ बोध्यम् । तत्र सामानाधिकरण्यसम्बन्धेन चन्द्रभेदविशिष्टा ये चन्द्रगताऽऽह्लादकत्ववर्तुलत्वतेजस्त्वादिजातीया मुखगता धर्मास्त एव मुखे चन्द्रसादृश्यम् । एवं सर्वत्राऽनुमेयादावपि । 'अत्राऽस्य सादृश्यमि'ति प्रतीतेर्धर्मविषयकत्वात्, अतिरिक्तसादृश्यानामाश्रयभेदाद्भिन्नानां कल्पनाऽपेक्षया भूयोधर्मात्मकत्वकल्पनायामेव लाघवात् उक्तानुमानस्य बाधितत्वम् । 'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव' । हिट्लरो हिट्लराकारः स्टेलिनः स्टेलिनोपमः । जर्मनीरूसयोर्युद्धं जर्मनीरूसयोरिव । चर्चिलश्चर्चिलाकारोऽमेरिकाऽमेरिकोपमः । चीनजापानयोर्युद्धं चीनजापानयोरिवे'त्यत्र तद्गतधर्मवत्वमात्रं तत्, अनन्वयाऽलंकारोऽपि तत्र बोध्यः । सादृश्यघटकधर्मः क्वचिज्जातिरूपः, क्वचिच्चोपाधिरूपो बोध्यः ।

अथ स्वत्वं पदार्थान्तरं स्यात्, 'चैत्रस्य धनं' 'राष्ट्रस्य शक्तिः' इत्यादौ चैत्रराष्ट्रादिनिरूपितस्वत्वस्य धनशक्त्यादौ प्रतीतेः, 'स्वत्वमुत्पन्नं विनष्टं, तव स्वत्वं मम स्वत्वमि'त्यादिप्रतीतिसिद्धस्य षष्ठीवाच्यस्य न द्रव्यगुणक्रियाशक्तिरूपत्वं शक्तिवृत्तित्वात्, न धर्माद्यात्मकत्वं नित्यत्वप्रसंगात्, नाऽभावरूपं भावत्वेन प्रतीतत्वादिति चेत्? उच्यते—स्वत्वं हि यथेष्टविनियोगयोग्यत्वम्, विनियोगश्चाऽऽदानप्रतिदानपरावर्तनादिका क्रिया, तथा च दानप्रयुक्तप्राप्तिविषयत्वावच्छिन्ना स्वाभिलाषानुकूलक्रियायोग्यतैव स्वत्वं धर्मविशेषः । वस्तुतस्तु यथेष्टविनियोगविषयकज्ञानविषयतैव स्वत्वं न त्वतिरिक्तमिति ॥

एवं प्रतियोगित्वाऽनुयोगित्वाऽधिकरणत्वाऽऽधेयत्वकार्यत्वकारणत्वविषयित्वविषयत्वप्रकारत्वविशेष्यत्वाऽवच्छेदकत्वादीनां भावप्रत्ययाद्यर्थानां वित्तिनिरूप्यधर्माणां तत्तदीयाऽखण्डोपाध्यादिनाऽनुगताकारप्रत्ययसंभवे धर्मेऽन्तर्भावान्न पदार्थान्तरत्वम्, तेषां चाऽऽत्मधर्मिकेतरद्रव्यादिपदार्थभेदप्रकारके तत्त्वज्ञाने परामर्शज्ञानीयविषयतावच्छेदकतया परम्परयोपयोगित्वं बोध्यम् । प्रसन्नताया 'इदं मेऽनुकूलमि'तिज्ञानीयनिरूप्यनिरूपकभावापन्नविषयतात्मकत्वेनैव निर्वाहे नाऽतिरिक्तपदार्थत्वम् । तादृशप्रसन्नताजन्यं च सौम्यं विलक्षणाकृतिरूपं समीचीनाऽवयवसंस्थानाख्यं संयोगात्मकमेव । मूल्यमपि 'अस्यैतावद्गृहिष्यामी'तीच्छाविषयत्वमिति न पदार्थान्तरम् ॥ ६ ॥

**वसुन्धरा जलं तेजो वायुः खं समयो दिशा ।**
**देही तमस्तथा माया द्रव्याण्येतानि वै दश ॥७॥**

द्रव्याणि विभजते—वसुन्धरेति । वसुन्धरा पृथिवी, जलं वारि, तेजः अग्न्यादिः, वायुः पवनः, खम् आकाशः, समयः कालः, दिशा आशा, देही आत्मा, तमः अन्धकारः, माया प्रकृतिस्त्रिगुणमयी, एतानि दश द्रव्याणीत्यर्थः ।

द्रव्यत्वं पृथिवीत्वादिदशोपाध्यन्यतमत्वव्याप्यमिति व्याप्तिलाभाय दशपदम् । दशत्वज्ञानेऽप्रामाण्यशंकाऽनुत्पत्त्यर्थमिति तु तत्त्वम् । ननु द्रव्यत्वजातौ किं प्रमाणम्?, घृतदुग्धलाक्षेक्षुरसादावपण्डितानां प्रत्यक्षेण द्रव्यत्वाऽनिर्णयादिति चेन्न । अनुमानस्य तत्र प्रमाणत्वात्, तथाहि—'समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणम्' इति नियमः, तथा च 'कार्यसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत्' । द्वित्वसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात् । एवं घटवत्कपाले द्रव्यान्तराऽनुत्पादेन तत्र घटादेः प्रतिबन्धकत्वं

वक्तव्यं, तथा च तादृशप्रतिबन्धकतावच्छेदकतयाऽपि तत्सिद्धिः। अनुमानं यथा—'द्रव्यनिष्ठा द्रव्यान्तरप्रतिबन्धकता किञ्चिद्धर्मावच्छिन्ना, प्रतिबन्धकतात्वादिति। आकाशसमवेताऽसमवेतत्वे सति आकाशसमवेतजातिर्द्रव्यत्वम्, तद्वत्त्वं द्रव्यस्य लक्षणम्, समवायेन गुणवत्त्वम् वा तल्लक्षणम्, उत्पन्नस्य क्षणमात्रमगुणवत्त्वे तु गुणात्यन्ताभावविरोधिमत्त्वं वक्तव्यम्, एवं संख्यावत्त्वं परिमाणवत्त्वं पृथक्त्ववत्त्वं संयोगवत्त्वं विभागवत्त्वम् इत्यपि लक्षणानि। एवं स्वजन्यसंयोगविभागान्यतरवत्त्वसम्बन्धेन क्रियावत्त्वं, गुणकर्मभिन्नत्वे सति समवायेन शक्तिमत्त्वं, द्रव्यपदवाच्यत्वं, समवायिकारणतावच्छेदकजातिमत्त्वं वा तल्लक्षणम्। इतरभेदानुमितेर्लक्षणफलत्वात् उपनयात् 'साध्यव्याप्यहेतोः पक्षे' बोधं स्वीकृत्यैव जातिघटितलक्षणादरात् नाऽनुमित्यनुपपत्तिः, 'दण्डवान् रक्तदण्डवानि'ति बोधस्य सर्वसम्मतत्वात्। असाधारणधर्मत्वं लक्षणस्य लक्षणम्। असाधारणत्वं च दूषणत्रयरहितधर्मत्वं लक्ष्यतावच्छेदकसमनियतत्वं वा। अव्याप्त्यतिव्याप्त्यसंभवा दूषणानि, लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वमव्याप्तिः, यथा गोः कपिलत्वे, अव्याप्तेर्भागाऽसिद्ध्युद्भावकत्वम्। लक्ष्यतावच्छेदकसामानाधिकरण्ये सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यमतिव्याप्तिः, यथा गोः शृंगित्वे, अतिव्याप्तेर्व्यभिचारोद्भावकत्वम्। लक्षतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् असंभवः, यथा गोरेकशफवत्त्वे, असंभवस्य स्वरूपाऽसिद्ध्युद्भावकत्वम्। लक्ष्यतावच्छेदकसमनियतत्वं च लक्ष्यतावच्छोदकव्याप्यत्वे सति लक्ष्यतावच्छेदकव्यापकत्वम्। उक्तदोषा असाधारणत्वविघटकाः, अतिव्याप्तेर्लक्ष्यतावच्छेदकव्याप्यत्वस्याऽव्याप्त्यसंभवयोश्च लक्ष्यतावच्छेदकव्यापकत्वस्य विघटकत्वम्। एतद्दूषणत्रयरहितत्वाद् गोः सास्नादिमत्त्वं लक्षणम्। ननु लक्षणस्य फलमितरभेदाऽनुमितिः, तद्विषये इतरभेदे पक्षतावच्छेदके गोत्वादौ च लक्ष्यतावच्छेदकसमनियतधर्मत्वस्यातिव्याप्तिरिति चेन्न। पक्षतावच्छेदकभिन्नत्वे सति इतरभेद (व्यावृत्ति) भिन्नत्वे सति लक्ष्यतावच्छेदकसमनियतत्वे सति धर्मत्वमिति लक्षणलक्षणस्य विवक्षितत्वात्॥

नन्वधिकानि द्रव्याणि मनोऽहंकारसुवर्णप्लेटिनमरेडियमहीरकमण्यादीनि कथं नोक्तानि? तत्र मनो नित्यं द्रव्यम् आन्तरं करणं च प्रसिद्धमिति चेन्न, तस्य मायिकेन्द्रियस्य मायाप्रकरणे एव निरूपणात् सोपाधिकमायिकत्वान्नाऽतिरिक्तद्रव्यत्वम्॥ अथाऽहंकारो हि मनसा गृह्यते, तस्य सुखदुःखमोहाभिमानात्मकगुणवत्वात् द्रव्यत्वम्, अत एव च नाऽऽत्मेतरद्रव्यात्मकत्वम्, अचेतनत्वाच्च नाऽऽत्मत्वमिति चेन्न, तस्य ज्ञानेऽन्तर्भावात्। सुखदुःखमोहाऽभिमानानामात्मगुणत्वात् अभिमानस्याऽहंकारपर्यायस्य 'अभिमन्येऽहं करोमी'त्यादिप्रत्ययैर्ज्ञानात्मकत्वसिद्धिः॥

अथ तथापि सुवर्णम् अतिरिक्तद्रव्यं स्यात्, तद्धि गन्धाऽभावान्न पृथिवी, पीतरूपवत्त्वान्न जलादि, गुरुत्वाच्च न माया? तन्न। ओषधिसमवहिताऽत्यन्ताऽग्निसंयोगेन जायमाने तद्भस्मनि गन्धरसाद्युपलब्धेर्भस्मनश्च सुवर्णध्वंसजन्यत्वात् यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत् तदुपादानोपादेयमिति नियमेन सुवर्णोपादानोपादेयत्वात् सुवर्णकारणे पार्थिवप्रत्यक्षगुणासिद्धेस्तादृशोपादानकारणजन्यस्य तस्य पृथिवीत्वं निराबाधम्। 'अग्नेरपत्यं हिरण्यमि'तिश्रुतेरपि वैश्वानराग्निना पृथिवीविशेषे उत्कटतरपाकाज्जायमानोऽग्निनाऽप्यपराभवनीयः पृथिवीविशेषः सुवर्णमित्यर्थः। तद्वत् शुक्लस्य प्लेटिनमस्य रेडियमस्य हीरकस्य मणेश्च पृथिवीविशेषे सुवर्णतोऽप्युत्कटतमशुद्धतेजोजन्योत्कटतमपाकेन जायमानत्वादतिस्वच्छपृथिवीत्वमेव, न तु पदार्थान्तरत्वम्, प्रसृतप्रकाशवत्त्वं तु तदन्तर्वर्तितेजस एव। अस्ति हि अन्तरग्निकाऽच्छनीलप्रस्तरशकलात् (चकमकात्) अधिकस्ताम्रतन्त्वादौ यन्त्रोत्पाद्यः प्रदीपकरः कृत्रिमविद्युत्प्रवाहः, ततोऽप्यधिकः स्वाभाविकतेजोनिवासः प्लेटिनम-रेडियम-हीरक-मण्यादाविति। तथा च—"मण्यादिपृथिवी औपाधिकप्रकाशवती, तेजस्समाश्रयात्, पतङ्गपुच्छवत्'। उक्तञ्च—हिरण्यं लोहं निरुक्ते 'हिरण्यं पेशः कृशनं लोहमि'ति पृथिव्यामेव हिरण्यमुत्पद्यते इति तद्व्याख्यायामुक्तम्।

उक्तश्च—गिरेर्जन्यत्वात् गैरिकत्वं धातूनां 'धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः' इत्यमरेण, तथा 'सुवर्णरूप्यताम्राणि हरितालं मनःशिला। गैरिकाञ्जनकासीससीसलोहाः सहिङ्गुलाः॥ गन्धकोऽभ्रकमित्याद्या धातवो गिरिसंभवाः'। 'गैरिकं धातुरुक्मयोः' इति तद्व्याख्यासुधायां च। एवं च तत्र नैमित्तिकद्रवत्वपीतशुक्लादिरूपवत्त्वगुरुत्वादेः पार्थिवगुणत्वात् स्वरूपाऽसिद्धेन प्रतिबन्धकाऽसमवहिताऽत्यन्ताऽग्निसंयोगाऽनुच्छिद्यमानजन्यद्रवत्वहेतुना न तैजसत्वसिद्धिस्तत्र। तत्स्थतैजसभागस्य पाकविशेषजन्यशक्तेर्वा प्रतिबन्धकस्य सत्त्वात् हेत्वसिद्धेश्च। रूपान्तरप्रतिबन्धकोऽपि तैजसभागः शक्तिविशेषो वा पतङ्गपुच्छ-तप्ताऽयोगोलक-विद्युत्प्रवाहवत्ताम्रतन्तुसूर्यगोलकादिस्थशक्तिविशेषवदिति बोध्यम्। तैजससूर्यादिशरीरे स्वर्णसमस्वल्पपार्थिवभागसत्त्वात् 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' इति श्रुत्या सुवर्णसमत्वेन वर्णनं कृतम्। चन्द्रतारकादीनां तु प्लेटिनमरेडियमात्मकपार्थिवभागयोगात् हिमांशुत्वेन वर्णनं कृतम्, तथा च नैमित्तिकद्रवत्वाश्रयस्तैजसपदार्थोऽलीक एवेति मन्तव्यम्॥ ७॥

**गन्धो रसश्च रूपं च स्पर्शः शब्दो गणेयता।**
**परिमाणं पृथक्त्वं च संयोगश्च विभक्तता॥८॥**
**परत्वं चाऽपरत्वं च भारो लघुत्वमच्छता।**
**द्रवः स्नेहस्तथा रूक्षो रजः सत्त्वं तमस्तथा॥९॥**
**धर्मोऽधर्मः सुखं दुःखं द्वेषो यत्नश्च लालसा।**
**निद्रा कामश्च संस्कारो भयं मोहश्च शूरता॥१०॥**
**बुद्धिश्चापि गुणा ह्येते पञ्चत्रिंशद्धि सम्मताः।**

गुणान् विभजते—गन्ध इति। गणेयता संख्या, विभक्तता विभागः, भारो गुरुत्वम्, लघुत्वम्-लाघवम्, अच्छता-अनावरणनिर्मलता, द्रवः द्रवत्वम्, स्नेहः चिक्कणता, रूक्षः खरता, सत्त्वादयः प्रसिद्धाः, लालसा—इच्छा, निद्रा—स्वापः, कामः स्मरः, भयम् अभिनिवेशः, मोहः मोहिनी, शौर्यं बलम्, बुद्धिः ज्ञानमित्यर्थः॥

गुणत्वजातिसिद्धिस्त्वनुमानात्। तथाहि—'गुणवानिति विशिष्टवैशिष्ट्यावगाहिबुद्धित्वावच्छिन्नं प्रति गुणत्वप्रकारक 'गुण' इतिनिश्चयत्वेन कारणत्वम्, तेन 'द्रव्यकर्मशक्तिभिन्ने जातिमति या कारणता सा किञ्चिद्धर्माऽवच्छिन्ना, कारणतात्वात्, दण्डनिष्ठघटकारणतावदिति। अत्र यद्धर्मावच्छिन्ना कारणता स गुणत्वमिति बोध्यम्। असमवेताऽसमवेतनित्यसमवेतसत्तासाक्षाद्व्याप्यजातिर्गुणत्वम्। कर्मशक्त्यन्यत्वे सति द्रव्यत्वव्यापकतावच्छेदकसत्ताभिन्नजातिमत्त्वं गुणलक्षणम्। यद्वा द्रव्यकर्मशक्तिभिन्ने समवेता या जातिस्तद्वत्त्वं लक्षणम्। शक्तिभिन्नत्वे सति नित्यवृत्तिनित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम्, द्रव्यमात्राऽऽश्रितत्वे सति गुणशून्यत्वे सति संयोगविभागेष्वनपेक्षकारणताशून्यत्वम्, शक्त्यन्यत्वे सति सकलद्रव्यगताश्रयतानिरूपकतावच्छेदकसत्तान्यजातिमत्त्वम्, समवायेन गुणत्ववत्त्वमेव वा लक्षणम्। पूर्वोक्तरीत्या च नाऽनुमित्यनुपपत्तिः। पञ्चत्रिंशत्पदं व्याप्तिलाभाय॥

ननु स्थौल्यसौक्ष्म्यमार्दवकाठिन्यतृप्त्यवस्थोद्भूतत्वाऽनुद्भूतत्वलाघवगौरववैराग्यभक्त्यैश्वर्यसिद्धितुष्ट्यविद्याऽस्मितारागाऽहिंसासत्याऽस्तेयब्रह्मचर्याऽपरिग्रहशौचसन्तोषतपःस्वाध्यायप्रणिधानश्रद्धाध्यानसमाधिमन्त्रविरहप्रोक्षणादीनां गुणानां शास्त्रेषु सत्त्वात्कथमेते एवेति चेन्न, स्थौल्यस्य मध्यमहदादिपरिमाणे, सौक्ष्म्यस्य त्वणुपरिमाणेऽन्तर्भावात्। मार्दवस्य कोमलस्पर्शे शिथिलावयवसंयोगे च, काठिन्यस्य च कर्कशस्पर्शे दृढाऽवयवसंयोगे चाऽन्तर्भावात्। भोजनपानादिजन्यतृप्तेः सुखविशेषेऽन्तर्भावात्। अवस्थाया जाग्रतः आत्ममायामनइन्द्रियाणां, विषयाभिमुखव्यापारकूटे, स्वप्नस्य मायाभिमुखव्यापारकूटे, पूर्णसुषुप्तेश्च मायामनोविभागेऽन्तर्भावात्। एवमुत्पत्त्यवस्थाया आद्यक्षणसम्बन्धे, स्थित्यवस्थाया मध्यक्षणसम्बन्धे, नाशावस्थायाश्चरमक्षणसम्बन्धेऽन्तर्भावात्। उद्भूतत्वस्य प्रत्यक्षविषयत्वात्मकस्य अन्यादृशस्य वा धर्मे, अनुद्भूतत्वस्य प्रत्यक्षविषयत्वाद्यभावस्याऽभावेऽन्तर्भावात्। शरीरकृतसम्बन्धकृतकल्पनादिकृतलघुत्वगुरुत्वयोर्यथासंभवितधर्मेऽन्तर्भावात्। वैराग्यस्य रागाऽभावेऽन्तर्भावात्। भक्तेः स्मरणे, ऐश्वर्याणां योगजधर्मजन्यशक्तावन्तर्भावात्। सिद्धीनामणिममहिमलघिमप्राप्तिप्राकाम्येशित्ववशित्वादिभवनशक्तावन्त-

र्भावात्। प्रकृत्युपादानकालभाग्यविषयोपरमादिविषयकतुष्टीनां सन्तोषात्मकत्वात् सुखेऽन्तर्भावात्। अविद्याया विद्याविरोधिन्या अप्रमात्मकज्ञाने, अस्मिताया आत्माऽन्तःकरणयोरेकात्मताया भ्रमेऽन्तर्भावात्। रागस्योत्कटेच्छायाम्, अहिंसाया अनभिद्रोहात्मिकाया द्वेषाऽभावे, सत्यस्य याथार्थ्ये, अस्तेयस्य चौर्यात्मकक्रियाऽभावे, ब्रह्मचर्यस्य कामाऽभावे, अपरिग्रहस्य ग्रहणात्मकव्यापाराऽभावे, शौचस्य स्वच्छतायाम्, सन्तोषस्य सुखे, तपसो मनइन्द्रियनिग्रहात्मकव्यापारे, स्वाध्यायस्य वाचनात्मकव्यापारे, प्रणिधानस्य समर्पणात्मकव्यापारे, श्रद्धाया निश्चयात्मकज्ञाने, ध्यानस्य एकतानस्मरणे, समाधेः आत्ममात्रविषयकमानसप्रत्यक्षे, मन्त्राणां ज्ञानानुकूलशब्दे, विरहस्य शोकात्मकदुःखे, प्रोक्षणस्य व्यापारे चाऽन्तर्भावान्नाऽधिकगुणत्वम् ॥

अथ मा भूदधिकत्वं, न्यूनत्वं तु कथं न स्यात् ?, तथाहि—पृथक्पदार्थयोः परस्परं भेदसत्त्वात् भेदेनैव निर्वाहे पृथक्त्वमनावश्यकमिति। एवं विभक्तयोः पदार्थयोः संयोगाऽभाववत्त्वनियमात् संयोगाऽभावेनैव निर्वाहे विभागो निरर्थकः। एवं परत्वाभाव एवाऽपरत्वं स्यात्। एवं गुरुत्वाऽभाव एव लघुत्वं स्यात्। एवं मलाभाव एव स्वच्छता स्यात्। एवं स्नेहाभाव एव रूक्षता स्यात्। एवं सुखाभावो दुःखं दुखाभावो वा सुखं स्यात्। एवं धर्माभाव एवाऽधर्मः स्यात्। एवमिच्छैव कामः स्यात्। एवं निर्बलताज्ञानमेव भयं स्यात्। एवं ज्ञानाभावो निद्रा मोहश्च स्याताम्। सत्त्वरजस्तमसां च सुखदुःखमोहाऽनतिरेकत्वमिति चेत् ? न। 'इदमस्मात् पृथगिति' प्रतीतेः 'इदं नेति' प्रतीतितो भिन्नत्वेन पृथक्पदवाच्यार्थस्य नञर्थाऽन्योन्याभावतो भिन्नत्वात्। न च वाचकवैलक्षण्यं न त्वर्थवैलक्षण्यमिति वाच्यम्, अर्थभेदमन्तरेण 'घटात्पृथगित्य'त्रेव 'घटो न पट' इत्यत्रापि पञ्चम्यापत्तेः। 'घटो न घटरूपमि'तिवत् 'घटात् पृथग् घटरूपमि'त्यपि प्रतीत्यापत्तेः। किञ्च तन्तुक्रियया तन्तुपटयोः संयोगस्य तन्तुसंयोगेन तन्तुपटसंयोगस्य च वारणाय तदतद्वृत्तिसंयोगे तयोः परस्पराऽवधिकपृथक्त्वस्य कारणत्वस्योपेयतयाऽतिरिक्तगुणसिद्धिः। अत एव च पृथक्त्वेनैवाऽन्योन्याभावस्य निर्वाह इत्यपि शंका निरस्ता, 'रूपं न घट' इति प्रतीत्यनापत्तेः। ननु मा भवतु तथा प्रतीतिरिति चेत् ? न, गुणे गुणानंगीकारेण रूपे घटावधिकपृथक्त्वस्य बाधितत्वात्। ननु घटगतपृथक्त्वम् एकार्थसमवायेन रूपे विषयीकृत्य तथाप्रतीतिनिर्वाह इति चेन्न। पञ्चम्या अवधित्वार्थकत्वात् घटावधिकपृथक्त्वस्य घटेऽभावात् परम्परया रूपेप्यभावात्, 'घटो घटात् पृथगि'त्यपि प्रतीत्यापत्तेः ॥

एवं विभागस्य संयोगाऽभावात्मकत्वे यत्र करक्रियया करतरुविभागस्तस्माच्च शरीरतरुविभागस्तत्र 'शरीरतरू विभक्ता'विति प्रतीतिर्विलुप्येत, न च सर्वानुभवसिद्धायास्तस्या अपलापः कर्तुं शक्यः। ननूक्तप्रतीतेः शरीरतरुसंयोगध्वंस एव विषयोऽस्त्विति चेन्न, ध्वंसस्य विभक्तपदाऽविषयत्वात् प्रतीतेरनुत्थानापत्तेः। किञ्च विभागाऽनंगीकारे शरीरतरुसंयोगनाशस्यैवाऽसंभवः स्यात्, करक्रियाया व्यधिकरणत्वेन तन्नाशकत्वाभावात्। ननु करतरुसंयोगनाश एव शरीरतरुसंयोगनाशं जनयेदिति चेन्न, आश्रयनाशाऽजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरतरुसंयोगनाशे करतरुसंयोगनाशस्याऽजनकत्वात्। किञ्च संयोगाऽभावस्य विभागत्वे विनिगमनाविरहेण विभागाऽभावस्य संयोगात्मकत्वमपि, इति द्वयोरप्यसिद्धिः स्यात्। विभागस्य संयोगात्यन्ताभावात्मकत्वे भूतलसंयुक्तेऽपि दीर्घवंशादौ मध्ये किञ्चिदवच्छेदेन संयोगात्यन्ताऽभावसत्त्वेन तत्र विभक्तप्रत्ययापत्तेः, संयोगान्योन्याभावात्मकत्वे संयुक्तेऽपि तथा प्रत्ययापत्तेः, संयोगप्रागभावात्मकत्वे तु चरमसंयोगनाशे विभक्तप्रत्ययाऽनुपपत्तेः, संयोगध्वंसात्मकत्वे तु पूर्वसंयोगध्वंसवत्यपि संयुक्ते विभक्तप्रत्ययापत्तेः, यावत्संयोगध्वसानां विभक्तप्रत्ययविषयत्वे गौरवम्, तस्य प्रामाणिकत्वे किञ्चित्संयोगोत्पत्त्यनन्तरकाले तदनुपपत्तिरेव, संयोगसामयिकाभावात्मकत्वे तु परमाण्वाकाशादिनित्यपदार्थानां संयोगसामयिकाऽभावविरहादेव तत्र सर्वदा विभक्तप्रत्ययानुपपत्तिः स्यात्। तस्माद् विभागोऽतिरिक्तोऽङ्गीकार्य इति ॥

एवम् अपरत्वं न परत्वाभावात्मकम्, भिन्नापेक्षकैकस्मिन्नेव वस्तुनि द्वयोर्वर्तमानत्वात्, 'अयं

समीपः' 'अयं कनिष्ठः' इतिप्रतीत्योरभावाऽविषयकत्वाच्च, तस्मात्परत्वं गुणान्तरम् । एवम् लघुत्वं न गुरुत्वाऽभावरूपम्, विभिन्नापेक्षकगुरुत्वलघुत्वयोरेकत्राऽनुभवसिद्धत्वात् , 'गुञ्जातः पूगीफलं गुरु लघु तु जम्बीरादि'त्यत्र प्रत्यापत्त्या परस्पराऽभावात्मकत्वे एकमपि न स्यात् । किञ्च 'अग्नेरूर्ध्वज्वलनाख्ये कर्मणि लघुत्वमसमवायिकारणमावश्यकम्, गुरुत्वाऽभावस्य तदभावात् , तस्मात् लघुत्वं गुणान्तरम् ॥ एवं स्वच्छता नाऽभावः, भावत्वात् । ननु भावत्वं कथमिति चेन्न, 'इदं स्वच्छमि'ति प्रतीतेर्भावविषयकत्वात्, अभावः स्वच्छता इति कुत्रापि व्यवहाराऽभावाच्च । ननु 'नैर्मल्यं स्वच्छते'ति व्यवहारादेव मलाऽभावः स्वच्छता स्यादिति चेन्न । मलाभाववति घटत्वादौ 'घटत्वं स्वच्छमि'त्यप्रयोगाच्च, मुखलालाऽश्रुवीर्यमज्जाकाचकटाप्रभृतिषु मलेष्वपि स्वच्छताया अनुभवसिद्धत्वात् । 'अच्छः स्फटिक' इत्यादिबुद्धौ विशेषणताख्यविषयताश्रयस्य स्वच्छत्वस्य द्रव्यक्रियादिभिन्नत्वे सति द्रव्यसमवेतत्वात् प्रतिबिम्बाऽसमवायिकारणत्वाच्च गुणत्वमिति । एवं रूक्षताऽपि न स्नेहाभावरूपा, रशियाप्रभृतिशीतप्रदेशीयहिमकरकादौ रूक्षताया अनुभवसिद्धत्वात्, स्नेहाभावस्य स्नेहेऽपि सत्त्वेन तत्र रूक्षताया अभावाच्च, जलमध्यस्थबालुकानामपि रूक्षस्वभावत्वसत्त्वात् खरताऽपरपर्यायो रूक्षता गुणान्तरम् ॥ एवं सुखदुःखेऽपि गुणान्तरे, धर्मफलस्याऽनुकूलवेदनीयतया सुखत्वसिद्धिः, अधर्मफलस्य प्रतिकूलवेदनीयतया च दुःखत्वसिद्धिः । बह्वनुकूलेऽप्यंशतः प्रतिकूलवेदनीयतासत्त्वात् बहुप्रतिकूले चांऽशतोऽनुकूलवेदनीयतासत्त्वात् सुखे दुःखाऽभावस्य दुःखे च सुखाभावस्य सत्त्वेऽपि सुखदुःखयोः सुखदुःखवत्ताया अभावात् आत्मभिन्ने यावति पदार्थे तयोरभावसत्त्वे तदव्यवहारात् एकेनाऽपरस्याऽन्यथयितुमशक्यत्वात् , परस्पराऽभावात्मकत्वे वा द्वयोरप्यसिद्धौ 'सुखी दुःखी' त्यादिप्रतीतिविलोपापत्तेः । अन्यतरस्याऽन्यतराभावात्मकत्वे तत्तत्कारणतया सिद्धस्य धर्माऽधर्माऽन्यतरस्यापि निष्फलत्वे तत्प्रवृत्तिविलोपापत्तेः संसारवैषम्यविलोपापत्तेश्च ॥

एवं धर्माऽभावो नाऽधर्मः किन्तु गुणान्तरम्, यद्यधर्मो धर्माऽभावः स्यात्तदा तस्य प्रायश्चित्तादिना नाश्यत्वं न स्यात् , अत्यन्ताभावध्वंसयोर्नाशाऽयोगात् । निन्दितकर्मणा कालान्तरभाविनारकिगतिं प्रति मध्ये व्यापारतया सिद्धस्याऽधर्मस्य गुणान्तरतैव । धर्माऽभावात्मकत्वे तस्य निन्दितकर्मजन्यत्वाऽभावेन निन्दितकर्माऽधीनवृत्तिकत्वाऽभावेन च व्यापारत्वानुपपत्त्या विषमफललब्ध्यनुपपत्तिः स्यात् । धर्माऽधर्मशून्यत्वेऽपि मुक्तात्मनि धर्माऽभावात्मकस्याऽधर्मस्य सत्त्वापत्त्या तस्य नारकित्वापत्तिः स्यादिति ॥ एवम् इच्छा न कामरूपा, कामस्य वीर्याद्यधीनस्मरविशेषस्य रतिसमकालस्य इष्यमाणस्य तदतिरिक्तत्वात्, विलक्षणचेष्टायास्तत्र प्रमाणत्वात्, स्तनन्धयानामिच्छासत्त्वेऽपि स्मराऽभावात् यौवनसहकारिणस्तस्य वासनाजन्यतयाऽऽत्मवृत्तेर्गुणान्तरत्वम् । सत्तया प्रतीतिसिद्धस्याऽपि तस्य न स्मरणात्मकत्वम्, भावनाद्वाराऽनुभवजन्यज्ञानस्यैव कारणत्वात्, वासनाद्वाराऽनुभवजन्यभावस्य तस्य तु स्वतन्त्रगुणत्वेनैवाऽत्र तन्त्रे स्वीकारात् । यावत्संसार्यात्मनां कामत्वेनाऽनुभवसिद्धस्य गुणविशेषस्य लाघवादिनाऽपलपितुमशक्यत्वात् काम्यकर्मविशेष्यकेच्छाया इव कामविषयकेच्छाया अपि कामनात्वेन व्यवहारान्न स्मराऽभिप्रायककामस्य' कामनात्वमिति ॥

एवं भयं न निर्बलत्वादिज्ञानात्मकम्, बालस्य बहुविधकार्यकनिर्बलत्वादिज्ञाने सत्यपि तत्रैव भयाऽदर्शनात् । अभिनिविष्टमरणसाधनताज्ञानजन्यस्याऽभिनिवेशाख्यभयस्य त्रासाऽपराऽभिधानस्य 'मा न भूवं, भूयासमि' ति सर्वानुभवसिद्धस्य परस्मिंश्च कम्पादिनाऽनुमेयस्य बलप्रतिद्वन्द्विनः आत्मगुणस्य द्विष्टसाधनताज्ञानजन्यद्वेषस्येव ज्ञानत्वविरहात् ॥ एवं निद्राऽपि न ज्ञानाऽभावः, गाढनिद्रोत्तरं पूर्णसुषुप्तौ ज्ञानाऽभावस्य जायमानत्वात्, पाषाणेऽपि ज्ञानाऽभावसत्त्वात् निद्रावत्त्वापत्तिः स्यात् । मायिकसत्त्वरजसी अभिभूय यदा समस्तकरणाऽवरकं तम उत्कटं भवति तद्विषयिणी निद्रा गुणान्तरम् । सत्त्वमात्रानुविद्धतमोविषयके स्वापे सति प्रबुद्धस्य 'सुखमहमस्वाप्सं प्रसन्नं मे चित्तं प्रज्ञा मे विशारदी अनुवर्तते' इति स्मरणम्, रजोमात्रानुविद्धतमोविषयके स्वापे सति प्रबुद्धस्य दुःखमहमस्वाप्सम्

अकर्मण्यं मे चित्तमनवस्थितमि' ति स्मरणम्, तमोमात्रसमुद्रेके स्वापे सति तु प्रबुद्धस्य 'गाढमहमस्वाप्सं, मूढोऽहं, गुरूणि मे गात्राणि, श्रान्तं मे मनः सालस्यं तिष्ठती'ति स्मरणम्, तादृशमायिकतमोविषयकगुणत्वं निद्रायाः उत्तरकालीनस्मरणसिद्धम्। अत एव च सत्त्वरजस्तमःस्वरूपाया मायाया अपि सप्रयोजनद्रव्यत्वम्, आत्मनि सुखे धर्मसहकारिणो मायिकसत्त्वस्य दुःखेऽधर्मसहकारिणो मायिकराजसस्य मोहे रागसहकारिणो मायिकतामसस्योत्तेजकत्वात्॥ आत्मा मायया, माया मनश्च इन्द्रियैः, इन्द्रियाणि विषयैः संयुज्यन्ते, तत्र गोलकद्वारा सर्वेषां विषयाभिमुखः साक्षात्परम्परया वा व्यापारकूटो जाग्रदवस्था। गोलकानि अद्वारीकृत्येन्द्रियाणाम्मनोमायाभिमुखो व्यापारः स्वप्नावस्था, यत्र मायोपादानकस्वतन्त्रसृष्टौ स्वाऽदृष्टादिवशाज्जायमानं प्रागननुभूतमनुभूतं यद्विषयजातं तत्सजातीयं पश्यति। अर्धसुषुप्तावपि किञ्चिदनुभवसत्त्वं 'सुखमहमस्वाप्सं, दुःखमहमस्वाप्सं, गाढमहमस्वाप्समि'ति स्मरणात्मकप्रतीतिविषयतया सिद्धयति, मोहोऽप्येतावत्पर्यन्तमेव न तु पूर्णसुषुप्तौ, अर्धसुषुप्त्यनन्तरं यदा पुरितन्नाड्यवच्छिन्नमायामनसोः आत्मना वियोगस्तदा पूर्णसुषुप्तिः, तत्र न मोहादिकं किञ्चिद्भासते, अयमनित्यो ज्ञानप्रलयः, अयं प्रतिलोमरूपोऽपि मायाया व्यापार एव, नहि व्यापारस्वभावा माया प्रतिलोमाऽनुलोमाऽन्यतरव्यापारमन्तरेणाऽवतिष्ठति। तदेवं निद्रायाः स्वप्नसन्निहितजाग्रत्स्वप्नसुषुप्तिव्याप्तगुणत्वं सध्रीचीनमेव॥

अत एव मोहोऽपि न ज्ञानाऽभावः, 'मुग्धोऽस्मी' तिप्रतीतिसिद्धस्य गुणान्तरत्वात्, सत्त्वरजस्तमसामुत्तेजकत्वं तु कार्यानुकूलतत्त्वविघटकविघटकत्वम्। 'सुखात्मककार्यानुकूलपुण्यात्मकतत्त्वविघटके रजस्तमसी तद्विघटकत्वस्योत्कटसत्त्वे'—'दुःखात्मककार्यानुकूलपापात्मकतत्त्वविघटके सत्त्वतमसी तद्विघटकत्वस्योत्कटरजसि'— 'मोहात्मककार्यानुकूलरागात्मकतत्त्वविघटके सत्त्वरजसी तद्विघटकत्वस्योत्कटतमसि'—'सत्त्वात् मायायाः संयोगेनोत्तेजकत्वस्याऽव्याहतत्वात्'। अत एव च सत्त्वरजस्तमसां नाऽऽत्मगुणैः सुखदुःखमोहैर्गतार्थत्वम्, प्रयोजकफलत्रयोस्तादात्म्याऽनुपपत्तेः। सत्त्वरजस्तमसां सार्वदिकत्वेऽपि सुखादीनां सर्वदाऽननुभवात् पूर्णसुषुप्तौ तु सर्वथाऽननुभवात्॥ ८-९-१०॥

**समीपविषयप्राप्तेर्हेतुर्गतिः क्रियोच्यते ॥ ११ ॥**
**तत्प्रभेदा अधःक्षेपः स्यन्दनं चोर्ध्वरोहणम्।**
**वक्रयानमृजुक्रान्तिः क्रमणं तरणं प्लवः ॥ १२ ॥**
**रेचनं वल्गनं चापि भ्रमणं च प्रसारणम्।**
**आकुञ्चनं प्ररोहश्च नृत्यं कम्पश्च षोडश ॥ १३ ॥**

कर्म निरूपयति—समीपेति। स्थिरस्य वस्तुनो दशदिक्ष्वपि समीपवर्ती यो विषयः प्रदेशस्तस्य प्राप्तिः संयोगस्तस्य हेतुः असमवायिकारणं या गतिः सा क्रिया कर्मेत्यर्थः। 'गति'-पदं संयोगभिन्नत्वाऽभिप्रायकम्, तथा च संयोगभिन्नत्वे सति संयोगाऽसमवायिकारणत्वं कर्मणो लक्षणम्। विभिन्ने परमाणुद्वयेऽदृष्टवशात् क्रिया जायते, यथा द्व्यणुकस्य कारणीभूतः परमाणुद्वयसंयोगो भवति, तस्याऽसमवायिकारणत्वं तत्र क्रियायामिति लक्षणसमन्वयः। शरीरवृक्षाद्यवयविद्वयसंयोगस्याऽसमवायिकारणं करवृक्षसंयोगः करक्रियाजन्यस्तत्राऽतिव्याप्तिवारणाय सत्यन्तम्। घटादावतिव्याप्तिवारणाय विशेष्यम्। रूपादावतिव्याप्तिवारणाय संयोगेति। असमवायिपदमपि समवायिकारणघटादावतिव्याप्तिवारणाय। एवं संयोगनिरूपिता या समवायसम्बन्धावच्छिन्नकारणता तद्वत्त्वं लक्षणम्। यत्र वह्निसंयोगात् द्व्यणुकारम्भकपरमाणुद्वये क्रिया तया द्व्यणुकारम्भकपरमाणुद्वयसमवेतविभागः, ततो द्व्यणुकाऽसमवायिकारणसंयोगनाशः, ततो द्व्यणुकनाशो निरुक्तविभागजन्यः परमाण्वाकाशविभागश्च भवति तत्र 'विभागनिरूपिता या विभागाऽव्यवहितपूर्वक्षणोत्पत्तिकत्वविशिष्टसमवायसम्बन्धावच्छिन्नकारणता तद्वत्त्वं कर्मलक्षणम्। एवं गुणवद्भिन्नवृत्तिगुणशक्त्यवृत्तिजातिमत्त्वं, द्रव्यत्वगुणत्वशक्तित्वभिन्नत्वे सति सत्तासाक्षाद्व्याप्या या जातिस्तद्वत्त्वं वा कर्मलक्षणम्। एवं कर्मणः एकवस्तुवृत्तित्वात् 'अनेकाऽऽश्रिताऽवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वमपि, लक्ष-

णम्। यद्वा 'चलती' तिप्रत्ययाऽसाधारणकारणताव-च्छेदकजातिमत्त्वं, कर्मपदजन्यप्रतीतिविषयत्वम्, समवायेन कर्मत्ववत्त्वं वा तल्लक्षणम्। कर्मत्वजातिस्तु प्रत्यक्षसिद्धा। नित्याऽवृत्तिसत्तासाक्षाद्व्याप्यजातिः कर्मत्वम्।

कर्म विभजते—अधःक्षेप इति। अधःक्षेपः अधोगमनम्, तत् पृथिवीजलयोः। स्यन्दनं प्रस्रवणम्, जले घृतादौ च। ऊर्ध्वरोहणम् ऊर्ध्वज्वलनम्, अग्नौ। वक्रयानं तिर्यग्गतिः पवने। ऋजुक्रान्तिः सरला अवक्रा गतिः किरणेषु। क्रमणं मनुष्यादीनां गतिः। तरणं मत्स्यादीनां गतिः। प्लवः कूर्दनं मण्डूकादीनां गतिः। रेचनम् उड्डयनं पक्षिणां गतिः। वल्गनम् अभिसरणं सर्पादीनां गतिः। भ्रमणं चक्रादीनां गतिः। प्रसारणं विकासः छत्रादीनां क्रिया। आकुञ्चनं संकोचः शरीरच्छिद्राणां क्रिया। प्ररोहः अंकुरादीनां वृद्ध्यनुकूला गतिः। नृत्यं नर्तनम्; कम्पः वेपथुभूकम्पनादिः, एतानि षोडश कर्माणि, सर्वा अपि क्रिया अनित्या एव। अधःक्षेपत्वादिजातयोऽपि प्रत्यक्षसिद्धा एव। अधः-क्षेपादिपदजन्यप्रतीतिविषयत्वं, तदवच्छेदकतत्तज्जातिमत्त्वं वा तत्तल्लक्षणं बोध्यम्। उपधेयसंकरेऽप्युपाधेरसंकरात् षोडशकर्मणां कर्मत्वव्याप्यपरस्परविरुद्धषोडशजात्याश्रयत्वमेवेति न न्यूनत्वशङ्काऽवकाशः ॥ ११-१२-१३ ॥

**क्रिया विलक्षणा यास्तु देहिनां हृदयङ्गमाः।**
**विविधाकारकारिण्यश्चेष्टास्ता मानमुच्यते ॥१४॥**
**नृत्यादौ करपादभ्र्वाद्यङ्गविक्षेपणं तथा।**
**रोमाञ्चो वेपथुः स्तम्भः स्वेदाश्रुवर्षणं तथा ॥१५॥**
**तिरस्क्रिया त्रपा लीला रोदनं नेत्रमेलनम्।**
**जृम्भणं स्खलनं तन्द्रा भ्रुकुटिः शयनं तथा ॥१६॥**
**विभ्रमो हेलनं हास्यं नर्म जाड्यं च शीघ्रता।**
**क्रीडा चाञ्चल्यमुच्छ्वास आसनं खर्जनादिकाः ॥१७॥**
**चेष्टा करणमाकारो द्वारं भावादिधीः फलम्।**
**नाऽनुमात्वं क्वचिद् व्याप्तिं विना चैष्टिकधीजनेः १८**

चेष्टां निरूपयति—क्रियेति। उक्तषोडशक्रियासु या या देहिनां जरायुजाऽण्डजस्वेदजोद्भिज्जानां, विलक्षणाः विशेषतः समयाद्यनुकूलाः क्रियाः, हृदयङ्गमाः हार्दभावरसादिनिर्णायिकाः, विविधानां विचित्रसंयोगविभागाकृतीनां कारणीभूताः, ताः चेष्टा बोध्याः, ताः अक्षानुमानोपमानशब्दार्थापादनाऽनुपलम्भसंभवैतिह्यचेष्टात्मकनवप्रमाणानामन्तिमं प्रमाणमुच्यते, अस्फुटवादिनां प्राणिनां च चेष्टयैव हार्दभावाऽवबोधनात् ॥ १४ ॥ ताश्च विशिष्य दर्शयति—नृत्यादाविति। सर्वप्राणिनां नर्तनादिक्रियायां विशेषतः करपादभ्रूलताभंगाद्याः खर्जनाद्यन्ताः क्रिया भवन्ति, अन्यत्रापि ताश्चेष्टा एव। खर्जनादिकेत्यादिना ताल-साम्य-भ्रकुंसादीनां ग्रहणम्। एवं शृङ्गारवीरकरुणाऽद्भुतहास्यभयानकवीभत्सरुद्रशान्तवत्सलरसभावाऽवबोधिका अपि चेष्टा विलासादिहावा भवन्ति। एवम्—उत्साहोद्धर्षकामेच्छाप्रेमध्यानचिन्तालज्जाक्षमाऽनादराऽभिमानभयेर्ष्यादम्भवैरमन्युशोकपश्चात्तापचित्तभ्रमतृष्णाकपटबलकौतुकप्रमादव्याजाऽऽकारगुप्तिप्रभृत्यान्तरधर्मप्रमितयोऽलंक्रियाविक्रियासमक्रियादिचेष्टाभिर्जायन्ते ॥ १५-१६-१७ ॥ तत्र करणव्यापारफलानि दर्शयति-चेष्टेति। देहिप्रयोज्यहिताऽहितप्राप्तिपरिहारानुकूलक्रियात्वं चेष्टात्वम्, तादृशचेष्टात्वेनैव चेष्टायाः करणत्वम्, द्वारत्वं चाऽऽकारत्वेन रूपेण बोध्यम्, आकारश्च विलक्षणाऽवयवसंयोगविभागाऽन्यतररूपः, तादृशव्यापारद्वारा चेष्टाजन्यज्ञानत्वं चैष्टिकप्रमात्वम्, वस्तुतस्तु यां काञ्चिच्चैष्टिकप्रमाव्यक्तिमादाय तद्व्यक्तिवृत्त्यनुभवत्वसाक्षाद्व्याप्यजातिमत्त्वं चैष्टिकप्रमाया लक्षणम्, सा च चैष्टिकप्रमा परहार्दिकभावादिविषयिणी 'अस्याऽयं भाव' इति 'एतज्जातीयो भाव' इति वा प्रमितिरुत्पद्यते इत्यर्थः। ननु क्रियाया इव चेष्टाया अपि लिङ्गत्वेन तज्ज्ञानस्य व्याप्तिज्ञानविधयैव हेतुत्वमंगीकार्यं लाघवात्, तथा च नाऽतिरिक्तचैष्टिकप्रमात्वमपीत्यत आहाऽनुमानत्वमिति। क्वचिदिति। यत्र प्राथमिककामोद्भेदबोधकचेष्टायां पूर्वं नाऽन्वयव्यतिरेकधन्यतरसहचारग्रहः, कारणाऽभावाच्च न व्याप्तिग्रहस्तत्र व्याप्तिज्ञानं विनाऽपि कामविषयक-

चेष्टिकप्रमाया उत्पत्तेः, तस्याः परामर्शजन्यज्ञानत्वाऽभावान्नाऽनुमितित्वम्, किन्त्वतिरिक्तप्रमात्वमेवेति ॥ ननु नेत्रादिमिषेणाऽऽह्वानाद्यात्मकसंकेतितार्थग्रहजनकशब्दस्मारकत्वेन चेष्टाया लिप्यादिसमानत्वाद् यथा शब्दस्मारकलिपीनां न प्रमाणान्तरत्वं तथा चेष्टाया अपि न प्रमाणान्तरत्वं, किन्तु तस्याः शब्दस्मरणेनाऽर्थस्मरणद्वारा शाब्दबोधप्रयोजकत्वमेवेति चेन्न। आजन्ममूकबधिरस्य शब्दश्रवणाऽभावेन शब्दार्थयोः संकेतज्ञानाऽभावाच्छाब्दबोधाऽनुपपत्तेः। न च तस्य चेष्टालिंगेन व्याप्तिग्रहादनुमितिरेव स्यादिति वाच्यम्। तथा सति चेष्टाया उभयस्मारकत्वेनाऽविकलेन्द्रियस्य चेष्टया शब्दस्मरणद्वारा शाब्दत्वस्य व्याप्तिस्मरणद्वाराऽनुमितित्वस्यैकत्र प्रमायामुपपत्तेः शाब्दानुमित्योरपि सांकर्यापत्तिः। न च शब्दस्मरणं व्याप्तिस्मरणं प्रतिबध्नातीति वाच्यम्। बालस्याऽनुमानद्वारैव संकेतग्रहात् तयोरविरोधित्वात्। किञ्च प्रमाणान्तरसम्पादकत्वेनाऽप्रमाणत्वं यदि तदा संकेतग्रहादावनुमानस्याऽप्यप्रमाणत्वापत्तिः स्यात्, धूमप्रत्यक्षस्याऽपि व्याप्तिस्मारकत्वेनाऽप्रमाणत्वे तज्जन्यव्याप्तिस्मरणस्याप्यप्रामाणिकतयाऽनुमितेरप्यप्रामाण्यापत्तिः स्यात् ॥ ननु तस्याः सहकारित्वमेव, प्रमाणसहकारिणः प्रमाणत्वाऽनवच्छिन्नत्वेऽपि नाऽप्रामाणिकत्वम्, प्रमाणान्तरसिद्धत्वादिति चेन्न। तथापि प्रामाणिकस्य सहकारिणस्तस्य तदुद्भाव्यप्रमाणान्तरस्य तद्द्वारस्य च फलार्थं कल्पनापेक्षया स्थलविशेषेऽनुभवसिद्धकरणतया सर्वत्र तत्र करणत्वस्यैव कल्पनाया लघीयस्त्वात्। किञ्च शब्दश्रवणोत्तरमपि विलक्षणचेष्टाया जायमानत्वेन चेष्टया शब्दस्याऽप्रमाणत्वमप्यापद्येत। 'यत्र यस्य प्राधान्यं तस्य तत्र प्रमाणत्वमि' ति यद्युच्येत ? आयातं तर्हि चेष्टाया विलक्षणव्यङ्ग्याद्यादिबोधजनिकाया अपि प्रमाणत्वम्, तत्र गुर्व्या अप्रमाणत्वकल्पनायाः प्रमाणत्वकल्पनया बाधितत्वात्, प्रमाजनकत्वाच्च तत्र प्रमाणताया बलवत्त्वात् ॥ १८ ॥

**त्रयाणां यत्तु सामर्थ्यं सर्गस्थैर्यलयावहम्।**
**शक्तिः, सांसिद्धिकी नैमित्तिकी वैकृतिकी त्रिधा १९**

शक्तिं निरूपयति—त्रयाणामिति। साक्षात्परम्परया वा द्रव्यगुणक्रियाद्युत्पत्तिस्थितिनाशकारकं यद् द्रव्यगुणक्रियावृत्ति सामर्थ्यम् 'इदमत्र शक्तमि-' तिविशिष्टधीनियामकज्ञानविषयतया सिद्धं तदेव शक्तिपदवाच्यम्। ननु कारणताख्यधर्म एव तद्विषय इति चेन्न। अभावादिसाधारणकारणताया अतिप्रसक्तायाः शक्तिपदावाच्यत्वात्, 'शक्तिः कारणते'-त्यप्रयोगात्, 'शक्तिः कारणतावती'तिप्रयोगात्, शक्तेः सामर्थ्ये वृत्तेश्च। ननूक्तविशिष्टप्रतीतेर्भ्रान्तित्वम्, विशेषणाऽसिद्धेरिति चेन्न। यादृशादेव करतलाऽनलसंयोगाद् दाहो जायते तादृशादेव सति मणिमन्त्रौषध्यादिप्रतिबन्धके न जायते, अतो यदभावात्कार्याऽभावस्तद् वह्न्यादावभ्युपेयं, तेन विना तदभावाऽऽयत्तदाहाऽभावाऽनुपपत्तेः, तथा च तदानीं मण्यादिशक्त्युपमृद्या वह्निशक्तिरतो न दाहः, तत्र वह्निसत्त्वेऽपि दाहाऽजननादन्वयव्यभिचारात् वह्नेर्न वह्नित्वेन दाहकारणत्वम्, अतो वह्नित्वं न दाहकारणतावच्छेदकम्, किन्तु मण्याद्यपसारणे उत्तेजकाऽभ्यागमने वा वह्नितो दाहजननात् तत्र वह्नौ दाहकारणतावच्छेदकः कश्चिद्धर्मोऽभ्युपगन्तव्यः, स च शक्तिरूपः सिद्धः। एवं भगवद्भक्तस्य पापदहनशक्तिः, नूतनविज्ञान ( सायन्स ) रीत्या मिश्रितविविधपदार्थानां विजातीयपदार्थीकरणशक्तिः, इन्द्रजालविद्यासंग्रहशास्त्ररीत्या विविधमन्त्रसहकृताऽभिचारप्रयोगेषु विपरीतकरणशक्तिः, योगाभ्यासजन्याऽन्तर्धानशक्तिः, औषधेषु स्वास्थ्यादिकरणशक्तिः, मूर्तिप्रतिष्ठायां महद्दर्पणभंगशक्तिः, गोमये वा वृश्चिकोत्पादनशक्तिः, एवं मेघस्तम्भनमेघोत्पादनचौरस्तम्भनगर्भस्तम्भन-मूत्रपुरीषस्तम्भन-मुखबन्धन-निद्रास्तम्भनाऽग्निस्तम्भन-बालग्रहभूत-पिशाचादिबन्धनोन्मत्तीकरण-मञ्जूषादिरक्षितवस्त्रभाण्डतैलदुग्धशाकसूत्रधातुप्रभृतिवस्तुनाशन-जलवर्तिज्वालनस्त्रीभवन-मार्जारीभवनकिन्नरीकरणनिधिदर्शकाऽञ्जनमृतसञ्जीवनयक्षिणीसाधनरसमारण-सेनापलायनीकरणजलप्रवाहस्तम्भनदृष्टिबन्धन-तिमिरदर्शनवीर्यस्तम्भनरजआकर्षणमारणोच्चाटनकारिका विभिन्नाः शक्तयः तदभावाऽन्यथानुपपत्त्यादिना सिद्ध्यन्ति। एवं 'व्रीहीन् प्रोक्षती' त्यत्र

कालान्तरकार्याऽनुकूलोऽतीन्द्रियोऽतिशयः प्रोक्षणजन्यो व्रीहिनिष्ठोऽस्ति योऽवघातप्रयोजको भवति। तथा च 'प्रोक्षणादयो भावंभूतमतिशयं जनयन्त एव कालान्तरभाविकार्यजनकाः, प्रमाणतस्तदर्थमुपादीयमानत्वात्, रोगचिकित्सावत्' । स चाऽतिशयो लाघवात् फलसमानाधिकरण इति व्रीहिनिष्ठ एव। किञ्च—'यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतमेव तदनुकूलमतिशयं जनयति रोगचिकित्सावत्' इति। न च शत्रुवधमुद्दिश्य प्रवर्तिते श्येनयागादौ व्यभिचार इति वाच्यम्। शत्रौ तस्य मरणानुकूलविलक्षणाऽतिशयजननात्, यत्सहकृतं यागकर्तुरदृष्टं भवतीति। एवं 'प्रोक्षणं पुरुषसमवेताऽतिशयजनकम्, कालान्तरभाविकार्यजनकत्वे सति विहितत्वात्, यागवदि'ति। न च कृषिचिकित्सादौ व्यभिचार इति वाच्यम्। तत्रापि पुरुषे कृषिचिकित्सया कृष्यनुकूलशक्तिविशेषस्य जनकत्वात्, कथमन्यथा कृषिचिकित्सोत्तरमेव श्रेष्ठोचितकृषिसम्पादकत्वं, न तु पूर्वम्। पूर्वमपि स्याच्चेत्? चिकित्सार्थमेव न प्रवर्तेतेति। न च तथापि अदृष्टेनाऽतिशयस्य निरर्थकत्वमिति वाच्यम्। अदृष्टसहितस्याऽप्यशक्तस्य कार्याऽजनकत्वात्। सत्यपि यावत्कारणसमवधाने यदसत्त्वे कार्याऽनुत्पादः यत्सत्त्वे च कार्योत्पादः स तत्रातिशयविशेषो विहितसपरिकरतरुणीयोगे षण्ढे इवाऽषण्ढे इव चेति कल्प्यते। न च विचित्रसंस्कारैरतिशयस्याऽन्यथासिद्धत्वमिति वाच्यम्। संस्काराणां क्रियाविशेषाणां तत्र यदन्वितत्वे सत्येवाऽग्रिमकार्यकारित्वं साधारणक्रियातो व्यावृत्तत्वं च तदेवाऽतिशयवत्त्वात्मकं वैचित्र्यं मृगमदवासनावासितवसन इव केसरान्वितदुग्ध इव च स्वाऽन्विताऽऽश्रयेऽपि वैचित्र्यमतिशयात्मकं जनयेदिति। न च तस्यैव सर्वत्र सत्त्वेन कारणान्तराणां कल्पने गौरवमिति वाच्यम्। एकपुत्रेण पुत्रवत्त्वे सिद्धे पुत्रान्तराणां सत्त्वं न गौरवायेतिवत् विविधमन्त्रौषधिरसायनादौ शक्तिविशेषसत्त्वं न गौरवाय। अन्यथा एकेनैव पदार्थेन जगत्सार्थक्यसंभवेऽवान्तरकल्पनमपि गौरवं स्यादिति। ननु कारीरीयागजनितसंस्काराधारपुरुषसंयोगाज्जलमुचामदृष्टसमवधानवत् सर्वत्र व्रीहिरसौषधिप्रभृतिपदार्थेष्वदृष्टमेव कल्प्यतामिति चेन्न। कारीरीयागाद् यथा मेघः प्रवर्षति तथा योरपीयदेशेषु नवीनाऽऽविष्कृतद्रव्ये शक्तिविशेषवत् हिमालयादिशीतवायुविशेषे वृष्टिजननशक्तिवत् सर्वत्राऽदृष्टवदात्मसाध्ये लौकिकवैदिककार्ये तदनुकूलशक्तेरपलपितुमशक्यत्वात्। एवं प्रतिमादौ प्रतिष्ठाजन्यं न यजमानाऽदृष्टं पूज्यत्वप्रयोजकं भोगादिना तन्नाशेऽपि पूज्यत्वात्, तत्सत्त्वेऽपि चाण्डालादिस्पर्शेनाऽपूज्यत्वात्, किन्तु प्रतिष्ठाजन्याऽस्पृश्यस्पर्शादिनाश्या प्रतिमादिनिष्ठा शक्तिर्भगवन्निवासव्याप्ताऽभ्युपेया, तादृशाऽतिशय एव तत्र देवताया अहंममताप्रयोजकः, स एव चमत्कारविशेषे भक्तनिरूप्यपूज्यताप्रयोजकश्च। न च तत्र प्रतिष्ठाध्वंसः प्रतिष्ठाकालीनयावदस्पृश्यस्पर्शादिप्रतियोगिकाऽनादिकालसंसर्गाऽभावसहित एव पूज्यत्वप्रयोजक इति वाच्यम्। अस्पृश्यप्रतिष्ठापितदेवानां कालीभैरवादीनां चाऽस्पृश्यमांसादिनाऽस्पृश्यकृतपूजने व्यभिचारात् वैदिक्यां खण्डितप्रतिमायां तादृशाऽभावसत्त्वेऽपि पूज्यत्वाऽभावेनाऽन्वयव्यभिचारात्। न च खण्डिता नवीना एव द्रव्यान्तरमिति वाच्यम्। सैवेयमिति प्रत्यभिज्ञानात्। न च तत् साजात्याऽवलम्बनमिति वाच्यम्। साजात्येऽप्यन्ताऽवयवतदाकृतिभेदप्रयोज्यत्वात्। न चाऽत्राऽवयवतदाकृतिभेदोऽस्ति पूर्वस्थितस्यैव सत्त्वात्। अन्यथैकद्व्यणुकवियोगेऽपि यावदवयविध्वंसस्वीकारे सर्वासामपि प्रतिमानां यथासमयमङ्गलेपनमज्जनस्नानादिकार्ये कस्यचिद् द्व्यणुकस्य प्रान्तावयवरूपस्य क्षरणात् सर्वथैवाऽपूज्यत्वापत्तेः। न च तत्र तदर्थमेव प्रतिदिनमावाहनादिविधिः कर्तव्यतयोपदिष्ट इति वाच्यम्। तस्य चलप्रतिमाविषयकत्वात्, स्थिरप्रतिमायां तदभावात्। न च तत्रापि वार्षिकः प्रतिष्ठोत्सवविधिरस्तीति वाच्यम्। तन्मध्यसमयेऽपूज्यत्वस्याऽपरिहार्यत्वात्, अन्यथा व्यतिरेकव्यभिचारापत्तेर्दुर्वारत्वात्। न च खण्डितत्वाऽभावविशिष्ट एवोक्ताऽभावसहकृतः प्रतिष्ठाध्वंसः पूज्यत्वप्रयोजक इति वाच्यम्। तदपेक्षया प्रतिष्ठाजन्यातिशयस्यैव पूज्यत्वप्रयोजकत्वे लाघवात्। किञ्च समयविशेषे देशविशेषे वाऽवलम्ब्यैवेष्टार्थप्रदानशक्तिशालिनि गुणैश्वर्यादित उत्कृष्टव्यक्तिविशेषे षोडशोपचार-

घटितपूजार्थं प्रवर्तते, न तु गुणैश्वर्यादिशून्ये बहुविधाऽभावकूटविशिष्टेऽपकृष्टे वा, प्रागपकृष्टगुणोऽपि साधनविशेषाऽऽसादितैश्वर्यसिद्धिः पश्चात्पूज्यते प्रागपूजकेन तेनैव, नहि वह्न्यभावकूटानां तत्र सत्त्वात् तानभिप्रेत्य तदधीनीभूय पूजायां प्रवृत्तिः, किन्तु शरीरमूर्तिप्रभृत्यधिष्ठातृव्यक्तिविशेषस्योत्कृष्टैश्वर्यचमत्कारगुणादीनभिप्रेत्यैव तदधीनीभूय पूजायां प्रवृत्तिः, एवं चोत्कृष्टैश्वर्यचमत्कारगुणशालिदेववासस्य समर्थशरीरप्रतिमायामेव नियतत्वाद् व्यापकवलात् फलवलाच्च शक्त्यात्मकसामर्थ्यसिद्धौ प्रतिष्ठाविध्यभिनिष्पन्नशक्तिमन्मूर्तावैश्वर्यशालिदेवतापूजने शक्तिसहकृतैश्वर्यगुणादीनां प्रयोजकत्वं न त्वभावस्य शुष्कस्योषरसमस्येति। शब्दैक्येन प्रयोजकतालाघवं तु प्रतिष्ठाध्वंसस्याऽस्पृश्यस्पर्शाऽभावकूटसहितस्य पूजकप्रवृत्तिकारणेष्टसाधनताविरहादेव विरोध्युत्पादकतया बाधितम्। एवं च शक्त्यैश्वर्यगुणादीनामन्यतमत्वेन पूज्यताप्रयोजकत्वात् शक्तेरपि तथात्वमनायाससिद्धमिति। अत एव कामिनीचरणाऽभिघातदोहदादिभिरशोकपुष्पोत्कर्षदर्शनात् तत्रापि आधेयशक्तिसिद्धिः। न च तत्र चरणदोहदादिसंयोगध्वंसस्य कारणत्वमिति वाच्यम्। सर्वदा तस्य सत्त्वेन सार्वदिकपुष्पोत्पत्तिप्रसंगात्। न च ऋतुसमयः सहकारीति वाच्यम्। क्वचित्सहकारिसमवहितचरणदोहदादिसंयोगध्वंससत्त्वेऽपि मन्त्रादिना लवणादिसेचनेन वाऽफलतादर्शनात्। तथा च कारणसत्त्वेऽपि मन्त्रादिसत्त्वे च यदभावेऽफलता स फलप्रयोजको मन्त्रशक्तिनाश्यो लवणादिसेचनजन्यविरोधिशक्तिप्रतिबोध्यो वा शक्तिविशेषस्तत्र सिद्धयतीति। ननु चरणाभिघाताकृष्टभागान्तरजनितवृक्ष एव पुष्पं प्रति कारणमिति चेन्न। तादृशवृक्षस्य द्वित्रक्षणान्तरे एवाऽवयवोपचयादिना नाशेन पुष्पकाले तन्नाशात्। ननु तर्हि शक्तिविशेषोऽपि नङ्क्ष्यतीति चेन्न। तयैव धारारूपेण शक्त्यन्तरोत्पादात्, ऋतुसमवहिताया एव शक्तेः पुष्पप्रयोजकत्वात्। अत एव ताम्रकांस्यादिपात्रेषु भस्मादिसंयोगादिजन्या शुद्धिरूपाऽऽधेयशक्तिरभ्युपगन्तव्या। ननु तत्र भस्मादिसंयोगध्वंस एव संयोगसमानकालीनाऽस्पृश्यस्पर्शप्रतियोगिकयावदनादिसंसर्गाऽभावसहित एव शुद्धिपदार्थो बोध्य इति चेन्न। अशुद्धद्रव्यं जलेनाऽतिशयं प्रक्षाल्य पश्चाद्भस्ममात्रेण शुद्धीकृतेऽपि तत्र पात्रादौ किञ्चिद्भस्मयोगसत्त्वेऽपि तत्र शुद्धिव्यवहारात्, अशुद्धेऽपि मृत्पात्रादौ कृतस्य भस्मादिसंयोगध्वंसस्य निरुक्ताऽभावसहितस्य सत्त्वेऽपि तत्र शुद्धित्वेनाऽव्यवहारात्, भावगतकारणताया उपलब्धत्वेऽभावे तद्धावनस्याऽयुक्तत्वात्, युक्त्या तदनुधावने प्राप्तस्याऽन्यथसिद्धिरिति अनाप्तत्वे तद्रचितशास्त्रस्याऽप्रामाणिकतापत्तेः, अभावाद्भावोत्पत्तिवादितोऽविशेषतापत्तेश्च। अत एव चाऽभिमन्त्रितपूगीफलपयःसलिलमाषादावपि जायमानशक्तिविशेष एव देवतासन्निधिकारकस्तेन देवेन चेष्टं सम्पाद्यत इति। एवं संकरीकरणकलमबीजादावपि लताद्वयवृक्षादिद्वयसंयोगाद् या रसदुग्धादिमिश्रणजन्या नूतनैव जीवनशक्तिरुत्पद्यते सैव विचित्रफलप्रयोजिकेति। एवं क्षेत्रे माघे कर्षिते शीतयोगाद् भूगर्भोष्णताशमने ग्रीष्मे सूर्यकिरणे भूगर्भे शक्तिविशेषजननात् हैमन्तिकसस्यानामतिफलदत्वं भवति। एवं सत्यपि तीक्ष्णे लौहेऽक्रिये न छिदा सक्रिये तु छिदा इति क्रियायामपि छिदाकरणानुकूला शक्तिर्भवति। रजस्वलाछायायां सर्पाऽन्धीकरणशक्तिः, भूतसंयोगादौ विचित्तीकरणशक्तिरपि बोध्या॥ तां विभजते—सांसिद्धिकीति। सहजेत्यर्थः। नैमित्तिकी—निमित्तजन्याऽऽधेयशक्तिः। वैकृतिकी—विरुद्धतत्त्वयोगजन्याऽऽकस्मिकीत्यर्थः॥ १९॥

**सांसिद्धिकी भवेद् द्रव्ये तत्तत्कार्यप्रवर्तने।**
**सहकारितया वृत्तिर्बीजशक्तिर्हि सोच्यते॥२०॥**
**जीवन्याख्या रसे रक्ते पोषिका चन्द्रमादिषु।**
**धातुपाषाणपुण्यात्मध्रुवेष्वाकर्षिका मता॥२१॥**
**भूतेषु धारिका शक्तिराकाशे स्तम्भिका मता।**
**बन्धनाख्या तु मायायां चेतयित्र्यात्मनि मता २२**
**कुर्वद्रूपा तु बीजेषु मारिका विषवायुषु।**
**हासिनी समये चाऽथ मोहिनी मनसि स्मृता॥२३॥**
**स्वच्छे द्रव्ये प्रतिबिम्बाधानशक्तिश्च तेजसि।**
**रोधिनी तिमिरे ह्येता बीजशक्त्य ईरिताः॥२४॥**

तत्र सांसिद्धिकीं शक्तिं दर्शयति—सांसिद्धिकीति। सा स्वाश्रयजन्यकार्येषु सहकारिणी भवति, अतो बीजशक्तिरुच्यते इत्यर्थः। तदवान्तरभेदानाह—जीवन्याख्येति। जीवनी, पोषणी, आकर्षणी, धारणी, स्तम्भनी, बन्धनी, चेतयन्ती, कुर्वद्रूपिणी, मारणी, ह्रासिनी, मोहिनी, प्रतिबिम्बनी, रोधनी चेत्याद्या बोध्याः॥ २०॥ २४॥

प्रतिबन्धोपमृद्याऽपि योत्तेजकसमुद्भवा।
निमित्तसमयव्याप्तोपाधिशक्तिर्निमित्तजा ॥२५॥
पवित्रात्मकृतो मन्त्र आत्मशक्तिसमुद्भवः।
आत्मशक्तिप्रयोज्यत्वात् सशक्तो जायते हि सः २६
मलिनात्मप्रयुक्तो यो मन्त्रो मलिनदैवकः।
तौ सिद्ध्यायासजैश्वर्यात् कार्यशक्तौ मतौ सदा २७
मृद्भस्मजलयोगोत्था शुद्धिराधेयशक्तता।
शब्देऽथ विधिवाक्यादावात्मजा शक्तिरास्थिता २८
मेधायां ग्रहणाख्या या धारणाख्या च सम्मता।
तिष्ठन्त्यो यान्ति कार्याणामन्तं निमित्तजा हि ताः २९

नैमित्तिकीं शक्तिं दर्शयति—प्रतिबन्धेति। सति प्रतिबन्धके नष्टाऽपि उत्तेजकसहायाद् या उत्पद्यते, यावन्निमित्तं तावत्तिष्ठति, सा निमित्तजन्यत्वाद् उपाधिशक्तिरुच्यते इत्यर्थः। तद्भेदास्तु मन्त्रशक्तिः, ऐश्वर्यशक्तिः, शुद्धिशक्तिः, शब्दशक्तिः, विधिशक्तिः, मेधाशक्तिरित्याद्याः॥ २५॥ २९॥

रसायनैन्द्रजालादिचित्रप्रयोगसम्भवा।
नवा विकृतिजाऽचिन्त्याऽऽकस्मिकी शक्तिरुच्यते॥
विरुद्धवस्तुसम्पर्कजन्या मद्ये तु मादिका।
ओषधिरसधातूनां संकरात् संकरी मता ॥३१॥
त्रिदोषादिसमुत्पन्ना चाऽव्यवस्थानकारिणी।
आद्या नित्या तथाऽनित्या गुणानामिव सर्वथा ३२
अन्ये तु सर्वथाऽनित्येऽसंख्या आन्तरभेदजाः।
शक्तिपदाभिधेयत्वं चापि तल्लक्षणं मतम् ॥३३॥

नैमित्तिकीं शक्तिं निरूपयति—रसायनैन्द्रजालेति। रसायनशास्त्रैन्द्रजालविद्यासंग्रहप्रभृतिनिबन्धोक्तविरुद्धपदार्थानां विचित्रप्रयोगसंभवा या या चिन्तयितुमप्यशक्याऽकस्मादुत्पन्ना भवति सा वैकृतिकी आकस्मिकी शक्तिरुच्यत इत्यर्थः। तत्र मादिका-संकरीत्रिदोषिणीप्रभृतिभेदा बोध्याः। सांसिद्धिकी द्विविधा नित्या अनित्या च, नित्यगुणजकार्यानुकूला नित्यगुणसहकारिणी नित्या, तदन्याः सर्वा अप्यनित्याः। अवान्तराऽनन्तानामपि संक्षेपात् निरुक्तत्रिविधत्वेनैव शास्त्रप्रयोजनं निर्वाह्यम्। शक्तिलक्षणं गुणवृत्तित्वे सति जातिमत्त्वम्, कर्मवृत्तित्वे सति जातिमत्त्वम्, गुणकर्मभिन्नत्वे सत्यन्त्यावयविवृत्तित्वे सति जातिमत्त्वम्, शक्तिशून्यत्वे सति जातिमत्त्वम्, शक्तिपदजन्यबोधविषयत्वं, शक्तित्वजातिमत्त्वं वा बोध्यम्। एवमवान्तरलक्षणान्यप्यूह्यानि। सा च समवायसम्बन्धेन द्रव्ये गुणे कर्मणि च वर्तते॥ ३०॥ ३३॥

समवायः स्वरूपश्च तादात्म्यः कालिकस्तथा।
पर्याप्तिः पञ्च संसर्गाः, नित्योऽनित्यः पुनर्द्विधा ३४
यश्चांऽशेष्वंशिनो द्रव्ये सामर्थ्यगुणकर्मणाम्।
तेषु जातेर्नित्यद्रव्ये विशेषाणां समोऽन्वयः ३५
संसर्गोपाध्यभावानां स्वरूपस्त्वन्वयो मतः।
स्वस्य स्वस्मिँस्तु तादात्म्योऽनित्ये काले च कालिकः
द्वित्वादीनामनेकेषु पर्याप्तिरन्वयो मतः।
यस्तु गुणोऽपि संयोगोऽन्वयः स द्रव्ययोर्मतः ३७
विशिष्टबुद्धितासाध्यस्त्वनध्यक्षो भवेत्तु यः।
संसर्गत्वेन संसर्गपदवाच्यत्वलक्षणम् ॥३८॥
अन्ये तु कल्पितास्तत्तद्धर्मेणाऽन्वयसंज्ञकाः।
वैशिष्ट्यपूर्वकालत्वादयस्त्वत्रैव संहिताः ॥३९॥

संसर्गं निरूपयति—समवाय इति। संसर्गत्वं विशिष्टप्रतीतिनियामकत्वम्, स्वनिरूपितप्रकारत्वविशेष्यत्वान्यतरवच्छिन्नवृत्तिसंसर्गताश्रयत्वम् इति यावत्। समवायः अयुतसिद्धसम्बन्धः। स्वरूपः दिङ्निरूपितविशेषणतात्मकसम्बन्धः। तादात्म्यः अभेदसम्बन्धः, एकमात्रवृत्तिसंसर्गो वा। कालिकः

कालनिरूपितविशेषणताख्यः सम्बन्धः। पर्याप्तिः द्वित्वादीनामनेकेषु संसर्गः। एते पञ्च भेदा इत्यर्थः॥ तान् विभजते—नित्य इति। समवायो नाना, नित्याऽनित्यभेदात्, तत्र नित्यानां नित्यः, अनित्यानां त्वनित्यः, नित्याऽनित्यानामप्यनित्यः, नित्यत्वं प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वम्, अनित्यत्वं तु प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वम्। समवायः 'नीलो घट' इत्यादौ प्रत्यक्षसम्बन्धिद्वयस्य प्रत्यक्षसिद्धः, अप्रत्यक्षसम्बन्धिनोः समवायोऽप्रत्यक्षः। तस्य सिद्धिस्त्वनुमानेन—'गुणक्रियाशक्तिजातिविशेषविशिष्टज्ञानं विशेषणविशेष्यसम्बन्धविषयकम्, विशिष्टज्ञानत्वात्, दण्डी पुरुष इति विशिष्टज्ञानवत्'। यद्वा समवायेन पटत्वावच्छिन्नं प्रति तादात्म्येन तन्तुत्वेन हेतुत्वात् कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः। अनुमानं यथा—'तादात्म्यसम्बन्धावच्छिन्नतन्तुनिष्ठकारणतानिरूपितपटत्वावच्छिन्नकार्यता किञ्चित्सम्बन्धाऽवच्छिन्ना, कार्यतात्वादिति'। अत्र स्वरूपतादात्म्यकालिकपर्याप्तिसंयोगानां बाधात् समवायः सिद्धयति। ननु भिन्नयोरतादात्म्यात् नित्येषु कालिकाऽयोगात् द्रव्ययोरेव तु संयोगात् संख्यानां च पर्याप्तेः भवन्त्वेतेषां बाधः, स्वरूपस्तु कथं न?, तथा चाऽर्थान्तरत्वमिति चेन्न। युतसिद्धादभावसाधारणदिङ्निरूपितविशेषणतात्मकस्वरूपतोऽयुतसिद्धस्य संसर्गान्तरत्वेन तादृशस्य समवायस्यैवाऽत्र प्राप्तत्वात्, अन्यथा 'यत्र समवायेन कार्यमुत्पद्यते तत् तस्य समवायिकारणमि'तिव्यवस्थाविलोपापत्तेः। न च 'यत्र सम्बद्धं कार्यमुत्पद्यते तत् समवायिकारणमि'त्येव लक्षणमिति वाच्यम्। तथा सति कपालसम्बद्धघटध्वंसं प्रति कपालस्य समवायिकारणत्वप्रसंगात्। ननु तथापि लाघवादेक एव नित्यः समवायोऽस्त्विति चेन्न। सम्बन्धसत्तायाः सम्बन्धिसत्त्वनियामकतया वाय्वादौ रूपादिमत्त्वापत्तेः। न च रूपादिप्रतियोगिकत्वविशिष्टसमवायाऽभावान्न रूपादिमत्त्वापत्तिरिति वाच्यम्। विशिष्टस्य शुद्धानतिरेकात्। उक्तरीत्याऽनन्तापत्तीनां वारणार्थमनन्तविशिष्टत्वानामेकस्मिन् समवाये कल्पनाऽपेक्षयाऽनन्तसमवायकल्पनायां गौरवाऽभावात्। अनन्तोत्पन्नविनष्टवस्तूनामयुतसिद्धसंसर्गाणामुत्पादविनाशानां प्रत्यक्षसिद्धत्वेन लाघवस्य प्रत्यक्षबाधितत्वाच्च। एवं स्वरूपतादात्म्यकालिकपर्याप्तीनामपि नित्यत्वाऽनित्यत्वे सम्बन्धिवस्तुनित्यत्वाऽनित्यत्वाधीने बोध्ये। स चांऽशेष्ववयवेषु, अंशिनोरवयविनः, गुणगुणिनोः, कर्मकर्मवतोः, शक्तिशक्तिमतोः, जातिजातिमतोः, नित्यद्रव्यविशेषयोः, सम्बन्धः समोऽन्वयः समवाय एवेत्यर्थः। उपादानकारणतानिरूपितकार्यतावच्छेदकसम्बन्धत्वम्, अवयवाऽवयविगोचरविशिष्टधीनियामकसंसर्गत्वम्, अवयवितामात्रनियामकसंसर्गतावच्छेदकवत्त्वं, समवायभिन्नभिन्नत्वं, समवायपदवाच्यत्वं वा समवायलक्षणम्॥ स्वरूपसम्बन्धं दर्शयति—संसर्गोपाध्यभावानामिति। समवायस्वरूपकालिकतादात्म्यपर्याप्तीनां गगनत्वतद्वचक्तित्वाद्युपाधीनाम् अभावानां च स्वस्वाश्रयेषु यः सम्बन्धः स स्वरूपो दिङ्निरूपितविशेषणतात्मकः सम्बन्धो बोध्यः। न च स्वरूपत्वेन तस्यापि पुनः सः तस्यापि च पुनः स इत्येवमनवस्थाऽऽत्माश्रयत्वं चेति वाच्यम्। स्वरूपस्वरूपस्याऽनुयोगित्वरूपत्वात्, अनुयोगित्वं चोपाधिरूपम् 'अधिकरणमि'तिज्ञानीयविषयतारूपं वेत्यंगीकारात्। न च तर्हि स्वरूपस्यैवाऽनुयोगित्वेन निर्वाहादतिरिक्तत्वमविचारसहमिति वाच्यम्। अभावानां विशिष्टधीनियामकतया तस्य सम्बन्धत्वेनाऽऽवश्यकत्वात्। 'घटाऽभाववद् भूतलमि'ति विशिष्टबुद्धिः संसर्गतानिरूपिका, विशिष्टबुद्धित्वात्, घटवद्भूतलं घटवत्कपालं घटवत्समयो वेति विशिष्टबुद्धिवत्' इत्यत्र यः संसर्गताश्रयः स स्वरूपसम्बन्धः। न चैतदनुमानेन वैशिष्टचाख्यं सम्बन्धान्तरं सिद्धचेदिति वाच्यम्। तस्य नित्यत्वे घटाभाववति भूतलादौ घटाऽऽनयनोत्तरं घटाभावप्रमात्वप्रसंगात्, एकत्वे सत्यनित्यत्वे तु तत्र तन्नाशेनाऽघटवत्यपि सर्वत्र घटाभावप्रमात्वानुपपत्तिः स्यात्, अनेकत्वे सत्यनित्यत्वे तु अन्यत्र क्लृप्तस्वरूपसम्बन्धानामेवाऽत्रापि स्वीकारेण निर्वाहेऽतिरिक्तवैशिष्टचानां स्वीकारे गौरवात्, तेषां भावाऽभावसाधारणविशिष्टपदार्थधर्माणां स्वतन्त्रसम्बन्धत्वेनाऽनुभवविरोधात्। सम्बन्धत्वे वा तत्तत्सम्बन्धात्मकतया पदार्थान्तरत्वाऽभावात्, विशेषणरूपत्वेऽपि स्वरूपानतिरेकात्,

तथा च घटाऽसमवधानकालोत्पन्न 'घटाभाववद्भूतलमि'तिप्रतीतिविषयतयाऽतिरिक्ता सिद्धयन्ती स्वरूपात्मकविशेषणता घटकाले जीवन्ती सती कथं सम्बन्धतां जह्यात् ?, तस्मान्नष्टैव सा तदानीम् इत्यनित्यसम्बन्धिनां विशेषणतात्मकस्वरूपसम्बन्धानां नानात्वमनित्यत्वं च । नित्यानां तु नित्यः स्वरूपसम्बन्धः, महादिशि सर्वाधारताप्रयोजकः स एव । तेषामनुगमकं तु विशेषणतात्वं स्वरूपत्वात्मकमेव समवायत्ववदिति । अभावोपाधिविशिष्टधीनिरूपितसंसर्गतावत्त्वं, 'सर्ववती दिगि'तिप्रतीतिनियामकसंसर्गत्वम्, द्विङ्गनिरूपितसंसर्गतावत्त्वं, स्वरूपपदवाच्यत्वं वा तल्लक्षणं बोध्यमिति ॥

तादात्म्यं दर्शयति—स्वस्येति । घटादेर्घटादौ यः संसर्गः 'घटो घट एवे' तिप्रतीतिनियामकः स तादात्म्यसम्बन्धः; स च सर्वेषां प्रत्यक्षपदार्थानां प्रत्यक्षेण सिद्धः, अन्येषां तु 'द्रव्यसमवायिकारणता किञ्चित्सम्बन्धावच्छिन्ना, कारणतात्वात्, घटनिंरूपितदण्डकारणतावदि'त्याद्यनुमानेन सिद्धिः। स च नित्यपदार्थानां नित्योऽनित्यानां त्वनित्यः। तेषामनुगमकं तादात्म्यत्वमेव । न च घटेन सह घटतादात्म्यं घटभेदाऽभाव एवेति वाच्यम्। घटत्वात्मकतादृशाऽभावात् तस्याऽतिरिक्तत्वात् । न च तथा सति घट एव स घटाभावाऽभावो वेति वाच्यम्। भेदीयप्रतियोगितावच्छेदकसंसर्गतया सिद्धस्य तस्य घटाद्यभावाभावात्मकघटादिप्रतियोगितो भिन्नत्वात् । वस्तुतोऽभावस्याऽतिरिक्तत्वेन घटाऽभावाऽभावस्य घटाऽतादात्म्याच्च । भेदीयप्रतियोगितावच्छेदकसम्बन्धत्वं, घटान्वये 'स्वविशिष्टं स्व' मित्यादिबुद्धिनिरूपितसाक्षात्सांसर्गिकविषयतावत्त्वं, तादात्म्यपदवाच्यत्वं वा तल्लक्षणं बोध्यम् ॥

कालिकं दर्शयति—अनित्ये इति । अनित्येषु पदार्थेषु अनित्यानां देशान्तरीणपदार्थानां कालिकसम्बन्धेन सत्त्वांगीकाराव् 'कालिकेन घटवान्पट' इतिबुद्धिविषयसंसर्गः कालिकः । अन्यपदार्थान् प्रति कालिकेन कालस्य निमित्तकारणत्वाज्जन्यपदार्थेषु कालोपाधिस्वीकारात् । महाकालस्य च कालिकेन सर्वाधारत्वात् 'कालः सर्ववानि' तिप्रतीतिनियामकसंसर्गः कालिक एवेत्यर्थः । कालस्याऽप्रत्यक्षत्वेन कालिकस्याऽप्यप्रत्यक्षत्वम् । अतः 'सर्ववान् काल' इति विशिष्टबुद्धिः संसर्गतानिरूपिका, विशिष्टबुद्धित्वात्, रूपवान् घट इतिविशिष्टबुद्धिवदि' त्यनुमानेन तत्सिद्धिः । न च तत्र दैशिकस्वरूप एव विषय इति वाच्यम् । 'इदानीं घट' इतिप्रतीतिविषयसम्बन्धघटकतया ज्येष्ठत्वकनिष्ठत्वाऽसमवायिकारणसंयोगाश्रायतया च सिद्धस्य कालस्य यः सर्वाधारताप्रयोजकसम्बन्धस्तस्य दैशिकस्वरूपतो विलक्षणत्वात् । दैशिकस्वरूपस्य काले व्यधिकरणत्वात् । दैशिकस्वरूपस्यापि कालवृत्तितानियामकतयाऽन्ततः कालिकस्याऽपेक्षणाच्च । स च नित्यसम्बन्धिनोर्नित्यः, अन्यतरसम्बन्धिनोऽनित्यत्वे त्वनित्य एव । तेषामनुगमकं तु कालिकत्वमेव । कालनिरूपितसर्वाधारताप्रयोजकसम्बन्धत्वं, 'घटादिमान् काल' इति प्रतीतिविषयसंसर्गत्वम्, कालनिष्ठनिमित्तकारणतावच्छेदकसम्बन्धत्वम्, कालिकभिन्नभिन्नत्वम्, कालिकपदवाच्यत्वं वा तल्लक्षणं बोध्यम् ॥

पर्याप्तिं निरूपयति—द्वित्वादीनामनेकेष्विति । द्वित्वादिसंख्यानां व्यक्तिद्वयादिषु यः सम्बन्धः स पर्याप्त्याख्योऽतिरिक्तः सम्बन्ध इत्यर्थः । न च समवायेनैव 'एको घट' इतिवत् 'द्वौ घटा' वित्यादिव्यवहारनिर्वाहे पर्याप्तिकल्पनं निरर्थकमिति वाच्यम् । 'एको द्वावि' तिप्रतीत्यभावात् 'एको न द्वावि' तिप्रतीतिसद्भावाच्च तदर्थं पर्याप्तिसम्बन्धांऽगीकारात् । अन्यथा समवायेनैकघटेऽपि द्वित्वस्य सत्त्वेन 'एको द्वा' वितिप्रतीत्यापत्तेः, 'एको न द्वावि'-तिप्रतीत्यनुत्पत्तेश्च। किञ्च-'आकाशावि' तिवाक्यस्य प्रामाण्यापत्तिवारणाय पर्याप्त्यंगीकारस्याऽऽवश्यकत्वात्। वस्तुत्रये त्रित्वं वस्तुचतुष्टये चतुष्ट्वमेवमादिपर्याप्त्या बोध्यम् । पर्याप्तिसम्बन्धोऽपेक्षाबुद्धिजन्यद्वित्वादीनामनित्यत्वादनित्यः, परमेश्वरीयाऽपेक्षाबुद्धिविषयं नित्यपदार्थानां द्वित्वादिकं तु नित्यमिति तत्संर्गस्य पर्याप्त्याख्यस्य नित्यत्वमिति बोध्यम् । एवमवच्छेदकतानामपि स्वाश्रयेषु पर्याप्त्याख्यः सम्बन्धो बोध्यः । अवच्छेदकताविशिष्टबुद्धिनियामकसंसर्गत्वम, 'द्वौ घटावि' त्यादिप्रतीतिनियामकसं-

सर्गत्वम्, पर्याप्तिभिन्नभिन्नत्वम्, पर्याप्तिपदवाच्यत्वं वा तल्लक्षणं बोध्यम् ॥

संयोगस्य गुणाऽन्तर्गतस्य संसर्गत्वेनाऽविभागेऽपि गुणत्वव्याप्यसंसर्गत्वं दर्शयितुमाह—यस्त्विति । स च संयोगो द्रव्ययोरेव सम्बन्धो नाऽन्ययोः, स च विभुनित्यद्रव्याणां नित्योऽनित्यद्रव्याणामविभुद्रव्याणाञ्चाऽनित्य इत्यर्थः । 'इमौ संयुक्ताविं'तिविशिष्टधीनियामकसंसर्गत्वम्, संयोगपदवाच्यत्वं वा तल्लक्षणम् ॥ उक्तेषु योऽप्रत्यक्षस्तस्य सिद्धिमाह—विशिष्टे इति । तत्तद्विशिष्टबुद्धित्वेन हेतुना संसर्गताश्रयतया यथायोगं सिद्ध्यतीत्यर्थः । सर्वेषां लक्षणानि दर्शयितुमाह—संसर्गत्वेनेति । संसर्गपदवाच्यत्वं सामान्यं लक्षणम्, समवायादिपदवाच्यत्वादिकं विशेषलक्षणमित्यर्थः ॥ अन्येषामपि पदार्थानां स्वावच्छेदकावच्छिन्नतया संसर्गत्वसत्त्वेऽपि नातिरिक्तसंसर्गत्वमित्याह—अन्ये त्विति । विशेषणविशेष्ययोर्यो वैशिष्ट्याख्यसंसर्गः, अभावस्य प्रतियोगित्वाऽनुयोगित्वाधिकरणत्वाऽऽधेयत्वस्वव्यभिचरितत्वाऽवच्छिन्नप्रतियोगिताकत्वप्राक्कालीनत्वोत्तरकालीनत्वादयः सम्बन्धाः स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-स्वजन्यबोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वादयः परिष्कृतसंसर्गाश्च क्लृप्तपदार्थान्तर्गता एव न त्वतिरिक्ता इत्यर्थः ॥ ३४ ॥ ३९ ॥

**धर्मस्तु द्विविधो जात्युपाधिभेदात्प्रकीर्तितः ।**
**जातिस्तु व्यापिका व्याप्या द्वेधा वाऽन्योभयात्मिका**
**उपाधिभिन्नधर्मत्वं जातेर्लक्षणमुच्यते ।**
**उपाधिस्तु द्विधाऽखण्डः सखण्डश्चेति कीर्तितः ४१**
**एकव्यक्तिकताऽसत्त्वं नैकधर्माश्रयत्वकम् ।**
**प्रसिद्धसाम्यं सांकर्यं स्वतोव्यावृत्तता तथा ॥४२॥**
**तथैवाऽसमवेतत्वमुपाधित्वप्रयोजकाः ।**
**अनित्यास्तु सखण्डाः स्युर्नित्यास्तदितरे मताः ४३**

धर्मं निरूपयति—धर्मस्त्विति । जात्यात्मक उपाध्यात्मकश्चेति द्विविधो धर्मः, तत्र जातिर्द्वेधा—व्याप्या व्यापिका च, यद्वा उभयात्मिका व्याप्यव्यापिका, तदन्या केवलव्याप्या केवलव्यापिका चेति, केवलव्यापिका सत्ता, केवलव्याप्या घटत्वशुक्लत्वोत्क्षेपणत्वजीवनीत्वप्रभृतयः, उभयात्मिका तु द्रव्यत्वादिमध्यजातयो व्याप्यव्यापिका इति । व्याप्यत्वं व्यापकत्वं चैकमपेक्ष्य, व्याप्यव्यापकत्वं तु द्वावपेक्ष्य बोध्यम् । तद्व्याप्यत्वं तदभाववदवृत्तित्वे सति तत्समानाधिकरणो यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽत्यन्ताभावस्तत्प्रतियोगित्वम्, तद्वद्वृत्तित्वे सति तद्वद्भिन्नाऽवृत्तित्वं वा । तद्व्यापकत्वं तत्समानाधिकरणो यो व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकोऽभावस्तदप्रतियोगित्वं तत्समानाधिकरणभेदीयप्रतियोगितानवच्छेदकत्वं वा । असति बाधके 'इदं सदि' त्यनुगतप्रतीतिविषयतया सत्ताजातिसिद्धिः, भवन्ति च 'द्रव्यं सत्' 'गुणः सन्' 'कर्म सत्' 'शक्तिः सती' त्यनुगतप्रतीतयः । न च तत्र द्रव्यत्वादिरेव विषय इति वाच्यम् । अनेकपदार्थगोचरैकाकारप्रतीतीनामसति बाधके एकधर्मविषयकत्वैकधर्मावच्छिन्नविषयकत्वान्यतरवत्त्वनियमाद् द्रव्यगुणादिष्वेकधर्मस्य सत्तायाः सिद्धत्वात् । यद्यपि 'संसर्गः सन्' 'धर्मः सन्' 'विशेषः सन्नि' तिप्रतीतेस्तेषामपि सत्तावत्त्वं स्यात् तथापि उपाधित्वप्रयोजकात्मैकव्यक्तिकत्वादीनां बाधकानां सत्त्वान्न तत्र सत्तादिजातिसिद्धिः, तत्र सत्ताव्यवहारस्तु परम्परयैव न तु साक्षात्, अभावे तु परम्परयाऽपि न सद्व्यवहारः, असत्त्वस्यैव साक्षाद्विरोधित्वात् । जातिव्यवहारः सार्वदिक इति तद्बलादपि जातीनां नित्यत्वम्, तदाश्रयपदार्थप्रवाहस्याऽविच्छिन्नत्वाच्च । ननु महाप्रलये आश्रयाऽभावात् घटत्वादीनामनित्यत्वमेवेति चेन्न । तदानीं तेषां काले कालिकेन महादिशि च स्वरूपेण वृत्तेर्नोक्तापत्तिः । ननु 'कालो गौ' रित्याद्यापत्तिः स्यादिति चेन्न । समवायेन तद्व्यवहारस्याऽभ्युपगमात् । अत एव सत्ताद्रव्यत्वगोत्वादीनां स्वरूपतः सर्वदेशसम्बद्धत्वात्मकव्यापकत्वेऽपि न देशानां गवादिव्यवहारापत्तिः । तथा च यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वादिकं तेन सह समवायेन सम्बद्ध्यते, जातः सम्बद्धश्चेत्येककालाभ्युपगमात् । नन्ववयवसंयोगात्मकाऽऽकृत्यतिरिक्तो नास्ति कश्चिज्जातिरूपो धर्म इति चेन्न । संयोगस्य जातिपदाऽवाच्यत्वात्, एकपिण्डेऽपि तेषामानन्त्यादनन्तजाति-

मत्त्वापत्तेः, एकदर्शनोत्तरमनेकेषां भानाऽनुपपत्तेश्च। न च सादृश्येनैव निर्वाह इति वाच्यम्। तस्य धर्मात्मकतायाः पूर्वं साधितत्वात्। अत एव च सामान्यलक्षणया पर्वतीयधूमादौ व्याप्तिस्मरणानुमित्यादिनिर्वाहः॥

अनित्याऽवृत्तिधर्मवत्त्वे सति अनेकेषु समवायेन वृत्तित्वम्, अनित्याऽवृत्तिर्यो धर्मत्वव्याप्योपाधिस्तद्वत्त्वं, धर्मत्वव्याप्यत्वे सति समवेतत्वम्, अनुगतप्रतीतिविषयसमवेतधर्मत्वं, समवेतधर्मत्वम्, उपाधिभिन्नधर्मत्वं, जातिभिन्नभिन्नत्वं, जातिपदवाच्यत्वं वा तल्लक्षणं बोध्यम्॥ उपाधिं निरूपयति—उपाधिस्त्विति। अखण्डोपाधिः समवेतधर्मभिन्नः समवेतधर्मभिन्ननित्यधर्मात्मकोपाधिभिर्भावत्वधर्मत्वसंसर्गत्वविशेषत्वाऽभावत्वगगनत्वादिः। सखण्डोपाधिस्तु तद्व्यक्तित्वादिरूपोऽनित्यघटादिगतोऽनित्यः कल्पितधर्मविशेषः। अयं सर्वोऽपि स्वरूपेण वृत्तिः, महाकाले तु कालिकेन, क्वचिदन्यत्र पर्याप्त्याऽपि। एकव्यक्तिकधर्माऽसद्धर्मनैकधर्माश्रयकधर्मप्रसिद्धसमधर्मसंकरधर्मस्वतोव्यावृत्तधर्माऽसमवेतधर्माऽन्यतमत्वम्, असमवेतधर्मत्वम्, उपाधिभिन्नभिन्नत्वम्, उपाधिपदवाच्यत्वं वा तल्लक्षणम्॥ उपाधित्वप्रयोजकानि दर्शयति—एकव्यक्तिकतेति। स्वाश्रयैकव्यक्तिकत्वमित्यर्थः। तच्च स्वाश्रय उपाधित्वप्रयोजकम्, यथा गगनत्वकालत्वदिक्त्वानि एकव्यक्तिकत्ववत्त्वादुपाधित्ववन्तीति। स्वाश्रयनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाऽभाववत्त्वं स्वस्योपाधित्वप्रयोजकमिति यावत्। स्वसमानाधिकरणाऽन्योन्याभावीयव्यासज्यवृत्तिधर्माऽनवच्छिन्नप्रतियोगित्वसमानाधिकरणं यद्यत् स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वरूपं वा स्वाश्रयैकव्यक्तिकत्वं बोध्यम्। असत्त्वम्—साक्षात्परम्पराऽन्यतरसंसर्गाऽवच्छिन्नसत्त्वप्रकारकप्रतीतिविषयत्वाऽभाववद्वृत्तित्वमित्यर्थः। निरुपाख्यधर्मत्वमिति यावत्। तच्चाभावत्वस्योपाधित्वप्रयोजकम्। नैकधर्माश्रयत्वकम्—स्वाश्रयाऽनेकधर्मकत्वं स्वस्योपाधित्वप्रयोजकम्, यथा घटत्वपटत्वादिगतजातित्वं गगनत्वकालत्वादिगतोपाधित्वं जात्युपाधिगतधर्मत्वं च स्वाश्रययावद्धर्मत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाभाववत्त्वात् स्वस्योपाधित्वप्रयोजकम्। प्रसिद्धसाम्यं—समनियतघटत्वकुम्भत्वकलशत्वाद्यनेकधर्मेषु यो धर्मो घटत्वरूपो व्यवहारे प्रसिद्धः स जातिस्तत्साम्यमन्यूनाऽनतिरिक्तत्वं कलशत्वादावुपाधित्वप्रयोजकम्। स्वभिन्नव्यवहारसिद्धजात्याश्रयव्यक्तिनिष्ठसंख्याऽन्यूनानतिरिक्तसंख्याकव्यक्तित्वमिति यावत्। यद्वा-स्वसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकस्वभिन्नव्यवहारसिद्धजातिसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वमुपाधित्वप्रयोजकमित्यर्थः। यद्वा-स्वाभाववदवृत्तित्वस्वाधिकरणवृत्त्यत्यन्ताभावाऽप्रतियोगित्व-स्वभिन्नत्वैतत्त्रितयसम्बन्धेन व्यवहारसिद्धजातिविशिष्टत्वं स्वभिन्नधर्मस्योपाधित्वप्रयोजकम्। सांकर्यम्—स्वाऽभाववद्वृत्तित्व-स्वसमानाधिकरण—धर्माऽभाववदवृत्तित्वम्। स्वनिष्ठसंकर उपाधित्वप्रयोजकः, तेन भूतत्वमूर्तत्वयोरुपाधित्वम्, अथवा-स्वसामानाधिकरण्य-स्वाभावसामानाधिकरण्य-स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसम्बन्धेन जातिविशिष्टत्वं संकरः। एतादृशसंकरस्य क्वचिदन्यतरस्य प्रमाणबलेन जातित्वे निर्णीते इतरस्योपाधित्वप्रयोजकत्वं, यथा गन्धसमवायिकारणतावच्छेदकतया प्रत्यक्षप्रमाणेन च पृथिवीत्वस्य जातित्वे निर्णीते तेन सह संकरादिन्द्रियत्वस्योपाधित्वम्। स्वतोव्यावृत्तत्वं—स्वरूपसद्व्यावर्तकत्वं, सामान्याश्रयलिङ्गकत्वाऽभाववन्नित्यद्रव्योद्देश्यकपरस्परभेदानुमितिजनकलिङ्गत्वं विशेषत्वस्योपाधित्वप्रयोजकम्, विशेषत्वस्य जातित्वे तदवच्छिन्नतया 'परमाणुः परमाण्वन्तरभिन्नः, विशेषादि'त्यत्र विशेषस्य हेतुत्वे परमाण्वन्तरेऽपि विशेषत्वावच्छिन्नस्य हेतोः सत्त्वेन व्यभिचारित्वापत्तिः, तद्व्यक्तित्वेन हेतुत्वे परमाणूनामपि तद्व्यक्तित्वेन व्यावृत्तिसंभवे विशेषस्य वैयर्थ्यापत्तिः, अतो विशेषस्य स्वरूपत एव व्यावर्तकत्वमुपेयते तदेव तत्रोपाधित्वप्रयोजकम्। असमवेतत्वं—समवायेन वृत्तित्वाऽभाववत्त्वं संसर्गत्वसमवायत्वकालिकत्वादीनामुपाधित्वप्रयोजकमिति॥

अथ ये उपाधित्वप्रयोजकास्ते जातित्वबाधका अपि भवन्ति, तत्र स्वाश्रयनिष्ठैकत्वावच्छिन्नप्रतियोगिताकभेदवृत्तित्वाऽभावत्वज्ञानम् अनेकवृत्तित्वघटितजातित्वज्ञाने ग्राह्याभावाऽवगाहितया प्रतिब-

न्धकम्। एवं सत्त्वप्रकारकप्रतीतिविषयत्वाभाववद्वृत्तित्वज्ञानं सत्त्वप्रकारकप्रतीतिविषयत्वघटितजातित्वज्ञाने ग्राह्याभावावगाहितया प्रतिबन्धकम्। एवं नैकधर्माश्रयधर्मस्य जातित्वे जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मशून्यत्वरूपाऽव्यवस्थाया उद्भवः, तस्यास्तर्कविधया नैकधर्माश्रयधर्मस्य जातिमत्त्वज्ञानं प्रतिबध्यते, तर्कस्तु—'नैकधर्माश्रयधर्मो यदि जातिः स्यात् जात्यनाश्रयवृत्तिपदार्थविभाजकधर्मो न स्यादि'ति, तत्र 'नैकधर्माश्रयधर्मो जातित्वाऽभाववानि'तिज्ञानेन नैकधर्माश्रयधर्मो जातिरिति ज्ञानस्य प्रतिबन्धः। एवं व्यवहारसिद्धजातिसमनियतत्वज्ञानं 'कलशत्वकुम्भत्वादिकं न जातिः, स्वभिन्नजातिसमनियतत्वा'दित्यत्र लिङ्गज्ञानविधया जातित्वाऽभावज्ञानमुत्पाद्य कलशत्वादौ जातित्वज्ञाने प्रतिबन्धकम्। एवं संकरस्य 'इन्द्रियत्वं न जातिः, उक्तसम्बन्धत्रयेण जातिविशिष्टत्वादि'त्यत्रलिङ्गज्ञानविधया जातित्वाभावज्ञानोत्पादनेन इन्द्रियत्वे जातित्वज्ञानप्रतिबन्धकत्वम्। एवं स्वरूपसद्व्यावर्तकत्वं तर्कविधया जातित्वाऽभावद्वारा विशेषेषु जातित्वप्रतिबन्धकम्। तर्कश्च विशेषो यदि जातिमान् स्यात् तर्हि व्यभिचारी स्यात्, अन्यथा वाऽसन् स्यात्, परमाणूनां च परस्परं स्वरूपसद्व्यावर्तको न स्यादिति। एवम् असमवेतत्वं 'संसर्गत्वादयः जातित्वाऽभाववन्तः, असमवेतत्वादि' त्यत्र तदभावव्याप्यवत्ताज्ञानमुद्रया संसर्गत्वादौ जातित्वबाधकं भवतीति बोध्यम्। भावप्रत्ययबोध्यत्वं, धर्मभिन्नभिन्नत्वं, धर्मपदवाच्यत्वं वा धर्मसामान्यलक्षणं बोध्यम्॥ ४०॥ ४३॥

**नित्यद्रव्येषु वृत्तिर्यो नित्यस्तेषां परस्परम्।**
**स्वतोव्यावर्तकोऽनन्तो विशेषः परिकीर्तितः ४४**
**स्वतोव्यावर्तकत्वं चेन्नित्यद्रव्येषु चिन्त्यते।**
**जातेर्निरर्थकत्वं स्यात् कार्याऽऽकस्मिकता भवेत् ४५**
**व्यवस्थाया विलोपः स्यात्, प्रतीतेर्विपरीतता।**
**तदन्यथाऽनुपप्राप्तेर्न तत्, तस्मात् स चिन्त्यते ४६**

विशेषं निरूपयति—नित्यद्रव्येष्विति। पृथिवीजलतेजोवायुतमसां परमाणवः आकाशकालदिगात्ममायाश्च नित्यद्रव्याणि, तत्र समवेता नित्या अनन्ताश्च विशेषा बोध्याः। तेषां लक्षणमाह—स्वतोव्यावृत्तत्वमिति। घटाद्यवयविनां द्व्यणुकान्तानां स्वप्रतियोगिसमवेतत्वसंसर्गावच्छिन्नेन तत्तदवयवभेदात्मकहेतुना परस्परं व्यावृत्तिः, परमाण्वादिनित्यद्रव्याणां च परस्परं व्यावर्तको विशेष एव। प्रयोगस्तु—'अयं परमाणुः परमाण्वन्तरभिन्नः, विशेषादि'ति। ननु स्वरूपाऽसिद्धिरिति चेन्न। 'परमाण्वादीनां भेदः किञ्चिल्लिङ्गज्ञानज्ञाप्यः, भेदत्वात्, कपालभेदज्ञाप्यघटभेदवत्'। अथवा—'परमाणुपरस्परभेदानुमितिः यत्किञ्चिल्लिङ्गप्रमाजन्या, भ्रमाऽजन्यानुमितित्वात्, वह्न्याद्यनुमितिवत्' इत्यत्र किञ्चिल्लिंगत्वेनाऽभिप्रेतस्य सिद्धेः। वस्तुतस्तु—'परमाण्वादीनां भेदः किञ्चित्प्रयोज्यः, भेदत्वात्, कपालभेदप्रयोज्यघटभेदवदि' त्यनेन किञ्चित्पदेन विशेषभेदस्य सिद्धेर्विशेषस्यापि सिद्धिः। स च विशेषः स्वतोव्यावृत्तः। तत्त्वं चस्वप्रयोज्य-स्वनिष्ठस्वसजातीयप्रतियोगिकभेदकत्वं, साजात्यं च पदार्थविभाजकोपाधिरूपेण। प्रयोगः—'विशेषः स्वसजातीयेतरभिन्नः, स्वस्मादि'ति। 'स्वभिन्नत्वसामानाधिकरण्यसम्बन्धानवच्छिन्नव्याप्यत्व-पक्षधर्मत्वैतत्रितयोपलक्षितलिङ्गविशेष्यकव्याप्तिप्रकारकज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकविधेयतानिरूपितोद्देश्यताश्रयीभूतं यद्यत्त्वं तत्तद्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं स्वतोव्यावृत्तत्वमिति यावत्॥ ननु विशेषाणां स्वतोऽव्यावर्तकत्वाऽपेक्षया नित्यद्रव्याणामेव स्वतोव्यावर्तकत्वमस्त्वित्याशंकते—स्वतोव्यावर्तकत्वमिति। तथा सति 'पृथिवीपरमाणवः जलपरमाणुभिन्नाः, स्वस्मात्, 'जलपरमाणवः पृथिवीपरमाणुभिन्नाः, स्वस्मादि' त्येवमेवेतरभेदसाधननिर्वाहे पृथिवीत्वविशिष्टपरमाणुत्व-जलत्वविशिष्टपरमाणुत्वादिधर्माणामवच्छेदकतया अनावश्यकतया निरर्थकत्वं स्यात्, एवं च सति नित्याऽनित्यसाधारणगन्धादिसमवायिकारणतावच्छेदकानां निरर्थकत्वेन गन्धाद्यात्मककार्याणां कारणाऽनियम्यकार्यत्वापत्तिः, तथा च सति जगद्व्यवस्थाया विलोपः स्यात्। किञ्च—घटादौ गन्धादिना प्रत्यक्षप्रतीतितश्च सिद्धस्य पृथिवीत्वादेर्घटादिकारणपरम्परया पृथिवीपरमाण्वादौ

प्राप्तस्याऽनुमितिप्रमायास्तदुत्पादकप्रत्यक्षप्रमायाश्चाऽसद्विषयकत्वात्मकविपरीतता स्यात्। तस्माद् गन्धादिसमवायिकारणप्रतीत्यन्यथाऽनुपपत्त्या तत्र पार्थिवत्व-परमाणुत्वादिजातिस्वीकारः, अत एव. तत् स्वतोव्यावृत्तत्वं न परमाण्वादौ, तस्मात् स्वतोव्यावर्तकत्वाऽभावाच्च सः विशेषः तत्र चिन्त्यत इत्यर्थः। ननु तथाऽपि परमेश्वराऽऽकाशयोर्नित्यज्ञानशब्दाभ्यां व्यावृत्तेः संभवान्न तत्र विशेष इति चेन्न। नित्यज्ञानस्य न ज्ञानत्वेन भेदानुमापकत्वं व्यभिचारात्, न नित्यत्वविशिष्टज्ञानत्वेन तद्व्यक्तित्वेन वा, जात्याश्रयस्य जात्यैव व्यावर्तकत्वात्, तयोरुपाधित्वेनाऽव्यावर्तकत्वाच्च, तस्मात् परमेश्वरे विशेषांगीकार आवश्यकः। आकाशस्य तु शब्दात्मकलिङ्गेन व्यावृत्तिसंभवेऽपि कवत्त्वादीनां शब्दकारणतावच्छेदकत्वे गौरवात् लाघवेन शब्दकारणतावच्छेदकतया विशेषस्वीकार आवश्यकः। काले कस्याऽप्यवच्छेदकाऽभावात् मायायां च सत्त्वादित्रयाणां चाऽवच्छेदकत्वाऽसंभवात् विशेषस्वीकार इति॥ समवेतत्वे सति अनित्याऽवृत्तिपदार्थविभाजकोपाधित्वम्, अनित्याऽवृत्तिर्यः पदार्थविभाजकोपाधिस्तत्त्वमात्रं, नित्यद्रव्यमात्रवृत्तिवृत्तिसाक्षात्पदार्थविभाजकोपाधिमत्त्वं, जातिभिन्नत्वे सति जातिशून्यत्वे सति समवेतत्वं, विशेषभिन्नभिन्नत्वं, विशेषपदवाच्यत्वं वा विशेषाणां लक्षणम्॥ ४४॥ ४६॥

**प्रतियोगिप्रतीतिसापेक्षप्रतीतिगोचरः।**
**नञर्थकपदज्ञाप्योऽभावो हि पञ्चधा मतः॥४७॥**
**प्रध्वंसः प्रागभावश्चाऽप्यत्यन्ताभाव एव च।**
**भेदः सामयिकाऽभावश्चेति, तत्त्वान्तरं हि सः ४८**

अभावं निरूपयति—प्रतियोगीति। अभावत्वं हि भावभिन्नत्वं, तच्च समवायेन सत्तासम्बन्धित्वसामानाधिकरण्येन सत्तासम्बन्धित्वैतदन्यतरत्वावच्छिन्नप्रतियोगिताकाऽभाववत्स्वरूपम्। यद्यस्याऽऽत्माश्रयत्वं, तदा नञर्थबोधकपदजन्यप्रतीतिविषयत्वं, तादृशविषयतावच्छेदकोपाधिमत्त्वं वा तद्वक्तव्यम्। यदि च प्रागभावे 'घटोऽत्र भविष्यती' तिप्रतीतिसिद्धेऽव्याप्तिः, तदा प्रतियोगिज्ञानाऽधीनज्ञानविषयत्वं तद् बोध्यम्। नञर्थकपदज्ञाप्यत्वादिकं तु परिचायकमात्रम्। स च पञ्चविधः—प्रागभावः, प्रध्वंसाऽभावः, सामयिकाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति। तत्र कार्यस्योत्पत्तेः प्राक् स्वरूपेण स्वकार्यसमवायिकारणे वर्तमानः, समवायिकारणाऽनुपस्थितौ तु स्वरूपेण प्रतियोग्यतिरिक्तदेशे कालिकेन काले वा वर्तमानः, 'कार्यमत्र भविष्यती' तिप्रत्यक्षप्रतीतिसिद्धः 'भविष्यती' तिव्यवहारजनकः, उत्तरकालत्वसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः प्रागभावः। स च स्वप्रतियोग्यात्मककार्यजनको भवति, तन्तुषु पटे जाते पुनस्तस्यैव पटस्याऽनुत्पादे स्वस्य प्रतिबन्धकत्वमिति प्रतिबन्धकाऽभावत्वेन प्रगभावस्य स्वकार्यं प्रति कारणत्वम्, एवमाम्रफलपरमाणुषु तेजःसंयोगस्याऽविशिष्टत्वेऽपि फले मधुरोत्पत्तिस्तद्बीजे तु कषायोत्पत्तिरित्येतत् प्रागभावस्य कारणतामन्तरेण न संभवतीति कारणताश्रयतया प्रागभावस्याऽपि सिद्धिः। स चाऽनुत्पन्नः प्रतियोग्यात्मककार्यमुत्पाद्य विनश्यति। प्रागभावत्वं द्वेधा भावाऽभावसाधारणं, तद्व्यावृत्तं च। प्रथमम् अखण्डोपाधिरूपम् 'घटो भविष्यति', 'पटध्वंसो भविष्यतीति' प्रतीतिसाक्षिकं न निरुक्तिमपेक्षते। द्वितीयं तु निरुक्तिमपेक्षते, तथा च—विनाशित्वे सत्यजन्यत्वे सत्यभावत्वम्, यावत्यः प्रागभावव्यक्तयस्तावदन्यतमत्वं, प्रागभावपदवाच्यत्वम्, उत्तरकालत्वसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वं वा तल्लक्षणं बोध्यम्। लक्षणे विनाशित्वं ध्वंसत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वम्, अजन्यत्वं च प्रागभावाऽप्रतियोगित्वं, तदपि प्रागभावत्वशब्दपरिभाषितविलक्षणाऽनुयोगितानिरूपितप्रतियोगित्ववद्भिन्नत्वम्, अतो न परस्परघटकतेति।

एवं विनाशकस्य मुद्गरादेर्व्यापारानन्तरं घटादेर्नाशः प्रतीयते स प्रध्वंसाभावः, स च घटात्मकप्रतियोगिजन्यः, प्रतियोगिनो घटादेः समवायिकारणे वर्तमानः, यद्वा देशान्तरे महादिशि महाकालेऽपि वर्तमानः, 'ध्वस्त' इतिव्यवहारजनकः, पूर्वकालत्वसंसर्गावच्छिन्नप्रतियोगिताकश्च। घटनाशोत्तरं स एव घटो नोत्पद्यते, तत्र घटध्वंसस्य प्रतिबन्धकतायाः स्वीकारात्, अन्यथा घटप्रागभावनाशो घट

एवेति स्वीकारे घटे नष्टे प्रतिबन्धकाऽभावाऽभावस्य घटात्मकप्रतिबन्धकस्य कपालेऽसत्त्वेन पुनस्तस्यैव नष्टस्य घटस्योत्पत्तिरापद्येतेति। स चाऽविनाशी 'घटो नश्यति' 'घटो ध्वस्त' इतिप्रत्यक्षप्रतीतिसिद्धश्च। प्रध्वंसाभावत्वं द्वेधा—भावाऽभावसाधारणं तद्व्यावृत्तं च। प्रथमम् अखण्डोपाधिरूपं 'घटो ध्वस्तः' 'घटप्रागभावो ध्वस्त' इतिप्रतीतिसाक्षिकं न निरुक्तिमपेक्षते। द्वितीयन्तु निरुक्तिमपेक्षते, तथा च—जन्यत्वे सति अविनाशित्वे सति अभावत्वं, यावत्यो ध्वंसव्यक्तयस्तावदन्यतमत्वं, ध्वंसपदवाच्यत्वं, पूर्वकालत्वसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वं वा तल्लक्षणम्। लक्षणे जन्यत्वं प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वम्, अविनाशित्वं ध्वंसाऽप्रतियोगित्वं, तदपि प्रध्वंसाभावत्वशब्दपरिभाषितविलक्षणाऽनुयोगितानिरूपितप्रतियोगित्ववद्भिन्नत्वम्, अतो न परस्परघटकतेति॥

एवं यत्र भूतलादौ घट आनीतोऽपसारितश्च पुनरानीतः, तत्र मध्ये योऽभावः स उत्पादविनाशशाली सामयिकाऽभावः। न चाऽयमत्यन्ताभावः, जलादौ गन्धाभाववत् त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वविरहात्। स च प्रतियोगिस्थित्यधीनस्थितिकः, समकालिकमात्रसंसर्गाऽवच्छिन्नप्रतियोगिताकश्च। 'मध्ये घटो नास्ती'तिप्रत्यक्षप्रतीतिसिद्धः तादृशव्यवहारजनकश्च। सामयिकाऽभावत्वं द्वेधा—भावाऽभावसाधारणं, तद्व्यावृत्तं च, प्रथमम् अखण्डोपाधिरूपं न निरुक्तिमपेक्षते, द्वितीयं तु निरुक्तिमपेक्षते, तथा च जन्यत्वे सति विनाशित्वे सति अभावत्वं, यावत्यः सामयिकाऽभावव्यक्तयस्तावदन्यतमत्वं, सामयिकाऽभावपदवाच्यत्वं, समकालिकमात्रसंसर्गावच्छिन्नप्रतियोगिताकाऽभावत्वं वा तल्लक्षणम्। अत्रापि जन्यत्वं प्रागभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वं, विनाशित्वं तु प्रध्वंसाऽभावत्वशब्दपरिभाषितविलक्षणानुयोगितानिरूपितप्रतियोगित्वं बोध्यम्॥

एवं यत् स्वावच्छेदकसंसर्गेण यत्र कालत्रयेऽपि नास्ति यथा वायौ रूपाऽभावः सर्वत्र गगनाऽभावः इति तादृशप्रतीतिविषयोऽभावः अत्यन्ताभावः। स च नित्यः, त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकश्च, 'वाय्वादौ कदापि रूपं नास्ती' त्यादिव्यवहारजनकश्च भवति। अत्यन्ताभावत्वमपि द्वेधाभावाऽभावसाधारणं, तद्व्यावृत्तं च। प्रथमं तु 'नास्ती'त्यादिप्रतीतिसिद्धम् अखण्डोपाधिरूपं न निरुक्तिमपेक्षते, द्वितीयं तु निरुक्तिमपेक्षते, तथा च—नित्यत्वे सति भेदभिन्नत्वे सति अभावत्वं, यावत्योऽत्यन्ताऽभावव्यक्तयस्तावदन्यतमत्वम्, अत्यन्ताभावपदवाच्यत्वं, त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं, प्रतियोगिताविशिष्टनित्याभावत्वम्, वैशिष्ट्यं च स्वावच्छेदकाऽवच्छिन्ननिष्ठाधिकरणतानिरूपकत्वस्वनिरूपकत्वोभयसम्बन्धेन, स्वावच्छेदकावच्छिन्नप्रतियोगितानिरूपकत्वसम्बन्धेन प्रतियोगिताविशिष्टनित्याऽभावत्वं वा अत्यन्ताभावत्वम्। लक्षणे नित्यत्वघटकं प्रागभावत्वं ध्वंसत्वं भेदत्वं च तत्तच्छब्दपरिभाषितविलक्षणानुयोगित्वरूपं बोध्यम्॥

ननु 'वायौ रूपाऽभाव'इत्यादिप्रतीतिविषयोऽन्योन्याभाव एवाऽस्त्विति चेन्न। घटे रूपसत्त्वेऽपि 'घटो न रूपमि'तिप्रतीतिविषयस्य प्रतियोगिसमानाधिकरणस्याऽत्यन्ताऽभावतो व्यतिरिक्तत्वात्, सदेव रूपं घटात्मनाऽसत् घटो वा रूपात्मनाऽसन् घटः पटात्मनाऽसन् पटश्च घटात्मनाऽसन्, सोऽयं तादात्म्याऽभावः तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाभावः, स च स्वप्रतियोगितावच्छेदकावच्छिन्नं विहायाऽन्यत्र वर्तते। तादात्म्यं नाऽभेदः, अभेदस्य भेदप्रतियोगिताकाऽभावरूपस्य भेदत्वावच्छिन्नप्रतियोगिताकाऽभावरूपस्य वाऽतिव्याप्त्यसंभवान्यतरदोषग्रस्तत्वात्, किन्तु एकमात्रवृत्तिसंसर्गः सः, धर्मे एकमात्रवृत्तित्वं च स्वप्रतियोगिवृत्तित्व-स्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वम् तादृशतादात्म्यसम्बन्धावच्छिन्नप्रतियोगितानिरूपिताऽनुयोगितावत्त्वमेवाऽन्योन्याभावत्वं, यावत्योऽन्योन्याभावव्यक्तयस्तावदन्यतमत्वम्, अन्योन्याभावपदवाच्यत्वं वा लक्षणम्। भावाऽभावसाधारणम् अन्योन्याभावत्वं त्वखण्डोपाधिरूपं बोध्यम्। अप्रत्यक्षाऽभावानामपि तत्साजात्यादिना सिद्धिर्बोध्या॥

प्रतियोगितावच्छेदकधर्मसंसर्गनानात्वं सांसर्गि-

काऽभावाऽत्यन्ताभाववहुत्वप्रयोजकम्, प्रतियोगितावच्छेदकधर्मनानात्वम् अन्योन्याभावनानात्वप्रयोजकम्, यथा विशेष्यस्याऽभावो दण्डादिविशेषणविशिष्टविशेष्याभावादतिरिक्तः, अन्यथा केवलदेवदत्तवति 'दण्डिदेवदत्तो नास्ती'तिसर्वानुभूतप्रतीतिविलोपापत्तेः। एवं केवलाऽभावादुभयत्वावच्छिन्नाऽभावोऽतिरिक्तः, अन्यथा केवलघटवति 'घटपटोभयं नास्ती'तिप्रतीत्यनुपपत्तेः। संयोगावच्छिन्नघटाद्यभावात् समवायावच्छिन्नघटाद्यभावो भिन्नः, अन्यथा घटसंयुक्तभूतले समवायेन घटाऽभावप्रत्ययाऽनुपपत्तेः। तत्त्वघटत्वादिधर्मद्वयाऽवच्छिन्नप्रतियोगिताकाऽभावात् घटत्वमात्राद्यवच्छिन्नप्रतियोगिताकाऽभावो भिन्नः, नीलघटाभाववति तद्भिन्नघटस्य संभवात्, अन्यथा यत्किञ्चिद्घटवति 'घटो नास्ती'तिप्रत्ययापत्तिः, घटान्तरवति तद्घटाऽभावप्रत्ययानुपपत्तिश्च। एवं केवलघटभेदात् रक्तत्वादिविशिष्टघटभेदो भिन्नः, घटपटोभयभेदश्च भिन्नः, अन्यथा केवलघटे विशिष्टघटभेदप्रतीत्यनुपपत्तिः। एवं घटत्वेन पटस्य कुत्राऽप्यसत्त्वात् व्यधिकरणधर्मावच्छिन्नाऽभावः केवलाऽभावादतिरिक्तः, स च केवलान्वयी। नन्वभावज्ञाने प्रतियोगितावच्छेदकविशिष्टज्ञानस्य कारणतया घटत्वविशिष्टपटाऽप्रसिद्धेः तादृशप्रतियोगिज्ञानाऽभावात् न व्यधिकरणधर्मावच्छिन्नाऽभावसिद्धिरिति चेन्न। तत्र अवच्छिन्नप्रतियोगिताकत्वसंसर्गेण अभावांऽशे स्वातन्त्र्येण घटत्वस्याऽवगाहनात् व्यधिकरणधर्मावच्छिन्नाभावस्य सप्रमाणत्वात्। क्वचिदभावाऽभावो भाव एव, ध्वंसस्य प्रागभावः प्रागभावस्य ध्वंसश्च प्रतियोग्येव। वस्तुतस्तु अभावाऽभावस्त्वतिरिक्त एव, तृतीयाऽभावस्य प्रथमाऽभावरूपत्वान्नानवस्था, एवं घटप्रागभावदशायामपि 'उत्पत्स्यमानघटो ध्वस्तो भविष्यती'तिप्रतीत्या घटध्वंसस्य प्रागभावसत्ताया अवगमात् घटध्वंसप्रागभावो घटातिरिक्तः, घटप्रागभावस्य ध्वंसोऽपि घटातिरिक्त इति॥

अथ प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सहाऽत्यन्ताभावस्य विरोधः, तेन घटप्रागभावस्याऽधिकरणे कपाले यदाकदाचिदपि घटवति भूतले घटशून्यकाले घटात्यन्ताभावबुद्धिर्न स्यादिति चेन्न। तत्र प्रतियोगितावच्छेदकसम्बन्धेन सह प्रतियोग्यत्यन्ताभावस्य विरोधाऽङ्गीकारात्। ध्वंसप्रागभावयोस्तु प्रतियोगिना सहैव विरोधः, घटप्रागभावाधिकरणे कपाले घटध्वंसाधिकरणे कपाले वा 'घटो नास्ती'तिप्रतीतेः प्रागभावविषयकत्वाद् ध्वंसविषयकत्वाच्चेति प्राचीनाः। तन्न। पूर्वं घटो रक्तस्ततः श्यामस्ततो रक्तस्ततः श्यामस्ततो रक्तस्तत्र घटे द्वितीयश्यामतादशायां द्वितीयरक्तस्य ध्वंसोऽन्तिमरक्तस्य प्रागभावो रक्तान्तरस्य चाऽत्यन्ताभावो वर्तते, तत्र श्यामतादशायां घटे 'रक्तो नास्ती'तिप्रतीतिः सर्वमतसिद्धा, सा तन्मते नोपपद्येत, यदाकदाचिदपि रक्ताधिकरणताया विरोधिन्यास्तत्र सत्त्वात्। न चेयं प्रतीतिः रक्तिमध्वंसप्रागभावावगाहिनी, पूर्वाऽपररक्तिमध्वंसप्रागभाववति सम्प्रति रक्तेऽपि तथाप्रतीतिप्रसंगात्, मम तु 'रक्तं रूपं नास्ती'तिप्रतीतिरत्यन्ताभावमवगाहते, न तु ध्वंसं न वा प्रागभावं, तयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वविरहात्, अतो न ध्वंसप्रागभावप्रतियोग्यधिकरणतायाः प्रतियोग्यत्यन्ताभावेन सह विरोधः, बाधकप्रमाणाऽभावात्। तथा चाऽत्यन्ताभावस्य प्रतियोगिना सह विरोधः, तत्र वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽत्यन्ताभावस्य केवलप्रतियोगिना सह विरोधः, घटवत्तादशायां भूतले 'घटो नास्ती'तिप्रत्ययाऽभावात्। एवमन्तराश्यामतादशायां रक्तरूपात्मकप्रतियोग्यसत्त्वेन 'रक्तो नास्ती'तिप्रतीतेरत्यन्ताभावविषयकत्वे बाधकाऽभावात्। एवं वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यधिकरणतया सह विरोधः, अतः सत्तावति द्रव्ये 'द्रव्यान्यत्वविशिष्टसत्ता नास्ती'तिप्रतीत्युपपत्तिः, विशिष्टसत्तायाः शुद्धसत्तानतिरिक्तत्वेन प्रतियोगिनो द्रव्ये सत्त्वेऽपि विशिष्टसत्ताधिकरणतातः सत्ताधिकरणताया भिन्नत्वात्। एवं घटवत्यपि 'भूतले घटपटोभयं नास्ती'तिप्रतीत्युपपत्तिः, घटाधिकरणताया घटपटोभयाधिकरणतातो भिन्नत्वादिति। न च घटेऽन्तराश्यामदशायां 'रक्तो नास्ती'तिप्रतीतेः प्रागभावध्वंसविषयकत्वेनैव निर्वाहे रक्तात्यन्ताभावविषयकत्वकल्पने गौरवमिति वाच्यम्,

यथावस्थितव्यवहारानुभवानुसारित्वेन कल्पनायाः
प्रामाणिकत्वात्, गौरवस्य तत्र दार्ढ्यसम्पादनविधया
गुणत्वादिति । एवं सामयिकाऽभावस्यापि स्वप्रतियो-
गिना सह स्वप्रतियोगितावच्छेदकसम्बन्धेन सह वा
विरोधः, न त्वधिकरणतया सह, तदनुपपत्तिप्रसं-
गादिति ॥

अथाऽभावोऽधिकरणात्मक एव, अक्लृप्ताऽभावा-
त्मकधर्मिकल्पनाऽपेक्षया क्लृप्ताधिकरणकल्पनाया
लघीयस्त्वात्, 'नास्ती'तिव्यवहारस्य केवलाधि-
करणेनैवोपपत्तेश्चेतिप्राभाकरमतन्निरसनायाऽऽह—
तत्त्वान्तरं हि स इति । तथाहि 'भूतले पटे कटे जले
घटो नास्ती'त्यादिप्रतीतिषु घटत्वावच्छिन्नप्रति-
योगितानिरूपितानुयोगिताया एकैकस्या अनन्ताधि-
करणेषु सम्बन्धकल्पनापेक्षया एकस्मिन्नभावे तत्त-
त्सम्बन्धकल्पने लाघवात् । नन्वनन्ताधिकरणेषु तादृ-
शानुयोगितात्मकसम्बन्धकल्पनायास्त्वभावस्याऽनन्ता-
धिकरणसम्बन्धकल्पनातुल्यतयाऽतिरिक्ताऽभावकल्पना-
गौरवम्, धर्मकल्पनापेक्षया धर्मिकल्पनाया लघीय-
स्त्वमिति चेन्न । 'घटाभाववद्भूतलं घटाभावो भूतले'
इत्यादिप्रतीतिसिद्धोपोद्बलकाऽऽधाराऽऽधेयभावाऽन्य-
थाऽनुपपत्त्या गौरवस्याऽकिञ्चित्करत्वात् लाघवस्य
प्रत्यक्षप्रतीतिव्यवहारबाधितत्वाच्च । ननु 'घटाभावः
पटाभावभेदवानि'त्यत्राऽभावाऽधिकरणकाऽभावप्रति-
योगिकाऽभावस्याऽधिकरणत्वेऽपि तत्राऽऽधारताव-
च्छेदकाऽऽधेयतावच्छेदकयोर्भेदस्याऽऽधाराधेयभाव-
नियामकत्वमिव सर्वत्र तस्य तन्नियामकत्वं वक्तव्यमिति
चेन्न । तथा सत्यपि 'येनेन्द्रियेण या व्यक्तिर्गृह्यते
तेनैवेन्द्रियेण तद्गता जातिस्तदभावश्च गृह्यते'इति
नियमप्रयुक्तस्य तत्तद्गन्धरसरूपस्पर्शशब्दादिप्रत्यक्ष-
स्याऽन्यथाऽनुपपत्त्याऽतिरिक्तकल्पनस्यैव न्याय्य-
त्वात् ॥ एवमभावाऽनङ्गीकारे केवलत्वस्य निर्वक्तुम-
शक्यत्वात्, यतः किं नाम 'नास्ती'तिव्यवहारकाले
भूतले केवलत्वम् ? यदि भूतलात्मकत्वमात्रम्, तदा
घटवद्भूतलस्याऽपि तादृशभूतलात्मकत्वेन तदानीं
तत्र घटाभाववत्ताबुद्धिरापद्येत, यदि च घटाभाव-
वत्त्वमेव तत्, तदा घटाभावोऽतिरिक्तः सिद्ध एव ।
नाऽपि प्रतियोग्यनवच्छिन्नत्वं तत्, अभावाऽनङ्गीकारे
वस्त्वभावाऽभावात्मकत्वस्य प्रतियोगित्वस्याऽसिद्धौ
प्रतियोगिनोऽप्यनिर्णये तदनवच्छिन्नत्वस्याऽप्यनिर्णया-
दिति ॥

अथाऽभावस्य ज्ञानात्मकत्वं, 'भूतले घटो नास्ती'-
तिप्रतीतिविषयं तत्कालिकं ज्ञानमेव, 'सर्वं ज्ञानं
ज्ञानमि'तिसिद्धान्तात्, विज्ञानव्यतिरिक्तस्य वस्तुनोऽ-
भावात् इति चेन्न । लोकसिद्धव्यवहारान्यथाऽनुप-
पत्त्या विषय-विषयिणोरन्यत्वस्य सिद्धत्वेन सर्वत्र
ज्ञानत्वस्याऽसिद्धत्वेनाऽभावेऽपि बहिःपदार्थे ज्ञानत्वाऽ-
भावात्, घटत्वाद्यवच्छिन्नप्रतियोगितानिरूपितानु-
योगितया अतिरिक्ताऽभावपदार्थे कल्पनापेक्षयाऽ-
नन्तज्ञानव्यक्तिषु तत्कल्पनानां गौरवात्, अभावानाम-
प्रत्यक्षत्वापत्तेः ॥

एतेन 'भूतलं घटाभाववदि'तिव्यवहाराधिकरण-
काल एव तादृशप्रतीतिविषय इति मीमांसकैकदेशि-
मतम्, अनुयोगिप्रतियोगिवृत्तिधर्मगुणाद्यात्मकोऽभाव
इति वेदान्त्येकदशिमतम्; तत्तत्क्षणात्मक इति बौद्धै-
कदेशिमतम्, ब्रह्मात्मक एवेत्यौपनिषदमतम्, उपा-
दानाद्यात्मक इति मायावादिमतम्, 'असत्यर्थेऽपि
शब्दो ज्ञानं करोति ही'तिविकल्पवादिनो योग्येकदे-
शिनः शब्दात्मक इति मतम्, शब्दब्रह्मात्मक इति
शब्दब्रह्मवादिमतं चाऽपास्तम् , व्यवहारादिविलोपा-
पत्तेः ॥ ४७ ॥ ४८ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्या-
याचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-
वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचा-
र्यस्वामिनारायणविरचितायां तत्त्वप्रभावल्यां
प्रमेयचिन्तामण्याख्ये प्रथमे प्रत्यक्षखण्डे
उद्दिष्टपदार्थपरिच्छेदः ॥ १ ॥

**सर्वेषामपि साधर्म्यं प्रमेयत्वादिकं मतम् ।**
**सप्तानां नैकभावत्वं षण्णामस्त्वाऽनुमेयता ॥४९॥**

अथ विवेकज्ञानोपनोगिनी साधर्म्यवैधर्म्ये प्राह—
सर्वेषामिति । साधर्म्यं सामानो धर्मः, वैधर्म्यं
विरुद्धो धर्मः, अष्टपदार्थानां साधर्म्यं परमेश्वरीय-
प्रमाविषयत्वं, तस्य केवलान्वयित्वात्, अत एव
केवलान्वयिपदार्थनिरूपिताऽधिकरणत्वमपि साध-
र्म्यम्, आदिना 'सर्व'पदवाच्यत्वम्, पदार्थपदवाच्य-

त्वम्, परमेश्वरेच्छात्मकाऽभिधाविषयत्वम्, परमेश्वरयत्नविषयत्वम्, विषयत्वादिसम्बन्धेन ज्ञानादिमत्त्वं वा, अनेकत्वं च बोध्यम्। प्रतियोगिव्यधिकरणकेवलान्वयिताघटकयत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदकधर्मवत्त्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वम्, अत एव ज्ञानस्य ज्ञानत्वस्य च समवायेन ज्ञानविषयत्वादेश्च व्यधिकरणसमवायादिना सम्बन्धेनाऽभावप्रतियोगित्वेऽपि विषयतया परम्परासम्बन्धेन स्वरूपसम्बन्धेन च केवलान्वयित्वम्। अथ सप्तपदार्थानाम् अनेकत्वविशिष्टभावत्वं, भावत्वमात्रं, वस्तुत्वं च साधर्म्यम्। षण्णां पदार्थानां तु अस्वानुमेयत्वं साधर्म्यम्, स्वेतरलिङ्गकानुमितिविषयत्वमिति यावत्। न च तादात्म्येन स्वलिङ्गकानुमितिविषयेऽव्याप्तिरिति वाच्यम्। तादृशानुमितिविशेष्यवृत्तिपदार्थविभाजकधर्मवत्त्वस्य विवक्षितत्वात्। ननु तथाप्यभावेऽतिव्याप्तिरिति चेन्न, भावत्वे सतीति विशेषणात् ॥ ४९ ॥

**संसर्गताविशिष्टस्तु धर्मः पञ्चसु कीर्तितः।**
**चतुर्णां समवेतत्वं त्रयाणां च गुणाऽस्थितिः ५०**

पञ्चानां साधर्म्यं संसर्गताविशिष्टपदार्थविभाजकधर्मवत्त्वं, वैशिष्ट्यं च—स्वाश्रयसमवायनिरूपितवृत्तित्व-स्वतादात्म्याऽन्यतरसम्बन्धेन। चतुर्णां तु सत्तावत्त्वं, समवेतत्वं च साधर्म्यम्। न च समवेतत्वस्य विशेषेऽतिव्याप्तिरिति वाच्यम्, अनित्यत्वे सतीति विशेषणात्। न च नित्येऽसमवेते परमाण्वादावव्याप्तिरिति वाच्यम्। अनित्यसमवेतवृत्तिपदार्थविभाजकधर्मवत्त्वमिति तदर्थात्। एवं तन्तुसमवेतवृत्तिपदार्थविभाजकधर्मवत्त्वमपि साधर्म्यं, समवेतसमवेतवृत्तिपदार्थविभाजकधर्मवत्त्वं च बोध्यम्। त्रयाणां गुणवृत्तिभिन्नत्वं साधर्म्यम्। न च विशेषेष्वतिव्याप्तिरिति वाच्यम्। जातिमत्त्वे सतीति विशेषणात्। यद्वा द्रव्यगुणकर्मविशेषाणामेवेदं साधर्म्यम्, चकारेण विशेषस्य समुच्चयात्, एवं शक्तिमत्त्वमपि त्रयाणां साधर्म्यम् ॥ ५० ॥

**द्वयोः स्ववृत्तिधर्मः स्यात्, गुणादिर्निर्गुणक्रियः।**
**द्रव्यगुणक्रियाशक्तिविशेषाः समवायिनः ॥५१॥**

द्रव्यगुणयोः गुणवृत्त्यवृत्ति-नित्याऽनित्यभाववृत्तिपदार्थविभाजकधर्मवत्त्वं, गुणसमवेताऽसमवेत-नित्यसमवेतपदार्थविभाजकधर्मवत्त्वं च साधर्म्यमित्यर्थः॥ गुणादीनां निर्गुणत्वं निष्क्रियत्वं निर्विशेषत्वं च साधर्म्यं बोध्यम्। निर्गुणत्वस्य गुणवदवृत्तिपदार्थविभाजकधर्मवत्त्वं चाऽर्थः, अतो नोत्पन्नविनष्टद्रव्ये, न वा गगनादावतिव्याप्तिः, एवं द्रव्यशून्यत्वमपि बोध्यम्। न च गगनादावतिव्याप्तिरिति वाच्यम्। द्रव्यशून्यवृत्तिद्रव्याऽवृत्तिपदार्थविभाजकधर्मवत्त्वस्य तदर्थत्वात्॥ द्रव्यगुणक्रियाशक्तिविशेषाणां समवायवत्त्वं, तच्च समवायाऽनुयोगिताप्रतियोगिताऽन्यतरवत्त्वरूपं बोध्यम्, अतो न केवले समवेते समवायवति वाऽव्याप्तिः ॥ ५१ ॥

**कर्मणां स्यादनित्यत्वं नित्यत्वादि विशेषके।**
**तदन्यानां तु नित्यत्वाऽनित्यत्वे संप्रकीर्तिते ॥५२॥**

कर्मणामनित्यत्वं साधर्म्यम्, विशेषाणां तु नित्यत्वं साधर्म्यम्, आदिना स्वतोव्यावर्त्तकत्वं बोध्यम्। कर्मविशेषभिन्नानां नित्यत्वाऽनित्यत्वोभयवत्त्वं साधर्म्यम्। नित्याऽनित्योभयवृत्तिपदार्थविभाजकधर्मवत्त्वं तदर्थः। तेन न केवले नित्येऽनित्ये चाऽव्याप्तिः ॥५२॥

**भवेद् गुणक्रियाशक्तिष्वसमवायिता तथा।**
**द्रव्यमात्रे समवायिकारणत्वमुदाहृतम् ॥५३॥**

गुणक्रियाशक्तिषु असमवायिकारणत्वं बोध्यम्। आत्मविशेषगुणानां कुत्राऽप्यसमवायिकारणत्वाऽभावात् असमवायिकारणवृत्तिपदार्थविभाजकधर्मवत्त्वमित्यर्थः। द्रव्यस्य समवायिकारणत्वमेव साधर्म्यम् ॥ ५३ ॥

**विशेषाऽणुमहद्धर्मेष्वकारणत्वमुच्यते।**
**जातिशून्यास्तु संसर्गादयश्चाऽसमवायकाः ॥५४॥**

विशेषेषु अणुपरिमाणे ह्रस्वपरिमाणे महत्परिमाणेऽतीन्द्रियधर्मे चाऽकारणत्वं साधर्म्यं बोध्यम्। महत्परिमाणम् आकाशकालदिशां बोध्यम्, जीवात्मनस्त्वणुपरिमाणवत्त्वाङ्गीकारात्। मायायास्तु महत्परिमाणस्य साक्षात्कारहेतुत्वात्। परिमाणस्य स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमेनाऽ-

णुजन्यपरिमाणस्याऽणुतरत्वं ह्रस्वजन्यस्य ह्रस्वतरत्वं महत्परिमाणजन्यपरिमाणस्य महत्तरत्वं तज्जन्यस्य पुनरणुतमत्वं महत्तरत्वं च स्यात्, तच्चाऽप्रसिद्धमित्यकारणत्वं तस्य । त्र्यणुकपरिमाणे त्रित्वसंख्याया द्व्यणुकपरिमाणे च द्वित्वसंख्यायाः कारणत्वम् । योगजधर्मबलाद् योगिनामलौकिकप्रत्यक्षे परमाणुपरिमाणादीनां कारणत्वात् योगजधर्माऽप्रयुक्तकारणत्वनिषेधोऽत्राऽवगन्तव्यः ॥ संसर्गधर्मविशेषाभावाणां जातिशून्यत्वं साधर्म्यम्, जात्यनधिकरणत्वमिति तदर्थः । एवं समवायाऽनधिकरणत्वमपि साधर्म्यं बोध्यम् ॥ ५४ ॥

**कपालसमवेते योऽवृत्तिः पदार्थभाजकः ।**
**धर्मस्तदाश्रयत्वं हि विशेषाऽभावयोस्तु तत् ॥५५॥**

विशेषाऽभावयोः कपालसमवेताऽवृत्तिपदार्थविभाजकधर्मवत्त्वं साधर्म्यमित्यर्थः ॥ ५५ ॥

**सर्वाधारत्वयोग्यातिरिक्तसंसर्गवृत्तिता ।**
**नित्यद्रव्यातिरिक्तानामभावे भावभिन्नता ॥५६॥**

नित्यद्रव्यातिरिक्तानां सर्वेषां पदार्थानां सर्वाधारताप्रयोजको यः कालिकसम्बन्धो महादिङ्निरूपितस्वरूपसम्बन्धश्च तदतिरिक्तसम्बन्धेन समवायादिना यथायोग्यं वृत्तित्वं साधर्म्यमित्यर्थः ॥ कालिकेन सर्वेषां पदार्थानां कालन्निरूपितवृत्तित्वं, महादिङ्निरूपितस्वरूपसम्बन्धेन च सर्वपदार्थानां महादिङ्निरूपितवृत्तित्वं साधर्म्यमिति बोध्यम् ॥ अथाऽभावे भावभिन्नत्वं प्रतियोगिज्ञानसापेक्षज्ञानविषयत्वं च साधर्म्यं बोध्यम् ॥ ५६ ॥

**वृत्त्यनियामकत्वं स्यात् पारम्पर्ये च कल्पिते ।**
**संसर्गेऽथ तदन्येषु वृत्तिनियामकत्वकम् ॥५७॥**

क्लृप्तपदार्थात्मकाः प्रतियोगित्वादयो ये कल्पितसंसर्गाः स्वाश्रयजन्यत्वादयश्च, ये च परम्परासम्बन्धाः तेषां वृत्त्यनियामकत्वं साधर्म्यम् । अत्र जन्यगुरुत्वस्य प्रकृष्टगुरुत्वस्य वा पतनकारणतया तदभावादेव लाघवाद्वा परमाणोः पतनाऽसंभवेन परमाणुसंयोगस्य प्रतिबन्धकत्वे मानाऽभावात् परमाणुसंयोगस्य वृत्त्यनियामकत्वम्, गगनादौ गुरुत्वाऽभावेनैव लाघवेन वा पतनाऽनुपपत्त्या गगनादिसंयोगस्य पतनप्रतिबन्धकत्वाऽभावात् वृत्त्यनियामकत्वमित्यपि बोध्यम् ॥ अथ समवायस्य, अनित्यद्रव्याणां संयोगस्य, 'यत्र समवायेन घटस्तत्र तादात्म्येन कपालमि'ति कार्यकारणभावाऽनुरोधेन तादृशस्थलीयतादात्म्यस्य, दैशिकस्वरूपसम्बन्धेन महादिशि कालिकेन महाकाले च परमाण्वादीनां वर्तमानत्वाद् दैशिकस्वरूपस्य कालिकस्वरूपस्य च पर्याप्तेश्च वृत्तिनियामकत्वं साधर्म्यं बोध्यम् ॥ ५७ ॥

**अनुयोगिप्रतियोगिमत्त्वं संसर्ग ईरितम् ।**
**जातावनेकसमवेतत्वविशिष्टनित्यता ॥५८॥**

सर्वेषां संसर्गाणां स्ववृत्त्यनुयोगितानिरूपकत्वस्ववृत्तिप्रतियोगितानिरूपकत्वोभयसम्बन्धेन अनुयोगिप्रतियोग्येतदुभयवत्त्वं साधर्म्यं बोध्यम् ॥ सर्वासां जातीनाम् अनेकसमवेतत्वविशिष्टनित्यत्वं साधर्म्यं बोध्यम् ॥ ५८ ॥

**संख्यापृथक्त्वसंयोगविभागपरिमाणवत् ।**
**द्रव्यदशकं विज्ञेयं, द्रव्यारम्भकराणि तु ॥५९॥**

दशद्रव्याणां संख्यावत्त्वं पृथक्त्ववत्त्वं संयोगवत्त्वं विभागवत्त्वं परिमाणवत्त्वं च साधर्म्यं बोध्यम् । न चोत्पत्तिकालीनद्रव्येऽव्याप्तिरिति वाच्यम् । संख्यादिमद्वृत्तिद्रव्यविभाजकधर्मवत्त्वस्य विवक्षितत्वात् । एवं सामान्यतो गुणवत्त्वं द्रव्यत्वजातिमत्त्वं चापि तत्साधर्म्यमिति भावः ॥ अथ पृथ्वीजलतेजोवायुतमसां द्रव्यारम्भकत्वं साधर्म्यम् । न च द्रव्यानारम्भकेऽन्त्याऽवयविन्यव्याप्तिरिति वाच्यम् । द्रव्यारम्भकवद्वृत्तिद्रव्यविभाजकधर्मवत्त्वस्य विवक्षितत्वात् ॥५९॥

**पृथ्वीवारिमरुत्तेजस्तमांस्येतानि सर्वथा ।**
**भवन्ति च क्रियासंख्यापृथक्त्वपरिमाणक- ॥**
**विभागवेगसंयोगपराऽपरत्ववन्ति हि ।**
**निष्क्रियत्वदिक्कालीने तत्र तद्योग्यता मता ॥**

पृथ्वीजलतेजोवायुतमसां च क्रियावत्त्वं संख्यावत्त्वं पृथक्त्ववत्त्वं परिमाणवत्त्वं विभागवत्त्वं वेगवत्त्वं संयोगवत्त्वम् परत्ववत्त्वम् अपरत्ववत्त्वं च साधर्म्यम् ।

यद्यपि निर्गुणनिष्क्रियकालीने द्रव्ये क्रियादिमत्त्वम् अव्याप्तम्, तथापि क्रियागुणादिस्वरूपयोग्यतावत्त्वस्य विवक्षणान्नाऽव्याप्तिः। तदीयक्रियावत्त्वं तदीयतद्गुणवत्त्वम्, सामूहिकगुणवत्त्वम्। सामूहिकक्रियागुणादिमद्वृत्तिद्रव्यविभाजकधर्मवत्त्वस्य विवक्षितत्वाच्च नाऽव्याप्तिः ॥६०-६१॥

**तद्वद्धर्मान्वितत्वं च कल्पनीयं विशेषतः।**
**धर्मक्रियागुणाद्यैर्व्यावर्त्यते स्वाश्रयो यतः ॥६२॥**

तत्क्रियावद्वृत्तिधर्मवत्त्वं तद्गुणवद्वृत्तिधर्मवत्त्वं चेत्यादि विशेषतः साधर्म्यं कल्पनीयम्। आश्रयो येन व्यावर्त्यतेऽन्यतः स धर्मो गुणः क्रिया वा लक्षणं साधर्म्यं चाश्रयाणां भवतीति स्वरूपं वा तटस्थमपि वा लक्षणं सर्वसम्मतम् ॥६२॥

**अथ क्षित्यप्तमस्तेजोवायवो लघुमूर्तकाः।**
**क्षित्यप्तेजोऽनिलाऽऽकाशाः भूतान्युच्यन्त इत्यमी॥**

पृथ्वीजलतेजोवायुतमसां लघुत्ववत्त्वं मूर्तत्वं च साधर्म्यम्, मूर्तत्वं चाऽणुपरिमाणवत्त्वम्। अथ पृथ्वीजलतेजोवाय्वाकाशानां भूतत्वं साधर्म्यम्। भूतत्वं च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् ॥६३॥

**कालखेशदिगन्मायाा महन्नित्याश्च सर्वगाः।**
**क्षित्यप्तेजोऽनिलेषु स्युः स्पर्शद्रवत्वरूक्षताः॥६४॥**

कालाऽऽकाशदिङ्मायेशानां महत्परिमाणवत्त्वं सर्वगतत्वं च साधर्म्यम्। सर्वगतत्वं तु सर्वद्रव्यसंयोगित्वं, सर्वद्रव्यव्याप्तशक्तिमत्त्वमपि च। पृथ्वीजलतेजोवायूनां स्पर्शवत्त्वं द्रवत्ववत्त्वं रूक्षत्ववत्त्वं च साधर्म्यम्। द्रवत्वं हि प्रवाहानुकूलो गुणः, तेजसां कृत्रिमविद्युदादीनां ज्वालानां च वायुस्तराणां च प्रवाहिपदार्थत्वात् तत्र विलक्षणं सांसिद्धिकं द्रवत्वं जले इव स्वीक्रियते इति॥ रूक्षत्वं च मृद्ग्राव्णामिव अतिशीतप्रदेशीयकरकाणां प्रचण्डाग्निविद्युदादिवज्रपातानां प्रलयकरशुष्कवातानां च खरतात्मकं बोध्यम्। अत्रापि स्पर्शादिमद्वृत्तिपदार्थविभाजकधर्मवत्त्वमित्यर्थो बोध्यः ॥६४॥

**क्षित्यप्तेजोमरुत्खाऽऽत्मतमोमायासु चेष्यते।**
**विशेषक्षणिकगुणवत्त्वं,खात्मान्यकास्वथ ॥६५॥**

**एतास्वव्याप्यवृत्तिकविशेषगुणवत्त्वकम्।**
**खाऽऽत्मनोस्तु व्याप्यवृत्तिविशेषगुणयुक्तता ॥६६॥**

आत्मा-जीवात्मा, पृथ्वीजलतेजोवाय्वाकाशाऽऽत्मतमोमायानां क्षणिकविशेषगुणवत्त्वं साधर्म्यम्। क्षणिकत्वं च तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, तादृशानां वृष्टिप्रवाहपतितपार्थिवपंकात्मकरजसां वृष्टिरूपजलानां प्रज्वलितवह्न्यंशानाम् अतिवातवायूनां सूर्यादिव्यवहितब्रह्माण्डाऽपरभागाऽऽवरकवेगवत्तमसां च क्षणस्थितिकानां रूपादिक्षणिकविशेषगुणवत्त्वं बोध्यम्, व्योम्नि शब्दात्मकक्षणिकविशेषगुणवत्त्वं, पूर्वशब्दस्य द्वितीयशब्देन नाशात्। जीवात्मनि ज्ञानादीनामपि तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वेन क्षणिकविशेषगुणवत्त्वम्। मायायां च सत्त्वरजस्तमोगुणानां तादृशक्षणिकतया तद्वत्त्वेन लक्षणसमन्वयात्। न च रूपादिविशेषगुणानां चिरस्थायित्वेनाऽप्युपलम्भात् तद्वत्सु द्रव्येष्वव्याप्तिरिति वाच्यम्। तादृशविशेषगुणवद्वृत्तिद्रव्यविभाजकधर्मवत्त्वस्य विवक्षणात्।

अथ स्वात्माऽन्यकासु आकाशात्मभिन्नासु एतासु क्षित्यप्तेजोमरुत्तमोमायासु अव्याप्यवृत्तिविशेषगुणवत्त्वं साधर्म्यम्, रूपादीनामव्याप्यवृत्तित्वात् तमोगुणानां मायागुणानां चाऽव्याप्यवृत्तिविशेषगुणत्वात् तमसि कृष्णादिरूपस्य मायायां सत्त्वरजस्तमसां चाऽव्याप्यतयैव वर्तमानत्वात्। अथ आकाशाऽऽत्मपरमात्मनां व्याप्यवृत्तिविशेषगुणवत्त्वं बोध्यम्। शब्दस्याऽप्याकाशे सर्वत्राऽनुद्भूतस्य सत्त्वेन ध्वनिवर्धकयन्त्रप्रयोगे तदुपलम्भेन व्याप्यवृत्तित्वम्, एवम् आत्मपरमात्मनोर्ज्ञानादीनां सर्वथा सर्वदा व्याप्यवृत्तित्वमेव। व्याप्यवृत्तित्वं चाऽत्र स्वाऽवच्छेदकसम्बन्धेन स्वाधिकरणे येन केनाऽपि सम्बन्धेन योऽभावस्तदप्रतियोगित्वं बोध्यम् ॥ ६५ ॥ ६६ ॥

**क्षित्यप्तेजस्तमस्सु स्याद् रूपप्रत्यक्षयोगिता।**
**पृथिवीजलयोस्तद्धि गुरुत्ववत्त्वमुच्यते ॥ ६७ ॥**

पृथिव्यप्तेजस्तमसां रूपवत्त्वं प्रत्यक्षविषयत्वं च साधर्म्यम्। न च यत्र रूपं नोत्पन्नं तत्रोत्पन्नविनष्टे प्रथमक्षणिके वा द्रव्येऽव्याप्तिरिति वाच्यम्। रूप-

वद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षणात् । तद्द्व्यणुकादीनामुष्मणामनुद्भूतवह्नेश्च पृथिवीत्वादिना रूपादिमत्त्वाऽनुमानान्नाऽव्याप्तिशंका तत्र । प्रत्यक्षविषयत्वं च लौकिकसन्निकर्षप्रयोज्या या बहिरिन्द्रियजन्यप्रत्यक्षीयविषयता तदवच्छेदकधर्मवत्त्वं बोध्यम्, तेन चक्षुरादिना ज्ञानलक्षणाद्वाराऽऽत्मनः प्रत्यक्षत्वेऽपि तत्र नाऽतिव्याप्तिः, न वा चक्षुरादिना संयोगेनाऽप्रत्यक्षे द्व्यणुकादावव्याप्तिः ॥ पृथिवीजलयोर्गुरुत्ववत्त्वं साधर्म्यम् । अतीन्द्रियस्य गुरुत्वस्य तुलादिनाऽनुमानात्, वायुप्रपूरितकोष्ठल्यादीनां रिक्तावस्थाऽपेक्षयाऽधिकभारोपलम्भात् वायौ गुरुत्वम् आर्द्रभागौपाधिकं बोध्यम् । वह्नेश्च गुरुत्वविरोधिलाघवस्योर्ध्वगतिप्रयोजकस्य सत्त्वान्न गुरुत्ववत्त्वमिति निर्णयः ॥ ६७ ॥

**तथैव रसवत्त्वं स्यात्, क्षितौ नैमित्तिको द्रवः ।**
**जलतेजोऽनिलाः सांसिद्धिकद्रवत्वसंश्रयाः ॥**

पृथिवीजलयो रसवत्त्वं साधर्म्यम्, द्व्यणुकादौ रसस्य पृथिवीत्वादिनाऽनुमानात्, आद्यक्षणाऽवच्छिन्ने तु रसवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य समन्वयात् । पृथिव्या नैमित्तिकद्रवत्ववत्त्वं साधर्म्यम्, घृततैललाक्षाप्रभृतौ तत्सत्त्वात् । जलतेजःपवनानां सांसिद्धिकद्रवत्ववत्त्वं साधर्म्यम्, जलवत् तेजसो विद्युदादेः पवनानां च प्रवाहिपदार्थतया प्रवाहप्रयोजकं विलक्षणद्रवत्वं सांसिद्धिकमेव तत्र स्वीक्रियते । उत्पन्नविनष्टे प्रथमक्षणिके वाऽव्याप्तिवारणाय सांसिद्धिकद्रवत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षणात् ॥ ६८ ॥

**यत्स्यादनन्यथासिद्धं नियतं पूर्ववृत्ति च ।**
**कारणं, तत् समवाय्यसमवायिनिमित्तकम् ॥६९॥**

अनन्यथासिद्धत्वे सति नियतत्वे सति पूर्ववृत्तित्वं कारणत्वम्, कारणतावच्छेदकधर्मगुणवारणाय— अनन्यथासिद्धत्वे सतीति । अनियतरासभादिवारणाय—नियतत्वे सतीति । कार्यसमक्षणवृत्तिदंडादिवारणाय—पूर्वेति । ध्वस्तकपालादिवारणाय— वृत्तित्वमिति । तत् त्रिविधम्—समवायिकारणम्, असमवायिकारणम्, निमित्तकारणं चेति ।

**आद्यं तु समवायेन कार्यं यत्र प्रवर्तते ।**
**तत्र तादात्म्यसम्बद्धमुपादानं तदेव हि ॥७०॥**

तत्र समवायिकारणमाह—आद्यमिति । यत्र कपालतन्त्वादौ समवायेन घटपटादि कार्यमुत्पद्यते तत्र कपालतन्त्वादौ तादात्म्येन सम्बद्धं यत् कपालतन्त्वादि तत् कपालतन्त्वादि समवायिकारणम्, इदमेवोपादानकारणमित्युच्यते । तथा च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वमिति फलितोऽर्थः ॥ ७० ॥

**द्वितीयं समवायेन कार्यं यत्र प्रवर्तते ।**
**तत्रैव समवायेन वृत्ति यत् कारणं हि तत् ॥७१॥**
**यद्वा स्वाश्रयसमवायेन वृत्ति च कारणम् ।**

असमवायिकारणमाह—द्वितीयमिति । यत्र कपालतन्त्वादौ समवायेन घटपटाद्यात्मकं कार्यमुत्पद्यते तत्र कपालतन्त्वादौ समवायेन सम्बद्धं यत् कपालसंयोगतन्तुसंयोगाद्यात्मकं कारणं तत् असमवायिकारणमित्येकं लक्षणम् । यद्वा यत्र घटपटादौ समवायेन रूपाद्यात्मकं कार्यमुत्पद्यते तत्र घटपटादौ स्वाश्रयसमवेतत्वसम्बन्धेन सम्बद्धं यत् कपालरूपतन्तुरूपाद्यात्मकं कारणं तद् असमवायिकारणमिति द्वितीयं लक्षणम् । तथा च समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवाय-स्वसमवायिसमवेतत्वाऽन्यतरसम्बन्धावच्छिन्ना कारणता तदाश्रयत्वमिति सामान्यतः फलितोऽर्थः ॥ ननु पटसमवायिकारणे तन्त्वादौ तुरीसंयोगात्मकस्य निमित्तकारणस्य सत्त्वात् तस्य पटसमवायिकारणत्वापत्तिः, एवम् अभिघातसमवायिकारणे पाषाणादौ वेगस्य निमित्तकारणस्य सत्त्वात्तस्याऽभिघाताऽसमवायिकारणत्वापत्तिः स्यात्, एवम् इच्छायाः समवायिकारणे आत्मनि ज्ञानादेर्निमित्तकारणस्य सत्त्वात् ज्ञानादेरिच्छाद्यसमवायिकारणत्वापत्तिः स्यादिति चेन्न । तत्तद्भिन्नत्वस्य तत्तद्विशेषलक्षणे निवेशात्, आत्मविशेषगुणानां त्वसमवायिकारणत्वशून्यत्वात् सामान्यलक्षणे तद्भिन्नत्वस्य निवेशात्, आत्ममनःसंयोगेनाऽन्यथासिद्धत्वात् ॥७१॥

**आभ्यां भिन्नं कारणं यत् तन्निमित्तमुदाहृतम् ॥**

समवायिकारणाऽसमवायिकारणभिन्नत्वे सति

कारणत्वं निमित्तकारणत्वम्, यथा घटपटादिकं प्रति दण्डवेमादीनामिति ॥७२॥

**स्यान्न प्रामाणिकानां कारणत्वे पूर्ववर्तिता-**
**ऽवच्छेदककयद्रूपावच्छेदेन प्रवर्तनम् ॥७३॥**
**तद्रूपत्वं हि विज्ञेयमन्यथासिद्धिलक्षणम् ।**

अन्यथासिद्धिस्वरूपलक्षणमाह—स्यान्नेति। पूर्ववर्तिताऽवच्छेदकयद्रूपावच्छेदेन प्रामाणिकानां न कारणत्वव्यवहारस्तद्रूपत्वम् अन्यथासिद्धिरित्यर्थः। घटं प्रति दण्डत्वं दण्डरूपं गगनं कुलालपिता रासभश्चेति पञ्चाऽन्यथासिद्धाः, ते च पूर्ववर्तिनोऽपि भवन्ति, अतः पूर्ववर्तितावच्छेदकं यद्रूपं दण्डत्वगततद्व्यक्तित्वं तदवच्छेदेन, दण्डरूपत्वावच्छेदेन, गगनत्वावच्छेदेन, कुलालपितृत्वावच्छेदेन, रासभत्वावच्छेदेन च प्रामाणिकानां कारणत्वव्यवहारो न भवतीति तद्रूपत्वं दण्डत्वगततद्व्यक्तित्वत्वं दण्डरूपत्वत्वं गगनत्वत्वं कुलालपितृत्वत्वं रासभत्वत्वं चाऽन्यथासिद्धयः, तद्वत्त्वमन्यथासिद्धत्वं दण्डत्वादीनामिति। प्रत्येकलक्षणानि यथा—तद्धर्मावच्छिन्ननिरूपितनियतपूर्ववृत्तिताऽवच्छेदकत्वं तद्धर्माऽवच्छिन्ननिरूपिताऽन्यथासिद्धित्वम्, घटत्वावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकत्वं दण्डत्वगततद्व्यक्तित्वमन्यथासिद्धिः। तद्धर्माऽवच्छिन्ननिरूपितसाक्षात्सम्बन्धावच्छिन्नाऽन्वयव्यतिरेकशालि-घटितधर्माऽवच्छिन्न-तत्कार्यनिरूपितनियतपूर्ववृत्तिताश्रयत्वं तत्कार्यनिरूपिताऽन्यथासिद्धित्वम्, घटत्वावच्छिन्ननिरूपित-साक्षात्संयोगसम्बन्धावच्छिन्नौ यौ 'संयोगेन चक्रे दण्डसत्त्वे घटसत्त्वं दण्डाऽभावे घटाभाव-' इत्यन्वयव्यतिरेकौ, तच्छालिदण्डघटितधर्मो दण्डरूपत्वात्मकस्तदवच्छिन्ना या घटात्मककार्यनिरूपिता नियतपूर्ववृत्तिता दण्डरूपनिष्ठा तदाश्रयत्वं दण्डरूपत्वं द्वितीयाऽन्यथासिद्धिरिति ॥ तद्धर्माऽन्यधर्मावच्छिन्न-तद्धर्मावच्छिन्नाऽननुगुण-निरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्न-तद्धर्माऽवच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वं तद्धर्मावच्छिन्ननिरूपिताऽन्यथाऽसिद्धित्वम्, घटत्वात्मकतद्धर्माऽन्यो यः शब्दत्वधर्मस्तदवच्छिन्नः अथ च घटत्वात्मकतद्धर्मावच्छिन्नं प्रति अननुगुणः-अजनकश्च यः शब्दस्तन्निरूपितपूर्ववृत्तिताघटितः शब्दसमवायिकारणत्वधर्मस्तदवच्छिन्ना या घटत्वावच्छिन्ननिरूपिता पूर्ववृत्तिता गगननिष्ठा तदाश्रयत्वं गगनत्वं तृतीयाऽन्यथासिद्धिः। गगनत्वेनाऽन्यथासिद्धिः, द्रव्यत्वेन तु संयोगादिकारणत्वं भवत्येव। तद्धर्माऽन्यधर्मावच्छिन्न-तद्धर्माऽवच्छिन्नाऽनुगुणनिरूपितपूर्ववृत्तित्वघटितधर्मावच्छिन्नतद्धर्मावच्छिन्ननिरूपितपूर्ववृत्तिताश्रयत्वं तद्धर्मावच्छिन्ननिरूपिताऽन्यथासिद्धित्वम्, घटत्वात्मकतद्धर्माऽन्यो यः कुलालत्वधर्मस्तदवच्छिन्नः अथ च घटत्वात्मकतद्धर्मावच्छिन्नं प्रति अनुगुणो जनको यः कुलालस्तन्निरूपितपूर्ववर्तिताघटितः कुलालपूर्ववृत्ति-तत्पितृत्वधर्मः तदवच्छिन्ना या घटत्वावच्छिन्ननिरूपिता पूर्ववृत्तिता कुलालपितृनिष्ठा तदाश्रयत्वं कुलालपितृत्वं चतुर्थ्यन्यथासिद्धिरिति ॥७३॥

**अवश्यक्लृप्तनियतपूर्ववृत्त्यतिरिक्तता ॥ ७४ ॥**
**वाऽन्यथासिद्धिरित्युक्ता पञ्चधा सा प्रकीर्तिता ।**
**यद्वा लघुनियतपूर्ववर्तिभिन्नता हि सा ॥ ७५ ॥**
**स्वधर्मे स्वगुणे चैव जनकोत्पादकेऽपि च ।**
**स्वामुख्यकार्यजनके सामान्याकारणेऽपि सा॥७६॥**
**दण्डत्वं दण्डरूपं च कुलालजनकस्तथा ।**
**आकाशं रासभश्चैतेऽन्यथासिद्धा घटं प्रति ॥७७॥**

पञ्चमं सामान्यलक्षणमाह—अवश्येति। अवश्यक्लृप्तत्वं लाघवप्रयुक्तमिति तदपेक्षया लघुपदघटितलक्षणमाह—यद्वेति। सामान्यैकलक्षणेनैव निर्वाहे पञ्चलक्षणादरो बुद्धिवैशद्यार्थं इतिद्योतनाय 'वा' 'यद्वे'त्युपात्तम् ॥ प्रकृतकार्यनिरूपितलघुधर्माऽवच्छिन्ननियतपूर्ववृत्तित्ववद्भिन्नत्वं प्रकृतकार्यनिरूपितान्यथासिद्धित्वमित्यर्थः। लघुत्वं शरीरकृतम्, उपस्थितिकृतम्, सम्बन्धकृतं च। तत्र दण्डत्वस्य कारणत्वे स्वाश्रयजन्यभ्रमिजन्यभ्रमिवत्तासम्बन्धाऽपेक्षया स्वजन्यभ्रमिजन्यभ्रमिवत्तासम्बन्धस्य लाघवात् सम्बन्धगतशरीरकृतलाघवस्यैव दण्डे कारणतानियामकत्वं, दण्डत्वादीनां कारणत्वे च गौरवमेव बाधकम्। एवं समवायेन घटाधिकरणे कपाले कपालस्य तादात्म्येन प्रागेवोपस्थितत्वात् आकाशस्य चाऽवृत्तिपदार्थस्य केनाऽपि सम्बन्धेन वृत्तितयाऽनुपस्थितत्वात् कपालनिष्ठकारणताग्रहे उपस्थितिकृतं लाघवं प्रयोजकम्।

एवं 'कुलालत्वं घटजनकत्वमि'ति कुलालस्य प्रथमोपस्थितत्वात्। किञ्च—घटाऽधिकरणे चक्रादौ कुलालस्य स्ववृतदण्डजन्यभ्रमणवत्त्वादिसम्बन्धेन वृत्तित्वाऽपेक्षया कुलालपितुः स्वजन्यकुलालधृतदण्डजन्यभ्रमणवत्त्वादिसम्बन्धेन वृत्तित्वे सम्बन्धकृतगौरवात् कुलाले कारणताग्रहः, कुलालपिता त्वन्यथासिद्धः। एवं घटजातीयं प्रति कारणताग्रहे चक्रादीनां सर्वत्र प्रथमोपस्थितत्वात् सम्बन्धकृतलाघवाच्च कारणत्वं, रासभस्य त्वन्यथासिद्धत्वम्। एवं प्रत्यक्षं प्रति अनेकद्रव्यत्ववत्वात्मकगुरुशरीरधर्मापेक्षया महत्त्ववत्वात्मकलघुशरीरधर्मस्य कारणतावच्छेदकत्वे लाघवम्, एवं गन्धं प्रति रूपप्रागभावाऽपेक्षया गन्धप्रागभावे कारणतास्वीकारे उपस्थितिकृतं लाघवम्, प्रतियोगितासम्बन्धेन गन्धप्रागभावस्य प्रथमोपस्थितत्वात्। लक्ष्यस्थलान्याह—स्वधर्मे इति। कारणधर्मे दण्डत्वादावित्यर्थः। एवं स्वगुणे—दण्डगतरूपादौ। घटजनकोत्पादके कुलालपितरि। स्वामुख्यं दण्डस्याऽमुख्यं यत् कार्यं शब्दस्तज्जनके गगने। घटजातीयं प्रति सामान्यतयाऽकारणे रासभादौ चेत्यर्थः।७४-७७'

**क्षितौ जले सप्तदशाऽथ तेजसि**
**चतुर्दश स्युः, पवने द्वयं दश।**
**षडम्बरे, कालदिशोस्तु पञ्च वै**
**शरीरिणि स्युर्दश वै नवाऽन्विताः॥७८॥**

**परमात्मगुणा बोध्या नवाऽथ तमसो दश।**
**सप्त चैव गुणाः प्रोक्ता मायायामत्र तन्त्रके॥७९॥**

क्षितौ गन्धरसरूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वलघुत्वस्वच्छत्वद्रवत्वरूक्षत्वसंस्काराः सप्तदश गुणाः। जले ते गन्धहीनाः स्नेहयुक्ताः सप्तदश। तेजसि गन्धरसगुरुत्वहीनास्ते चतुर्दश। वायौ गन्धरसरूपस्वच्छत्वरहितास्ते त्रयोदश। अत्र चतुर्षु संस्कारो वेगस्थितिस्थापकोभयात्मको बोध्यः। आकाशे शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षट्। काले दिशि च शब्दशून्यास्ते पञ्च। जीवात्मनि संख्यापरिमाणपृथक्त्वसंयोगविभागज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनाख्यसंस्कारकामभयमोहशूरत्वनिद्रा एकोनविंशतिः गुणाः। परमात्मनि संख्यापरिमाणपृथक्त्वसंयोगविभागनित्यज्ञानसुखेच्छाप्रयत्ना नव। तमसि संख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वलघुत्ववेगरूपाणि दश। मायायां संख्यापरिमाणपृथक्त्वसंयोगविभागसत्त्वरजस्तमांसि एकादश गुणा इति।७८-७९।

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डित 'श्रीकृष्णवल्लभाचार्य'स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमेयचिन्तामण्याख्ये प्रथमे प्रत्यक्षखण्डे पदार्थसाधर्म्यपरिच्छेदः॥ ४॥

**गन्धोपादानमुर्वी स्याद्विभिन्नरसयोगिनी।**
**नानाजातीयरूपाढ्या पाकजस्पर्शसंश्रया॥८०॥**

अथ द्रव्येषु प्रत्येकं वसुन्धरादिकं निरूपयति—गन्धोपादानमिति। 'सुरभिरसुरभिश्चेति द्विविधो गन्धः, तस्योपादानं समवायिकारणं, तथा च समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणतावत्त्वं पृथिव्या लक्षणमित्यर्थः। ननु सुरभ्यसुरभयोः परस्परप्रतिबन्धात् सुरभ्यसुरभिकपालाऽऽरब्धे गन्धशून्ये घटेऽव्याप्तिरिति चेन्न। तत्राऽव्याप्यवृत्तिगन्धस्वीकारात्, व्याप्यवृत्त्यव्याप्यवृत्तिजातीययोर्विरोधे मानाऽभावात्। ननु तथाऽप्युत्पत्तिकालीने घटे, उत्पन्नविनष्टे घटे चाऽव्याप्तिरिति चेन्न। गन्धवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात्। गन्धसमानाधिकरण-गन्धाऽसमानाधिकरणगुणाऽसमानाधिकरणजात्यधिकरणत्वं वेत्यपि लक्षणम्। पृथिवीत्वजातौ प्रमाणप्रदर्शनार्थमुक्तम्—उपादानमिति। प्रयोगस्तु—'गन्धसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्, घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावदिति'॥ अथ पाषाणसुवर्णादीनां गन्धाऽभावात् पृथिवीत्वं न स्यादिति चेन्न। यद् द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुप्र-

दानोपादेयमिति व्याप्तेः प्रत्यक्षगोचरगन्धवत्तद्भस्मोपादानोपादेयानां तेषां पृथिवीत्वसिद्धेः, प्रयोगस्तु—'पाषाणादिः पृथिवी, गन्धवद्द्रव्योपादानोपादेयत्वादिति'। 'सुरभि सलिलं, सुरभिः समीरण' इति प्रतीतेस्तु 'रक्तः स्फटिक' इतिप्रतीतिवदौपाधिकत्वं बोध्यम्। लक्षणस्येतरभेदो व्यावृत्तिर्वा प्रयोजनम्। 'पृथिवी इतरेभ्यो भिद्यते, गन्धवत्त्वात्, यन्नेतरेभ्यो भिद्यते न तद्गन्धवत्, यथा जलादिकम्, पृथिवी त्वितरभेदाऽभावव्यापकगन्धवत्त्वाभाववती, तस्मादितरेभ्यो जलादिभ्यो भिद्यते'। यद्वा—'इयम् पृथिवीति व्यवह्रियते, गन्धवत्त्वात्, यन्न पृथिवीति व्यवह्रियते तन्न गन्धवत्, यथा जलादि, इयन्तु पृथिवीतिव्यवहाराभावव्यापकीभूतगन्धवत्त्वाभावाऽभाववती, तस्मात् पृथिवीति व्यवह्रियते'॥

ननु कुत्रापि जलाद्यन्योन्याभावस्याऽप्रसिद्धत्वाद् व्याप्तिग्रहाभावेन साध्यविशिष्टप्रतीत्यनुदय इति चेन्न। घटत्वाश्रये प्रत्यक्षतस्तत्सिद्धेः, एकस्यैव घटस्य निश्चितसाध्यवत्त्वेन सपक्षत्वे सन्दिग्धसाध्यवत्त्वेन सिषाधयिषाविरहविशिष्टसिद्ध्यभाववत्त्वेन वा पक्षत्वेऽविरोधात्। घटदृष्टान्तेनाऽन्वयित्वे सत्यपि व्यतिरेकिणोऽपि निर्दोषत्वात्। यद्वा—जलाद्यष्टादशान्योन्याभावानां तत्रैव प्रत्येकं प्रसिद्धानां पृथिव्यां साधनान्नाऽप्रसिद्धिरिति॥

विभिन्नरसेति। नानाजातीया ये मधुराऽम्ललवणकटुकषायतिक्तचित्राख्याः पाकजाः सप्त रसाः अव्याप्यवृत्तयः, समवायेन तद्वत्त्वं पृथिव्या लक्षणमित्यर्थः। न चैकरसवत्यां नीरसायामुत्पन्नविनष्टायां चाऽव्याप्तिरिति वाच्यम्। रससमानाधिकरणजलावृत्तिजातिमत्त्वस्य विवक्षितत्वात्। एवं पाकजमधुरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमित्येवं लक्षणसप्तकमपि बोध्यम्॥ नानाजातीयरसाढ्येति। नानाजातीयानि यानि शुक्लनीलपीतरक्तहरितकपिशकर्बुराख्यानि पाकजानि अव्याप्यवृत्तीनि रूपाणि, समवायेन तद्वत्त्वं पृथिव्या लक्षणमित्यर्थः। न च नानाजातीयरूपशून्ये उत्पत्तिकालीने उत्पन्नविनष्टे च घटादावव्याप्तिरिति वाच्यम्। पाकजनीलवद्वृत्तिजलाऽवृत्तिजातिमत्त्वस्य विवक्षितत्वात्। एवं पाकजशुक्लरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमित्येवं प्रत्येकं लक्षणसप्तकं बोध्यम्॥ पाकजस्पर्शसंश्रयेति। पाको नाम विजातीयतेजःसंयोगः, तेन जायमानो योऽनुष्णाऽशीतस्पर्शोऽव्याप्यवृत्तिः, समवायेन तद्वत्त्वं पृथिव्या लक्षणमित्यर्थः। ननु पाकाऽयोग्ये पटादौ, उत्पत्तिकालीनघटादौ उत्पन्नविनष्टे च घटादावव्याप्तिरिति चेन्न। पाकजस्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षितत्वात्। एवम् अनुष्णाशीतस्पर्शवद्वृत्तिवाय्ववृत्तिजातिमत्त्वमपि लक्षणं बोध्यम्॥ ८०॥

**गन्धरूपरसस्पर्शा अनित्याः पाकयोगतः।**
**अव्याप्यवृत्तयो हेतुगुणजन्या अपि क्षितौ॥८१॥**

गन्धेति। पृथिव्यां सर्वत्र गन्धादिचतुष्टयं विजातीयतेजःसंयोगजन्यत्वात् क्वचिद्विलक्षणसजातीयसंसर्गजन्यत्वाच्चाऽनित्यम्, कारणकार्योभयविधपृथिव्यामपि पाकादिस्वीकारात्। यदि च क्वचित्कारणमात्रे पाकस्तदा कार्ये गन्धादयः कारणगुणपूर्वका भवन्ति, न तु पाकजा इति। ते चाऽव्याप्यवृत्तयः, तत्तद्गुणद्व्यादिमदवयवजन्यावयविनि तथोपलब्धेः। न नु सविषयाऽवृत्तिव्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तिभावनियमविरोधः स्यादिति चेन्न। तस्याऽप्रामाणिकत्वात्। बहिरुदरे रक्तस्याऽपि घटस्य मग्नस्य मध्यलीनभागावच्छेदेन कृष्णत्वविषयिण्याः प्रतीतेः प्रबलत्वात्। न च तर्हि चित्रमनावश्यकमिति वाच्यम्। विजातीयनानारूपवदवयवारब्धे घटादौ अव्याप्यवृत्तिनानाजातीयरूपाऽङ्गीकारे नीलाद्यवयवाऽवच्छेदेन पीतादिवारणायाऽवच्छेदकतासम्बन्धेन पीतादिकं प्रति स्वसमवायसम्बन्धेन पीतादीनां षडभावाऽभावकारणगौरवात्, चित्ररूपवादिमते तु सर्वनीलादिस्थले चित्रापत्तिवारणाय चित्रत्वावच्छिन्नं प्रति कार्यकालवृत्तितया चित्रेतररूपाऽभावत्वेनैकहेतुत्वकल्पने लाघवात्, अतिदीर्घपटेऽनेकचित्ररूपाणां क्वचिद्दर्शनात्, तादृशदर्शनलाघवतर्कोपोद्बलकप्रमाणसिद्धत्वात् चित्रमप्रत्यूहम्॥८१॥

**सा च नित्या तथाऽनित्या, नित्यास्तु परमाणवः।**
**तदुत्पन्नद्व्यणुकाद्या अनित्याऽवयवाऽन्विताः॥**

सा चेति। सा पृथिवी, नित्या अनित्या च द्वेधा। नित्यत्वं ध्वंसभिन्नत्वे सति ध्वंसाऽप्रतियो-

गित्वम्, ध्वंसाऽप्रतियोगित्वमात्रं वा पृथिवीत्वविशिष्टनित्यत्वम्। परमाण्वात्मिका पृथ्वी नित्या। वालाग्रशतभागस्य शतधा कल्पितस्य च यः षष्ठांशः सः परमाणुः, सूक्ष्मदर्शकयन्त्रेण गोचरीकृतस्य रजसोऽन्तिमगोचरस्त्रसरेणुः। उक्तपरमाणुजन्या ये द्व्यणुकास्तज्जन्यत्र्यणुकादिक्रमेण ब्रह्माण्डान्ता सर्वाऽपि पृथ्वी अनित्या। ध्वंसप्रतियोगित्व-प्रागभावप्रतियोगित्वाऽन्यतरवत्त्वम् अनित्यत्वम्। पृथिवीत्वविशिष्टाऽनित्यत्वं तु ध्वंसप्रतियोगित्वमात्रं प्रागभावप्रतियोगित्वमात्रं वा बोध्यम्। सा चाऽवयवसमवेता चिरचिरतरादिसमयस्थायिन्यपि भवति॥

अथ सर्वं क्षणभंगुरं, यत् सत् तत् क्षणिकं यथा जलधरः, सँश्च विवादाऽध्यासितः परमाण्वादिः; क्षणिकत्वं च स्वोत्पत्त्यव्यवहितोत्तरक्षणवर्तिध्वंसप्रतियोगित्वम्, सत्त्वं च अर्थक्रियाकारित्वमिति चेन्न। तत्र व्याप्त्यसिद्धेः। ननु प्रतिक्षणं सामर्थ्याऽसामर्थ्यात्मकविरुद्धधर्माध्यासात् क्षणिकत्वसिद्धौ व्याप्तिसिद्धिरिति चेन्न। विरुद्धयोरेकत्र संसर्गाऽसिद्धेर्व्याप्तेरप्यसिद्धत्वात्। ननु एकमेव कुसूलस्थं बीजं यदि अंकुरसमर्थं स्याद् अंकुरं जनयेत्, न चोत्पादयति, तस्मान्न समर्थम्, तदेव तु क्षेत्रपतितं यद्यसमर्थं स्यान्न जनयेत्, जनयति तु, तस्मान्नाऽसमर्थमिति विरुद्धधर्मसंसर्गसिद्धेः क्षणिकत्वं पर्यवस्येदिति चेन्न। समर्थत्वं यदि जनकत्वात्मकम्, तदाऽऽपादकस्याऽऽपाद्याऽविशिष्टत्वप्रसंगः। तत् यदि स्वरूपयोग्यत्वरूपं, तदाऽकुर्वाणस्य करणजातीयस्य सहकारिसमवहितत्वे सति करणत्वनियमेन सहकारिसमवहितत्वाऽभावसाधने पर्यवसानात् सिद्धसाधनापत्तिः, प्रत्युत यत् यदभावे एव यन्न करोति तत् तत्सद्भावे तत् करोतीति स्थैर्यसिद्धिरेव स्यादिति॥

ननु सदृशगुणधर्माद्यन्वितपरस्परौतप्रोतायमानपरमाणुपुञ्जात्मकघटादेः प्रतिक्षणमुत्पद्यमानसदृशप्रवाहपातितया 'स घटोऽयमि'ति स्थैर्योपलब्धिः 'सैवेयं दीपकलिके'तिवत् प्रवाहसाजात्यमवलम्बमाना वस्तुनः क्षणिकत्वमेव साधयति, उत्पत्तेरारभ्य मुद्गरप्रहारपर्यन्तं घटादिस्तावत् जात्यन्तराऽनाक्रान्त एवाऽनुभूयमानः क्रमवत्सहकारिवैचित्र्यात् कार्यकोटीः सरूपा विरूपाः करोतीति समञ्जसेऽनुपलभ्यमानस्थिरजातीयकल्पना भ्रममूलेति चेन्न। परमाणपुञ्जस्य घटादेरप्रत्यक्षत्वापत्तेः, ओतप्रोतायमानसंयोगस्याऽयोगपरत्वे स्वशक्तिव्याघातापत्तेः, स्थिरप्रवाहतावच्छेदकाऽनङ्गीकारे साजात्यविलोपापत्तेः, विरुद्धोत्पत्तिविनाशयोरेकत्र वस्तुतत्त्वव्याहत्यापत्तेश्च। किञ्च परमाणुत एव तव सजातीयोत्पत्तिः?, उत क्रमवत्सहकारिविशिष्टात् सजातीयाद्युत्पत्तिः?, किं वा सदृशप्रवाहाऽऽपादकाऽन्वयविशिष्टात् सजातीयोत्पत्तिः? प्रथमे यावत्परमाणुपुञ्जवादिनस्तव सर्वानुभूतविजातीयानां विलोपापत्तिः, विजातीयोत्पत्तौ वा साजात्यभानविरोधापत्तिः, द्वितीये कारणताया विशेषणे पर्यवसानात् असदृशस्यापि क्रमवत्सहकारिणः कारणत्वे तदसन्निधानं यावत् तावत् स्वरूपतश्च परमाणूनां स्थैर्यसिद्धिः, क्रमवत्सहकारिण एव स्वसदृशप्रवाहोत्पादकत्वे विशेष्यवस्तुनः स्थिरताध्रौव्यं स्यात्। तृतीये पूर्वावस्थित्यप्रचलितस्यैवाऽन्वयस्य सदृशप्रवाहापादकत्वेन तद्विशिष्टस्य कथञ्चित्स्थैर्यसिद्धावन्यत्र चिरतया स्थिराऽवयवित्वसिद्धिरिति॥

किञ्च—इदमेकं स्थूलमित्यनन्यथासिद्धेन प्रत्यक्षेणैवाऽवयविन उपलम्भात्। ननु परमाणव एव समूहिता अवयवितया भासन्त इति चेन्न। तेषां प्रत्येकमनवयवित्वादस्थूलत्वाच्च। नानादिग्देशव्यापितात्मकस्थौल्यस्य परमाणावसंभवात्। अनेकत्वसमानाधिकरणनानादिग्देशव्यापिताऽपि न स्थौल्यम्, 'एकः स्थूल' इतिप्रत्ययविरोधात्। ननु प्रत्येके एकत्वस्य समुदाये समारोपितत्वेन एकत्वप्रत्यय इति चेन्न। करचरणचिबुकादिपरमाणूनामैक्यस्य शरीरे समारोपाऽननुभवात्। परमाणुकोटेरपि परमाण्वेकत्वारोपितायाः परमाणुमात्रतया स्फुरणात् स्थूलत्वेन स्फुरणाऽनुपपत्तेः, अतीन्द्रियसमूहस्याऽप्यतीन्द्रियत्वात्। ननु सञ्चितानां बहुत्वमेव स्थौल्यम्, तद्विपर्यय एव सौक्ष्म्यमिति चेन्न। विभिन्नदेशस्थानामपि प्रत्यक्षत्वप्रसंगात्। नैरन्तर्यत्वेऽवयविसिद्धिश्चेति। तथा च महत्त्वोद्भूतरूपादिकरणसत्त्वेन महतो दृश्यस्याऽवयविनो घटादेः सिद्धौ तदवयवपरम्परायाः क्वचिदविरामे तन्निरूपकयोर्घट-

ब्रह्माण्डयोः साम्यत्वापत्तिः स्यादित्यतो विरामविषयं द्रव्यं नित्यं परमाणुः । न च त्रुटावेव विश्रामोऽस्त्विति वाच्यम् । प्रत्यक्षाऽन्यथाऽनुपपत्त्या साऽवयवद्रव्यजन्यत्वेन तत्र विरामानंगीकारात् । स्वरूपसत एवाऽवयविनः समवायेन सर्वावयवेषु वृत्तेर्न कार्त्स्न्यैकदेशवृत्तिविकल्पप्रयुक्ताऽवयवाऽवयविभावक्षतिरिति बोध्यम् ॥८२॥

**शरीरेन्द्रियविषयप्रभेदात् सा त्रिधा मता ।**
**योनिजश्चाऽयोनिजं वै देहं पार्थिवमुच्यते ॥८३॥**

अनित्यां पृथिवीं विभजते–शरीरेन्द्रियेति । सा कार्यरूपा पृथिवी त्रिविधा–शरीरमिन्द्रियं विषयश्चेति । तत्र शरीरमाह–योनिजञ्चेति । योनिजं–शुक्रशोणितयोः परस्परमेलनेन स्त्र्युदरजन्यम्, तच्च जरायुजमण्डजं चेति बोध्यम्, तत्र जरायुजं मानुषपशुमृगादीनां देहम्, अण्डजं तु मशकमत्स्यसर्पविहङ्गमादीनाम् । अयोनिजं स्वेदजोद्भिज्जनारकिप्रभृतीनाम् । तत्र स्वेदजाः कीटमत्कुणादयः, उद्भिज्जास्तरुगुल्मलतादयः । नारकिशरीराणाम् अधर्मविशेषसहिताऽणुभ्यो जायमानत्वात् पार्थिवत्वमयोनिजत्वं च बोध्यम् । एतेषां गन्धवत्त्वात्पार्थिवत्वम् । तथा च–गन्धवच्छरीरं पार्थिवशरीरमिति । न च शीतोष्णादिसत्त्वेन, जलीयत्वादिकमपि भवेदिति वाच्यम् । तेषां गौणत्वात्, बीजजन्येऽङ्कुरे पृथिव्या इव निमित्तत्वात्, अन्यथा जलत्वपृथिवीत्वादिना सांकर्यप्रसंगात् ॥

शरीरत्वं न जातिः, पृथिवीत्वादिना संकरात्, किन्त्वन्त्याऽवयवित्वे सति हिताऽहितप्राप्तिपरिहारानुकूलक्रियावत्त्वं शरीरत्वम्, अवयवेऽतिव्याप्तिवारणाय–अन्त्यावयवित्वे सतीति । वृक्षतृणौषध्यादीनां तथात्वान्नाऽव्याप्तिः । 'वृक्षादिः शरीरं, प्राणवायुमत्त्वात् । वृक्षादिः प्राणवायुमान्, भग्नक्षतादिवच्छेदेन शाखान्तरसंरोहणत्ववृद्धनजीवनरसस्रावादिमत्त्वात्' । अथ मृतशरीरादावव्याप्तिरिति चेन्न । द्रव्यसमवाय्यवृत्तिहिताऽहितप्राप्तिपरिहारानुकूलक्रियावद्वृत्तिजातिमत्त्वस्य विवक्षणात् । मनुष्यत्वकृष्णत्वादिजातिमादाय समन्वयः । अथ 'नृसिंहत्वं न जातिः, एकव्यक्तिवृत्तित्वात्, तथा च तत्र कथं शरीरत्वं स्यात् ? न च देवत्वमादाय स्यादिति वाच्यम् । तस्य तैजसवायवीयशरीरवृत्तितया सांकर्यात् इति चेत्? उच्यते–युगभेदेनोपासकभेदेन ब्रह्माण्डभेदेन च नृसिंहशरीरस्य नानात्वेन उक्तहेतोः स्वरूपाऽसिद्धत्वात्, तथा च नृसिंहत्वमादाय समन्वयः । जरायुजं योनिजं तु शरीरं कललबुद्बुदमांसपेशीकरण्डांऽगप्रत्यंगव्यूहाद्यवस्थापन्नं सवीर्यं स्वादुपिण्डरसाधारं विविधक्षारसंयुक्तं प्राणवाय्वाद्यन्वितं जीवनतत्त्वव्याप्तं षाट्कौशिकं भवति, तत्र मातृतो रोमलोहितमांसानि, पितृतः स्नाय्वस्थिमज्जानः । अण्डजे वचचिन्न्यूनतत्त्वानि, ततोऽपि स्वेदजे न्यूनतत्त्वानि, ततश्च वृक्षादौ न्यूनतत्त्वानीति ॥ ८३ ॥

**इन्द्रियं घ्राणपद्धस्ताः तद्भिन्नं भोगसाधनम् ।**
**द्व्यणुकादि महद्भूतं सर्वं तद्विषयो मतः ॥८४॥**

इन्द्रियं घ्राणाख्यं पार्थिवं बोध्यम्, तत्र मानं यथा—'घ्राणेन्द्रियं पार्थिवं, गन्धवत्त्वात् घटवत्' । ननु गन्धवत्त्वे किं मानमिति चेत् ? पृथिवीमात्रविशेषगुणाऽऽकर्षकत्वाऽन्यथाऽनुपपत्त्या पार्थिवमात्रतत्त्वसारात्मकत्वसिद्धेः । नहि स्वाऽसम्बद्धं गुणादि गृह्णाति, सार्वज्ञ्यापत्तेः । ग्रहणं च स्वसजातीयसम्बन्धात् स्वस्मिन् सजातीयविशेषगुणाद्युत्पादनम्, साजात्यं च ग्रहणविषयविशेषगुणवत्त्वादिना । तथा च आज्ञावाहकसंवेदनावाहकात्मकगोलकस्थितविलक्षणपार्थिवसारस्य नासावच्छिन्नस्य, स्वोत्पन्नगन्धस्य प्रत्यक्षजनकत्वे मायाद्वारा इन्द्रस्याऽऽत्मनः साधनत्वात् इन्द्रियत्वमपीति ॥ यद्वा—'घ्राणेन्द्रियं पार्थिवं, द्रव्यत्वे सति संयुक्तसमवायमात्रसन्निकर्षेण गन्धविषयकप्रत्यक्षजनकत्वात्, यन्नैवं तन्नैवं, यथा रसनम्' । स्वसंयुक्तसमवाये, विषयतया गन्धादौ च व्यभिचारवारणाय—द्रव्यत्वे सतीति । संयुक्तसंयुक्तसमवायादिना मनआदौ व्यभिचारवारणाय—मात्रेति । इन्द्रियत्वं न जातिः; पृथिवीत्वादिना सांकर्यात्, किन्तु इन्द्रसमवेतज्ञाननिरूपकनिर्विषयलौकिकव्यापारीयसाक्षात्प्रतियोगित्वाश्रयत्वमिन्द्रियत्वम् । परम्परया प्रतियोगिताश्रयत्वस्येन्द्रियाऽवयवे सत्त्वात् तद्वारणाय—साक्षादिति । योगजसन्निकर्षमादाय तदाश्रयत्वस्याऽऽत्मनि सत्त्वात् तद्वारणाय—लौकिकेति । परामर्शादीनाम्

अलौकिकव्यापारत्वात् व्याप्तिज्ञानादौ 'नातिप्रसंगशंकापि । घटादिविषयवृत्तिज्ञाननिरूपितविशेषणतात्मकविषयतानिरूपकप्रतियोगिताश्रयत्वस्य ज्ञाने सत्त्वात् तद्वारणाय—इन्द्रसमवेतेति । व्यापारतावच्छेदकं च विलक्षणसम्बन्धत्वं, तेन ज्ञानात्मनोः समवायस्य न व्यापारत्वम् ।। ननु घ्राणस्य स्वस्य कीदृशो गन्धः इति चेत् ? उभयविध एव, अत्यनुत्कटत्वेन तस्योत्कटगोलकगन्धेन ग्राह्यगन्धेन चाभिभवान्नाऽनुभवविषयत्वम् । तथा च गन्धवदिन्द्रियं पार्थिवेन्द्रियमिति ।। एवं विहरगम्—अग्रदेशगत्यनुकूलसंयोगो गतिर्वा, तत्करणत्वात् चरणेन्द्रियं पार्थिवम्, तच्च आनितम्वनखं वर्तते पादद्वयं तत् । एवम् आदानं ग्रहणं धारणं च, तच्च संयोगः क्रिया वा, तत्करणत्वात् पाणीन्द्रियं पार्थिवं चिपीटिकावत्, तत् आस्कन्धनखं वर्तते करद्वयं तत् । न च वायोरेव ग्राहकत्वाद् विहरणत्वाच्च द्वयोर्वायवीयत्वमेवाऽस्त्विति वाच्यम् । स्पर्शमात्रग्राहकत्वेन सिद्धाया व्यापिन्यास्त्वचो व्याप्यभूतस्य ग्राहकेन्द्रियस्य विहरणेन्द्रियस्य च काठिन्यमात्रसहायस्य शास्त्रप्रसिद्धस्य पार्थिवत्वातिरिक्तत्वाऽभावात्, अवयवमात्रेण निर्वाहोऽपि शास्त्रप्रसिद्धिबाधित एवेति । अत्र द्वयोर्गन्धवत्त्वादपि पार्थिवेन्द्रियत्वमुपपन्नम् । अत एव करचरणयोः परस्परक्रियाया विनिमयस्य क्वचिद् दर्शनान्नेन्द्रियत्वमित्यपि परास्तम्, प्राधान्यस्य प्रयोजकत्वात् ।।

पार्थिवविषयमाह—तद्भिन्नमिति । शरीरेन्द्रियभिन्नमित्यर्थः । भोगः—सुखदुःखान्यतरसाक्षात्कारः। तस्य साक्षात्परम्परया वा यद्यत् यस्याऽदृष्टाऽधीनं साधनं भवति तत्सर्वं द्व्यणुकादि महाभूतात्मकब्रह्माण्डादिर्विषयो भवति, विषयमात्रं प्रति स्वसमवायिसंयुक्त ( काल ) संयोगेनाऽदृष्टस्य, यद्वा कालिकेन विषयं प्रति कालिकेनाऽदृष्टस्य हेतुत्वात् सर्वोऽपि विषयोऽदृष्टाऽधीनोऽदृष्टेन बीजेन जायमानो भोगात्मकप्रयोजनं यथाकथञ्चित्सम्पादयत्येवेति । तथा च यद्यद् गन्धवत्तयोपभोग्यं स्यात् सः सर्वोऽपि पार्थिवविषयः । ननु वायुजलादीनामपि गन्धवत्तयोपभोगविषयत्वात् पार्थिवविषयत्वं स्यादिति चेन्न । समवायेन गन्धवद्विषयस्यैव पार्थिवविषयत्वात्, वायुजलादौ तु समवायेन गन्धाऽभावात्, पार्थिवभागानां योगात् तत्र परम्परया गन्धप्रतीतेः । न च वायोरेव गन्धो न तु पृथिव्या इति वाच्यम् । पुष्पादौ स्वीयगन्धस्य प्रतीतिसिद्धस्य समवायिकारणतायाः पृथिव्यां सिद्धेस्तद्योगाद्वायौ गन्धभानात् ।।

ननु हीरकसुवर्णादीनां गन्धाऽभावात् पार्थिवविषयत्वं न स्यादिति चेन्न । हीरकमणीनां भस्मनि गन्धाऽनुभवेन तदुपादानोपादेयानां पार्थिवविषयत्वात् । एवं—सुवर्णं पार्थिवं, गुरुत्वद्रवत्वाधिकरणत्वात्, गुरुत्वाधिकरणत्वात्, पीतिमाधिकरणत्वात्, अभास्वरपीतरूपवत्त्वात्, घृतवत् इत्यादिना सुवर्णस्य पार्थिवत्वसिद्धेः । न च रूपादेरव्याप्यवृत्तित्वादसिद्धिरिति वाच्यम् । तदधिकरणत्वस्य तदनधिकरणत्वाऽभावस्य च हेतुत्वे तात्पर्यात् । न च सुवर्णं तैजसम् , असति प्रतिबन्धकेऽत्यन्ताऽनलसंयोगेऽनुच्छिद्यमानजन्यद्रवत्वाऽधिकरणत्वादिति वाच्यम् । अनेनैव प्रलयकालीनसुवर्णे सुवर्णभस्मनि च साध्यहेत्वोर्व्यतिरेकात् भस्मोपादानोपादेयत्वसिद्ध्या सांसिद्धिकद्रवत्वाद्यनधिकरणस्य तस्य परिशेषेण वैपरीत्येन पृथिवीत्वसिद्धेः । मृदुमध्याऽतिमात्रपाकभेदेन वस्त्रपाषाणस्वर्णरेडियमप्लेटिनमप्रभृतीनां कठिनकठिनतरकठिनतमसंयोगाक्रान्तवस्तूनां समबलविरोधिविलक्षणतेजस्संयोगेनैव द्रवत्वजननात् मणिस्वर्णरेडियमप्लेटिनमप्रभृतिषु विरोध्योषधिसमवहितस्य प्रलयकालीनस्य चाऽत्यन्ताऽग्निसंयोगादेर्द्रवत्वोत्पादकत्वेन नाशकत्वेन च पार्थिवत्वसिद्धौ बाधकाऽभावात् । किञ्च ओषधाद्यनवहितस्य पार्थिवपराभूतस्याऽनुष्णतैजसभागस्य किञ्चिन्मात्रस्याऽपि द्रवत्वोच्छेदं प्रति प्रतिबन्धकत्वादेव च चिरमवस्थानात्, तत्रापि क्वचित् द्रुतं द्रुततरं द्रुततमं सुवर्णमिति प्रत्यक्षात् पूर्वद्रवत्वनाशस्य द्रवत्वान्तरस्य च यावदग्निसंयोगस्तावदनुवर्तमानत्वात् अनुच्छिद्यमानद्रवत्वाधिकरणत्वात्मकहेतोः स्वरूपाऽसिद्धत्वात् । विजातीयद्रवत्वं प्रत्येव वाऽग्निसंयोगस्य हेतुत्वेन सुवर्णादिद्रवत्वे न तादृशवैजात्यमिति द्रवत्वाऽनाशेऽपि न तैजसत्वम् । पीतिमगुरुत्वाश्रयबहुलभागजन्यतया सुवर्णस्य पार्थिवत्वं न्याय्यम्, अन्यथा बहुलपृथिवीभागजन्यमानुषशरीरस्यापि जलीयत्वमापद्येत ।।

न चाऽग्नेरपत्यं हिरण्यमितिश्रुतिरेव तत्र मानमिति वाच्यम् । पुत्रादावपत्यपदशक्तेः प्रसिद्धिं विहायाऽनपत्येऽपि निर्जीवेऽपत्यप्रयोगस्य श्रुत्यैव शिक्षितत्वेन विजातीयेऽपि गन्धादौ पाककार्यत्ववत् अनपत्येऽपि पार्थिवे सुवर्णादौ वह्निकार्यत्वोपपत्तेः श्रुतेः समवायिकारणत्वपरायणत्वे नियुक्तत्वात् 'आयुर्वै घृतम्' 'अग्निर्भेषजम्' इतिवत् लाक्षणिकत्वे बाधकाऽभावात् । मुख्यार्थत्वे तु 'अग्निः सुवर्णमि' त्येव वोच्येत ।। नच 'योऽयमन्तरादित्ये पुरुषो हिरण्यश्मश्रुः हिरणकेशः आप्रणखात् सर्व एव सुवर्ण' इति श्रुत्या तैजसशरीराणां सुवर्णमयत्वकथनात् अत्रापि सुवर्णस्य तैजसत्वे नाऽयुक्तत्वमिति वाच्यम् । पार्थिवभागस्यैवोपष्टम्भकतावत्त्वात् तत्र तैजसप्राधान्येपि पार्थिवभागेन भोगार्हतायाः स्वीकारात्, एवं जलीयवायवीयशरीराणामपि पार्थिवभागोपष्टम्भादुपभोगक्षमत्वं बोध्यम् ।। एवं घृततैलदुग्धेक्षुरसलवणक्षारशर्करामधुशुक्रश्लेष्माऽऽस्तरदानमद्याम्ररसादयोऽपि पार्थिवविषया बोध्याः ।। ८४ ।।

**स्नेहोपादानमम्बु स्यात् सांसिद्धिकद्रवत्ववत् ।**
**मधुररसवच्छीतस्पर्शवच्छुक्लरूपवत् ॥८५॥**

जलं निरूपयति—स्नेहोपादानमिति । स्नेहसमवायिकारणं जलं भवतीत्यर्थः । चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहो द्विविधो नित्योऽनित्यश्च, नित्यस्नेहो जलपरमाणुषु, अनित्यस्नेहो जलीयद्व्यणुकादौ बोध्यः । 'अनित्यस्नेहसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्' इत्यनेनाऽनित्यजलवृत्तिजलत्वजातिः सिद्धयति । तर्हि परमाणुषु कथं तत्सिद्धिरिति चेन्न । जन्यजलसमवायिकारणता, किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादित्यनेन तत्सिद्धेः । यद्वा—'जलारम्भकः परमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान्, परमाणुत्वात्, पार्थिवपरमाणुवदि'त्यनेन तत्सिद्धेः ।।

समवायेन स्नेहवत्त्वं जलस्य लक्षणम्, उत्पत्तिकालीने उत्पन्नविनष्टे चाऽव्याप्तिवारणाय घृतादावतिव्याप्तिवारणाय च स्नेहसमानाधिकरणस्नेहाऽसमानाधिकरणगुणाऽसमानाधिकरणजात्यधिकरणत्वं लक्षणं बोध्यम् । घृतमध्वादिपृथिव्यां परम्परया जलस्यैव स्नेहः ।। ननु पृथिव्यां सर्वत्र स्नेहस्वीकार आवश्यकः, अन्यथा जगतः पिण्डीभावाऽभावे प्रलय आपद्येतेति चेन्न । नहि केवलस्नेहस्य पिण्डीभावहेतुत्वम्, क्रियाजन्याऽवयवकठिनसंयोगस्य पाषाणादौ, नैमित्तिकद्रवद्रवत्वस्य सुवर्णादौ, कोमलसंयोगस्य वस्त्रादौ, जलीयस्नेहस्य वृक्षादौ, आकर्षणशक्तेर्ब्रह्माण्डादौ, जलादिगतद्रवत्वस्य च चूर्णादौ, साक्षात्परम्परया वा हेतुत्वेन तत्र तत्र पिण्डीभावोपपत्तेः ।। सांसिद्धिकेति । स्वभावसिद्धं यद् द्रवत्वं तत्समवायित्वमपि जलस्य लक्षणम् । सांसिद्धिकद्रवत्वं नित्यजले नित्यमनित्यजले त्वनित्यम् । ननूत्पन्नविनष्टादावव्याप्तिः, किञ्च—प्रवाहस्य द्रवत्ववत्त्वाऽन्यथाऽनुपपत्तेः तेजसि वायौ चापि विलक्षणसांसिद्धिकद्रवत्ववत्त्वांगीकारात् तत्राऽतिव्याप्तिरिति चेन्न । पिष्टादिपिण्डीभावाऽसाधारणकारणसांसिद्धिकद्रवत्वसमानाधिकरणतादृशद्रवत्वाऽसमानाधिकरणगुणाऽसमानाधिकरणजातिमत्त्वमिति विवक्षणात् । पिष्टादिपिण्डीभावहेतुद्रवत्वस्य जले एव सत्त्वात् तेजोवाय्वोर्द्रवत्वस्य तद्विलक्षणत्वाद् वारणम् ।।

मधुररसवदिति । जले मधुर एव रसः, समवायेन तद्वत्त्वं लक्षणम् । नित्यजले नित्योऽनित्यजले त्वनित्यः । ननूत्पत्तिकालीने उत्पन्नविनष्टे चाऽव्याप्तिः एवं शर्करादिपृथिव्यामतिव्याप्तिरिति चेन्न । मधुररसेतररसाऽसमानाधिकरणमधुररससमानाधिकरणजातिमत्त्वस्य विवक्षणात् ।। ननु सलिले मधुर एव रस इति कथम् ? रसमात्रस्यैव तत्राऽनुपलम्भात् । न चेक्षुरसे नारिकेलजले च माधुर्योपलब्धिर्भवत्येवेति वाच्यम् । तस्याः फलदण्डादिपार्थिवोपाध्याहितमाधुर्यविषयकत्वात् । अन्यथा लवणोदधौ लवणरसोपलम्भात् जम्बीररसादावम्ब्लरसोपलम्भात् करवीररसादौ तिक्तरसोपलम्भाच्च लवणादिमत्त्वमप्यापद्येतेति चेन्न । किञ्चिदुद्भूतमाधुर्यस्य जले समुत्कटतृषितानां सर्वेषामनुभवात् । हरीतक्यामलकचर्वणानुकूलव्यापारविशिष्टजिह्वावर्तिरसनाया जलस्य उत्कटमधुररसग्राहकत्वात् । न च कर्कटीभक्षणोत्तरं जलपाने कटु(तिक्त)रसानुभवात् कटुरसोऽपि स्यादिति वाच्यम् । तत्र तु कर्कट्यामेव

नालावच्छिन्नभागे कटुत्वानुभवाज्जले तदौपाधिकत्वात्, कर्कटीभक्षणेन पित्तक्षोभे वा कटुत्वोपलम्भ इति वैद्यकप्रसिद्धेश्च। न च हरीतक्यादिमाधुर्यमेव जलोष्मसंयोगाज्जायते इति वाच्यम्। तत्राऽन्येषां षड्विधरसानामप्यभिव्यक्तिप्रसंगात्। तत्राऽव्याप्यवृत्तिरससत्त्वात्। विविधकार्यकारणभावकल्पनागौरवापत्तेश्च। तथा च हरीतक्यामलकजम्बीरकरवीररसास्त्वाश्रयपृथिव्युपाधिजन्याः पार्थिवा एव, पृथिवीत्वस्य सप्तविधरसजनकतावच्छेदकत्वात् ॥

ननु सप्तमश्चित्ररसः कथम्?, विभिन्नरसवदवयवाऽऽरब्धस्याऽवयविनो नीरसत्वे क्षत्यभावात्, रसस्य द्रव्यप्रत्यक्षेऽप्रयोजकत्वात्, अवयवरसानामेव तत्र भानादिति चेन्न। विभिन्नरसवद्विभिन्नाऽवयवाऽऽरब्धे भक्ष्यभोज्यादिरूपे पक्वान्ने प्रत्येकाऽवयवरसेभ्यो विलक्षणरसस्य सर्वानुभवविषयत्वात् तत्तदवयवरसस्य च प्रागुवदनुभवाऽभावाच्च प्रतीतिसिद्धस्य लाघवादिनाऽपह्नोतुमशक्यत्वात्। अन्यथाऽऽम्रादीनां पक्वान्नानां चित्रपेयाणां चाऽवयविनां रसप्रत्यक्षानुपपत्तेस्तेषां सम्पादने संस्करणे भोजने च प्रवृत्तिरेव न स्यात्, अवयवरसेनैव तृप्तेर्निर्वाहादिति ॥

शीतस्पर्शवदिति। समवायेन शीतस्पर्शवत्त्वं जलस्य लक्षणम्। शीतस्पर्शो द्विविधः—नित्योऽनित्यश्च, नित्यः परमाणुषु, अनित्योऽवयविजले द्वयणुकादौ। न चोत्पत्तिकालीने उत्पन्नविनष्टे च जलेऽव्याप्तिरिति वाच्यम्। शीतस्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षणात्। 'शिलातलं शीतलमि'त्यादौ परम्परया जलस्पर्शभानान्नातिव्याप्तिः। चन्दनादीनां घर्षकजलयोगे सति जले शैत्याभिव्यञ्जकत्वेन जलशैत्यस्य चन्दने उपचारात् समवायेन तदभावान्नातिव्याप्तिरिति। ननूष्णोदकादावौष्ण्यस्य क्वचिदनुष्णाशीतस्यापि चानुभवात्तत्र तत्र शीतस्पर्शवत्त्वमनुपपन्नमिति चेन्न। तत्राऽऽतपादियोगेन तदीयस्पर्शस्य भानात् शैत्यस्याऽभिभवादग्रहः; आर्द्रवायोरपि शीतस्पर्शवत्त्वमौपाधिकम्, वायुसंयुक्तजलस्य स्वस्पर्शे समुत्कटशैत्याभिव्यञ्जकत्वमनुभवात् सिद्धम् ॥

शुक्लरूपवदिति। विलक्षणं यद् अभास्वरं शुक्लं रूपं समवायेन तद्वत्त्वं जलस्य लक्षणम्। एतद्रूपं नित्यजले नित्यमनित्यजलेऽनित्यम्। न चोत्पन्नविनष्टजलादवव्याप्तिः पृथिव्यां चातिव्याप्तिरिति वाच्यम्। अभास्वरशुक्लेतररूपाऽसमानाधिकरणरूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षणात् ॥ ननु मेघे कृष्णसमुद्रे नीलरूपदर्शनाद् रक्तसमुद्रे यमुनादौ च रक्तादिरूपदर्शनात् नीलरूपवत्त्वं रक्तादिरूपवत्त्वमपि च जलस्य स्यादेवेति चेन्न। तत्राऽऽश्रयरूपस्य परम्परया भानात्। कृष्णादिरूपसमवायिकारणतायाः पृथिव्यामेव सत्त्वात् जले नीलादिरूपाऽभावात्। अत एवैकमेव जलं स्वाऽऽधाररूपेण भासते, तदेव च व्रियति विक्षिप्तं तु श्वेतमेवेति। ननु स्वगतरूपप्रत्यक्षाऽभावे रूपिणः प्रत्यक्षं न स्यादिति चेन्न। तत्र सांसिद्धिकद्रवत्वतरंगलहरीप्रवाहादिविशेषणज्ञानेन प्रसिद्धबहुपरिचितलिङ्गेन जलाऽनुमितेः सर्वव्यवहारात्। यद्वा—प्रत्यक्षे परम्परयाऽपि रूपस्य कारणत्वात् पार्थिवरूपेण तत्र स्वाश्रयसंयुक्तत्वसम्बन्धेन कृष्णं जलमित्यादि प्रत्यक्षग्रहसंभवात् ॥ इन्द्रधनुरादौ सूर्यकिरणैर्मेघान्वितपार्थिवभागेषु विविधरूपोपपत्तेस्तथा दर्शनात् ॥८५॥

**द्वेधा नित्यमनित्यं सावयवि त्रिविधं मतम्।**
**शरीरेन्द्रियविषयभेदाद् देहमयोनिजम् ॥ ८६ ॥**

द्वेधेति। तज्जलं नित्याऽनित्यभेदेन द्विविधम्, नित्यं परमाणुरूपम्, अनित्यं द्वयणुकादि कार्यरूपम्, तच्च सावयवि-अवयवसमवेतं भवति। तच्च शरीरेन्द्रियविषयभेदेन त्रिविधं भवति, तत्र देहमाह—देहमिति। जलीयं शरीरम् अयोनिजं-शुक्रशोणितमेलनजन्यभिन्नशरीरम्। 'जलपरमाणवः पारम्पर्येण शरीराऽऽरम्भकाः, इन्द्रियाऽऽरम्भकत्वात्, पार्थिवपरमाणुवत्'। जलमात्रे करपादाद्यसंभवेऽपि पार्थिवभागानां निमित्तत्वात् करपादादिमत्त्वं भवति जलभागस्य मुख्यत्वाज्जलीयत्वमिति ॥ ८६ ॥

**सूक्ष्मदर्शकयन्त्रेण दृश्यं वारुणमम्बुषु।**
**इन्द्रियं रसनं प्रोक्तं रसप्रत्यक्षकारणम् ॥८७॥**

सूक्ष्मेति। सरित्समुद्राद्यम्बुषु वारुणम्—वरुण-

देवताकजलजन्यं देहजातम् सूक्ष्मदर्शकयन्त्रेण दृश्य-दृग्विषयं भवति, जलवत्कोमलस्निग्धकोमलशरीराः प्रतिक्षणं ह्रस्वदीर्घभावमापद्यमानाः कीटादयस्तत्र दृश्यन्ते, तद्वज्जलदेवा अपि जलीयशरीरप्रधाना बोध्याः। मत्स्यादयस्तु पार्थिवा न तु जलीयाः, जलान्तर्भागे एवोत्पन्नत्वात् तज्जीवने जलं त्वसाधारण-सहकारि मनुष्यजीवने श्वास इवेति। ननु स्वेदस्य जलत्वेन तज्जन्यानां कीटादीनां जलीयत्वं युक्तमिति चेन्न। स्वेदसहकृतमलिनपृथिवीजन्यत्वात् तेषां पार्थिवत्वमेव, स्वेदजत्वव्यवहारस्तु शङ्खे जलजत्वव्यवहारवत्। स्नेहवच्छरीरं जलीयशरीर-मिति लक्षणम्॥ इन्द्रियमिति। जलीयमिन्द्रियं रसनाख्यं बोध्यम्। रसनसिद्धिस्तु 'रसोपलब्धिः करणसाध्या, अपरोक्षप्रतीतित्वात्, रूपोपलब्धिवत्' इति बोध्या। यावति जिह्वापिण्डे वर्तमानं विलक्षण-जलसारात्मकं स्वसम्बद्धविषयरसजातीयस्वोत्पन्न-रसविषयकप्रत्यक्षजनकमिन्द्रियं रसनं भवति, 'रसनं जलीयम्, स्नेहमधुरोभयवत्त्वात्, स्नेह-वत्त्वाद्वा'। यद्वा—'रसनं जलीयं, द्रव्यत्वे सति संयुक्तसमवायमात्रसन्निकर्षेण मधुरमात्ररसविषयक-प्रत्यक्षजनकत्वात्, यन्नैवं तन्नैवं यथा चक्षुरिति'। रसनाया रसाऽऽश्रयग्रहणेऽसामर्थ्यम्, अत एव पाने रसनया प्रागदृष्टपीतजलदुग्धतक्रफलरसादिगतरस-सजातीयरसप्रत्यक्षे सति वार्तमानिकजलदुग्धाद्यनु-मितिर्भवतीति॥ ८७॥

**हिमोपलनिहाराऽम्बुमृत्तैलमृगतृष्णिका— ।**
**स्वेदास्तु विषयाः स्निग्धाः संस्कृता दहनाऽनुगाः॥**

विषयमाह—हिमोपलेत्यादि। हिमोपलाः—तुषारशिलाः, करकाश्च। निहारः—मेघाऽभ्रबाष्प-तुषाररश्मिहिकादिः। अम्बु सरित्समुद्रादिः। मृत्तैलम्—विलक्षणमृदन्वितपृथिवीकूपजन्यं क्रोकेशसपर्वतब्रह्म-देशभूम्यादौ प्रसिद्धं यन्त्रशकटीविमानादिषु तत्तेन्धन-तयोपयुज्यमानं प्रदीपादितैलं घट्टं वा सर्वं जलीय-विषयः। मृगतृष्णिका—मृगादीनां तृष्णोत्पादकं मरुभूमिस्थरविकिरणाऽऽकृष्यमाणम् अस्थूलजलं दर्शनमात्रात्सुखदम् अप्राप्तौ तु दुःखदमिति। स्वेदः-क्लेदमूत्ररक्तजलानि। त एते षड्विधा जलविषयाः, जलीयशरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनत्वा-दिति॥

ननु तुषारकरकाणां काठिन्यात् पार्थिवत्वमेवा-ऽस्त्विति चेन्न। तत्र साक्षात् काठिन्याऽभावात्, तत्र श्वेतपृथिवीद्व्यणुकादिसम्बन्धात्परम्परया पार्थिव-काठिन्यप्रत्ययात्। अनुष्णाशीतस्पर्शस्योपाधित्वाच्च। यद्व्यावृत्त्या पक्षे साध्यसाधनसम्बन्धव्यावृत्तिः स उपाधिरित्युपाधिलक्षणात् साध्यव्यापकमात्रस्यो-पाधित्वाच्च। ननु सांसिद्धिकद्रवत्वाभावादेव जलान्यद् द्रव्यं भवेदिति चेन्न। उष्मणा ध्वस्तानां तेषां सांसिद्धिकद्रवत्वयुक्तजलतया प्रत्यक्षसिद्धत्वात् जलोपादानोपादेयानां तेषां जलत्वसिद्धेः। न च तेषु सांसिद्धिकद्रवत्वाऽभावोऽप्यस्ति, सांसिद्धिकद्रवत्व-स्यैव सत्त्वात्, मृदुपाषाणाऽऽकृष्टजलस्येव तेषु पार्थिव-भागाऽवष्टब्धजलस्य तदग्रहात्। भूगोलस्य ध्रुवद्वय-भागयोः सर्वदा हिमवत्तया तत्र सांसिद्धिकद्रवत्व-समानाधिकरणसमप्रमाणशैत्याधिकशैत्योद्भाव्यजली-यविलक्षणशक्तिभिः, तत्तत्प्रदेशीयजीवनाऽदृष्ट-विशेषैः, तत्तत्प्रदेशाऽनुकूलाऽपेक्षिततथाविधेश्व-रेच्छाया वा मणिमन्त्रादिन्यायेन स्वातन्त्र्येण सां-सिद्धिकद्रवत्वप्रतिबन्धकत्वात्, शून्याद्यधोऽशाभिमुख-शैत्यान्वितजलस्यैव वा सांसिद्धिकद्रवत्वाऽकारण-त्वोपगमात् तत्र द्रवत्वाऽनुपलम्भात्, तदानीं जले रूक्षताया वा सांसिद्धिकद्रवत्वप्रतिबन्धिकाया उत्पत्ते-स्ततस्तन्नाशेन तदग्रहाच्च। ननु उष्मणा द्रवितानां करकादीनां घृतादिवन्नैमित्तिकद्रवत्वमेव वक्तव्यम्, न च वह्निना सांसिद्धिकद्रवत्वसहितजलनाशे इव उष्मणा करकादिनाशे सत्येव जलात्मकाऽवयव्यन्त-रोत्पत्तेस्तत्र सांसिद्धिकत्वाऽव्याहतिरिति वाच्यम्। घृतादीनामपि वह्निना पिण्डावयवसंयोगानां नाशोत्तरमेव द्रवितानामुत्पत्तेस्तत्रापि सांसिद्धिकत्वे किमपराद्धमिति चेन्न। तद्ध्वंसजन्यतत्पदार्थस्य तदु-पादानोपादेयत्वव्याप्तेः, द्रवीभूतपृथिव्युपादानोपादेये द्रवत्वाऽनुपलम्भस्य द्रवीभूतजलोपादानोपादेये च द्रवत्वोपलम्भस्य प्रायशः सर्वानुभवसिद्धतया सिद्धाया विलक्षणसांसिद्धिकद्रवत्वजनकतावच्छेदिकाया जल-त्वजातेर्जले सर्वत्र सत्त्वेन नैमित्तिकद्रवत्वजनकताऽ-

वच्छेदिकायाश्च पृथिवीत्वजातेः पृथिव्यां सत्त्वेन नैमित्तिकस्य पृथिव्यामेव विलक्षणसांसिद्धिकस्य जले एव च स्वीकारात् विवादस्थलेऽपि तदादायैव निर्वाहात् ॥ ननु यावन्ति तैलानि पार्थिवानि, तथा च मृत्तैलादीनामपि पार्थिवत्वं स्यादिति चेन्न। वनस्पतिजन्यतैलानां पार्थिवभागाधिक्यात् पार्थिवत्वम्, कूपादिजन्यतैलानां तु जलीयभागाऽऽधिक्यात् जलीयत्वम्, जलस्य वह्निविरोधित्वेऽपि स्नेहसारप्रकृष्टजलस्य तदविरोधित्वेन दाहानुकूलेन्धनत्वं युक्तम् । तदेवाऽऽह—स्निग्धा इति । स्नेहप्रधाना अथ च संस्कारादिकरणेन प्रतिबन्धकभावरहिताः सर्वेऽपि तैलादयो दहनाऽनुकूला बोध्या इत्यर्थः ।८८।

**उष्णस्पर्शसमवायि भाश्वरश्वेतरूपवत् ।**
**सांसिद्धिकद्रवं तेजोऽनित्यं नित्यं पुनस्त्रिधा ॥८९॥**

तेजो निरूपयति—उष्णेति । तेजः उष्णस्पर्शसमवायिकारणं भवति, समवायेन उष्णस्पर्शवत्त्वं तल्लक्षणम् । उत्पन्नविनष्टादौ तेजसि अव्याप्तिवारणाय-उष्णस्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वक्तव्यम् । मण्यादिकिरणादौ पार्थिवस्पर्शेनाऽभिभवात् चन्द्रतारकादौ तद्गतजलीयशीतस्पर्शेनाऽभिभवात् शरीरादिप्रतिबिम्बग्राहकविद्युदादिकिरणादौ तदभिभावकयन्त्रादिनाऽभिभवात् चक्षुरादौ क्वचिदुष्मादावनुद्भूतत्वाच्चाऽग्रहः। उद्भूतत्वं तु-'यद्यत्र प्रत्यक्षप्रयोजकसन्निकर्षवत्ता स्यात् तर्हि उपलभ्येते'त्याकारकाऽऽपादनविषयतात्मकयोग्यतारूपं बोध्यम् । तच्च यत्र न स्यात् तस्य न प्रत्यक्षमिति ॥ स च द्वेधा नित्योऽनित्यश्च, तत्र नित्यः परमाणुरूपतेजसि, अनित्यस्तु द्व्यणुकादितेजसि, त्रसरेण्वादौ स स्पर्शः प्रत्यक्षसिद्धः । तादृशाऽनित्योष्णस्पर्शसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादित्यनेन जन्यतेजस्त्वसिद्धौ 'जन्यतेजस्त्वावच्छिन्नकार्यत्वावच्छिन्नकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वादि'त्यनेन परमाणुगततेजस्त्वसिद्धिः । यद्वा—'तेजपरमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमान्, द्रव्यसमवायिकारणत्वात्, द्रव्याऽसमवायिकारणसंयोगाधारत्वाद्वा, तन्तुवत्, पार्थिवपरमाणुवद्वा'इत्यनेन परमाणौ तेजस्त्वसिद्धिः ॥

भास्वरेति—समवायेन भास्वरशुक्लरूपवत्त्वं तेजसो लक्षणम् । उत्पन्नविनष्टादावव्याप्तिवारणाय भास्वररूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षणीयम् । ननु वह्नेररुणकपिलादिरूपोपलब्धेः शुक्लमेव रूपं तेजसीत्यसिद्धमिति चेन्न। 'वह्निः शुक्लरूपवत्, तेजस्त्वात्' इत्यनेन तद्वत्तानुमितेः । किन्तु तत्र वैश्वानरे मरकतकिरणादौ च पार्थिवरूपेणाऽभिभवाच्छ्वेतरूपाऽप्रत्यक्षम्, आरुण्योपलम्भश्च दाह्याद्याश्रयोपाधिसामर्थ्यात् । जात्यादाविव परम्परया रूपवत्त्वेन प्रत्यक्षे त्वविरोधात् । यद्वा—रक्तत्वादिना शुक्लत्वस्याऽभिभवेन शुक्लत्वाऽग्रहो बोध्यः । एवमन्यदप्यूह्यम् । अथ तेजो हि किञ्चिदुद्भूतरूपस्पर्शं यथा सौरवह्न्यादि, किञ्चिदनुद्भूतोभयं यथा यन्त्रपरिशोधितविद्युत्किरणमानुषनेत्रादि, किञ्चिदनुद्भूतरूपमात्रं यथा उष्मा भर्जनपात्रस्थवह्नितेजावतैलगताऽग्निप्रभृति, किञ्चिदनुद्भूतस्पर्शमात्रं यथा प्रभाचन्द्रकिरण-व्याघ्रविडालचक्षुश्चन्द्रकान्तसन्निहितवह्निरित्यादि, इति तत्र तत्र तेजस्त्वेन तत्तदनुमेयम् । तन्नित्ये नित्यमनित्येऽनित्यमिति ॥

सांसिद्धिकेति । ऊर्ध्वप्रवाहयन्त्राऽधीनप्रवाहसम्पादकसांसिद्धिकद्रवविशेषः सर्वत्राग्नौ वर्तते, अन्यथा कठिनः सन् ज्वालात्मको न प्रसरेत् न वर्धेत न व्याप्नुयाच्च, प्रसरति वर्धते व्याप्नोति च ज्वालया यन्त्रकलप्रक्षिप्तजलधारावत् अग्निवर्षियन्त्रैः, सर्वासु ज्वालासु जलतरङ्गा इव दृश्यन्ते तरङ्गास्तत्कारणं सांसिद्धिकद्रव एव, जलोत्पन्नाया धातूत्पन्नायाश्च विद्युतस्ताम्रतारादिद्वारा गतिमत्त्वं हि तद्गतसांसिद्धिकद्रवप्रयोज्यमेव, मेघजन्याया विद्युतः सलिले रेखाविलासोऽपि तद्गतद्रवप्रयोज्य एव, जलस्य पार्थिवमृच्छकले इव तेजसः काचलोहपिण्डादौ व्यापनं तद्गतद्रवप्रयोज्यमेव, न तु सूक्ष्मत्वात् तद्व्यापनम्, अप्रत्यक्षत्वापत्तेः । ननु नैमित्तिकं द्रवत्वमपि ज्वालामुखपर्वतादौ क्वचित् खनिजे लावाख्ये वह्निरसे भवतीति तदप्यभ्युपेयमिति चेन्न । तत्रापि सांसिद्धिकं तत् खनिजतेजस्येव नैमित्तिकन्तु पार्थिवे भागे इति

मन्तव्यम् । तथा सर्वत्र नूतनपरिशोधिते बोध्यम् । तेजसि सर्वथा नैमित्तिकद्रवत्वाऽनभ्युपगमात् ॥ तथा च समवायेन तादृशविलक्षणद्रवत्ववत्त्वमपि लक्षणम् । तच्च नित्ये परमाणुरूपे तेजसि नित्यम्, अनित्ये त्वनित्यमिति ॥ तेजसो द्वैविध्यमाह—अनित्यं नित्यमिति । परमाणुरूपं तेजो नित्यम्, द्व्यणुकादि सर्वमनित्यमवयवसमवेतञ्च । तच्चाऽनित्यं तेजस्त्रिविधम् ॥ ८९ ॥

**देहेन्द्रियविषयाख्यं, देहन्त्वयोनिजं स्वरि ।**
**रूपादिग्राहकं चक्षुरिन्द्रियं विषयस्त्विदम् ॥९०॥**

तत्त्रैविध्यमाह—देहेन्द्रियेति । देहम् इन्द्रियं विषयश्चेति त्रिधा । तत्र देहमाह—अयोनिजमिति । योनिः—स्त्रीगर्भः तदजन्यं, नापि स्वेदजं, नापि उद्भिज्जं, किन्तु पुण्यविशेषसहकृतसंकल्पमात्रजन्यं तेजःप्रचुरं पार्थिवाद्युपष्टब्धं देवशरीरम् । स्वरि—स्वर्गे तैजसलोके, सूर्यचन्द्रनक्षत्रतारकादीनां प्रसिद्धं भास्वररूपवच्छरीरं तैजसमिति ॥ इन्द्रियमाह—रूपादीति । रूपस्य रूपत्वस्य तदभावस्य च प्रत्यक्षजनकमिन्द्रियं चक्षुस्तैजसमित्यर्थः । 'रूपप्रत्यक्षम् करणसाध्यम्, क्रियात्वात्, छिदिक्रियावत्' इत्यनेन चक्षुःसिद्धिः । ततः 'चक्षुः तैजसम्, परकीयरूपस्यैवाऽभिव्यञ्जकद्रव्यत्वात्, आलोकवदि'त्यनेन तत्र तैजसत्वसिद्धिः । उद्भूताऽनुद्भूताऽन्यतरभास्वररूपवदिन्द्रियं कृष्णताराऽन्तस्तैजसेन्द्रियम् । तेजसो वेगातिशयः क्षणान्तरेऽशीतिसहस्रक्रोशाधिकगतिसम्पादको भवति, अत एवाऽधिष्ठानाऽसम्बद्धार्थग्राहिण्याः प्रदीपादिप्रभायाः साहाय्येन चक्षुषः स्वप्राप्यग्राहित्वम्, तत्र वस्त्वन्वितकिरणानि वस्तुप्रतिमासहितानि प्रत्यावृत्त्य नेत्रे बाह्यपटीयकृष्णमण्डलमासाद्य केन्द्रितानि भूत्वाऽन्तःप्रविश्य तत्रत्यरसद्वारा वक्रीभूय तारकामासाद्य तदन्तर्दृक्पटोपरि व्युत्क्रान्तप्रतिमां संक्रामयन्ति, ता च समुत्क्रान्तां सन्मुखं चाक्षुषज्ञानतन्तवो मस्तिष्कं प्रापयन्ति, तद्विषयकं मनोमायायोगादात्मनि प्रत्यक्षं भवतीति । येषां तु दृक्काचो ह्रस्वो दीर्घलम्बो वा तेषां किरणानि प्रतिमां दृक्पटे न पातयन्ति, अतो बाह्यगोलोपनेत्राणि चाऽपेक्षन्ते, इत्येवं गोलकव्याप्तं नेत्रेन्द्रियं स्वाऽऽगतामेव प्रतिमां गृह्णातीति बोध्यम् ॥ ९० ॥

**दिव्यं भौमं जाठरं भूगर्भगं च चतुर्विधम् ।**

विषयं विभजते—दिव्यमिति । अबिन्धनं विशेषस्वच्छं विद्युदादि सूर्यगोलकादि च समुद्रस्थवडवानलोऽशनिश्चेति दिव्यं तेजः, भौमाऽपेक्षया स्वच्छत्वात् । भूमौ भवो वैश्वानरादिः काष्ठेन्धनकोऽग्निः खद्योतौषधिमण्यादीनां च तेजो भौमं तेजः । जठरे पाचनकरो जाठराग्निर्जाठरं तेजः । भुवो गर्भे वर्तमानं तप्तत्वात्मकं ज्वालामुखविदारणभूकम्पादिकरं तेजः । तदेतत्सर्वं शरीरेन्द्रियभिन्नमुपभोगसाधनं तैजसविषयः ॥

**अपाकजाऽनुष्णाशीतस्पर्शहेतुः समीरणः ॥९१॥**

वायुं निरूपयति—अपाकजेति । समवायेनाऽपाकजाऽनुष्णाशीतस्पर्शवत्त्वं पवनस्य लक्षणम्, वायुर्हि एतादृशविलक्षणस्पर्शस्य समवायिकारणं भवति । स च स्पर्शो द्वेधा नित्योऽनित्यश्च । नित्यो वायुपरमाणुषु, अनित्यो द्व्यणुकादिषु । 'तादृशाऽनित्याऽपाकजाऽनुष्णाशीतस्पर्शसमवायिकारणता, किञ्चिद्धर्माऽवच्छिन्ना, कारणतात्वात्' इत्यनेनाऽनित्यवायुत्वं प्रसाध्य, 'अनित्यवायुसमवायिकारणता किञ्चिद्धर्माऽवच्छिन्ना, कारणतात्वादि'-त्यनेन नित्यवायुसाधारणवायुत्वजातिसिद्धिः । न चोत्पन्नविनष्टवायावव्याप्तिः, पटादावतिव्याप्तिश्चेति वाच्यम् । अपाकजाऽनुष्णाशीतस्पर्शसमानाधिकरणाऽपाकजाऽनुष्णाशीतस्पर्शाऽसमानाधिकरणगुणाऽसमानाधिकरणजातिमत्त्वमिति विवक्षणात् । एवं रूपाऽसमानाधिकरण-स्पर्शसमानाधिकरणजातिमत्त्वमित्यादीनि वायुलक्षणानि । वाय्वयवेषु तेजःसंयोगसत्त्वेऽपि तदधीनगुणाऽनुत्पत्तेस्तत्स्पर्शादिकमपाकजमिति । उष्णो वायुः शीतो वायुरिति प्रतीतिस्तु तेजोजलयोगादौपाधिकी बोध्या ॥ ९१ ॥

**त्वचाऽध्यक्षः स्पर्शयोगादन्यत्र धृतिकम्पतः ।**
**शब्दाद्याऽनुमितश्चापि सांसिद्धिकद्रवत्ववान् ॥**

त्वचेति । वायुस्त्वगिन्द्रियेण प्रत्यक्षस्पर्शवत्त्वात्

प्रत्यक्षो भवति, स्पार्शनप्रत्यक्षे समवायादिना उद्भूतस्पर्शस्य कारणत्वात् । न च उद्भूतरूपवत्त्वमुपाधिः, आत्मनि रूपे च साध्याऽव्यापकत्वात्, 'वायुं स्पृशामी'तिसार्वलौकिकप्रत्यक्षे निरुक्तसाध्यसाधनसम्बन्धाऽव्यावर्तकत्वाच्च । त्वग्व्यापारोत्तरं 'वायुर्वाति, सुस्पर्शः पवनः' इत्यादिसार्वलौकिकप्रतीत्यन्यथाऽनुपपत्त्या द्रव्यस्पार्शने स्पर्शस्यैव कारणत्वम् । त्रुटेरपि प्रत्यक्षमेव, त्वचस्त्रुटिरूपाया महत्या वा स्ववृत्तिस्पर्शग्राहकत्वस्यैव तत्राऽनुगमकत्वात्, अत एव त्रुटेरस्पार्शनत्वे तु प्रकृष्टपरिमाणवत्त्वमपि प्रयोजकमुक्तं दीधितिकृतेति । नन्वाकाशादिप्रत्यक्षवारणाय सामान्यतो बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपं कारणं वक्तव्यं, तथा च वायोस्तदभावादेव न प्रत्यक्षमिति चेन्न । 'कर्णेन गगनं प्रत्यक्षीकरोमी'ति सर्वथा प्रतीत्यभावादेव तादृशनियमस्य बाधितत्वात्, रूपरहितस्याऽपि गगनस्य 'अवकाशं पश्यामी'तिप्रतीतेः प्रत्यक्षाऽङ्गीकारात् । परम्परयाऽन्यदीयरूपेण धर्मिणो ग्रहसंभवात्, प्रभादिरूपस्य तत्र परम्परया सत्त्वात्, अन्यथाऽवकाशमालोक्य गतिमतां गतिमात्रनिरोधापत्तेः । न नु भित्त्यादिप्रतिबन्धकाऽभावज्ञानस्यैव गतिप्रयोजकत्वं युक्तमिति चेन्न । अनन्ताऽभावकूटकल्पने गौरवात्, अभावाऽज्ञानकालेऽपि गतिदर्शनात् । अवकाशमालम्ब्यैव स्थावरजङ्गमानां गतिमत्त्वात् । स्पर्शस्य वा कारणत्वं कथं न स्वीक्रियते, प्रभावाय्वोः प्रत्यक्षहानेस्तुल्यत्वात्, तस्मादन्वयव्यतिरेकाभ्यां रूपवद्द्रव्यस्य चाक्षुषप्रत्यक्षे समवायादिना उद्भूतरूपस्य कारणत्वमावश्यकम् । अत एव फूत्कारप्रभयोः संख्यापरिमाणादिकमपि गृह्यते। दूरस्थो वायुः धृत्या कम्पनेन शब्देन चाऽनुमीयते । धृतिः—पतनाऽभावः । 'नभसि तृणतूलविमानादीनां पतनाभावः स्पर्शवद्वेगवद्द्रव्यसंयोगप्रयोज्यः, जन्यप्रयत्नाऽजन्यपतनाऽभावत्वात्, जलस्थनौकायाः पतनाऽभाववत्' । 'रूपवद्द्रव्याऽभिघातशून्यतृणादिसमवेतं कम्पनं स्पर्शवद्वेगवद्द्रव्याभिघातजन्यम् , विजाजीयकम्पनत्वात्, प्रवाहाऽऽहतकाशकम्पनवत्' । 'वीणाध्वनिः स्पर्शवद्वेगवद्द्रव्यसंयोगजन्यः, विभागाऽजन्यशब्दत्वात्, मृदंगाऽवच्छेद्यशब्दवत्' । अत्र स्पर्शवद्वेगवद् यद् द्रव्यं स वायुः ॥

सांसिद्धिकेति । समवायेन वानाऽनुकूलप्रवाहतरंगस्तरादिप्रयोजकविलक्षणसांसिद्धिकद्रवत्ववत्त्वं वायोर्लक्षणमित्यर्थः । वायौ तिर्यग्गतिप्रवाहलहरीप्रभृत्यन्यथाऽनुपपत्त्या तत्कारणं स्वभावसिद्धं द्रवत्वं तत्र त्वग्ग्राह्यं भवत्येवेति । तच्चाऽनित्यवायावनित्यं नित्यवायौ नित्यम् । न चोत्पन्नविनष्टवायावव्याप्तिः समान्यतस्त्वतिव्याप्तिस्तेजआदाविति वाच्यम् । रूपाऽभावविशिष्टसांसिद्धिकद्रवत्वसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य विवक्षणात् । ननु प्रचयेनैव सलिलतेजोवायूनां प्रवाहित्वनिर्वाहे द्रवत्वकल्पनमयुक्तमिति चेन्न । धूलिपुञ्जकार्पासादौ शिथिलसंयोगसत्त्वेऽपि प्रवाहाऽभावात्, जलादौ तु प्रवाहप्रयोजकस्य प्रत्यक्षसिद्धविलक्षणतत्त्वस्य तस्याऽन्यथयितुमशक्यत्वादिति ॥ ६२ ॥

**नित्योऽनित्य इति द्वेधा ह्यनित्यः पूर्ववत् त्रिधा ।**
**पिशाचादिशरीराणीन्द्रियं त्वक् स्पर्शबोधकम् ॥**
**शरीरव्यापकं, वायुर्विषयः स्यादनेकधा ।**
**महावायुश्च वातश्च प्राणाऽङ्गाराऽऽर्द्रनत्रकाः ॥**

नित्य इति । स च वायुर्नित्यः परमाणुरूपोऽनित्यस्तु द्व्यणुकादिरूपोऽवयवी बोध्यः, अनित्यः पुनः शरीरेन्द्रियविषयभेदात् त्रिधा भवति ॥ तत्र वायवीयं शरीरमाह—पिशाचादीति । वायोर्यो भुवर्लोकः तद्वृत्तिवायुदेवानां पिशाचादीनां भूतादियोनिगतानां शरीराणि वायुप्रधानानि पार्थिवादिभागोपष्टब्धानि अयोनिजानि पुण्यपापादिसहकृतसंकल्पजानि यथावासनाऽनुरूपाणि बोध्यानि ॥ वायवीयमिन्द्रियमाह—इन्द्रियं त्वगिति । स्पर्शविषयकप्रत्यक्षजनकमिन्द्रियं त्वग् वायवीयं भवति, तच्च बहिरन्तर्यावच्चर्मपटव्यापकम् अपकृष्टमहत्परिमाणं चर्मगोलकस्थं सदेव विभिन्नदेशीयकरपादादिगतस्पर्शान् गृह्णाति, 'स्पर्शोपलम्भकमिन्द्रियं वायवीयम्, रूपादिषु पञ्चसु मध्ये स्पर्शस्यैवाऽभिव्यञ्जकत्वात्, व्यजनपवनवदिति' । यद्वा—त्वग् वायवीयम्, अपाकजाऽनुष्णाशीतस्पर्शवत्त्वात् इति। अपाकजाऽनुष्णाशीतस्पर्शवदिन्द्रियं वायवीयेन्द्रियम् । एवं 'पाय्विन्द्रियं वायवीयम्, उत्सर्गाऽनुकूल स्पर्श-

स्यैव व्यञ्जकत्वात् । न च विकृतवमनादिमंति मुखादौ नालच्छिद्रादौ व्यभिचार इति शंक्यम् । सर्गस्वभावे सार्वजनीनाऽनुभवविषयस्यैवोत्सर्गस्य विवक्षणात् । उष्णस्पर्शादिस्त्वङ्गाराऽपानौपाधिक इति ॥

वायवीयविषयमाह—विषय इति । ग्रहनक्षत्रताराभृथिवीप्रभृतिब्रह्माण्डानां परस्पराऽऽकर्षणशक्तिमान् धारको महावायुः प्रत्येकग्रहादिगोलकानां परितो विंशतिक्रोशं यावत् परिवर्तमानम् अधोभारप्रदं वातावरणम्, शरीराद्यन्तःसञ्चरणशीलो जीवनप्रदः प्राणवायुः ज्वलनाऽनुकूलः प्राणाऽपानसमानोदानव्यानादिभेदभिन्नः, शरीराऽऽन्तरशुद्धचवष्टब्धविषलोऽङ्गारवायुः जीर्णकूपादावेकत्रितः केवलोऽयं मनुष्यप्राणहरः, आर्द्रभावेन उष्णतानिरोधकः आर्द्रवायुः, तथा नत्रवायुः प्राणवायोर्बलातिरेकमर्दनः आर्द्रवायुः प्राणवायुना सह मिलित्वा जलमुत्पादयति, अङ्गारवायुं वनस्पतयः शोषयन्ति, उच्छ्वासविकृतदुर्गंधपर्णतृणादिभ्योऽङ्गारवायुरुद्भवति । एवमेको नवसारवायुरपि भवति यो मूत्रमलालयादौ भवति, वातावरणे एकांश आर्द्रताऽवश्यं भवति, अन्यथा शरीराऽन्तःसर्वं शुष्कयेत् एतदार्द्रभावान्वितत्वाद् वायोरपि गुरुत्वमौपाधिकं भवति । रूक्षेऽनाप्लावितवायौ गुरुत्वं नास्त्येव । एवं सधूमवन्हावपि गुरुत्वं धूमौपाधिकं भवति, शुद्धे तेजसि तन्नास्तीति । एवमनेकविधा विकृतवायवो विषया भवन्तीति ॥ ९३ ॥ ९४ ॥

**शब्दोपादानमाकाशं शब्दानुमेयमुच्यते ।**
**नेश्वरे न मृदंगादौ शब्दस्य समवायिता ॥९५॥**

आकाशं निरूपयति—शब्दोपादानमिति । समवायेन शब्दवत्त्वम् आकाशस्य लक्षणम् । शब्दो हि विशेषगुणो-व्याप्यवृत्तिः एकत्र मुखादिनोद्भूतोऽन्यत्र सर्वत्र तदुद्भावकयन्त्रक्रियाशून्यदशायाम् अनुद्भूतो वर्तत एव, उद्बोधकसत्त्वे तु लक्षक्रोशाऽन्तरितोऽपि समक्षणे एव प्रत्यक्षः । धारायां क्षणक्रमेणोत्पद्यमानाः शब्दाः कारणकार्यभावेन सजातीयाः प्रत्यभिज्ञाविषया बोध्याः । क्षणक्रमेण-वीचीतरंगन्यायेन शब्दा उत्पद्यन्ते न तु प्रदेशक्रमेण, तादृशशब्दाश्रयत्वमेवाऽऽकाशत्वमिति पारिभाषिकी तटस्थलक्षणा, आकाशत्वस्यैकव्यक्तिवृत्तित्वेन जातित्वाऽभावात् तथैव कालत्वस्य दिक्त्वस्य च । ननु तर्हि किं शब्दोपादानतावच्छेदकमिति चेत् ?, शब्दवत्त्वमेव, नित्यविभोस्तस्य कदापि शब्दरहितत्वाऽभावात्, विशेषपदार्थो वाऽवच्छेदकः ॥

नन्वाकाशमेव नास्ति, वाय्वादीनां शब्दवत्त्वेनोपपत्तेरिति चेन्न, प्रदेशभेदेनाऽनन्ताऽवयविनां वाय्वादीनामेककालाऽवच्छेदेन अमेरिकादिषु सहस्रादिक्रोशदूरोत्पन्नशब्दस्याऽसमवायित्वेनोत्पादकत्वाऽभावात् भारतादिषु ध्वनियन्त्रद्वारा तच्छ्रवणाऽनुपपत्तेः, अतः शब्दाश्रयं व्यापकमाकाशमेव सिद्धयति ॥ ननु तदाश्रयः कालो वा दिग् भवेदिति चेन्न । तत्र विशेषगुणाऽभावात् । नन्वात्मा परमात्मा वा भवेदिति चेन्न । तत्र बाह्येन्द्रियग्राह्यविशेषगुणाऽभावात् । तमःशून्येऽपि तत्सत्त्वान्न तमसो गुणः, न वा माया तदाश्रया, तस्य सत्त्वाद्यसामानाधिकरण्यात् । अतः 'शब्दः नवद्रव्यातिरिक्तद्रव्याश्रितः, नवद्रव्याऽनाश्रितत्वे सति द्रव्याश्रितत्वादि' त्यनेन शिष्टं द्रव्यं गगनात्मकं शब्दाश्रयतया सिद्धयति । एतत्सर्वमभिप्रेत्याह—शब्दानुमेयमिति । शब्दाश्रयतयैवानुमेयं न तु सर्वथाऽनुमेयम्, प्रत्यक्षाऽङ्गीकारात् । तथाहि-'आकाशे बलाका' 'आकाशे प्रभा' 'आकाशं धवलम्' इत्याद्यात्मकं सर्वेषां प्रत्यक्षं बलाकाद्याधारतया भवति । ननु मूर्तपृथिव्याद्यभावस्यैव तत्र तदाधारत्वमिति चेन्न । अभावे आधारत्वाऽभावात् । ननु रूपाऽभावात् कथं प्रत्यक्षमिति चेन्न । रूपवद्द्रव्यप्रत्यक्षे एव रूपवत्तायाः प्रयोजकत्वात्, करणवैचित्र्यादिवत् विषयवैचित्र्यादिव्यवस्थोपपत्तेः । अन्यदीयरूपेणाऽपि धर्मिणो ग्रहसंभवात् परम्परया प्रभादिरूपेण तस्य चाक्षुषत्वेऽविरोधात् । 'अवकाशं पश्यामि' 'अवकाशे गच्छामी' त्यादिप्रतीतेश्च ॥

नेश्वरे इति । शब्दस्य समवायिकारणं नेश्वरः, अनित्यगुणाऽनधिकरणत्वात् । ननु शब्दो नित्य एव भवत्विति चेन्न । नित्यश्रावणत्वापत्तेः । कण्ठताल्वाद्यभिघातजन्यत्वस्य प्रत्यक्षसिद्धत्वात् ॥ न मृदंगादाविति । शब्दसमवायिकारणं मृदंगादिरपि न भवति । ननु कथं तर्हि 'वीणायां ध्वनि' रित्यादि-

व्यवहार इति चेन्न। 'शरीरे सुख' मित्यादाविवाऽवच्छेदकतामात्रेण तथा प्रत्ययात्। कर्णोत्पन्नस्यैव प्रत्यक्षात् कर्णस्य तत्समवायित्वे सार्वजनीनसिद्धे मृदंगादेस्तथात्वबाधात्। ततोऽन्यथाऽप्युपलम्भात्। अत एव वायावपि न कारणगुणपूर्वकशब्दोत्पत्तिः। शब्दस्याऽऽश्रयोत्पत्तिध्वंसाधीनोत्पत्तिध्वंसाद्यप्रतियोगित्वादिति ॥ ९५ ॥

**एकं नित्यं विभु, श्रोत्रं वागौपाधिकमिन्द्रियम्।**
**अवकाशप्रदानत्वाद् विपयेऽपि तदुच्यते ॥**

एकमिति। घटाकाशपटाकाशादिव्यवहारस्यौपाधिकत्वेन आकाशे परस्परभेदे प्रमाणाऽभावात् एकं सजातीयप्रतियोगिकभेदशून्यमेवाऽऽकाशम्। एकत्वात् शब्दवत्त्वेन सर्वत्रोपलब्धेश्च विभुत्वं सर्वमूर्तद्रव्यसंयोगित्वं तस्य भवति। विभुत्वात् आद्यान्तिमक्षणसंबन्धाऽभावाच्च नित्यत्वं तस्य बोध्यम्। ननु पार्थिवादिपरमाणूनां सर्वत्राऽऽकाशे सत्त्वात् तत्तत्प्रदेशे आकाशस्याऽवकाशात्मकस्याऽसत्त्वमवश्यमंगीकार्यम्, अन्यथा परमाणूनाम् अनवकाशद्रव्याणां स्थितिविलोपः स्यात्, तथा च तत्र तत्र प्रदेशेऽवकाशस्य नाशोऽभ्युपगन्तव्यः, अतः आकाशम् अनित्यम् अविभु अनेकं च स्यादिति चेन्न। आकाशस्य स्वभाव एव एतादृशो यद् अवकाशप्रदानत्वम् परमाणुस्थलेऽवकाशाऽभावे परमाणुरेव क्व तिष्ठेत्, परमाणुस्थितेरन्यथानुपपत्त्याऽवकाशस्थितिं कल्पयतीति नाऽवकाशस्य तत्र नाशः। इदमेवाऽस्य विभुत्वं यत् अप्रतिहतस्वभावेन सर्वमूर्तानाम् अवकाशयोगित्वमिति। अत एवैकत्वं समानाऽसमानजातीयकारणाऽजन्यत्वाच्च नित्यत्वं चोपपन्नमिति ॥ किञ्च अप्रतिघातिद्रव्यस्य छिद्राऽनपेक्षत्वम्, आत्मपरमात्मवदिति ॥

श्रोत्रमिति। आकाशप्रधानं शरीरं नास्त्येवाऽत इन्द्रियमुच्यते। औपाधिकं श्रोत्राख्यमिति। शब्दभोगप्रापकाऽदृष्टोपनिबद्धं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्, तदाकाशमेव शब्दवत्त्वात् शब्दग्राहकत्वाच्च। घटाकाशमठाकाशवत् श्रोत्राकाशमपि नित्यमेव। शब्दाकर्षकविलक्षणशक्तिमत्कर्णान्तिमृदंगपटलसिकाज्ञानतन्तुक्रमेण मस्तिष्कद्वारा शब्दज्ञानं भवति, पटलसिकातन्तव उपाधयः तेषां शब्दसमवायित्वाऽभावान्न श्रोत्रत्वं, तद्दोषे सति बाधिर्यम्। कण्ठताल्वाद्यभिघाते सति वातावरणवीचयः शब्दे निमित्तानि भवन्ति। अदृष्ट्युक्तकर्णोपाधिसहकृताऽऽकाशस्य सर्वप्राणिशब्दोपलब्धिकारणत्वान्न सर्वेषां सर्वशब्दोपलब्धिप्रसंगः। एवं शब्दमात्रोत्पत्त्यधिकरणत्वात् वागिन्द्रियमपि स्वरयन्त्रकण्ठताल्वोष्ठाद्युपाध्यवच्छिन्नमाकाशमेव बोध्यमिति। नाभिरप्याकाशमेव, ब्रह्मरन्ध्रमप्याकाशमेव, रोमच्छिद्राण्यप्याकाशमेव, तेषां विशेषकरणत्वाऽभावान्नेन्द्रियत्वम् ॥ अवकाशेति। सर्वमूर्तानामवकाशप्रदानत्वेन प्राणिनां प्रत्यक्षेण च साक्षात् क्वचित्परम्परयोपभोगसाधनत्वान्नित्योऽप्याकाशो विषयो भवतीति ॥ ९६ ॥

**पराऽपरधियो मुख्यं कारणं काल उच्यते।**
**सर्वकार्यनिमित्तं स पदार्थानां समाश्रयः ॥९७॥**

कालं निरूपयति—पराऽपरेति। परत्वं ज्येठत्वम् अपरत्वं कनिष्ठत्वं, तत्प्रकारकं पिण्डादिविशेष्यकं यज्ज्ञानं तस्याऽसाधारणं निमित्तं कारणं कालो भवतीत्यर्थः ॥ प्रयोगस्तु—'कालिकपरत्वाऽपरत्वे असमवायिकारणसंयोगजन्ये,-भावत्वे सति कार्यत्वात् घटवदिति' ॥ ननु पृथिव्यादिपिण्डसंयोग एवाऽसमवायी भवत्विति चेन्न। पृथिव्याद्यसंयुक्ते परत्वादिमति परस्परं व्यभिचारात्। ननु तथाप्याकाशदिङ्मनआत्ममायाऽन्यतमस्य पिण्डेन सह संयोगोऽसमवायी भवत्विति चेन्न। विनिगमनाविरहात्, औपाधिकाऽनन्तमनःसंयोगानां तद्गौरवात्, 'अयं स्वल्पकालीनोऽयं बहुकालीन' इतिप्रतीतिविरोधाच्च। ननु प्रतीतिरियं कालस्याऽप्रत्यक्षत्वादेव न कालसाधिकेत्यत आह—सर्वकार्येति। सर्वेषां जन्यानां कालिकेन निमित्तकारणं काल एव भवति, कालिकावच्छिन्नकार्यतानिरूपिततादात्म्यावच्छिन्नाधिकरणत्वं काललक्षणम्, तथा च निमित्तकारणतया सिद्धस्याऽप्रत्यक्षस्याऽपि तादृशप्रतीतिविषयत्वं युक्तम् ॥ प्रतीत्यन्तरमप्याह—पदार्थानामिति। सूर्यक्रियाकूटप्रयोज्यदिनादिकमन्तर्भाव्य 'इदानीं घट' इतिप्रतीतिः

सूर्यपरिस्पन्दान् विषयीकरोति, स्पन्दाश्च घटप्रत्यासन्ना एव परत्वाद्युत्पादकाः, तत्र स्वाश्रयतपनसंयोगिसंयोगात्मकपरम्पराघटकः कालः सिद्धयत्येव, प्रयोगस्तु—'इदानीं घट इति सूर्यक्रियाविशिष्टप्रतीतिः परम्परासम्बन्धविषया, साक्षात्सम्बन्धाऽभावे सति विशिष्टप्रतीतित्वात्, लोहितः स्फटिक इति ज्ञानवत्'। तदेवं यावतां पदार्थानां सम्बन्धघटककाले आश्रयता भवति। कालत्वं न जातिः एकव्यक्तिवृत्तित्वात् ।। ९७ ।।

**अतीतादिव्यवहारहेतुर्नित्यैकसर्वगः ।**
**उपाधियोगकृत्क्षणप्रलयव्यपदेशभाक् ।।९८।।**

अतीतादीति। 'अतीतो भविष्यन् वर्तमान' इतिव्यवहाराऽसाधारणनिमित्तहेतुत्वे सति विभुत्वं काललक्षणमित्यर्थः ।। कालेऽतीतत्वम्-वर्तमानकालीनध्वंसीयप्रतियोगिताश्रयोपाध्यवच्छिन्नत्वम्, अनागतत्वं वर्तमानप्रागभावप्रतियोग्युपाध्यवच्छिन्नत्वम्, वर्तमानत्वं शब्दप्रयोगाऽधिकरणत्वम्। कालो नित्यः उत्पत्त्यप्रतियोगी ध्वंसाऽप्रतियोगी च। एकः—स्वसजातीयद्वितीयशून्यः। सर्वगः—विभुः, कालिकेन सर्वाधारत्वात् सर्वव्यापकः ।। नन्वेकस्य विभोः क्षणादिव्यवहारः कथमित्यत आह—उपाधीति। क्षणलवनिमेषकक्षकाष्ठाकलामुहूर्तयामाऽहोरात्रपक्षमासर्त्वयनसम्वत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयव्यवहारं हि काल उपाधियोगाद्भजते। उपाधिर्यथा—स्वजन्यविभागप्रागभावावच्छिन्नं कर्म, पूर्वसंयोगावच्छिन्नविभागो वा, पूर्वसंयोगनाशावच्छिन्नोत्तरसंयोगप्रागभावो वा, उत्तरसंयोगावच्छिन्नं कर्म वा। क्षणद्वयं लवः, लवत्रयं निमेषः, निमेषत्रयं कक्षः, कक्षषट्कं काष्ठा, त्रिंशत्काष्ठाः कला, त्रिंशत्कलाः मुहूर्तम्, त्रिंशन्मुहूर्तानि रात्र्यह्नी,-इत्येवम् उत्तरसंयोगाऽनन्तरं कर्मान्तिरोत्पत्तेः क्षणकूटैः महाप्रलयाऽन्तः सर्वोऽपि व्यवहारो बोध्यः। महाप्रलये क्षणव्यवहारो नास्ति, किन्तु महाप्रलयकाल एवेति व्यवहारः, स च स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसात्मकोपाधिविशिष्टतयोपपादनीय इति ज्येऽठत्ववार्धक्यादिज्ञानद्वारा परम्परया कालस्य दुःखादिजनकत्वाद् विषयत्वं युक्तम् ।। ९८ ।।

**दिग् दूरत्वाऽन्तिकत्वादिबुद्धेर्मुख्यं हि कारणम् ।**
**प्राच्यां दिशि घटोऽस्त्येतत्प्रतीतेस्तत्प्रमाणता ।।**

दिशं निरूपयति—दिगिति। 'इदं दूरम् इदं समीपमि'तिप्रत्ययस्याऽसाधारणं कारणं दिग्भवति। 'दैशिकपरत्वाऽपरत्वे असमवायिकारणसंयोगजन्ये, भावत्वे सति कार्यत्वात्, घटवदिति'। अत्राऽसमवायिकारणसंयोगाश्रय एको घटो द्वितीया तु दिगेवेति। एकदेशमधिकृत्य 'कश्चित्पूर्वः कश्चिदपरः' इतिप्रतीतिविषयपरत्वाऽपरत्वयोरुत्पादकं बहुतरसंयुक्तसंयोगाऽल्पतरसंयुक्तसंयोगज्ञानं भवति, तत्र संयोगाः पराऽपरवस्तुनोः प्रत्यासत्तिशून्यत्वात् अनुपपन्नाः सन्तः स्वाश्रयसंयुक्तसंयोगपरम्पराघटिकां दिशं ज्ञापयन्ति। किञ्च प्रमाणान्तरमाह—प्राच्यामिति। 'प्राच्यां दिशि घट' इतिप्रतीतेः उदयाचलसूर्यसंयोगरूपप्राच्या घटे संसर्गाऽभावे तादृशप्रतीत्यसंभवेन तादृशसूर्यसंयोगाश्रयसंयुक्तदिक्संयुक्ततया घटादौ तादृशप्रतीतेः तादृशसम्बन्धघटकतया दिक् सिद्धयतीत्यर्थः। न च तादृकसंसर्गघटकत्वं पृथिव्यप्तेजोवाय्वात्मतमसां भवति, अनन्तत्वात्, नापि कालाऽऽकाशमायानां तथा, जीवादिभिर्विनिगमनाविरहात् तत्र तत्र प्रतीतावभानाच्च। तत्प्रमाणता-तत्र दिशि प्रमाणत्वं बोध्यम्। एवम् 'इदं दूरमिदमन्तिकमि' तिप्रत्ययः पृथिव्यादिनवद्रव्यातिरिक्तद्रव्यसम्बन्धप्रयुक्तः, परत्वाऽपरत्वहेतुकत्वात्, कालिकपरत्ववदि'त्यप्यनुमितं द्रव्यं दिक् ।। ९९ ।।

**दिक्प्रकारतया कार्ये तादात्म्यात् कारणं हि सा ।**
**एका नित्या विभ्व्युपाधियोगात्प्राच्यादिनामभाग् ।।**

दिक्प्रकारतयेति। दैशिकविशेषणतया सर्वकार्याणामाधारत्वेन निमित्तकारणत्वं दिशि भवति। तथा च दिग्विशेषणतासम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं दिशो लक्षणमित्यर्थः। सा च एका स्वसजातीयप्रतियोगिकभेदशून्या, नित्या-ध्वंसाप्रतियोगिनी, प्रागभावाऽप्रतियोगिनी च ।। विभ्वीति। दैशिकस्वरूपसम्बन्धेन सर्वपदार्थानामाधारभूता, अत एव संयोगेन सर्वत्र व्यापिनी भवति ।। ननु एकस्या विभ्व्याः कथं

प्राच्यादिभेदः इत्याशंकायामाह—उपाधीति। पृथिवीगोलकस्य ध्रुवाऽधोभाग एव मेरुः। तं प्रदक्षिणं कृत्वा यथा स्यात्तथाऽऽवर्त्तयतः सूर्यस्य भूगोलस्य वा दिक्प्रदेशैः संयोगा जायन्ते, तद्वशात् प्राच्यादिव्यवहारभाग् दिग्भवति। यथा यदपेक्षया यस्य सूर्योदयसन्निहिता या दिक् सा तस्य प्राची। या यदपेक्षया सूर्यास्तसन्निहिता दिक् सा तस्य प्रतीची। प्राच्याभिमुखस्य पुरुषस्य वामप्रदेशावच्छिन्ना दिगुदिची। सर्वेषामुत्तरदिक् मेरुसन्निहितैव 'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इतिस्थितेः। तथा च पृथिव्या गोलाकारत्वेन उदयाभिमुखस्थितानां भारताऽफ्रिकाऽमेरिकाजापानास्ट्रेलियादीनां वामभागे एव ध्रुवावस्थितिः। तादृशपुरुषस्य दक्षिणप्रदेशावच्छिन्ना दिग् दक्षिणा। गुरुत्वाऽसमवायिकारणकक्रियाशून्यत्वे सति तज्जन्यसंयोगाश्रया दिग् अधः। अदृष्टवदात्मसंयोगजन्याऽग्निक्रियाशून्यतज्जन्यसंयोगाश्रया दिग् ऊर्ध्वा। उदयादिप्रदेशा उपाधयः। एवं विभुत्वे सति प्राच्यादिव्यवहाराऽसाधारणनिमित्तहेतुत्वमितियपि लक्षणं बोध्यम्॥ दिशां क्वचिद् दूरत्वादिज्ञानद्वारा पथिकानां दुःखादिजनकत्वात् परम्परया विषयत्वं युक्तम्॥ १००॥

**ज्ञानेच्छायत्नवानात्मा देही नित्योऽथ स द्विधा।**
**जीवात्मा परमात्मा च, जीवोऽणुश्चेतनो हृदि॥**

आत्मसामान्यं निरूपयति—ज्ञानेच्छेति। समवायेन ज्ञानेच्छाप्रयत्नवत्त्वम् आत्मसामान्यलक्षणम्। जीवात्मनि ज्ञानेच्छायत्ना अनित्याः, परमात्मनि तु नित्याः, 'ज्ञानादिसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्' इत्यनेनाऽऽत्मत्वजातिर्जीवात्मनि सिद्ध्यति, ततः 'परमात्मा आत्मत्ववान्, ज्ञानवत्त्वात्' इत्यनेन परमात्मन्यपि तत्सिद्धिः। स्वात्मनि तु 'अहमात्मे' त्यादिमानसप्रत्यक्षसिद्धैव। नित्याऽनित्यभेदेन परस्पराऽव्याप्तिवारणाय स्वाश्रयाऽधिकरणतावत्त्वसम्बन्धेन ज्ञानत्वादिमत्त्वमेव लक्षणं वक्तव्यम्। यद्वा-'जीवेश्वरनिष्ठाऽऽत्मपदशक्यता किञ्चिद्धर्मावच्छिन्ना, शक्यतात्वात्, पटनिष्ठपटपदशक्यतावदि' त्यनेनाऽऽत्मत्वसिद्धिः, तथा च आत्मपदजन्यप्रतीतिविषयत्वमपि सामान्यलक्षणं बोध्यम्॥ ननु जीवात्मपरमात्मनोर्ज्ञानात्मकत्वमेव न तु ज्ञानादिमत्त्वमिति चेन्न। क्षणिकत्वापत्तेर्जीवात्मनो ज्ञानभिन्नत्वसिद्धौ ज्ञानत्वावच्छिन्नभिन्नत्वस्य परमात्मन्यपि सुतरां सिद्धेः॥ देहीति। विलक्षणाऽऽश्रयतासम्बन्धेन भोगायतनशरीराऽवच्छिन्नो जीवात्मा, परमात्मा तु स्वव्याप्यसर्वशरीराऽवच्छिन्नः। यद्वा स्ववृत्तिचेष्टानुकूलप्रयत्नवत्तया देहविशिष्ट इत्यर्थः, परमात्मनोऽपि भूतावेशन्यायेन योगिजनपरकायप्रवेशन्यायेन निर्माणचित्तादिन्यायेन वा उक्तसंसर्गेण शरीरवत्त्वस्य सत्त्वात् देहित्वम्। तयोर्ध्वंसाद्यप्रतियोगित्वेन नित्यत्वम्॥ तस्य द्वैविध्यमाह—स द्विधा इति। स आत्मा जीवात्मपरमात्मभेदेन द्विविधः, तत्र जीवत्वं जीवनयोनियत्नवत्त्वम्, परमत्वं नित्यसर्वज्ञत्वम्॥ जीवमाह—जीवोऽणुरिति। यद्वा—सुखादिसमवायिकारणतावच्छेदकजातिरेव जीवत्वं तद्वान् जीव इत्यर्थः। स चाऽणुः-अणुपरिमाणवान् 'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिश्रुतेः। ननु विभिन्नावयवावच्छेदेन सुखाद्यप्रत्यक्षापत्तिः, सुतरां स्वस्याऽपि, महत्त्वाऽभावादिति चेन्न। आन्तरप्रत्यक्षे महत्त्वस्याऽप्रयोजकत्वात्, शरीरपरिमाणकमहत्तत्त्वेन मनस आत्मनश्च योगात् महत्तत्त्वात्मकप्रधानाऽन्तःकरणद्वारा सर्वाऽवयवेषु शरीरे सुखादिप्रत्यक्षाऽबाधात्॥ चेतन इति। चिच्छक्तिमान्। ननु केयं चिच्छक्तिः?, शरीरेन्द्रियादीनां चेतयितव्यत्वेऽनुकूलः स्वतन्त्रः पदार्थः शक्तिविशेषः। तत्स्थानमाह—हृदीति। हृदयपुण्डरीकाख्ये चक्रेऽदृष्टाद्यनुबद्धस्तिष्ठति, यत्र महत्तत्त्वेन संयुक्तो भवति, तत्र च मनोयोगः, तत्र चेन्द्रियाणि मस्तिष्कद्वारकगोलकस्थानि संयुक्तानि भवन्ति, तैश्च विषया इति॥ १०१॥

**जानामीतिप्रमासिद्धः करणं कर्त्रधिष्ठितम्।**
**चेष्टाप्राणाऽनुमेयोऽपि सारथी रथकर्मणा॥१०२॥**

स्वात्मनि प्रतीतिप्रमाणमाह—जानामीति। 'ज्ञानवानहं' 'सुख्यहमि'त्यादि स्वमानसप्रत्यक्षमेव तत्र प्रमाणं बोध्यम्। अथ ये देहात्मादिवादिनस्तान्प्रत्याह—करणमिति। यथा कुठारादि करणं छेद-

घटवत्' । 'चैतन्यं,-शरीरविशेषगुणो न भवति सति शरीरेऽपि निवर्तमानत्वात्-संयोगादिवत्' । 'चैतन्यं,-न शरीरविशेषगुणः,-आन्तरेन्द्रियग्राह्य-विशेषगुणत्वात्', । 'ज्ञानादयः,-न शरीरादिविशेष-गुणाः,-अहंममत्वसामानाधिकरण्यात्,-सुखवत्' । 'शरीरं,-न चैतन्याद्याश्रयम्,-बालस्य स्तन्यपानप्र-वृत्त्यनुपपत्तेः,-पूर्वानुभवाऽभावादिष्टसाधनताज्ञान-स्याऽभावात् । मम तु जीवनाऽदृष्टोद्बोधितस्येष्ट-साधनत्वस्य स्मरणस्य सत्त्वेन प्रवृत्तिः । शरीरावस्था-दीनामपि योग्यत्वान्नाऽन्यस्याऽकालीनस्य स्मरणा-पत्तिः जन्मप्रवाहस्याऽनादितयाऽऽत्मनोऽप्यनादित्वेन भावस्य तस्य ध्वंसाऽभावान्नित्यत्वं बोध्यम् । बीज-प्रयोजनोपष्टब्धस्य संसारस्य भोग्यत्वाऽन्यथाऽनुप-पत्त्याऽऽत्मतत्त्वस्य भोक्तुः सिद्धौ तत्तददृष्टाद्यनुरूप-कोषरसशक्त्याद्युपलब्धेस्ततोऽतिरिक्तस्तददृष्टवाना-त्मा भिन्न एवेति ॥ विषयोपादानोपादेयस्याऽचैत-न्यात् विषयाणां भूतानामपि चैतन्याऽभावो, जीवन-विरहादपि च बोध्यः ॥ कोषद्वैधीभावोऽप्यदृष्ट-प्रयोज्य एकात्माऽधिष्ठितः ॥ १०४ ॥

**नेन्द्रियाणि तथा, नाशे स्मरणाद् व्यभिचारतः ।**
**नाऽतः प्राणो, मनो नैव, मुक्तौ तस्य विनाशतः ॥**

नन्विन्द्रियाण्येवात्मा, ज्ञानाश्रयत्वात्, ज्ञानकरण-त्वात्, अहं पश्यामि शृणोमि स्पृशामीत्यादौ दर्शना-दीनाम् अहमर्थेन्द्रियधर्मत्वाऽनुभवात्, कर्तृत्वकरण-त्वयोरविरोधादित्यत आह—नेन्द्रियाणीति । चक्षु-रादीन्द्रियाणि, न तथा-न आत्मा भवितुमर्हन्ति, तेषां नाशे सत्यपि स्मरणस्य जायमानत्वेन व्यतिरेकव्य-भिचारादित्यर्थः । इन्द्रियाणां ज्ञानाद्याश्रयत्वे 'योऽहं रूपसुखवान् सोऽहं रससुखवान्' इति प्रत्यभिज्ञानाऽ-नुपपत्तेः । अत एव च 'इन्द्रियाणि,-न चैतन्याश्र-याणि,-अहंकारेण सह सामानाधिकरण्यानुभवविरो-धात्' । 'इन्द्रियाणि,-नं चैतन्याधिकरणानि,-करण-त्वात्, कुठारवत्' । कर्तृकरणयोरेकत्र विरोधात् । नष्टे स्मरणाऽनुपपत्तेश्च । ननु-अनुभवेन विषयेषु संस्कार आधीयते ज्ञातता इवेति विषया एव स्मार-का इति चेन्न । तेषां स्मृतिदशायामसत्त्वात्, अन्याऽ-नुभूतस्याऽन्यस्मरणप्रसंगात्, प्रत्येकस्य प्रत्येकस्य चेतनत्वे कदाचिद्द्वैमत्यप्रयुक्तशरीरनाशः,-सम्भूय तथात्वे तु व्यभिचारापत्तिः' केवलकोषाऽवस्थायाम् इन्द्रियाऽभावेऽपि जीवनसत्त्वात् तादृशयत्नवान् अनु-भवादीनामेकाधारस्तद्भिन्न आत्मैव । 'इन्द्रियाणि,-चेतनाद्भिद्यन्ते,-नियतबहिर्विषयकत्वात्,-जालमरी-चिवत्' । 'इन्द्रियाणि,-न चेतनानि,-भूतकार्यत्वात्,-अज्ञत्वव्याप्तत्वात्,-वास्यादिवत्' इति ॥ प्राणस्याऽऽ-त्मत्वं निषेधति-नाऽतः प्राण इति । उक्तोपपन्नदोष-वत्त्वात् जीवनरसस्याऽनात्मत्वे सिद्धे तद्व्याप्यस्य प्राणशक्तेः स्थूलप्राणस्य च सुतरामनात्मत्वं बोध्य-मिति ॥

अथाऽस्तु तर्हि नित्यत्वात् सर्वविषयकत्वात् अभूतत्वाच्च मनसश्चैतन्यमित्यत आह-मनो नैवेति । मनोऽप्यात्मा न भवति, कर्मकर्तृविरोधात् । 'मन-साऽहं जानामी'-त्यादौ कर्तुस्तदतिरिक्तत्वेन भानात् । 'मनो न ज्ञानाश्रयः करणत्वात् कुठारवत्' । 'मनः अन्यप्रयत्नवदधिष्ठितम्,-अन्यप्रयत्नाऽसमवहितसाम-ग्रचजन्यकर्मवत्त्वात्, बालप्रेरितक्रीडनकन्दुकादिवत्' । 'मनश्च न नित्यं, प्रलये मुक्तौ च स्वकारणे मायायां लयात्, तथा च व्यतिरेकव्यभिचारात् न चैतन्यं मनसः । मनसो मायाजन्यान्तरेन्द्रियत्वस्याऽग्रे वक्ष्य-माणत्वात् ॥ १०५ ॥

**अत एव न वै माया, न ज्ञानं क्षणिकं हि सः ।**
**न नित्यज्ञानरूपः सः, नाऽकर्ता, न नियामकः ॥**

ननु मनसो माऽस्तु चैतन्यं सात्त्विक्या नित्याया मायायास्तु स्यादेव, सत्त्वस्य प्रकाशात्मकत्वात्, इन्द्रियाणामपि सात्त्विकत्वेन तदिन्द्रत्वं मायायामेव, व्यापिकायाश्च मनोद्वारा बहिरिन्द्रियैः शरीरावयवे-ष्वाशिखनखं चैतन्योपलब्धिहेतुत्वं चैतन्याश्रयत्वं च युक्तमित्यत आह—अत एवेति । मनसश्चैतन्याऽनधि-करणत्वसाधनादेव मनआत्मिकाया मायाया अपि चैतन्याभाववत्त्वसिद्धे मुक्तौ तद्योगाऽभावाच्च नाऽऽ-त्मत्वम् ॥ ननु माया हि व्यापिका निखिलजगदुदय-स्थितिलयशीला ब्रह्माऽपराऽभिधाना सगुणब्रह्महि-रण्यगर्भसुरनरतिर्यगाद्यात्मभावमापन्ना भोक्ता भोक्त्री

चेति द्वेधाऽयं संसाररूपा, शक्त्यंशत्वादेव शक्ता आत्मानः शाक्ता इत्युच्यन्ते, शक्त्युपासनादेव शक्तिस्वरूपाऽवाप्तिर्मोक्षः, स्त्रियो देव्यः शक्तयस्तदुपासनं मुक्तिसाधनं, शक्तिपरिणामाः प्रमेयाः शक्तिपरिणामेन प्रमया शक्तिपरिणामात्मना शक्तिपरिणामो भोगः शक्तिप्रसन्नतात्मकः क्रियते, इत्येकमेव शक्तिब्रह्मतत्त्वं माया, ततोऽतिरिक्ते प्रमाणाऽभावान्नाऽऽत्मा कश्चिन्मायाऽन्य इति चेन्न। तत्र नामभेदेन चेतनमेवैतादृशमुद्दिश्योच्यते यदि, तदा तु परमात्मैव स इति नाम्नि कस्ते पक्षपातः ? । यदि चेतनभिन्नत्वं, तदा तस्य प्रवृत्त्यभावादेव जगत्कारणत्वाऽसिद्धिः, उपादानमात्रत्वे वा तस्य संघातरूपस्य भोग्यत्वाऽन्यथाऽनुपपत्त्याऽतिरिक्तात्मत्वसिद्धिः । संघातस्य पारार्थ्यात्, तस्यैव परस्य च संघातज्ञातृत्वमिति न मायायाश्चैतन्यम् ॥

नन्वस्तु तर्हि क्षणिकविज्ञानमेवाऽऽत्मा, तदेव च समग्रजगत्कारणम्, तच्च दुःखसमुदयमार्गनिरोधात्मकपदार्थचतुष्टयात्मकम्, तत्राऽऽत्मरूपसुखाद्याकारविशेषकं स्वप्रकाशं जाग्रति स्वप्ने च प्रयत्नविज्ञानम् तदन्यदा तु आलयविज्ञानम्, क्षणिकस्य सदृशप्रवाहतया सत्त्ववृत्तेः अनुभवसंस्कारस्मरणादीनामपि अविसदृशभानात् चिरं स एव जीवतीति प्रत्यभिज्ञानाऽविरोधात्, आश्रयभेदाद्भिन्नरसतामापन्नं वारिदविमुक्तोदकवत् विभिन्नार्यसत्त्वाऽवान्तरचतुर्भावमापन्नं तदेवाऽऽत्मा, ततोऽतिरिक्तत्वे प्रमाणाऽभावादित्यत आह—न ज्ञानं क्षणिकमिति । बौद्धानां द्वितीयक्षणवृत्तिध्वंसप्रतियोगि यज्ज्ञानं तत् न सः—न आत्मेत्यर्थः । 'यत् सत् तत् क्षणिकमि'ति व्याप्तेरपि क्षणिकायाः समकालीनाया अस्थिरत्वे विषयस्य क्षणिकत्वासाधनात् । कृतहानाऽकृतलाभदोषप्रसंगात् । निर्विषयस्य ज्ञानत्वाभिमतत्वेनाऽनुत्पादात् । सुषुप्तावपि विषयविषयकत्वाऽऽपातात् । निर्विषयत्वे तत्त्वच्यवनात् । अप्रकाशानामपि ज्ञानत्वव्यवहारापत्तेः अक्रियसंस्काराऽऽहितचितामेवोत्तरचिदुत्पादकत्वे संस्काराऽऽनन्त्यापत्तेः । कुर्वद्रूपत्वस्खलद्रूपत्वादिना कारणत्वाऽकारणत्वव्यवहृतेरपि निमित्तादिसन्निध्यसन्निधिभ्यामन्यथासिद्धेश्च ॥

ननु नेमानि दूषणानि, इष्टापत्तेरिति चेन्न। विगानात् अप्रामाण्यं प्रसज्येत । नन्वेकस्यापि विज्ञानस्याऽनेकाकारेषु अतद्व्यावृत्तिरूपैर्धर्मैर्व्यवस्थोपपत्तेः नाऽप्रामाण्यमिति चेन्न । सर्वविज्ञानवादिनां सर्वक्षणेषु अतद्व्यावृत्तित्वाऽङ्गीकारे तद्व्यावृत्तेरभावादेव तादृशधर्माऽसिद्धेः क्षणान्तरे वा तद्व्यावृत्तिप्राप्त्या विज्ञानव्यावृत्तस्य क्षणिकत्वव्यावृत्तस्य च सिद्धः प्राप्तमस्माकं किञ्चित्स्थायीति । विषमक्षणस्थायिनाम् अतद्व्यावृत्त-तद्व्यावृत्तादीनां चैषामनुप्रोताऽऽश्रयं विनाऽनुपपत्तेः सिद्ध्यत्येकं प्रसिद्धजन्माद्याश्रयं द्रव्यं स विज्ञानाश्रय आत्मैव ॥ एतेनाऽनन्तधर्मकः सद्भूतार्थो द्रव्यपर्यायो द्रव्यप्राणानाम् अक्षरस्य योऽनन्तको नित्योद्घाटितो भागः ज्ञानसुखादिधर्मेभ्यो भिन्नाऽभिन्नश्चैतन्यलक्षणः कर्ता भोक्ता मध्यमपरिमाणो मोक्षाऽवस्थायां तु तृतीयांशन्यूनपरिमाण इति परास्तम् ॥ देहाद् देहान्तरगतेर्मोक्षाऽवगतेश्च नित्यताव्याप्यत्वात्, नित्यतायाश्च संकोचविकासाऽभावव्याप्यत्वात्, संकोचविकासौ तु वृद्ध्यपचययावात्मनो नाशमाक्षिपतः । धर्मभूतज्ञाने संकोचाद्यंगीकारेऽपि धर्मपरिणामस्य धर्मिस्थत्वात् क्षणिकतैवाऽऽपद्येतेति च ।

ननु 'अयमात्मा ब्रह्म' 'नित्यं विज्ञानमानन्दं ब्रह्म' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'अहं ब्रह्माऽस्मि' 'ब्रह्मविद् ब्रह्मैव भवति' 'तत्त्वमसि श्वेतकेतो' इत्यादिश्रुतिभिर्नित्यविज्ञानं ब्रह्मैवाऽऽत्मा, तदेव चैतन्यं स्वप्रकाशम्, अविद्याकृतं तस्य जीवत्वं मिथ्यैव, ब्रह्मत्वं परमार्थसत्, नान्यदित्यत आह—न नित्यज्ञानरूपः सः इति । 'नित्यं ज्ञानमनन्तं ब्रह्मे' तिश्रुतिप्रतिपाद्यं यत्परमात्मतत्त्वं ब्रह्म नित्यं ज्ञानं तत्स्वरूपो न जीवात्मा, बन्धमोक्षव्यवस्थाऽनुपपत्तेरित्यर्थः । किञ्च-सदसदनिर्वचनीयत्वाऽनुपपत्तेरविद्यात्मकोपाधेरसिद्ध्याऽऽत्माऽसिद्धेश्च, तव जीवभावस्याऽनादित्वेऽपि मिथ्यात्वादविद्यान्तरपरिकल्पितत्वस्याऽवश्यमाश्रयणीयतयाऽनवस्थाऽपरिहार्यैव, काल्पनिक्या अविद्यायाः काल्पनिकत्वेन वस्तुस्थित्यसिद्धेः । नित्यज्ञानस्य यावद्विषयकत्वे जीवभावेऽपि सार्वज्ञ्यापत्तेः, आवरणाऽभावस्याऽपि तत्र प्रयोजकत्वे त्वावरणात्मकाऽविद्याया असिद्धेरेवाऽसिद्धिस्तदवस्थैव । घटस्य ज्ञानमिति

प्रयोगात् घटस्य जीवात्मेत्यप्रयोगाच्च ज्ञानस्याऽऽत्मतोऽतिरिक्तत्वेन प्रतीतेः। उक्तश्रुतिभिर्ब्रह्मप्रतिपादनात् ज्ञानाऽज्ञानादिना विभिन्नस्य स्वाश्रयस्य ब्रह्मतोऽपि भिन्नत्वात्। ब्रह्मभवनश्रुतेरपि जन्यमात्राऽसंसृष्टसच्चिदानन्दाऽवस्थितेर्बोधनात्॥ ननु भेदस्याऽपि मिथ्यात्वमिति चेन्न। अधिकरणब्रह्मात्मकस्य भेदस्य मिथ्यात्वे ब्रह्मणो मिथ्यात्वापत्तेः। सच्चिदानन्दत्वेनाऽभेदोपचाराच्च। 'निरञ्जनः परमं साम्यमुपैती' तिसाम्यभवनश्रुतेश्च। परमात्मनोऽपि 'नित्यं विज्ञानमानन्दं ब्रह्मे' त्यादिना प्रतिपादितस्य सच्चिदानन्दस्वरूपस्य 'यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः' 'योऽयमात्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्प–' इत्यादिना प्रतिपादितज्ञानादिमत्त्वेऽपि बाधकाऽभावात्, 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने' तिश्रुत्याजीवात्मनोऽपि ज्ञानवत्त्वबोधनात्॥

यत्तु–'सोपाधिकब्रह्मखण्डो जीवः, 'तत्त्वमसी'ति श्रुतेः जीवब्रह्मणोरभेदः 'स्वाभाविकः, भेदस्त्वौपाधिक इति भास्करमतम्, तन्न, उपाधिब्रह्मव्यतिरिक्तवस्त्वन्तराऽनभ्युपगमात् ब्रह्मण्येवोपाधिसंसर्गात् औपाधिकाः सर्वे दोषा ब्रह्मण्येव स्युः, ततः 'अपहतपाप्मे'त्यादिश्रुतिविरोधश्च स्यात्'॥

भाट्टास्तु–सुषुप्तौ प्रकाशाऽप्रकाशसद्भावात् अज्ञानसंवलितो द्रव्यबोधरूपश्चैतन्यात्मकः प्रज्ञानघन एवाऽऽनन्दमय आत्मा नित्य इति वदन्ति॥

प्राभाकरास्तु–ज्ञानाऽन्यो ज्ञानाऽधिकरणं द्रव्यमात्मा, स न आनन्दरूपः, न अज्ञानरूपः आनन्दज्ञानाऽऽश्रयत्वात्। किन्तु जडोऽनादिः, सुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनात् 'अहमज्ञ' इत्यनुभवाच्च अज्ञानमेवाऽऽत्मेति वदन्ति॥

माध्यमिकस्तु–'असदेवेदमग्र आसीदि'ति श्रुतेः सुषुप्तौ सर्वाऽभावात् 'अहं सुषुप्तौ नाऽऽसमि'त्युत्थितस्याऽनुभवात् शून्यमेवाऽऽत्मेति वदति॥

केचन–अविकृतं ब्रह्मैव जीव इति निरूपयन्ति॥

अन्ये तु–अन्तःकरणाऽवच्छिन्नचैतन्यं जीव इति वदन्ति। तन्मतानि पूर्वोक्तदोषैः, स्वयं प्रकाशस्याऽज्ञानत्वे विरोधात् शून्यस्य वस्तुत्वानुपपन्नत्वात् विकृतिप्रसंगात् जडपारतन्त्र्याच्च, दूषणीयान्येवेति॥

अथ सांख्याः–अनागताऽवस्थपुरुषार्थप्रेरिता मूलप्रकृतिस्त्रिगुणसाम्याऽवस्था जडैव संसारकर्त्री भोक्त्री प्रवर्तयित्री धर्माऽधर्मज्ञानसुखदुःखादिमती नित्या मोक्षगा च। तत्र चैतन्याभिमानाऽन्यथाऽनुपपत्त्या चेतनात्मतत्त्वसिद्धिः। स च चेतनोऽकर्ताऽभोक्ताऽबद्धोऽमोक्षो व्यापको नित्यमुक्तो नित्यशुद्धोऽपि स्वप्रतिबिम्बवत्तासम्बन्धेन महत्तत्त्वाख्यबुद्धौ स्थितः सन् करणद्वाराऽऽकृष्टान् बुद्धिधर्मान् स्वात्मन्यभिमन्यमान इव भुंक्ते इव भवति, इति मन्यन्ते, तान् प्रत्याह–नाऽकर्तेति। कर्तृत्वाऽभिमानस्य चैतन्याऽभिमानव्याप्यत्वात्, चैतन्याभिमानस्य च चेतनाऽन्यथाऽनुपपत्तेः घटकर्तृत्वस्य पिण्डसंयुक्ते कुलाले इव चैतन्यकर्तृत्वस्य बुद्धिसंयुक्ते चेतने प्रसक्तेः, व्यापकसत्त्वेन सामान्यकर्तृत्वस्याऽप्यात्मनि सिद्धेः 'करोमी'त्यनुभवाच्च कृतिसामानाधिकरण्येन ज्ञानेच्छासुखधर्मादीनामपि चेतने एव सिद्धेर्बन्धमोक्षावपि तत्रैवेति नाऽकर्तृत्वं जीवात्मनः, किन्तु कर्तृत्वमेवेत्यर्थः॥ न च–'बुद्धिः,-कर्त्री,-प्रकृतिकार्यत्वादि' ति वाच्यम्। हेत्वसिद्धेः। चेतनधर्मस्य चैतन्यस्य ज्ञानबुद्ध्यादिपर्यायस्य जडधर्मत्वाऽभावात्। चेतनयोगशून्यायां मायायां महत्तत्त्वाख्यबुद्धितत्त्वात्मकविकारस्य सांख्यैरनङ्गीकारात्, चेतनाऽन्वयव्यतिरेकाभ्यां चैतन्यादेश्चेतनधर्मत्वसिद्धिः। 'चेतनोऽहं करोमी' त्यस्याऽऽत्मनि याथार्थ्यात् 'ममेदं कर्तव्यमि' त्यस्याऽपि याथार्थ्याद् बुद्धेर्नित्यत्वाऽनित्यत्वविकल्पे जीवात्मनोऽमोक्ष-पूर्वसंसारापत्त्यादीनां दुर्वारत्वाच्चेति॥ ननु कर्तृत्वमात्मनि यदि, तदा स सर्वनियामक एव स्यात्, न तु पुनश्चायं पराधीन इत्यत आह–न नियामक इति। कर्तृत्वाऽपेक्षसृष्टिसंचारक आत्मा न जीवात्मा, स्वतन्त्रत्वात्, यश्चाऽस्वतन्त्रः कर्मफलभोक्ता स एवाऽत्र जीवात्मा प्रोक्त इत्यर्थः॥ १०६॥

**नांऽशो, नापि विभुर्नापि मध्यमपरिमाणकः।**
**प्रतिबिम्बो न वै, किन्तु भिन्नः शाश्वतलक्षणः॥**

ननु ब्रह्मांशो ब्रह्मभिन्नाऽभिन्नो जीव इति यादव-

प्रकाशः। अत्राऽऽह—नांऽश इति। जीवब्रह्मणोर्भेदवदभेदस्याऽप्यभ्युपगमात् ब्रह्म स्वरूपेणैव सुरनरतिर्यक्स्थावरादिभेदेनाऽवस्थितमिति ब्रह्मणो जीवभावेन सर्वे जीवगता दोषा ब्रह्मण एव स्युरिति। नन्वंशत्वं नाम चैतन्यप्रभावत्त्वमिति चेन्न। अंशिनि अतिव्याप्तेः। ननु तद्विशेषगुणसजातीयगुणोत्कर्षवत्त्वम् अंशत्वमिति चेन्न। अन्यत्राव्याप्तेः। अतस्तद्भक्तिमत्त्वं तदंशत्वमित्यपि न। तथैवाऽव्याप्तेः। तदवयवत्वं तदंशत्वमित्यपि न। उभयोरनित्यत्वापत्तेः। ननु तत्सत्तातिरिक्तसत्ताकत्वशून्यत्वे सति व्याप्यचेतनत्वं तदंशत्वमिति चेन्न। असत्ताकस्य जीवत्वाऽभावात्, ससत्ताकस्य ब्रह्मत्वात्, ततोऽन्यव्याप्यचेतनाऽप्रसिद्धेः॥

ननु—अत्यन्ताऽभावाऽप्रतियोगी सर्वमूर्तद्रव्यसंयोगी विभुरेव जीवः स्यात्, शरीरव्यापिसुखाद्युपलब्धेः देशान्तरेऽपि तद्भोग्यवस्तूत्पत्तेश्च। अदृष्टेन विषयसन्निधेरदृष्टाश्रयमन्तरेणाऽसंभवेनाऽगत्या जीवात्मनो विभुत्वम्। स च शरीरावच्छेदेन आनखशिखं सुखादिभोक्ता, पाषाणावच्छेदेन शरीराद्यभावान्न भोक्ता, तथा च परममहान् स्यादिति चेत् तत्राह—नापि विभुरिति। जीवात्मा न व्यापकः—परममहान्, शरीरेण परिच्छेदात्। ननु-अविभुत्वे युगपदनेकविषयानुभवः कथमिति चेन्न। आत्मनो मुख्यान्तःकरणस्य महत्तत्त्वाख्यबुद्धेर्मर्यायाजन्यायाः सर्वशरीरव्याप्त्या तदुपपत्तेः। तव सर्वशरीरव्यापिन्या त्वचा मनोयोगादिव महत्तत्त्वेन मनोयोगाद् आत्मनि सर्वत्र ज्ञानसंभवात्। देशान्तरीणभोग्योत्पत्तिरपि जीवाऽदृष्टसापेक्षेश्वरज्ञानादेः परमेश्वरस्य विभुत्वादेव सामानाधिकरण्यादुपपन्नैव। न चाऽणुत्वे तस्य तद्गुणानां च प्रत्यक्षं न स्यादिति वाच्यम्। विभुत्वेऽपि तव गगनादौ व्यभिचारात् आन्तरप्रत्यक्षे विभुत्वस्याऽप्रयोजकत्वाच्च। 'हृदि ह्ययमात्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय' इत्यादिश्रुतेरात्मनोऽणुत्वमेव। 'तेन प्रद्योतेनैव आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्यः' इत्युत्क्रान्तिश्रुतेः। 'ये वै के चाऽस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'-तिगतिश्रुतेः। 'तस्माल्लोकात्पुनरेत्याऽस्मै लोकाय कर्मणे' इत्यागतिश्रुतेश्चेति॥ ननु महत्तत्त्ववत् आत्मैव मध्यमपरिमाणोऽस्त्विति किं महत्तत्त्वेनेत्यत आह—नापि मध्यमपरिमाणक इति। मध्यमपरिमाणस्य तस्य संकोचविकासशालिनोऽवयवसंयोगाऽधीनद्रव्यत्वेन विनाशित्वात् कृतप्रणाशाऽकृतकर्मभोगादिप्रसंगात् न शरीरसमपरिमाणक इत्यर्थः। महत्तत्त्वस्य तु मोक्षाऽवधिकस्य महाप्रलयाऽतिरिक्तकालीनस्य सृष्टिमात्रोपकरणकरणात् सप्रयोजनेन सामञ्जस्यात्॥

ननु—अविद्यायां प्रतिबिम्बितचैतन्यं जीवः, यद्वा अन्तःकरणे प्रतिबिम्बितचैतन्यं जीवः, यद्वा—बिम्बस्थानीयस्येश्वरस्य एकस्मिन्नेवाऽज्ञाने प्रतिबिम्बो जीवः, अविद्यादिलये ब्रह्मैव भवतीत्यत आह—प्रतिबिम्बो न वायिति। आत्मा न प्रतिबिम्बरूपः, अज्ञानादौ प्रतिबिम्बनाऽसंभवात्, अज्ञानादिनाशे जीवस्यापि नाशापत्तेः, जीवस्य जडत्वापत्तेश्च, नाशापत्त्यर्थं मोक्षप्रवृत्तेरयोगाच्च। मिथ्यात्मकस्य प्रतिबिम्बस्य मोक्षभावत्वाऽसंभवात्, मिथ्याप्रतिबिम्बस्य बिम्बैक्ये बिम्बस्यापि मिथ्यात्वापत्तेश्च॥

नन्वविद्यामायाऽन्तःकरणादिकमुपाधिजातमलीकमेव, एकमेव ह्यात्मतत्त्वं नित्यं शुद्धं स्वलीलयैव जडचेतनादि व्यवह्रियते, न वस्तुतो भेदः, न वाऽवच्छेदकभेदाद्भेदः, इत्यत आह—किन्तु भिन्न इति। प्रतिशरीरं जीवात्मा भिन्नो न त्वेकः, सर्वत्र एकस्य मोक्षे संसारे वा सर्वस्य मोक्षात् संसाराद्वा सृष्टेर्लयोऽत्यन्तसृष्टिर्वा प्रसज्येत। दुःखान्वितस्य अविशुद्धिक्षयातिशयव्याप्तस्य समर्थलीलाकृतत्वानुपपत्तेश्च। भिन्नत्वे हेतवस्तु 'जननमरणकरणानां प्रतिनियमात्, अयुगपत्प्रवृत्तेः, त्रैगुण्यविपर्ययात्, परकीयसुखाद्यननुसन्धानाच्चेति॥

अथ भेदाऽप्रामाण्यमन्तारः प्रष्टव्याः—किं भेदो नास्त्येव, अस्ति चेत्प्रातिभासिको वा व्यावहारिकः?, किं वा जडानामेव न तु चेतनानां भेद इति?॥

तत्र न प्रथमपक्षः, 'घटो न पटः' इति सार्वजनीनसिद्धस्याऽपलापाऽसंभवात्, 'देवदत्तो न यज्ञदत्त' इति चेतनयोरपि भेदसिद्धेश्च। ननु स भ्रम इति चेन्न। उत्तरकालीनेन 'घटः पट एवे' त्यादिबाधकग्रहाऽभावेन भ्रमत्वाऽभावात्, भेदबाधकयुक्त्यभावाच्च।

'भेदो नास्ति, अन्यदेव भेदत्वेन प्रत्यभादि' त्यादिबाधकानान्तु भेदविषयकत्वेन भेदस्य दुरपह्नवात् ॥

ननु भेदो भिन्नेऽभिन्ने वा ?, आद्ये आत्माश्रयः, अन्त्ये विरोधः, इति चेत् ? किमिदं दूषणं सदूषणे निर्दूषणे वा ?, आद्ये आत्माश्रयः, अन्त्ये विरोधः इति, तथा च भेदाऽभ्युपगम एव ॥

ननु भेदः प्रातिभासिक एव, रंगे रजतवदिति चेन्न । उत्तरकालं बाधाऽनवतारात् । ननु तमोनैल्यादिवत् प्रातिभासिकत्वं स्यादिति चेन्न । तव तत्राऽन्यत्र प्रसिद्धनैल्यारोपात्, भेदस्य त्वप्रसिद्धस्याऽऽसंभवात्, प्रसिद्धस्य त्वनादिसिद्धस्याऽऽरोपाऽनपेक्षणं, तत्रापि सिद्धेः ॥ ननु व्यावहारिक एव सः, इति चेत् ? तत्त्वं यदि यथार्थस्फुरणविषयाऽभावत्वम्, तस्य वस्तुसतो निषेधाऽयोगात्, अन्यादृशस्य तु प्रातिभासिकपतितस्य फलतः सिद्धेर्लभात् ॥

किञ्च—'आत्मत्वं नानाव्यक्तिनिष्ठं, जातित्वात्, पृथिवीत्ववत्'—इत्यानेनाऽऽत्मपरस्परभेदः । 'जीवः, ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं, ब्रह्माऽननुसंहितदुःखाऽनुसन्धातृत्वात्, व्यतिरेकेण ब्रह्मवत्'-इत्यनेन जीवधर्मिकेश्वरभेदः । 'ब्रह्म, जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं, जीवानुसंहितदुःखाननुसन्धातृत्वात्, व्यतिरेकेण जीववत्'-इत्यनेन ईश्वरधर्मिकजीवभेदः । 'घटः पटप्रतियोगिकतात्त्विकतादात्म्याऽधिकरणं न भवति, प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नपटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वात्, व्यतिरेकेण पटवदि'त्यनेन घटपटादिभेदश्च सिद्ध्यति ॥

श्रुतयश्च—'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनाम्' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद' 'सर्व एवात्मानः समर्पिताः' इत्याद्या भेदं प्रतिपादयन्ति । 'विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'त्यत्र मुक्तावपि भेदगर्भसाम्यबोधनाच्च । 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति' इति भेदज्ञानस्य मोक्षहेतुत्वोक्तेश्च । 'स भुंक्ते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'इत्यनेनापि मुक्तौ भेदावगमात् ।

अत एव च शाश्वतं लक्षणं स्वरूपं यस्यैतादृशः स इति दर्शयति—शाश्वतेति । शाश्वतत्वं च—करणकारणप्रयोजकद्वारफलाद्युत्पत्तिध्वंसाऽपेक्षसाक्षात्परम्परोत्पत्तिध्वंसाऽप्रतियोगिस्थितिकैकस्वरूपत्वम्, तद्वत् स्वरूपं यस्येत्यर्थः ॥ १०७ ॥

**परमात्मा तु सर्वज्ञः सर्वकर्मफलप्रदः ।**
**वेदवक्ता गुरुश्चाप्तो भजनीयो नियामकः ॥१०८॥**

तदेवमुपासकं निरूप्योपास्यं निरूपयितुमाह—परमात्मेति । नित्यसर्वविषयकप्रत्यक्षवत्त्वं परमात्मनो लक्षणम् 'यः सर्वज्ञः सर्ववित्' 'यस्य ज्ञानमयं तपः' इतिश्रुतेः । ननु विषयसापेक्षं प्रत्यक्षं विषयाऽभावे प्रलयादौ नश्येत्, संस्कारद्वारकस्मरणवत्त्वे परमेश्वरत्वहानिः, तत्तद्देशकालसापेक्षज्ञानानामानन्त्ये नित्यैकज्ञानवत्त्वविरोधः, ज्ञानविषयकज्ञानस्य पूर्वविषयविषयकत्वनियमात् अस्मदीयभ्रान्त्यादिविषयकज्ञानवत्त्वे नित्ययथार्थज्ञानवत्त्वहानिः, तदीयप्रामाण्यस्य परतोग्राह्यत्वेऽनुमादिमत्त्वेनाऽस्मदादिभ्योऽवैलक्षण्यापत्तिरिति चेन्न ।

परमात्मनः सच्चिदानन्दस्वरूपत्वेन चित्स्वरूपाऽभिन्ननित्यप्रकाशस्यैव विषयनिरपेक्षशाश्वतिकाऽऽत्मलाभात्मकस्य धर्मात्मकनित्यप्रकाशस्यापि विषयनिरूप्यप्रकाशकतावत्त्वाऽनंगीकारात्, तस्य तदनावश्यकत्वात्, स्थूलसूक्ष्मयावत्संसारव्यवस्थाऽन्यथाऽनुपपत्त्या विलक्षणस्वतःसिद्धप्रकाशकताया एव तत्राऽङ्गीकारात् । ननु कथं तर्हि निर्विषयस्य ज्ञानत्वं परमेश्वरस्य सर्वज्ञत्वं चेति चेन्न । विलक्षणसांसिद्धिकविषयितावत्त्वात्, असमानकालीनानाभपि तथा तथा स्वज्ञाने भासनाच्च । अनित्यज्ञानानां या विषयाऽधीनात्मलाभात् विषयाकारता ततो नित्यज्ञानस्य स्वस्य अधीनतया यत् विषयेष्वात्मलाभत्वं तदधीनप्रकाशत्वात्मकनित्याकारताया विलक्षणत्वात् । तथा च तस्य नाशाऽयोगात् । अत एव च स्मरणाऽनपेक्षणात् संस्काराऽऽधायकत्वस्याऽपि तत्र ज्ञानेऽनंगीकारात् । विषयाणामेव तदीयज्ञानसापेक्षत्वेन विषयसापेक्षताया नित्यज्ञानेऽभावात् आनन्त्याऽभावादेव तस्य नित्यैकज्ञानत्वेऽविरोधात् । तदीयज्ञानेऽस्मदीयभ्रान्त्यादौ विषयेऽपि भ्रान्तित्ववति भ्रान्तित्वप्रकारकत्वस्यैव

यथावस्थितव्यवहाराऽनुगुणज्ञानत्वस्यैव वा सत्त्वेन सर्वत्र तथा प्रामाण्याऽव्यभिचारात्। स्वतःप्रामाण्यं च स्वाधीनज्ञाप्यवैशिष्ट्याऽऽकारकस्वविषयत्वम्, यद्वा-स्वाश्रयाऽऽकर्षिचिदंशाऽऽकृष्टग्रहविषयत्वं स्वतः-प्रमात्वम्, अतः एकस्याऽपि स्वरूपसतो यथार्थज्ञाने तत्र नाऽव्याप्तिः। तथा च नाऽनुमादिमत्त्वमीश्वर-स्येति ॥

ईदृशसार्वज्ञ्यादेव सर्वजीवानां शुक्लकृष्णादि-कर्मणां विधिनिषेधविषयाणां यानि शीतोष्णभोगा-त्मकानि फलानि तेषां प्रापकोऽपि स एव परमात्मा भवतीत्याह—सर्वकर्मफलप्रद इति। सर्वकर्माऽऽ-राध्यत्वं सर्वकर्मफलप्रदत्वं च लक्षणम्। यमादिश-रीरकः सः सर्वेषां न्यायकर्ता भवतीति भावः। अन्तर्यामितया साक्षी अपि स एवेति बोध्यम्। "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाक-शीति"इति श्रुतेः। ननु कर्मणामेव फलप्रदत्वमस्तु, किं तत्र परमात्मकल्पनयेति चेन्न। चिरविनष्टकर्मणां कालान्तरभाव्यनागताऽवस्थभोगादिजनकत्वाऽन्यथाऽ-नुपपत्त्याऽदृष्टस्य व्यापारत्वसिद्धेस्तत्सामानाधि-करण्येन कर्मणामपि नियतफलकत्वं वक्तव्यम्। तत्र नियमः 'अस्येदं फलमि'तिव्याप्तिज्ञानं, तच्चाऽ-नित्याऽल्पज्ञानां न संभवतीति नित्यप्रत्यक्षनियमवान् परमात्मा कल्प्यते, तस्यैव सर्वज्ञचेतनस्य कार्य-कारणयोरेकाऽधिकरणप्राप्तिकत्वं जीवाऽदृष्टसापेक्षं युक्तम्, स्वभावकालादीनां जडत्वेन तथाविधत्वाऽ-भावात्।

वेदवक्तेति। सर्वज्ञत्वादेव त्रिगुणसृष्टिप्राण्युप-देशात्मकवेदस्याऽलीकवाक्यसमुदायात्मकस्य यथार्थ-बोधस्य वक्ता-सृष्ट्यारम्भे आदिकवये ब्रह्मणे उप-देष्टा स एवेत्यर्थः। 'वेदः पौरुषेयः,वाक्यसमूहत्वात्,-भारतादिवत्'। पौरुषेयत्वं च सर्वज्ञपुरुषकृतसजाती-योच्चारणाऽनपेक्षोच्चारणविषयत्वं 'छन्दांसि जज्ञिरे तस्मात्, यजुस्तस्मादजायत', 'तस्मात्तपस्तेपानात् त्रयो वेदा अजायन्त' इति पौरुषेयत्वश्रुतेः। तथा च सर्गादौ वेदवाक्याधीनशाब्दबोधे ईश्वरीयतात्पर्य-ज्ञानं कारणम्। विध्यर्थः तात्पर्यमेव तावद्गर्भे इव श्रुतिकुमार्याः पुंयोगे मानम्। अतः स्मृतिरपि 'प्रति-मन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति। पौरुषे-यत्वेऽपि परमपुरुषस्य नित्यसर्वज्ञत्वेन निर्दोषत्वम्। अत एव स्वयंभूशिवादीनां 'स्वयम्भूरेव भगवान् वेदो गीतस्त्वया पुरा। शिवादिऋषिपर्यन्ताः स्मर्तारोऽ-स्य न कारकाः' इति वाक्येन वेदकर्तृत्वं निषिद्धम्। अतः 'वेदो,-नित्यः,-नित्यशब्दात्मकत्वात्, 'वेदः,-अपौरुषेयः,-अस्मर्यमाणकर्तृकत्वात्' 'वेदः-नित्यः,-तच्छब्दात्मकत्वात्' इत्यपि खण्डितम्, हेत्वसिद्धेः। शब्दानाम् अनित्यत्वात्, कारणव्यापारात्पूर्वम-सत्त्वाच्चेति ॥

स च परमात्मा गुरुः, पूर्वपूर्वसर्गाद्युत्पन्नानां ब्रह्मविष्णुमहेशादीनामपि विद्यया ज्ञाननेत्रप्रदः पिता भवति, तस्य नित्यसर्वज्ञत्वादिति। अत एव चाऽऽ-प्तोऽपि स एव, ज्ञानवतोऽपि गुरोरयथार्थोपदेशक-र्तृत्वे प्रतारकत्वेनाऽनाप्तत्वं स्यात्, अयं गुरुस्तु आप्तः-यथार्थवक्ता भवति। अत एव 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽ-यनाय' 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपा-सीत' 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्यादिभिः परमात्मना कृतेनश्रवणमनन-निदिध्यासनवेदनोपासनाद्यात्मकभक्त्युपदेशेन मुमुक्षू-णां भजनीय;-भक्तिविषयः स एव परमात्मेति ॥ तथा च मुमुक्षूपास्यत्वं लक्षणं बोध्यम् ॥ नियामक इति। सर्वपदार्थानां स्वाऽधीनयथावत्प्रयोजननि-रूपकः, सर्वान्तरात्मा सन् तत्त्वानां तत्त्वनिरूपकोऽ-पीत्यर्थः ॥ १०८ ॥

**सच्चिदानन्दलक्षः स सर्वाधारश्च शक्तिभिः।**
**एकधा बहुधा दिव्यः प्रतिरूपं विभुर्महान् ॥**

सच्चिदानन्देति। सत्त्वं चित्त्वम् आनन्दत्वं च स्वरूपलक्षणम् यस्यैतादृशः। सत्त्वं चाऽत्र समय-त्रयपरिच्छेदाऽननुयोगित्वे सति सर्वदैकरूपत्वे सति सार्वभौमीयसंघाताऽसंघाताऽऽयत्तपरस्पर-सापेक्षसत्ताऽविनाभूतविद्यमानत्वम्, तच्च पर-मात्मन्येव, तस्य संघाताऽदृष्टाद्यनपेक्षत्वात् ॥ चित्त्वं चाऽत्र अन्यनिरपेक्षनित्यस्वयंप्रकाशत्वे सति सापेक्षज्ञानप्रभायोगिचिद्विनाभूतयावदवभासकद्रव्य-

त्वम्। तच्च परमात्मन्येव। सापेक्षप्रभावज्जीवात्मानम् अनपेक्ष्याऽपि जडचेतनाऽवभासकद्रव्यत्वस्य परमात्मचिति सत्त्वात् ॥ आनन्दत्वम्-आनन्दस्वरूपत्वम्, तच्च संगमसुखाऽऽकर्षितृप्तिसामान्याऽव्यभिचार्य्यानन्दविनाभूतनिरवधिकनिरतिशयनित्यसुखरूपत्वम्, तदेतत्परमात्मन्येव, मनुष्यानन्दमारभ्य कथिता हिरण्यगर्भानन्दपर्यन्ता एकादशानन्दाः शतगुणोत्तरोत्तराः सातिशयाः सर्वे, ब्रह्मानन्दस्य तु जीवस्य तादृशसंगमसुखाऽऽकर्षितृप्तिमदानन्दांशम् अनपेक्ष्याऽपि स्वतन्त्रो नित्यनिरतिशय आनन्द इति। ताश्च श्रुतयो यथा—'एष ह्येवाऽऽनन्दयाति, सषाऽऽनन्दस्य मीमांसा भवति,' युवा स्यात्साधुयुवाऽध्यापकः' आशिष्ठो द्रढिष्ठो बलिष्ठः, तस्येयं पृथ्वी सर्वा वित्तस्य पूर्णा स्यात्, स एको मानुष आनन्दः', 'ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं मनुष्यगन्धर्वाणामानन्दाः, स एको देवगन्धर्वाणामानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं देवगन्धर्वाणामानन्दाः, स एकः पितॄणां चिरलोकलोकानामानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः, स एकः आजानजानां देवानामानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतम् आजानजानां देवानामानन्दाः, स एकः कर्मदेवानामानन्दः, यो कर्मणा देवानपियन्ति, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं कर्मदेवानामानन्दाः, स एको देवानामानन्दः, श्रोत्रियस्य चाकामहतस्य, ते ये शतं देवानामानन्दाः स एको इन्द्रस्याऽऽनन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतमिन्द्रस्याऽऽनन्दाः, स एको बृहस्पतेरानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं बृहस्पतेरानन्दाः, स एकः प्रजापतेरानन्दः, श्रोत्रियस्य चाऽकामहतस्य, ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः, श्रोत्रियस्य चाऽकामहतस्य, स य एवंवित्, अस्माल्लोकात्प्रेत्य, एतमानन्दमयमात्मानमुपसंक्रामति, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'त्याद्याः ॥

सः सर्वाधार इति। ईश्वरीयविशेषणताख्याऽन्तर्यामितासम्बन्धेन सर्वेषां पदार्थानामाधार इत्यर्थः। अनेन परमेश्वरे विलक्षणाधारता दर्शिता, तज्जनकताऽवच्छेदकं विलक्षणमैश्वर्यम्, तच्च सर्वज्ञतातृप्त्यनादिबोधस्वतन्त्रतानित्याऽलुप्तदृष्टचनन्तशक्त्यन्यतमरूपम्। यद्वा-ज्ञानशक्तिबलैश्वर्यवीर्यतेजोऽन्यतमरूपम्, यद्वा-अपहतपाप्मत्व-विजरत्वविमृत्युत्वाऽविजिघत्सत्वाऽपिपासत्वसत्यकामत्वसत्यसंकल्पत्वाऽन्यतमरूपम्, प्रत्येकमेकमेवेति वा। ननु कथमस्यैतादृशं सर्वाधारत्वमित्यत आह—शक्तिभिरिति। 'स एको जालवानीशते ईशनीभिः, 'सर्वान् लोकानीशते ईशनीभिः' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'तिश्रुतेः, यावदैश्वर्यवीर्ययशश्श्रीज्ञानवैराग्याख्यभगपदबोध्यशक्तिभिर्युक्तत्वात् सर्वाधार इत्यर्थः। 'वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनी'ति विष्णुपुराणाच्च ॥

एकधेति। स व्यापकैकस्वरूपोऽपि परमात्मा सृष्ट्याद्यारम्भे दिव्यविग्रहः एकधा भवति, सृष्टिसमये पुनस्त्रिधा ब्रह्मविष्णुमहेशादिरूपो भवति, एवम् अनिरुद्धप्रद्युम्नसंकर्षणरूपो भवति, एवम् परव्यूहविभवाऽर्चान्तिर्यामिभेदेन पञ्चधा भवति, सप्तधा नवधा चेति षोडशकलो भवति, एकादशरुद्रात्मको भवति, एवं यथेष्टं यथापेक्षम् अनेकस्वरूपो भवति, तथा च श्रुतिः 'स एकधा भवति त्रेधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विंशतिरि'ति ॥ प्रतिरूपमिति। 'रूपं रूपं प्रतिरूपो बभूवे'तिश्रुतेः सर्वरूपाऽनुरूपो भवति ॥ तत्र हेतुमाह—विभुरिति। यतः स विभुर्व्यापकः अत्यन्ताऽभावाऽप्रतियोगी, सर्वत्र वर्तत इति यावत् ॥ १०९ ॥

**क्लेशकर्मविपाकाद्यसंसृष्टः पुरुषोत्तमः।**
**सर्वं शरीरमस्यैव भूताऽऽवेशनयेन हि ॥११०॥**

क्लेशेति। स च परमात्मा अविद्याऽस्मितारागद्वेषाऽभिनिवेशात्मकक्लेशैरसंसृष्टः, शुक्लकृष्णमिश्रकर्मभिरसंसृष्टः, विपाकादिः फलभोगाशा वासना च तद्रहितो भवतीति ॥ पुरुषोत्तम इति। पुरतीति पुरुषः पूर्वसिद्धः, 'पूर्वमेवाऽहमासमिति तत्पुरुषस्य पुरुषत्वमि'तिश्रुतेः। पूरयति भक्तकामानिति वा पुरुः, सीदति पापानीति सः पुरुषः। यद्वा-पुरु बहु सनोति ददातीति पुरुषः। यद्वा-पुरूणि पापानि ओषति दहतीति

पुरुषः। 'स यत्पूर्वोऽस्मात्सर्वान्पाप्मन ओषत् तस्मात्पुरुष' इतिश्रुतेः। यद्वा-पुरुषाकारधारणात् पुरुषः, 'आत्मैवेदमग्र आसीत्पुरुषविध' इतिश्रुतेः। अतिशयेन उत्कृष्टः उत्तमः, यद्वा-उत् नास्ति तमो माया यत्रेत्युत्तमः, तादृशः पुरुषोत्तम इति। यद्वा-पुरुषाभ्यां क्षराऽक्षराभ्यामुत्तमः 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति स्मृतेः। पुरुरूपसंसारे उषन्ति ये चेतनास्तेषामुत्तम इति ज्यायानर्थः॥ सर्वं शरीरमिति। अस्य परमात्मनः सर्वमेव पदार्थजातं शरीरं स्वायत्ततया विधृतं भवति, अत एव स्वाधीनस्य सर्वस्य एतच्छरीरतया व्यपदेशः, यथा वा भूताद्यावेशेन यथा मनुष्यादेर्भूतशरीरतया सर्वोपभोगसम्पत्तिर्भूतस्य भवतीतिवत् यत्र यत्र परमात्मनः शरीराऽभिसन्धानपूर्वकः प्रवेशस्तत्सर्वमस्य शरीरं भवतीति देही परमात्मा भवति, तथा च श्रुतयः-'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याऽऽपः शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याऽग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो दिवि तिष्ठन् दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्याऽऽदित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यश्चन्द्रतारके तिष्ठँश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याऽऽकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यस्तमसि तिष्ठँस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यस्तेजसि तिष्ठँस्तेजोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' 'यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो वाचि तिष्ठन् वाचोऽन्तरो यं वाक् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यश्चक्षुषि तिष्ठँश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यः श्रोत्रे तिष्ठन् श्रोत्रादन्तरो यं श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यस्त्वचि तिष्ठंस्त्वचोऽन्तरो यं त्वङ्न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'यो रेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः', 'अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नाऽन्योऽतोऽस्ति द्रष्टा नाऽन्योऽतोऽस्ति श्रोता नाऽन्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता एष त आत्माऽन्तर्याम्यमृत' इति॥ ११०॥

**यः, तमेव विदित्वाऽतिमृत्युमेति सुभक्तिमान्।**
**परमं पुरुषं दिव्यं प्राप्य नाऽऽवर्तते पुनः॥**

यस्तमेवेति। परमं—सर्वचेतनैः प्राप्यतयाऽभिलषितं सर्वविधनिरतिशयोपरमम्, पुरुषं पुरुषविशेषम् दिव्यं दिव्यविग्रहम् तमेव नियामकं साध्यं परमात्मानं, यो भक्तो, विदित्वा यथावत्तया ज्ञात्वा, इतरभेदविशेष्यज्ञानेन शरीरशरीरिसाक्षात्कारेण

वेति तावत्। सुभक्तिमान् मुमुक्षुः, अतिमृत्युं दुःखत्रयात्यन्ताभावविशिष्ट-स्वात्मसुखानुभवसहकृतंपरमात्मशरणाऽवाप्तिरूपां मुक्तिं प्राप्नोति, यत्प्राप्य पुनः कर्मकृतं संसारभ्रमणं तस्य न भवतीति ॥

अथ कीदृशं परमात्मनो दिव्यं रूपमिति चेत् ? उच्यते--'पराञ्चि तत्त्वानि परात्मरूपाण्यभिन्नतत्त्वान्यपि भक्तिचारात्। पृथक् च बेयानि हरन्ति तज्ज्ञा रसैकशक्तीन्यपृथग्भूतं हि तत् ॥ श्रोत्रस्य श्रोत्रं मनसो मनस्तद् वाचो ह वाक् चक्षुषस्तद्धि चक्षुः। त्वचस्त्वगित्येव तदीयशक्त्यो मुक्तस्य खानामुत ब्रह्मणस्तत् ॥ ज्ञानस्वरूपोऽथ मनःस्वरूपो ज्ञानस्य वित्तिर्मन एव तस्य। तदेव धीर्ह्रीश्च तदेव कामो मेधा तथेच्छा धिषणा कृतिश्च ॥ पुमंकपूर्णेऽपि रतिर्न गुप्ता प्राकाम्यसेव्येऽपि न रूपतः स्त्री। ग्राह्येऽपि तस्मिन्न हृतिः स्ववित्तेर्वियोगयोगेऽपि न तत्त्वव्याहृतिः ॥ अमातृजत्वान्नहि कोषषट्कम् अनन्नकोषान्नहि चित्यचित्यतिः। प्राणः स्वशक्तिस्तदप्राणकस्य काशोऽपि निरावरणात्मभावः ॥ अनन्नग्रासान्नहि मेहनादिकं ततो न गुर्वादि कुतो हि निद्रा। नित्यप्रसन्नस्य कुतोऽप्रसन्नता प्रेष्टचैकभावान्न परेष्टवीनता ॥ हिरण्यकेशाश्च हिरण्यवन्नखाः सुकुन्ददन्ताः नहि योगभागिनः। चिदेकरूपा रमणीयस्वात्मकाः सदैकमानाः प्रविभान्ति तस्य ॥ अगोऽपि गन्ता मनसो जवीयोऽविप्रांस एनं नाऽऽप्नुवन् प्रागुपास्तेः। विप्रेष्टकोऽन्यानत्येति जवीयः तिष्ठन्नचिति चिति चापि ईशः ॥" इत्युक्तप्रकारं ध्येयं गुणातीतब्रह्मोपनिषद्वर्णितम् ॥१११॥

**निःस्पर्शं नीलरूपं च तमो द्रव्यं हि सक्रियम्।**
**पराऽपरविभागाद्याश्रयं रिक्तं प्रसिद्ध्यति ॥**

तमो निरूपयति—निःस्पर्शमिति। स्पर्शरहितत्वे सति नीलरूपवत्त्वं तमसो लक्षणम्। प्रभावारणाय—नीलेति। उत्पन्नविनष्टेऽव्याप्तिवारणाय स्पर्शशून्यनीलवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं विवक्षणीयम् ॥ प्रत्यक्षसिद्धस्य तमसः 'नीलं तमश्चलती' तिप्रतीतेर्नीलरूपवत्त्वाच्चलनक्रियावत्त्वाच्च द्रव्यत्वं सिद्धम्। 'तमः,-द्रव्यं,-समवायेन परत्ववत्त्वात्, अपरत्ववत्त्वात्, विभागवत्त्वात्, संयोगवत्त्वाच्च'। 'तमः,-पृथिव्यनन्तर्भूतं,-गन्धाऽभावाऽविकरणत्वात्,-करकावत्'। 'तमः,-जलाऽनन्तर्भूतं,-शीतस्पर्शाऽभावात्,-घटवत्'। 'तमः,-तेजोऽनन्तर्भूतं,-उष्णस्पर्शाऽभावात्,-घटवत्'। 'तमः,-वाय्वनन्तर्भूतं,-सदागतिमत्त्वाऽभावात्,-घटवत्' स्पर्शाऽभावात्, आकाशवद्वा'। 'तमः,-आकाशकालदिग्देहिमायाऽनन्तर्भूतं,-रूपवत्त्वात्, घटवत्'। 'तमः,-गुणानन्तर्भूतं,-गुणवत्त्वात्'। 'तमो द्रव्यान्तरं कदापि निषेधभानाऽविषयत्वात्, अत एव चाऽऽरोपाऽविषयत्वात् ॥ रिक्तमिति। तथा च-'तमः,-पृथिवीत्वादिमायात्वान्ताऽन्यतमभिन्नद्रव्यविभाजकधर्मवत्,-एतादृशाऽन्यतमशून्यत्वे सति द्रव्यत्वादिति द्रव्यान्तरं सिद्धमिति ॥ ११२ ॥

**निरालोकं ग्रहात्, भङ्गात् साहचर्यस्य सदृशे।**
**प्रतीतेश्च निराबाधात्, शाब्दिक्या गौरवाऽऽहतेः॥**

निरालोकमिति। ननु 'तमः,-न रूपिद्रव्यम्,-आलोकाऽसहकृतचक्षुर्ग्राह्यत्वात्,-आलोकाऽभाववदिति चेन्न। द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षं प्रति आलोकसंयोगस्य न कारणत्वम्, आलोके व्यभिचारात्। किन्त्वालोकतमःप्रभृतिभिन्नद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषप्रत्यक्षे एवेति रूपिद्रव्यभिन्नत्वाऽभाववति आलोके हेतोर्व्यभिचारात्। दिवाभीतानां विशिष्टाऽञ्जनरञ्जिताऽक्षाणाम् आलोकनिरपेक्षचक्षुषैव पदार्थग्रहणादिति ॥ भङ्गादिति। न चाऽऽवश्यकतेजोऽभाव एव तमोऽस्त्विति वाच्यम्। आवश्यकप्रौढतेजोमध्येऽपि उलूकादीनां चक्षुषि अन्धकारोपलब्धेः, प्रचण्डसूर्यदर्शनोत्तरं प्रौढतेजोमध्ये सुचक्षुषामपि अन्धकारोपलब्धेः, अतिक्षुधितानामप्यावश्यकप्रौढतेजोमध्ये नेत्रयोरन्धकारोपलब्धेश्च व्यभिचारात्। निदाघे उष्णवायोः स्वस्पर्शाऽनुपलब्धिवद्वा उत्कटतापे तमसो नीलाऽनुपलब्धेश्च। प्रचण्डाऽप्रचण्डतेजसोरपि परस्परच्छायोपलब्धेश्च। अन्धकाराऽभावस्थले प्रभाया व्याप्तित्वेऽपि तव न प्रभायास्तमोऽभावरूपत्वं, प्रसिद्धस्याऽपह्नोतुमशक्यत्वात्, तथा प्रकृतेऽपि प्रतिसिद्धेः। 'नीलं शार्बरं तमः' इतिप्रतीतेः दोषात्मककारणाऽभावेनाऽसदृशतेजोऽभावविषयकत्वाऽसंभवात्। चक्षुर्मात्रग्राह्यत्वशुक्लभास्वरविरोधित्वयोरभावे तमःसादृश्यकल्पने तमस एव सिद्धेः, पार्थिवरूपसादृश्य-

कल्पनं सदातनैकदृष्टिविषयकत्वादेव बाधितं, क्वचिदन्यपार्थिवानामप्युपलब्धियोगाऽसंभवात् पृथिवीत्वस्य शुक्लमात्रसमवायिकारणतानवच्छेदकत्वमिव कृष्णमात्रसमवायिकारणतानवच्छेदकत्वात्। शुक्लस्य जलमिव पाकजन्यकृष्णतोऽपाकजकृष्णस्य नित्याऽधिकरणतायाः स्पर्शाऽसहकृतायास्तमसि सिद्धत्वात्। आकाशेऽपि नीलिमोपलब्धिस्तमोविषयिण्येव, न तु पार्थिवविषयिणी, तेजोमध्यस्थप्रविरलाऽन्धकारस्य दूरदेशावच्छिन्नस्याऽन्ततो घट्टतया दर्शनात्,-इत्येतत्सर्वमभिप्रेत्योक्तं—साहचर्यस्य सदृशे भङ्गादिति। पृथक्त्वभेदयोः सदृशयोरपि साहचर्येण नैकस्याऽपराऽभावत्वं भवति, न वाऽन्धकाराऽभाव-प्रभयोः कथञ्चित्तव सदृशयोरेकस्याऽपराऽभावात्मकत्वमिति तत्र भंगादेव तमसो न तेजोऽभावस्वरूपत्वमित्यर्थः ॥

प्रतीतेश्चेति। 'नीलं तमश्चलती'ति प्रतीतेः कदाऽप्युत्तरकालीनबाधज्ञानकत्वाऽभावेन प्रामाण्यमेव ॥ शाब्दिक्येति। अनन्ताऽवयवादिकल्पनागौरवं प्रौढप्रकाशकतेजःसामान्याऽभावात्मकत्वकल्पनालाघवं च सार्वजनीनप्रामाणिकतमःपदप्रतीतिप्रयोज्यजिज्ञासाविषयवस्तुविभागव्याप्यव्यापकजात्यादिमदवयवसमवेतधर्मिप्रमात्मककल्पनानां व्यभिचारादिदोषानुद्भावकतया व्यर्थत्वादिफलकत्वाऽभावेन त्वदुक्तस्य गौरवस्याऽदोषत्वात् लाघवस्य चाऽगुणत्वात् इत्यभिप्रेत्योक्तं—गौरवाऽऽहतेरिति। किञ्च-'तमो,-नाऽभावात्मकम्, विध्यात्मकतया वेदनात्' ॥ रात्रिन्दिवविभागाऽन्यथानुपपत्त्या उत्पत्तिध्वंसप्रतियोगित्वेन वस्तुसिद्धेः। आरम्यत्वाऽनारम्यत्वाभ्यां व्याकोपात्, नीलरूपात्मकत्वाऽनुपपत्तेश्च। किञ्च-चाक्षषत्वाच्चाऽसमवेतद्रव्यसमवेतत्वाऽभावात्, आलोकनिरपेक्षज्ञानविषयत्वाच्चाऽवयविसमवेतत्वाऽभावात्। अन्धकारतमस्तिमिरादिपदानां नञ्ञ्नपेक्षभगवन्निर्णीतत्वेन तद्वाच्यस्याऽभावत्वेनाऽभानात्। नहि च कामिनीसाक्षात्कारः सन्निकर्षं लौकिकमलौकिकं विना वा मानसोऽपि संभवति, आलोकाऽनपेक्षस्यापि तस्य सन्निकर्षवत्त्वात् द्रव्यत्वनिर्णयात्। नहि आलोकाऽभाव एव दोषः स्वं तमस्तया दर्शयतीति युक्तम्। 'नीलं तम' इत्यस्याऽप्रमात्वाऽनिर्णयात् तज्जनकत्वाऽभावेन दोषत्वाऽभावात्। तादात्म्येन स्वस्य दोषत्वेऽपि सर्वेषां तादात्म्येन दोषत्वात् प्रमात्वविलोपप्रसंगात्। अभावग्रहे प्रतियोगिज्ञानस्य कारणत्वात् तमोग्रहे प्रतियोगितेजोज्ञानस्य सार्वजनीनत्वेन प्रागभावात् तमसोऽभावत्वाऽभावात्। त्रिरोधिज्ञानयोर्विभिन्नक्षणे आत्मनीव विरोधिनोस्तेजस्तमसोर्गगनादौ विभिन्नपार्थिवादिप्रदेशाऽवच्छेदेनैव सत्त्वात्, विरोधितया चलितयोर्द्वयोरभावे चलनभ्रान्तिकल्पनाया अप्रमात्वात्। ननु 'नीलं तम' इति नित्यभ्रम इति चेन्न। मुक्तिविलोपाऽऽपत्तेः ॥

**अणुरूपं तु नित्यं तदनित्यं द्व्यणुकादिकम्।**
**अन्धकारोऽवतमसच्छाया च विषयस्त्रिधा ॥**

तमो विभजते—अणुरूपमिति। परमाणुरूपं तमो नित्यम्, द्व्यणुकादिकं सर्वमनित्यमवयवि चेति बोध्यम्। राहुप्रभृतीनां गोलकानि तमोव्याप्तपार्थिवानि चन्द्राऽऽद्यावरकाणि भवन्ति, कालरात्रिसन्ध्यानीहारिकादिदैवायतनानि तमोव्याप्तानि, तमोमोहमहामोहतामिस्राऽन्धतामिस्राख्या भूमयोऽपि तमोव्याप्ताः इति ॥

कार्यात्मकतमस्त्रैविध्यमाह—अन्धकारोऽवतमसच्छायेति। स्थूलं गाढं तमः अन्धकारः, स्फीतालोकादिसम्मिश्रितं चक्षुषोऽनुकूलं तमः-अवतमसः, वृक्षादिच्छाया च प्रसिद्धा। तत्र आलोकाऽजन्यनीलविशिष्टचाक्षुषसाक्षात्कारविशेष्यत्वं तमःसामान्यलक्षणम्। बाह्यालोकसम्वलितत्वे सति निरुक्तसाक्षात्कारविशेष्यत्वम् अवतमसो लक्षणम्। आलोकाऽजन्य-प्रतिरोधकवस्तुसापेक्ष-नीलादिविशिष्टचाक्षुषसाक्षात्कारविषयत्वं छायात्वम्। अयं सर्वोऽप्युपभोगसाधनत्वात् बलक्षेपकातिश्रमादिपराभवरोधकविलक्षणपोषणपदोपचरितशक्तिमत्त्वात् विश्रान्तिसाधनत्वाच्च विषय इति ॥ ११४ ॥

**रजस्सत्त्वतमोरूपा मायाऽऽश्चर्यकरी तथा।**
**विभ्वी नित्या समावस्था रजस्सत्त्वतमोगुणा ॥**

मायां निरूपयति—रजस्सत्त्वतमोरूपेति। लोहितं रजः, शुक्लं सत्त्वम्, कृष्णं तमः, स्वरूपं यस्याः सा तदात्मिकेति। रजः-आत्मन्यागन्तुकदुः-

खाऽसाधारणहेतुः कार्यप्रवर्तनाऽनुकूलोत्साहशृङ्गाराद्याश्रयं शाश्वतिकविलक्षणजडस्वरूपम्। सत्त्वं-आत्मन्यागन्तुकसुखाऽसाधारणहेतुः कार्यप्रदर्शनप्रकाशानुकूललाघवप्रसादाश्रयं शाश्वतिकविलक्षणजडस्वरूपम्। तमः-आत्मन्यागन्तुकमोहाऽसाधारणहेतुः कार्यनियमनाऽनुकूलगुरुताद्याश्रयं शाश्वतिकविलक्षणजडस्वरूपम्। एतत् त्रिविधव्यपदेशभावस्वरूपास्मिकेति यावत्। सेयं सात्त्विकराजसतामसभावैः विचित्रार्थकरत्वेन विस्मयनीयत्वात् आश्चर्यकर्त्री भवति। आश्चर्यं च स्वात्मस्वरूपदर्शनाऽवरोधकाऽऽगन्तुकसुखदुःखमोहाऽऽहितवन्धनानुकूलाऽऽकस्मिकचमत्कृतिः। तादृशविलक्षणाऽऽश्चर्याऽसाधारणकारणतावच्छेदकतया मायात्वं सिद्धयतीति॥

सा च सर्वमूर्तसंयोगिनी विभुरूपा भवति, अविभुत्वेऽनन्तात्मनामनन्तसृष्टिषु सात्त्विकराजसतामसाऽनुभवविरोधापत्तिः स्यात्। किञ्च-एकैव स्त्री पतिं सुखयति, सपत्नीं दुःखयति, पुरुषान्तरं च मोहयतीति सर्व एव पदार्था जडाः सुखाद्यभाववन्तोऽपि यद्योगात् सुखादिसम्पादका भवन्ति सा सर्वत्र व्यापिका माया विभ्वी सिद्धयति, सा च सर्वेषां महत्तत्त्वयोगात् सत्त्वरजस्तमोगुणतया मानसप्रत्यक्षसिद्धाऽपि भवति। 'अजामेकां लोहितशुक्लकृष्णाम्' 'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चाऽन्यो मायया सन्निरुद्धः' इतिश्रुतिसिद्धाऽपि भवति। सा च नित्या-उत्पत्तिध्वंसाऽप्रतियोगिनी भवति॥

समावस्थेति। स्वरूपात्मकगुणत्रयस्य साम्यावस्थावत्त्वम् अविषमावस्थावत्त्वं वा तत्सामान्यलक्षणमित्यर्थः। ननु समावस्थायाः कथं सुखादिजनकत्वमत आह—सत्त्वरजस्तमोगुणेति। कार्यात्मकरजोगुणसत्त्वगुणतमोगुणवत्तायास्तत्र सत्त्वात् तादृशकार्यसत्त्वादियोगद्वारा सुखादिजनकत्वादिति। नन्वेकस्या नित्याया गुणत्रयात्मकत्वं द्रव्यरूपाया गुणात्मकत्वं च न युक्तमिति चेन्न। एकस्मिन् द्रव्ये आत्मनि सच्चिदानन्दात्मकतावत्त्वमिव मायायाः स्वभावत्रयात्मकगुणत्रयवत्तायां स्वस्यां तदुपचारात्, तदाकर्षितत्त्वतया सिद्धेस्तत्सारात्मकत्वस्याऽपि सिद्धेः। द्रव्ये गुणोपचारस्तु दर्शनात्तत्प्रसिद्धिनिबन्धन एव। लौकिकाऽऽनन्दतपःशान्तिप्राकाश्यपुण्यशीलतासन्तोषश्रद्दधानत्वाऽऽर्जवत्यागशीलतैश्वर्यादयः सत्त्वगुणसहयोगधर्माः। अस्थिरत्वाऽकार्पण्यसुखदुःखोपसेवनभेददृष्टिपरुषताकाममदमत्सराऽतिवादादयो रजोगुणसहयोगधर्माः। अज्ञानाऽस्मितारागद्वेषभयनिद्राप्रमादाऽऽलस्यादयस्तमोगुणसहयोगधर्माः। तत्तद्धर्मैः प्रतिव्यक्तिनियता व्यापिका माया सिद्धयतीति॥ ननु मायाद्रव्यमेव नास्ति, कुतस्त्रैगुण्यमिति चेन्न। अणुरूपस्याऽऽत्मनः तिर्यङ्नरवृक्षविराडादिशरीरे विभिन्नसृष्टिषु आनखशिखं व्याप्तत्वाऽभावेऽपि सुखाद्युपलब्धेस्तदन्यथाऽनुपपत्त्या प्रतिशरीरव्यापकं किञ्चिदन्तःकरणं ज्ञानोत्तेजकशक्तिमत् द्रव्यं प्रत्यात्मसंयुक्तं सिद्धयति, तथा चाऽनन्ताऽन्तःकरणानामापूरकतया नित्यं महत्तत्त्वात्मकान्तःकरणसमगुणकं मायाद्रव्यं सिद्धम्, त्रैगुण्यमपि च तत्र सिद्धमेवेति॥ ११५॥

**एकाऽप्युपाधिभेदात् सा महत्तत्त्वं मनस्तथा।**
**उपस्थं प्रतिबिम्बश्च दृष्टिबन्ध इतीर्यते॥**

एकेति। सा च माया एकाऽपि नित्याऽपि च शरीरात्मकोपाधिवशात् मुख्यं महत्तत्त्वात्मकमन्तःकरणं शरीरसमपरिमाणकमुच्यते 'जन्यानन्दाऽऽकर्ष्यानन्दानुभवः,—सान्तःकरणकः,—स्वरूपविषयकत्वात्,—स्वरूपचिदनुभववत्' इत्यनेन महत्तत्त्वस्याऽन्तःकरणत्वसिद्धिः। एवं सैव माया पुरीतन्नाड्युपाधिवशात् मनोरूपं सूक्ष्ममन्तःकरणमुच्यते। तत्र सर्वज्ञानेषु महत्तत्त्वस्याऽन्तःकरणत्वेन कारणत्वम्, मनसोऽप्यन्तःकरणत्वेन कारणत्वम्, प्रत्यक्षे तु मनस इन्द्रियत्वेन कारणत्वमिति। अथ सैव माया लिङ्गयोन्यात्मकोपाधिवशात् उपस्थेन्द्रियमुच्यते, वीर्यरजस्सहकृतोपस्थस्य राजसप्रयोज्यकाममात्रसुखग्राहकत्वेन मायिकेन्द्रियत्वसिद्धेः। 'उपस्थम्,—मायिकम्,—मनोभवजन्यराजसान्वितसात्त्विकविलक्षणकामसुखग्राहकत्वात्'। न चोपस्थं वीर्यादेर्विलक्षणस्पर्शमेव गृह्णात्विति वाच्यम्। तस्य सार्वजनीनविलक्षणकामसुखानुभावकत्वात्। त्वचस्तु ततोऽतिरिक्तत्वात्। जडं मन आत्मचैतन्येन प्रकाशितं सत् आत्मने प्रकाशाय भवति, आत्मैव महत्तत्त्वमनोयुक्तः साधनान्तरनैरपेक्ष्येण प्रकाशमानः स्वदत्तान् प्रकाशयतीति। ननूपस्थादिबाह्येन्द्रियाणि महत्तत्त्वसंयुक्तान्येव ज्ञानं जन-

यिष्यन्ति, कृतं मनसेति चेन्न। त्वङ्महत्तत्त्वयोः सर्वदा संयोगसत्त्वेऽपि शरीराऽवयवेषु क्वचित् यत्सन्निधानप्रयुक्तं स्पर्शज्ञानं क्वचित्तु यदसन्निधानप्रयुक्तं स्पर्शाऽज्ञानं तद् औपाधिकसूक्ष्मं करणमान्तरं मन एवेति निर्णयात् 'सुखादिप्रतीतिः,-इन्द्रियजन्या,-साक्षात्कारप्रतीतित्वात्,-रूपप्रतीतिवत्'-इत्यनेन मनस इन्द्रियस्य सिद्धिः, तथा च विषया इन्द्रियैः, तानि मनोमहत्तत्त्वाभ्याम्, ते आत्मना, संयुज्येते, ततः प्रत्यक्षं भवतीति। ननु मनसो गमनाऽभावात् कथं संयोग इति चेन्न। विलक्षणशक्तिमन्मायात्मकं मनः पुरीतत्सम्बद्धनाडीभिर्द्वारभूताभिः उत्तेजकशक्तिद्वारेन्द्रियैः सम्बध्यते इति, इन्द्रियगोलकानामपि आज्ञावाहकनाडीरूपाणां पुरीतत्सम्बन्धाच्च॥

आत्मनोऽणुत्वेऽपि विषयेन्द्रियमनोयोगादन्तःकरणे ज्ञानोत्पादकशक्त्युद्बोधे सति आत्मनि ज्ञानं जायते, अतो महत्तत्त्वं मुख्यम् अन्तःकरणम्। 'महत्तत्त्वं-प्रधानं करणम्, आत्मने साक्षात्पुरुषार्थस्य सम्पादकत्वात्' 'महत्तत्त्वं,-प्रधानं करणम्,-तदन्यकरणेषु पुरुषार्थसाधनतासम्पादकत्वात्,-आत्मनि दशेन्द्रियग्राह्यविभिन्नविषयविषयकसंस्काराऽऽधायकत्वात्, सर्वेन्द्रियसमकालीनसाधारणत्वात् पुरीतद्वर्तमानमनःसमयेऽपि सच्चिदानन्दाऽऽत्मानुभवसाधनत्वात्, उन्मत्तस्य विमानसस्यापि स्वीयानुकूलक्रियासाधनत्वाच्च॥ 'मनो,-न मुख्यान्तःकरणम्,-पुरीतन्नाडीपरिच्छिन्नत्वात्, कोटिद्वयस्मारकत्वात्, स्वाऽदृष्टानुरूपा विषयाः स्वसान्निध्यात् इन्द्रियाणि महत्तत्त्वसन्निधिस्थितानि संचार्यन्ते, ततः आज्ञावाहकसंवेदनावाहकनाड्यो गोलकरूपा उत्तेजिता भवन्ति, ताश्च मनःपरिच्छेदात्मकमनोवहानाड्या संयुक्ता मनोवहामुत्तेजयन्ति, मनश्च हृदयाऽवच्छेदेन महत्तत्त्वात्मकमन्तःकरणमुत्तेजयति, शरीरव्यापकस्य महत्तत्त्वस्य ग्राह्यशक्तिसन्निधाने यदिन्द्रियेण विषय उपात्तस्तद्ग्राह्यशक्त्युत्तेजितसंवेदनादिवाहकनाडीविशिष्टमनोवहास्थमनसा महत्तत्त्वमुत्तेजितं क्रियते। तत्र चाऽऽत्मनो योगाज्ज्ञानं जायत इति। रोमन्थेन पशूनां भुक्तपीतानामेकनाडीत आकृष्य नाड्यन्तराऽनुप्रवेशप्रत्यक्षात् सम्बद्धनाड्यात्मकगोलकानामन्योन्योत्तेजकत्वनिर्णयात्। चेतनाऽधिष्ठितान्तःकरणबाह्यकरणानि तु सञ्चालकमात्राणि, साक्षात्परम्परयाऽपि वा ज्ञानाऽव्यभिचारात्॥

किञ्च—मनसो मनोवहाऽवच्छिन्नत्वेन एकदेशस्थितिकतया द्वित्रिच्छिन्नभुजगादौ युगपत्कम्पनदर्शनात्, शतपदादीनां समानक्षणाऽवच्छेदेन बहुधा गतिसंयोगादिदर्शनात्, विशालवृक्षाणां द्राक् पूर्णजललाभे समानक्षणाऽवच्छेदेन लक्षपत्रेषु प्रसन्नतादिदर्शनात्, सर्वत्र समक्षणे वर्तमानं शरीरसमव्याप्तम् आन्तरं करणान्तरं महत्तत्त्वं सिद्ध्यतीति। ननु तत्र सर्वत्र नानाऽवयवाश्रितवेगवत्प्राणपवनसंयोगादेव क्रियाद्युपपत्तिरिति चेन्न। अनियमात्, व्यभिचाराच्च॥

मीमांसकाः 'मनो-विभु,-निःस्पर्शद्रव्यत्वात्,-आत्मवत्'-इत्याहुः। नव्याः-'अदृष्टविशेषाऽऽकृष्टत्रुटिर्मनः' इत्याहुः। प्राचीनाः-नित्यमणु स्वतन्त्रद्रव्यमिन्द्रियं मनः'-इत्याहुः। सांख्याः-'सात्त्विकाऽहंकारोपादानकमिन्द्रियं सूक्ष्मं मनः' इत्याहुः। तन्न। प्रथममतेऽन्धकारे व्यभिचारात्, द्वितीयमते विनाशयोगे मानसविधुरत्वापत्तेः। तृतीये संयोगस्य प्रादेशिकत्वेन पक्षाऽसिद्धेः। चतुर्थे उपादानत्वस्यैवाऽसिद्धेः अहंकाराऽनंगीकारात्, अहमितिज्ञानेनैव निर्वाहात्, इत्यादि द्रष्टव्यम्॥

प्रतिबिम्बश्चेति। व्यापिकाया मायाया सात्त्विकांऽशस्याऽतिस्वच्छस्य अन्यद्रव्येष्वन्वितस्यैव प्रतिबिम्बाधायकत्वात् तादृशस्वच्छद्रव्यान्तरात्मकोपाध्यवच्छिन्नमायिकसात्त्विकांऽशः प्रतिबिम्ब इति व्यपदेशभाग् भवति, स्थूलद्रव्येषु स्वच्छत्वेऽपि केवलेषु प्रतिबिम्बाधानशक्तेरभावात् 'यत्र मायिकसात्त्विकांशाऽन्वयित्वं तत्रैव स्वच्छताया उभयसंयोगस्य विषयसन्निधेश्च औपाधिकप्रतिबिम्बव्यपदेशे द्वारत्वमिति। ननु प्रतिबिम्बो बिम्बाद् अभिन्नो भिन्नो वा ? अभिन्नत्वे, दर्पणादिगतदोषवत्त्वानुभवविलोपापत्तिः। भिन्नत्वे, बिम्बाधीनत्वाऽनुपपत्तिः। भिन्नाऽभिन्नत्वे तु, विरोधाद् व्याहतिः। तस्मात् स्वच्छद्रव्ये संयुज्य दर्पणादिदोषानादाय परावर्तमानचक्षूरश्मय एव विस्तीर्णा दर्पणादिसन्मुखस्थपदार्थान् गृह्णन्तीति न तत्र प्रतिबिम्बाख्य

मायिकमौपाधिकं तत्त्वमिति चेन्न । बिम्बसन्मुखं मायिकसत्त्वं स्वच्छद्रव्यान्तरोपाधिकं प्रतिबिम्बः, स च बिम्बभिन्नः पदार्थः, प्रतिकृतिचित्रप्रतिमादिवत् । प्रतिमाचित्रादौ शिल्पिचित्रकारबुद्ध्यपेक्षावत्, प्रतिबिम्बे बिम्बसन्निधिमात्राऽपेक्षा, घटपटयोरत्यन्तभिन्नयोरनपेक्षितयोर्न सान्निध्यपेक्षा, बिम्बप्रतिबिम्बयोस्तु सन्निहितैककालीनसापेक्षत्वमेव अधीनत्वं न व्याहतं भवतीति । ननु नीरूपाया मायायाः कथं रूपवत्प्रतिबिम्बस्वरूपतेति चेन्न । औपाधिकरूपस्य तत्र भानात् नीलमाकाशमितिवत् । ननु विविधरूपक्रियाऽऽकृत्यादीनां दर्पणेऽभावात् प्रतिबिम्बे तदनुपपत्तिरिति चेन्न । जपाकुसुमलौहित्यस्य स्फटिके इव उपाधिरूपस्वच्छद्रव्ये बिम्बगतयावद्धर्मधर्मिभावसमानप्रतिबिम्बाऽवतरणात्, तथाहि—स्वच्छपार्थिवजलादिभागमिश्रिता मायोपाधिरूपा सूर्यादिप्रभा बिम्बीययावद्धर्मधर्मिसंघातरूपाऽनुरूपेण परिणता दर्पणादिकाय समर्प्य स्थूला स्फुटा च भवति, तत्र अत्यच्छपार्थिवजलीयतैजसोपाध्यन्वितमाया सर्वथा बिम्बसमानप्रतिबिम्बा भवतीति । पार्थिवादीनां गौणत्वात् मायायाः प्राधान्यात् मायिकं प्रतिबिम्बमिति ॥

दृष्टिबन्ध इति । इन्द्रजालादिस्थलेऽपि मन्त्रादिना दृष्टिबन्धोऽपि तत्कालीनमन्त्रप्रयोज्यपार्थिवाद्यौपाधिकमायिकोत्पन्नविचित्रपदार्थ एव, मारीचसृष्टिमायामृगोऽपि तथाविधमायिकसृष्टिरेव । एवमन्यदपि बोध्यम् ॥ ११६ ॥

**स्वप्नाऽविद्याप्रधानाद्यशक्तिप्रकृतिशब्दभाग् ।**
**नाऽनिर्वाच्या न वा मिथ्या न शक्तिर्न मूलाऽन्यथा ॥**

स्वप्नेति । स्वाऽदृष्टसापेक्ष-कण्ठकूपाऽधोवर्तमानपार्थिवादिपित्तादिभागाद्युपाध्यन्वितमायिकपदार्थास्तत्तत्पुरुषानुभाव्यास्तत्तत्कालावसानाः स्वाप्नपदार्था अपि मायैव अतो मायैव स्वप्नव्यपदेशभाग् । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' इतिश्रुतेः ॥ अविद्येति । अत्र तन्त्रे ईदृशी मायैवाऽविद्याशब्देन ग्राह्या । न तु 'अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखाऽऽत्मख्यातिरविद्ये' तियोगिभिर्मता, न वा 'मलिनसत्त्वप्रधानमज्ञानमविद्ये'ति शांकरमता न वा 'परमेश्वरेच्छाशक्तिर्मायाऽविद्येति निम्बादित्यमता, न वा 'ब्रह्मशक्तिरविद्येति' शुद्धाद्वैतमता च । प्रथमे मते अज्ञानात्मकगुणस्य द्रव्यत्वाऽनुपपत्तेः । द्वितीये,-सत्त्वेन असत्त्वेन सदसत्त्वेन अनिर्वचनीयत्वेन द्रव्यत्वेन चाऽनुपपत्तेः, उत्तरबाधात् अनुभूयमानत्वाद् विरोधाद् अनिर्वचनीयवचनात् गुणत्वाच्च । तृतीये द्रव्यत्वाऽनुपपत्तेः, गुणत्वात्, तद्वत्तया ब्रह्मणोऽब्रह्मत्वप्रसंगाच्च । चतुर्थे तत्सर्वदोषाच्च ॥ प्रधानमिति । पुराणेतिहासेषु यत्प्रधानमुच्यते तदत्र कथिता मायैव ॥ आद्यशक्तिरिति । शाक्तैर्या आद्या शक्तिः संसारकारणमुच्यते साऽप्यत्रोक्ता मायैव ॥ प्रकृतिरिति सांख्यैर्या स्वतन्त्रा प्रकृतिरुच्यते साऽप्येषा मायैव बोध्येति ॥ मतान्तराऽभिमतां मायां निषेधति—नाऽनिर्वाच्येति । सत्त्वेनाऽसत्त्वेन सदसत्त्वेन च निर्वक्तुमशक्यत्वादनिर्वचनीया, स्वाधिकरण( ब्रह्म )निष्ठात्यन्ताभावप्रतियोगिनी मिथ्या चेति शांकरमता । ब्रह्मणोऽखिलसंसारोपादानतायां द्वारं शक्तिरिति विष्णुस्वामिप्रभृतिमता । संसारस्य मूलं कारणमिति कपिलमता । एषा नाऽत्र तत्तन्मततत्त्वस्वरूपाऽङ्गीकृतेत्यर्थः ॥ किन्तु—अन्यथेति । ततो भिन्नरूपेत्यर्थः । सत्त्वरजस्तमआत्मकद्रव्यरूपा सत्त्वरजस्तमोगुणवती नित्या भूताऽकारणं गुणत्वाऽनाश्रया अन्यद्रव्याऽनाश्रया मायाशब्दवाच्या च बोध्येति संक्षेपार्थः ॥ ११७ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डित श्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमेयचिन्तामण्याख्ये प्रथमे प्रत्यक्षखण्डे द्रव्यनिरूपणपरिच्छेदः ॥ ३ ॥

## अथ प्रत्यक्षे खण्डे गुणनिरूपणपरिच्छेदः

**गुणास्तु निर्गुणाः प्रोक्ता निष्क्रिया द्रव्यवृत्तयः ।**
**प्रतीतेश्चाऽनुमानाद्वा गुणत्वं तत्र सिद्ध्यति ॥**

गुणसामान्यं निरूपयति—गुणास्त्विति । यो यो

गुणपदवाच्यः स स इत्यर्थः। गुणत्वावच्छिन्नमिति यावत्॥ निर्गुणा इति। गुणानधिकरणमित्यर्थः। तथा च कर्मभिन्नत्वे सति शक्तिमत्त्वे सति निर्गुणत्वं गुणसामान्यलक्षणं बोध्यम्। निष्क्रिया इति। कर्मानधिकरणमित्यर्थः। तथा च कर्मभिन्नत्वे सति शक्तिमत्त्वे सति निष्क्रियत्वमपि लक्षणं बोध्यम॥ द्रव्यवृत्तय इति। द्रव्यनिरूपितसमवायाऽवच्छिन्नाऽऽधेयतावत्त्वमित्यर्थः। तथा च कर्मत्वशक्तित्वभिन्ना या द्रव्यत्वव्यापकतावच्छेदिका जातिस्तद्वत्त्वमित्यपि लक्षणं बोध्यम्, गगनवृत्तिसमवेता शक्तित्वसत्ताभिन्ना च या जातिस्तद्वत्त्वमित्यपि लक्षणम्। द्रव्याऽविनाभावविशेषणं रूपं गुणः रसो गुणः इत्यादिप्रत्यक्षप्रतीतिसिद्धत्वं गुणत्वस्येत्याह—प्रतीतेश्चेति। ननूक्तप्रतीतेः रूपत्वरसत्वादिविषयकत्वमिति चेन्न। बहुषु प्रवृत्ताऽनुगतगुणविषयकप्रतीतेरतथात्वात्, तस्याः सामान्यविशेषोभयविषयत्वेऽपि सर्वानुगतविशेषणताख्यविषयताया गुणत्वसिद्धिद्वारत्वात्॥ अतीन्द्रियगुणसाधारणं तु, द्रव्यकर्मशक्तिभिन्न-जातिमन्निष्ठकारणतावच्छेदकतया गुणत्वं सिद्ध्यतीत्याह—अनुमानाद्वेति। एतत्सर्वं गुणोद्देशग्रन्थेऽभिहितम्। तथा च गुणत्वजातिमत्त्वं गुणानां साधर्म्यम्। एवं गुणपदवाच्यत्वम्, गुणभिन्नभिन्नत्वं चापि साधर्म्यं बोध्यम्॥ ११८॥

**संख्यापृथक्त्वसंयोगविभागपरिमाणकाऽ—**
**भिधानास्तु गुणा ह्येते सर्वद्रव्येषु वृत्तयः॥११९॥**

दशद्रव्यसाधारणगुणानाह—संख्येति। संख्यादिपञ्चानां दशद्रव्यसमवेतगुणत्वं साधर्म्यमित्यर्थः। लक्षणन्तु तावद्भिन्नभिन्नत्वम्। एवमग्रेऽपि बोध्यम्॥ ११९॥

**गन्धः स्नेहश्च शब्दश्चाऽदृष्टं दुःखं भयं तथा।**
**द्वेषो मोहश्च निद्रा च कामश्च शूरता तथा॥**
**सत्त्वं रजस्तमश्चैते तत्तद्द्रव्यगुणा मताः॥**

एकैकजातीयद्रव्यगुणानाह—गन्ध इति। गन्धः पृथिवीमात्रस्य, स्नेहो जलमात्रस्य, शब्द आकाशस्य, अदृष्टदुःखभयद्वेषमोहनिद्राकामशूरत्वादीनि जीवात्ममात्रस्य, सत्त्वरजस्तमांसि मायामात्रस्य च गुणाः। एकैकजातीयद्रव्यमात्रवृत्तिगुणत्वं साधर्म्यमित्यर्थः। ज्ञानत्वस्पर्शत्वादेरेकैकद्रव्यनिरूपितकार्यतावच्छेदकत्वाऽभावान्न ज्ञानस्पर्शादेस्तथात्वमिति॥ १२०॥

**गन्धरूपरसस्पर्शाऽपरत्वपरतास्तथा॥१२१॥**
**स्वच्छत्वलघुताभारद्रवत्ववेगरूक्षताः।**
**संस्थितिस्थापकः स्नेहोऽदृष्टं द्वेषो भयं तथा॥१२२॥**
**कामो दुःखं च मोहश्च शूरता मूर्तवृत्तयः।**

मूर्तद्रव्यगुणानाह—गन्धेति। मूर्तत्वं क्रियावत्त्वम् अपकृष्टपरिमाणवत्त्वं, परममहत्परिमाणाऽनधिकरणद्रव्यत्वं वा। एतेषां मूर्तद्रव्यसमवेतगुणत्वं साधर्म्यमित्यर्थः। अमूर्तद्रव्यनिरूपिताऽऽधेयत्वाऽभाववद्गुणत्वमिति तात्पर्यम्॥ १२१॥ १२२॥

**शब्दः परमहत्त्वं च नित्यज्ञानैषणे कृतिः॥**
**सत्त्वं रजस्तमश्चैतेऽमूर्तमात्रगुणाः स्मृताः।**

अमूर्तद्रव्यगुणानाह—शब्द इति। एषणा नित्येच्छा, नित्यानन्दोऽपि ग्राह्यः, तथा च—शब्द आकाशे, परममहत्परिमाणम् आकाशकालदिक्परमात्ममायासु, नित्यज्ञानकृतिसुखेच्छाः परमात्मनि, सत्त्वरजस्तमांसि मायायाम्, इत्येवम् अमूर्तद्रव्यमात्रगुणत्वं साधर्म्यम् बोध्यम्। अमूर्तत्वं—परममहत्परिमाणवत्त्वम्। मूर्तद्रव्यनिरूपिताऽऽधेयत्वाऽभाववद्गुणत्वमिति तात्पर्यम्॥ १२३॥

**द्वित्वादिकास्तु याः संख्या द्विपृथक्त्वादयस्तथा॥**
**संयोगप्रविभागौ तेऽनेकवृत्तिगुणा मताः।**

द्रव्यद्वयादिवृत्तिगुणानाह—द्वित्वादिकास्त्विति। द्वित्वादिपरार्धान्ता बहुत्वानि चेति या याः संख्याः, द्विपृथक्त्वादिपरार्धपृथक्त्वान्ता ये ये पृथक्त्वात्मका गुणाः, संयोगाः, विभागाश्चैते एकभिन्नद्रव्यवृत्तिगुणा बोध्याः। त्रित्वादिसंख्याः, त्रिपृथक्त्वादयः, त्रिसंयोगावयश्च त्रिवृत्तयः, एवं चतुःप्रभृतिवृत्तित्वमप्यूह्यम। एकत्वभिन्नसंख्याविशिष्टद्रव्यवृत्तिगुणत्वं साधर्म्यमित्यर्थः॥ १२४॥

**तदन्यास्तु गुणाः सर्वे एकैकवृत्तयो मताः॥**

द्रव्यद्वयाऽऽश्रयानपेक्षगुणानाह—तदन्यास्त्विति।

अनेकवृत्तिगुणान्यगुणा इत्यर्थः। तथा च—गन्धरस-रूपस्पर्शस्नेहशब्दैकत्वसंख्यापरिमाणैकपृथक्त्वपरत्वाऽपरत्वगुरुत्वलघुत्वस्वच्छत्वद्रवत्वरूक्षत्वज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्कारकामभयमोहशूरत्वनिद्रासत्त्वरजस्तमसाम् आश्रयद्वयाऽनपेक्षगुणत्वं साधर्म्यमित्यर्थः। स्वात्मकतत्तदाश्रयाऽन्योन्याभावव्यापकाऽत्यन्ताभावप्रतियोगित्वमिति यावत् ॥

**गन्धरूपरसस्पर्शाः स्नेहो नैमित्तिको द्रवः।**
**शब्दबुद्धिसुखेच्छाश्च दुःखद्वेषप्रयत्नकाः॥**
**अदृष्टं भावनाकाममोहनिद्राभयानि च।**
**शौर्यं तमो रजस्सत्त्वं विशेषगुणसंज्ञकाः॥**

विशेषगुणानाह—एतेषां चतुर्विंशतिगुणानां विशेषगुणत्वं साधर्म्यमित्यर्थः। विशेषः—व्यवच्छेदो व्यावृत्तिः, तत्प्रयोजनका गुणा इत्यर्थः। तत्र गन्धः पृथ्वीं, गन्धाऽसहचरितरसो जलं, उभयाऽसहचरितरूपं तेजः, त्रिकाऽसहचरितस्पर्शो वायुं, स्नेहो जलं, नैमित्तिकद्रवत्वं पृथ्वीं, शब्दो गगनं, बुद्ध्यादय आत्मानं, तमआदयो मायां, च तत्तदितरेभ्यो व्यावर्त्तयन्ति, एवं शीतस्पर्शो जलम्, उष्णस्पर्शस्तेजः, नित्यज्ञानादयश्च परमात्मानं व्यावर्त्तयन्तीति तेऽपि विशेषगुणाः। विशेषगुणत्वं च स्वाश्रयसमानाधिकरणयत्किञ्चिज्जातिव्यापकतावच्छेदिका या स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाधिमन्निष्ठेतरभेदव्याप्यतावच्छेदिका गुणत्वसाक्षाद्व्याप्या जातिस्तद्वत्त्वम्। स्वं गन्धत्वरूपत्वादिः, यत्किञ्चिज्जातयःमृगमदमललोहरजतसुवर्णमरकतमाणिक्यकपिलकर्बुरवस्तुप्रभृतिनिष्ठा वैजात्यरूपाश्च, द्रव्यविभाजकोपाधिश्च पृथिवीत्वादिः। इतरभेदव्याप्यो गन्धादिरिति ॥ १२६ ॥ १२७ ॥

**संख्यापृथक्त्वसंयोगविभागा रूक्षता तथा।**
**स्वच्छता लाघवं भारः परत्वं चाऽपरत्वकम्॥**
**सांसिद्धिकद्रवो वेगः स्थितिस्थापक इत्यपि।**
**परिमाणश्च सामान्यगुणवाच्या इमे मताः॥**

सामान्यगुणानाह—संख्येति। एतेषां चतुर्दशानां सामान्यगुणत्वं साधर्म्यम्। सामान्यः—द्रव्यविभाजकधर्माऽवच्छिन्नस्याऽव्यावर्तकः। तथा च तादृशविशेषगुणभिन्नगुणत्वं सामान्यगुणत्वं बोध्यम्। लक्षणं तु तावद्भिन्नभिन्नत्वमिति ॥ १२८ ॥ १२९ ॥

**स्थितिस्थापकरूक्षत्वस्नेहवेगद्रवत्वक-**
**पराऽपरत्वसंयोगविभागपरिमाणकाः ॥१३०॥**
**संख्यापृथक्त्वलघुताभारा द्वीन्द्रियगोचराः।**

द्वीन्द्रियगोचरगुणानाह — स्थितिस्थापकेति। एतेषां चतुर्दशगुणानां चक्षुस्त्वगुभयेन्द्रियग्राह्यत्वं साधर्म्यं बोध्यम्॥ ननु लघुत्वभारयोरतीन्द्रियत्वमेव, 'एतावान् भारः', 'एतावल्लघुत्वमि'त्यनिर्णयादिति चेन्न। घटदण्डादिपरिमाणस्य प्रत्यक्षेऽपि तत्र इयत्ताया अप्रत्यक्षात् अनुमेयत्वमिव वह्न्यादिगतलाघवस्य पृथिव्यादिगतगुरुत्वस्य च प्रत्यक्षे तत्रत्येयत्तायास्तूलादिनाऽनुमेयत्वात्। इयत्ता च 'इयानिति-ज्ञानीयविलक्षणविषयतैव। प्रत्यक्षज्ञानीयविषयताया अपि प्रत्यक्षत्वमेवेति नियमाऽभावात्, विषयतास्थितिकाले ज्ञानस्यैव ध्वंसात्, तत्राऽपेक्षाबुद्धिस्वीकारे वा तयाऽपि इयत्ताया अनिर्णयाऽनुभवात् तूलाद्युपयोगस्यापरिहार्यत्वाच्च भारे इयत्ताया अनुमेयत्वमेव, तथा हि 'अयं भारः-प्रस्थनिरूपितेयत्तावान्, प्राक्सिद्धप्रस्थतोलितद्रव्यवृत्तिभारत्वात्, भारान्तरवदि'ति ॥ १३० ॥

**गन्धरूपरसस्पर्शशब्दस्वच्छत्वशूरताः ॥**
**कदुःखद्वेषकामेच्छामोहनिद्राभयास्तथा।**
**ज्ञानं रजस्तमः सत्त्वम् एकैकेन्द्रियगोचराः॥**

एकैकेन्द्रियग्राह्यगुणानाह—गन्धरूपेति। घ्राणेन गन्धः, चक्षुषा रूपस्वच्छत्वे, रसनया रसः, त्वचा स्पर्शः, श्रोत्रेण शब्दः, मनसा शूरतादयो गृह्यन्ते, इत्येवमेकैकेन्द्रियग्राह्यत्वमेतेषां साधर्म्यं बोध्यम्॥

**भावनाऽदृष्टजीवत्वयोनियत्ना अतीन्द्रियाः।**

अतीन्द्रियगुणानाह—भावनेति। भावनाख्यसंस्कारो धर्माऽधर्मौ जीवनयोनियत्नश्चाऽतीन्द्रियाः। एतेषां साक्षात्कारनिरूपितलौकिकविषयताशून्यगुणवृत्तिजातिमत्त्वं साधर्म्यमित्यर्थः॥

**गुणा द्रव्येषु नित्येषुसमवेताः समुद्भवाः ॥१३३॥**
**अवयवगुणाऽजन्या एते तु परिकीर्तिताः ।**

अवयवगुणाऽजन्यद्रव्यगुणानाह—गुणा इति ।, परमाणूनां ये जन्या गन्धादयो गुणा ये चाकाशादीनां जन्याः समवेताश्च शब्दज्ञानादिसत्त्वादयो गुणास्तेषां सर्वेषां स्वाश्रयसमवायिकारणसमवेतगुणाऽजन्यगुणत्वं साधर्म्यम्, नित्यद्रव्याणामवयवाऽभावादिति भावः । त एते अकारणगुणोत्पन्ना उच्यन्ते ॥ १३३ ॥

**संख्याजं परिमाणं, चाऽपरत्वं परता, च ये ॥**
**पाकजन्या रसस्पर्शरूपगन्धद्रवाऽच्छता— ।**
**रूक्षताः, कर्मजा वेगसंयोजनविभागकाः ॥**
**विभोर्गुणा विशेषा ये आत्मनश्च तथाविधाः ।**
**विजातीयाऽसमवायिकारणेन समुद्भवाः ॥**

अस्वसजातीयाऽसमवायिकारणजन्यगुणानाह—संख्याजमिति । संख्यामात्रप्रचयमात्रजन्यानि द्व्यणुकत्र्यणुकतूलादिपरिमाणानि, कालदिशोः पिण्डादिसंयोगजन्ये परत्वाऽपरत्वे, विजातीयतेजःसंयोगात्मकपाकजन्या गन्धरसरूपस्पर्शनैमित्तिकद्रवत्वस्वच्छत्वरूक्षताः, क्रियाजन्या वेगसंयोगविभागाः, अभिघातजन्यो बिम्बाकाशे शब्दः, इन्द्रियसंयोगजन्या विभ्व्यामायायास्सत्त्वरजस्तमांसि, मनोमहत्तत्त्वसंयोगजन्याश्च आत्मनो विशेषगुणाः ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनाकाममोहनिद्राभयशूरताश्च, एतेषां स्वाश्रयं यद् द्रव्यं तद्वृत्ति स्वविजातीयं यद् असमवायिकारणं तज्जन्यगुणत्वं साधर्म्यमित्यर्थः । वैजात्यं स्ववृत्तिगुणत्वव्याप्यगुणविभाजकधर्मेण बोध्यम् ॥ १३४–१३६ ॥

**अपाकजा रसस्पर्शरूपगन्धद्रवत्वक— ।**
**स्वच्छतारूक्षताः, संख्याप्रचयाऽनुद्भवं च यत् ॥**
**परिमाणं, क्रियाऽजन्या वेगयोगविभागकाः ।**
**संख्या पृथक्त्वगुरुते स्थितिस्थापकलाघवे ॥**
**स्नेहश्चैतेऽसमवायिसजातीयगुणोद्भवाः ।**

सजातीयाऽसमवायिकारणगुणजन्यगुणानाह—अपाकजा इति । जन्यत्वं सर्वत्र बोध्यम् । तथा च जन्या अपाकजा रसस्पर्शरूपगन्धद्रवत्वस्वच्छत्वरूक्षताः, जन्यं च संख्यासंयोगाऽनुद्भवं परिमाणम्, जन्याश्च कर्माऽजन्याः संयोगविभागवेगाः, जन्याश्च संख्यापृथक्त्वगुरुत्वस्थितिस्थापकलघुत्वस्नेहाः, एतेषां स्वाश्रयसमवायिकारणनिष्ठस्वसजातीयाऽसमवायिकारणगुणप्रक्रमजन्यगुणत्वं साधर्म्यमित्यर्थः ॥ १३७-३८ ॥

**उक्ता ह्येते गुणाः, शब्दः संयोगाऽयोगजेतरः ॥**
**गुणास्ते त्वसमवायिहेतवः खलु सम्मताः ।**

असमवायिकारणगुणानाह—उक्ता ह्येते इति । अपाकजा रसस्पर्शरूपगन्धद्रवत्वस्वच्छतारूक्षताः, संख्याप्रचयाऽनुद्भवं परिमाणं, कर्माऽजन्यसंयोगवियोगवेगाः, संख्यापृथक्त्वगुरुत्वलघुत्वस्थितिस्थापकस्नेहाः, संयोगविभागाऽजन्यः शब्दश्च, इत्येतेषाम् असमवायिकारणत्वं साधर्म्यम्, घटात्मकाऽवयविस्थरूपरसस्पर्शगन्धान्प्रति कपालात्मकाऽवयवस्थरूपरसस्पर्शगन्धाः असमवायिकारणानि, घटपरिमाणं प्रति कपालपरिमाणमसमवायिकारणम्, उत्तरोत्तरशब्दं प्रति पूर्वपूर्वशब्दः असमवायिकारकम्, कटस्थस्थितिस्थापकयत्नं प्रति शलाकापट्टीस्थस्थितिस्थापकयत्नोऽसमवायिकारणम् , अवयविसंख्यापृथक्त्वे प्रति अवयवसंख्यापृथक्त्वेऽसमवायिकारणे, अवयविद्रवत्वं प्रति अवयवद्रवत्वम् असमवायिकारणम् अवयविस्वच्छत्वरूक्षते प्रति अवयवस्वच्छतारूक्षतेऽसमवायिकरणे, अवयवसंयोगविभागवेगा अवयविसंयोगविभागवेगान् प्रति असमवायिकारणानि, अवयवलघुत्वगुरुत्वस्थितिस्थापकस्नेहाः अवयविलघुत्वगुरुत्वस्थितिस्थापकस्नेहान्प्रति असमवायिकारणानि ॥

ननु दिक्संयुक्तकरपादादिपरत्वाऽपरत्वे दिक्संयुक्तपिण्डादिपरत्वाऽपरत्वयोरसमवायिकारणे कल्पनीये इति चेन्न । सति व्यापारेऽवयवानां किञ्चिदपसरणसंभवात् तत्परत्वादिपरिवर्तनात् तत्राऽसमवायिकारणत्वाऽसंभवेन दिक्पिण्डसंयोगस्यैवासमवायिकारणत्वेनाऽङ्गीकारात् ॥

शब्दं प्रति तु भेरीदण्डसंयोगो निमित्तम्, अतः पूर्वः पूर्वः शब्द एवाऽसमवायिकारणम् । परत्वाऽपरत्वयोः दिक्कालपिण्डसंयोगोऽसमवायी, अतो

दिक्कालौ निमित्ते भवतः। सत्त्वरजस्तमांसि प्रति आत्ममायासंयोगोऽसमवायी, माया समवायिहेतुः, विलक्षणविषयेन्द्रियाणां मायया सह संयोगास्तु निमित्तहेतव इति। आत्मविशेषगुणान्प्रति महत्तत्त्व मनआत्मसंयोगोऽसमवायी, अतो ज्ञानादयो निमित्तानीति ॥

ननु शब्दवत् आत्मविशेषगुणान्प्रति आत्मविशेषगुणा एवाऽसमवायिकारणानि भवन्त्विति चेन्न। आत्ममहत्तत्त्वसंयोगस्य अशेषकार्योत्पत्तौ व्याप्त्या सामर्थ्योपलब्धेः। न चैवं बुद्ध्यादेरन्यतरस्य, तस्य प्रतिनियतकार्योत्पत्तावेव सामर्थ्यविधारणात्, आत्माऽन्तःकरणसंयोगस्तु अशेषबुद्ध्युत्पत्तावुपलब्धसामर्थ्य इति स एवाऽसमवायिकारणम्, न जातुचिदन्तःकरणसंयोगादृते ज्ञानादयो भवन्ति। तथा च सुषुप्त्यवस्थाऽवसाने विज्ञानादिकमुत्पद्यते इत्यन्तःकरणसंयोगस्तत्र कारणम्। नन्वेवमपि धर्माऽधर्मयोरशेषज्ञानाद्युत्पत्तौ व्याप्त्या कारणत्वादसमवायित्वं स्यादिति चेन्न। यत्र स्थले कार्यं तत्रैव स्थले समवायिनि वर्तमानं कारणम् असमवायिकारणम्, यथा तन्तुसंयोगः पटस्य। एकत्र स्थितमप्यन्यत्र कार्योत्पादकं तु निमित्तम्, यथा शत्रुदुःखादौ, तथैवाऽदृष्टमपि देशान्तरीयकस्तूरीकर्पूरादौ कारणान्निमित्तम्, तद्वत् करचणादौ दुःखजननात् निमित्तमेव तत्, तत्रैवाऽन्तःकरणत्वगादिसंयोगस्य सत्त्वात् तादृशसंयोगस्याऽसमवायित्वम्, तेन विशेषगुणेष्वन्यथासिद्धिः।

**मायाऽऽत्मनोर्विशेषास्तु गुणा निमित्तहेतवः ॥**

मायाऽऽत्मगुणानाह—मायेति। मायाया विशेषगुणाः सत्त्वरजस्तमांसि, आत्मनो विशेषगुणाः ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनाकामभयमोहशूरत्वनिद्राः, एतेषां साधर्म्यं गुणनिमित्तकारणगुणत्वं बोध्यम्। तत्र सत्त्वस्य सुखे, रजसो दुःखे, तमसो मोहे निमित्तत्वम् ईश्वरज्ञानेच्छाकृतीनां जगन्निमित्तत्वं, जीवात्मज्ञानस्येच्छायामिच्छायाश्च प्रवृत्तौ धर्मस्य सुखेऽधर्मस्य दुःखे सुखदुःखद्वेषाणां ज्ञाने प्रयत्नस्य चेष्टायां सुखे च भावनायाः स्मरणे कामस्य रतिक्रियायां सुखे च भयस्य पलायनादौ दुःखे च मोहस्य जडीभावादौ विपर्ययादौ च शूरत्वस्य युद्धक्रियादौ सुखादौ च निद्रायाश्चाऽऽरामादौ निवृत्तौ च निमित्तकारणत्वमिति ॥ १४० ॥

**गुणा ये त्वसमवायिहेतवः कथिताश्च ते।**
**निमित्तहेतवश्चापि ज्ञेयाः कार्ये विभिन्नके ॥१४१॥**

असमवायिकारणनिमित्तकारणगुणानाह—गुणा ये त्वेति। ये पूर्वोक्ता असमवायिकारणगुणास्तेषां कार्यान्तरेषु निमित्तकारणत्वादपि तदुभयकारणगुणत्वं साधर्म्यमिति बोध्यम् ॥ १४१ ॥

**उष्णस्पर्शो द्रवो वेगो भारः संयोगरूक्षते।**
**विभागः स्वच्छता स्वं त एव द्विविधहेतवः ॥**

तत्तस्यैव गुणस्यैकदा उभयविधकारणत्वमप्याह—उष्णस्पर्श इति। उष्णस्पर्शः उष्णस्पर्शस्याऽसमवायिकारणं, स एव च तदानीं पाकजरूपस्पर्शादौ निमित्तम्। द्रवत्वं द्रवत्वस्यन्दनयोरसमवायि, पिष्टादिसंयोगं प्रति निमित्तम्, वेगो वेगक्रिययोरसमवायी, शब्दजनकसंयोगे निमित्तम्, भारो भारपतनयोरसमवायी, शब्दजनकसंयोगे निमित्तम्, भेरीदण्डसंयोगो भेर्याकाशसंयोगेऽसमवायी, शब्दे तु निमित्तम्। रूक्षताऽवयविरूक्षतां प्रत्यसमवायिकारणं सांसिद्धिकद्रवत्वप्रतिबन्धे निमित्तम्, वंशदलद्वयविभागो वंशदलाकाशयोर्विभागं प्रत्यसमवायी शब्दे तु निमित्तम्, स्वच्छता अवयविस्वच्छतायाम् असमवायिकारणं प्रतिबिम्बे च निमित्तम्, इत्येवं स्वमेव, न तु स्वसजातीयः, असमवायिकारणं निमित्तकारणं च समक्षणे एव भवति, तथा च समक्षणीया स्वीया या स्वनिष्ठा उभयविधकारणता तदाश्रयगुणत्वम् एतेषां साधर्म्यमित्यर्थः ॥ १४२ ॥

**संयोगाऽजन्यसंयोगो विभागश्चाऽविभागजः।**
**वेगाऽजन्याश्च वेगस्ते क्रियाजन्यगुणा मताः ॥**

क्रियाजन्यगुणानाह—संयोगाऽजन्येति। क्रमशः संयोगेन विभागेन वेगेन चाऽजन्यस्य संयोगस्य विभागस्य वेगस्य च स्वसमवायिकारणवृत्तिक्रियाजन्यगुणत्वं साधर्म्यमित्यर्थः ॥ १४३ ॥

**विशेषास्तु गुणा मायाखात्मनां व्याप्यवृत्तयः।**
**अलब्धिस्तु व्यञ्जकानामप्रयोगाद्विभाव्यते ॥**

व्याप्यवृत्तिगुणानाह—विशेषास्त्विति । मायाया विशेषगुणाः सत्त्वरजस्तमांसि, आकाशस्य शब्दः, परमात्मनो जीवात्मनश्च ज्ञानादयो गुणाः, जलस्य स्नेहश्च, व्याप्यवृत्तयो बोध्याः। ध्वनिवर्धकयन्त्रद्वारेण शब्दस्य योगजधर्मद्वारेण सत्त्वादीनां निर्विकल्पकसमाधिद्वारेण परमात्मगुणानां सर्वत्रोपलब्धेः । व्यञ्जकानां यन्त्रादीनाम् अप्रयोगे सति तु सतामपि तेषाम् अप्रत्यक्षं भवति, तथा च स्वकालीनस्वाश्रयवृत्त्यभावाऽप्रतियोगिविशेषगुणत्वं तेषां साधर्म्यम् ॥ १४४ ॥

**लाघवं परिमाणं च, सांसिद्धिकद्रवत्वक-**
**स्वच्छत्वरूक्षतास्तद्वत् संख्या पराऽपरत्वके ॥**
**पृथक्त्वगुरुते चाऽपि व्याप्यवृत्तय ईरिताः ।**

सामान्यगुणानां व्याप्यवृत्तित्वमाह—लाघवमिति । एतेषां व्याप्यवृत्तिसामान्यगुणत्वं साधर्म्यमित्यर्थः ॥ १४५ ॥

**नैमित्तिकद्रवाऽच्छत्वरूक्षता योगभक्तते ॥१४६॥**
**रूपगन्धरसस्पर्शा गुणा अव्याप्यवृत्तयः ।**

अव्याप्यवृत्तिगुणानाह—नैमित्तिकेति । नैमित्तिकद्रव्यत्वस्वच्छत्वरूक्षत्वानि, संयोगविभागौ, रूपादयश्चैतेषाम् अव्याप्यवृत्तिगुणत्वं साधर्म्यमित्यर्थः ॥ १४६ ॥

**विशेषा ये गुणा मायाखात्मनामथ पाकजाः ॥**
**रूपादयस्तथा तूलपरिमाणं परत्वकम् ।**
**अपरत्वोत्तरयोगौ गुणाः संयोगजा मताः ॥१४८॥**

संयोगजगुणानाह—विशेषा य इति । मायाकाशात्मनां ये विशेषगुणाः, पाकजाश्च रूपरसगन्धस्पर्शाः, तथा कार्पासादिपरिमाणं, परत्वम् अपरत्वम् उत्तरसंयोगः, इत्येतेषां संयोगजन्यगुणत्वम् साधर्म्यमित्यर्थः ॥ १४७-१४८ ॥

**विभागः शब्दसंयोगाऽजन्यशब्दो विभागजौ ।**

विभागजगुणावाह—विभाग इति । शब्दाऽजन्यः संयोगाऽजन्यश्च यः शब्दः, यश्च विभागः, तयोर्विभागजगुणत्वं साधर्म्यमित्यर्थः ॥

**परत्वाऽपरते द्वित्व-द्विपृथक्त्वादयस्तथा ॥१४९॥**
**स्वोत्पत्तौ ज्ञानसापेक्षा गुणा ह्येते प्रकीर्तिताः ।**

ज्ञानसापेक्षोत्पत्तिकगुणानाह—परत्वाऽपरते इति । परत्वम् अपरत्वम् द्वित्वादयः परार्धान्ताः संख्याः, द्विपृथक्त्वादयोऽपि परार्धान्तसमानाधिकरणाः, एतेषां ज्ञानापेक्षोत्पत्तिकगुणत्वं साधर्म्यमित्यर्थः ॥ १४९ ॥

**द्वेषप्रयत्नदुःखेच्छासुखानां तु प्रकीर्तितम् ॥१५०॥**
**अस्वसमानजात्यारम्भकगुणत्वमत्र वै ।**

अस्वसमानजातीयाऽऽरम्भकगुणानाह—द्वेषेति । द्वेषादीनाम् अस्वसमानजातीयारम्भकगुणत्वं साधर्म्यमित्यर्थः । तत्र सुखादिच्छा, दुःखाद्द्वेषः, ताभ्यां प्रयत्नः, तस्मात् क्रिया ॥ १५० ॥

**संयोगश्च विभागश्च संख्या भारो द्रवत्वकम् ॥**
**उष्णस्पर्शो मतिर्धर्मोऽधर्मः कामो भयं तथा ।**
**मोहः संस्कारनिद्रे च, रजः सत्त्वं तमोऽपि च ॥**
**एते तु स्वसमाऽसाम्यजात्यारम्भगुणा मताः ।**

स्वसामानाऽससानजात्यारम्भकगुणानाह—संयोगश्चेति । तत्र संयोगात्संयोगो विजातीयं च ज्ञानादि, विभागाद्विभागो विजातीयश्च शब्दः, संख्यातः संख्या विजातीयं च परिमाणम्, गुरुत्वाद् गुरुत्वं विजातीयं च पतनम्, द्रवत्वाद् द्रवत्वं विजातीयं च स्यन्दनम्, उष्णस्पर्शादुष्णस्पर्शो विजातीयाश्च पाकजाः, ज्ञानाज्ज्ञानं विजातीयाश्च संस्काराः, धर्माऽधर्माभ्यां धर्माऽधर्मौ विजातीये च सुखदुःखे, संस्कारात् संस्कारो विजातीयं च स्मरणम्, कामात् कामो विजातीयश्च मोहः सुखं च, मोहात् मोहो विजातीयश्च विपर्ययो दुःखं च, भयात् भयं विजातीया च निवृत्तिः, सत्त्वात् सत्त्वं सुखं च, रजसो रजो दुःखं च, तमसस्तमो मोहश्च, निद्राया निद्रा स्वप्नादिज्ञानं चेति ॥ एतेषां स्वसामानाऽसमानजातीयपदार्थारम्भकगुणत्वं साधर्म्यमित्यर्थः ॥ १५१-१५२ ॥

**कामो मोहो भयं ज्ञानं यत्न इच्छा च भावना ॥**
**विषयाऽधीनरूपत्वात् गुणाः सविषया मताः ।**

सविषयकगुणानाह—काम इति। विसिन्वन्ति विषयिणम् अनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति विषयाः, तदधीनस्वरूपत्वात् कामादयः सविषयकगुणाः, तथा च सविषयकगुणत्वमेतेषां साधर्म्यमित्यर्थः ॥ १५३ ॥

**असाधर्म्यं यदेषां तद् वैधर्म्यं परिकीर्तितम् ॥**

एतेषां गुणानां यद्यत्सामान्यं साधर्म्यमुक्तं तत्तद्भिन्नगुणानां वैधर्म्यमित्यपि बोध्यम् ॥ इति सामान्यगुणसाधर्म्यम् ॥ १५४ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्यःनव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रथ २ प्रत्यक्षे खण्डे गुणसामान्यसाधर्म्य-निरूपणपरिच्छेदः ॥ ४ ॥

## अथ तत्तद्गुणनिरूपणम्

**घ्राणग्राह्यगुणो गन्धोऽनित्यस्त्रिविध एव सः।**
**सौरभोऽसौरभश्चित्रो घ्राणजाऽध्यक्षकारणम् ॥**

अथ गन्धं निरूपयति—घ्राणेति। लौकिकसन्निकर्षेण घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धत्वम्, परमाणुगन्धेऽव्याप्तिवारणाय घ्राणेन्द्रियग्राह्यतावच्छेदकगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं बोध्यम्। एवं घ्राणजनिरूपितलौकिकविषयताश्रयरसाऽसमवेतजातिमत्त्वमित्यपि लक्षणं बोध्यम्। स च अनित्यः सर्वोऽप्युत्पत्तिध्वंसवान्। स च सुगन्धो दुर्गन्धश्चित्रश्चेति त्रिविधो बोध्यः ॥

ननु सुरभ्यसुरभ्यवयवारब्धद्रव्यं निर्गन्धं मन्तव्यं द्रव्यग्रहे गन्धाऽप्रयोजनात् घ्राणस्य च द्रव्यग्रहाऽसामर्थ्यात् तथा च चित्रगन्धो नाऽङ्गीकार्य इति चेन्न। पक्वेषद्विकृताऽऽम्रफलादौ उभयगन्धवद्द्रव्यसाधितमिष्टान्नादौ च चित्रप्रतीतेस्तत्र चित्रगन्धाऽङ्गीकारात्। घ्राणजं यदध्यक्षं प्रत्यक्षं तत्र निमित्तकारणं भवति, तथाहि घ्राणजन्ये गन्धप्रत्यक्षे विषयतयोद्भूतगन्धः कारणं, गन्धत्वादिप्रत्यक्षे विषयतावच्छेदकत्वसम्बन्धेन कारणम्, गन्धाभावादिप्रत्यक्षे च स्वप्रतियोगिकत्वसम्बन्धेन कारणम्। गन्धो गन्धत्वसुरभित्वादयः प्रत्यक्षसिद्धा इति ॥ गन्धोऽव्याप्यवृत्तिः, दैशिकाऽव्याप्यवृत्तित्वं च स्वाच्छेदकसम्बन्धेन स्वावच्छेदकाऽवच्छिन्नाऽधिकरणे स्वरूपसम्बन्धेन वृत्तिर्यः स्वावच्छेदकाऽवच्छिन्नाऽभावस्तत्कत्वं, स्वं प्रतियोगिता ॥ १५५ ॥

**रसो रसनया ग्राह्यो गुणः, सप्तविधः स वै।**
**मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ॥**
**विचित्रश्चेति, नित्योऽसौ जलीयपरमाणुषु।**
**तदन्यत्र त्वनित्यः स रासनाऽध्यक्षकारणम् ॥**

रसं निरूपयति—रस इति। लौकिकसन्निकर्षेण रसनाजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रसस्य लक्षणम्। परमाणुरसेऽव्याप्तिवारणाय रसनाग्राह्यतावच्छेदकगुणविभाजकजातिमत्त्वं लक्षणं बोध्यम्। स च रसः सप्तधा-मधुराऽम्ललवणकटुकषायतिक्तविचित्रभेदात्। जलीयपरमाणुषु मधुर एव रसः, स च नित्यः, अनित्यजले मधुर एव रसोऽनित्यः, पृथिव्यां तु सर्वत्राऽनित्यः सप्तविधो रस इति। उद्भूतः स च रसनेन्द्रियजन्ये रसप्रत्यक्षे विषयविधया कारणं, रसत्वादिप्रत्यक्षे स्वावच्छेदकत्वसम्बन्धेन कारणम्, रसाऽभावप्रत्यक्षे तु स्वप्रतियोगिकत्वसम्बन्धेन कारणमिति। ननु द्रव्यप्रत्यक्षे रसस्याऽप्रयोजनात् रसद्वयवदवयवाऽऽरब्धेऽवयविनि रसाऽनङ्गीकार एव युक्तः, अवयवरसेनैव रासनज्ञाननिर्वाहादिति चेन्न। विभिन्नरसवदवयवाऽऽरब्धमिष्टान्नाद्यवयविनो रसस्य विलक्षणस्याऽनुभवात् विचित्ररसाऽनपह्नवात्। ननु मरीचमर्चिकाशुण्ठ्यादीनामंगुल्यादिस्पर्शाऽनन्तरमंगुल्यादिना नेत्रनासिकादौ स्पृष्टे सति तत्र तिक्तरसभानात् तिक्तस्य न केवलरसनाग्राह्यत्वमिति चेन्न। तत्र दाहात्मकज्वलनानुभवात्, तिक्ते पदार्थे तैजसांशकल्पनात्। एवं रसत्वमधुरत्वादिजातयः प्रत्यक्षसिद्धाः ॥ रसोऽप्यव्याप्यवृत्तिः ॥ १५६ ॥ १५७ ॥

**चक्षुर्ग्राह्यगुणो रूपं सप्तधा तद्धि सम्मतम्।**
**शुक्लं नीलं कपीशं च पीतं रक्तं च कर्बुरम् ॥१५८॥**

**हरितं च, समुद्भूतं चाक्षुषाऽध्यक्षहेतु तत् ।**
**जलादिपरमाणूनां नित्यमन्यदनित्यकम् ॥१५९॥**

रूपं निरूपयति—चक्षुरिति । लौकिकसन्निकर्षेण चक्षुरिन्द्रियमात्रजन्यप्रत्यक्षविषयत्वे सति गुणत्वं रूपस्य लक्षणम् । प्रभाघटसंयोगादावतिव्याप्ति-वारणाय चक्षुर्मात्रग्राह्यजातिमद्विशेषगुणत्वं लक्षणं बोध्यम् । जलादिवृत्तिसांसिद्धिकद्रवत्वादावतिव्याप्ति-वारणाय मात्रपदम् । परमाणुरूपेऽव्याप्तिवारणाय जातिमदिति । तथा च चाक्षुषत्वावच्छिन्नाऽनिरूपित-लौकिकविषयताशून्यलौकिकविषयताश्रयगुणवृत्तिजा-तिमत्त्वं, त्वगिन्द्रियजन्यप्रत्यक्षप्रतिबन्धकचक्षुर्जन्य-प्रत्यक्षविषयजातिमद्गुणत्वं वा रूपलक्षणमवसेयम् । रूपम् अव्याप्यवृत्ति । रूपं रूपत्वादिकं तु 'नीलं रूपमि'ति प्रत्यक्षसिद्धम्, एवं रूपनिष्ठविशेष्यता-सम्बन्धेन रूपत्वप्रकारकप्रत्यक्षं प्रति स्वविषयसामा-न्यवत्त्वसम्बन्धेन रूपत्वज्ञानं कारणमिति तादृश-कारणतायां विषयविधयाऽवच्छेदकतया रूपत्वजाति-सिद्धिः । एवं द्रव्यवृत्तिलौकिविषयतया चाक्षुषत्वा-वच्छिन्नं प्रति समवायेन उद्भूतरूपत्वावच्छिन्नस्य हेतुत्वेन कारणतावच्छेदकघटकतया नीलादिनिखि-लरूपवृत्तिरूपत्वजातिसिद्धिर्बोध्या । एवं नीलत्वादि-जातिस्तु अयसा हरीतकीसारादेः सम्मेलनात् विलक्षणतेजःसंयोगबलेन कृष्णादिरूपोत्पत्तेरनुभव-सिद्धत्वेन तज्जन्यतावच्छेदकतया सिद्ध्यतीति । तच्च शुक्लनीलपीतरक्तहरितकपिशकर्बुरभेदात् सप्तविधं भवति । इति तत्र तत्तज्जातयोऽपि प्रत्यक्ष-सिद्धाः । 'नीलो नष्टो रक्त उत्पन्न' इति प्रतीतेर-नित्यत्वान्नानात्वमपि सिद्धम् । अन्यथा एकनीलनाशे सर्वं जगदनीलतामापद्येत । 'स एवाऽयं नील'इत्यादि-प्रतीतेर्जातिविषयकत्वम् ॥ ननु रूपस्याऽव्याप्यवृत्ति-त्वेन षड्विधादिनैव निर्वाहे कर्बुरमतिरिक्तं नाऽङ्गी-कार्यमिति चेन्न । मयूराऽजगरादीनां कर्बुररूपस्यैव प्रतीतेः, षड्रूपवद्रजसां पिण्डीभावे कृते तत्र मिश्रितरूपग्रहणात् अव्याप्यवृत्तिस्फुटरूपाणामनुपल-म्भात् सर्वत्र तथैव स्वीकारात् । अत एव परस्पर-प्रतिबन्धेनाऽनुत्पादे सति अरूपत्वेऽप्रत्यक्षापत्तेर्नाऽ-व्याप्यवृत्तित्वं रूपस्य । पृथिवीपरमाणौ पाकेनैक-स्यैव रूपस्य सम्भव इत्यनियमात् क्वचित् चित्र-रूपवत्परमाणुभिरारब्धद्रव्यपरम्परया चित्रघटाद्यु-त्पत्तेः तत्र त्रसरेणुद्व्यणुकयोश्चित्ररूपवत्त्वाऽन्यथाऽ-नुपपत्त्या परमाणूनां रूपस्य स्वसजातीयद्वितीयसामा-धिकरण्यात्मकमव्याप्यवृत्तित्वं सिद्ध्यत्येव, असान्द्र-शुक्लादौ सर्वत्र अघट्टकृष्णादिसामानाधिकरण्य-नियमात्, तत्र च सर्वत्र घट्टघट्टतरघट्टतमलेखा-द्युपलम्भे चित्रकर्बुरादिनैव निर्वाहात् । तच्च उद्भूतं रूपं विषयतया चक्षुर्जन्ये रूपप्रत्यक्षे, विष-यतावच्छेदकतया रूपत्वप्रत्यक्षे, स्वप्रतियोगिक-त्वादिसम्बन्धेन रूपाद्यभावप्रत्यक्षे, समवायादिना द्रव्यादिप्रत्यक्षे च कारणं भवतीति । उद्भूतत्वं तु प्रत्यक्षविषयत्वं 'यद्यत्र रूपं स्यात्तर्ह्युपलभ्येते'-त्यापादनयोग्यत्वं वा । तच्च रूपं जलतेजःपरमाणुषु नित्यं, तत्र पाकाऽसम्भवात् । अन्यत्र सर्वत्र पृथ्वी-जलतेजस्सु अनित्यं पृथिव्यां पाकजन्यत्वात् । क्वचि-त्पृथिव्यां जले तेजसि चाऽवयवरूपजन्यत्वात् ॥ तत्र सप्तविधं पृथिव्यां, अभास्वरशुक्लं जले, भास्व-रशुक्लं तेजसीति बोध्यम् ॥ १५८ ॥ १५९ ॥

**त्वङ्मात्रेन्द्रियग्राह्यप्रत्यक्षगुणः स्पर्शस्त्रिधा मतः ।**
**शीत उष्णस्तथाऽनुष्णाशीतो, भ्वादिचतुर्गतः ॥**
**उद्भूतः स्पर्शनाऽध्यक्षहेतुः नित्यो जलाद्यणौ ।**
**तदन्यत्र त्वनित्यः सः, कोमलः कठिनोऽपि च ॥**

स्पर्शं निरूपयति—त्वङ्मात्र इति । लौकिक-सन्निकर्षेण त्वगितरेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं स्पर्श-त्वम् । परमाणुस्पर्शेऽव्याप्तिवारणाय त्वगिन्द्रिय-मात्रग्राह्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वं बोध्यम् । यद्वा—स्पार्शनत्वावच्छिन्नाऽनिरूपितलौकिकविषयता-शून्यत्वलौकिकविषयतावत्त्वोभयविशिष्टगुणवृत्तिजा-तिमत्त्वं, स्पार्शननिरूपितलौकिकविषयत्वचाक्षु-षत्वावच्छिन्ननिरूपितलौकिकविषयताशून्यत्वोभयवि-शिष्टगुणवृत्तिजातिमत्त्वं वा स्पर्शत्वम् ॥ स च स्पर्शः त्रिविधः—शीतः, उष्णः, अनुष्णाशीतश्च । भ्वादीति । पृथिव्याम् अपाकजोऽनुष्णाशीतः, जले शीतः, तेजस्युष्णः, वायावपाकजाऽनुष्णाशीत इति ।

स च उद्भूत एव त्वगिन्द्रियजन्ये स्पर्शप्रत्यक्षे विषयविधया, स्पर्शत्वप्रत्यक्षे विषयताऽवच्छेदकत्वसम्बन्धेन, स्पर्शाद्यभावप्रत्यक्षे स्वप्रतियोगिताकत्वसम्बन्धेन, वाय्वादिप्रत्यक्षे च समवायादिना हेतुर्भवतीति। स्पर्शवत् स्पर्शत्वशीतत्वादिकमपि प्रत्यक्षसिद्धम्। तत्र नित्यः स्पर्शो जलतेजोवायुपरमाणुषु अनित्यस्तु पृथिव्यां सर्वत्र पाकजादिः, अपाकजस्तु अनित्यजलतेजोवायुषु बोध्यः। स च यत्र पृथिव्यां पाषाणादौ कठिनः, तूलवस्त्रादौ कोमलः, एवं वेगशून्यपतनशून्यजलतेजोवायुषु कोमलः, वेगवत्पतनवज्जलधाराविद्युद्वज्रपातझंझावातादिषु कठिनः साक्षात्त्वग्योगादनुभूयते; एवं दूरतो यत्र संयोगस्यापि काठिन्यं मृदुत्वं वाऽनुभूयते तत्र चाक्षुषाऽनुभवः संयोगविषयक एवेति ॥ १६० ॥ १६१ ॥

**चत्वारः पाकजा भूमौ, पीलौ च पिठरेऽपि च।**
**अन्यत्राऽपाकजा नित्या अनित्याश्च भवन्ति हि ॥**

गन्धादीनां व्यवस्थामाह—चत्वार इति। गन्धरसरूपस्पर्शाः पृथिव्यां विजातीयतेजःसंयोगात्मकपाकजन्या बोध्याः, तथाऽनुभवात् ॥

अथ काणादाः पीलौ परमाणावेव गन्धादीनां पाकः न तु द्वयणुकादौ, तथा हि—तेजःसंयोगेन ध्वस्तेष्ववयविषु आरम्भकसंयोगरहितपरमाणुष्वेव गन्धरसरूपादीनां पाके सति तादृशपक्वगुणवत्परमाणुसंयोगाद् द्वयणुकादिक्रमेण सजातीयमहावयव्युत्पत्तिः, साजात्यदोषाच्च,—पूर्वावयविभेदाऽनुपलब्धिश्च। तत्र अग्निसंयोगक्षणमारभ्य पुनर्द्वयणुकजननोत्तरं रूपादिमत्ताक्षणपर्यन्तं प्रयोजकभेदात् नव दश एकादश द्वादश त्रयोदश चतुर्दश पञ्चदश वा क्षणा भवन्ति।

तत्र चतुर्थक्षणे द्वितीयपरमाणौ क्रियोत्पत्तौ सत्यां नव क्षणाः। तत्र द्वयणुकाऽवयवपरमाण्वोः अग्निसंयोगः–१। तेन द्वयणुकावयवैकपरमाणौ क्रिया–२। ततः परमाण्वोर्विभागः–३। ततो द्वयणुकारम्भकाऽसमवायिकारणसंयोगनाशः, द्वयणुकाऽवयवद्वितीयपरमाणौ क्रिया च–४। ततो द्वयणुकनाशः, द्वितीयपरमाणुक्रियाजन्यो द्वितीयपरमाण्वाकाशविभागश्च–५। ततः अग्निसंयोगजन्यः परमाण्वोः श्यामादिनाशः, द्वितीयपरमाण्वाकाशविभागश्च, आकाशेन सह द्वितीयपरमाणुपूर्वसंयोगनाशश्च–६। ततः परमाण्वो रक्तोत्पत्तिः, द्रव्यारम्भकसंयोगश्च–७। ततो द्वयणुकम्–८। ततो रक्ताद्युत्पत्तिः–९। इति नवक्षणाः ॥

अथ पञ्चमक्षणे द्वितीयपरमाणौ क्रियोत्पत्तौ सत्यां दश क्षणाः। तत्र द्वयणुकाऽवयवपरमाणावग्निसंयोगः–१। तेन द्वयणुकाऽवयवैकपरमाणौ क्रिया–२। ततः परमाण्वोर्विभागः–३। ततो द्वयणुकाऽऽरम्भकाऽसमवायिकारणसंयोगनाशः–४। ततो द्वयणुकनाशः, द्वयणुकावयवद्वितीयपरमाणौ क्रिया च–५। ततोऽग्निसंयोगजन्यः परमाण्वोः श्यामादिनाशः, द्वितीयपरमाणुक्रियाजन्यो द्वितीयपरमाण्वाकाशविभागः–६। ततः परमाण्वो रक्ताद्युत्पत्तिः द्वितीयपरमाण्वाकाशविभागजन्य आकाशेन सह यो द्वितीयपरमाणुपूर्वसंयोगस्तस्य नाशः–७। तत एकपरमाणुना सह द्वितीयपरमाणोः संयोगः–८। ततो द्वयणुकम्–९। ततो रक्ताद्युत्पत्तिरिति–१०। इति दश क्षणाः ॥

अथ षष्ठक्षणे द्वितीयपरमाणौ क्रियोत्पत्तौ सत्याम् एकादश क्षणाः। तत्र ४ चत्वारः क्षणाः समानाः। ततो द्वयणुकनाशः–५। ततोऽग्निसंयोगजन्यः परमाण्वोः श्यामादिनाशः, द्व्यणुकाऽवयवद्वितीयपरमाणौ क्रिया च–६। ततः परमाण्वोः रक्ताद्युत्पत्तिः, द्वितीयपरमाणुक्रियाजन्यो द्वितीयपरमाण्वाकाशविभागः—७। ततो द्वितीयपरमाण्वाकाशविभागजन्यः आकाशेन सह यो द्वितीयपरमाणुपूर्वसंयोगस्तस्य नाशः–८। तत एकपरमाणुना सह द्वितीयपरमाणोः संयोगः–९। ततो द्व्यणुकम्–१०। ततो रक्ताद्युत्पत्तिरिति–११। इत्येकादश क्षणाः ॥

एवं सप्तमक्षणे द्वितीयपरमाणौ क्रियोत्पत्तौ सत्यां द्वादश क्षणाः। तत्र ५ पञ्च क्षणाः समानाः। ततोऽग्निसंयोगजन्यः परमाण्वोः श्यामविनाशः–६। ततः परमाण्वो रक्ताद्युत्पत्तिः, द्व्यणुकाऽवयवद्वितीयपरमाणौ क्रिया च–७। ततो द्वितीयपरमाणुक्रियाजन्यो द्वितीयपरमाण्वाकाशविभागः–८। ततो

द्वितीयपरमाण्वाकाशविभागजन्यः आकाशेन सह यो द्वितीयपरमाणुपूर्वसंयोगस्तस्य नाशः–९। तत एकपरमाणुना सह द्वितीयपरमाणोः संयोगः–१०। ततो द्व्यणुकम्–११। ततो रक्ताद्युत्पत्तिरिति–१२॥ इति द्वादश क्षणाः॥

एवं—कारणमात्रविभागात् कारणाऽकारणविभागाऽनङ्गीकारे त्रयोदश क्षणाः। तत्र द्व्यणुकाऽवयवपरमाण्वोः अग्निसंयोगः–१। तेन द्व्यणुकाऽवयवपरमाण्वोः क्रिया–२। ततः परमाण्वोर्विभागः–३॥ ततो द्व्यणुकारम्भकाऽसमवायिकारणसंयोगनाशः–४। ततो द्व्यणुकनाशः–५। ततोऽन्यन्तरसंयोगजन्यः परमाण्वोः श्यामादिनाशः–६। ततः परमाण्वोः रक्ताद्युत्पत्तिः–७। ततः परमाणौ द्व्यणुकारम्भाऽनुगुणा क्रिया–८। ततः परमाणोर्देशान्तराद्विभागः–९। ततः परमाणोर्देशान्तरीणपूर्वसंयोगनाशः–१०। ततः परमाण्वोः द्व्यणुकारम्भकसंयोगः–११। ततो द्व्यणुकम्–१२। ततो रक्ताद्युत्पत्तिरिति–१३। इति त्रयोदश क्षणाः॥

ननु अष्टमक्षणीया क्रिया सप्तमे षष्ठे वा क्षणे भवतु, तथा चैकक्षणोनलाघवमिति चेन्न। द्वितीयक्षणोत्पन्नक्रियाविनाशं विना क्रियाऽन्तराऽनुत्पादात्, क्रियावति क्रियान्तराऽनुत्पादनात्, सप्तमक्षणीयरक्तोत्पत्तिं विना च निर्गुणे द्रव्ये क्रियोत्पत्त्यसम्भवाच्च॥

ननु तथापि सप्तमक्षणीया रक्तोत्पत्तिः षष्ठक्षणे श्यामविनाशक्षणे एव भवत्विति चेन्न। पूर्वरूपनाशस्यापि प्रतिबन्धकाऽभावत्वेन रूपान्तरे निमित्तकारणत्वात्॥

एवं पञ्चमे द्व्यणुकनाशक्षणे कारणमात्रविभागात् कारणाऽकारणविभागस्वीकारे तु चतुर्दश क्षणा भवन्ति। तत्र ४ चतुःक्षणपर्यन्तं समानम्। ततो द्व्यणुकनाशः, परमाणुद्वयमात्रविभागजन्यः परमाण्वाकाशविभागश्च–५। ततोऽन्यन्तरसंयोगजन्यः परमाण्वोः श्यामादिनाशः, परमाण्वाकाशविभागजन्यः परमाण्वाकाशसंयोगनाशश्च–६। ततः परमाण्वो रक्ताद्युत्पत्तिः, परमाण्वाकाशसंयोगनाशजन्यः (उत्तरः) अन्यः परमाण्वाकाशसंयोगः–७। ततो द्वितीयक्षणीयायाः परमाण्वोः क्रियाया नाशः–८। ततोऽदृष्ट-तद्वदात्माऽन्यतरसंयोगसहकृतपरमाण्वग्निसंयोगजन्या परमाण्वोः द्व्यणुकाऽऽरम्भानुगुणा क्रिया ९। ततः परमाण्वोर्देशान्तराद्विभागः–१०। ततः परमाण्वोर्देशान्तरीणपूर्वसंयोगनाशः–११। ततः परमाण्वोः द्व्यणुकारम्भकसंयोगः–१२। ततो द्व्यणुकम्–१३। ततो रक्ताद्युत्पत्तिरिति–१४॥ इति चतुर्दश क्षणाः॥

एवं षष्ठे श्यामादिनाशक्षणे कारणमात्रविभागात् कारणाऽकारणविभागस्वीकारे तु पञ्चदश क्षणाः। तत्र ४ चतुःक्षणपर्यन्तं समानम्। ततो द्व्यणुकनाशः–५। ततोऽन्यन्तरसंयोगजन्यः परमाण्वोः श्यामादिनाशः, परमाणुद्वयमात्रविभागजन्यः परमाण्वाकाशविभागश्च–६। ततः परमाण्वोः रक्ताद्युत्पत्तिः, परमाण्वाकाशविभागजन्यः परमाण्वाकाशसंयोगनाशश्च–७। ततः परमाण्वाकाशसंयोगनाशजन्यः (उत्तरः) अन्यः परमाण्वाकाशसंयोगः–८। ततो द्वितीयक्षणीयायाः परमाण्वोः क्रियाया नाशः–९। ततोऽदृष्टतद्वदात्माऽन्यतरसंयोगसहकृतपरमाण्वग्निसंयोगजन्या परमाण्वोः द्व्यणुकारम्भानुगुणा क्रिया–१०। ततः परमाण्वोर्देशान्तराद्विभागः–११। ततः परमाण्वोर्देशान्तरीणपूर्वसंयोगनाशः–१२। ततः परमाण्वोः द्व्यणुकारम्भकसंयोगः–१३। ततो द्व्यणुकम्–१४। ततो रक्ताद्युत्पत्तिरिति–१५। इति पञ्चदश क्षणाः इति कल्पयन्ति। तन्न।

अनेकद्व्यणुकनाशप्रयुक्ताऽनन्तघटनाशकल्पनस्य अनन्तद्व्यणुकोत्पत्तिप्रयुक्तानन्तघटोत्पत्तिकल्पनस्य च गौरवात्। घटनाशाऽनभ्युपगमे लाघवात्, 'सोऽयं घट'–इति प्रत्यभिज्ञायाः प्रमात्वाच्च। यत्र तु न प्रत्यभिज्ञा, तत्र त्ववयविनाशः॥

किन्तु—अवयव्यात्मकपिठरेऽपि पाको भवतीति। घटादीनां वह्निप्रवेशयोग्यच्छिद्रवत्त्वात् वह्नेर्द्व्यणुकत्र्यणुकात्मकसूक्ष्मावयवैः सह घटादिषु संयुक्तेषु सत्सु तत्राऽन्तःप्रविष्टैस्तैरवयवैरेवाऽवयविना घटेनाऽऽश्रितेषु कपालकपालिकाद्व्यणुकपरमाणुषु सर्वत्र पाकसंभवात्। तथा च क्वचिदवयविनाशः क्वचिच्च न, इति प्रत्यभिज्ञाबलात् कल्प्यते॥

अन्यत्रेति। जलतेजोवायुषु तमसि चेत्यर्थः। अपाकजाः पाकजन्यभिन्ना रसादयो नित्या अनित्याश्च बोध्याः। तत्र जलपरमाणुषु रसरूपस्पर्शा नित्या जलद्व्यणकादौ तु कारणगुणप्रक्रमजन्या अनित्याः, तेजःपरमाणुषु रूपस्पर्शौ नित्यौ, तेजोद्व्यणुकादौ तु कारणगुणप्रक्रमजन्यावनित्यौ। वायुपरमाणुषु स्पर्शो नित्यः, वायुद्व्यणुकादौ कारणगुणप्रक्रमजन्योऽनित्यः। अन्धकारपरमाणुषु रूपं नित्यम् अन्धकारद्व्यणुकादौ तु रूपमनित्यमित्यर्थः ॥१६२॥

**शब्दः श्रोत्रेन्द्रियग्राह्यगुणः, सर्वोऽपि खाऽऽश्रितः।**
**तरङ्गन्यायतः कर्णोद्भूतोऽध्यक्षोऽक्षरो ध्वनिः॥**
**अक्षरास्तु स्फुटा वर्णाः, अस्फुटा ध्वनयः स्मृताः।**
**नाशोत्पन्नप्रतीतेस्ते न नित्या अथ सर्वथा॥१६४॥**
**अकारोऽयं स एवेति प्रज्ञा साजात्यशालिनी।**
**संयोगाच्च विभागाच्च शब्दाच्च जन्यते यतः॥१६५॥**

शब्दं निरूपयति–शब्द इति। लौकिकसन्निकर्षेण श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम्। नन्वन्यत्रोत्पन्ने आद्यशब्देऽनुद्भूतशब्दे चाऽव्याप्तिरिति चेन्न। श्रोत्रग्राह्यतावच्छेदकगुणविभाजकजातिमत्त्वस्य विवक्षणात्॥ सर्वोपि शब्दः खाऽऽश्रितः–गगने समवायेन उत्पन्नो भवति॥ तरंगन्यायत इति। स्थिरजलमध्यनिक्षिप्त पाषाणजनितैकतरंगद्वारा सर्वदिगवच्छेदेन एकदाऽनेके तरङ्गा उत्पाद्यन्ते, तत्र यद्दिगभिमुखो वायुस्तद्देशदिगवच्छेदेनाऽधिकास्तरङ्गा जायन्ते तथा मुखभेर्याद्यवच्छेदेन जायमानशब्देन सर्वदिगवच्छेदेन चैकदैव शब्दा जायन्ते वायुस्तु यद्दिगभिमुखस्तद्दिगवच्छेदेनाऽधिकाः शब्दा जायन्ते, ते च कर्णे उद्भूता उत्पन्नाश्च अध्यक्षाः—श्रोत्रेण प्रत्यक्षा भवन्तीति। आद्यशब्दस्तु सर्वथाऽतीन्द्रियः॥ तस्य द्वैविध्यमाह—अक्षरो ध्वनिश्चेति। अकखगादिवर्णाः कण्ठताल्वाद्यभिघातजन्याः स्फुटार्थज्ञापकाः संस्कृतभाषादिरूपाः, ध्वनयस्तु भेरीमृदङ्गादिजन्याः पश्वादिकृताश्च अस्फुटार्थपरायणाः शब्दा बोध्याः॥

ननु शब्दः सर्वोऽपि नित्यः, नित्याकाशवृत्तित्वात् निमित्तेन सर्वत्रोपलब्धेश्च, स च सूक्ष्मः सार्वदिकः, अत एव वेदोऽपि नित्यः प्रामाणिकः, अत एव च 'स एवाऽयमकार'इति प्रत्यभिज्ञापि उत्पद्यते, इत्यत आह—नाशोत्पन्नप्रतीतेरिति। 'अकारो नष्टः' 'अकार उत्पन्नः' इति सर्वाऽनुभवात्मकप्रत्यक्षप्रतीतेर्जायमानत्वाद् वर्णानामनित्यत्वमेव न तु नित्यत्वम्, नित्याकाशवृत्तित्वस्य व्यर्थविशेषणघटितत्वात्, परमाण्वाकाशसंयोगे व्यभिचारात्, शब्दः अनित्यः अभिघातजन्यत्वादिति प्रतिप्रयोगसम्भवाच्च निमित्तव्यापारपूर्वं सर्वत्राऽनुलब्धेश्च तदसत्त्वसिद्धेश्च। न चाऽस्य सूक्ष्मत्वेऽपि सार्वदिकत्वम्, कालेन परिच्छिन्नत्वात्। अत एव वेदादेरनित्यत्वम्, प्रामाणिकत्वं तु सर्वज्ञपुरुषवाक्यत्वादेव, रेखाभिः सजातीयवर्णोद्बोधधारासंभवात् सजातीयानुपूर्व्यवच्छिन्नत्वाच्च वेदत्वं न व्याहन्यते॥ तदेतदाह—अकारोऽयमिति। 'अयम् अकारः स एवे'ति या प्रतीतिः सा तु सजातीयाऽकारविषयिण्येव, न तु शब्दव्यक्तितादात्म्यविषयिणीत्यर्थः। तथा च उत्पत्त्यादिमति उत्पत्त्यादिप्रकारकत्वेन तत्साजात्यवति तत्साजात्यप्रकारकत्वेन च 'उत्पन्नोऽकारः' 'सजातीयोऽकारः' इति प्रतीत्योर्यथार्थत्वमेवेति॥

वर्णस्य ध्वनेश्च पुनः प्रत्येकं त्रैविध्यमाह—संयोगाच्चेत्यादिना। संयोगजो विभागजः शब्दजश्चेति त्रिविधः शब्दः। तत्राऽऽद्यो भेरीदण्डादिसंयोगजः कण्ठताल्वादिसंयोगजश्च। द्वितीयो वंशदलद्वयविभागजः ओष्ठादिविभागजश्च। भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः। भेरीदण्डसंयोगजन्ये शब्दे भेर्याकाशसंयोगोऽसमवायिकारणम्। भेरीदण्डसंयोगो निमित्तकारणम्। वंशदलद्वयविभागजन्ये शब्दे वंशदलाकाशविभागोऽसमवायिकारणम्, वंशदलद्वयविभागो निमित्तकारणम्; शब्दजशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम्, पवनादिकं तु निमित्तम् इति॥ १६३॥ १६४॥ १६५॥

**गणनाम्रुख्यहेतुस्तु गुणः संख्या प्रकीर्तिता।**
**नित्यैकता तु नित्ये स्यादनित्यानित्यवर्तिनी॥**
**व्यासज्ज्यवृत्तयो द्वित्वादयोऽपेक्षाख्यबुद्धिजाः।**
**पर्याप्त्याऽनेकवस्तुस्थाः, नश्यन्त्याश्रयनाशतः॥**

**अपेक्षामतिनाशाच्च, सा त्वनेकेषु वस्तुषु। एकैकत्वप्रकारा धीस्त्रिक्षणस्थायिनी मता॥१६८॥**

संख्यां निरूपयति—गणनेति। 'अयमेकः' 'इमौ द्वौ' 'इमे त्रयः' इति गणनात्मकशब्दव्यवहारस्याऽसाधारणनिमित्तहेतुत्वे सति गुणत्वं संख्याया लक्षणम्। एवम् 'एको द्वा' वित्यादिशशब्दनिष्ठवाच्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमपि लक्षणम्, संख्यापदशक्यतावच्छेदकजातिमत्त्वं वा लक्षणं बोध्यम्॥ सा च एकत्वादिपरार्धपर्यन्ता बहुत्वरूपा च गण्यते॥ तत्र नित्ये द्रव्ये या एकता—एकत्वसंख्या सा नित्या, अनित्ये वर्तमाना त्वनित्या, आश्रयनाशाऽधीननाशात्॥ १६६॥

व्यासज्ज्यवृत्तय इति। उभयादिद्रव्ये वर्तमाना या द्वित्वत्रित्वबहुत्वादिपरार्धान्ताः संख्यास्ताः 'सर्वा अपि अपेक्षाबुद्धिजन्या विज्ञेयाः, तत्पुरुषीयाऽपेक्षाज्ञानजन्यद्वित्वादीनां तत्पुरुषेणैव प्रत्यक्षात् तथा कल्पनात् द्वित्वादिकं प्रति समवायिकारणगतम् एकत्वादिकम् असमवायिकारणम्, 'अयमेकोऽयमेक' इत्याद्यपेक्षाबुद्धिर्निमित्तकारणम्। अतीन्द्रियेषु ईश्वरीयाऽपेक्षाबुद्ध्या ज्ञानलक्षणात्मकाऽपेक्षाबुद्ध्या सर्गान्तरीययोगिजनाऽपेक्षाबुद्ध्या अलौकिकमानसबोधात्मिकया वा द्वित्वाद्युत्पत्तिः। तत्र ईश्वरज्ञानस्य नित्यत्वेऽपि तत्सहकारिक्षणविशेषनाशेन द्वित्वनाशोपपादनात्॥ ननु समवायेन द्वित्वस्यैकघटेऽपि सत्त्वेन 'घटो द्वा' वितिप्रयोगापत्तिरित्यत आह—पर्याप्त्येति। अनेकानि यानि वस्तूनि द्रव्याणि तत्र तत्र यथायोगं वर्तमाना द्वित्वादयः पर्याप्त्याख्यसम्बधेनैव बोध्याः, स च द्वित्वाश्रयस्य द्रव्यद्वयस्यैव, त्रित्वाश्रयस्य द्रव्यत्रयस्यैव सम्बन्धो न त्वेकस्येति बोध्यः। अनित्यगता द्वित्वादयः क्वचिदाश्रयनाशान्नश्यन्ति, क्वचिच्चाऽपेक्षाबुद्धेर्नाशादपि नश्यन्ति नित्यगतास्त्वपेक्षाबुद्धिनाशादेव नश्यन्तीति तत्रेन्द्रियाऽर्थसन्निकर्षोत्तरम् 'अयमेकोऽयमेक' इत्याद्यनेकधर्मावच्छिन्नविशेष्यकैकत्वप्रकारकं, बाह्यमान्तरं लौकिकमलौकिकम् वा प्रत्यक्षम्—१। ततः 'इमौ द्वा'वित्यादिद्वित्वोत्पत्तिः—२। ततो द्वित्वत्वद्वित्वोभयनिष्ठतुरीयविषयताशालिज्ञानं निर्विकल्पकम्—३। ततो द्वित्वत्वप्रकारताकद्वित्वविशेष्यताकलौकिकप्रत्यक्षम् अपेक्षाबुद्धिनाशश्च—४' प्रतियोगितासम्बन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाऽधिकरणक्षणवृत्तित्व-स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वात् द्वित्वप्रत्यक्षात्मकगुणस्याऽपेक्षाबुद्धिनाशकत्वात् ततो द्वित्वनाशः—५। इति॥ यद्यपि शब्दत्वज्ञानत्वसुखत्वदुःखत्वेच्छात्वद्वेषत्वयत्नत्वभयत्वमोहत्वकामत्वानां मध्ये प्रतियोगितासम्बन्धेन स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वोभयसम्बन्धावच्छिन्नैकजातिविशिष्टं नाशं प्रति स्वाऽव्यवहितपूर्ववृत्तित्वसम्बन्धेन गुणत्वेन विशेषगुणस्य हेतुत्वात् उत्तरोत्पन्नज्ञानेन पूर्वज्ञानेन तृतीयक्षणे नाशात् द्विक्षणस्थायित्वमेव, तथाप्यपेक्षाबुद्धेः त्रिक्षणस्थायित्वं द्वित्वप्रत्यक्षाऽन्यथाऽनुपपत्त्या कल्प्यते, अन्यथा तृतीयक्षणेऽपेक्षाबुद्धेर्नाशात् चतुर्थक्षणे द्वित्वस्य नाश एव स्यात् न तु प्रत्यक्षम्, विषयाऽभावात्, तथा च—प्रतियोगितासम्बन्धेनाऽपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्व-स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वमिति विशेषनियमांगीकारात् अपेक्षाबुद्धेश्चतुर्थक्षणे एव नाशः। 'यद्यपेक्षाबुद्धिनाशोत्पत्त्युत्तरक्षणे द्वित्वं स्यात् तर्हि उपलभ्येते' तितर्केणापि द्वित्वनाशं प्रति अपेक्षाबुद्धिनाशस्य कारणत्वसिद्धेः द्वित्वाऽसाधारणकारणस्याऽपेक्षाज्ञानस्य नाशात् कार्यस्य द्वित्वस्य नाशात्॥

ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवाऽपेक्षाबुद्धेर्हेतुत्वमस्तु, न तु द्वित्वं प्रतीति चेन्न। द्वित्वप्रत्यक्षत्वाऽपेक्षया द्वित्वत्वस्य कार्यतावच्छेदकत्वे उपस्थितौ च लाघवात्, एकत्वस्येव नित्यगतद्वित्वादेर्नित्यत्वाऽऽपत्त्या अनित्यगतद्वित्वादेरनित्यत्वापत्त्या च परमाणुद्वयगतद्वित्व-परमाण्वाकाशादिगतद्वित्वानामनन्तानामेकदैकत्र समावेशापत्तेः, पटाद्युत्पत्त्यनन्तरम् एकत्वोत्पत्तिवत् एतत्पटव्यक्तिभिन्नद्रव्यव्यक्तयो यावत्यस्तावद्व्यक्तिसंख्यासमसंख्याकद्वित्वानामानन्त्यापत्तेः, पटोत्पत्तिद्वितीयक्षणे एव तस्मिन्नेव पटे कोटिकोटिद्वित्वानामप्युत्पत्त्यापत्तेः, इत्थं चाऽऽनन्त्याऽपेक्षयाऽतिलाघवेन द्वित्वादावेवाऽपेक्षाबुद्धेः कारणत्वात्॥

यत्र सभासेनावनादावनियतत्रिपञ्चदशशतादिप-

अन्यत्रेति । जलतेजोवायुषु तमसि चेत्यर्थः। अपाकजाः पाकजन्यभिन्ना रसादयो नित्या अनित्याश्च बोध्याः । तत्र जलपरमाणुषु रसरूपस्पर्शा नित्या जलद्वयणकादौ तु कारणगुणप्रक्रमजन्या अनित्याः, तेजःपरमाणुषु रूपस्पर्शौ नित्यौ, तेजोद्वयणुकादौ तु कारणगुणप्रक्रमजन्यावनित्यौ । वायुपरमाणुषु स्पर्शो नित्यः, वायुद्वयणुकादौ कारणगुणप्रक्रमजन्योऽनित्यः । अन्धकारपरमाणुषु रूपं नित्यम् अन्धकारद्वयणुकादौ तु रूपमनित्यमित्यर्थः ॥१६२॥

**शब्दः श्रोत्रेन्द्रियग्राह्यगुणः, सर्वोऽपि खाऽऽश्रितः ।**
**तरङ्गन्यायतः कर्णोद्भूतोऽध्यक्षोऽक्षरो ध्वनिः ॥**
**अक्षरास्तु स्फुटा वर्णाः, अस्फुटा ध्वनयः स्मृताः ।**
**नाशोत्पन्नप्रतीतेस्ते न नित्या अथ सर्वथा ॥१६४॥**
**अकारोऽयं स एवेति प्रज्ञा साजात्यशालिनी ।**
**संयोगाच्च विभागाच्च शब्दाच्च जन्यते यतः ॥१६५॥**

शब्दं निरूपयति–शब्द इति । लौकिकसन्निकर्षेण श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् । नन्वन्यत्रोत्पन्ने आद्यशब्देऽनुद्भूतशब्दे चाऽव्याप्तिरिति चेन्न । श्रोत्रग्राह्यतावच्छेदकगुणविभाजकजातिमत्त्वस्य विवक्षणात् ॥ सर्वोपि शब्दः खाऽऽश्रितः–गगने समवायेन उत्पन्नो भवति ॥ तरंगन्यायत इति । स्थिरजलमध्यनिक्षिप्त पाषाणजनितैकतरंगद्वारा सर्वदिगवच्छेदेन एकदाऽनेके तरङ्गा उत्पाद्यन्ते, तत्र यद्दिगभिमुखो वायुस्तद्देशदिगवच्छेदेनाऽधिकास्तरङ्गा जायन्ते तथा मुखभेर्याद्यवच्छेदेन जायमानशब्देन सर्वदिगवच्छेदेन चैकदैव शब्दा जायन्ते वायुस्तु यद्दिगभिमुखस्तद्दिगवच्छेदेनाऽधिकाः शब्दा जायन्ते, ते च कर्णे उद्भूता उत्पन्नाश्च अध्यक्षाः—श्रोत्रेण प्रत्यक्षा भवन्तीति । आद्यशब्दस्तु सर्वथाऽतीन्द्रियः ॥ तस्य द्वैविध्यमाह—अक्षरो ध्वनिश्चेति । अकखगादिवर्णाः कण्ठताल्वाद्यभिघातजन्याः स्फुटार्थज्ञापकाः संस्कृतभाषादिरूपाः, ध्वनयस्तु भेरीमृदङ्गादिजन्याः पश्वादिकृताश्च अस्फुटार्थपरायणाः शब्दा बोध्याः ॥

ननु शब्दः सर्वोऽपि नित्यः, नित्याकाशवृत्तित्वात् निमित्तेन सर्वत्रोपलब्धेश्च, स च सूक्ष्मः सार्वदिकः, अत एव वेदोऽपि नित्यः प्रामाणिकः, अत एव च 'स एवाऽयमकार'इति प्रत्यभिज्ञापि उत्पद्यते, इत्यत आह—नाशोत्पन्नप्रतीतेरिति । 'अकारो नष्टः' 'अकार उत्पन्नः' इति सर्वाऽनुभवात्मकप्रत्यक्षप्रतीतेर्जायमानत्वाद् वर्णानामनित्यत्वमेव न तु नित्यत्वम्, नित्याकाशवृत्तित्वस्य व्यर्थविशेषणघटितत्वात्, परमाण्वाकाशसंयोगे व्यभिचारात्, शब्दः अनित्यः अभिघातजन्यत्वादिति प्रतिप्रयोगसम्भवाच्च निमित्तव्यापारपूर्वं सर्वत्राऽनुलब्धेश्च तदसत्त्वसिद्धेश्च । न चाऽस्य सूक्ष्मत्वेऽपि सार्वदिकत्वम्, कालेन परिच्छिन्नत्वात् । अत एव वेदादेरनित्यत्वम्, प्रामाणिकत्वं तु सर्वज्ञपुरुषवाक्यत्वादेव, रेखाभिः सजातीयवर्णोद्बोधधारासंभवात् सजातीयानुपूर्व्यवच्छिन्नत्वाच्च वेदत्वं न व्याहन्यते ॥ तदेतदाह—अकारोऽयमिति । 'अयम् अकारः स एवे'ति या प्रतीतिः सा तु सजातीयाऽकारविषयिण्येव, न तु शब्दव्यक्तितादात्म्यविषयिणीत्यर्थः । तथा च उत्पत्त्यादिमति उत्पत्त्यादिप्रकारकत्वेन तत्साजात्यवति तत्साजात्यप्रकारकत्वेन च 'उत्पन्नोऽकारः' 'सजातीयोऽकारः' इति प्रतीत्योर्यथार्थत्वमेवेति ॥

वर्णस्य ध्वनेश्च पुनः प्रत्येकं त्रैविध्यमाह—संयोगाच्चेत्यादिना । संयोगजो विभागजः शब्दजश्चेति त्रिविधः शब्दः । तत्राऽऽद्यो भेरीदण्डादिसंयोगजः कण्ठताल्वादिसंयोगजश्च । द्वितीयो वंशदलद्वयविभागजः ओष्ठादिविभागजश्च । भेर्यादिदेशमारभ्य श्रोत्रपर्यन्तद्वितीयादिशब्दाः शब्दजाः । भेरीदण्डसंयोगजन्ये शब्दे भेर्याकाशसंयोगोऽसमवायिकारणम् । भेरीदण्डसंयोगो निमित्तकारणम् । वंशदलद्वयविभागजन्ये शब्दे वंशदलाकाशविभागोऽसमवायिकारणम् , वंशदलद्वयविभागो निमित्तकारणम् ; शब्दजशब्दे पूर्वपूर्वशब्दोऽसमवायिकारणम् , पवनादिकं तु निमित्तम् इति ॥ १६३ ॥ १६४ ॥ १६५ ॥

**गणनामुख्यहेतुस्तु गुणः संख्या प्रकीर्तिता ।**
**नित्यैकता तु नित्ये स्यादनित्यानित्यवर्तिनी ॥**
**व्यासज्ज्यवृत्तयो द्वित्वादयोऽपेक्षाख्यबुद्धिजाः ।**
**पर्याप्त्याऽनेकवस्तुस्थाः, नश्यन्त्याश्रयनाशतः ॥**

**अपेक्षामतिनाशाच्च, सा त्वनेकेषु वस्तुषु।**
**एकैकत्वप्रकारा धीस्त्रिक्षणस्थायिनी मता॥१६८॥**

संख्यां निरूपयति—गणनेति। 'अयमेक:' 'इमौ द्वौ' 'इमे त्रय:' इति गणनात्मकशब्दव्यवहारस्याऽसाधारणनिमित्तहेतुत्वे सति गुणत्वं संख्याया लक्षणम्। एवम् 'एको द्वा' वित्यादिशशब्दनिष्ठवाच्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमपि लक्षणम्, संख्यापदशक्यतावच्छेदकजातिमत्त्वं वा लक्षणं बोध्यम्॥ सा च एकत्वादिपरार्धपर्यन्ता बहुत्वरूपा च गण्यते॥ तत्र नित्ये द्रव्ये या एकता–एकत्वसंख्या सा नित्या, अनित्ये वर्तमाना त्वनित्या, आश्रयनाशाऽधीननाशात्॥ १६६॥

व्यासज्ज्यवृत्तय इति। उभयादिद्रव्ये वर्तमाना या द्वित्वत्रित्वबहुत्वादिपरार्धान्ता: संख्यास्ता: 'सर्वा अपि अपेक्षाबुद्धिजन्या विज्ञेया:, तत्पुरुषीयाऽपेक्षाज्ञानजन्यद्वित्वादीनां तत्पुरुषेणैव प्रत्यक्षात् तथा कल्पनात् द्वित्वादिकं प्रति समवायिकारणगतम् एकत्वादिकम् असमवायिकारणम्, 'अयमेकोऽयमेक' इत्याद्यपेक्षाबुद्धिर्निमित्तकारणम्। अतीन्द्रियेषु ईश्वरीयाऽपेक्षाबुद्ध्या ज्ञानलक्षणात्मकाऽपेक्षाबुद्ध्या सर्गान्तरीययोगिजनाऽपेक्षाबुद्ध्या अलौकिकमानसबोधात्मिकया वा द्वित्वाद्युत्पत्ति:। तत्र ईश्वरज्ञानस्य नित्यत्वेऽपि तत्सहकारिक्षणविशेषनाशेन द्वित्वनाशोपपादनात्॥ ननु समवायेन द्वित्वस्यैकघटेऽपि सत्त्वेन 'घटो द्वा' विति प्रयोगापत्तिरित्यत आह—पर्याप्त्येति। अनेकानि यानि वस्तूनि द्रव्याणि तत्र तत्र यथायोगं वर्तमाना द्वित्वादय: पर्याप्त्याख्यसम्बन्धेनैव बोध्या:, स च द्वित्वाश्रयस्य द्रव्यद्वयस्यैव, त्रित्वाश्रयस्य द्रव्यत्रयस्यैव सम्बन्धो न त्वेकस्येति बोध्य:। अनित्यगता द्वित्वादय: क्वचिदाश्रयनाशान्नश्यन्ति, क्वचिच्चाऽपेक्षाबुद्धेर्नाशादपि नश्यन्ति नित्यगतास्त्वपेक्षाबुद्धिनाशादेव नश्यन्तीति तत्रेन्द्रियार्थसन्निकर्षोत्तरम् 'अयमेकोऽयमेक' इत्याद्यनेकधर्मावच्छिन्नविशेष्यकैकत्वप्रकारकं, बाह्यमान्तरं लौकिकमलौकिकम् वा प्रत्यक्षम्–१। तत: 'इमौ द्वा'वित्यादिद्वित्वोत्पत्ति:–२। ततो द्वित्वत्वद्वित्वोभयनिष्ठतुरीयविषयताशालिज्ञानं निर्विकल्पकम्–३। ततो द्वित्वत्वप्रकारताकद्वित्वविशेष्यताकलौकिकप्रत्यक्षम् अपेक्षाबुद्धिनाशश्च–४' प्रतियोगितासम्बन्धेन अपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाऽधिकरणक्षणवृत्तित्व-स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वात् द्वित्वप्रत्यक्षात्मकगुणस्याऽपेक्षाबुद्धिनाशकत्वात् ततो द्वित्वनाश:–५। इति॥ यद्यपि शब्दत्वज्ञानत्वसुखत्वदु:खत्वेच्छात्वद्वेषत्वयत्नत्वभयत्वमोहत्वकामत्वानां मध्ये प्रतियोगितासम्बन्धेन स्वाश्रयप्रतियोगिकत्वकालिकविशेषणत्वोभयसम्बन्धावच्छिन्नैकजातिविशिष्टं नाशं प्रति स्वाऽव्यवहितपूर्ववृत्तित्वसम्बन्धेन गुणत्वेन विशेषगुणस्य हेतुत्वात् उत्तरोत्पन्नज्ञानेन पूर्वज्ञानेन तृतीयक्षणे नाशात् द्विक्षणस्थायित्वमेव, तथाप्यपेक्षाबुद्धे: त्रिक्षणस्थायित्वं द्वित्वप्रत्यक्षाऽन्यथाऽनुपपत्त्या कल्प्यते, अन्यथा तृतीयक्षणेऽपेक्षाबुद्धेर्नाशात् चतुर्थक्षणे द्वित्वस्य नाश एव स्यात् न तु प्रत्यक्षम्, विषयाऽभावात्, तथा च—प्रतियोगितासम्बन्धेनाऽपेक्षाबुद्धिनाशं प्रति स्वप्रागभावाधिकरणक्षणवृत्तित्व-स्वसमानकालीनत्वोभयसम्बन्धेन गुणत्वेन हेतुत्वमिति विशेषनियमांगीकारात् अपेक्षाबुद्धेश्चतुर्थक्षणे एव नाश:। 'यद्यपेक्षाबुद्धिनाशोत्पत्त्युत्तरक्षणे द्वित्वं स्यात् तर्हि उपलभ्येते' तितर्केणापि द्वित्वनाशं प्रति अपेक्षाबुद्धिनाशस्य कारणत्वसिद्धे: द्वित्वाऽसाधारणकारणस्याऽपेक्षाज्ञानस्य नाशात् कार्यस्य द्वित्वस्य नाशात्॥

ननु कालान्तरे द्वित्वप्रत्यक्षवारणाय द्वित्वप्रत्यक्षं प्रत्येवाऽपेक्षाबुद्धेर्हेतुत्वमस्तु, न तु द्वित्वं प्रतीति चेन्न। द्वित्वप्रत्यक्षत्वाऽपेक्षया द्वित्वत्वस्य कार्यतावच्छेदकत्वे उपस्थितौ च लाघवात्, एकत्वस्येव नित्यगतद्वित्वादेर्नित्यत्वाऽऽपत्त्या अनित्यगतद्वित्वादेरनित्यत्वापत्त्या च परमाणुद्वयगतद्वित्व-परमाण्वाकाशादिगतद्वित्वानामनन्तानामेकदैकत्र समावेशापत्ते:, पटाद्युत्पत्त्यनन्तरम् एकत्वोत्पत्तिवत् एतत्पटव्यक्तिभिन्नद्रव्यव्यक्तयो यावत्यस्तावद्व्यक्तिसंख्यासमसंख्याकद्वित्वानामानन्त्यापत्ते:, पटोत्पत्तिद्वितीयक्षणे एव तस्मिन्नेव पटे कोटिकोटिद्वित्वानामप्युत्पत्त्यापत्ते:, इत्थं चाऽऽनन्त्याऽपेक्षयाऽतिलाघवेन द्वित्वादावेवाऽपेक्षाबुद्धे: कारणत्वात्॥

यत्र सभासेनावनादावनियतत्रिपञ्चदशशतादिप-

दार्थविशेष्यकैकत्वप्रकारकज्ञानं तत्र तु त्रित्वत्वादि-परार्धत्वत्वान्तसंख्याविभाजकधर्मान्यतम-शून्या त्रित्व-पञ्चदशत्वशतत्वादिभिन्ना बहुत्वसंख्या अपेक्षा-बुद्धिजन्या वेदितव्या। ननु बहुत्वे सजातीयोत्क-र्षाऽभावात् बहुत्वत्वस्यैकस्यैव तरतमभावविरहात् 'इयं सेना इतो बहुतरा'—इतिप्रतीतिर्नोत्पद्येतेति चेन्न। अपेक्षाबुद्धिजन्यविभिन्नबहुत्वानां व्यवहाराऽनु-रोधेन विभिन्नसमुदायेषु स्वीकारे बाधकाऽभावात् क्लृप्तसंख्यानामज्ञानेपि बहुत्वानामनुभवात् क्लृप्त-संख्यान्तर्गतत्वाऽभावात्। यद्वा प्रत्येकं निर्णीतसंख्या-कानां समुदायानाम् अपेक्षाबुद्धिजन्यं बहुत्वं बहुत-रत्वं बहुतमत्वं च मध्यममहत्परिमाणादिवत् बोध्यम् प्रत्येकम् अनिर्णीतसंख्याकसमुदायानां तु अपेक्षा-बुद्धिविषयतात्मकमेव बहुत्वादिकमिति सर्वं चतुरस्रम्॥

अपेक्षाबुद्धिस्वरूपमाह—सा त्वनेकेष्विति। अनेक-वस्तुषु, अनेकानि एकत्वानि प्रकारा यत्रैतादृशी या बुद्धिः 'एकत्ववत् एकत्ववत् एकत्ववत्' इत्याकारि-का, सा अपेक्षाबुद्धिः, तथा च—अनेकपदार्थनिष्ठसा-ऽवच्छिन्नाऽनेकविशेष्यतानिरूपितैकत्वत्वावच्छिन्नप्रका-रताशालिप्रत्यक्षरूपा बुद्धिरपेक्षाबुद्धिरिति लक्ष-णार्थः॥ तस्यास्त्रिक्षणस्थायित्वमाह—त्रिक्षणस्थायि-नीति। तत्र बीजमुक्तमेव॥

ननु तथापि अपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वे माना-भावः, द्वित्वोत्पत्तिकालोत्पत्तिकपूर्वानुभवजनितसं-स्कारजन्यद्वित्वत्वप्रकारकस्मरणात् द्वित्वोत्पत्ति-द्वितीयक्षणे द्वित्वत्वविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षो-त्पत्तिसंभवेन तादृशप्रत्यक्षमादाय 'द्वित्वं साक्षात्क-रोमी' त्यनुव्यवसायोपपत्तेरिति चेन्न। द्वित्वोत्पत्तिक्षणे नियमेन द्वित्वत्वप्रकारकस्मृतौ मानाऽभावेन यत्र न तादृशस्मरणं तत्र द्वित्वत्वविशिष्टवैशिष्ट्यावगाहि-लौकिकप्रत्यक्षानुत्पत्त्या तादृशानुव्यवसायाऽनुत्पत्ते-र्दुर्वारत्वात्। तथा च त्रिक्षणस्थायित्वमेवेति॥ १६६॥ १६७॥ १६८॥

**मुख्यः परिमितेर्हेतुः परिमाणं गुणो भवेत्।**
**तत् त्रेधाऽणु महद्ध्रस्वम्, महत्त्वं पञ्चधा भवेत्॥**
**दीर्घं सर्वं च कोणं च वक्रं वर्तुलमेव च।**
**अणुत्वं तु भवेज्जीवे परमाणौ च नित्यकम्॥१७०॥**
**ह्रस्वत्वं तु सदाऽनित्यं द्व्यणुके एव वर्तते।**
**महत्त्वं त्रसरेण्वादौ तत्र नित्यं तु नित्यके॥१७१॥**
**अनित्येऽनित्यमेतत्तु पञ्चधा जायते यथा।**
**द्व्यणुके त्र्यणुके संख्याजन्यं, बोध्यं घटे तु तत् १७२**
**परिमाणोद्भवं तूले मृदुसंयोगजं मतम्।**
**संख्यामानोभयाज्जन्यं संख्यामानचयोद्भवम्॥**
**आधारस्य विनाशेन नाशस्तस्य प्रकीर्तितः।**

परिमाणं निरूपयति—मुख्य इति। परिमितिः—'इदं परिमितमि'त्याकारिका प्रमा, तादृशपरिमिति-व्यवहाराऽसाधारणनिमित्तकारणत्वे सति गुणत्वं परिमाणस्य लक्षणम्। एवं परिमाणपदशक्यताऽवच्छे-दकतया सिद्धपरिमाणत्वजातिमत्त्वमपि लक्षणं बोध्यम्॥ तस्य त्रैविध्यमाह—तत्त्रेधा—अण्वि-त्यादि। अणुत्वं महत्त्वं ह्रस्वत्वं चेत्यर्थः। तत्र 'अणु' इतिशब्दनिष्ठवाच्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपि-तसमवायसम्बन्धावच्छिन्नकारणत्वसमानाधिकरणजा-तिमत्त्वम् अणुपरिमाणत्वम्, एवं महद्ध्रस्वपरिमाणयो-र्लक्षणे ऊह्यो। एवम् अणुत्वादिपदशक्यतावच्छेदकतया सिद्धाऽणुत्वत्वादिजातिमत्त्वम् अणुत्वादीनां लक्षणमपि बोध्यम्॥ तत्र महत्त्वस्य पञ्चधात्वमाह महत्त्वं पञ्च-धेति। महत्त्वव्याप्यं परिमाणं पञ्चविधं, तत्र दीर्घत्वं वंशादौ तदपेक्षया खर्वत्वं यष्ट्यादौ, कोणत्वं त्रिको-णादौ, एवं चतुरस्रादिकमप्यत्रैवाऽन्तर्भवति। वक्रत्वं सर्पेन्द्रधनुषादौ, वर्तुलत्वं गोलकादौ॥ अणुत्वस्या-श्रयं दर्शयति—अणुत्वं त्विति। अणुत्वं तु परमाणुषु जीवात्मसु च वर्तते, तच्चाऽऽधारनित्यत्वान्नित्य-मेव। ह्रस्वत्वस्याधारं दर्शयति—ह्रस्वं त्विति। परमाणूनां सर्वेषां सर्वथा समानद्रव्यत्वेन तज्जन्य-द्व्यणुकानामपि सर्वेषां परस्परम् अवैषम्याज्जन्यमेक-विधमेव परिमाणं ह्रस्वत्वं सिद्ध्यति, न चैतदणुत्वं, परमाणुपरिमाणाद्वैषम्यात्, न चैतद्वर्तुलादिकं परमाणुद्वयमात्रजन्यवृत्तित्वात्, तच्च सदा अनित्यमेव बोध्यम्॥ महत्त्वस्याश्रयं दर्शयति—महत्त्वमिति।

त्रसरेणुषु सर्वेषु अपकृष्टमहत्त्वं, चतुरणुकादौ नित्यभिन्नद्रव्ये मध्यमहत्त्वं आकाशकालदिक्परमात्मसमायासु परममहत्त्वं च बोध्यम्। महत्त्वव्याप्या दीर्घत्वादिभेदा अनित्यद्रव्येष्वेव, तत्र वैषम्यात्। सापेक्षदीर्घत्वखर्वत्वादिकन्तु तत्कालीनज्ञानीयविषयत्वमित्येवेति निर्वाह्यम्॥ तत्र नित्यमिति। तेषु नित्यं परिमाणं नित्ये द्रव्ये वर्तते, अनित्यं परिमाणं त्वनित्ये द्रव्ये वर्तत इति। अनित्यपरिमाणस्यापि पञ्चधात्वमाह—पञ्चधेति। संख्याजन्यं, परिमाणजन्यं, शिथिलसंयोगजन्यं, संख्यापरिमाणजन्यं, संख्यापरिमाणप्रचयजन्यं चेति पञ्चधाऽनित्यमित्यर्थः॥ तत्राद्यमाह—द्व्यणुक इति। द्व्यणुकपरिमाणं परमाणुद्वयनिष्ठद्वित्वसंख्याजन्यम्, त्रसरेणुपरिमाणं च द्व्यणुकत्रयनिष्ठत्रित्वसंख्यात्मकाऽसमवायिकारणजन्यमित्यर्थः। परिमाणस्य स्वसमानजातीयस्वोत्कृष्टपरिमाणजनकत्वनियमात्, त्रसरेणोर्द्व्यणुकस्य च परिमाणस्याऽणुत्वजातीयत्वाभावात्। द्वितीयमुदाहरति—बोध्यं घटे इति। कपालपरिमाणजन्यं घटपरिमाणं परिमाणजपरिमाणं बोध्यम्। तृतीयमुदाहरति—तूले इति। भूयोऽवयवाऽवच्छेदेनाऽवयवान्तराऽसंयोगिनि अवयवे वर्तमानः संयोगो मृदुः शिथिलः प्रचय उच्यते, तूले कार्पासे तादृशसंयोगजन्यं परिमाणं बोध्यम्। चतुर्थमुदाहरति—संख्यामानोभयादिति। कपालत्रयाऽऽरब्धघटादिसमवेतपरिमाणं संख्यापरिमाणोभयजन्यम्, कपालादिद्वयारब्धघटादिसमवेतमहत्त्वापेक्षया महत्त्वशून्यावयवत्रयाऽऽरब्धत्रसरेण्वपेक्षया चोत्कृष्टत्वात्। पञ्चममुदाहरति—संख्यामानचयोद्भवमिति। प्रचितमहावयवत्रयारब्धतूलकादिसमवेतपरिमाणं संख्यापरिमाणप्रचयत्रितयजन्यं, प्रचितमहावयवद्वयाऽऽरब्धतूलादिसमवेतमहत्त्वाऽपेक्षया अप्रचितमहावयवत्रयारब्धघटादिसमवेतमहत्त्वाऽपेक्षया चोत्कृष्टत्वात्। नाशकारणमाह—आधारस्येति। प्रतियोगितासम्बन्धेन परिमाणनाशं प्रति स्वप्रतियोगिवृत्तित्वकालिकविशेषणत्वोभयसम्बन्धेन आश्रयनाशस्य कारणत्वादिति भावः॥

ननु त्रिचतुरादिप्रान्ततन्तुविश्लेषेऽपि 'स एवाऽयं पट' इतिप्रत्यभिज्ञानबलेन पटस्याऽनाशात्, परिमाणस्य च नाशात्, परिमाणनाशं प्रति नाऽऽश्रयनाशः कारणम्, किन्तु स्वाश्रयसम्बन्ध्यवयवविवृत्तित्वसम्बन्धेनाऽवयवसंयोगविभागाऽन्यतरस्य प्रतियोगितासम्बन्धेन परिमाणनाशं प्रति कारणत्वम् अन्यथा क्षते सति रुधिरादिविश्लेषेण शरीरनाशाऽऽपत्त्या जीवत्यपि पुत्रे पितुः पुत्रत्वव्यवहारो विलुप्येतेति चेन्न। अवयवात्मकपरमाण्वादिविश्लेषे सति द्व्यणुकनाशादिक्रमेण महावयविनाशस्याऽऽवश्यकत्वात्, देहेऽवयवोपचयाऽपचयैरसमवायिकारणनाशेन देहनाशाऽवश्यकत्वात्, पटेऽपि अमुकतन्तूनां विश्लेषे संश्लेषे वाऽसमवायिकारणतन्तुसंयोगस्य नाशात्प्राचुर्याद्वा पटस्य नाशस्य पटान्तरोत्पादस्य चाऽवश्यकत्वात्, तन्वन्तरस्य तत्पटाऽवयवत्वे पूर्वं तत्पटत्वाऽभावात्, अनवयवत्वे तु तेन पटान्तरोत्पादध्रौव्यात्। ननु पूर्वपटे सत्येव तत्तन्तुभिः सहकारात् तन्त्वन्तरं महापटमुत्पाद्यतामिति चेन्न। परिच्छिन्नपरिमाणवद्द्रव्ययोः अभिन्नसमवायिकारणवृत्तित्वे विरोधात्, परिमाणवत्तानियामकाऽभावेन न्यूनाऽधिकाऽस्वपरिमाणवत्त्वापत्तेः, विनिगमनाविरहाच्च अस्वकारणनिरूपितकार्यतावत्त्वापत्तेश्च, तदवयवसमवेतद्रव्यान्तरोत्पत्तिं प्रति पूर्वद्रव्यस्य समवायेन प्रतिबन्धकत्वाच्च, पूर्वद्रव्यस्य प्रतिबन्धकस्य नाशे सत्येव द्रव्यान्तरोत्पत्तेर्युक्तत्वात्। उक्तप्रत्यभिज्ञानस्य तु सजातीयविषयकत्वेन निर्वाहात्, अन्यथा तु तत्कालीनत्वाद्यंशे भ्रान्तित्वात्। तथा च संयोगविभागाऽन्यतरस्य परिमाणनाशकत्वाऽनावश्यकत्वादिति॥ १६९॥ १७३॥

**पृथग्धीमुख्यहेतुस्तु पृथक्त्वं गुण उच्यते॥१७४॥**
**नित्ये नित्यमनित्ये तदनित्यं समुदाहृतम्।**
**द्विपृथक्त्वादयः सर्वेऽपेक्षाबुद्धिसमुद्भवाः॥१७५॥**
**व्यासज्ज्यवृत्तिकाः सर्वेऽनेकपर्याप्तिका मताः।**
**नाशस्त्वेषामपेक्षाधीनाशाद्वाऽऽश्रयनाशतः॥१७६॥**
**नाऽन्योन्याभाव इत्येव पृथक्त्वमिति युज्यते।**
**'इदमस्मात्पृथग्'बुद्धि 'नेदं-' बुद्धेर्विलक्षणा॥१७७॥**
**तन्तोर्योगात्कर्मणो वा तन्तुवस्त्रसुयोगिता-।**
**वारणाय गुणो हेतुः पृथक्त्वं, न तु भेदकः॥१७८॥**

पृथक्त्वं निरूपयति—पृथगिति। 'इदमस्मात् पृथगि-'तिव्यवहाराऽसाधारणनिमित्तकारणत्वे सति गुणत्वं पृथक्त्वम्। एवं पृथगितिशब्दनिष्ठवाच्यतासम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वमपि लक्षणम्, यादृशैकपृथक्त्वादिना तादृशव्यवहारो न जातस्तत्राऽव्याप्तिवारणाय तादृशकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वं विवक्षणीयम्॥ एवं पृथक्पदशक्यतावच्छेदकजातिमत्त्वमपि लक्षणम्॥ तस्य व्यवस्थामाह—नित्ये इति। एकपृथक्त्वं नित्यगतं नित्यम्, अनित्यगतं त्वनित्यम्। द्विपृथक्त्वादिपरार्धपृथक्त्वपर्यन्तं स्वाश्रयसमवेताऽनेकैकपृथक्त्वाऽसमवायिकारणकम् 'इदमेकपृथक् इदमेकपृथगि'-त्याद्यपेक्षाबुद्धिजन्यं भवति। द्विपृथक्त्वादयः सर्वे व्यासज्ज्यवृत्तिकाः उभयादिनिष्ठाः, तथाऽनेकेषु एव पर्याप्त्या वर्तमाना बोध्याः॥ नाश इति। अपेक्षाबुद्धिनाशात् क्वचिदाश्रयनाशाच्च द्विपृथक्त्वादीनां नाशो बोध्यः, अत्र द्विपृथक्त्वं न उभयसमवेतपृथक्त्वं, त्रिपृथक्त्वस्याऽप्युभयसमवेतपृथक्त्वात्, किन्तु उभयपर्याप्तपृथक्त्वम्, एवं त्रिपृथक्त्वादिकमपि, प्रत्येकपर्याप्त्यनङ्गीकारात्॥ 'घटः पटात् पृथक्' 'घटौ पटात् पृथक्' 'घटाः पटात्पृथगि-'त्यादिप्रतीतिभिरेकपृथक्त्वद्विपृथत्वादयः सिद्ध्यन्ति। द्विपृथक्त्वादौ समानाधिकरणानि एकपृथक्त्वानि असमवायिकारणानि, अपेक्षाबुद्धिस्तु निमित्तकारणम्॥

ननु 'अयं घटः अस्मात्पटात्पृथगि'तिप्रतीतेः अन्योन्याभावविषयकत्वेनैव निर्वाहे पृथक्त्वं न गुणान्तरमित्यत आह—नान्योन्याभाव इति। 'घटः पटात्पृथगि'त्यत्र 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति सूत्रेण पृथगर्थकपदयोगे पञ्चमी साध्वी, तादृशोऽर्थः पृथक्त्वात्मकः, स च 'घटो न पट' इति नञर्थान्योन्याभावबोधकपदयोगे प्रथमा साध्वीति तादृशाऽन्योन्याभावाऽपेक्षयाऽतिरिक्त एव। ननु तर्हि 'अन्यारादितरर्ते' इत्यनेनाऽन्योन्याभावाद्यर्थकपदयोगे कथं पञ्चमीति चेन्न। तत्र अन्यादिपदानां पृथगर्थपरत्वात्। यद्वा—प्रतियोगिताकभेदवानित्यर्थकत्वात्, तत्र 'घटादन्यः पट' इत्यादौ पटनिष्ठभेदीयप्रतियोगितायाः घटार्थेऽन्वयाद् भेदस्य तत्राऽन्वयाऽभावात् पञ्चमी साध्वी, न तु नञर्थान्योन्याभावयोगे। अत एव 'पृथक्त्वमेवाऽस्तु न त्वन्योन्याभाव' इत्यपि शंका निरस्ता, एकेन अपरस्याऽनिर्वाहात्। अत एव च 'शब्दमात्रवैलक्षण्यं न त्वर्थवैलक्षण्यम्' इतिशंकाऽपि च निरस्ता, 'घटो न पट' इत्यत्रापि पञ्चम्यापत्तेः॥

नव्यास्तु—पृथक्त्वम् अन्योन्याभाव एव न गुणान्तरम्, प्रमाणाऽभावात् इति वदन्ति। इत्यत आह—तन्तोर्योगादिति। तन्तुक्रियया तन्तुसंयोगेन वा तन्तुपटसंयोगस्य वारणाय तदतद्वृत्तिसंयोगे तयोः परस्पराऽवधिकपृथक्त्वस्य कारणत्वस्योपेयतयाऽतिरिक्तगुणत्वसिद्धेः। नहि तत्राऽन्योन्याभावेन चरितार्थता, तस्य तन्तुपटयोरुभयोरपि सत्त्वेन तदभावेन संयोगाऽनुत्पादस्य कथञ्चिदप्युपपादयितुमशक्यत्वादिति ध्येयम्॥ न तु भेदकः-भेदात्मकः॥ १७४॥ १७८॥

**संयुक्तव्यवहारस्य मुख्यो हेतुर्गुणस्तु यः।**
**संयोगो, द्विविधो नित्यो विभ्वोर्जन्यस्तदन्ययोः,॥**
**जन्यस्तु प्राप्तिरूपः स पृथक्सिद्धपदार्थयोः,।**
**स द्वेधा कर्मजः संयोगोद्भवः, कर्मजोऽपि तु-॥**
**द्वेधोभयक्रियाजन्यस्तथाऽन्यतर कर्मजः,।**
**प्रत्येकं द्विविधः स स्यादभिघातश्च नोदनम्॥**
**शब्दोत्पादक आद्यः स्याच्छब्दाऽहेतु द्वितीयकः,।**
**द्वेधा संयोगजोऽपि स्यात् कारणद्वययोगजः॥**
**कार्यकारणयोगोत्थो, मूद्वादिव्यपदेशभाग्,।**
**अव्याप्यवृत्तिकः सर्वः, समवेतो द्वयादिषु॥**

संयोगं निरूपयति—संयुक्तेति। 'इमौ संयुक्तौ' इतिव्यवहारस्याऽसाधारणनिमित्तकारणत्वे सति गुणत्वं संयोगत्वम्। प्रतिपाद्यत्वसम्बन्धाऽवच्छिन्नसंयुक्तव्यवहारनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणत्वसमानाधिकरणरूपाऽवृत्तिजातिमत्त्वमित्यर्थः। तस्य भेदानाह-द्विविध इति। विभ्वोर्द्रव्ययोः संयोगो नित्यः तेभ्यो विभुभ्योऽन्या ये पृथिव्यादयस्तयोः संयोगस्तु जन्योऽनित्यः॥ जन्यसंयोगस्य

लक्षणमाह–जन्यस्तु प्राप्तिरूप इति। पृथक्सिद्ध-पदार्थनिष्ठम् अप्राप्तिपूर्वकप्राप्तित्वं जन्यसंयोगत्व-मित्यर्थः॥ अस्य द्वैविध्यमाह–स द्वेधा कर्मज इति। क्रियाजन्यः संयोगजश्चेति द्वेधा जन्यसंयोग इत्यर्थः। तत्र क्रियाजन्यसंयोगत्वं-क्रियानिष्ठाऽसमवायिकारण-ताकसंयोगत्वम्। तत्र क्रियाजन्यस्य द्वैविध्यमाह— कर्मजोऽपि द्वेधेति। उभयक्रियाजन्यो मेषयोर्मल्ल-योर्वा संयोगः, उभयक्रियाजन्यसंयोगत्वं नाम-कर्म-सहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपितसंयोग-निष्ठकार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छे-दकवैजात्यव्याप्या या जातिस्तद्वत्त्वम्। अन्यतर-क्रियाजन्यो वृक्षविहङ्गमयोः श्येनशैलयोर्वा संयोगः। अन्यतरकर्मजन्यसंयोगत्वं नाम क्रियाव्यक्त्यसहकृत-क्रियानिष्ठाऽसमवायिकारणतानिरूपितसंयोगनिष्ठ-कार्यतावच्छेदकतया सिद्धा क्रियाजन्यतावच्छेदकतया सिद्धवैजात्यव्याप्या या जातिस्तद्वत्त्वम्। द्विविध-स्याऽपि कर्मजसंयोगस्य प्रत्येकं द्वैविध्यमाह–प्रत्येकं द्विविध इति। अभिघातो नोदनं चेति॥ अभिघा-तस्य लक्षणमाह–शब्दोत्पादक इति। शब्दजनकसंयो-गत्वम् अभिघातत्वम्। शब्दाऽजनकसंयोगत्वं नोद-नत्वम्॥ संयोगजसंयोगस्य द्वैविध्यमाह–द्वेधा संयोगजोऽपीति। कारणे–अवयविद्वयसमवायिकारणे हस्तशाखात्मके, तयोः संयोगेन शरीरवृक्षयोः संयोगो जायते। एवं कार्यं वृक्षः, कारणं शरीरस्य करः, तयोः संयोगजन्यो वृक्षशरीरयोः संयोग इत्यर्थः। संयोगजसंयोगत्वं नाम संयोगत्वाऽवच्छि-न्नाऽसमवायिकारणतानिरूपिततादृशसंयोगनिष्ठका-र्यतावच्छेदकतया सिद्धसंयोगत्वव्याप्यजातिविशेष-वत्त्वम्॥ मृदुत्वादिकं विलक्षणसंयोगत्वमिति दर्श-यितुमाह–मृद्वादीति। स्पृष्टेऽस्पृष्टे वा द्रव्ये वस्त्र-पाषाणादौ मृदुकठिनादिभानं तथाविधसंयोगविषय-कमपि बोध्यम्॥ अव्याप्यवृत्तिक इति। सर्ववि-धोऽपि संयोगः स्वप्रतियोगित्व-स्वसामानाधिकर-ण्योभयसम्बन्धेनाऽभावविशिष्ट इत्यर्थः॥ समवेत इति। द्रव्यद्वये समवायेन वर्तत इत्यर्थः। एवं बहु-ष्वपि समवेतो बोध्यः॥ १७९–१८३॥

**विभक्तप्रत्ययाऽसाधारणो हेतुर्गुणस्तथा।**
**मुख्यः संयोगनाशस्य हेतुर्विभाग उच्यते॥**
**अनित्य एव, स द्वेधा क्रियाजश्च विभागजः,।**
**आद्यस्त्वेकक्रियाजन्यो द्व्यकर्मोद्भवस्तथा,॥**
**द्वेधा विभागजो भागो, हेतुमात्रविभागजः।**
**हेत्वहेतुविभागोत्थो, द्विष्ठश्चाऽव्याप्यवृत्तिकः॥**
**विभागोत्थविभागस्य सिद्धेश्चाऽपि प्रतीतितः।**
**संयोगध्वंसतो नाऽस्य गतार्थत्वं भवेदिति॥**

विभागं निरूपयति–विभक्तेति। 'इमौ विभक्ता'-विति प्रत्ययाऽसाधारणनिमित्तकारणत्वे सति गुणत्वं विभागत्वम्। प्रतिपाद्यतासम्बन्धावच्छिन्नविभक्त-प्रत्ययनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्न-कारणत्वसमानाऽधिकरणरूपाऽवृत्तिजातिमत्त्वमित्य-र्थः॥ लक्षणान्तरमाह–मुख्य इति। संयोगनाशाऽ-साधारणकारणत्वे सति गुणत्वं विभागत्वम्। संयो-गनाशं प्रति प्रतियोगिविधया संयोगस्य हेतुत्वात् संयोगेऽतिव्याप्तिवारणाय प्रतियोगित्वसम्बन्धान-वच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकतावत्त्वे सति गुणत्वं वक्तव्यम्। एवं संयोगनाशत्वावच्छिन्नकार्य-तानिरूपितसमवायसम्बन्धावच्छिन्नकारणतावद्गुण-त्वमपि लक्षणं बोध्यम्॥ अनित्य एवेति। सर्वोऽपि विभागोऽनित्यः, विभूनां विभागाऽसंभवात्। परि-च्छिन्नानां विभागस्याऽनित्यत्वात्॥ द्वैविध्यमाह— स द्वेधेति। क्रियाजन्यो विभागः, विभागजन्यो विभागश्चेति द्विविध इत्यर्थः, तत्र क्रियाजन्यविभा-गत्वं नाम–क्रियात्वावच्छिन्नाऽसमवायिकारणतानिरू-पितविभागनिष्ठकार्यतावच्छेदकतया सिद्धजातिवि-शेषवद्गुणत्वम्। विभागजविभागत्वं नाम–विभाग-त्वावच्छिन्नाऽसमवायिकारणतानिरूपितविभागनिष्ठ-कार्यतावच्छेदकतया सिद्धजातिविशेषवद्गुणत्वम्॥ क्रियाजन्यविभागस्य द्वैविध्यमाह—आद्यस्त्वेकेति। अन्यतरक्रियाजन्यविभागः उभयक्रियाजन्यविभाग-श्चेत्यर्थः। तत्र अन्यतरक्रियाजन्यविभागत्वं नाम— कर्माऽसहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपित-विभागनिष्ठकार्यतावच्छेदकतया सिद्धविभागसामा-न्यविभाजककर्मजन्यतावच्छेदकवैजात्यव्याप्यजाति-विशेषत्वम्। एवम् उभयक्रियाजन्यविभागत्वं नाम-कर्मसहकृतकर्मनिष्ठाऽसमवायिकारणतानिरूपितवि-

भागनिष्ठकार्यतावच्छेदकतया सिद्धतादृशवैजात्य-व्याप्यजातिविशेषत्वम् ॥ विभागजविभागस्य द्वैविध्यमाह—द्वेधेति। हेतुमात्रेति। कारणमात्रविभागजविभागत्वम्, कारणाऽकारणविभागजविभागत्वं च। आद्यः कारणमात्रविभागाऽसमवायिकारणक-कारणाऽकारणविभागरूपः, यथा अदृष्टवशात् परमाणौ कर्म—१। तेन परमाणुद्वयसमवेतविभागः—२। तेन द्व्यणकाऽसमवायिकारणसंयोगस्य नाशः—३। तेत द्व्यणुकनाशः—४। ततस्तेनैव परमाणुद्वयविभागेन सकर्मणः परमाणोराकाशादिविभागः—५। इति। अत्र परमाण्वाकाशयोर्विभागाऽनंगीकारे परमाण्वाकाशसंयोगस्याऽनाशात् नित्यत्वप्रसंगात्, परमाण्वाकाशसंयोगस्य प्रतिबन्धकस्य सत्त्वेन उत्तरसंयोगाऽनुत्पादात्। ततः परमाण्वाकाशसंयोगनाशः—६। ततः परमाणोरुत्तरदेशसंयोगः—७। ततः परमाणुकर्मणो नाशः—८॥

ननु प्रथमक्षणीयपरमाणुकर्मणैव पञ्चमक्षणीयपरमाण्वाकाशविभागो जायताम्, कृतं विभागजविभागेनेति चेन्न। द्व्यणुकारम्भकसंयोगनाशकविभागजनककर्मणः द्व्यणुकाऽनारम्भक-परमाण्वाकाशसंयोगविरोधिविभागजनकत्वे विकसत्कलिकाया अग्रावच्छेदेन कलिकाऽनारम्भकसंयोगविरोधिविभागजनककर्मणा : नालावच्छेदेनाऽऽरम्भकसंयोगविरोधिविभागोत्पत्त्या नाशप्रसंगः स्यात्। तथा च 'परमाणुसमवेतक्रिया, न परमाण्वाकाशविभागजनिका,-परमाणुद्वयविभागजनकत्वात्, यत् यदारम्भकसंयोगविरोधिविभागजनकं तत् न तदनारम्भकसंयोगविरोधिविभागजनकम्, यथा विकसत्कलिकाकर्मे'ति-सामान्यमुखव्याप्त्या परमाण्वादिकर्मविशेषे परमाण्वाकाशवृत्तिविभागजनकत्वाऽभावसिद्ध्या परिशेषात् कारणमात्रविभागजविभागसिद्धिरिति। ननु द्वितीयक्षणीयपरमाणुद्वयविभागेनैव द्व्यणुकनाशपूर्वक्षणे परमाण्वाकाशविभागो जन्यतामिति चेन्न। परमाणुद्वयसंयोगविरोधिविभागवतो द्व्यणुकनाशपूर्वक्षणवर्तिनः परमाणुद्वयस्य सति द्व्यणुके द्व्यणुकात्मकप्रतिबन्धकाऽभावस्य निमित्तस्याऽसत्त्वेन परमाण्वाकाशात्मकदेशान्तरविभागाऽजनकत्वात्॥ द्वितीयः कारणाऽकारणविभागजकार्याऽकार्यविभागो यथा—करतरुविभागेन शरीरतरुविभागः। तथा हि—प्रथमं करक्रिया–१। ततः करतरुविभागः–२। ततः करतरुसंयोगनाशः—३। ततः शरीरतरुविभागः। अत्र करक्रिया नाऽसमवायिकारणम्, शरीरे वृक्षे वा तस्याः समवायेनाऽभावात्, शरीरे तदानीं स्वक्रियाया एवाऽभावात्, शरीराद्यवयविक्रियायाः यावदवयवघटकप्रत्येकाऽवयवसमवेता यावत्यः क्रियास्तावत्प्रत्येकनिरूपितजन्यतावत्त्वात्, कर्मणो व्याप्यवृत्तित्वात्॥ द्विष्ठ इति। समवायेन द्रव्यद्वयवृत्तिरित्यर्थः॥ अव्याप्येति। दैशिकाऽव्याप्यवृत्तिरित्यर्थः। स्वप्रतियोगितासम्बन्धेन स्वप्रतियोगिमत्ताबुद्धिविरोधितावच्छेदकविषयतावच्छेदकीभूतकालाऽनवच्छिन्नसम्बन्धेन स्वप्रतियोग्यधिकरणे वर्तमानत्वं दैशिकाऽव्याप्यवृत्तित्वम्॥ ननु संयोगध्वंस एव विभागोऽस्त्वित्यत आह—विभागोत्थेति। 'शरीरवृक्षौ विभक्तौ' विति प्रत्यक्षप्रतीतिसिद्धोऽपि विभागजविभागो न संयोगध्वंसेनाऽन्यथासिद्ध इत्यर्थः॥ ननु उक्तप्रतीतेर्विषयः शरीरतरुध्वंस एवाऽस्त्विति चेन्न। विभागाऽनङ्गीकारे शरीरतरुसंयोगनाशस्यैवासंभवात्। करक्रियाया व्यधिकरणत्वेन तन्नाशकत्वाऽसंभवात्॥ ननु करतरुसंयोगनाश एव शरीरतरुसंयोगनाशं जनयेदिति चेन्न। आश्रयनाशाऽजन्यगुणनाशस्य विरोधिगुणजन्यत्वनियमेन शरीरतरुसंयोगनाशे करतरुसंयोगनाशस्याऽजनकत्वात्। किञ्च संयोगाऽभावस्य विभागत्वे विनिगमनाविरहेण विभागाऽभावस्य संयोगत्वमपीति द्वयोरप्यसिद्धिः स्यात्, तथा च न विभागस्य संयोगध्वंसात्मकत्वमिति॥ १८४-१८७॥

**'अस्मादयं तु दूरो वा ज्येष्ठश्चेति'धियं प्रति।**
**मुख्यहेतुर्गुणः प्रोक्तं परत्वं, द्विविधं तु तत्॥१८८॥**
**दैशिकं कालिकं, नित्याऽनित्यमूर्तेषु दैशिकम्।**
**काष्ठया मूर्तसंयोगभूयस्त्वज्ञानजं हि तत्॥१८९॥**
**तदाश्रये दिशो योगोऽसमवायी भवत्यथ,।**
**निमित्तकारणाऽपेक्षाप्रज्ञानाशेन नश्यति,॥१९०॥**
**सूर्यकर्माऽधिकत्वप्रज्ञानजन्यं तु कालिकम्।**
**जन्यमूर्ते तु कालेन जन्यतेऽथ तदाश्रये॥१९१॥**

**कालयोगोऽसमवायी, प्रज्ञानाशेन नश्यति ।**
**आश्रयस्य विनाशेन क्वचिन्नाशस्तु जायते ॥१९२॥**

परत्वं निरूपयति—अस्मादयमिति । 'अस्मादयं दूर' इति प्रतीत्यसाधारणनिमित्तकारणत्वे सति गुणत्वं दैशिकपरत्वम् । 'अयमस्माद् दूर' इति शब्दनिष्ठप्रतिपाद्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्त्वमित्यर्थः । एवम्, 'अयमस्माज्ज्येष्ठ' इतिप्रतीत्यसाधारणनिमित्तकारणत्वे सति गुणत्वं कालिकपरत्वम् 'अयमस्माज्ज्येष्ठ'-इतिशब्दनिष्ठप्रतिपाद्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्त्वमर्थः । एवं परपदशक्यतावच्छेदकजातिमत्त्वमपि परत्वलक्षणं बोध्यम् ॥ दूरत्वस्याश्रयमाह—नित्येति । नित्यानि अनित्यानि च यानि मूर्तानि अपकृष्टपरिमाणवद्द्रव्याणि तेषु समवायेन दैशिकपरत्वं वर्तते । तन्निमित्तकारणं दर्शयति—काष्ठयेति । दिशया सह मूर्त्तपदार्थानां बहुतराये संयोगाः, स्वसंयुक्तदिक्संयोगित्वसम्बन्धेन तादृशबहुतरसंयोगविशिष्टत्वज्ञानस्य दूरत्वेनाऽभिमते पदार्थे विषयतया सत्त्वात् तादृशज्ञानेन 'अयमस्माद् बहुतरसंयोगविशिष्ट' इत्यपेक्षाबुद्ध्यात्मकेन निमित्तकारणेन दैशिकपरत्वं जन्यते, यथा 'सोमनाथक्षेत्रात् रैवताचलमपेक्ष्य द्वारिका दूरा' इत्यत्र द्वारिकायां परत्वम् ॥ असमवायिकारणमाह—तदाश्रये इति । दैशिकपरत्वाश्रये द्वारिकायां यो दिक्संयोगः सः असमवायिकारणमित्यर्थः ॥ निमित्तेति । निमित्तकारणस्य अपेक्षाबुद्धेर्नाशात्परत्वस्य नाश इत्यर्थः । तत्र प्रथमम् 'अत्र सोमनाथक्षेत्रम्, अत्र रैवताचलः, अत्र द्वारिका चे'ति प्रत्यक्षं मानसं वा ज्ञानम्—१ । ततो न्यूनसंयोगविशिष्टदिक्संयुक्तो रैवताचलः, बहुतरसंयोगविशिष्टदिक्संयुक्ता द्वारिकेति चाऽपेक्षाज्ञानम्—२ । ततो द्वारिका रैवताचलात्परा इति परत्वोत्पत्तिः—३ । ततः परत्वत्वपरत्वोभयस्य निर्विकल्पकम्—४ । ततः परत्वसविकल्पकप्रत्यक्षम्, अपेक्षाज्ञाननाशश्च—५ । ततः परत्वनाशः—६ । एवं कालिकपरत्वे दैशिककालिकाऽपरत्वे च क्षणा ऊह्याः ॥

कालिकपरत्वस्य निमित्तकारणं दर्शयति—सूर्येति । स्वाश्रयसूर्यसंयुक्तकालसंयुक्तत्वसम्बन्धेन बहुतरसूर्यक्रियाविशिष्टत्वज्ञानस्य ज्येष्ठत्वेनाऽभिमते पदार्थे विषयतया सत्त्वात् तादृशज्ञानेन 'अयमस्माद् बहुतरसूर्यक्रियाविशिष्ट'इत्यपेक्षाबुद्ध्यात्मकेन निमित्तकारणेन कालिकपरत्वं जन्यते, यथा 'चैत्रान्मैत्रो ज्येष्ठ'इत्यत्र मैत्रे कालिकपरत्वम् ॥ तदाश्रयमाह—जन्यमूर्ते इति । जन्ये मूर्तपदार्थे एव कालोपाधिसंश्लेषात् कालेन परम्परासम्बन्धघटकेन जन्येषु एव मूर्तपदार्थेषु कालिकपरत्वं जन्यत इति ॥ अथेति । कालिकपरत्वाश्रये मैत्रादौ पिण्डे यः कालसंयोगः सः परत्वस्याऽसमवायिकारणम् ॥ प्रज्ञानाशेनेति । निमित्तकारणस्याऽपेक्षाबुद्धेर्नाशात् कालिकपरत्वमपि नश्यतीत्यर्थः । तत्र प्रथमं 'तदानीं मैत्रः इदानीं चैत्र' इति प्रत्यक्षम् मानसं वा ज्ञानम्—१ । ततो न्यूनसूर्यक्रियाविशिष्टकालसंयुक्तचैत्रो बहुतरसूर्यक्रियाविशिष्टकालसंयुक्तो मैत्र इत्यपेक्षाबुद्धिर्ज्ञानम्—२ । ततश्चैत्रान्मैत्रः पर इति परत्वोत्पत्तिः—३ । तत परत्वाऽपरत्वोभयनिर्विकल्पकम्—४ । ततः परत्वसविकल्पकप्रत्यक्षम्, अपेक्षाबुद्धिनाशश्च—५ । ततः परत्वनाशः—६ । इति ॥ आश्रयस्येति । क्वचित् तात्कालिकाऽऽश्रयनाशादपि परत्वादिनाश इत्यर्थः ॥१८८–१९२ ॥

**अस्मादयं समीपो वा कनिष्ठश्चेतिधीं प्रति ।**
**मुख्यहेतुर्गुणः प्रोक्तमपरत्वं, च पूर्ववत् ॥१९३॥**
**सर्वमन्यत्समानं स्यात्, दैशिकं तत्र काष्ठया ।**
**मूर्त्तयोगाऽल्पताज्ञानाज्जायते, कालिकं तु तत् ॥१९४**
**सूर्यक्रियाऽल्पताज्ञानाज्जायतेऽन्यत्तु पूर्ववत् ।**
**कृष्टताजन्यताभ्यां न कृतार्थत्वं तयोर्भवेत् ॥१९५॥**

अपरत्वं निरूपयति—'अस्मादयं समीप' इति । 'अस्मादयं समीप' इति प्रतीत्यसाधारणनिमित्तकारणत्वे सति गुणत्वं दैशिकाऽपरत्वम् । 'अयमस्मात्समीप' इति शब्दनिष्ठप्रतिपाद्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्त्वमित्यर्थः । एवम् 'अयमस्मात्कनिष्ठ' इति प्रतीत्यसाधारणनिमित्तका-

रणत्वे सति गुणत्वं कालिकम् अपरत्वम्, 'अयमस्मात् कनिष्ठ' इतिशब्दनिष्ठप्रतिपाद्यत्वसम्बन्धावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतासमानाधिकरणरूपाऽवृत्तिजातिमत्त्वमित्यर्थः । एवम्-'अपर'पदशक्यतावच्छेदकजातिमत्त्वमपि अपरत्वलक्षणम् ॥ पूर्ववदिति । परत्वे इव आश्रयोऽसमवायिकारणं नाशश्च अपरत्वेऽपि समाना बोध्याः । तथा हि—दैशिकम् अपरत्वं नित्याऽनित्योभयविधमूर्तेषु समवायेन वर्तते । 'सोमनाथक्षेत्रात् द्वारिकामपेक्ष्य रैवताचलोऽपरः' इत्यत्र दैशिकाऽपरत्वाश्रये रैवतगिरौ यो दिक्संयोगः सः असमवायिकारणम् । दैशिकस्य कालिकस्य चाऽपरत्वस्योत्पत्तिरपि पूर्ववद्बोध्या । निमित्तकारणस्याऽपेक्षाबुद्धेर्नाशात् अपरत्वस्य नाशः क्वचिदाश्रयनाशादपि नाशो बोध्यः ॥ दैशिकाऽपरत्वस्य निमित्तकारणे विशेषमाह—मूर्तयोगेति । दिशया सह मूर्तपदार्थानाम् अल्पतरा ये संयोगाः, स्वसंयुक्तदिक्संयोगित्वसम्बन्धेन तादृशाऽल्पतरसंयोगविशिष्टत्वज्ञानस्य समीपत्वेनाऽभिमते पदार्थे विषयतया सत्त्वात् तादृशज्ञानेन 'अयमस्मादल्पतरसंयोगविशिष्ट' इत्यपेक्षाबुद्ध्यात्मकेन निमित्तकारणेन दैशिकाऽपरत्वं जन्यते इत्यर्थः ॥ कालिकाऽपरत्वमपि जन्ये मूर्तपदार्थे एव कालोपाधिसंश्लेषात् कालेन परम्परासम्बन्धघटकेन जन्येष्वेव मूर्तपदार्थेषु कालिकाऽपरत्वं जन्यते । कालिकाऽपरत्वाश्रये चैत्रादौ पिण्डे यः कालसंयोगः सः अपरत्वस्य असमवायिकारणम् । निमित्तकारणस्याऽपेक्षाबुद्धेर्नाशात् क्वचिदाश्रयनाशाच्च नश्यति । क्षणप्रक्रियाऽपि समाना ॥ कालिकाऽपरत्वस्य निमित्तकारणे विशेषमाह—सूर्यक्रियेति । स्वाश्रयसूर्यसंयुक्तकालसंयुक्तत्वसम्बन्धेन अल्पतरसूर्यक्रियाविशिष्टत्वज्ञानस्य कनिष्ठत्वेनाऽभिमते पदार्थे विषयतया सत्त्वात् तादृशज्ञानेन 'अयमस्मादल्पतरसूर्यक्रियाविशिष्ट' इत्यपेक्षाबुद्ध्यात्मकेन निमित्तकारणेन कालिकाऽपरत्वं जन्यते, यथा 'चैत्रो मैत्रात् कनिष्ठ' इति ॥

ननु बहुतरसंयोगान्तरितत्वात्मकविप्रकृष्टत्वाऽल्पसंयोगान्तरितत्वात्मकसन्निकृष्टत्वाभ्यां दैशिकपरत्वाऽपरत्वादिव्यवहारस्य, बहुतरस्पन्दान्तरितजन्यत्वात्मकज्येष्ठत्वाऽल्पतरस्पन्दान्तरितजन्यत्वात्मकक-निष्ठत्वाभ्यां कालिकपरत्वाऽपरत्वादिव्यवहारस्योपपत्तेर्न तयोर्गुणान्तरत्वमित्यत आह—क्लृप्तेति । विप्रकृष्टत्वसन्निकृष्टत्वाभ्यां जन्यत्वेन च न परत्वाऽपरत्वयोश्चरितार्थत्वमित्यर्थः । तथा हि—दैशिकपरत्वादेर्निरुक्तसूर्यसंयोगाऽन्तरितत्वादिरूपत्वे तस्याऽप्यतीन्द्रियत्वेन घटादावपि कस्यापि दैशिकपरत्वादिनिष्ठलौकिकविषयताशालिप्रत्यक्षानुत्पत्तेः 'साक्षात्करोमी'त्यनुव्यवसायाऽनुपपत्तेश्च । एवं कालिकपरत्वादेर्निरुक्तबहुतरसूर्यक्रियान्तरितत्वोत्पन्नत्वादिरूपत्वे ज्येष्ठत्वादेर्निरुक्तबहुतरसूर्यक्रियान्तरितजन्यत्वादिरूपत्वे चोत्पत्तिजन्मनोरतीन्द्रियतया तल्लौकिकप्रत्यक्षाऽनुत्पत्तेः । जन्यगुणादावपि निरुक्तबहुतरसूर्यक्रियान्तरितोत्पन्नत्वादेः सत्त्वेन भ्रान्तानां कालिकपरत्वादिप्रत्ययाऽऽपत्तेश्चेति । तस्माद्गुणान्तरत्वम् ॥ १९३-१९५ ॥

**आद्यपाताऽसमवायी गुणो हेतुर्गुरुत्वकम् ।**
**नित्ये नित्यमनित्ये तदनित्यं, च क्षितौ जले॥१९६॥**
**प्रत्यक्षं, किन्त्वियत्ता स्यादनुमेया पणादिना ।**

गुरुत्वं निरूपयति—आद्यपातेति । आद्यपतनाऽसमवायिकारणत्वे सति गुणत्वं गुरुत्वत्वम् । आद्यत्वं चाऽत्र स्वसमानाधिकरणपतनप्रतियोगिकध्वंसाऽसमानकालीनत्वम् । तादृशाऽसमवायिकारणतावच्छेदकतया सिद्धरूपाऽवृत्तिजातिमत्त्वमिति फलितार्थः । तेन सर्वत्र गुरुत्वे समन्वयः । नित्ये इति । नित्ये परमाण्वादौ नित्यम् । अनित्ये घटादौ त्वनित्यं गुरुत्वम् । तच्च क्षितौ जले च समवायेन वर्तते । ननु गुरुत्वम् अतीन्द्रियम्, तच्च 'संयोगाऽसमवधानकालीना पतनक्रिया,-गुणाऽसमवायकारणिका,-क्रियात्वात्,-संयोगजन्यक्रियावदि'त्यादिनाऽनुमेयमित्यत आह—प्रत्यक्षमिति । करगृहीते पाषाणादौ प्रत्यक्षात्, अतिन्द्रिये परमाणौ तु पृथ्वीत्वादिनाऽनुमानात्, करे गृहीतेऽपि भारस्येयत्ताया अनिर्णयात् साऽनुमेयैव पणकप्रस्थादिलिङ्गेन भवति । 'अयं भारः,—प्रस्थनिरूपितेयत्तावान्,-प्राक्सिद्धप्रस्थतोलितद्रव्यवृत्तिभारत्वात्,-भारान्तरवत्' इति । अस्पृष्टपाषाणादौ कठिनसंयोग इव गुरुत्वमपि चाक्षुषं, चन्दने सौरभवत् ज्ञानलक्षणयाऽपि भानात् । एवं स्पार्शनमपि भवति ॥ १९६ ॥

**ऊर्ध्वशीघ्रक्रियायां तु प्रथमायां हि लाघवम्॥१९७॥**
**गुणः स्यादसमवायी हेतुर्नित्यादि पूर्ववत् ।**
**क्षित्यप्तेजोमरुज्जीवतमोवृत्त्यविरोधि तत् ॥१९८॥**

लघुत्वं निरूपयति—ऊर्ध्वेति । वह्न्यादौ प्रथमाम् ऊर्ध्वगत्यादिक्रियां प्रति असमवायिकारणत्वे सति गुणत्वं लघुत्वत्वम्, एवं सूक्ष्मस्याऽऽत्मनः परमाणूनां च शीघ्रगत्यादि प्रति असाधारणनिमित्तकारणत्वे सति गुणत्वं लाघवम् । तादृशकारणतावच्छेदकतया सिद्धजातिमत्त्वं परिष्करणीयम् ॥ नित्यादीति । गुरुत्वमिव लघुत्वमपि नित्ये नित्यम् अनित्येऽनित्यम् ॥ आश्रयमाह—क्षित्येति । पृथिवीजलतेजोवायुजीवात्मतमस्सु समवायेन वर्तते इत्यर्थः । एतदपि चक्षुषा वह्न्यादौ त्वचा तूलकार्पासादौ गृह्यते । ननु गुरुत्वेन सह विरोधात् पृथिवीजलयोर्न लघुत्वमित्यत आह—अविरोधीति । द्वयोः स्वतन्त्रगुणतया परस्परविरोधाऽभावात्, स्वर्णमुद्रायां गुञ्जाऽपेक्षया गुरुत्वस्य प्रस्थाऽपेक्षया लघुत्वस्य प्रत्यक्षसिद्धत्वात् । ननु तरतमादिभावेन गुरुत्वमेव तत्र लाघवव्यवहारविषयमिति चेन्न । पणकप्रस्थभारयोः साम्यापत्तौ व्यवहारोच्छेदापत्तिरिति साम्यापत्तिभिया पणके पणकवर्जप्रस्थगुरुत्वसममानलघुत्वसहकृतगुरुत्वं, प्रस्थे च प्रस्थाऽन्तःस्थपणकलघुत्वसममानगुरुत्वसहकृतलघुत्वं, प्रतीतिसिद्धम् अवर्जनीयमेवेति नैकेनाऽपरस्याऽन्यथासिद्धिरिति ॥ अत एव गुरुत्वाभावो वह्न्यादौ लघुत्वमित्यपि न, व्याप्यवृत्तिगुणयोः क्षितौ सामानाधिकरण्यतया सिद्धौ वह्न्यादौ लघुत्वस्य शीघ्रगतिजनकस्य आद्योर्ध्वगतिजनकस्य च स्वतन्त्रतया प्रत्यक्षगुणत्वेन सिद्धत्वात् ॥ १९७–१९८ ॥

**स्वच्छता प्रतिबिम्बे स्यादसाधारणकारणम् ।**
**क्ष्माऽन्यनित्ये भवेन्नित्या, जन्ये जन्या, गुणो मता॥**
**क्षित्यप्तेजस्सु प्रत्यक्षा, पृथिव्यां पाकजा तथा ।**
**अव्याप्यवृत्तिरप्युक्ता संसिद्धा तु जलेऽनले॥२००॥**

स्वच्छतां निरूपयति—स्वच्छतेति । प्रतिबिम्बाऽसाधारणनिमित्तकारणत्वे सति गुणत्वम्, तादृशकारणतावच्छेदकतया सिद्धस्वच्छत्वत्ववत्त्वं वा स्वच्छताया लक्षणम् । पृथिवीभिन्नेषु नित्येषु जलतेजःपरमाणुषु नित्या, जलतेजोद्व्यणुकादौ पृथिव्यां च सर्वथाऽनित्या । सा च पृथिवीजलतेजःसु समवायेन वर्तते । तत्र योग्यवृत्तिः चाक्षुषप्रत्यक्षसिद्धा । तत्र पृथिव्यां पाकजा बोध्या, काचादिस्वच्छतायाः पाकजन्यत्वात्, सा च मिलितेऽपि किञ्चिन्मात्रया सत्त्वात् तत्र भागे स्वाऽभावेन सह वर्तमानत्वात् अव्याप्यवृत्तिनी बोध्या ॥ संसिद्धेति । सांसिद्धिकी स्वच्छता जले तेजसि च समवायेन वर्तते, तत्र पाकाऽसंभवात् ॥ ननु चक्षूरश्म्यप्रतिहतिप्रवेशप्रदद्रव्यत्वमेव स्वच्छत्वं न तु गुणान्तरमिति चेन्न । काले तत्सत्त्वेऽपि स्वच्छताया अव्यवहारात्, सूक्ष्मकृष्णमलिनवस्त्रादौ तथा सत्त्वेऽपि स्वच्छत्वाऽव्यवहारात् । गगनं स्वच्छमित्यादिकमपि प्रभायोगाद् वर्षायोगाद्वा बोध्यम्, गगने तु भ्रान्तिरेवेति ॥ १९९–२०० ॥

**द्रवत्वं तु गुणस्त्वाद्यस्यन्दनाऽसमवायि, तत् ।**
**सांसिद्धिकं निमित्तोत्थं, चायं वार्यनलेऽनिले॥२०१॥**
**नैमित्तिकं क्षितौ, नित्यं जलतेजोऽनिलाऽणुषु ।**
**तदन्ये तदनित्यं स्यात्, पिण्डयोगे निमित्तकम् ॥**

द्रवत्वं निरूपयति—द्रवत्वं त्विति । आद्यस्यन्दनाऽसमवायिकारणत्वे सति गुणत्वं द्रवत्वस्य लक्षणम् । तादृशकारणतावच्छेदकतया सिद्धद्रवत्वत्वजातिमत्त्वं वा वक्तव्यम् । तस्य द्वैविध्यमाह—सांसिद्धिकं नैमित्तिकं चेति । चाऽयमिति सांसिद्धिकं द्रवत्वं जलतेजोवायुषु बोध्यम् । तेजसि कृत्रिमविद्युदादीनां ताम्रादितारानुसारगतिप्रवाहस्य वह्नेश्च ज्वालाप्रवाहस्य वायोश्च झंझावातादितिर्यक्प्रवाहस्य द्रवत्वाऽन्यथाऽनुपपत्त्या तत्सिद्धिः ॥ नैमित्तिकं पाकजं द्रवत्वं पृथिव्यामेव सुवर्णादिरूपायां प्रत्यक्षसिद्धम् । नित्यमिति । जलतेजोवायुपरमाणुषु द्रवत्वं नित्यम् तदन्येषु जलतेजोवायुद्व्यणुकादिषु सर्वपृथिव्यां चाऽनित्यं तद्बोध्यम् ॥ पिण्डेति । पिष्टादीनां संयोगे स्नेहसहकृतं द्रवत्वं क्वचिन्निमित्तकारणमपि भवति ॥ २०१–२०२ ॥

**पार्थिवाऽग्निचिरस्थैर्ये निमित्तं कारणं तु वा ।**
**पिण्डीभावनिमित्तं यद् द्रव्यभिन्नं गुणो जले ॥**

**स्नेहो नित्ये तु नित्यः स्यादनित्येऽनित्य उच्यते।**
**पार्थिवे वस्तुनि स्नेहो जलयोगाद्विचिन्त्यते ॥२०४**

स्नेहं निरूपयति—पार्थिवाऽग्नीति । प्रदीपे चिक्कणकाष्ठादौ च स्नेहवशाद् वह्नेरवस्थानं दृश्यते, तथा च पार्थिवाऽग्निचिरस्थैर्याऽसाधारणनिमित्तकारणत्वे सति गुणत्वम् । यद्वा—पिष्टादिपिण्डीभावनिमित्तकारणत्वे सति द्रव्यत्वाऽवृत्तिगुणत्वव्याप्यजातिमत्त्वं स्नेहस्य लक्षणम् । तस्याश्रयमाह—जले इति । समवायेन जले वर्तते। तत्रापि नित्ये परमाणौ नित्यः, अनित्ये द्वचणुकादावनित्यः । ननु पृथिव्यां चिक्कगवस्तुषु स्नेहः प्रत्यक्षः एवं घृततैलादावपि स्नेहः स्वीकार्यः अन्यथा दहनं न स्यात्, जलस्य तु वह्निविरोधित्वात् स्नेहस्य वह्न्यनुकूलस्य तत्र कल्पनमप्यनुचितमित्यत आह—पार्थिवे इति । जलाऽयोगे खरस्वभावरजसां पिण्डाद्युत्पादकाऽसामर्थ्यस्य प्रत्यक्षनिर्णयात् स्नेहस्य जले एव निर्णीतत्वात् जलस्यैव स्नेहसमवायिकारणत्वात् । तथा च सर्वत्र पृथिव्यां जलयोगादेव तैजसपाकसहकारात् परम्परया चिक्कणादिभावात्मकस्नेहभानात्, एवं घृतादावपि खनिजतैलादावपि च पार्थिवपाकेन सान्द्रस्नेहजननात् प्रदीपाद्यनुकूलतासंभवात् । अनुत्पन्नघट्टस्नेहस्य जलस्य वह्निविरोधित्वेऽपि घट्टस्नेहवज्जलात्मकतैलस्य वह्नेरविरोधित्वम्, वडवानलेन समुद्रजलस्येव विद्युदादिना अब्भ्रजलस्येव दाहकप्रदीपादिना उत्कृष्टस्नेहवज्जलस्याऽविरोधित्वात् ॥ २०३–२०४ ॥

**रूक्षधीमुख्यहेतुः स्याद् गुणो वै रूक्षताऽथ सा ।**
**सिद्धा निमित्तजा द्वेधा, सिद्धा भूमौ जलेऽनिले ॥**
**व्याप्यवृत्तिः, जले स्यान्निमित्ताऽनवधिशीतजा ।**
**अव्याप्यवर्तिनी सांसिद्धिकद्रवत्वरोधिका ॥२०६॥**
**चक्षुषा च त्वचा ग्राह्या, नित्या क्ष्माऽन्यनिलाऽणुषु।**
**अनित्या तु तदन्ये स्यात् स्पर्शान्नाऽस्या गतार्थता॥**

रूक्षतां निरूपयति—रूक्षधीति । 'पाषाणादौ रूक्ष' इत्यादिप्रतीत्यसाधारणनिमित्तकारणत्वे सति गुणत्वं रूक्षताया लक्षणम् । तादृशकारणतावच्छेदकतया सिद्धगुणत्वव्याप्यजातिमत्त्वं वक्तव्यम् । तस्या द्वैविध्यमाह—सिद्धेति । सांसिद्धिकी नैमित्तिकी चेति । तत्र सांसिद्धिकी पृथिव्यां जले पवने च व्याप्यवृत्तितया बोध्या । अथ जले तु अनवधिकशैत्यात्मकेन निमित्तेन जायमाना हिमकरकादौ सांसिद्धिकद्रवत्वप्रतिबन्धिकाऽव्याप्यवृत्तितया बोध्या । हिमादावार्द्रजलस्यापि सत्त्वात् । सा च चक्षुषा त्वचा च गृह्यते। क्ष्मेति । पृथ्वीतेजःपवनेष्वणुषु नित्या बोध्या । तदन्ये इति । पृथ्वीतेजःपवनद्वचणुकेषु जले च सर्वत्राऽनित्या रूक्षता बोध्या ॥ ननु कठिनस्पर्श एव रूक्षताऽस्त्वित्यत आह—स्पर्शान्नेति । अस्या रूक्षतायाः स्पर्शान्न चरितार्थता, त्वचः संयोगाऽकालेऽपि चक्षुषा ग्राह्यत्वात् ॥ ननु तर्हि कठिनसंयोग एव रूक्षता भवत्विति चेन्न कोमलसंयोगवत्यपि व्यजनवायौ रूक्षताया अनुभवात् 'ग्रीष्मे रूक्षो वायु'रिति-सर्वजनसिद्धत्वात् । स्पर्शसंयोगाऽभानेऽपि रूक्षताया अनुभवात् गुणान्तरत्वमिति ॥ २०५–२०७ ॥

**प्रवृत्तिं प्रति मुख्यं तु निमित्तं चलरूपकम् ।**
**रजो बोध्यं हि, मायास्थं राजसांशोद्भवो गुणः ॥**
**दुःखबाहुल्यफलकं घोररूपं हि तन्मतम् ।**
**व्याप्यवृत्ति मनोग्राह्यं सांसिद्धिकमुदाहृतम् ॥२०९॥**
**तारतम्येन तल्लब्धिरौपाधिकविशेषतः ।**
**इष्टेन्द्रियनिमित्तेन जन्यते महदादिके ॥२१०॥**
**उपाधिनाशनान्नाशस्तस्य संपरिकीर्त्यते ।**
**रजसा द्वेषदुःखाप्ते रागोत्पत्तेरनुभवात् ॥२११॥**
**रागाद् द्वेषाच्च दुःखाद्वा नैवाऽस्य चरितार्थता ।**
**संघातत्वेन सार्थत्वादात्मभिन्नगुणत्वतः ॥२१२॥**

रजोगुणं निरूपयति—प्रवृत्तिं प्रतीति । प्रवृत्त्यसाधारणनिमित्तकारणत्वे सति चलरूपत्वे सति गुणत्वं रजोगुणत्वम् । तस्याश्रयमाह—मायास्थमिति । मायायां समवायेन राजसांऽशोद्भूतत्वे सति गुणत्वमित्यपि लक्षणं रजसो बोध्यम् ॥ दुःखबाहुल्येति । राजसप्रकृत्या हि तृष्णोत्पादेन परम्परया दुःखबहुलताऽऽपाद्यते, दुःखं प्रति स्वाश्रयसंयुक्ततया कारणत्वात् ॥ घोररूपमिति । घोरत्वं दुःखकरत्वम्, अनवस्थितत्वमिति यावत् । तथा च परम्परया दुःखबाहुल्यफल-

कत्वे सति घोररूपत्वे सति गुणत्वमित्यपि लक्षणं बोध्यम् ॥ व्याप्यवृत्तीति । मायायां व्याप्यवृत्तितया वर्तते, कुत्रापि मायायां तदभावाऽसत्त्वात्, मनोमात्रेण प्रत्यक्षं भवति, मायायां रजोगुणः स्वभावसिद्धः सर्वदाऽस्ति, मायायां रजोराहित्याऽभावात्, नूतनत्वेन इव केनचिन्निमित्तेनाऽजन्यत्वाच्च ॥ ननु प्रत्येकव्यक्तिषु तरतमभावेन कथमुपलभ्यते ? इत्यत्राह– तारतम्येनेति । रञ्जनीयविषयात्मकोपाधीनाम् उत्कृष्टाऽपकृष्टताप्रयुक्ता हि राजसभावस्य तारतम्येन उपलब्धिः पृथिव्यां रूपस्यैव भवतीति ॥ ननु पृथिव्यादिविषयाणामेव तर्हि राजसादिमत्त्वमस्त्वित्यत आह—इष्टेन्द्रियेति । इष्टा ये विषया इन्द्रियाणि च तत्संयोगादिना निमित्तेन महत्तत्त्वे मायायां च राजसादय उत्पद्यन्ते, नतु पाषाणादौ, तेषां मायाजन्यत्वाऽभावेन मायिकगुणवत्त्वाऽभावात् ॥ उपाधीति । विषयाणां विषयेन्द्रिययोगानां पुरीतदादिकोपाधीनां नाशे वा मनआदिनाशे सति तद्गुणानां राजसादीनां नाश उच्यते ॥

ननु रजो राग एव द्वेष एव दुःखमेव वा, न तु गुणान्तरमित्यत आह—राजसेति । रजोगुणेन निमित्तेन द्वेषस्य दुःखस्य रागस्य च उत्पत्तेः सर्वसिद्धत्वात् रागद्वेषादिना न गतार्थत्वम् इत्यर्थः ॥ तत्र हेतुमाह– संघातत्वेनेति । परस्परं विषयैः सह संहन्यन्ते इति संघाता महत्तत्त्वमनोरूपाणि विभिन्नान्तःकरणानि तद्धर्मः संघातत्वं तेन सहार्थत्वात्सामानाधिकरण्यात्, आत्मगुणातिरिक्तगुणत्वाच्च न दुःखाद्यात्मकत्वमिति ॥ एवं सत्त्वतमसोऽपि बोध्यम् ॥२०८–२१२॥

**अर्थप्रकाशने मुख्यो हेतुः प्रवणतात्मकम् ।**
**सत्त्वं, बोध्यन्तु मायास्थं सात्त्विकांशोद्भवो गुणः ॥**
**सुखबाहुल्यफलकं शान्तरूपं हि तन्मतम् ।**
**पूर्ववत् व्याप्यवृत्त्यादि, सुखादेर्न गतार्थता॥२१४॥**

सत्त्वगुणं निरूपयति–अर्थप्रकाशने इति । पदार्थाः सूक्ष्मा गहना दुर्निरूप्या अचिन्त्या अनिर्णेया अपि प्रकृष्टसत्त्वेन प्रकाशेन प्रकाश्यन्ते भास्यन्ते इति हेतोः अर्थप्रकाशनाऽसाधारणनिमित्तकारणत्वे सति प्रवणत्वे सति गुणत्वं सत्त्वगुणस्य लक्षणम् । प्रवणत्वं च विविधार्थोपस्थापने लाघवात्मकक्षिप्रप्रवेशयोग्यत्वम् ॥ मायास्थमिति । समवायेन मायायां वर्तते । तथा च मायायां समवायेन सात्त्विकांशोद्भवत्वे सति गुणत्वमित्यपि लक्षणं बोध्यम् ॥ सुखेति । सात्त्विकप्रकृत्या हि सन्तोषजननात् परम्परया सुखबाहुल्यमापाद्यते, सुखं प्रति स्वश्रयसंयुक्तत्वसम्बन्धेन कारणत्वात् ॥ शान्तरूपमिति । शान्तत्वं सुखकरत्वं क्षोभरहितत्वं विविधार्थप्रकाशनक्षिप्रप्रवेशकत्वमिति यावत् । तथा च परम्परया सुखबाहुल्यफलकत्वे सति शान्तरूपत्वे सति गुणत्वमित्यपि लक्षणं बोध्यम् ॥ पूर्ववदिति । व्याप्यवृत्तित्वं, मनोमात्रग्राह्यत्वं सांसिद्धिकत्वम्, आह्लादनीयविषयात्मकोपाध्युत्कृष्टाऽपकृष्टभावप्रयुक्ततारतम्यभावत्वं, मायाऽऽदौ प्रियविषयेन्द्रियसंयोगात्मकनिमित्तजन्यत्वं, निमित्तोपाध्यादिनाशाऽधीननाशकत्वं च सत्त्वगुणस्य लक्षणं बोध्यम् ॥ सुखादेरिति । सत्त्वगुणेन निमित्तेन परम्परया प्रियस्य सुखस्य स्नेहस्य चोत्पत्तेः आत्मातिरिक्तगुणत्वाच्च न सुखात्मकत्वमिति भावः ॥ २१३–२१४ ॥

**निवृत्तिं प्रति मुख्यः स्याद्धेतुर्नियमनात्मकम् ।**
**तमो, बोध्यं तु मायास्थं तामसांऽशोद्भवो गुणः ॥**
**मोहबाहुल्यफलकं, जाड्यरूपं हि तन्मतम् ।**
**पूर्ववद् व्याप्यवृत्त्यादि, मोहान्नाऽस्य गतार्थता ॥**

तमोगुणं निरूपयति—निवृत्तिमिति । पदार्थेषु जायमानं प्रकाशं प्रवृत्तिं वा नियमयति रोधयतीति तमो नियामकमुच्यते, तथा च निवृत्त्यसाधारणनिमित्तकारणत्वे सति निरोधात्मकत्वे सति गुणत्वं तमोगुणस्य लक्षणम् ॥ तामसांऽश इति । मायायां समवायेन तामसांऽशोद्भवत्वे सति गुणत्वमित्यपि लक्षणं बोध्यम् ॥ मोहेति । तामसप्रकृत्या हि स्वबालभक्षिण्या सर्पिण्येव राक्षस्येव वा मौर्ख्याऽन्धतोत्पादेन परम्परया मोहबहुलताऽऽपाद्यते, मोहं प्रति स्वाश्रयसंयुक्ततया कारणत्वात् ॥ जाड्येति । जडता मूढता मूर्खता करणाऽकरणविह्वलताऽऽन्ध्यम् इति यावत् । तथा च परम्परया मोहबाहुल्यजनकत्वे सति जाड्यरूपत्वे सति गुणत्वमित्यपि लक्षणं बोध्यम् ॥ व्याप्यवृत्तीति । पूर्ववत् व्याप्यवृत्तित्वं, मनोमात्रग्राह्यत्वं,

सांसिद्धिकत्वं, मोहनीयविषयात्मकोपाध्युत्कृष्टाऽपकृष्टभावप्रयुक्ततारतम्यभावत्वं, मायामहत्तत्त्वादौ विलक्षणजडीभूतविषयेन्द्रियसंयोगात्मकनिमित्तजन्यत्वं, निमित्तोपाध्यादिनाशाधीननाशकत्वं, च तमोगुणस्य लक्षणम् बोध्यम् ॥ मोहादिति । तमोगुणेन निमित्तेन परम्परया मान्द्यस्य मोहस्य जननात्, आत्मभिन्नस्य गुणत्वाच्च न मोहात्मकत्वं तमोगुणस्येति ॥ २१५-२१६ ॥

**सुखस्य कारणं मुख्यं गुणो धर्मो ह्यतीन्द्रियः ।**
**जीववृत्तिरनित्यः स्याद्वासनाविधिकार्यजः ॥२१७॥**
**फले द्वारतया सिद्धो, न ध्वंसो, न च वासना, ।**
**महत्तः परिणामो न, नेष्टप्रीतिर्न पुद्गलः ॥२१८॥**
**नो विहितक्रियामात्रं, न स्वतृप्तिः, गुणान्तरम् ।**
**भोगाद्वा कीर्तनात् कर्मनाशानद्यवगाहनात् ॥२१९॥**
**करतोयानदीलंघात् गण्डकीवाहुतारणात् ।**
**धर्मनाशो भवेज्ज्ञानात्, वियोगस्तु समर्पणात् ॥**

धर्मं निरूपयति—सुखस्येति । सुखाऽसाधारणकारणताऽवच्छेदकगुणत्वव्याप्यजातिमत्त्वं धर्मत्वम् । ह्यतीन्द्रिय इति । परमात्मातिरिक्तेन केनाऽपि कदापि केनाऽपीन्द्रियेणाऽग्रहणात् अदृष्टमित्युच्यते । समवायेन जीवात्मसु वर्तते, अनित्यश्च ॥ तत्र निमित्तकारणान्याह—वासनेति । मिथ्याज्ञानादिजन्यो योऽसत्संस्कारः स वासना, तदात्मकनिमित्तकारणजन्यः, एवं 'यजेते' त्यादिश्रुतिस्मृतिप्रभृतिविधिवाक्योदितक्रियाऽनुष्ठानजन्यः, एवं सद्गुरुतीर्थादिजन्यश्च धर्मः, अत एव वासनाशून्येन ज्ञानिना कृतेऽपि कर्मणि न धर्मोत्पत्तिर्न च फलमपि, तस्य रागात्मकसहकार्यंभावात् । एवम् अविधिना कर्मणा असद्गुर्वादिवचनान्न धर्मोत्पत्तिरिति ॥ फले इति । गंगादितीर्थस्नानपूजनहोमयागदानादौ कृते सति ततो भाविस्वर्गादिफलस्य मध्ये व्यापारतया धर्मो निमित्तं कल्प्यते । अन्यथा यज्ञादिक्रियाणामाशुविनाशिनीनां चिरविनष्टतया व्यापारशून्यतया तु कालान्तरभाविस्वर्गादिकारणता न स्यादिति ॥ ननु यागादिध्वंस एव व्यापारोऽस्त्वित्यत आह—न ध्वंस इति । यागादिक्रियाध्वंसस्य उत्तरकाले सर्वदा सत्त्वात् सर्वदा स्वर्गवत्त्वापत्तिः स्यात् ॥ ननु श्रुतिस्मृत्यादिनिर्णीतकालविशिष्टतद्ध्वंस एव व्यापार इति चेन्न अनन्तक्रियाध्वंसानां गौरवात् कालविशिष्टकारणतायामपि गौरवात् श्रुतिस्मृतिषु पुण्यस्य प्रतिपादितत्वाच्च सर्वत्र धर्म एव द्वारमिति निर्णयात् ॥ अथ चित्तस्य चित्तान्तरे आहिता शुभवासना धर्म इति शाक्याः, तन्निराकर्तुमाह—न च वासनेति । सुखजनकतावच्छेदकस्य स्मृतिजनकतावच्छेद्रकत्वतोऽतिरिक्तत्वादिति भावः ॥ महत्तत्त्वस्य परिणामविशेषः सात्त्विको धर्म इति सांख्याः तन्निराकर्तुमाह—महत्त इति । पुण्यस्य फलभोगसामानाधिकरण्येन सर्ववादिसिद्धत्वात् आत्मनो धर्म इति भावः ॥ इष्टदेवस्य परमात्मादेः प्रीतिरेव प्रसन्नताविशेष एव धर्म इति वैष्णवाः, तन्निराकर्तुमाह—नेष्टेति । परमात्मनि जन्यगुणाऽभावेन तादृशपरिच्छिन्नप्रीतेरसंभावात्, नित्यप्रीतेस्तु धर्मफलत्वाऽभावात्, देवादिप्रीतेस्तु अनुष्ठातृव्यधिकरणवृत्तित्वेन जन्यजनकभावाऽभावात्, यद्वा—अकृतभोगप्रसंगात्, तथात्वे वा सर्वथा प्रीत्यात्मकत्वे व्यभिचारात् गङ्गास्नानादौ देवताप्रीतिमुद्दिश्य स्नानाऽकरणादिति भावः ॥ कार्याऽऽरम्भकः सूक्ष्मो मूर्तिमान् सुखहेतुः पुद्गलो धर्म इत्यार्हताः, तन्निराकर्तुमाह—न पुद्गल इति । तस्याऽनुष्ठातरि सचेतने धर्मतया गुणतया वर्तमानत्वात् चिरस्थायित्वात् अदृष्टत्वात् अमूर्तत्वाच्च न मूर्तः पुद्गल इति भावः ॥ विहिता क्रिया एव धर्मो न त्वतिरिक्तं पुण्यमिति मीमांसकैकदेशिनः, तन्निराकर्तुमाह—नो विहितेति । विध्युदितक्रियाणां चिरविनष्टत्वात् सुखभोगकाले कारणात्मकानां तासाम् असमत्वात् आत्मभिन्नद्रव्ये बहिःस्थत्वाच्च फलवैयधिकरण्यात्मिकानां न तथात्वमितिभावः ॥ क्रियमाणेन दृष्टेन कर्मणा स्वतृप्तिरेव धर्म इति चार्वाकाः, तन्निराकर्तुमाह—न स्वतृप्तिरिति । युद्धादौ जयादिक्रियाकलापस्य पुत्रादिजन्मादेश्च व्यधिकरणत्वेऽपि राज्ञः पितुश्च तृप्तिजननात् क्रियातृप्त्योः सम्बन्धात्मकस्य धर्मस्य राजपितृनिष्ठस्य व्यापारतयाऽतिरिक्तत्वसिद्धेरिति भावः ॥ ननु—अधर्माभाव एव धर्मः स्यात्, सुखमेव वा धर्मः, इत्यत आह—गुणान्तरमिति । सुखजनकत्वेन यागादिजन्यत्वेन जीवा-

त्मवृत्तित्वेन च पदार्थस्य धर्मस्य तस्य स्वतन्त्रगुणत्वमेवेति भावः ॥

धर्मस्य नाशकारणान्याह—भोगाद्वेति । धर्मस्य फलं यत् सुखं तस्य साक्षात्काराद्भोगाद्धर्मो नश्यति, एवं या या धार्मिकी क्रिया क्रियते सा यदि जनेभ्यः कथ्यते 'इदं मया कृतमि'ति, तादृशकीर्तनाद्धर्मो नश्यत्येव, एवं कर्मनाशानामकनद्यां स्नानाद्धर्मो नश्यति, एवं करतोयानामकनद्याश्चरणाभ्यां विलंघनाद्धर्मो नश्यति, एवं गण्डकीनामकनद्या बाहुभ्यां तरणाद्धर्मो नश्यति, एवम् 'आत्मज्ञानात् धर्मो नश्यति, एवं जलाञ्जलिना सह समर्पणाद्धर्मोऽन्यत्र गच्छतीति उद्देश्यतया परात्मनि धर्माधानात् ॥ ननु एतेषां सर्वेषां धर्मक्षरणाद् प्रागेव मरणं स्यादिति चेन्न । प्रारब्धेतराणां सञ्चितानां कर्मणां नाशकथनात् । तत्तच्छरीराऽऽयुर्नियामकं चिरभोगाऽऽपादकं च यत्प्रारब्धजातं तत्सत्त्वेन मरणाऽभावात्, अत एव 'नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'त्यत्र कर्मपदेन प्रारब्धं ग्राह्यम् । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'त्यत्रापि सर्वकर्मपदेन प्रारब्धेतरकर्मजातं ग्राह्यम्, तथा चाऽविरोधः । एवं 'क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे पराऽवरे' इत्यत्र परः परमात्मा अवरो जीवात्मा, तद्दर्शने साक्षात्कारात्मके जाते सति कर्माणि प्रारब्धेतराणि नश्यन्तीत्यर्थः ॥ २१७-२२० ॥

**दुःखस्य कारणं मुख्यं गुणोऽधर्मो ह्यतीन्द्रियः ।**
**जीववृत्तिरनित्यो, वासना निषिद्धकर्मजः ॥२२१॥**
**फले द्वारतया सिद्धो, न ध्वंसो, न च वासना ।**
**महतः परिणामो न, नेष्टाऽप्रीतिर्न पुद्गलः ॥२२२॥**
**नो निषिद्धक्रियामात्रं, न स्वाऽतृप्तिः, गुणान्तरम् ।**
**भोगात्, ज्ञानात्तथा नाशः प्रायश्चित्तात् समर्पणात् ॥**

अधर्मं निरूपयति—दुःखस्येति । दुःखाऽसाधारणकारणतावच्छेदकगुणत्वव्याप्यजातिमत्त्वम् अधर्मत्वम् । अयमपि अतीन्द्रियः अदृष्टमुच्यते । अतः सुखेन हेतुना पुण्यमिव दुःखेन हेतुना पापमनुमीयते इति । समवायेन जीवे वर्तते, अनित्यश्च ॥ तत्र निमित्तकारणान्याह—वासनेति । मिथ्याज्ञानादिजन्यो योऽसत्संस्कारो वासना तदात्मकनिमित्तकारणजन्यः, एवं 'न हिंस्यात्सर्वा भूतानी'त्यादिश्रुतिस्मृतिप्रभृतिनिषिद्धक्रियाऽनुष्ठानजन्यः, एवम् असद्गुर्वादियोगजन्यश्च अधर्मः । अत एव वासनाशून्येन ज्ञानिना कृतेऽपि असत्कर्मणि नाऽधर्मोत्पत्तिर्न च फलमपि, रागादिसहकार्यभावात् ॥ फले इति । परात्मसन्तापकराऽनैतिकाऽऽचरणादौ कृते सति ततो भाव्यपकृष्टयातनागमनादिफलस्य मध्ये व्यापारतयाऽधर्मो निमित्तं कल्प्यते । अन्यथा हिंसनादिकर्मणाम् आशुविनाशिनां चिरविनष्टतया व्यापारशून्यतया कालान्तरभाविनिकृष्टयातनादिकारणता न स्यादिति ॥ ननु हिंसादिध्वंस एव व्यापारोऽस्त्वित्यत आह—न ध्वंस इति । हिंसनादिक्रियाध्वंसस्य उत्तरकाले सर्वदा सत्त्वात् सर्वदा नारकित्वापत्तिः स्यात्, तत्कालविशिष्टध्वंसस्य व्यापारत्वे गौरवात्, अनन्तक्रियाध्वंसानामप्यानन्त्यप्रयुक्तगौरवात् श्रुतिस्मृतिष्वधर्मस्य प्रतिपादितत्वात् ॥ अथ चित्तात् चित्तान्तरे आहिताऽशुभवासना एवाऽधर्मं इति शाक्याः, तन्निराकर्तुमाह—**न च वासनेति** । दुःखजनकतावच्छेदकस्य स्मृतिजनकतावच्छेदकताताेऽतिरिक्तत्वादिति भावः ॥ महत्तत्त्वस्य परिणामविशेष एव तामसो धर्मं इति सांख्याः, तन्निराकर्तुमाह—**महत इति** । पापस्य फलभोगसामानाधिकरण्येन सर्ववादिसिद्धत्वात् आत्मनो गुणा इति भावः ॥ इष्टदेवस्याऽप्रसन्नताविशेष एवाऽधर्म इति वैष्णवाः, तन्निराकर्तुं माह—**नेष्टाऽप्रीतिरिति** । परमात्मनि अप्रसन्नतात्मकदुर्गुणाऽभावात् जन्यगुणाऽभावाच्च, देवाद्यप्रीतेस्तु व्यधिकरणतया जन्यजनकभावाऽभावात्, अकृतभोगप्रसंगात्, तथात्वे वा सर्वथाऽप्रीत्यात्मकत्वे व्यभिचारात्, वृथाहिंसनचौर्यादौ देवाऽप्रीतेरभावात्, देवाऽप्रीतिमुद्दिश्य वृथाहिंसनचौर्याद्यकरणात् ॥ कायाऽऽरम्भकः सूक्ष्मो मूर्त्तिमान् दुःखहेतुः पुद्गलोऽधर्मं इति जैनाः, तन्निराकर्तुं माह—**न पुद्गल इति** । अधर्मस्याऽनुष्ठातरि सचेतने विशेषणतया गुणतया वर्तमानत्वात्, चिरस्थायित्वात् अदृष्टत्वात् अमूर्तत्वाच्च न मूर्तः पुद्गल इति । निषिद्धा क्रियैव अधर्मः, न त्वतिरिक्तं पापमिति मीमांसकैकदेशिनः, तन्निराकर्तुं माह—**नो निषिद्धेति** ।

निषिद्धकृतकर्मणां चिरविनष्टतया दुःखभोगसमये तेषामसत्त्वात् आत्मभिन्नद्रव्ये बहिष्ठत्वाच्च फलवैयधिकरण्यात्मकानां न तथात्वम् ॥ क्रियमाणेन दृष्टेन कर्मणा यदि वेदना स्यात् स एवाऽधर्म इति चार्वाकाः, तन्निराकर्तुमाह—**न स्वाऽतृप्तिरिति** । युद्धादौ पराजयादिक्रियाकलापस्य पुत्रादिमरणादेश्च व्यधिकरणत्वेऽपि राज्ञः पितुश्च अतृप्त्यात्मकवेदनाजननात् कर्माऽतृप्त्योः सम्बन्धात्मकस्याऽधर्मस्य राजपितृनिष्ठस्य व्यापारतयाऽतिरिक्तत्वसिद्धेः ॥ ननु धर्माऽभाव एवाऽधर्मः, दुःखमेव वाऽधर्मः, इत्यत आह—**गुणान्तरमिति** । दुःखजनकत्वेन हिंसादिजन्यत्वेन जीवात्मवृत्तित्वेन च पदार्थस्याऽधर्मस्य तस्य स्वतन्त्रगुणत्वमेवेति भावः ॥

अधर्मस्य नाशकारणान्याह—**भोगादिति** । भोगात् तत्फलदुःखानुभवात्, एवम् आत्मज्ञानात् तत्त्वज्ञानात्, एवं कथनपूर्वकप्रायश्चित्तकरणात्, एवं जलांजलिना शरणागत्यादौ समर्पणात् अधर्मो नश्यतीत्यर्थः । अमरणं तु प्रारब्धभोगप्रयुक्तमिति ॥ २२१-२२३ ॥

**इतरेच्छानधीनेच्छाविषयं सुखमिष्यते ।**
**जीवानां धर्मजं वेद्यमनुकूलतया गुणः ॥२२४॥**
**नित्यानन्दस्वरूपं तज्जीवात्मपरमात्मनोः ।**
**प्रयोजनं फलं मोक्षः पुरुषार्थे हि तन्मतम् ॥२२५॥**
**मुख्यं, गौणन्तु दुःखानां हानिर्जन्यं सुखं तथा ।**
**दुःखाभावः सुखं न स्यादन्योन्याश्रयदूषणात् ।२२६॥**

सुखं निरूपयति—**इतरेच्छेति** । इतरेच्छाऽनधीनेच्छाविषयत्वे सति गुणत्वं सुखत्वम्, सुखेच्छाधीनभोजनप्रवृत्त्यादौ अतिव्याप्तिवारणाय-इतरेच्छानधीनेति इच्छाविशेषणम् । 'अहं सुखी' त्यनुभवसिद्धसुखत्वजातिमत्त्वमपि लक्षणम् । यद्वा-सुखपदंवाच्यतावच्छेदकतया सिद्धसुखत्वजातिमत्त्वमेव लक्षणम् ॥ **जीवानामिति** । सर्वजीवात्मनाम् अनुकूलतया वेद्यो हि गुणो धर्मनिष्ठाऽसाधारणकारणतानिरूपितकार्यतावान् सुखात्मकोऽनुग्रहलक्षणो नाऽन्यः, तस्य स्वरूपात्मकत्वम् आगन्तुकत्वं चेति द्वैविध्यमाह—**नित्यानन्देति** । नित्यः आनन्दो जीवात्मस्वरूपं परमात्मस्वरूपं च, द्रव्यमेवेदम् आनन्दस्वरूम्, न त्वस्य गुणमध्येऽन्तर्भाव इत्यावेदयितुमत्र स्मारितम् । इदं नित्यसुखं हि मुख्यं प्रयोजनं मुख्यं फलं मुख्यो मोक्षः मुख्यः पुरुषार्थः, यज्ज्ञातं सत् स्ववृत्तितया इष्यते तत्प्रयोजनम्, इतरेच्छानधीनेच्छाविषयत्वं पुरुषार्थत्वमिति बोध्यम् ॥ **गौणन्त्विति** । गौणं प्रयोजनं फलं मोक्षः पुरुषार्थश्च जन्यं सुखं जीवात्मनां बोध्यम्, एवं यावद्दुःखहानिः स्वसमानाधिकरणदुःखप्रागभावाऽसमानकालीनदुःखध्वंसात्मिकाऽपि गौणं प्रयोजनादिकं बोध्यम् ॥ ननु आत्मा न सुखरूपः, किन्तु दुःखाभाव एव तत्र सुखम्, इत्यत आह—**दुःखाभाव इति** । दुःखाभावस्य सुखात्मकत्वं सुखाभावस्य विनिगमनाविरहात् दुःखात्मकत्वमित्युभयोरसिद्धेरन्यतरस्याऽप्यसिद्धिप्रसंगः स्यात्, अतः सुखं गुणान्तरम् । अन्ये तु सुखं द्वेधा वैषयिकं मानोरथिकं च, आद्यं स्रक्चन्दनवनितासंभोगादिनिमित्तकं, द्वितीयं ज्ञाननिमित्तकम्, चित्तशुद्धिद्वारा सन्तोष इत्येतत्, अतीतविषयेषु स्मृतिजम्, अनागतेषु संकल्पजम् ॥ २२४-२२६ ॥

**अन्यद्वेषाऽनधीनस्य द्वेषस्य विषयो गुणः ।**
**दुःखं, वेद्यं प्रतिकूलं जीवानां स्यादधर्मजम् ॥२२७॥**
**हेयं कर्मफलं तत्स्याद् वैराग्यस्य च कारणम् ।**
**सुखाभावो न दुःखं स्यादन्योन्याश्रयदूषणात् ।२२८॥**

दुःखं निरूपयति—**अन्येति** । अन्यगोचरद्वेषानधीनद्वेषविषयत्वे सति गुणत्वं दुःखस्य लक्षणम् । दुःखसाधनसुपुत्रकलत्राऽपहरणाद्यनुकूलचौरादिप्रवृत्तौ सर्वेषां द्वेषविषयगुणत्वस्य सत्त्वादतिव्याप्तिस्तद्वारणाय—द्वेषेऽन्यगोचरद्वेषानधीनत्वं विशेषणम् । एवम् 'अहं दुःखी'त्यनुभवसिद्धदुःखत्वजातिमत्त्वमपि लक्षणं बोध्यम् । यद्वा—दुःखपदवाच्यतावच्छेदकतया सिद्धजातिमत्त्वं दुःखलक्षणम् ॥ वेद्यमिति । जीवात्मनां प्रतिकूलतया वेद्यो गुणोऽधर्मनिष्ठाऽसाधारणकारणतानिरूपितकार्यतावान् दुःखात्मक उपघातलक्षण एव नाऽन्यः ॥ तस्य हेयत्वमाह—हेयमिति । अशुभानां निषिद्धानां द्रोहादिकर्मणां फलत्वात् सर्गादिविरोधित्वात् मोक्षं प्रति तु सुतरां विरोधित्वाच्च हेयत्वमेव दुःखस्येति ॥ वैराग्यस्येति । वैराग्यं रा-

गाऽभावस्तृष्णानाशः, तस्य कारणमपि दुःखं भवति, वैराग्याच्च प्रकृतिलयः, न तु मोक्षः ॥ ननु आगन्तुकसुखाऽभाव एव दुःखं न तु गुणान्तरमित्यत आह—सुखाऽभावो नेति । विनिगमनाविरहेण सुखदुःखयोः परस्परयोरभावात्मकत्वे एकमपि न सिद्ध्येदित्यर्थः ॥ तद् दुःखं द्वेधा वैषयिकं मानोरथिकं च, आद्यं कण्टकादिविषयजन्यम्, द्वितीयं तु चिन्ताजन्यमिति । अतीतसर्पव्याघ्रादिषु स्मृतिजम् । अनागतेषु संकल्पजमिति ॥ यद्वा—दुःखं त्रिविधम्—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं च ॥ वातपित्तकफान्यतममूलकं शारीरं, क्रोधादिजन्यं मानसं चाध्यात्मिकम् । सर्पव्याघ्रादिभूतजन्यम् आधिभौतिकम् । ग्रहेन्द्रादिदेवजन्यम् आधिदैविकम् ॥ यद्वा-शरीरं, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं दुःखं चेत्येकविंशतिसंख्यकानि दुःखसम्बन्धात् दुःखमिश्रणात् दुःखसाधनत्वाच्च दुःखानीत्युच्यन्ते । एवं—पारतन्त्र्यम् आधिर्व्याधिर्मानभंगः शत्रुर्दारिद्र्यं भार्याद्वयादि कुभार्या कन्याबाहुल्यं कुभृत्यः कुपुत्रः कुग्रामवासः कुस्वामिसेवा वृद्धत्वं परगृहवासो दीर्घप्रवासो दुष्टकृष्यादिजीवनं चेति षोडशविधमपि दुःखं भवति तत्सम्बन्धात् ॥ २२७–२२८ ॥

**द्विष्टसाधनताप्रज्ञाजन्यो द्वेषो गुणो मतः ।**
**'द्वेष्मी'त्यनुभवात् सिद्धो, दुःखे, तत्साधने च सः ॥**
**दुःखज्ञानाद्भवेद्, दुःखे द्वेषोऽथ दुःखसाधने ।**
**बलवद्द्विष्टहेतुत्वज्ञानाद् द्वेषो हि जायते ॥२३०॥**
**सुप्रबलेष्टहेतुत्वज्ञानेन प्रतिबध्यते ।**
**क्रोधो द्रोहोऽक्षमाऽमर्षो मन्युर्भेदास्तु तस्य वै ॥**

द्वेषं निरूपयति—द्विष्टेति । द्विष्टसाधनताज्ञानजन्यत्वे सति गुणत्वम्, द्वेषत्वजातिमत्त्वं वा द्वेषस्य लक्षणम् ॥ तस्य द्वैविध्यमाह—दुःखे इति । दुःखविषयकः दुःखोपायविषयकश्च द्वेषो द्वेधेत्यर्थः ॥ द्वेषकारणमाह—दुःखज्ञानादिति । दुःखविषयकद्वेषं प्रति दुःखविषयकज्ञानं कारणम्, दुःखोपायविषयद्वेषं प्रति बलवद्द्विष्टसाधनताज्ञानं कारणम् । द्वेषे बलवत्त्वं च नान्तरीयकदुःखाधिकदुःखजनकत्वम्, तेन नान्तरीयकदुःखजनके पाकादौ न द्वेषः । द्वेषप्रतिबन्धकमाह—सुप्रबलेति । द्वेषं प्रति बलवदिष्टसाधनताज्ञानं प्रतिबन्धकम् । तेन महाशत्रौ प्रख्यापनात्मकेष्टस्य अवेतनदास्यतात्मकसाधनताज्ञाने नान्तरीयके सत्त्वेऽपि न द्वेषाऽभावः ॥ द्वेषभेदानाह—क्रोध इति । शरीरेन्द्रियावयवानाम् उत्तापनजनको विकारः क्रोधः, स्वाम्याद्यपकारो द्रोहः, असहिष्णुता अक्षमा, प्रत्यपकारकरणविकारः अमर्षः, अपकर्तुमसमर्थस्य मुखादिविकारजनकविकारो मन्युरिति ॥ २२९–२३१ ॥

**'प्रयते' इति सर्वस्य प्रतीतिगोचरो गुणः ।**
**प्रयत्नः, स भवेत् त्रेधा प्रवृत्तिश्च निवर्तना ॥२३२॥**
**जीवकश्च, प्रवृत्तिस्तु रागजन्यप्रयत्नकः ।**
**निवृत्तिर्द्वेषजो यत्नो, जीवकः प्राणहेतुकः ॥**

प्रयत्नं निरूपयति—प्रयत इति । सर्वेषां 'प्रयते' इति प्रत्यक्षप्रतीतिविषयत्वे सति गुणत्वसाक्षाद्व्याप्यजातिमत्त्वं प्रयत्नत्वम् । प्रयत्नपदशक्यतावच्छेदकजातिमत्त्वं वा प्रयत्नत्वम् ॥ तस्य त्रैविध्यमाह—प्रवृत्तिश्चेति । प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्चेति यत्नस्त्रिविधः । तत्र प्रत्येकलक्षणान्याह—प्रवृत्तिस्त्वित्यादिना । तथा च रागजन्यतावच्छेदकतया सिद्धजातिमत्प्रयत्नत्वं प्रवृत्तित्वम्, द्वेषजन्यतावच्छेदकतया सिद्धजातिमत्प्रयत्नत्वं निवृत्तित्वम् । साहजिकप्राणसञ्चरणाऽसाधारणनिमित्ततावच्छेदकतया सिद्धजातिमत्प्रयत्नत्वं जीवनयोनित्वमिति ॥ ननु प्रवृत्तिः शरीरक्रियैव, तदितरे गुणे प्रमाणाऽभावात् इति चेन्न । ज्ञानेच्छादिसामानाधिकरण्यस्य शरीरक्रियायामभावात् द्वारतया गुणस्य प्रयत्नस्य ज्ञानेच्छासमानाधिकरणस्य सिद्धेः ॥ ननु-अणुरूपस्य आत्मन एव क्रिया द्वारं स्यात् कृतं प्रयत्नेनेति चेन्न । आत्मनो हृदयपुण्डरीकादनिर्गमेऽपि शरीरे क्रियया जायमानत्वेन तत्कारणतया प्रयत्नः स्वीकर्तव्यः, आत्मनोऽप्युत्क्रान्त्यादिक्रिया प्रयत्नजन्यैवेति बोध्यम् ॥ २३२–२३३ ॥

**राग इव प्रवृत्तौ स्याच्चिकीर्षा कारणं तथा ।**
**कृतिसाध्यत्वविज्ञानमिष्टसाधनतामतिः ॥२३४॥**
**उपादानाऽपरोक्षं प्रबलाऽनिष्टविहीनधीः ।**

प्रवृत्तिकारणान्याह—राग इवेति। उत्कटेच्छात्मकरागो यथा प्रवृत्तौ कारणं, तथा 'इदं मत्कृत्या साध्यतामि' त्याकारिका कृतिसाध्यविषयिणीच्छात्मिका चिकीर्षा, 'इदं मत्कृतिसाध्यमि' त्याकारकं यत् कृतिसाध्यत्वप्रकारकं ज्ञानम्, 'इदं मदिष्टस्य साधनमि' त्याकारकं यत् इष्टसाधनत्वप्रकारकं ज्ञानम्, इदं मे बलवदनिष्टाऽननुबन्धी' त्याकारकं बलवदनिष्टाननुबन्धित्वप्रकारकं ज्ञानं, समवायिकारणविषयकप्रत्यक्षज्ञानं च प्रवृत्तौ स्वतन्त्रान्वयव्यतिरेकाभ्यां कारणानि बोध्यानि। विषादिभक्षणे रागाऽभावात्, अभिनवाऽऽविष्कारादौ चिकीर्षाऽभावात्, चन्द्रानयने कृतिसाध्यताज्ञानाऽभावात्, अग्निप्रवेशे इष्टसाधनताज्ञानाऽभावात्, द्वयणुकोत्पादने परमाणुप्रत्यक्षाऽभावात्, सन्ध्यावन्दनादौ प्रबलाऽनिष्टाऽनापादकताज्ञानाऽभावाच्च, न प्रवृत्तिरिति। मधुविषसंपृक्तान्नभोजनादावपि बलवदनिष्टानुबन्धित्वज्ञानस्य स्वतन्त्रप्रतिबन्धकस्य सत्त्वान्न प्रवृत्तिरिति ॥ २३४ ॥

**यत्नसाध्यत्वधीरेव विध्यर्थो गुरुसम्मतः ॥२३५॥**

प्राभाकरमीमांसकमतमाह—यत्नेति। कृतिसाध्यताज्ञानस्य प्रवृत्त्यात्मके कार्ये जननीये चिकीर्षात्मकद्वारातिरिक्तं किमपि सहकारि नाऽपेक्षितम्, इच्छायाः स्वप्रकारप्रकारकज्ञानजन्यत्वनियमेन कृतिसाध्यत्वप्रकारकेच्छात्मकचिकीर्षायाः कृतिसाध्यत्वप्रकारकज्ञानजन्यायाः प्रवृत्तौ द्वारत्वं, तथा च इष्टसाधनताज्ञानं न प्रवृत्तौ जनकं, चन्द्रानयनेऽन्वयव्यभिचारात्, अतः कृतिसाध्यत्वमेव विध्यर्थः, इति तन्मतम् ॥ ननु 'चन्द्रानयनं मत्कृत्यसाध्यमि' तिज्ञानं प्रतिबन्धकं, तदभावश्च कारणं, तदसत्त्वात् प्रवृत्तिर्न स्याच्चन्द्रानयने, अतो न व्यभिचार इति चेन्न। कृत्यसाध्यताज्ञानाऽभावस्य कारणत्वाऽपेक्षया कृतिसाध्यताज्ञानस्य कारणत्वे लाघवात्। ननु-उभयं स्वतन्त्रमेव कारणमस्त्विति चेन्न। कारणताद्वयकल्पने गौरवात्। ननु तव मधुविषसंपृक्ताऽन्नभोजने चैत्यवन्दने च कृतिसाध्यताज्ञानस्य सत्त्वात् प्रवृत्त्यापत्तिरिति चेन्न। तदानीं कामनात्मकहेतुज्ञानाऽभावात्। स्वीयतत्तद्धेतुज्ञानसाध्यकृतिसाध्यताज्ञानस्यैव प्रवृत्तिजनकत्वात् स्वं प्रवर्तमानः पुरुषः, तदीया काम्ये पुत्रेष्टियागादौ बलवदनिष्टाऽननुबन्धिविषयकतत्कालीनकामनाविषयसाधनता, नित्ये सन्ध्यावन्दनादौ विहितकालजीवित्व-तत्कालीनशौचादिशुद्धिः, नैमित्तिके श्राद्धादौ अशौचादिः, तत्तद्धेतुरूपा, तदनुमितकृतिसाध्यताज्ञानेन तत्र तत्र प्रवृत्तिः। प्रयोगास्तु—'यागादिः, मत्कृतिसाध्यः, मत्कृतिं विनाऽसत्त्वे सति बलवदनिष्टाऽननुबन्धिविषयक-तत्तत्कालीनकामनाविषयसाधनत्वात्, भोजनादिवत्, यत्र साध्यं नास्ति तत्र हेतुर्नास्ति यथा गगनादौ। एवं-'चैत्रः,-इदानीन्तनकृतिसाध्यसन्ध्यावन्दनः, द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिशुद्धिमत्त्वात्, यो हेतुमान् स साध्यवान् यथाऽहम्। एवं-'चैत्रः,-इदानीन्तनकृतिसाध्यश्राद्धादिमान्,-विहिताऽऽशौचादिमत्त्वात्,-यो हेतुमान् स साध्यवान् यथाऽहम्। तृप्तस्य भोजने न प्रवृत्तिः, तादृशकामनाया अभावात्। अस्नातस्य सन्ध्यावन्दने न प्रवृत्तिः, शौचादिशुद्ध्यभावात्। जीवत्पितृकस्य श्राद्धे न प्रवृत्तिः, अशौचाद्यभावात्। तथा च मधुविषसंपृक्तान्नभोजनादौ कामनाद्यभावान्न प्रवृत्त्यापत्तिरिति ॥ ननु तत्तद्धेतुनिवेशप्रयुक्त-जन्यत्वार्थसाध्यप्रवेशप्रयुक्त-वैशिष्ट्यप्रवेशप्रयुक्तऽगौरवापेक्षया बलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वेतित्रितयविषयकज्ञानत्वेन कारणत्वं भवतु, बलवदनिष्टाऽननुबन्धित्वं च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाऽजनकत्वं बलवद्द्वेषविषयदुःखाऽजनकत्वं वा, तेन मुक्तिकामस्य कायशोषणादिरूपबलवद्दुःखसाधनेऽपि तीर्थयात्रादौ स्वर्गकामस्य च ज्योतिष्टोमादौ न प्रवृत्त्यनुपपत्तिः, न वाऽधिकोष्णोदकस्नानादौ प्रवृत्त्यापत्तिरिति चेन्न। इष्टसाधनत्वस्य कृतिसाध्यत्वस्य चैकक्षणावच्छेदेन ज्ञाने विषयतयाऽनवतारात्, आद्यक्षणसम्बन्धात्मकसाध्यत्वस्य आद्यक्षणाऽन्यक्षणवृत्तित्वविशिष्टात्मकसाधनत्वस्य एकत्रैकदाऽवर्तमानत्वात्। यत्स्वरूपसम्पन्नम् अपक्वावस्थतण्डुलादि तत्साधनं, यच्च न स्वरूपसम्पन्नम् ओदनादि तत्साध्यं, तयोर्युगपद्विरोधः, तथा च एककाले 'असिद्धः पाकः कृतिसाध्यः, सिद्धश्च ओदनादिरिष्टसाधनमि' तिसमूहालम्बनज्ञानस्याप्यनुत्पादान्न तादृशतृतीयविषयकज्ञानत्वेन कारणत्वमिति ॥ २३५ ॥

**यजेतेत्यत्र विध्यर्थः कृतिसाध्येष्टसाधन—।**
**प्रबलाऽनिष्टराहित्य-अज्ञारूपः प्रवर्तकः ॥ २३६ ॥**

तादृशमीमांसकमतं दूषयितुं विध्यर्थमाह—यजेतेति। कृतिसाध्यत्वम् इष्टसाधनत्वं बलवदनिष्टाऽननुबन्धित्वं चेति त्रयमेव विध्यर्थः, तादृशत्रितयविषयकनिश्चयः प्रवृत्तिजनकः, तत्तद्धेतु-साध्यत्व-वैशिष्ट्यादिघटितधर्मस्य कारणतावच्छेदकत्वाऽप्रवेशप्रयुक्तलाघवात्। विभिन्नक्षणघटितयोः साध्यत्वसाधनत्वयोः एककालीनज्ञाने विषयतयाऽन्वयसंभवात्। सुतराम् अनवच्छिन्नयोस्तयोरेककालीनज्ञानसंभव इति न प्रवृत्त्यनुपपत्तिरिति ॥ २३६ ॥

**'ममेदं कृतिसाध्यं'तु ज्ञानं यदि प्रवर्तकम्।**
**अनागतेऽप्रवृत्तिः स्यादतः केचन कर्मणः ॥२३७॥**
**'यादृशस्य तु पुंसो यत् कृतिसाध्यं विलोकितम्।**
**स्वस्य तादृशवत्त्वस्य निर्णयात्स प्रवर्तते ॥२३८॥**
**तन्न, कल्पितलिप्यादौ कामयोगे प्रवर्तनात्।**
**किन्त्विदानीन्तनं चेष्टसाधनादित्रयं तथा ॥२३९॥**

प्रभाकरानुयायिनां मतमाह—ममेदमिति। 'ममेदं कृतिसाध्यमि'तिज्ञानं प्रवृत्तिजनकम्, अनागते भविष्यत्पाके मत्कृतिसाध्यत्वस्य ज्ञानाऽसंभवात्, सामान्यलक्षणाऽनङ्गीकर्तृतन्मते प्रत्यक्षस्य पक्षाऽभावेनाऽनुमितेश्चाऽसंभवात् तद्विशेष्यककृतिसाध्यत्वप्रकारकज्ञानस्य सुतराम् असंभवात् प्रवृत्त्यनुपपत्तिः स्यादिति। अतो हेतोः केचन कर्मठाः कर्ममीमांसकाः प्रभाकरानुयायिनः वदन्ति—यादृशस्येति। कृत्युत्पादकयादृशसामग्रीविशिष्टस्य पुरुषस्य कृतिविधेयताश्रयं यद्धर्मावच्छिन्नं प्रमितं सः 'तादृशसामग्रीमानहमि'तिनिर्णयात् तद्धर्मावच्छिन्नविधेयताकप्रवृत्तिमान् भवति, तथा च 'ओदनं मम भवत्वि'तीच्छाविशिष्टस्य अन्यदीयपाकविशेष्यककृतिसाध्यत्वप्रकारकप्रत्यक्षादिप्रमावतः तदुपकरणदर्व्यादिसामग्रीमतः पुंसः'पाकः कृतिनिरूपितविधेयताश्रयः प्रमितः तादृशफलेच्छासामग्रीमांश्चाऽयमि'तिनिश्चयादेव पाकविधेयताकप्रवृत्तिरतो नाऽनुपपत्तिरिति ॥ तन्निषेधति—तन्नेति। स्वकल्पितलिपिभाषादौ तन्निर्मातुः अन्यदीयकृतिसाध्यविजातीयलिप्याद्यप्रसिद्धिप्रयुक्ताऽदर्शनेन तादृशश्चाऽहमितिप्रवर्तकज्ञानाऽसंभवेन कारणाऽभावेऽपि तादृशलिप्यादिप्रवृत्त्युत्पत्त्या व्यभिचारात्, यौवने च कामातिशयेन सम्भोगादिमतः पुरुषस्य अन्यदीयकृतिसाध्यदर्शनमन्तरेणाऽपि स्वत एव संभोगे प्रवृत्तिदर्शनात्, बाल्येऽविवेकेन स्वमातृताडनप्रवृत्तिदर्शनाच्च व्यभिचारात्, न तादृशज्ञानं प्रवृत्तिजनकमिति ॥

सिद्धान्तमाह—किन्त्विदानीन्तनमिति। इदानीन्तनेच्छाविषयसाधनत्वेदानीन्तनकृतिसाध्यत्वेदानीन्तनबलवद्द्वेषविषयाऽननुबन्धित्वैतत्त्रितयविषयकज्ञानं प्रवृत्तिजनकं, तेन बाध्ये इदानीन्तनकृतिसाध्यत्वाऽज्ञानात् न भावियौवराज्ये प्रवृत्तिः, तृप्तिसमये इच्छाविषयतृप्तिसाधनत्वज्ञानाऽभावात् न भोजने प्रवृत्तिः, स्वस्थचित्ते तदानीन्तनबलवदनिष्टाननुबन्धित्वज्ञानाऽभावान्न विषादिभक्षणे प्रवृत्तिः। सुरापानादिदोषदूषितचित्तस्य तु विषादिभक्षणे गर्हितव्यापारे च भवति प्रवृत्तिः तदानीं बलवदनिष्टाननुबन्धित्वज्ञानात्॥ २३७–२३९ ॥

**शत्रुनाशे महान् रागोऽनिष्टसाधनवित्तिहाः।**
**विधेर्दूराच्च साक्षाद्वा ज्ञानोत्पत्तिं वदन्ति हि ॥**

ननु 'अस्ति परलोकस्तत्साधने धर्माऽधर्मौ'चेतिज्ञानवतः आस्तिकस्य सुरापानादौ शत्रुमारणादौ चाऽनिष्टसाधनत्वज्ञानात्मकप्रतिबन्धकसत्त्वेपि कथं बलवदनिष्टाऽननुबन्धित्वनिश्चयाऽनुत्पादेन कारणाऽभावेऽपि प्रवृत्तिदर्शनात् व्यतिरेकव्यभिचारः, अतो न बलवदनिष्टाऽननुबन्धित्वज्ञानं प्रवृत्तौ हेतुरित्यत आह—शत्रुनाशे इति। सुरापानशत्रुमारणादौ पुनः पुनरनुरञ्जनात्मकोत्कटेच्छात्मकरागेण उत्कटत्वरूपवैजात्यावच्छिन्नसंहारेच्छारूपजिहीर्षया च नरकाऽस्फूर्त्या नरकसाधनताधीनिरोधात् 'बलवद्द्वेषानुत्पत्त्या वा तत्र बलवद्द्विष्टसाधनताज्ञानात्मकप्रतिबन्धकस्याप्यभावात् प्रतिबन्धकाऽभावात्मककारणसत्त्वात् बलवदनिष्टाननुबन्धित्वज्ञानाऽनुत्पादाच्च प्रवृत्तिपूर्वं बलवदनिष्टाननुबन्धित्वज्ञानोत्पत्तिसंभवेन व्यभिचाराऽभावात् प्रवृत्तिर्भवतीति ॥ चन्द्रवृष्ट्यानयनादौ कृतिसाध्यताज्ञानाऽभावान्न प्रवृत्तिः, किन्तु इष्टस्य धान्यादेः साधनताज्ञानात् उपाये वृष्ट्यादौ इच्छामात्रं भवतीति ॥

कृतिश्च प्रवृत्तिरेव, तेन कृतिपदेन जीवनयोनियत्नमादाय तत्सत्त्वेऽपि प्राणपञ्चकसंचारे प्रवृत्त्यदर्शनेऽपि न व्यभिचारः, इत्येवं प्रवृत्तिं प्रति बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वेति त्रितयविषयकज्ञानस्य कारणत्वे सिद्धे 'अग्निष्टोमेन यजेत स्वर्गकाम'इत्यादौ 'यजेते'त्यादिविधेरपि बलवदनिष्टाऽननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वत्रितयमेवाऽर्थः प्रवृत्तिकारणत्वाऽन्वयव्यतिरेकवत्त्वात् ।। विधेरिति । विधिः क्वचित् परम्परया क्वचित्तु साक्षादेव प्रवृत्तिजनकज्ञानमुत्पादयति । तत्र परम्परया यथा-विधिवाक्यादिष्टसाधनत्वे कृतिसाध्यत्वे चाऽवगते किमिष्टमित्याकांक्षायां स्वर्गकामादिपदसमभिव्याहारात् स्वर्गसाधनमिति ज्ञानमानुमानिकं मानसं वा उत्पद्यते, अन्यथा विशेषरूपेण फलज्ञानाऽभावात् प्रवृत्त्यनुपपत्तेः, एवमिदानीन्तनत्वाद्यन्तर्भाविण कृतिसाध्यताविज्ञानमनुमानादिति, अत एव चिन्तामणिकारेण 'एवं विधिजन्यज्ञानजन्यज्ञानं प्रवर्तकमि'त्युक्तम् ।।

भट्टास्तु स्वेच्छाजन्यत्वेन परप्रेरणाजन्यत्वेन च प्रवृत्तेर्द्वैविध्यात्, तत्र स्वेच्छाजन्यप्रवृत्तौ प्रवर्तनाया अनुपयोगेऽपि द्वितीयप्रवृत्तौ प्रेरणायाः प्रयोजकत्वम्, 'आचार्यप्रेरणाया इदं करोमी'तिव्यवहारात् । प्रवर्तना च प्रवर्तयितुः प्रवृत्त्यनुकूलो व्यापारविशेषः, स च चेतनस्याऽभिप्राय एव, अचेतनस्य तु वेदस्याऽभिधानामकः कश्चिच्छब्दसमवेतः, तथा च आचार्याभिप्रायज्ञानाद् यथा शिष्यः प्रवर्तते तथाऽभिधाज्ञानात् विधिस्थले पुंसां प्रवृत्तिरिति साऽभिधैव लिङर्थः, सैव च शाब्दीभावना लिङ्त्वांशेनोच्यते, आर्थीभावना तु आख्यातत्वांऽशेनेति ।। तन्न—लोके स्वेच्छाधीनप्रवृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वात् अन्यत्रापि प्रवृत्तौ तदेव कारणमस्तु, शब्दशक्तिभिन्नायामभिधायां मानाऽभावाच्च वेदेऽपि न प्रवर्तनाज्ञानं हेतुरिति ।। मण्डनमिश्रास्तु—प्रवर्तनापदेन प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वं गृहीत्वा ग्रन्थं संगमयन्ति ।।

विश्वजिन्न्यायार्थस्तु—विश्वजिति प्रवृत्त्यर्थम् इष्टसाधनताज्ञानमवश्यमपेक्षणीयं तच्च इष्टं किमिति नियामकं नास्ति विश्वजिता यजेतेति श्रुतौ फलविशेषाऽनिर्देशात्, अतः किञ्चित्फलं स्वेच्छया कल्पनीयमिति पूर्वपक्षे स विश्वजिद्यागफलं स्वर्गः स्यात् सर्वपुंसामिष्टत्वादिति सिद्धान्तः इति ।। २४० ।।

**श्रूयते न फलं यत्र तत्र स्वर्गः प्रकल्प्यते ।**
**नाऽर्थवादो,न वा पण्डापूर्वं; पापाऽजनिस्तु तत् ॥**
**पितृप्रीतिस्तथा स्वर्गो ब्रह्मलोकोऽथवा फलम् ॥**

ननु 'विश्वजिता यजेते' त्यत्र इष्टफलाश्रवणेन इष्टसाधनताज्ञानाऽभावात् प्रवृत्त्यनुपपत्तिरित्यत आह—श्रूयते इति । तादृशफलश्रवणशून्यवाक्यस्थलेऽपि स्वर्गस्येष्टत्वात् यागस्य तत्साधनत्वाच्च स्वर्ग एव फलमनुमीयते मानसविषयीक्रियते, तत्र 'विश्वजिता यजेते'तिश्रुतिघटकविधिप्रत्ययात् इष्टत्वरूपसामान्यधर्मेण इष्टसाधनत्वविषयकशाब्दबोधानन्तरम् 'एतादृशेष्टं,-स्वर्गत्ववत्, विशेषरूपेण शाब्दाऽविषयत्वे सति प्रवर्तकविधिवाक्यप्रतिपाद्यत्वात्, यन्नैवं तन्नैवं यथा तृप्त्यादीत्यनुमानात् स्वर्गानुमितिः । (पूर्वमीमांसा–४ अ०, ३ पा०, १३ सूत्रम्) न्यायरूपाऽनुकूलतर्कसत्त्वात्, तादृशन्यायसहकृतनिरुक्तप्रतिपाद्यत्वज्ञानात् 'इष्टः स्वर्ग' इति मानसप्रतीतिमान् भवतीति ।। ननु अहरहः सन्ध्यामुपासीतेत्यादिनित्ये कर्मणि फलाऽभावात् नेष्टसाधनताज्ञानं प्रवर्तकं, न वा तद्विषयो विध्यर्थः । न च 'सन्ध्यामुपासते ये तु सततं संशितव्रताः । विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमि'त्यर्थवादप्रतिपाद्यपापनाशपूर्वकब्रह्मलोकप्राप्तिः प्रत्यवायाऽनुत्पत्तिश्च फलं स्वीकार्यमिति वाच्यम्, तथा सति नित्यकर्मणः फलवत्त्वकल्पने काम्यकर्मत्वाऽऽपत्त्या नित्यकर्मत्वहान्यापत्तिः, सफलत्वे सति विधिप्रतिपाद्यत्वरूपकाम्यत्वस्य, निष्फलत्वे सति विधिप्रतिपाद्यत्वरूपनित्यत्वस्यैव विरोधात् तस्य काम्यकर्मत्वस्वीकारे वा तत्र फलकामनाशून्यद्विजस्य प्रवृत्त्यभावात्मकाऽकरणत्वापत्तिः प्रत्यवायाऽनुत्पत्तिः, शिष्टाचारव्याहतिश्च स्यात्, अतः तादृशब्रह्मलोकादिश्रवणस्थलेऽपि सन्ध्योपासनादिकर्तरि पुरुषे प्रशस्तत्वात्मकाऽर्थवादबोधमात्रे तात्पर्यं तादृशश्रुतेः, न तु फले इति चेत् ?, इत्यत्राऽऽह—नार्थवाद इति । यथा 'उपरागे श्राद्धं कुर्वीत उपरागे स्नायादि'तिविधिवाक्येन ग्रहणनिमित्तकश्राद्धस्नानयोः नित्यत्वप्रतिपादनात् उपराग-

निमित्तकत्वप्रतिपादनाच्च तयोर्नित्यत्वनैमित्तिकत्ववत् अविरुद्धम्, यथा च भरणीनक्षत्रनिमित्तकश्राद्धे सप्तविंशतिनक्षत्राणामेकैकनक्षत्रनिमित्तकमेकैककाम्यश्राद्धमुक्त्वा एकैकश्राद्धस्य पशुपुत्रादिरूपैकैकाभ्युदयफलं चोक्त्वा भरणीनिमित्तकश्राद्धकर्तुः तावत्फलवत्त्वस्य हरिवंशादौ प्रतिपादकत्वात् नक्षत्रनिमित्तकत्वाच्च भरणीनिमित्तकश्राद्धस्य काम्यत्वं नैमित्तिकत्वं वाऽविरुद्धम्, तद्वत् 'अहरहः सन्ध्यामुपासीते'त्यादिविधिवाक्येन नित्यत्वप्रतिपादनात्, रात्रिसत्रन्यायेन च 'सन्ध्यामुपासते ये त्वित्याद्यर्थवादचोदितफलसाधनत्वाच्च नित्यत्वकाम्यत्वोभयवत्त्वे बाधकाऽभावात् ॥

एवं यथा त्रैकालिको विष्णुसहस्रनामस्तवपाठ—कालद्वयविहिताऽग्निहोत्रादिश्च विधिप्राप्तत्वान्न काम्यं कर्म, तथापि 'त्रिसन्ध्यं कीर्तयेद् यस्तु सर्वान्कामानवाप्नुयादि'तिफलकामनया पुरुषास्तत्र प्रवर्तन्ते फलमपि च तथा भवति, तद्वत् 'अकुर्वन् विहितं कर्म नरो भवति किल्बिषी'तिवचनात् प्रत्यवायाऽभावविषयककामनाया अवश्यकल्पनात् कामनाशून्यजनस्याऽकरणत्वापत्तिरूपदूषणाऽभावात् ॥ ननु नित्ये कर्मणि श्रुतिघटकविधिबोध्यकृतिसाध्यताज्ञानेनैव कारणेन प्रवृत्तिः, न तु इष्टसाधनताज्ञानं तत्र कारणम्, तथा च फलकल्पनमनुचितमिति चेन्न। निष्फले प्रवृत्त्यभावेनाऽन्वयव्यतिरेकाभ्यां प्रवृत्तित्वेन फलात्मकेष्टसाधनताज्ञानत्वेन च कार्यकारणभावस्याऽऽवश्यकत्वात्, इष्टसाधनताज्ञानं विना केवलसहस्रकार्यताज्ञानैरपि प्रवृत्त्यननुमानात् ॥

ननु नित्यस्थले स्वर्गाद्यजनकं पण्डो नपुंसक इव अपूर्वं नाममात्रं जायते इति प्रभाकरानुयायिमतम्, इत्यत्राह—न वा पण्डापूर्वमिति। पण्डापूर्वात्मकफलकामनाशून्यस्य जनस्याऽकरणत्वात्मकाऽप्रवृत्तिप्रयुक्तप्रत्यवायोत्पत्तिर्न स्यादिति उक्तदोषत्वात्, यदि च प्रवृत्त्यर्थं कामना कल्प्यते, तदा रात्रिसत्रन्यायात् 'सन्ध्यामुपासते ये त्वि'त्याद्यर्थवादादुपस्थितब्रह्मलोकाऽवाप्त्यादिरूपं स्वीकार्यमेव। किञ्च पण्डापूर्वं सुखमिव दुःखाभाव इव च न स्वतः पुरुषार्थः, न वा याग इव फलस्य साधनं पण्डापूर्वं, तथा च प्रवृत्तिरेव न स्यादिति ॥

रात्रिसत्रन्यायो यथा—रात्रिशब्देन 'ज्योतिर्गौरायु'रित्यादिवाक्योत्पादितानि सौत्यानि कर्माणि उच्यन्ते, तानि च त्रयोदशरात्रसंज्ञकानि सत्रनाम्नाऽपि व्यवह्रियन्ते, द्वादशसत्रादूर्ध्वभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः, त्रयोदशसंख्याका रात्रयो यस्मिन् सत्रविशेषे सोऽयं त्रयोदशरात्रः, एवमन्यत्, तत्र 'प्रतितिष्ठन्ति ब्रह्मवर्चस्विनोऽन्नादा भवन्ति ये एता उपयान्ति'-इत्यादीनि वाक्यानि विषयः। तत्र 'प्रतितिष्ठन्ती'ति किमयं फलविधिरुत अर्थवाद इति संशयः, तत्र अर्थवादः, ततश्च विश्वजिन्न्यायेन श्रुतः स्वर्गः कल्प्य इति पूर्वपक्षः, सिद्धान्तस्तु—'श्रुताऽनुमानयोः श्रुतसम्बन्धो बलीयानिति'न्यायेन प्रतिष्ठैव श्रुतं फलं न तु कल्प्यः स्वर्गो दुर्बलत्वादिति ॥

नव्याचार्यमतमाह—पापञ्जनिस्तु तदिति। सन्ध्योपासनादौ लाघवार्थवादोपस्थितफलस्वीकारेण पापस्याऽनुत्पत्त्यात्मकप्रागभावस्य परिपालनमेव तत्फलमिति ॥ ननु प्रत्यवायाऽनुत्पत्तौ स्वतःपुरुषार्थत्वाऽभावात् प्रवृत्तिर्न स्यादिति चेन्न, यथाहि नित्यसन्ध्योपासनादिकरणे सति अनुष्ठातरि प्रत्यवायप्रागभावस्तिष्ठति सन्ध्योपासनादिकरणाऽभावे च प्रत्यवायप्रागभावनाशः, एवं प्रत्यवायप्रागभावसत्त्वे दुःखप्रागभावसत्त्वं प्रत्यवायप्रागभावनाशे च दुःखप्रागभावध्वंसश्च इत्यप्राप्तप्राप्तिसिद्धसंरक्षणसाधारणकारणताया दुःखप्रागभावं प्रति प्रत्यवायप्रागभावस्य सुवचत्वात्, तथा प्रत्यवायप्रागभावस्य दुःखप्रागभावेन सह व्याप्तत्वात् अप्राप्ताया अपि कारणतायाः प्राप्तिः, इष्टसाधनताज्ञानस्य तु प्रवृत्तिं प्रति सिद्धायाः कारणतायाः संरक्षणमिति एतद्रीत्या दुःखप्रागभावेऽपि जन्याऽजन्यसाधारणकारणता सिद्ध्यतीति, एवं प्रायश्चित्तस्यापि तादृशसाधारणं दुःखप्रागभावकारणत्वं बोध्यमिति ॥

पितृप्रीतिरिति। 'दद्यादहरहः श्राद्धं पितृभ्यः प्रीतिमावहन्' इत्यर्थवादस्थले पितृप्रीतिरेव फलं मन्तव्यम्। ननु पितृप्रीतिः पितरि, श्राद्धं तु वंशजे कर्तरि इति फलकारणयोरेकाधिकरणत्वाऽभावात् कार्यकारणभावाऽभावात् कारणाभाववति कार्यसत्त्वात्मकव्यतिरेकव्यभिचारात् पितृप्रीतिः कथं

फलमिति चेन्न। 'गयायां पिण्डदानं पितृप्रीतिकरमि'-तिवचनेन उद्देश्यतासम्बन्धेन श्राद्धस्य पितरि सत्त्वात् व्यभिचाराऽभावात्, अतः 'शास्त्रदर्शितं फलमनुष्ठातरि' इतिमीमांसकानामुत्सर्ग एव, स च साऽपवादः, 'यः कर्ता स भोक्ता' इतिनियमस्तु बहुस्थले तथासंभवाभिप्रायक एव न तु सार्वत्रिक इति ॥

ननु यस्य पितरो मुक्तास्तेषां तृप्त्यात्मकसुखाऽयोगात् अन्वयव्यभिचार इत्यत आह—स्वर्ग इति। श्राद्धकर्तुः स्वर्ग एव तत्र फलं कल्पनीयम्, असति विशेषफले सामान्यफलयोगाऽवश्यकत्वात्, नित्यस्य नैमित्तिकस्य च सामान्यतो विहितकर्मत्वात् 'सः स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादि' ति न्यायेन स्वर्गफलजनकत्वस्वीकारात् ॥ ननु यस्य स्वर्गेच्छैव नास्ति तस्य किं फलमित्यत आह—ब्रह्मलोक इति। 'अहरहः सन्ध्यामुपासीते' त्यत्र 'सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमि' त्यर्थवादप्रतिपाद्यपापनाशपूर्वकब्रह्मलोकप्राप्तिरेव फलं स्वीकार्यम्। तथा च न प्रवृत्त्यनुत्पत्तिरिति ॥ २४१ ॥

**कलञ्जं भक्षयेन्नेति निषिद्धविषये पुनः ॥ २४२ ॥**
**विध्यर्थे तु नञर्थस्य बाधे संकोच इष्यते।**
**यद्वा विशिष्टविरहः प्रकारविरहात्मकः ॥ २४३ ॥**

वैदिकादिनिषेधवाक्यस्थले विध्यर्थं दर्शयितुमाह—कलञ्जमिति। शूल्यं मांसं कलञ्जमिति केचित्, विषदग्धबाणाहतमृगमांसं कलञ्जमित्यपरे, पलाण्डुः कलञ्जमित्यन्ये, कालिंगडुफलमिति गौर्जराः, कलिंगरिति मध्यदेशीयाः, वस्तुतस्तु कलञ्जं रक्तलशुनम्, 'कलञ्जपलाण्डुपारीरकाः' इत्यापस्तम्बधर्मसूत्रव्याख्याने वीरमित्रोदये च व्याख्यानात्। 'न कलञ्जं भक्षयेदि' त्यत्र विध्यर्थेन इष्टसाधनत्वेन सह नञर्थाऽभावस्याऽन्वये 'कलञ्जभक्षणं पुरुषस्येष्टसाधनत्वाभाववत् कृतिसाध्यताऽभाववच्चे' तिबोधः स्यात्, स च न सुशकः, शुष्कसविषमांसविशेषाद्यात्मककलञ्जभक्षणे पुरुषस्येष्टसाधनत्वस्य कृतिसाध्यत्वस्य चाऽप्रतीतेरुक्तबोधस्य प्रतीतिबाधितत्वात्, तथा च तत्र कथं निर्वाह इत्यत आह—संकोच इति। तत्र विध्यर्थो न कृतिसाध्यत्वं, किन्तु बलवदनिष्टाननुबन्धित्वमात्रं, तदभावो नञा 'कलञ्जभक्षणं बलवदनिष्टाऽननुबन्धित्वाऽभाववदि' ति बोध्यते। इष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वं चेति त्रयोंऽशा विध्यर्थः। तत्र सामग्रीवशात् स्वीकृतयोग्यांशस्याऽभाव एव नञा बोध्यते, इतरांऽशयोरनुपयोगादिति ॥ यदि च सर्वत्र अंशत्रयस्यैव विध्यर्थत्वं बोधे ग्राह्यत्वं च तदा निर्वाहान्तरमाह—विशिष्टविरह इति। बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वमिति विध्यर्थे नञा बोध्यमानो यो बलवदनिष्टाननुबन्धित्वाभावो विशेषणाऽभावः, तत्प्रयुक्तो यो बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वाऽभावो विशिष्टाभावः, सः कृतिसाध्यत्वात्मकविशेष्यवति कलञ्जभक्षणे वर्तमानो नाऽतिरिक्तः, किन्तु बलवदनिष्टाननुबन्धित्वाऽभावात्मक एवेति भावः ॥ २४२–२४३ ॥

**विध्यर्थत्वे विशिष्टस्य, 'श्येनेनाऽभिचरन् यजे—।**
**ते—'त्यादौ बाधशंकायां, संकोचः सर्वथेष्यते ॥ २४४ ॥**
**यद्वाऽदृष्टाऽद्वारकं सत् मरणोद्देश्यकं च यत्।**
**मारणानुगतं कर्म हिंसनं तन्निरुच्यते ॥ २४५ ॥**

ननु 'श्येनेनाऽभिचरन् यजेते' त्यत्र श्येनयागस्य शत्रुमारणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात्, 'मा हिंस्यात् सर्वा भूतानी' तिनिषेधविधिना हिंसासामान्यस्य निषिद्धत्वेन निषद्धाचरणस्य नरकसाधनत्वाऽऽवश्यकत्वात् बलवदनिष्टाननुबन्धित्वात्मकविशेषणबाधात् विशिष्टस्य विध्यर्थत्वं श्येनयागस्थले न संभवतीत्याह—विध्यर्थत्वे इति। तथा च न त्रितयात्मको विध्यर्थं इति भावः। ननु 'श्येनेनाभिचरन् यजेत' 'अग्नीषोमीयं पशुमालभेत' इत्यादिवेदविधिबोधितत्वात् सा न हिंसा, 'मा हिंस्यादि' तिनिषेधस्य वैधहिंसेतरहिंसानिषेधपरत्वात्, तथा च श्येनकर्म न बलवदनिष्टानुबन्धि, अतो न बाध इति चेन्न। अभिचारे कृते सति कर्तुः 'अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहती' त्यभिचारस्य अहीनयागस्य च कर्तृकारयित्रोः प्रायश्चित्तोपदेशात् श्येनादेर्हिंसात्वेन नरकफलकत्वमस्त्येव, अन्यथा प्रायश्चित्तोपदेशो व्यर्थः स्यात्।

नचैवमग्निषोमीयपशुहिंसाया अपि नरकसाधनत्वापत्तिः, तादृशहिंसाया अपि सामान्यशास्त्रेण निषिद्धत्वादिति वाच्यम् । 'मा हिंस्यादि' तिशास्त्रस्याऽनुपदिष्टप्रायश्चित्तहिंसेतरहिंसानिषेधपरत्वस्वीकारस्याऽवश्यकतया अग्नीषोमीयपशुहिंसाया अनुपदिष्टप्रायश्चित्तहिंसारूपत्वेन सामान्यशास्त्राऽप्रवृत्तेः, श्येननामकाऽभिचारकर्मणः उपदिष्टप्रायश्चित्तहिंसारूपत्वेन सामान्यशास्त्रप्रवृत्तेः । साक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे खड्गकर्तुः कूपकर्तुश्च हिंसकत्वापत्तिः, अतो मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसात्वं वक्तव्यम् । ननु अन्यप्राण्युद्देश्यकक्षिप्तषाणादिहतब्राह्मणादेस्तु ब्राह्मणमारणोद्देश्यकत्वाऽभावेन हिंसात्वं न स्यादिति चेन्न । 'सेतौ च स्नानमात्रेण ब्रह्महत्यां व्यपोहती' तिवचनेन ब्राह्मणमात्रवधस्य प्रायश्चित्तकथनात् 'ब्रह्महा द्वादश समाः कुटिं कृत्वा वने वसेत् । भैक्षाश्यात्मविशुद्धचर्थं कृत्वा शवशिरोध्वजम्' इति सामान्यतोऽप्युद्दिष्टप्रायश्चित्तत्वेन हिंसात्वानपायात्, 'मा हिंस्यादि' तिशास्त्राऽविषयत्वेऽपि 'ब्राह्मणं न हन्यात् लोहितं कुर्यात्' इतिविशेषनिषेधविधिना तस्य हिंसात्वं कर्तुः प्रायश्चित्तं च भवत्येवेति । अतस्तादृशस्थले विध्यर्थे संकोचमाह—संकोच इति । श्येनयागीयादिविधिवाक्यघटितविध्यर्थो न बलवदनिष्टाननुबन्धित्वं किन्तु कृतिसाध्यत्वविशिष्टेष्टसाधनत्वमेव, तथा च न बाध इति ॥

अथ संकोचेऽस्वरसात् हिंसायाः कल्पान्तरमाह—यद्वेति । अदृष्टाऽद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसात्वम् । श्येनस्य तु अदृष्टद्वारकत्वेन उक्तलक्षणाऽगमनान्न हिंसात्वम्, अतस्तत्र बलवदनिष्टाननुबन्धित्वात्मकविध्यर्थस्य न बाधः । अदृष्टाऽद्वारकत्वदानेनकाशीमरणार्थंकृतशिवपूजनादेः अदृष्टद्वारकतया हेतुत्वात्तत्र हिंसात्वलक्ष्याऽभावः, अन्यथा तादृशशिवपूजनस्याऽपि पुण्यस्य शिवपूजनस्यापि हिंसात्वापत्तिः स्यादिति ॥ ननु लाघवात् साक्षान्मरणजनकत्वमेव हिंसात्वं, श्येनस्य तु अदृष्टद्वारा मरणजनकत्वान्न हिंसात्वम्, किन्तु साक्षादपूर्वमेव हिंसा, तथा च श्येने बलवदनिष्टाननुबन्धित्वस्य न बाध इति चेन्न । असिहतस्य व्रणद्वारा विलम्बेन मरणे सत्यपि हन्तुर्हिंसकत्वाऽनापत्तेरिति ॥ २४४-२४५ ॥

**यद्वा श्येनस्य हिंसात्मा व्यापारः फलमेव सः ।**
**मृतेर्हेतुः पापहेतुरतो न वर्तना सताम् ॥ २४६ ॥**

अदृष्टाऽद्वारकत्वविशेषणं विनैव श्येने बलवदनिष्टाननुबन्धित्वोपपत्तिमाह—यद्वेति । श्येनस्य हिंसात्मकव्यापार एव फलम्, मरणन्तु व्यापारस्य फलं न श्येनस्य, अतः श्येनक्रियाजन्या खड्गप्रघातादिरूपा क्रियैव हिंसाऽभिचारपदार्थः, तस्य 'अभिचारमहीनञ्चे'त्यादिना पापजनकत्वबोधनात् । श्येनस्य विधिबोधितकर्मत्वात् साक्षान्मरणफलकहिंसात्मकव्यापारमात्रफलकत्वाच्च हिंसापदार्थस्य पापपदार्थभिन्नतया वैधहिंसाया हिंसात्वाऽभावेन श्येनस्य पापाऽजनकत्वेऽपि अग्रिमं परम्परया जायमानं यच्छत्रुमरणजन्यं पापं तत्प्रतिसन्धाय अहिंसकानां सतां न प्रवृत्तिः, तथा च तत्र बलवदनिष्टाननुबन्धित्वादिविध्यर्थो निराबाधः, अदृष्टाऽद्वारकत्वं च हिंसालक्षणे न देयमेव ॥ २४६ ॥

**विध्यर्थ आप्ततात्पर्यं स्वेष्टसाधनमापकः ।**
**तेन प्रवर्तना, तत्रेच्छावाचित्वं प्रमीयते ॥२४७॥**

उदयनाचार्यमतमाह—विध्यर्थ इति । यथार्थवक्तुरिच्छा यत्राऽर्थे स विध्यर्थः, तेन स्वेष्टसाधनताऽनुमीयते-'यागः, स्वेष्टसाधनम्,—आप्तेष्टत्वादि'ति । तेनेति । इष्टसाधनताज्ञानेन च प्रवृत्तिः, यथा 'पाकं कुर्याः, पाकं कुर्यामि'तिमध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्वं क्लृप्तं, तेन दृष्टान्तेन प्रथमपुरुषेऽपि इच्छावाचित्वमनुमेयं 'कुर्यादिति प्रथमपुरुषः,—इच्छावाची,-तत्र क्लृप्तत्वात्,—कुर्यादितिमध्यमपुरुषवदिति—' । तथा च बलवदनिष्टाऽननुबन्धीष्टसाधनत्वाद्यपेक्षया इच्छात्वेन विधिशक्तौ लाघवात् विधिप्रत्ययमात्रस्य इच्छावाचित्वं स्वीकर्तव्यम् । एवं च 'स्वर्गकामो यजेते'त्यादिवैदिकलिङ्वाक्यघटकसाकांक्षत्वादिप्रकारकपदज्ञाने सति 'यागः स्वर्गकामकृतिसाध्यतया आप्तेष्ट'इति बोधो जायते, तादृशलिंगज्ञानोत्तरं च 'यागः, मम स्वर्गकामस्य बलवदनिष्टाननुबन्धीष्टसाधनम्,—मत्कृतिसाध्यतयाऽऽप्तेनेष्यमाणत्वात् , मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजन-

वदि'त्यनुमाय यागे बलवदनिष्टाननुबन्धीष्टसाधनत्वविषयकप्रवर्तकज्ञानात्प्रवर्तते, कलञ्जभक्षणादौ कृतिसाध्यतया आप्तेष्टत्वाऽभावेन तल्लिंगकबलवदनिष्टाननुबन्धीष्टसाधनत्वज्ञानानुत्पादेन न प्रवर्तते इति ॥ अत एव वेदे विधिरेव तावद्गर्भं इव श्रुतिकुमार्याः पुंयोगे मानमित्यपि बोध्यम् ॥ २४७ ॥

**निवृत्तौ तु फले द्वेषो द्विष्टसाधनतामतिः ।**
**रागाद्यभावकूटस्ते कारणानि भवन्ति हि ॥२४८॥**

निवृत्तिं निरूपयति—निवृत्ताविति । द्वेषजन्यतावच्छेदकतया सिद्धजातिमत्प्रयत्नत्वं निवृत्तित्वमित्युक्तम् । निवृत्तिं प्रति फलगतो द्वेषः, द्विष्टसाधनताज्ञानं, रागाऽभावश्चिकीर्षाऽभावः, कृतिसाध्यताज्ञानाऽभावः, इष्टसाधनताज्ञानाऽभावः, उपादानपरोक्षं प्रबलानिष्टमतिश्चेति कारणानि बोध्यानि ॥ 'निवर्तते'इतिमानसप्रतीतिविषयत्वे सति प्रयत्नत्वसाक्षाद्व्याप्यजातिमत्त्वं निवृत्तित्वमित्यपि लक्षणम् । श्रममरणदुःखत्वादिप्रकारकज्ञानजन्यो यः फले द्वेषः स उपायद्वेषं प्रति कारणमित्यपि बोध्यम् ॥ २४८ ॥

**जीवकेऽतीन्द्रिये हेतुर्जीवनाऽदृष्टमुच्यते ।**
**जीवमात्रे ह्यनित्योऽयं नेश्वरे प्राणहीनतः ॥२४९॥**
**प्रवृत्तिस्त्वीश्वरे नित्या सृष्ट्यादिगोचरा तथा ।**
**नित्या सृष्टिप्रवाहाद्याऽननुरूपा निवर्तना ॥२५०॥**

जीवनयोनियत्नं निरूपयति—जीवके इति । साहजिकप्राणसञ्चरणाऽसाधारणनिमित्ततावच्छेदकतया सिद्धजातिमत्प्रयत्नत्वं जीवनयोनित्वमित्युक्तम् । अतीन्द्रिये इति । 'अधिकश्वासादिप्राणसञ्चारः,—प्रयत्नसाध्यः,—कार्यत्वादि'त्यनेन प्राणसञ्चारस्य यत्नसाध्यत्वे सिद्धे प्रत्यक्षत एव इतरप्रयत्नसाध्यत्वस्य बाधात् अतीन्द्रियत्वसिद्धिरिति ॥ यद्वा—'सुषुप्तिकालीनश्वासः,—भोक्तृप्रयत्नजन्यः, श्वासत्वात्, यावतः श्वासवदि'त्यनुमानेन सिद्धिरिति । हेतुरिति । जीवनयोनियत्नं प्रति जीवनाऽदृष्टं कारणम्, तथा च जीवनाऽदृष्टजन्यतावच्छेदकतया सिद्धप्रयत्नत्वव्याप्यजातिमत्त्वं जीवकयत्नत्वमित्यपि लक्षणं बोध्यम् । जीवमात्रे इति । अयं त्रिविधोऽपि प्रयत्नो जीवेष्वनित्यः कारणजन्यत्वात् ॥ नेश्वरे इति । परमेश्वरे प्राणसञ्चाराऽनपेक्षणात् जीवनाऽदृष्टाऽभावात् अन्यप्रयोजनाऽभावाच्च जीवनयोनिप्रयत्नो नास्त्येव । प्रवृत्तिस्त्विति । सृष्टिजन्मादिविषयिणी प्रवृत्तिः परमेश्वरे नित्यैव, देशकालादिविशिष्टतया सृष्टिनियामिका इति न सर्वदाप्रसंगः सर्वदाऽप्रसंगो वा दोषः ॥ तथा नित्येति । सृष्टिप्रवाहस्याऽवान्तरसर्गस्य चानुरूपताया वैपरीत्येन कदाचिदपि न सृजति, अतस्तादृशप्रवाहानुरूपतावैपरीत्यविषयिणी निवृत्तिर्नित्या परमेश्वरे सिद्ध्यतीति ॥ न च प्रवृत्त्यभाव एव निवृत्तिस्तस्येति वाच्यम्, खण्डप्रलयादौ प्रतिसर्गावस्थायां कारणतया सिद्धस्य यत्नस्य अभावत्वविरहात् ॥ २५० ॥

**इच्छामीतिप्रधीसिद्धो गुण इच्छा, द्विधा तु सा ।**
**फले तत्साधने, दुःखाभावः सुखं फलं मतम् ॥२५१॥**
**फलज्ञानात्फलेच्छा स्यादिष्टसाधनताधियः ।**
**साधनेच्छा भवेत्, सा च क्वचिद् यत्नेऽपि कारणम् ॥**
**इष्टसाधनताबुद्धेः कृतिसाध्यत्वबुद्धितः ।**
**अत्यनिष्टाऽजनिज्ञानाच्चिकीर्षा जायते, तु सा ॥२५३**
**बोध्या वै कृतिसाध्यत्वप्रकारेच्छाऽथ, तां प्रति ।**
**प्रबलद्विष्टहेतुत्वज्ञानं तु प्रतिबन्धकम् ॥ २५४ ॥**

इच्छां निरूपयति—इच्छामीति । 'अहमिच्छामी'तिप्रत्यक्षप्रतीतिसिद्धगुणत्वव्याप्यजातिमत्त्वम् इच्छाया लक्षणम् । नित्यायां भगवदिच्छायामपि तादृशेच्छात्वजातेः स्वीकारान्नाऽव्याप्तिः । अनित्येच्छा द्विविधा—फलविषयिणी, फलोपायविषयिणी च । तथा च फलविशेष्यकेच्छात्वं, पुरुषार्थमिच्छामीतिप्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा फलेच्छासामान्यलक्षणम् । एवम् उपायविशेष्यकेच्छात्वम्, उपायमिच्छामीतिप्रतीतिसाक्षिकेच्छात्वव्याप्यजातिविशेषवत्त्वं वा उपायेच्छासामान्यलक्षणम् ॥ फलमाह—दुःखेति । गौणं फलं दुःखाऽभावः, मुख्यं फलं सुखम् ॥ फलज्ञानादिति । समवायेन तद्धर्मावच्छिन्नफलविषयकेच्छात्वावच्छिन्नं प्रति समवायेन तद्धर्मावच्छिन्नविषयकज्ञानत्वावच्छिन्नं कारणमित्यर्थः ॥ इष्टेति । समवायेन साधनविषय-

केच्छात्वावच्छिन्नं प्रति समवायेन साधनविशेष्यकेष्ट-साधनत्वप्रकारकज्ञानत्वावच्छिन्नं कारणमित्यर्थः ॥

सा च क्वचिदिति । सा च शुद्धेच्छा उभयविषयिण्यपि नित्या परमेश्वरस्य, संसार्यात्मनां प्रयत्नसाधारणं प्रति सा साधारणं कारणम् । इच्छायाः किञ्चिद्विषयकत्वादेव स्थितेः विशिष्टस्य शुद्धानतिरेकात् विशिष्टस्य कारणत्वे शुद्धाया इच्छात्वेन क्वचिद् व्यक्तिविशेषस्य स्वीयसमग्रकार्यं प्रति साधारणकारणत्वांगीकारात्प्रयत्नं प्रति सुतरां कारणत्वलाभः ॥ २५१-२५२ ॥

इष्टसाधनतेति । इदं मत्कृत्या साध्यतामित्याकारिका कृतिसाध्यत्वप्रकारिका कृतिसाध्यविषयिणीच्छा चिकीर्षा, तथा च कृतिसाध्यत्वप्रकारकेच्छात्वं, चिकीर्षामीतिप्रतीतिसाक्षिकोपायेच्छामात्रवृत्तिवैजात्यव्याप्यजातिविशेषवत्त्वं वा चिकीर्षात्वम्, तां प्रति 'यागादिकं मदिष्टस्य स्वर्गादेः साधनमि' तीष्टसाधनताज्ञानं 'यागो मत्कृतिसाध्यो भवत्वि' तिकृतिसाध्यताज्ञानसहितं कारणम् । अत एव निष्प्रयोजने वस्तुनि, चन्द्रानयनादौ च न चिकीर्षा, एवम् 'इदं मदनिष्टस्याऽजनकमि' तिज्ञानमपि क्वचित् स्वतन्त्रं कारणम्, अत एव बोम्बरचकस्य बोम्बे चिकीर्षा ॥ प्रबलेति । समवायेन बलवद्द्विष्टहेतुत्वप्रकारकं ज्ञानं चिकीर्षां प्रति प्रतिबन्धकम्, तेन विषादिभक्षणे न चिकीर्षा । द्वेषे प्रबलत्वं च नान्तरीयकदुःखविषयकद्वेषव्यावृत्तं वैजात्यमेव । एवं क्वचित्समवायेन तद्धर्मावच्छिन्नतन्निष्ठविशेष्यताशालिचिकीर्षां प्रति तद्धर्मप्रकारकतद्विशेष्यकद्वेषत्वेन समवायेन प्रतिबन्धकत्वमपि बोध्यम् ॥ २५३-२५४ ॥

**नित्येच्छाज्ञानयत्नेषु विषयाणां तु भासनम् ।**
**भवत्येतावता नैव तदायत्तत्वमिष्यते ॥ २५५ ॥**

परमेश्वरस्य नित्येच्छाज्ञानयत्नेषु विषयाऽनधीनेषु यथाऽवस्थितप्रकारविशेष्यादिभावेन विषयाणां तत्कालीनाऽस्तित्वाऽन्वयमात्रेणाऽऽरोहणं भवति, अतो विषयाऽधीनत्वं न, तथा च न कार्यकारणभावादय इति ॥ २५५ ॥

**निद्रा गुणस्तमोमात्रवृत्तिविषय उच्यते ।**
**परिश्रमपरीहारा विश्रान्तिसहकारिणी ॥२५६॥**
**जीववृत्तिरनित्या सा, तमोनाशाच्च नश्यति ।**

निद्रां निरूपयति—निद्रेति । तमोमात्रवृत्तिविषयकत्वे सति गुणत्वं, 'निद्रां करोमी'त्यनुभवसिद्धनिद्रात्वजातिमत्त्वं, तमोजन्यत्वे सति विलक्षणाऽऽरामजनकगुणत्त्वं वा निद्राया लक्षणम् । सत्त्वादेर्मनाक् सम्पर्केऽपि न तद्विषयकत्वं, सामानाधिकरण्येन संयोगेन वा तमसि सत्त्वादेर्विशेषणत्वात् ॥ परिश्रमेति । परिश्रमः—सततयत्नजन्यव्यापारजन्याऽधिकाऽवयवशक्तिविलयनम्, तस्य परिहारद्वारा पुनः शक्त्युत्तेजकत्वमित्यर्थः ॥ विश्रान्तीति । अनायाससहकारिणः सुखविशेषस्य निमित्तकारणमित्यर्थः ॥ जीवेति । समवायेन जीवे वर्तते, अनित्या च, उत्कटजाग्रदादौ तदभावदर्शनात्, निद्रा न मायागुणः, प्राणिनामेव तदुपलम्भात् ॥ तम इति । तदसाधारणविषयस्य तमसो नाशे सति निद्रा नश्यतीत्यर्थः ॥ २५६ ॥

**कामस्तु यौवनोद्बोध्यो वासनोत्थो भवेद् गुणः ।**
**'रतिं कामय'इत्यादिप्रतीतेः स गुणान्तरम् ॥**
**सृष्टिप्रवाहसातत्यं, विलक्षणसुखं यतः ॥२५८॥**
**अनित्य आत्मवृत्तिः स वीर्यनाशात्तु नश्यति ।**
**परात्मन्यनुमेयः स विलक्षणविचेष्टया ॥२५९॥**

कामं निरूपयति—कामस्त्विति । यौवनमात्रप्रयोज्यत्वे सति वासनाजन्यत्वे सति गुणत्वम्, 'रतिं कामये'इत्यनुभवसिद्धकामत्वजातिमत्त्वं वा कामस्य लक्षणम् । यौवनं च वीर्यरजोऽन्यतरवत्त्वम् । कामश्च अधिकपुण्यलभ्यशरीरेषु सततवीर्याद्युत्पादेनाऽधिकः । संसारिणामुत्कटविलक्षणसुखाऽसाधारणं कारणमपि गुणः कामः, संसारिप्राणिप्रवाहाऽविच्छेदाऽसाधारणनिमित्तं गुणः कामः ॥ २५७-२५८ ॥

स च वीर्यरजोऽन्यतरनाशान्नश्यति । मृतशरीरादावभावादात्मगुणः । बाल्यादौ तूद्बोधकाऽभावात्तद्विलम्बः । विलक्षणचेष्टाजन्यसिद्धिविषयगुणः कामः परात्मन्यनुमेयः ॥ २५९ ॥

**संस्कारपदवाच्यत्वाऽवच्छेदकविशिष्टकः ।**
**गुणः संस्कार इत्युक्तः, चतुर्धा, भावना तथा ॥**

**वासना च तथा वेगः स्थितिस्थापक इत्यपि ।**
**स्मृतेर्हेतुर्भावना स्याद्, वासना कामकारणम् ॥**
**उपेक्षानात्मकस्तावन्निश्चयस्तत्र कारणम् ।**
**इमेऽनित्ये जीववृत्त्यावतीन्द्रिये हि सम्मते ॥**
**भावनाऽक्षसहाया स्यात्प्रत्यभिज्ञानकारणम् ।**
**दीर्घकालाद् दीर्घरोगात् फलाद्वान्त्याद् विनश्यतः ।**
**वेगस्तु मूर्तमात्रस्थः कर्मजो वेगजोऽथवा ।**
**ग्राह्ये ग्राह्यस्ततोऽन्यत्राऽग्राह्योऽनित्यो भवेत्सदा ।**
**स्थितिस्थापकसंस्कारश्चतुर्भूतेष्वतीन्द्रियः ।**
**स्वजन्यकर्मनाश्यस्तद्देशाऽभिगतिकारणम् ॥२६५॥**

संस्कारं निरूपयति—संस्कारेति । संस्कारपदवाच्यत्वे सति गुणत्वव्याप्यजातिमत्त्वं, संस्कारभिन्नभिन्नत्वं वा संस्कारस्य लक्षणम् । स चतुर्धा—भावना वासना वेगः स्थितिस्थापकश्चेति ॥ स्मृतेरिति । तत्र उपेक्षाऽनात्मकशुभनिश्चयात्मकाऽनुभवजन्यत्वे सति स्मृतिकारणत्वं भावनात्वम् । उपेक्षाऽनात्मकाऽशुभनिश्चयात्मकाऽनुभवजन्यत्वे सति कामकारणत्वं वासनात्वम् ॥ उपेक्षात्मकनिश्चयात् संस्काराऽनुत्पत्तेः—उपेक्षानात्मकमित्युक्तम् । तादृशसंशयादेरपि संस्काराऽनुत्पत्तेर्निश्चय इति ॥ जीवेति । भावनावासनेऽनित्ये जीवात्मवृत्त्यौ अतीन्द्रिये च । भावना स्मरणे इव प्रत्यभिज्ञायामपि कारणं भवति, तथा च व्यापारमन्तरेण पूर्वानुभवस्य स्मरणादिजनकत्वाऽनुपपत्तेर्व्यापारतया संस्कारः कल्प्यते । संस्कारसहकृतेन्द्रियजन्यज्ञानत्वात्मकप्रत्यभिज्ञात्वस्य स्मरणे नाऽतिव्याप्तिः ॥ दीर्घेति । दीर्घकालस्य चरमफलस्य वा तयोर्नाशकत्वम् ॥२६०–२६३॥

वेगस्त्विति । वेगस्तु मूर्तमात्रवृत्तिर्वेगपदवाच्यसंस्कारत्वसाक्षाद्व्याप्यजातिमान् बोध्यः । शरीरादौ नोदनाख्यसंयोगजन्यकर्मणा वेगो जन्यते; तेन वेगेन च स्वजनककर्मनाशः कर्मान्तरोत्पत्तिश्च । एवं कपाले वेगाद् घटे वेगो भवति स वेगजो वेगः । अयं प्रत्यक्षे प्रत्यक्षः अप्रत्यक्षेऽप्रत्यक्षः ॥ २६४ ॥

स्थितीति । स्थितिस्थापकसंस्कारपदवाच्यसंस्कारत्वसाक्षाद्व्याप्यजातिमान् स्थितिस्थापकसंस्कारः, स च कटादौ, पाषाणप्रक्षिप्ते ह्रदे, वह्निज्वालायाम्, व्यजनाकृष्टवायौ च यथावस्थितिभानात् तत्र स्थितिस्थापकसंस्कारोऽनुमीयते, अत एव चाऽतीन्द्रियः । स च प्राक्स्थलं प्रति आगतिक्रियां प्रति कारणम्, स्वजन्यक्रियानाश्यश्च भवति । क्रियाविशेषजनकतावच्छेदकतया स्थितिस्थापकत्वजातिः सिद्ध्यतीति ॥ २६५ ॥

**दुःखसंस्कारतो जन्यः स्मृतिद्वारो गुणो भयः ।**
**दुःखसाधनताधीजो बलस्य प्रतिरोधि च ॥२६६॥**
**'मा न भूवं च भूयासमि'त्यनुभूतिगोचरात् ।**
**स्वस्मिन् मानसप्रत्यक्षोऽन्यत्र कम्पेन तर्क्यते ॥२६७॥**
**आत्मवृत्तिरनित्यश्च स्मृतेर्नाशाद्धि नश्यति ।**

भयं निरूपयति—दुःखसंस्कारत इति । भयं त्रासोऽभिनिवेशः । दुःखविषयकसंस्कारजन्यत्वे सति स्मृतिद्वारकत्वे सति गुणत्वं, संस्काराऽधर्मभिन्नत्वे सति दुःखजनकगुणत्वं, भयपदवाच्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वं वा भयस्य लक्षणम् । यद्वा—दुःखसाधनताप्रकारकज्ञानजन्यत्वे सति बलप्रतिद्वन्द्वित्वे सति कम्पादिफलकत्वे सति गुणत्वं भयत्वम् ॥ २६६ ॥

मा नेति । यावतां त्रासजनकानां पदार्थानां साक्षात्परम्परया वाऽनुभवे कृते एव तत्तत्पदार्थविशेष्यकत्रासप्रदत्वसंस्कारा जायन्ते, नहि संस्कारं विना 'अयं पदार्थः त्रासजनक' इति स्मरणम्, न च स्मरणमन्तरेण तेभ्यस्त्रासः, मरणत्रासोऽपि प्राग्भवीयमरणाऽनुभवजन्यसंस्कारैरेवेदानीं स्मरणाद् भवति, जातमात्रो हि बालो मारकवस्तुदर्शनेन कम्पमानो ज्ञातमरणत्रासः सन्नुपलभ्यते, न चाऽस्मिन् जन्मनि मरणत्रासोऽनुभूतः येन स्मरणं स्यात्, तस्मात्तस्य स्मृतिः न संस्कारमन्तरेण, संस्कारश्च नाऽनुभवमन्तरेण, अनुभवश्च प्राग्भवीय एव निर्णीयते । भवति च सर्वेषाम् आशीः 'मा न भूवम्, भूयासम्, मम सम्पदन्यैर्मोपघानिषत' इति । तथा च यथाकथञ्चित् अनुभूतदुःखमरणाद्यनुभवजन्यसंस्कारबलात् समुपजायमानः शरीरविषयादेर्मम वियोगो मा भूदित्यन्वहमनुबन्धरूपः सर्वस्यैवाऽऽकृमेर्ब्रह्मपर्यन्तं प्रवर्त-

मानोऽभिनिवेशः, आत्मगुणः सः । स्मरणनाशान्नश्यति । अतोऽनित्यः सः ॥ २६७ ॥

**गुणो मोहस्तु 'मुग्धोऽस्मी' त्यादिधीगोचरो मतः॥**
**रागोत्थात्मगुणोऽनित्यो रागध्वंसाद्विनश्यति ।**
**स्वमनोगोचरः स्वस्मिंश्चेष्टयाऽन्यत्र मीयते ॥२६९॥**

मोहं निरूपयति—गुण इति । मुग्धोऽस्मीत्यादिप्रतीतिविषयत्वे सति गुणत्वव्याप्यजातिमत्त्वं, तृष्णात्मकरागमात्रप्रयोज्याऽऽत्मगुणत्वं, तमोजन्यत्वे सति जाडयमात्रफलकत्वे सति गुणत्वं, मोहपदजन्यप्रतीतिविषयतावच्छेदकधर्मवद्गुणत्वं वा मोहस्य लक्षणम् । विषयादिसुखस्मरणसन्तानात् तृष्णातन्तुर्विवर्धते, तथा च सत्त्वप्रयोज्यसुखतत्साधनाऽभिज्ञस्य तद्द्वयस्मरणसन्तानपूर्वकतद्द्वयमात्रविषयकराजसप्रयोज्याऽभिलाषात्मकरागात् ततस्तमःप्रयोज्यो मोहो जायते । स च रागनाशान्नश्यति, स्वस्य मानसप्रत्यक्षः, अन्यस्य तु 'अयं मुग्धो विलक्षणचेष्टावत्त्वादि' त्यनुमेयः ॥ २६८–२६९ ॥

**गुणः शौर्यं तु '–शूरोऽस्मी' तिधीसिद्धं जयप्रदम् ।**
**शक्तिजन्यं मनोऽध्यक्षं जीवनिष्ठमशाश्वतम् ॥२७०॥**

शूरतां निरूपयति—गुण इति । 'शूरोऽस्मी'तिप्रतीतिसिद्धगुणत्वव्याप्यजातिमत्त्वं, बलाख्यशक्तिविशेषजन्यत्वे सति जयप्रदत्वे सति जीवगुणत्वं, शूरतापदबोध्यगुणत्वं वा शूरताया लक्षणम् । तपःप्रभृतिप्रबलाऽदृष्टं विना विविधात्मबलं न, तद्विना च विविधं शौर्यं न, तद्विना च विविधविजयो नेति सामानाधिकरण्येनैतेषां कार्यकारणभावः । तत् अनित्यं स्वनिष्ठं मनसा ग्राह्यम्, परत्र तु जयोत्साहादिनाऽनुमेयम् । परमात्मनि तु नित्ये विजयप्रदे बले शक्त्यात्मके शौर्यस्योपचारमात्रत्वमिति बोध्यम् ॥ २७० ॥

**इच्छायाः कारणं सर्वव्यवहारप्रयोजकम् ।**
**ज्ञानशब्दप्रवाच्योऽर्थो गुणो वा ज्ञानमुच्यते ॥२७१**
**जीवेषु तदनित्यं स्यात्परेशे शाश्वतं स्मृतम् ।**
**ज्ञानं बुद्धिः प्रकाशश्च वृत्तिर्बोधः फलं हि तत् ॥२७२॥**

ज्ञानं निरूपयति—इच्छाया इति । इच्छाया असाधारणकारणत्वे सति गुणत्वं, शब्दात्मक्रियात्मकादिसर्वव्यवहाराऽसाधारणकारणत्वे सति गुणत्वं, ज्ञानपदजन्यप्रतीतिविषयत्वे सति अर्थत्वं वा ज्ञानस्य लक्षणम् ॥ जीवेष्विति । तज्ज्ञानं जीवात्मसु उत्पद्यते विनश्यति च । परमात्मनि तु नित्यप्रत्यक्षात्मकं ज्ञानम् ॥ ज्ञानम् अविद्यावृत्तिरिति शांकराः । ज्ञानम् अन्तःकरणबुद्धिधर्म इति सांख्याः । ज्ञानं ब्रह्मैवेति औपनिषदाः । ज्ञानम् आत्मप्रतिबिम्बे फलमिति योगाचार्याः । ज्ञानं क्षणिको बोध इति बौद्धाः । ज्ञानं प्रकाशोदय इति जैनादयः । तत्पर्यायमात्रमिति दर्शयति—ज्ञानं बुद्धिरिति । आत्मगुणो ज्ञानं गुणतत्त्वं, न द्रव्यं न वाऽन्यादृशमिति भावः, ज्ञानं गुणो द्रव्यमिति विशिष्टाद्वैतिनः ॥ २७१–२७२ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्य-न्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौमपण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमेयचिन्तामण्याख्ये प्रथमे प्रत्यक्षे खण्डे गुणविशेषनिरूपणपरिच्छेदः ॥ ५ ॥

## तत्त्वप्रभावल्याः प्रमाणखण्डे

**तत्त्वप्रभावल्याः प्रमाणखण्डो द्वितीयः ।**
**जन्यं ज्ञानं भवेद् द्वेधा स्मृतिश्चाऽनुभवस्तथा ।**
**स्मृतिस्त्वनुभवोत्पन्नं ज्ञानं वैशिष्ट्यगोचरम् ॥२७३॥**

तत्र परमेश्वरीयनित्यज्ञानस्य विभागाऽभावात् जैवं ज्ञानं विभजते—जन्यमित्यादिना । स्मृतिः—स्मृतित्वावच्छिन्नम्, अनुभवः अनुभवत्वावच्छिन्नम् ॥ स्मृतेर्लक्षणमाह—स्मृतिस्त्वित्यादिना । अत्र स्मृतित्वं नाऽनुभवभिन्नज्ञानत्वम्, अनुभवत्वस्य स्मृतिभिन्नज्ञानत्वस्य क्लृप्तत्वात् अन्योन्याश्रयापत्तेः । नापि संस्कारजन्यज्ञानत्वं, प्रत्यभिज्ञायामतिव्याप्तेः । नापि मात्रपदनिवेशः, संस्कारेतराऽजन्यसंस्कारजन्यज्ञानत्वस्य गौरवग्रस्तत्वात् । किन्तु जातिरेव, तत्र प्रमाणं दर्शयितुं कार्यकारणभावमाह— अनुभवोत्पन्नमिति । पूर्वानुभवोत्पन्नमित्यर्थः । पूर्वपदं स्मृतिसमानोत्तरकालीनेतराऽनुभवपरिचायकमात्रम्, तथा च स्मृतित्वावच्छिन्नं प्रति स्वसमानविषयकाऽनुभवत्वावच्छिन्न

कारणम्। वस्तुतस्तु तद्धर्मावच्छिन्नतद्विषयकस्मृतित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्नतत्प्रकारकनिश्चयत्वेन कारणत्वम्, एतन्निर्वाहार्थं व्यापारीभूतः संस्कारः कल्प्यते। तथा च समानविषयकानुभवजन्यतावच्छेदकतया स्मृतित्वं सिद्धयति। अनुमानं यथा—'समवायघटितसामानाधिकरण्यसम्बन्धावच्छिन्नतद्धर्मावच्छिन्नतद्विषयकाऽनुभवनिष्ठकारणतानिरूपितस्मृतिनिष्ठकार्यता,—किञ्चिद्धर्मावच्छिन्ना,—कार्यतात्वात्'। तथा च पूर्वकालीनसमानविषयकाऽनुभवजन्यतावच्छेदकस्मृतित्वजातिमत्त्वं स्मृतेर्लक्षणमिति॥

ननु स्मृतिं प्रति ज्ञानत्वेन कारणत्वमस्तु, तेन स्मरणेन संस्कारनाशेऽपि संस्कारान्तरद्वारा स्मरणोपपत्तिः स्यादिति चेन्न। भूतले घटपटफलपत्राणां समूहालम्बनप्रत्यक्षोत्तरं क्रमिकस्मरणोत्पादनप्रस्तावे चतुर्थपदार्थस्मरणकाले द्वितीयपदार्थस्मरणनाशात् समानविषयकसमूहालम्बनस्मरणाऽनिष्पत्तेस्तत्र दीर्घकालस्य दीर्घरोगस्य चरमस्मरणस्य संस्कारनाशकत्वस्वीकारात् सर्वत्र तथा कल्पनात् चरमस्मरणपर्यन्तं तथा तथा पुनःपुनः स्मरणजनितदाढ्र्यात्मकोद्बोधकसम्बन्धावच्छिन्नसंस्कारात् सर्वत्र स्मरणोपपत्तेः।

ननु तथापि विनिगमनाविरहात् ज्ञानत्वेनाऽपि कारणत्वं स्यादिति चेन्न। व्याप्यधर्मेण व्यभिचाराऽभावे सामान्यधर्मेणाऽन्यथासिद्धेः॥ ननु समानप्रकारकस्मरणेन पूर्वसंस्कारनाशकत्वकोटेः युक्त्या तु आन्तरालिकस्मरणानां संस्कारनाशकत्वाऽभावकोटेश्च लाभात् आन्तरालिकस्मरणानां संस्कारनाशकत्वं न वेति विप्रतिपत्तिजन्यः 'स्मृतिकारणम् अनुभवत्वावच्छिन्नत्ववत् युक्त्या आन्तरालिकस्मरणानां संस्कारनाशकत्वाऽभावादि'त्यनुमाने हेतुसंशयात् व्यापकसंशयः 'अनुभवनिष्ठा स्मृतिकारणता, अनुभवत्वावच्छिन्नाऽभाववद्वृत्तिकार्य (स्मृति) ताकत्ववती न वे' ति व्यतिरेकव्यभिचारसंशयः कार्यकारणभावभञ्जको भवेदिति चेन्न। आन्तरालिकस्मरणानाम् अनन्तसंस्कारतन्नाशकल्पनाऽपेक्षया चरमस्मरणस्यैव संस्कारनाशकत्वकल्पने लाघवात् लाघवज्ञानसहकृतेन बलवत्कोटिहेतुना आन्तरालिकस्मरणानां संस्कारनाशकत्वकोटेर्निरोधात् 'स्मृतिकारणत्वम् अनुभवत्वावच्छिन्नत्ववदि'त्यनुमितेर्निराबाधात्।

किञ्च ज्ञानत्वेन स्मृतिकारणत्वे उपेक्षात्मकज्ञानात् स्मृत्यनुत्पत्तेस्तत्र व्यभिचारवारणाय उपेक्षानात्मकज्ञानत्वेन कारणता वाच्या, तत्र उपेक्षात्वं न जातिः, प्रत्यक्षात्मकनिर्विकल्पकनिष्ठाऽभावप्रतियोग्युपेक्षात्वस्य उपेक्षात्मकानुमितिनिष्ठाऽभावप्रतियोगिप्रत्यक्षत्वस्य च सविकल्पके समावेशेन सांकर्यात्, न वा उपाधिः, अनुगतधर्माऽभावात्। तथा च तत्तद्व्यक्तित्वावच्छिन्नोपेक्षाभेदकूटानां कारणतावच्छेदककोटौ निवेशे महागौरवम्। एवं चरमस्मृतेरपि ज्ञानत्वेन कारणत्वे ततोऽपि स्मृत्यापत्तिश्चेति॥ वैशिष्ट्येति। प्रकारतावगाहि संसर्गतावगाहि विशेष्यतावगाहि च स्मरणं भवति, निर्विकल्पकात् सविकल्पकानुभवः। ततः संस्कारस्मरणजननात् स्मरणं सविकल्पकमेवेत्यर्थः॥ २७३॥

**सविकल्पकमेवैतत्, स्यात्प्रमा चाऽप्रमा तु सा।**
**तद्वति तत्प्रकारत्वं प्रमात्वं परिकीर्तितम्॥२७४॥**
**अप्रमात्वं तदभाववति स्यात् तत्प्रकारकम्।**

वैशिष्ट्यावगाहीत्यस्य शाब्दबोधार्थकत्वभ्रमवारणायाऽऽह—सविकल्पकमेवैतदिति। विशिष्टबोधात्मकमेव न तु समूहालम्बनात्मकमविशिष्टबोधात्मकं निर्विकल्पकमपीत्यर्थः। तथा च तत्तदनुभवविषयीभूततत्तद्विषयातिरिक्तविषयाऽविषयकत्वे सति इन्द्रियाऽजन्यत्वे सति तत्तदनुभवजन्यज्ञानत्वं स्मृतित्वमित्यपि बोध्यम्। स्मृतिर्हि अनुभवसमानाकारा तन्न्यूनाकारा वा न त्वधिकाकारेति न पूर्वानुभवमर्यादामतिक्रामति। अनुव्यवसाये व्यवसायस्यापि विषयत्वान्नाऽतिव्याप्तिः। प्रत्यभिज्ञाया इन्द्रियजन्यत्वान्नातिव्याप्तिः॥ स्मृतेर्द्वैविध्यमाह—प्रमा चाप्रमा चेति। यथार्था अयथार्था चेत्यर्थः। यथार्थानुभवजन्या यथार्था, अयथार्थानुभवजन्या त्वयथार्था। तत्राऽन्तःकरणात्मसंयोगोऽसमवायिकारणम्, प्रणिधाननिबन्धनाऽभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धाऽऽनन्तर्यवियोगैककार्यविरोधाऽतिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयाऽर्थित्वक्रियारागधर्माऽधर्माः स्मृतेर्निमित्तकारणानि। स्वप्नज्ञानम् अयथार्थानुभवः, न तु स्मृतिः॥ अथ केचन स्वप्नान्तिकमर्धसुषुप्तावुत्पद्यमानं सौषुप्तं ज्ञानं स्मरणमिति

वदन्ति । तन्न । मायात्मनोर्योगसत्त्वेन अनुभवस्य सिद्धत्वात्, उत्तरकालीनेन 'सुखमहमस्वाप्समि' त्यादिस्मरणेनाऽप्यनुभवस्य सिद्धेः ॥ प्रमात्वं सामान्यतया लक्षयति—तद्वतीति । घटत्ववति घटे घटत्वप्रकारकज्ञानत्वं प्रमात्वम् । तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमा ॥ स्मृतेः प्रमात्वेन तत्करणत्वेनाऽनुभवस्य प्रमाणत्वेनाऽङ्गीकारात् ॥

ननु रंगरजतयोः 'इमे रजतरंगे' इतिभ्रमेऽतिव्याप्तिरिति चेन्न । तद्वन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तच्छालिज्ञानत्वस्य विवक्षणात् ॥ ननु तथापि 'पृथिवीजलोभयं गन्धवदि' तिभ्रमेऽतिव्याप्तिरिति चेन्न । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन विशेषणीयत्वात् ॥ ननु तथापि 'पृथिवीजलोभयं द्रव्यमि'तिप्रमायामव्याप्तिरिति चेन्न । तदधिकरणतावच्छेदकधर्मावच्छिन्नतद्वद्विशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वस्य लक्षणत्वात् ॥ ननु निरवच्छिन्नविशेष्यताक 'घट' इतिप्रमायामव्याप्तिरिति चेन्न । तदधिकरणताऽनवच्छेदकाऽनवच्छिन्नतद्वन्निष्ठेत्याद्युक्तत्वात् । अत्र तद्वन्निष्ठविशेष्यत्वं तत्प्रतियोगिकसम्बन्धानुयोगिनिष्ठविशेष्यत्वं वक्तव्यम्, अन्यथा वृत्त्यनियामकाऽऽश्रेयत्वतादात्म्यादिसम्बन्धावच्छिन्नप्रमायां 'घटे घटत्वं' 'घटो द्रव्यमि'त्यादावव्याप्तिप्रसंगात् ॥ अत्र यत्सम्बन्धावच्छिन्नयद्वन्निष्ठविशेष्यतानिरूपिता यन्निष्ठा यत्सम्बन्धावच्छिन्ना प्रकारता तच्छालिज्ञानत्वं प्रमात्वं वक्तव्यं तेन कपाले संयोगेन घटवत्ताभ्रमे नातिव्याप्तिः ॥

अप्रमालक्षणमाह—तदभाववतीति । रजतत्वाभाववत्यां शुक्तौ रजतत्वप्रकारकज्ञानत्वम् अप्रमात्वम् तदभाववन्निष्ठविषयतानिरूपकत्वे सति तन्निष्ठविषयतानिरूपकज्ञानत्वमित्यर्थः । 'घटपटावि'तिनानाविशेष्यताशालिसमूहालम्बनप्रमायामतिव्याप्तिवारणाय तदभाववन्निष्ठविशेष्यतानिरूपिता या तन्निष्ठा प्रकारता तन्निरूपकज्ञानत्वम् वक्तव्यम् ॥ 'वृक्षः कपिसंयोगी'तिज्ञानस्य भ्रमत्वापत्तिवारणाय प्रतियोग्यनधिकरणीभूततदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं वक्तव्यम् । 'मूले वृक्षः कपिसंयोगी'त्यत्राऽव्याप्तिवारणाय यदवच्छेदेन यत्सम्बन्धावच्छिन्नप्रतियोगिताको यदभावस्तद्वन्निष्ठविशेष्यतानिरूपिता या तदवच्छेदेन तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तन्निरूपकत्वे सति ज्ञानत्वं वक्तव्यम् । 'व्याप्यवृत्तिपदार्थभ्रमस्थले' तु—तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्तन्निष्ठविशेष्यतानिरूपिता या तत्सम्बन्धावच्छिन्ना तन्निष्ठा प्रकारता तन्निरूपकज्ञानत्वं भ्रमत्वम्, लक्षणभेदस्याऽदोषत्वात् । स्वसमानाधिकरणाऽभावीययत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नाऽवच्छेदकतावान् यो धर्मस्तत्सम्बन्धावच्छिन्नतन्निष्ठावच्छेदकताकतत्सम्बन्धावच्छिन्नप्रतियोगितानिरूपितयत्सम्बन्धावच्छिन्नाऽवच्छेदकताशून्यो यो धर्मः तत्सम्बन्धावच्छिन्नतन्निष्ठव्याप्यतानिरूपितस्वरूपसम्बन्धावच्छिन्नव्यापकताश्रयीभूततत्सम्बन्धावच्छिन्ना या या प्रकारता तदन्यतन्निष्ठप्रकारताशालिज्ञानत्वं भ्रमत्वमिति निष्कर्षः ॥ तेन उभयधर्माभावमादाय रजतप्रमायां नातिव्याप्तिः, 'गुणकर्मान्यत्वविशिष्टसत्तावान् गुण, इति भ्रमे नाऽव्याप्तिः, न वा रजतमितिज्ञाने स्वरूपत एव समवायस्य संसर्गतांगीकारे रंगविशेष्यकरजतत्वप्रकारकभ्रमेऽप्यव्याप्तिरिति ॥ ॥ २७४॥

**अप्रमाहेतवो दोषाः, प्रमाया हेतवो गुणाः ॥२७५॥**
**पित्तदूरत्वमण्डूकवसाऽञ्जनमनोऽस्थिति— ।**
**दृष्टिबन्धेन्द्रजालाऽन्धतमोविद्युत्सधर्मकाः ॥२७६॥**

अप्रमाहेतव इति साक्षात्परम्परया वाऽप्रमोत्पादका दोषा उच्यन्ते, प्रमायास्तथोत्पादकास्तु गुणा उच्यन्ते । दोषाणां कारणत्वम् अन्वयव्यतिरेकाभ्यां सिद्धम् । गुणानां कारणत्वं तु अन्वयव्यतिरेकसहकृतप्रत्यक्षात् अनुमानाच्च सिद्धम् । प्रयोगस्तु—प्रमा ज्ञानसाधारणहेतुभिन्नकारणजन्या,—जन्यज्ञानत्वात्, अप्रमावदिति । ननु दोषाणां प्रतिबन्धकत्वात्, तदभावानामपि कारणत्वमस्त्विति चेन्न । गौरवात् 'पीतः शंख' इतिज्ञानस्थले पीतदोषसत्त्वेन शंखत्वप्रमानुत्पत्तिप्रसंगाच्च ॥ दोषानाह—पित्तेति । 'पीतः शंख' इतिभ्रमे नेत्रस्थपित्तं दोषः स्वाश्रयसंयुक्तत्वेन शंखस्थः कारणम् । 'स्थालीसमश्चन्द्र' इत्यत्र चन्द्रे दूरत्वं दोषः, रज्जौ सर्पभ्रमे मण्डूकवसाञ्जनं नेत्रस्थो

घटत्वप्रकारकज्ञानजन्या, घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् । यद्वा-'घटः,-घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः,-घटत्वप्रकारकज्ञाततावत्त्वात्,-यन्नैवं तन्नैवं यथा पटः, तथा च-तदप्रामाण्यग्रहाऽजनकस्वाश्रयानुमितिजनकज्ञाततालिंगक-परामर्शात्मकसामग्रीजन्यग्रहत्वव्यापकनिरूपकत्वं स्वतोग्राह्यत्वम् ॥

मुरारिमिश्रमते—'अयं घट' इतिव्यवसायोत्तरं 'घटत्वेन घटमहं जानामीति' अनुव्यवसायात्मकं लौकिकमानसं ज्ञानमुत्पद्यते, तेन व्यवसायगतप्रामाण्यं गृह्यते, तथा च तदप्रामाण्याऽग्राहक-स्वाश्रयग्राहकमनःसंयोगादिसामग्रीजन्यानुव्यवसायात्मकग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वम् ॥

अथ-उत्तरमीमांसका रामानुजादयो वेदान्तिनः-प्रमात्वं स्वतोग्राह्यम्-ज्ञानविषयकज्ञानेन पौरुषेयबोधेन फलेन गृह्यते ॥

शांकरा नित्यविज्ञानात्मकचिदात्मनैव प्रामाण्यं गृह्यते, अप्रामाण्यं तु परत इति । प्रामाण्यग्राहकसामग्र्यतिरिक्तग्राह्यत्वं परतस्त्वम्, व्यवसायाऽनुव्यवसायज्ञाततालिंगकानुमितिनित्यचिदादिभिन्नेन यथायथं दोषानुमानाविद्यादिकारणान्तरेणाऽप्रमात्वनिर्णय इति । तथा च—सर्वज्ञानयाथार्थ्यवादिमते दोषाऽभावसहकृतज्ञानसामान्यसामग्रीप्रयोज्यत्वम् उत्पत्तिस्वतस्त्वम्, दोषाऽभावसहकृतयावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं ज्ञप्तिस्वतस्त्वम् । अप्रमायास्तु तादृशसामग्र्यतिरिक्तप्रयोज्यत्वम् उत्पत्तिपरतस्त्वम्, तादृशसामग्र्यतिरिक्तग्राह्यत्वं ज्ञप्तिपरतस्त्वमिति ॥

अथ सौगता इति । बौद्धानां सर्वक्षणिकत्वात् अप्रमात्वं ज्ञानं चैकक्षणिकम्, तत्र स्वगतम् अप्रमात्वं स्वेन ज्ञानेनात्मना गृह्यते, स्वविषयस्य ज्ञानेनैव वेद्यत्वात् स्ववृत्तिधर्मस्य स्वेनैव वेद्यत्वम्, यदंशे स्वस्मिन् अलीकत्वम् अविषयकत्वम् अन्यविषयकत्वम् अनारूढविषयकत्वं वा तदंशप्रयुक्ताऽप्रमात्वं ज्ञानेनैव स्वोदरान्तः क्षुधा स्वेनेव वेद्यते, वेदनं वेद्यं वेदित्री चैकक्षणिकमिति । तत्र विसंवादित्वं स्वात्मबोध्यमेव । तथा च स्वाऽभिन्नैककालीनवित्तिवेद्यत्वमेवाऽप्रमाया ज्ञप्तिस्वतस्त्वम् । उत्पत्तिस्वतस्त्वं तु तादृशवित्तिसहजन्यत्वम् । अथ प्रमायाः परतोग्राह्यत्वम्—सफलप्रवृत्तिसहकृतोत्तरकालीनज्ञानेन आत्मना तादृशक्षणान्तरेण वा निश्चेयत्वम् । ज्ञानस्यैतादृशः स्वभावो यत् पूर्णविषयकत्वे सजातीयधारालाभात् तत्र स्वगताऽनैर्मल्यपरिशोधनं स्वेन, नैर्मल्यं तु क्षणान्तरेण आत्माऽन्तरेणेति प्रमात्वस्य परतोग्राह्यत्वम् ॥

तन्नेति । ज्ञानानां विचित्रविषयकत्वात् विभिन्नसामर्थ्यवत्त्वात् स्वतन्त्रत्वात् पराऽपेक्षितत्वात् न्यूनातिरिक्तशरीरकत्वात् क्षणिकलयकत्वात् धारावाहिकत्वाच्च यथायोग्यं यथापेक्षां प्रमात्वमप्रमात्वं च क्वचित्स्वेन क्वचिदपरेण वा गृह्यते इति कल्प्यते ॥ २७८-२८० ॥

**सर्वज्ञानयथार्थत्वात् भेदाऽग्रहप्रवर्तनात् ।**
**शुक्तौ रजतमित्यत्राऽख्यातिं प्राभाकरा विदुः॥२८१॥**

भ्रमस्थले मीमांसकमतमाह-सर्वेति । मीमांसका गुरवोऽख्यातिं वदन्ति । असंसर्गाऽग्रहकालीनशुक्तिरजतादिज्ञानद्वयादेव शुक्त्यादौ रजताद्यर्थिप्रवृत्त्यादिकार्यनिर्वाहिण भ्रमस्य विशिष्टज्ञानरूपत्वाऽभावेनाख्यातिरेव भ्रमः, शुक्त्यादेः रजतत्वादिना ख्यात्यभावोऽख्यातिः, 'इदं रजतमि' त्यत्र इदमंश एव प्रत्यक्षप्रतीतिविषयो न तु रजतांशः, तस्य चक्षुराद्यसन्निकर्षात्, 'रजतमि'ति तु स्मरणमेवेति रजतस्य प्रत्यक्षप्रतीत्यभावः, प्राभाकरमते ज्ञानमात्रस्य याथार्थ्यात्, सर्वस्य ज्ञानस्य अर्थाऽव्यभिचारित्वेन तन्नियमात्, तथा 'पीतः शंख' इतिज्ञानं यथार्थमेव, तत्र नयनवर्तिपित्तद्रव्यसंयुक्ता नायनरश्मयः शंखादिभिः सह दूरं गत्वा संयुज्यन्ते, तद्गतपीतिमा स्वेनैव गृह्यते, तथा दोषवच्छंखमात्रं च गृह्यते, परस्परसाकांक्षयोस्तयोर्विद्यमानोऽप्यसम्बन्धो न बुद्धयते, ततश्च तत्राऽसम्बन्धाऽग्रहात् विशिष्टधीव्यवहारः, प्रवृत्तिरपि तत एव । एवं जपाकुसुमप्रभाभिभूतत्वात् जपाकुसुमसमीपवर्तिस्फटिकमणिरपि 'रक्त' इति गृह्यते, तत्र रक्तज्ञानं सत्यमेव, एवं मरुमरीचिकायां जलज्ञानमपि यथार्थम्, तत्र पंचीकरणोक्तरीत्या तेजःपृथिवीजलानां सत्त्वात् तेजःपराभवात्मकेन्द्रियदोषेण तेजःपृथिव्योरग्रहणम्, यद्वा तत्र जलांशज्ञानं स्मरणमेव, एवं द्विचन्द्र-

ज्ञानेऽङ्गुल्यादिकृतनेत्रनिरोधनेत्ररोगादिभिर्नायनरश्मिगतिर्द्विविधा भवति, एका स्वाभाविकी ऋजुः, द्वितीया तु वक्रीभूता, तत्र स्वाभाविकी स्वदेशविशिष्टचन्द्रं गृह्णातीति, द्वितीया तु चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। न च चन्द्रसमीपदेशे चन्द्राऽभावात्कथं तद्ग्रहणमिति वाच्यम्। चन्द्राधिकरणदेशतत्समीपदेशयोरन्तरालाऽग्रहणेन तथाप्रत्ययात्, सामग्रीद्वयभेदेन 'चन्द्रौ द्वा' विति प्रतीतिः, सामग्रीद्वयस्य पारमार्थिकत्वात् चन्द्रद्वयज्ञानमपि पारमार्थिकं तत्र प्रविभक्तनायनरश्मिभ्याम् एकस्मिँश्चन्द्रे द्वित्वं जन्यते, द्वित्वस्य चन्द्रस्य चाऽसम्बन्धग्रहात् 'द्वौ चन्द्रौ" इति व्यवहारः। एवम् उल्मुकचक्रादौ चक्राकारज्ञानमपि यथार्थमेव, तत्राऽतिशैघ्र्यात् तदनन्तरालाऽग्रहणात् वर्तुलाकारप्रतीतिर्भवति, प्रतीतिविषयस्तु तत्तद्देशसंयुक्ततद्वस्तुविशेषः। एवं दर्पणे निजमुखज्ञानं यथार्थमेव, तत्र दर्पणस्य स्वच्छद्रव्यत्वात् सविशेषं दर्पणं गृहीत्वैव दर्पणतलप्रतिहतगतयो नायनरश्मयः परावृत्त्य निजाननं गृह्णन्ति, तत्राऽऽदर्शस्य मुखस्य च भेदाऽग्रहात् दर्पणे मुखव्यवहारः। एवं दिग्भ्रमोऽपि यथार्थ एव, वस्तुतो दिश एकत्वात् सर्वत्रौपाधिकदिशां विद्यमानत्वात्, अन्यान्यवस्त्वपेक्षितदिशोः भेदाऽग्रहात् पूर्वादिदिशः पश्चिमादिदिक्त्वेन ज्ञानं व्यवहारश्च। एवं स्वप्नः स्मृतिरेव यथार्था, नह्यननुभूते तदुदयः, दोषाच्च तत्ताप्रमोषस्तत्र बोध्यः। एवं संशयोऽपि ज्ञानद्वयम्, स्थाणुपुरुषगोचरं प्रमुष्टतत्ताकं पुरःस्थितोर्ध्ववस्तुदर्शनोद्बोधजन्यं स्मरणद्वयमेव। एवं रज्ज्वां सर्पज्ञानमपि यथार्थं रज्जुविषयकं प्रत्यक्षं सर्पविषयकं तु स्मरणमेव। एवं सर्वेषां ज्ञानानां तद्वन्निष्ठविशेष्यताकत्वात् यथावस्थितव्यवहारानुगुणज्ञानत्वात्, तत्र सर्वत्र भ्रमत्वविपर्ययत्वादिव्यवहारस्तु विषयव्यवहारबाधाद्भवतीति ॥

ननु सर्वज्ञानानां याथार्थ्ये रजनार्थिनः पुरुषस्य भ्रमजन्या प्रवृत्तिरेव न स्यादित्यत आह—भेदाग्रहेति। विसंवादिप्रवृत्तिं प्रति दोषाऽधीनरजतभेदाऽग्रहः कारणम्, संवादिप्रवृत्तिं प्रति तु रजतत्ववद्विशेष्यकरजतत्वप्रकारकज्ञानमेव कारणम्। यद्वा—लाघवादुभयत्र धर्मधर्म्युपस्थितिद्वयविशिष्टभेदाऽग्रह एव कारणम्, ननु सत्यरजतस्थलेऽन्यमतसिद्धभ्रमकालेऽपि प्रवृत्त्यापत्तिः, निरुक्तभेदाऽग्रहसत्त्वादिति चेन्न। रजतभेदाऽग्रहादिवाक्ये रजतभेदग्रहस्य रजतभेदस्य ग्रहो यस्मात् रजताऽभेदग्रहाऽभावादिति व्युत्पत्त्या रजताऽभेदग्रहाऽभावस्तत्र प्रतिबन्धकः, तदभावः रजताऽभेदग्रहाऽभावाऽभावः रजतभेदग्रहाऽभावरूपः प्रवृत्तिजनकः, तथा च तत्र प्रतिबन्धकसत्त्वेन प्रवृत्त्यापत्तेरभावात्। न च 'पटो न रजतमि'त्युपस्थिति-इदन्त्वेन रंगगोचर-इदं रजतमित्युपस्थितिद्वय-एतत्त्रितयकाले रंगे रजतार्थिप्रवृत्तिर्न स्यात्, निरुक्तोपस्थितिविशिष्टप्रतिबन्धकीभूताऽभावसत्त्वादिति वाच्यम्। रंगविशेष्यकरजतभेदग्रहप्रतिबन्धकदोषस्य उत्तेजकत्वस्वीकारात्, तादृशस्थले रंगे रजतभेदसत्त्वेऽपि चक्षुःसन्निकर्षसत्त्वेऽपि च रजतभेदप्रत्यक्षानुत्पत्त्या तत्र तत्प्रतिबन्धकदोषसत्त्वस्याऽऽवश्यकत्वेन तादृशोत्तेजकाऽभावविशिष्टप्रतिबन्धकाऽसत्त्वान्न तत्र तादृशप्रवृत्त्यनुपपत्तिरिति ॥ २८१ ॥

**विज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति न—।**
**वेत्यख्यात्यन्यथाख्यात्योर्विप्रतिपत्तिदेशनाः ॥**

अख्यातिवादिनः प्राभाकरस्याऽन्यथाख्यातिवादिनैयायिकस्य मतेन विप्रतिपत्तिमाह—विज्ञानत्वमिति। ज्ञानत्वं विशेष्याऽवृत्तिप्रकारकवृत्ति न वा ? शुक्तौ रजतत्वस्य समवायेन विशेषणतया भानात् नैयायिकस्य, रजतस्याऽवर्तमानस्याऽपि वा तादात्म्येन प्रकारतया भानात् कुमारिलभट्टस्य च विधिकोटिः। सर्वज्ञानयाथार्थ्यवादिनां प्राभाकराणां रामानुजानां च निषेधकोटिः। तत्र भेदाऽग्रहजन्यायां विशेष्याऽवृत्तिप्रकारताकत्वेनोपगतायाम् इच्छायां विसंवादिप्रवृत्तिजनिकायां वर्तमाने इच्छात्वे विधिप्रसिद्धिः। निषेधस्तु प्रमात्वे प्रसिद्धः। विशेषतस्तु—'रजतेच्छाजन्यशुक्तिगोचरप्रवृत्तिकारणं रजतविज्ञानं शुक्तिगोचरकं न वे'ति विप्रतिपत्तिः। तादृशप्रवृत्तिकारणं विज्ञानं प्राभाकरमते स्मृतिः, नैयायिकमते तु विशिष्टानुभवः, उभयमतसाधारण्येन तादृशरजतविज्ञानत्वेन पक्षता। एवं 'रजतेच्छाजन्यशुक्तिगोचरप्रवृत्तिजनकं पुरोवर्तिविशेष्यकं ज्ञानं रजतत्वप्रकारकं न वे'ति विप्रतिपत्तिः। अत्र नैयायिकप्राभाकरैः पुरोवर्ति-

विषयकानुभूतेरेवोपगमात् मतद्वयसाधारण्येन पक्षत्वम्। उभयविप्रतिपत्तौ नैयायिकस्य पुरोवर्ति रजतगोचरैकज्ञानाऽभ्युपगमात् विधिकोटिः। प्राभाकरस्य पृथक्तया स्वीकृतयोः प्रवर्तकयोः पुरोवर्तिगोचरस्य न रजतत्वप्रकारकत्वं रजतविषयकस्य न शुक्तिगोचरकत्वमिति निषेधकोटिः॥

प्राभाकराः—'ज्ञानत्वं,-विशेष्याऽवृत्तिप्रकारकवृत्तित्वात्यन्ताभावाधिकरणं, ज्ञानत्वावच्छिन्ननिरूपितवृत्तित्वाश्रयत्वात्,-प्रमात्ववदिति। इदं रजतमित्यत्र इदमिति चाक्षुषं ज्ञानम् रजतमिति स्मरणं धारात्वात् विवेकाऽग्रहः। 'यत्रेदं रजतं, न शुक्तिरि'तिज्ञानं तत्र प्रवृत्तिः, अभावाऽप्रतियोगित्वेन उपस्थितस्येष्टस्य रजतस्य प्रवर्तकत्वात्, अनिष्टायाः शुक्तेरभावप्रतियोगित्वेन उपस्थितेरनिवर्तकत्वात्। 'यत्र चेयं शुक्तिः, न रजतमि'तिज्ञानं, तत्र निवृत्तिः, अभावाऽप्रतियोगित्वेन उपस्थितताया अनिष्टायाः शुक्तेर्निवर्तकत्वात्, इष्टरजतस्याऽभावप्रतियोगित्वेनोपस्थितेरप्रवर्तकत्वाच्च। किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्धर्मावच्छिन्नप्रकारताकज्ञानत्वं विशिष्टज्ञानत्वमिति गुरुमतम्। अत एव न विशिष्टज्ञानाऽप्रसिद्धिनिबन्धनप्रमाऽलीकत्वप्रयुक्तः शब्दानुमानादीनामप्रामाण्यप्रसंगः॥ सर्वेषां ज्ञानानां प्रमात्वेऽपि यथार्थत्वाऽयथार्थत्वव्यवहारस्तु सफलप्रवृत्तिजनकत्वाऽजनकत्वाभ्यां बोध्यः॥ 'विमतं,-ज्ञानं,-व्यधिकरणप्रकारत्वाऽनधिकरणम्,-ज्ञानत्वात्,-घटज्ञानवदि'ति। सेयं तत्तांऽशस्य ख्यातेरग्रहणात् अख्यातिः प्रमुष्टतत्ताकस्मृतिरिति॥ यद्वा—विवेकस्य ख्यातेर्ग्रहणस्याऽभावात् अख्यातिरिति॥ २८२॥

**अन्यथाख्यातिमन्तारः प्राहुर्नैयायिका भ्रमम्।**
**हट्टस्थसत्यरजतज्ञानं शुक्तौ हि दोषतः॥२८३॥**

नैयायिकसामान्यमतमाह—अन्यथेति। विशिष्टज्ञानं विना विशिष्टव्यवहारस्याऽसिद्धेरेव विशिष्टभ्रमस्य सर्वानुभवसिद्धस्य प्रामाणिकत्वात् 'पुरोवर्तिनं रजततया प्रत्येमी' ति 'इदं रजतमितिज्ञानं मम मिथ्यैव प्रादुरभूदिति' प्रत्यक्षसिद्धो भ्रमः। 'रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकं ज्ञानं, शुक्तिविषयकं, शुक्तिविषयकप्रवृत्तिहेतुज्ञानत्वात्, शुक्त्यर्थिसमवेतशुक्तिज्ञानवदि'ति। 'रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकम् इदंविशेष्यकं ज्ञानं, रजतविषयकं, रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात्,-रजते इदंज्ञानवत्'। 'ज्ञानत्वं,-विशेष्याऽवृत्तिप्रकारकवृत्ति,-प्रवृत्तिहेतुप्रत्यक्षविशेषगुणवृत्तिधर्मत्वात्, इच्छात्ववत्,'-व्यधिकरणप्रकारत्वस्य सर्वसम्मतत्वात्। संस्कारसचिवम् इन्द्रियं व्यधिकरणप्रकारकं ज्ञानं जनयत्येव। व्यधिकरणप्रकाराऽवच्छिन्नविषयतानिरूपकत्वं भ्रमत्वम्, स्वाऽधिकरणाऽवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वमिति यावत्। स्वं-विशेष्यता। शुक्त्यवृत्तिरजतत्वप्रकारतानिरूपितेदंविशेष्यतानिरूपकत्वात् इदं रजतमिति भ्रमः। यथा सुरभि चन्दनमित्यत्र चाक्षुषे सौरभांऽशे चक्षुषोऽयोग्यत्वात् संयुक्तसमवायेन तु रसादिग्रहणापत्तेः ज्ञानेनैव सौरभांऽशो गृह्यते, तथा च सौरभांऽशेऽलौकिकं चन्दनांऽशे तु लौकिकमिति, तद्वत् 'इदं रजतमि'त्यत्र रजतेन सहाऽन्यसंसर्गाऽभावेन ज्ञानमेव संसर्गः, तथा च स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानजन्यसंस्कारविषयत्वसंसर्गेण चक्षुरेव रजतेन सम्बद्धम्, तत्र सत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य लघुधर्मावच्छिन्नकारणतायाः अन्वयव्यतिरेकाभ्यां प्रत्यक्षसिद्धत्वात् सर्वत्र सत्याऽसत्यरजतस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्यैव कारणताया उचितत्वात्, सफलाऽसफलप्रवृत्तिभेदेन भिन्नकार्यकारणभावे गौरवात्, तथा च 'विसंवादिप्रवृत्तिः, पुरोवृत्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या,-पुरोवृत्तिनिष्ठविशेष्यतासम्बन्धेन इष्टतावच्छेदकप्रकारकज्ञानजन्या वा, प्रवृत्तित्वात्, संवादिप्रवृत्तिवदि'त्यनुमानेन विसंवादिप्रवृत्तिहेतुतयाऽन्यथाख्यातिसिद्धिः, तत्र ज्ञानलक्षणया रजतत्वस्य भानात्। रङ्गविशेष्यकरजतत्वप्रकारकज्ञानस्य निर्वाहाय ज्ञानलक्षणायाः प्रत्यासत्तित्वकल्पनायां गौरवे सत्यपि न प्रवृत्तित्वेन विशिष्टज्ञानत्वेन एककार्यकारणभावग्रहानुपपत्तिप्रसक्तिरिति॥ रङ्गरजतयोः 'इमे रजते रङ्गे वेति' एकांऽशे भ्रमस्तत्रापि लौकिकसन्निकर्षस्थले तत्तदंशे विफलप्रवृत्तिहेतुतयाऽन्यथाख्यातेरावश्यकत्वात्। रंगरजतयोः 'इमे रजतरंगे' इतिस्थले प्रवृत्तौ इष्टतावच्छेदकप्रकारकज्ञान-

स्य, निवृत्तौ अनिष्टतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेन रङ्गे इष्टतावच्छेदकरजतत्वप्रकारकभ्रमस्य रजते च अनिष्टतावच्छेदकरंगत्वप्रकारकभ्रमस्य सिद्धिः। 'इदं रजततयाऽवेदिषमि' तिमानसप्रत्यक्षादावप्यन्यथाख्यातिसिद्धिश्चेति ।। हट्टस्थेति। शुक्तौ रजतमित्यत्र शुक्तौ पुरोवर्तिन्यपि हट्टस्थसत्यरजतस्य चाकचिक्यादिदोषवशात् भानं तादात्म्येन भवतीति तादात्म्येन अतस्मिन् तत्ताज्ञानं भ्रान्तिरिति बोध्यम् ।। २८३ ।।

**भेदाऽभेदौ तु निम्बार्काः शुक्तिरजतयोरतः।**
**सत्यरजततादात्म्याऽन्यथाख्यातिं तथा जगुः ॥**

निम्बार्कमतमाह—भेदाऽभेदाविति। जीवेश्वरजडानां परस्परं भेदाऽभेदौ, अतः शुक्तिरजतयोरपि भेदाऽभेदौ, हट्टस्थरजतस्यैव शुक्तितादात्म्येन भानम्, न तु भेदाऽभेदाभ्यां तद्भानम्, तत्र प्रमाया अभेदप्रतीतेर्भेदाऽविषयकतया भ्रान्तित्वम्, उभयवति एकमात्राऽवगाहनात्, तथा च अन्यथाख्यातिरेवेयम् नव्यनैयायिकानुगामिनी, तादात्म्यस्य सत्त्वेन असतः संसर्गस्याऽभानात्, प्राचीननैयायिकतो भेद इति ।। २८४ ।।

**नव्यनैयायिकाः शुक्तौ रजतत्वस्य दर्शनम्।**
**ज्ञानाऽऽरूढतया प्राहुर्भ्रमं धर्मस्य गोचरम् ॥२८५**

चिन्तामणिकारस्य मतमाह—नव्येति। शुक्तौ रजतमित्यत्र शुक्तिविशेष्यतानिरूपकरजतत्वप्रकारतानिरूपकं च विशिष्टज्ञानं स्वनिष्ठप्रकारतानिरूपकज्ञानीयविशेष्यतासम्बन्धेन शुक्तौ रजतत्वं समासादयति, तत्र रजतत्वाऽभाववत्यां शुक्तौ रजतत्वप्रकारकत्वं भ्रमत्वम्, धर्मस्य रजतत्वस्य शुक्ताववर्तमानस्य परम्परादिदोषात् शुक्तौ भानं भ्रमोऽन्यथाख्यातिरित्यर्थः ।। गमनकुसुममित्यत्र गगनजन्यनिष्ठविशेष्यतानिरूपके ज्ञाने कुसुमत्वाऽभावप्रकारकतया कुसुमत्वप्रकारकत्वं भ्रान्तिः, शुक्तिनिरूपिताधेयतानिरूपकज्ञाने तादृशाधेयतायां रजतत्वनिष्ठत्वं भ्रान्तिरिति यावत् ।। तथा चेयं धर्मप्रकारताद्यंशविषयिणी भ्रान्तिर्न तु धर्म्यंशविषयिणीति ।। २८५ ।।

**नवीनरजतोत्पत्तेर्मिश्राः सत्ख्यातिमाजगुः।**
**रामानुजास्तु रजतं स्वल्पाऽवयवजं हि सत् ॥**
**स्वामिनारायणीयास्तु स्फीतं रजतमास्थिताः।**
**ब्रह्मणः परिणामः सद् रजतं वाल्लभा विदुः ॥**

सत्ख्यातिवादिनां मतमाह—नवीनेति। तत्र 'भ्रमगोचरत्वं यथार्थज्ञानगोचरताव्याप्यं न वे'ति विप्रतिपत्तिः। विधिकोटिर्मिश्रमीमांसकरामानुजस्वामिनारायणवल्लभाचार्याणां पटत्वादौ प्रसिद्धा, निषेधकोटिस्तदन्यप्राभाकरब्रह्मवादिनां च शशशृंगादौ प्रसिद्धा ।।

तत्र मुरारिमिश्राः पदार्थानां द्वेधा सत्त्वम्—बाह्यतया ज्ञानारूढतया च, बाह्यस्य ज्ञानाऽरूढत्वे एव विषयत्वम्, अन्यथाऽविषयत्वम्, ज्ञानाऽनारूढस्य पदजन्यप्रतीतिविषयत्वाऽभावात् अपदार्थत्वम्, प्रतीतिगोचरस्यैव पदार्थत्वात्, पदार्थत्वं च सत्यत्वम्, अतो ज्ञानारूढाकारस्यैव सत्यत्वम्, शुक्तिर्ज्ञानारूढाकारैव सत्या, रजतमपि ज्ञानारूढाकारमेव सत्यम्, तथा च—कालान्तरीणदेशान्तरीणयोरपि व्यवसायाऽनुव्यवसायादिज्ञानारूढत्वात् सत्यत्वम्, अग्रदेशे स्वर्णमण्यादिसद्भावेऽपि यावन्न ज्ञानारूढाकारत्वं तावन्न क्रयादिव्यवहारविषयत्वम्, अत एव परीक्षकत्वं निर्णयनादिकं च सार्थकम्, तथा च—ज्ञानारूढतया नूतनाकारं बहिःसजातीयाकारं सद् रजतं शुक्त्यधिष्ठानकज्ञाने उत्पद्यते, तस्य प्रतीतेः सत्ख्यातिं वदन्ति ।। केचित्तु मिश्रा अपि रजतस्मरणात् अख्यातिवादिष्वन्तर्भवन्तीति प्राहुः ।।

तत्र रामानुजमतमाह—रामानुजास्त्विति। एतन्मते सत्ख्यातिर्नाम-ज्ञानविषयस्य सत्यत्वम्। पञ्चीकरणप्रक्रियया पञ्चभूतानां परस्परमिश्रणात् रजतस्य तेजस्त्वेन तदंशानां शुक्तिकादिपृथिव्यां विद्यमानत्वात्। तत्र रजतांशः स्वल्पः पार्थिवांशो बहुलः, अतो ज्ञानविषयरजतांशः सन्, ज्ञानमपि च सत्, ननु तर्हि भ्रमः कथमिति चेन्न। विषयव्यवहारबाधाद् भ्रमत्वम्। विद्यमानरजतांऽशस्य तत्र स्वल्पत्वात् व्यवहाराऽयोग्यत्वम्, तथा सत्यपि रजतज्ञानं भवति स भ्रमः, ततः शुक्त्यंशभूयस्त्वज्ञानात् भ्रमनिवृत्तिः ।। तदेते श्लोकाः—

'सोमाऽभावे तु पूतीकग्रहणं श्रुतिचोदितम् ।
सोमाऽवयवसद्भावादिति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं श्रुतिचोदितम्,
तदेव सदृशं तस्य यत्तद् द्रव्यैकदेशभाक् ॥
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः,
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥
रूप्याहिसदृशश्चाऽयं शुक्त्यादिरुपलभ्यते ।
अतस्तस्याऽत्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ।
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्त्तते ॥
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ।
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ।
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥
नाऽतो मिथ्यार्थसत्यार्थविषयत्वनिबन्धना ।
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥ इति ।

स्वप्नेऽपि च जन्तूनामदृष्टानुरूपं परमात्मनैव तत्तद्व्यक्तिमात्रवेद्यास्तत्तत्समयमात्रव्याप्या अर्थाः सृज्यन्ते, इति स्वाप्नज्ञानमपि सदर्थविषयकत्वात् सदेवेति । रजतावयवानां सर्पावयवानां च पार्थिवत्वात् , अन्तःकरणद्रव्यकत्वाच्च तादृशाऽवयवैः कालभेदेनाऽनेकपदार्थाऽऽरम्भात् रज्ज्वामपि अन्तःकरणेऽपि च तिमिरनिद्रादिदोषसहकृतं सर्पादिभानं यथार्थमिति सत्ख्यातिमाहुः ॥

स्वामिनारायणमतमाह—स्फीतमिति । दृष्टिविषयमात्रं शिथिलावयवपुञ्जजन्यं न तु करग्राह्यमपीत्येतादृशं रजतं तत्र सदोषनेत्ररश्मियोगात् शुक्तिनेत्ररश्म्युभयजन्यं प्रदीपस्य परितस्तेजःपरिमण्डलमिव स्फीतम् अच्छम् उत्पद्यते, तस्य विशेषदर्शनसहकृतशुक्तिविरोधिनी, अतः सगुणनेत्ररश्मियोगात् तन्नाशे बाधव्यवहारात् शुक्तेर्ज्ञानम् । तस्मात् स्फीतं रजतं सदिति सत्समुच्चयख्यातिं स्वामिनारायणीया वदन्ति ।

वल्लभाचार्यमतमाह—ब्रह्मण इति । सर्वं ब्रह्मपरिणामः, ब्रह्म सच्चिदानन्दात्मकम्, जीवत्वं चाऽऽवृताऽऽनन्दकत्वम्, जडत्वं चाऽऽवृतचिदानन्दकत्वम् । अलीकस्तु न पदार्थः । परिणामो द्वेधा—कारणविकारहेतुको दुग्धस्य दधीव, कारणाविकारहेतुकः कल्पतर्वादौ संकल्पयितृभावनानुकूलः । शुक्तौ रजतमित्यत्र शुक्तिर्ब्रह्मपरिणामः कारणविकारहेतुकः, रजतपरिणामः कारणाऽविकारहेतुकः । तथा च ब्रह्मपरिणामाद् रजतं सदेवेति सत्ख्यातिं वाल्लभा वदन्ति ॥ २८६-२८७ ॥

**अनिर्वचनिकां ख्यातिं मेनिरे तत्र शांकराः ।**
**तामप्युदयनाचार्यो मन्यते वचनाऽऽहतेः ॥२८८॥**

शांकरमतेनाऽनिर्वचनीयख्यातिमाह—अनिर्वचनिकामिति । अनिर्वचनीयख्यातौ ख्यातिनिर्वचनानि दुष्टतानियामकसंसर्गावच्छिन्नदोषत्वावच्छिन्नाऽभाववन्ति न वा ? यद्वा—ख्यातिनिर्वचनम् दोषत्वावच्छिन्नाऽभाववन्न वा । अत्र निषेधकोटिरद्वैतवेदान्तिनः, तत्प्रसिद्धिस्तूभयवादिसममते कस्मिँश्चिद् दुष्टे लक्षणे । विधिकोटिस्तु वेदान्तिभिन्नानां ब्रह्मणि प्रसिद्धा ॥ यद्वा-'विमतं ज्ञानं,-मुख्यविशेष्यातिरिक्तांशे निर्वचनविषयतावद्विषयकं न वा ? निषेधो वेदान्तिनः, विधिस्तु तद्भिन्नानाम् । रज्जुसर्पः सन्निति ज्ञाने विधिप्रसिद्धिः ॥ यद्वा-देवदत्ताज्ञानविषयतावच्छेदकत्वं, देवदत्तविसंवादिप्रवृत्तिजनकज्ञाननिष्ठविषयतानिरूपितमुख्यविशेष्यत्वाऽनिरूपितप्रकारताश्रयवृत्त्यत्यन्ताभावप्रतियोगि न वा ? प्रतीतिमात्रजीवनं शुक्तौ भासमानं रजतादि न ज्ञानात्पूर्वं क्वापि वर्तते किन्तु ज्ञातसत्ताकमेवेतिवादिनां वेदान्तिनां विधिकोटिः । अन्येषां तु निषेधकोटिः । इति तन्मतेन विप्रतिपत्तयः ॥

तत्तद्दोषसंस्कारादिसहकृताऽविद्याया भ्रमोपादानत्वात् अधिष्ठानचाक्षुषादौ भ्रमस्थ तादात्म्याध्यासादेव भ्रमे चाक्षुषत्वाध्यासात् चाक्षुषादिविषये च भ्रमविषयस्याऽध्यासात् रजतं पश्यामीति प्रतीतिर्जायते । प्रातिभासिकं हि साक्षिभास्यम्, हट्टस्थरजतात् प्रातिभासिकं ब्रह्मज्ञानात् पूर्वमेव 'इयं शुक्ति' रितिज्ञानेन बाध्यते इति वैलक्षण्यम्, स्वविषयसमर्थज्ञानम् 'इदं रजतमहं जानामी'तिस्मरणबलात् तदनिर्वचनीयम् अज्ञानपरिणाम्युपादानकम्, अज्ञानेन इदमवच्छिन्नमुत्पाद्यते, अधिष्ठानेऽध्यस्तत्वात्, तत्र फलबलात् रजतस्याऽत्यन्ताभावज्ञान-

सामग्र्याः प्रबलत्वात् रजतात्यन्ताभाव एव ज्ञानविषयः। 'रजतमहं पश्यामि मिथ्यैव मम रजतम् अभादि'त्यादिबीजबलात् सिद्धोत्पत्त्यादिकं रजतम् अत्यन्ताभावप्रतियोगितयैव विषयीक्रियते ॥ 'विमतं प्रमाणज्ञानं,-स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम्, - अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नदीपप्रभावत्'। 'देवदत्तप्रमा, स्वप्रागभावातिरिक्ताऽनादिनिवर्तिका,-प्रमात्वात्,-यज्ञदत्तप्रमावत्'। 'विमता प्रमा,-स्वाऽभावाऽतिरिक्ताऽनादिप्रध्वंसिनी,-कार्यत्वात्,-घटवत्'-इत्यादिमहाऽविद्यानुमानानि ॥ उदयनमतं २९० कारिकया कथयिष्यते ॥ २८८ ॥

**न सत्, बाधात्, प्रवृत्तेश्च नाऽसत्, नोभयमाहतेः।**
**किन्त्वनिर्वाच्यभावात्मा भ्रमः शांकरसम्मतः ।२८९।**

**न सदिति**। 'सा माया, न सत्या, निवृत्तिप्रतियोगित्वात्'। 'नापि शशशृङ्गायमाणा, प्रमाणसिद्धत्वात्'। 'न सदसती, विरोधात्'। 'अतोऽनिर्वचनीया'। 'सदसत्त्वे, किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिनी, धर्मत्वात् -रूपरसवदि'ति तत्र मानम्। तत्र स्वप्रकारकधीविशेष्ये बाध्यत्वम्, सद्भिन्नत्वे सति असद्भिन्नत्वे सति सदसदुभयभिन्नत्वं वाऽनिर्वाच्यत्वम्। सा शुद्धब्रह्मविषयत्वेन माया, स्वकार्यविच्छिन्न ब्रह्मविषयत्वेन त्वविद्या। सत्याऽनृततादात्म्यभावोऽध्यासः, ब्रह्मैव सत्यमधिष्ठानम् अनुस्यूतत्वात्, अन्यस्यामृतस्याऽध्यासमुपपादयन्ती माया स्वाध्यासे नाऽन्यदपेक्षते। तदुपादेयप्रपञ्चस्योपादानमाविद्यकं मायिकम् अनिर्वाच्यं चोच्यते। अज्ञानं चाऽऽवरणं चैतन्यात्मकप्रकाशवरकत्वेन सफलम्, शरीरपरिमितं मनोवृत्तिरूपं घटाद्यवच्छिन्नचैतन्यगताऽऽवरणं निवर्तयति, ततश्चैतन्येनैव घटादिः स्फुरति, एवं सर्वत्र घटाद्यवच्छिन्नचैतन्यविषयकत्वेन प्रमाणानां प्रामाण्यम्, न तु घटादिविषयकत्वेन। 'इदं रजतमि'त्यादौ इदमर्थस्य शुक्तेर्व्यावहारिकत्वेन ज्ञानात्प्राग् वर्तमानत्वाच्च इदमवच्छिन्नचैतन्यनिष्ठमावरणं निवारयति। मनोवृत्तिः। रजतस्य तु पूर्वमवर्तमानस्य प्रत्ययसमकालस्य चैतन्याऽवच्छेदकाऽभावान्न रजताऽवच्छिन्नचैतन्यनिष्ठमज्ञानमस्ति, अतः प्रातीतिकं ज्ञानसत्ताकम् अनावृत्तमेव रजतमित्युच्यते ॥

रजतावच्छिन्नचैतन्यनिष्ठाऽज्ञानाऽसंभवेन तन्निवर्तकतया मनोवृत्तेरपि न साफल्यम्। किन्तु रजतं च इदमवच्छिन्नचैतन्यनिष्ठाऽज्ञानपरिणतिः, इदमवच्छिन्नचितश्च विवर्त्तः, तदाविद्यकं क्लृप्तोत्पत्तिकं रजतं साक्षिणैवाऽभ्युपगम्यते। अनावृत्तविषयप्रकाशकत्वं साक्षित्वम्, आविद्यकं सर्वम् अनावृत्तम्, मनोधर्मसुखादिप्रकाशकोऽपि साक्षी, स च मनोधर्मज्ञानभासकत्वेनाऽनुव्यवसायस्थानापन्नः। यद्वा अविद्योपहितचैतन्यं अविद्यावृत्त्युपहितचैतन्यं वा साक्षी, स च व्यावहारिकपदार्थान् मनोवृत्तिज्ञानद्वारा गोचरयति, प्रातीतिकाँस्तु अविद्यावृत्तिद्वारा, अज्ञातांस्तु अज्ञानद्वारेति। तथा च ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिभास्यम्, तस्मादविद्यावृत्तिः रजतविषयिणी, तत्राऽविद्यावृत्तिः रजतं चेति द्वयं युगपदविद्यापरिणामः शुक्तौ संसृष्टः, अध्यस्यमानताऽवच्छेदकरजतत्वादिप्रकारकतटस्थरजताऽनुभवो रागादिदोषश्च तत्राऽपेक्ष्यः। तत्राऽर्थस्य इदमवच्छिन्नचित्यध्यासोऽर्थाऽध्यासः, अर्थाऽवच्छिन्नचिदाकारमनोवृत्त्यवच्छिन्नचिति रजताकारवृत्तेस्तादात्म्याध्यासो ज्ञानाध्यासः, तत्राऽविद्यावृत्तिमनोवृत्त्योस्तादात्म्याध्यासः संसर्गाध्यासः। यद्वा—ज्ञानस्य ब्रह्मणोऽध्यस्तप्रतियोगिकतयाऽध्यास एव ज्ञानाध्यासः, अर्थस्याऽध्यस्तस्य ब्रह्मभिन्नस्य स्वरूपेणाऽध्यासोऽर्थाध्यासः स्वरूपाध्यासः ॥ धर्माणामध्यासो धर्माध्यासः, धर्मिणश्चाऽध्यासो धर्म्यध्यासः। एवं क्वचित् शुक्तिरजतादिभ्रमोऽविद्यावृत्त्या सहैवोत्पन्नत्वात् ज्ञानविशिष्टाध्यासः, अज्ञानविशिष्टतया जातत्वात् वियदादेरध्यासोऽज्ञानविशिष्टाऽध्यासः, सामान्यतोऽनुमित्यादिरूपज्ञानस्य विशेषतश्चाऽज्ञानस्य विशेषविशिष्टतयोत्पन्नत्वात् तत्र ज्ञानाऽज्ञानविशिष्टाऽध्यासः ॥

रजतभ्रमे इदमवच्छेदेन रजतं रजतविषयता रजततादात्म्यं रजततादात्म्यविषयता चेति चतुष्टयमुत्पन्नम् 'इदं रजतं जानामी' त्यनुभवसाक्षिकम्। 'रजतमिदं जानामी' त्यनुभवस्थले तु रजतावच्छेदेन रजतविषयत्वावच्छेदेन च इदंतादात्म्यम्, इदन्ता-

दात्म्यप्रतियोगित्वोपहितेदमादि, इदंतादात्म्यविषयत्वम्, इदन्तादात्म्यप्रतियोगित्वोपहितेदमादिविषयत्वमिति चतुष्टयमुत्पद्यते। एवं शंखपीतिमोत्कर्षाऽपकर्षयोः पित्तोत्कर्षाऽपकर्षाऽनुविधायित्वेन शंखपीतिम्नः पित्तजन्यत्वम्, अन्यत्राऽपि तथा भ्रम इति सिद्धाऽनिर्वचनीयतोत्पत्तिः। 'रजतत्वं,–पारमार्थिकत्वाऽभिमतरजतव्यक्तिभिन्नव्यक्तिवृत्ति,–सफलरजतव्यक्तिवृत्तिजातित्वात्, सत्तावदित्यनुमानेनाऽपि प्रातीतिकरजतसिद्धिरिति ॥ २८९ ॥

**ज्ञानानां सदसत्त्वादिख्यापने ऽविकल्पनात्।**
**मिथ्यात्वं मन्यते तत्रोदयनो निर्वचो यतः॥२९०॥**

उदयनाचार्यमतमाह—**ज्ञानानामिति**। असत्त्वं सत्त्वेनाऽवगाहनात्, सदन्तरं वा सदन्तरेणाऽवगाहनात्, सदसत्त्वेन वा अवगाहनात्, ज्ञानानां मिथ्यात्वम्, तत्र असदेव यदि सत्त्वेनाऽवगाढं तदा पुरोवर्तिनि प्रवृत्तिर्न स्यात्, असता सहाऽभेदात्। सदन्तरं वा सदन्तराऽवगाढं तदा त्विष्टापत्तिः, तथा च घटस्य पटात्मनाऽसत्त्वमिव सदन्तरस्य सदन्तरात्मना निर्वक्तुमशक्यत्वात् असत्त्वं मिथ्यात्वम् अनिर्वाच्यत्वमिति, तत्र संसर्गस्यैव चापि असत्त्वे पर्यवसानात् संसृष्टयोरपि मिथ्यात्वमिति। सदसत्त्वेनाऽवगाहनन्तु न प्रवृत्त्यौपयिकं, विरुद्धस्यैकत्राऽव्यवस्थानात्, व्यवस्थाने वा संशयाधायकत्वात् बाधोत्पादकत्वाच्च। तथा च सर्वथैवाऽनिर्वाच्यत्वस्यैव ख्यापनात् 'शुक्तौ रजतमि' तिज्ञानम् अनिर्वाच्यख्यातिमापन्नम्। सेयं भङ्ग्यन्तरेण न यथा ख्यातिरयथाख्यातिरिति केचित्॥ अत्र नैयायिकास्तु तत्संसर्गाऽभाववति तत्संसर्गप्रकारकं भ्रमम् अन्यथाख्यातिमेव प्राहुः ॥ २९० ॥

**योगाचारास्तु विज्ञानं तत्तदाकारतां गतम्।**
**ज्ञानमात्मैव रजतं ह्यात्मख्यातिमतो विदुः॥२९१॥**

साकारख्यात्यपराऽभिधानाऽऽत्मख्यातिवादियोगाचारमतमाह—**योगाचारास्त्विति**। रजतस्य ज्ञानाकारत्वात् साकारख्यातिः, ज्ञानस्य चाऽऽन्तरवस्तुत्वात् आत्मत्वाच्च आत्मख्यातिः। 'शुक्त्यादिगतत्वेन भासमानं रजतादिकं ज्ञाननिष्ठं न वे' ति विप्रतिपत्तिः। सर्वं विज्ञानं तत्तदाकारापन्नं ख्यायते इति मन्वानस्य योगाचारस्य विधिपक्षः, इतरेषां निषेधपक्षः। ज्ञाननिष्ठत्वं ज्ञानत्वादौ प्रसिद्धम्, ज्ञाननिष्ठत्वाऽभावश्च बाह्यत्वे धर्मे। बाह्यत्वस्यापि ज्ञानाकारत्वेऽपि उभयमतेन बाह्यत्वं न ज्ञानधर्मः, आन्तरत्वस्यैव ज्ञानधर्मत्वात्। भानमपि बाह्यत्वं न ज्ञानाकार इति बौद्धाभिप्रायात्॥ कदाचिदपि संशयाद्यविषयत्वाद् विज्ञानं स्वप्रकाशमेव, यः पटादिर्न संशयाद्यविषयः स नाऽस्वप्रकाशः। जिज्ञास्यत्वे सति संशयाद्यविषयत्वं स्वप्रकाशत्वमन्तरेणाऽनुपपद्यमानं तत् कल्पयति, पूर्णसुषुप्त्यनुरोधेनाऽनुव्यवसायधाराया अपि विश्रान्तिध्रौव्यात् अन्तिमज्ञानमिव सर्वमेव स्वप्रकाशम्। अतः शुक्तौ रजतज्ञानमपि स्वात्मानमेव तादात्म्येन प्रकाशयति, नत्वन्यम् अतदात्मकम्, अन्यथा पटादिनाऽपि कथं स्वप्रकाशो नेति॥

ननु ज्ञानस्वरूपोत्पादकत्वमेव विषयत्वं विषयसम्बन्धः, तेन विषयप्रकाशकत्वं परप्रकाशकत्वमपि स्यादिति चेन्न। विषयाऽसन्निधाने तदभावात्। अन्ततो यावतां विज्ञानाकारतया विज्ञानात्मकत्वात् विज्ञानव्यतिरिक्तवस्तुनोऽभावात् रजतादिकम् अभेदात् विज्ञानाकारमेव स्वं प्रकाशते, 'इदं रजतमि' त्यत्र प्रत्ययद्वयवत् 'अहं रजतं जानामी' त्यत्र प्रत्ययत्रयम्, तद्विषयकप्रत्ययस्तु चतुर्थं इति सर्वमेव स्वांऽशे स्वप्रकाशम्, अस्वप्रकाशत्वे भानत्वाऽनुपचारात्।' अस्थायित्वाच्च ज्ञानक्रियानिमित्तो विषयविषयिसंसर्गोऽपि न। यदि च स्थायि उत्पद्यमानं शक्तम् अशक्तं वा विनाशि अविनाशि वा उत्पद्येत,। नाऽऽद्यः पक्षः, शक्तस्य कालकवलयनविरहात् युगपदेव सर्वकारित्वं स्यात्, सहकारिसापेक्षत्वे तु शक्तत्वहानिः, सहकारिणा शक्त्याधाने तु तत एव कार्यसंभवे मुख्यस्य वैयर्थ्यात्, अशक्तत्वापत्त्या च विरुद्धधर्माध्यासात् सशक्तस्य नूतनस्यैवोत्पत्तेः क्षणिकत्वसिद्धिः। अशक्तस्वभावं तु अपेक्ष्याऽपि न कार्यकारि भवेत्। विनाशिस्वभावं चेत्!, तत एव क्षणिकत्वसिद्धिः। अन्यथा तु कदापि न नश्येत् शाश्वतं स्यात्। तथा च कुसुलान्तर्बीजं यद्यंकुरशक्तं स्यात्तर्हि अंकुरमुत्पादयेत्, न चोत्पादयति, तस्मान्न शक्तमि'ति तर्कसिद्धिस्स्याम्, एवं 'क्षेत्रगतं बीजं यद्यशक्तं

स्यात्तर्हि नांकुरं जनयेत्, जनयति च, अतो नाऽशक्तमि'ति तर्कसिद्धिभ्यां कुसूलगतक्षेत्रगतबीजयोर्भेदः, तद्वत् क्षणान्तरे भिन्नमेवेति क्षणिकत्वसिद्धिः। तथा च सति ज्ञानक्रियानिमित्तः संसर्गोऽपि न शक्यनिरूपणः, तस्मात् स्वाभाविकस्तादात्म्य एव, अन्यथा रजतभानमेव न स्यात्, ज्ञानाऽभेदमन्तरेणाऽन्यसृतेर्विरहात्। अतो रजतादेर्भानाऽन्यथाऽनुपपत्तिरेव रजतस्य संविदोऽभेदमाक्षिपतीति॥

तदनुमानमेव—'सहोपलम्भनियमादभेदो नीलतद्धियोः' 'स्वप्नधीसाम्यतो बुद्धेर्बुद्ध्यार्थस्य सहेक्षणात् तद्भेदेनाऽनिरूप्यत्वात्, ज्ञानाकारोऽर्थ इष्यताम्'। 'जाग्रत्ज्ञानानि निरालम्बनानि, स्वांशभिन्नालम्बनरहितानि, ज्ञानत्वात्, स्वाप्नज्ञानवत्'। 'अर्थत्वेनाऽभिमतः, ज्ञानाऽभिन्नः, नियमेन ज्ञानेन सहोपलभ्यमानत्वात्, यथैकेन चन्द्रेण अपरश्चन्द्रः'। 'विमतं, विज्ञानाऽभिन्नम्, ज्ञानभेदेनाऽनिरूप्यत्वात्, ज्ञानवत्'। 'पटो न तन्त्वतिरिक्तः, तन्तुधर्मत्वात्, तन्तुतादात्म्याच्च', 'तन्तुर्न कार्पासातिरिक्तं कार्पासधर्मत्वात्, कार्पासतादात्म्याच्च, तस्मात् पटस्तन्तुः कार्पास इति तु सर्वं ज्ञानमेवेति न पदार्थभेदः। किन्त्वान्तरं ज्ञानं बाह्यत्वेन विषयीकुर्वत् भ्रमरूपतामासाद्यते। उक्तं च 'बुद्ध्या विविच्यमानानां स्वभावो नाऽवधार्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः'॥ निःस्वभावत्वं च ज्ञानातिरिक्तस्थयावशून्यत्वम्, विज्ञानभेदस्तु वासनाभेदादेव। 'रजतं,-ज्ञानात्मकम्, ज्ञानमन्तरेणाऽपरोक्षत्वात्, ज्ञानवत्'॥

स्मरणं हि ज्ञानाकारं, ज्ञानं विषयाकारं, विषयाश्च ज्ञानारूढाः, ज्ञानमेव स्वप्नज्ञानारूढाकारवत्। इदं रजतमित्यत्र ज्ञानं द्रव्यं रजतत्वं च प्रतीयमानमभिलप्यते तज्ज्ञानमेव, नेदं रजतमिति च पुरोवर्तिनि रजतत्वप्रतिषेधो ज्ञानस्यैव, अन्यस्य वस्तुनस्तत्राऽभावात्, रजते इदन्तामात्रनिषेधेनैवोपपत्तौ बाधज्ञानस्य रजतनिषेधे गौरवात् रजतमान्तरमेवाऽवतिष्ठते इति विज्ञानमेव वासनावैचित्र्यात् संसार इति आत्मख्यातिरेव॥ २९१॥

**वैभाषिकास्तु रजतं चात्मधर्मं समूचिरे।**
**रजतं ज्ञानधर्मं च प्राहुः सौत्रान्तिकास्तथा ॥२९२॥**

**वैभाषिका इति** बाह्यार्थप्रत्यक्षवादिनां वैभाषिकाणां बाह्यप्रत्यक्षे शुक्तिशकले आत्मधर्मः रजतं ख्यायते इत्यात्मख्यातिं वदन्ति। बाह्ये सद्वस्तुनि ज्ञानात्मकात्मधर्मस्य रजतस्याऽऽरोपात्॥ सौत्रान्तिकमतमाह—**रजतं ज्ञानधर्ममिति**। सौत्रान्तिकनये तावदस्ति बाह्यं वस्तु सत्, तत्र शुक्तौ रजतं ज्ञानधर्म एव भासते, ज्ञानं चात्मेत्यात्मख्यातिः। सौत्रान्तिकस्य बाह्याऽर्थानुमेयत्ववादिनोऽन्यथाख्यातिवादित्वं तु अन्यत्राऽन्यारोपसाम्यादभिधीयते॥ उभयमते अध्यस्तं रजतं तु ज्ञानाऽभिन्नत्वात् प्रत्यक्षमेवेति॥ २९२॥

**शून्यत्वात्सर्ववस्तूनां रजतं शून्यमेव हि।**
**तस्य ख्यातिरसत्ख्यातिर्बोध्या माध्यमिकस्य वै॥**

असत्ख्यातिर्द्विविधा,-सर्वांशेऽसत्त्वमिति माध्यमिकाः, माध्वाश्च, संसर्गांशेऽसत्त्वमपरांऽशे तु सत्त्वमिति कुमारिलविज्ञानभिक्षुवाचस्पतिजैनाः। तत्र सर्वांशेऽसत्ख्यातौ विप्रतिपत्तिः-'इदं रजतमिति विज्ञानम् असन्मात्रगोचरं न वेति। विधिकोटिः कूर्मरोमादिज्ञाने, निषेधकोटिस्तु पटादिज्ञाने प्रसिद्धा॥ यद्वा—'असत्वं विज्ञानविषयत्वाऽन्यूनाऽनतिरिक्तवृत्ति न वेति। ज्ञानविषयत्वेऽभिधेयत्वादौ च विधिकोटेः, पटत्वादौ तु निषेधकोटेः प्रसिद्धिः॥

'शुक्तिभिन्नदेशो,-रजतत्वात्यन्ताभाववान्, देशत्वात्, शुक्तिवत्' इति असद्भाने प्रमाणम्। पुरोवर्तिनि वस्तुनि रजते वा 'इदं रजतमि'ति ज्ञानं भ्रान्तिरिति वक्तुं शक्यम्, पुरोवर्तिरजतयोः सत्त्वात्, संसर्गांशे तु भ्रान्तिः, तस्याऽसत्त्वात्। तत्र यदि शुक्तिः सती, तदा रजतसंसर्गौ असन्तौ। यदि रजतं सत्, तदा शुक्तिसंसर्गौ असन्तौ, स्वप्ने तु त्रयमपि असत्, भ्रान्तिसमये सदपि असदिति संसारस्य शून्यतायां पर्यवसानम्। इदं रजतसंसर्गाणां समूहालम्बने एकस्याऽसत्त्वे उत्तरबाधस्य पूर्वस्य भ्रान्तित्वाऽन्यथाऽनुपपत्त्याऽसद्विषयकत्वं सर्वस्यैव स्वीकार्यम्, अन्यथा सद्विषयकत्वाऽसद्विषयकत्वयोर्विरोधात् वस्तुतत्त्वव्याहतिः स्यात्॥

एवम् 'असदेव रजतम् अभादि'त्यनुभवोऽपि सर्वाऽसत्ख्यातौ प्रमाणम्। एवं विश्वमिदं व्यवहारे

न शशशृंगायते, परमार्थतस्त्वलीकम्, आविद्यकसत्त्वं त्वस्त्येव, विज्ञानमप्यस्त्येव, किन्तु 'फेनपिण्डोपमं रूपं, वेदना बुद्बुदोपमा। मरीचिसदृशी संज्ञा, संस्काराः कदलीनिभाः'॥ 'मायोपमं च विज्ञान-मुक्तमादित्यबन्धुना'॥ इति रूपविज्ञानवेदनासंज्ञा-संस्काराख्यस्कन्धानां शून्यतायामेव परमार्थतया पर्यवसानम्। 'तत्राऽर्थशून्यं विज्ञानं योगाचाराः समाश्रिताः। तस्याऽप्यभावमिच्छन्ति ये माध्यमि-कवादिनः'॥ इति॥ माध्यमिकाः परमार्थतोऽभाव-मेव विज्ञानमिच्छन्ति,॥ योगाचारास्तु सांवृतम् (आविद्यकं) सत्त्वं विज्ञानस्येच्छन्ति। एतस्य विज्ञानं शून्यं, शांकरस्य तु विज्ञानम् अनिर्वाच्य-मिति विशेषः। विषयस्याऽनिर्वाच्यत्वात् तद्विषयक-ज्ञानस्यापि विषयसमानयोगक्षेमत्वात् अनिर्वाच्यत्वं शांकराणाम्। तथा च विषयाऽजन्यत्वाऽऽख्याऽतिश-याऽऽसादकसमनन्तरप्रत्ययादिना परमार्थतोऽसदेव विज्ञानम् असन्तमप्यर्थं सन्तमिव प्रकाशयति, असतः कथं सामर्थ्याश्रयत्वं सामर्थ्याधायकत्वं वेति कल्पना तु संवृत्याख्याऽविद्ययैवोत्सारणीयेति। पदार्थानां तदेव सांवृत्तिकं सत्त्वम्। उक्तं हि 'न सन्नासन्न सदसन्न चाऽनुभयतत्त्वकम्। विमतं तर्कपीड्यत्वात् मरीचिषु यथोदकम्'। 'जगदादिकं, न सत्, बाध्यत्वात्', नाऽसत्, कालसंसर्गात्। न सदसत्, विरोधात्। त्रिविधाऽसंभवात् सदसद्भिन्नमपि न। अतः सत्त्वं सांवृत्तिकम्, असत्त्वं च तर्कपराहतत्वेन बोध्यम्। उक्तं च—'चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः। द्वे सत्त्वे समुपाश्रित्य बुद्धानां धर्मदेशना' इति। अतः असदेव जगत् विज्ञानं च शून्यतायां पर्यवसि-तम्॥ शांकरैः सत्त्वेनाऽसत्त्वेन सदसत्त्वेन चाऽनिर्व-चनीयत्वं स्वीकृतम्, योगाचारेण तु निर्वाच्यसद्विज्ञान-रूपेण निर्वाच्यत्वमेवाऽङ्गीकृतम्, माध्यमिकेन तु न तादृशविज्ञानात्मत्वेनाऽपि निर्वाच्यत्वं स्वीकृतमिति मतभेदाः॥ २९३॥

**सदधिष्ठानसंसक्त्याऽलीकरजतबोधनम्।**
**असत्ख्यातिं भ्रमं माध्वाः सदाधारे वदन्ति हि २९४**

माध्वमतमाह—**सदधिष्ठानेति**। अधिष्ठानाति-रिक्तं सर्वमलीकमेव, अधिष्ठानं तु नित्यं चिरस्थायि वा पदार्थान्तरम्, तस्य शुक्त्यादेः सत उपरागेणाऽ-लीकस्य रजतादेर्भानम्, साऽसत्ख्यातिरेवेति। अली-कत्वं च—भावत्वेनाऽभावत्वेन वा निरूपणाऽनर्हत्वम्। असत्यप्यर्थे ज्ञानशब्दयोः प्रयोगेऽपि न भावतयाऽभा-वतया वा पदार्थत्वम्, पदजन्यप्रतीतिसत्त्वेऽपि विशे-ष्यताख्यविषयतानिरूपकत्वाऽभावात् विषयताश्रय-त्वाऽलाभात् अलीकपदेन परिचायकीक्रियते, नैता-वताऽलीकपदवाच्यत्वेन परिच्छिद्यते, इत्यसत्ख्याति-रेव अलीकख्यातिरेवेति॥ २९४॥

**कुमारिलोऽप्यसत्संसर्गख्यातिं प्राह तत्र वै।**
**इमामेवाऽन्यथाख्यातिं वाचस्पतिरभाषत॥२९५॥**

कुमारिलभट्टमतमाह—**कुमारिल** इति। तथा च—असत्संसर्गख्यातौ विप्रतिपत्तिः—'असत्तादात्म्य-गोचरम् 'इदं रजतमि'ति ज्ञानं,—स्वभिन्नपदार्थ-विषयकं न वेति'। अत्र—असत्संसर्गख्यातिस्वीकर्तॄणां विधिपक्षः। विज्ञानवादियोगाचारादेर्निषेधपक्षः। असत्त्वं नाम अलीकत्वम्, विज्ञानवादिमते प्रतीय-मानस्यापि इदन्त्वस्य बहिष्ठ्वस्य च ज्ञानेऽभावात् तुल्ययुक्त्या इदन्तादात्म्यस्याऽप्यभावात् ज्ञाने इदन्ता-दात्म्यमलीकम्, इत्यसत्तादात्म्यविषयकं ज्ञानं पक्षः, अलीकत्वं च—केवलान्वय्यत्यन्ताभावप्रतियोगित्वे सति उत्पत्त्यादिरहितत्वे सति गुणानाश्रयत्वे सति अभावत्वानाश्रयत्वम्। पक्षीभूतज्ञानभिन्नपदार्थविषय-कत्वम् अन्यस्मिन् ज्ञाने प्रसिद्धम्, निषेधस्तु—अविष-यके बहिष्ठ्वादौ प्रसिद्ध इति॥

'पुरःस्थं रजतत्वेन जानामी'त्यनुभूतिरेव पुरःस्थ-रजतयोरभेदप्रतीतौ प्रमाणम्। न चाऽभेदोऽसत्, अभेदश्च तादात्म्यम् असदेव भासते। केवलस्याऽसतो भानाऽभावेऽपि सदुपरक्तस्य भानं तु सन्महिम्ना जायते, सर्वत्र ज्ञाने यथाकथञ्चित्संसृष्टपदार्थानामुप-जीव्यत्वात् केवलस्याऽसतोऽभानात्। सापेक्षा वास-नैव भासिकेति चेत्, यस्यापेक्षा स बाह्यस्तत्राऽसतो भानात् वाचस्पतिसम्मताऽन्यथाख्यातिरेव सा॥ कुमारिलोऽपि तत्र 'तस्माद् यदन्यथा सन्तमन्यथा प्रतिपाद्यते। तन्निरालम्बनं ज्ञानमसदालम्बनं हि तत्' । इत्यन्यथाख्यातिं हि वदति। शुक्तित्वेन सतो पदार्थस्य रजतात्मना ग्रहणात् विज्ञानं निरालम्बनं,

न त्वात्मविषयकत्वेन निरालम्बनमिति ।। २९५ ।।

**असत्ख्यातिं तथा जैनाः, सांख्या विज्ञानभिक्षवः।**
**सदसत्ख्यातिमेनां हि प्राहुः संसर्गशून्यताम्॥२९६॥**

जैनमतं चाह—**असत्ख्यातिं तथेति**। जैना अपि असत्संसर्गान्यथाख्यातिं वदन्ति । सर्वं नित्याऽनित्यात्मकम्। स्याद्वादे—'भागे सिंहो नरो भागे योऽर्थो भागद्वयात्मकः । तमभागविभागेन नरसिंहं प्रचक्षते' इत्यनन्तधर्मकं वस्तु क्रमाऽक्रमाभ्यां व्याप्तं, धर्मपरिणामाद्यापन्नं च, स्वस्य रूपेण अस्त्येव, अन्यरूपेण तु नास्त्येव, पूर्वगुणादिविशेषणावच्छिन्नम् अस्त्येव, उत्तरगुणादिविशेषणादिना नास्त्येव, इति तत्र सर्वत्र वैशिष्टयम् असत्। बोधो ज्ञानं स्वार्थाऽवबोधक्षममेव प्रकाशते, यदि ज्ञानं स्वसंविदितं नेष्यते तदा तेन आत्मज्ञानाय ज्ञानान्तरमपेक्षणीयम्, तेनाऽप्यपरमित्यनवस्था, ततो ज्ञानं स्वाववोधक्षमम्, तच्च नात्मनोऽत्यन्तभिन्नम्, अत आत्माववोधक्षमम्, सर्वं च सात्मकम् आत्मात्मकम्, तथाहि—'विद्रुमशिलादिरूपा पृथिवी, सात्मिका,—छेदे समानधातूत्थानात्, दर्भांकुरवत्, । 'भौममम्भोऽपि, सात्मकम्, क्षतभूसजातीयस्य स्वभावस्य सम्भवात् शालूरवत्'। 'अन्तरिक्षमपि, सात्मकम्, अभ्रादिविकारे स्वतःसम्भूय पातात्, मत्स्यादिवत्'। 'तेजोऽपि, सात्मकम्,—आहारोपादानेन बुद्ध्यादिविकारोपलम्भात्,पुरुषांगवत्'। वायुरपिसात्मकः,-अपरप्रेरितत्वे तिर्यग्गतिमत्त्वात्, गोवत्'। 'वनस्पतिरपि,-सात्मकः,-छेदादिभिर्म्लानतादिदर्शनात्, पुरुषांगवत्'। इति। तथा च ज्ञानात्मनः शुक्तावपि सत्त्वात् रजतेऽपि च सत्त्वात् तत्र तादात्म्यस्य चाऽसत्त्वात्, तत्र तादात्म्यम् असत्संसर्गः, तस्य असत्त्वेऽपि अस्तित्वेन ख्यापनात् असत्संसर्गान्यथाख्यातिरिति। रजतं तु शुक्तिधर्मपरिणामो व्यवहाराऽनर्हो ज्ञानगम्यो नित्याऽनित्यात्मकः सात्मको ज्ञानव्यपदेशार्हो देशान्तरीयरजतज्ञानव्यपदेशसजातीयः कथञ्चित् सन् इति ।।

**सांख्या इति**। सदसत्ख्यातिविप्रतिपत्तिर्यथा—सद्भेदाऽसद्भेदौ,— किञ्चिन्निष्ठव्यासज्यवृत्तिधर्माऽनवच्छिन्नात्यन्ताभावप्रतियोगिनौ न वेति। विधिकोटिर्वेदान्त्येकदेशिनाम् अनिर्वाच्यवादिनां नागेशादीनां सांख्यमतानुयायिविज्ञानभिक्षूणां च, निषेधकोटिस्तु वेदान्त्यादीनाम् ।।

'सदसत्ख्यातिर्बाधाऽबाधादि'तिसांख्यसूत्रात् विज्ञानभिक्षुणोक्ता सदसत्ख्यातिरपि असत्संसर्गख्यातिरेव। उक्तं च तेन—'स्वरूपेणाऽबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाध' इति। सत्संसर्गस्याऽबाधात् बाधितः संसर्गोऽसन्नेव। 'रजतं वणिग्वीथीस्थरूपेण सत्, शुक्तावध्यस्तरूपेण तु असत्'इत्यप्युक्तम्। अभावस्याऽधिकरणात्मकत्वेन रजताऽसत्त्वस्य शुक्त्यात्मकतयाऽसदेव रजतं शुक्त्यात्मना भाति। उक्तसांख्यसूत्रेऽपि 'यावद्विशेषदर्शनम् अबाधः, तदुत्तरं च बाधः, अधिष्ठानगतसत्त्वारोपेण तु यावद्विशेषदर्शनं बहिःसत्त्वेन प्रतीतिर्बुद्धिसद्रजतस्येति। विलक्षणोऽयं सदसत्ख्यातिनयः कुमारिलमताऽपेक्षया। कुमारिलस्तु 'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्। स्वरूपपररूपाभ्यां सर्वं सदसदात्मकम्' इति स्वीकारेणाऽधिकरणेऽभावस्य तादात्म्यसम्बन्धो भेदाऽभेदरूप इति प्राह ।।

प्राभाकरस्तु-अत्यन्ताऽभेदवादीति ततो विशेषः। कुसुमाञ्जलौ 'भट्टानामधिकरणे विशेषणत्वं नाऽभावस्य किन्तु तादात्म्यमि'त्युक्तम्। 'इहाऽनैकान्तिकं वस्त्वित्यैवं ज्ञानं सुनिश्चितमि'ति भट्टैर्वस्त्वनेकान्तवादः स्वीकृतः।। 'भावाऽभावात्मकत्वाद् वस्तुनो निर्विषयो ह्यभाव' इति जैनैः कथनात् परद्रव्यक्षेत्रकालस्वभावैः पदार्थस्याऽसत्त्वम् अंगीकृतम्। इति तत्र भट्टजैनयोः साम्यात् द्वयोरपि असत्संसर्गख्यातिः। हट्टस्थरजतस्य शुक्तिसंसृष्टतयाऽवृत्तेः संसर्गाऽसत्त्वे निर्णीते, तत्र 'हट्टस्थरजतमत्र भासते'इतिवाचोभङ्ग्या संसर्गाऽभावात् असत्संसर्गख्यातिः। 'शुक्तावसद्रजतं शुक्त्यात्मना सदेव भासते'इतिवाचोभंग्या तु सदसत्ख्यातिरिति ।। २९६ ।।

**प्रमायाः करणं बोध्यं प्रमाणं, तत् प्रमास्मृतेः।**
**यथार्थोऽनुभवोऽ,तः स्युः प्रमाणानि दशाऽत्र वै२९७**

यथार्थस्मृतेः प्रमात्वेन तत्करणतया यथार्थानुभवस्यापि प्रमाणत्वमिति प्रदर्शनार्थं प्रमाणलक्षणमाह—**प्रमाया इति**। प्रमाणत्वावच्छिन्नकार्यतानिरू-

पिताऽसाधारणकारणतावत्त्वं प्रमाणत्वम्, असाधारणत्वं व्यापारवत्त्वम्। यथार्थस्मृतिं प्रति संस्कारद्वारा यथार्थानुभवस्याऽसाधारणकारणत्वात् यथार्थानुभवः प्रमाणम्, यथार्थानुभवस्य करणत्वाच्च प्रत्यक्षादीनि प्रमाणानि, तथा च स्मृतेरसाधारणकारणं प्रमाणम् अनुभवः, अनुभवकरणानि प्रमाणानि—प्रत्यक्षानुमानोपमानशब्दाऽर्थापत्त्यनुपलब्धिसंभवैतिह्यचेष्टेङ्गितात्मकानि, इति दश प्रमाणानि बोध्यानि। उपधेयसंकरेऽप्युपाधेरसंकरान्न न्यूनानि, प्रामाणिकैस्तथात्वेन परिगणितत्वाच्च नाऽधिकानि तानि चाग्रे निरूपणीयानीति ॥ २९७ ॥

इति श्रीमद्दार्शनिकपञ्चाननन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमाणचिन्तामण्याख्ये द्वितीये खण्डेऽनुभव-प्रमाणस्मृतिनिरूपणपरिच्छेदः ॥ ५ ॥

## तत्त्वप्रभावल्याः ज्ञानविभागः

**भवेच्चानुभवामीतिप्रतीतिविषयत्वतः।**
**सिद्धजातिविशिष्टोऽनुभवो, द्वेधा स सम्मतः॥२९८॥**

अनुभवं निरूपयति—**भवेच्चेत्यादिना**। अनुभवामीतिप्रतीतिसिद्धाऽनुभवत्वजातिमत्त्वम् अनुभवस्य लक्षणम्। एवम्—अनुभवभिन्नभिन्नत्वम्, अनुभवपदवाच्यतावच्छेदकजातिमत्त्वं च लक्षणं बोध्यम्॥ ननु प्रत्यक्षानुमित्यादिविशेषविभागेनैव निर्वाहे नाऽनुभवो विभाग इति चेन्न। स्मृतिजनकतावच्छेदकानुगताऽनुभवत्वावच्छिन्नतया तद्विभागोचितत्वात्। स चानुभवो द्विविधः॥ २९८॥

**निर्विकल्पक आद्यः स्यात्, ततस्तु सविकल्पकः।**
**प्रकारत्वादिशून्यं स्याद् विज्ञानं निर्विकल्पकम्॥२९९॥**
**बालमूकादिधीकल्पं 'किञ्चिदि'त्यवबोधनम्।**

अनुभवस्य द्वैविध्यमाह—**निर्विकल्प इति**। निर्विकल्पकसविकल्पकभेदेनाऽनुभवो द्विविधः। तत्र प्रकारत्वाऽनिरूपकज्ञानत्वं, संसर्गत्वाऽनिरूपकज्ञानत्वं, विशेष्यत्वाऽनिरूपकज्ञानत्वं, वा निर्विकल्पकज्ञानत्वम्। स्मृतेस्तु सविकल्पकत्वादेव तत्र नातिव्याप्तिशंकाऽपि। निर्विकल्पके स्वरूपमात्रविषयताऽवगाहित्वमङ्गीक्रियतेऽतो न त्रिविधविषयताशून्यत्वेऽपि ज्ञानत्वाऽनुपपत्तिः, तथा च विलक्षणस्वरूपमात्रविषयत्वावगाहिज्ञानत्वमपि लक्षणं बोध्यम्॥ तत्र दृष्टान्तमाह—**बालमूकादीति**। स्तनन्धयस्य यादृशाऽऽजन्मबधिरमूकस्य च नामजात्यादिशून्यं स्वरूपमात्राऽवगाहि 'किञ्चित् किञ्चिदि'त्याकारकं ज्ञानं यथा भवति तथा प्रथमम् 'किञ्चिदि'त्यालोचनं शुद्धवस्तुविषयकं ज्ञानं सर्वस्यैव निर्विकल्पकं जायते। चक्षुःसंयोगाद्यनन्तरं 'घट' इति ज्ञाने घटत्वघटौ स्वातन्त्र्येण भासेते, तद् वैशिष्ट्यानवगाहि भवति, तच्च विशेषणादिस्वतन्त्रज्ञानात्मकं निर्विकल्पकं विशेषणज्ञानविधया विशिष्टज्ञाने सविकल्पके कारणं भवति॥

अथ आद्यं ज्ञानमपि विशिष्टमेव, तच्च गुणजात्याद्यन्यतमविशिष्टप्रथमव्यक्तिग्रहणम्, यथा रूपजात्यादिविशिष्टघटव्यक्तेरनुवृत्तिरहितं प्रथमं ज्ञानम् 'अयं घट' इति। निर्विकल्पके धर्मवद्धर्मिवच्च तत्सम्बन्धस्याऽप्यैन्द्रियकत्वाऽविशेषेण ग्रहणसंभवात्, योग्यस्य सन्निकृष्टगृह्यमाणसम्बन्धिनः सम्बन्धस्याऽग्रहणाऽनुपपत्तेः। समानसामग्रीवेद्यजात्यादीनां च पृथग्ग्रहणाऽसंभवाच्च निर्विकल्पकं विशिष्टविषयमेव। सानुवृत्तिकं च गुणजात्याद्यन्यतमविशिष्टद्वितीयादिव्यक्तिग्रहणं सविकल्पकम्, यथा 'अयमपि घटः' 'अयमपि गौ'रित्यादि द्वितीयादिज्ञानमिति रामानुजाः 'अयमपि नारायण' इत्युपासनापि विशिष्टविषया निष्प्रत्यूहेति॥

नैयायिकाऽभिप्रायस्तु—विशेषणज्ञानस्य विशिष्टज्ञाने कारणत्वात् स्वरूपतो जात्यादिज्ञानं प्राग् अपेक्षितं, स्वरूपतः पदार्थबोधं विना संसर्गबोधानुपपत्तेः, स्वरूपत इदं द्रव्यं वा गुणो वेति बोधोत्तरमेव योग्यस्य संयोगस्य समवायस्य वा बोधौचित्यात्। गुणजात्याद्यन्यतमविशिष्टप्रथमव्यक्तिग्रहणत्वस्य गुणजातिनिर्विकल्पके, गुणत्वजातित्वनिर्विकल्पके, तद्धर्मे चेत्यविशेषादनवस्थाभिया क्वचिदविशिष्टं स्वरूपतोभानम् अन्ततः स्वीकार्यम्, तथा च लाघवात् विशेषणज्ञानमाद्यमेव तत् स्वीकर्तव्यम्। एकतत्त्वमात्रविषयकस्वरूपसत्ज्ञानाऽनंगीकारे तत्त्वज्ञानमेव तत्त-

द्व्यक्तिविषयकं नोत्पद्येतेति ज्ञानसांकर्यप्रयुक्तमुक्तिवार्ता विलुप्येतेति । समानसामग्रीवेद्यजात्यादीनां सन्निकर्षभेदाद् पृथग्ग्रहणमेव सध्रीचीनम्, तथा चाऽननुवृत्तत्वाऽनुवृत्तत्वे न निर्विकल्पकसविकल्पकत्वप्रयोजके । अपि तु अनन्वितत्वाऽन्वितत्वे एवेति ॥

विशिष्टवाद्यभिप्रायस्तु सविषयजीवनवत्पदार्थस्यांशं विहाय जीवनाऽलाभात् यथावद्विशिष्टवस्तुविषयकजीवनवज्ज्ञानस्य स्वरूपसन्मात्रत्वस्याऽऽत्मलाभाऽसम्पादकत्वेनाऽविशिष्टवित्तेरसंभवात् ॥२९९॥

**प्रकारत्वाद्यवच्छिन्नं ज्ञानं तु सविकल्पकम् ॥३००॥**
**ब्राह्मणोऽयं च शुक्लोऽयं कन्दुकोऽयमिति प्रधीः ।**

सविकल्पकज्ञानमाह—**प्रकारत्वाद्यवच्छिन्नमिति**। विशेषणताख्यविषयतानिरूपकज्ञानत्वं, संसर्गताख्यविषयतानिरूपकज्ञानत्वं, विशेष्यताख्यविषयतानिरूपकज्ञानत्वं, वा सविकल्पकत्वम् । प्रथमं 'घटत्वघटावि'तिज्ञानानन्तरम् 'अयं घट'इति घटत्वविशिष्टं व्यवसायात्मकं सविकल्पकं जायते, ततो 'घटमहं जानामी'ति विशिष्टवैशिष्ट्यावगाहि अनुव्यवसायात्मकं जायते । 'नाऽगृहीतविशेषणा बुद्धिर्विशिष्टे उपजायते'इतिनियमात् । अनुमानं च 'अयं घट' इति बुद्धिः, विशेषणज्ञानजन्या, विशिष्टबुद्धित्वात्,-दण्डीति विशिष्टबुद्धिवत्' इति । तादृशं निर्विकल्पकं घट इव प्रत्यक्षज्ञानविषयं न भवति, तत्र घटत्वादिप्रकारताकत्वाऽभावात्, घटत्वाद्यप्रकारकं च घटादिविशिष्टं ज्ञानं न भवति, । 'घटमहं जानामी'तिसविकल्पके तु आत्मनि ज्ञानं, ज्ञाने घटः, घटे घटत्वं च प्रकारः, विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यज्ञाने कारणत्वम् । तथा च सविकल्पकज्ञानमेव सुखादिवत् प्रत्यक्षविषयमिति ॥ तत्रोदाहरणमाह—**ब्राह्मणोऽयमिति** । ब्राह्मणत्वप्रकारकसमवायसंसर्गकब्राह्मणविशेष्यकज्ञानम् , कन्दुकत्वप्रकारकसमवायसंसर्गककन्दुकविशेष्यकज्ञानं च सविकल्पकम्। शुक्लत्ववत्वप्रकारकं शुक्लत्वविशेष्यकं, यद्वा शुक्लगुणप्रकारकं गुणिविशेष्यकं च ज्ञानं सविकल्पकम् ॥ ३०० ॥

**अप्रमा च प्रमा चेति द्वेधैतत्परिकीर्तितम् ॥३०१॥**

सविकल्पकानुभवं विभजते—अप्रमा चेति । अयथार्थसविकल्पकानुभवः, यथार्थसविकल्पकानुभवश्चेति द्विविधः ॥ ३०१ ॥

**अप्रमा तु चतुर्धोक्ता-संशयश्च विपर्ययः ।**
**स्वाप्नस्तर्कश्च, तत्र स्यात् संशयस्त्वेकधर्मिणि ॥**
**भावाऽभावप्रकारा धीः 'स्थाणुर्वा' 'पुरुषस्तु वा' ।**

**अप्रमेति** । संशयविपर्ययस्वाप्नतर्कभेदाद् अयथार्थानुभवश्चतुर्विधः । तत्र संशयमाह—**संशयस्त्विति** । एकस्मिन्धर्मिणि भावस्याऽभावस्य च यज्ज्ञानं स संशयः । एकधर्मिकविरुद्धभावाऽभावप्रकारकं ज्ञानमित्यर्थः । भूतलह्रदौ घटतदभाववन्तौइति ज्ञानेऽतिव्याप्तिवारणाय—**एकधर्मिकेति**। भूतलं घटवत् पृथिवी घटाभाववतीतिज्ञानेऽतिव्याप्तिवारणाय-एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेति तदर्थः । भूतलं घटतदभाववदितिज्ञानवारणाय विरुद्धभावाऽभावेति। भूतलं भूतलतदभावाभावः-इतिज्ञानवारणाय प्रकारकमिति। इच्छादिवारणाय ज्ञानमिति ॥ ननु भूतलं संयोगेन घटवत् समवायेन घटाभाववच्चेतिज्ञानेऽतिव्याप्तिरिति चेन्न । तत्सम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्यतानिरूपिततत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्विरुद्धतदभावनिष्ठप्रकारताकज्ञानत्वमिति विवक्षणात् । वस्तुतस्तु-स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानत्वं संशयत्वम् । स्वं-विषयिता ॥ अन्ये तु तन्निष्ठप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता च विशेष्यता तन्निरूपकत्वं तत्संशयत्वम् ॥ इतरे तु तन्निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या प्रतियोगित्वसम्बन्धावछिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपिता विशेष्यता तन्निरूपकत्वं तत्संशयत्वम् ॥ परे तु स्वीयैककोटिप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूताऽपरकोटिप्रकारताशालिज्ञानत्वं संशयत्वम् ॥ दृष्टान्तमाह-**स्थाणुर्वेति** । स्थाणुत्ववान् स्थाणुत्वाऽभाववान् वा इत्येकः, पुरुषत्ववान् पुरुषत्वाभाववान् वेत्यपरः संशय इति ॥ ३०२ ॥

**सामान्यधर्मवद्धर्मिधीजकोटिद्वयस्मृतिः ॥३०३॥**
**कोटिद्वयाऽधिकरणव्यावृत्तधर्मनिश्चयः ।**
**ज्ञानप्रामाण्यसंशीतिस्तथाऽप्रामाण्यसंशयः॥३०४॥**
**विप्रतिपत्तिवाक्योत्थकोटिद्वयस्मृतिस्तथा ।**
**व्याप्यस्य संशयो, धर्मिज्ञानं धर्मीन्द्रियाऽन्वयः ॥**
**कारणानि भवेयुस्ते संशये विविधार्थके ।**
**तदभावाऽप्रकारा तत्प्रकारा धीस्तु निश्चयः॥३०६॥**

संशयकारणान्याह-**सामान्येति** । कोटिद्वयसहचरितत्वेन गृह्यमाणः साधारणधर्म ऊर्ध्वत्वादिस्तद्धर्मिज्ञानं संशयकारणम् । स्थाण्वस्थाणुसहचरितत्वेन वर्तमानग्रहविषयधर्मप्रकारकपुरोवर्तिविशेष्यकज्ञानात् पुरोवर्तिविशेष्यकस्थाणुत्वतदभावकोटिकः 'स्थाणुर्नवे'ति संशयो भवति । साधारणधर्मवद्धर्मिज्ञानजन्यकोटिद्वयस्मरणस्यैव संशयजनकत्वं, धर्मिज्ञानस्य तु प्रयोजकत्वमात्रमिति तादृशस्मरणोत्तरजायमानसंशयस्थले बोध्यम् । यत्र तु कोटिद्वयस्मरणोत्पत्तिक्षणे एव संशयोत्पत्तिः, क्षणविलम्बे मानाऽभावात् यक्ष साधारणधर्मवद्धर्मिज्ञानत्वेन हेतुत्वं बोध्यम् ॥३०३॥

असाधारणधर्मज्ञानस्य संशयकारणत्वमाह—**कोटीति'** कोटिद्वयाऽधिकरणाऽवृत्तित्वेन गृह्यमाणधर्मप्रकारकनिश्चयः संशयकारणम् , यथा शब्दत्वं नित्यत्वाऽनित्यत्वकोटिद्वयाऽधिकरणसपक्षविपक्षव्यावृत्तत्वेन गृहीत्वा 'शब्दो नित्यत्ववान् तदभाववान् वे'तिसंशयवान् भवति ॥

**ज्ञानप्रामाण्येति** । घटवद्भूतलमितिज्ञानं प्रमात्ववन्न वे'तिज्ञानधर्मिकप्रमात्वतदभावप्रकारकसंशयेन 'भूतलं घटवन्न वे'ति विषयेऽपि संशयो जन्यते । एवं ज्ञाने अप्रामाण्यसंशयादपि विषयसंशयो भवति॥३०४॥

**विप्रतिपत्तीति** । विप्रतिपत्तिस्थले शक्तिज्ञानसहकृतकोटिद्वयात्मकशब्दज्ञानेन भावाऽभावकोटिद्वयस्मरणं जायते । स्मरणसहकृतमनसा च संशयो जायत इत्यर्थः ॥ **व्याप्यस्ये'ति** । व्याप्यस्य संशयात् व्यापकस्य संशयः, वह्न्यादिव्याप्यत्वेन गृह्यमाणधूमादिकोटिक'व्याप्यधूमवान्न वे'त्याकारकसंशयात् 'वह्निमान्न वे'त्याकारको व्यापकसंशय उत्पद्यते ॥ स्वावच्छिन्नाऽव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन साधारणधर्मज्ञानत्वाद्यात्मककारणतावच्छेदकतत्तद्धर्मविशिष्टत्वावच्छिन्नं प्रति तत्तद्धर्मावच्छिन्नस्य कारणत्वं, तेन न परस्परं व्यभिचारः ॥ संशयसामान्यं प्रति कारणमाह—**धर्मिज्ञानमिति** । तुरगविमानादिकमारुह्य वेगेन गच्छतोऽनन्तधर्मीन्द्रियसन्निकर्षेऽपि यस्यैव धर्मिणो ज्ञानं तस्यैव संशयो विपर्ययो वा, यस्य तु न भानं न तस्ये'त्यनुभवो धर्मिज्ञानस्य संशयकारणत्वे प्रमाणम् । तथा च धर्मिज्ञानम् आरोपमात्रे हेतुः । कार्यकारणभावश्च 'तद्धर्मितावच्छेदकतद्धर्मिकसंयोगसंसर्गकतद्धर्म्यसंयुक्तधर्मप्रकारकज्ञानत्वाद्यवच्छिन्नं प्रति तद्धर्मितावच्छेदकप्रकारकतद्धर्मिज्ञानत्वेन हेतुत्वमिति ॥ **धर्मीन्द्रियेति** । धर्मिणा सहेन्द्रियस्य संयोगसंयुक्तसमवायाद्यात्मकसन्निकर्षोऽपि स्वतन्त्रः संशयसामान्यकारणम् । तान्येतानि विधेयविषयके संशये विशेषसामान्यकारणानि बोध्यानि ॥

निश्चयलक्षणमाह—**तदभावेति** । तदभावाऽप्रकारकत्वे सति तत्प्रकारकत्वं ज्ञानत्वं निश्चयत्वम् । घटे 'घट'–इति ज्ञानं घटत्वाऽभावाप्रकारकं घटत्वप्रकारकं च, शुक्तौ 'रजतमि'ति ज्ञानं रजतत्वाभावाऽप्रकारकं रजतत्वप्रकारकं च भवतीति तन्निश्चयो बोध्यः ॥ संशयेऽतिव्याप्तिवारणाय तदभावाऽप्रकारकमिति । निर्विकल्पकेऽतिव्याप्तिवारणाय तत्प्रकारकमिति । इच्छावारणाय—ज्ञानत्वमिति । 'ह्रदो वह्न्यभाववान् पर्वतो वह्निमानि'तिसमूहालम्बननिश्चयसंग्रहाय'एकधर्मिविशेष्यकत्वम'पि निवेश्यम्'। 'घटः प्रमेय' इति निश्चये प्रमेयत्वाऽभावाऽप्रसिद्धिनिबन्धनाऽव्याप्तिवारणाय—प्रतियोगित्वसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारत्वाऽनिरूपकत्वं वक्तव्यम् । पर्वतो वह्निमान् वह्न्यभाववांश्चे'तिसमुच्चये निरुक्तप्रकारत्वाऽनिरूपकत्वाऽभावनिबन्धनाऽव्याप्तिवारणाय-तन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वतादृशविशेष्यतासमानाधिकरणतद्विरोधविशिष्टदैशिकविशेषणतासम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपकत्वाऽभावैतदुभयवत्त्वं तन्निश्चयत्वमिति वक्तव्यम् ॥ संशयसमुच्चययोर्वैलक्षण्याय संशये कोटयोर्विरोधस्य संसर्गतया भानांगीकारात् । यद्वा—संशयसमुच्चय-

योर्वैलक्षण्याय संशये भावाऽभावनिरूपितविशेष्यतयोरवच्छेद्याऽवच्छेदकभावः, न तु समुच्चयीयविशेष्यतयोः, तथा च—प्रतियोगित्वसम्बन्धावच्छिन्नतन्निष्ठप्रकारतानिरूपिताऽभावत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताऽनवच्छेदकतन्निष्ठप्रकारतानिरूपितज्ञानीयविशेष्यताकत्वं तन्निश्चयत्वमिति ॥३०५-३०६॥

**विपर्ययस्तु संप्रोक्तो मिथ्यात्वस्य हि निश्चयः ।**
**मिथ्यात्वं तदभावाढ्ये तत्प्रकारकता मता ॥३०७॥**

विपर्ययमाह—**विपर्ययस्त्विति**। मिथ्याज्ञानं विपर्ययः, स च तदभाववति तत्प्रकारकनिश्चयरूपः, प्रमावारणाय—तदभाववतीति। घटाभाववति भूतले घटाभाववद्भूतलमिति निश्चयवारणाय तत्प्रकारकेति। निश्चयाऽनुपादाने तदभाववति तत्प्रकारकत्वस्य संशये इच्छायां चाऽतिव्याप्तिस्तद्वारणाय-संशयान्यज्ञानार्थकं निश्चयपदम्। रङ्गरजतयोः 'इमे रंगरजते' इति यथार्थसमूहालम्बनेऽतिव्याप्तिवारणाय-तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सति संशयान्यत्वे सति ज्ञानत्वं विपर्ययत्वं बोध्यम् ॥ 'देहे—आत्मत्वप्रकारकबुद्धिः 'अयमात्मा' इति निश्चयात्मकं ज्ञानम् 'शंखे—'अयं पीत' इति पीतत्वप्रकारकनिश्चयात्मकं ज्ञानं विपर्ययः ॥ ३०७ ॥

**वातपित्तादिदोषेभ्यः संस्कारात् मनआत्मनोः ।**
**योगाददृष्टतः स्वाप्नं ज्ञानं स्वाप्नत्वजातिमत्॥३०८॥**

स्वाप्नानुभवकारणान्याह—**वातेति** । वातपित्तकफात्मकधातुदोषेभ्यः संस्कारात् मनआत्मसंयोगात् अदृष्टेन अनुभूतपदार्थस्मरणैश्च स्वाप्नानुभवो जन्यते। तत्र वातदोषात् सुप्तोऽपि जन आकाशे विचरति बहुधा पर्यटति व्याघ्रादिभ्यो वा बिभेति। पित्तदोषात् प्रविशत्यग्निम् आलिङ्गति ज्वालां कांचनपर्वतविद्युत्स्फुरणादिकं चोपचष्टे । कफदोषात् संसरति सरितम् अर्णवं च पश्यति धारासम्पातं शिलोच्चयं च राजतमिति। तत्र यादृशमदृष्टं तादृशसहकारिसहकृतदोषात् स्वप्नविशेषः । न चाऽदृष्टस्य तन्नियामकत्वेनैवोपपत्तौ धातुदोषस्य कारणत्वे प्रमाणाऽभाव इति वाच्यम्। धातुदोषेण स्वतन्त्राऽन्वयव्यतिरेकानुविधायित्वात् । एतेषां प्रातिस्विकत्वेन कूटत्वेन वा कारणत्वं तु यथा कार्यमुन्नेयमिति-। स्वाप्नज्ञानविषयस्य जाग्रति असत्त्वात् अयाथार्थ्यम् ॥ लक्षणमाह—**स्वाप्नत्वजातिमदिति** । स्वाप्नभिन्नभिन्नत्वम् स्वाप्नपदशक्यतावच्छेदकजातिमत्त्वमपि लक्षणं बोध्यम् ॥ ३०८ ॥

**तर्को व्याप्यसमारोपाद् व्यापकारोप उच्यते ।**
**आहार्यभ्रम आरोहः, आहार्यन्तु भवेत्पुनः॥३०९॥**
**बाधनिश्चयकालीनाऽभिलाषाजन्यवेदनम् ।**
**विरोधिधर्मधर्मित्वाऽवच्छेदकमित्यपि ॥३१०॥**
**स्वस्य प्रकारकं तच्च ज्ञानं वाऽऽहार्यमुच्यते ।**

तर्कं निरूपयति—**तर्क इति**। तर्कपदशक्यतावच्छेदकतया सिद्धजातिमत्त्वं तर्कत्वम् , आहार्यव्याप्यवत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमस्तर्कः । व्याप्यारोपेण व्यापकारोपस्तर्क इति लक्षणम्। व्याप्यस्य वह्न्यभावस्य, आरोपेण आहार्यज्ञानेन बाधनिश्चयकालीनेच्छाजन्यज्ञानेनेति यावत् । व्यापकस्य धूमाभावस्य, आरोप इत्यर्थः । पदद्वयम् असंभववारणाय । बाधनिश्चयकालीनेच्छाजन्यं ज्ञानमाहार्यम् । बाधनिश्चयः-वह्निधूमयोः पर्वतादौ 'वह्निमान् धूमवानिति' निश्चयः, तत्कालीनेच्छा 'वह्निव्याप्यधूमवति पर्वते वह्न्यभावज्ञानं धूमाभावज्ञानं च जायतामि'त्याकारिका, तज्जन्यं ज्ञानं 'पर्वतो यदि वह्न्यभाववान् स्यात् धूमाभाववान् स्यादि'तितर्कात्मकम्। तत्र आहार्यव्याप्यवत्ताभ्रमः-'निर्वह्निः स्यादि'त्यंशः, तज्जन्यः आहार्यव्यापकवत्ताभ्रमः-'निर्धूमः स्यादि'त्यंशः । व्याप्यत्वं-स्वसमानाधिकरणाऽभावाऽप्रतियोग्यापाद्यकत्वम् । स्वम्-आपादकत्वेनाऽभिमतम् । व्यापकत्वं च-निरुक्तव्याप्यत्वघटकाऽप्रतियोगित्वपर्यन्तम्। लक्षणे जन्यताऽनुपादाने आहार्यभ्रमात्मकज्ञानमात्रेऽतिव्याप्तिः, प्रथमाऽऽहार्यपदानुपादाने 'अयं न पुरुष' इति निश्चयसत्त्वे शाखादौ करादिभ्रमेण करादिव्याप्यपुरुषवत्ताभ्रमात् 'अयं पुरुष' इत्याद्याहार्यव्यापकवत्ताऽऽरोपो भवति तत्राऽतिव्याप्तिः स्यात् , द्वितीयाऽऽहार्यपदानुपादाने 'रजतत्वव्याप्यचाकचक्याऽभाववत्तानिश्चयकाले आहार्यं यद् रजतत्वव्याप्य-

वत्ताज्ञानं तज्जन्ये 'इदं रजत'मिति अनाहार्यज्ञानेऽतिव्याप्तिः स्यात् ॥

आहार्यज्ञानस्य लक्षणान्तरमाह—**विरोधीति** । स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानम् आहार्यम्, स्वं तद्वत्ता वह्निमत्त्वादिः, धर्मी पर्वतादिः, विरोधिधर्मो वह्न्यभाववत्ता धर्मितावच्छेदकः । 'वह्न्यभाववान्पर्वतो वह्निमानि' इत्यादिरूपमिति यावत् ॥ ३०९–३१० ॥

**तर्को द्वेधा विषयशोधको व्याप्तिग्रहार्थकः ॥३११॥**
**आपाद्यव्यतिरेकस्य निश्चयस्तत्र कारणम् ।**
**आपाद्याऽऽपादकव्याप्तिनिश्चयोऽपि च कारणम् ॥**

तर्कस्यावान्तरभेदमाह—**तर्क इति** । तर्को द्विविधः-विषयपरिशोधको व्याप्तिग्राहकश्च । विषयपरिशोधकः-'वह्न्यभाववान् स्यात् धूमाभाववान् स्यादिति । व्याप्तिग्राहकस्तु-धूमो यदि वह्निव्यभिचारि स्यात् वह्निजन्यो न स्यादिति । तर्के आपाद्यव्यतिरेकनिश्चयः कारणम्, आपाद्यापादकयोर्व्याप्तिनिश्चयोऽपि कारणम् । तर्कः प्रकारान्तरेणाऽपि द्विविधः—साक्षाद् व्यभिचारशंकानिवर्तकः, परम्परया चेति । आद्यः-धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति । द्वितीयस्तु-वह्न्यभाववान् स्याद् धूमाभाववान् स्यादिति । एतस्य धूमवति वह्न्यभावशंकानिरासद्वारा हेतुता, व्यभिचारशंकानिरासकत्वाच्च विषयपरिशोधक इत्युच्यते ॥ ३११–३१२ ॥

**आत्माश्रयस्तथाऽन्योन्याश्रयश्चक्रकमित्यपि ।**
**अनवस्था, तदन्यप्रबाधितार्थप्रसङ्गकः ॥३१३॥**
**इत्येवं पञ्चधा प्रोक्तस्तर्के दोषास्त्रयः स्मृताः ।**
**इष्टापत्तिस्तथा, मूलशैथिल्यं च, विपर्यये ॥३१४॥**
**कोटिमात्राऽप्रसिद्धिस्तच्छून्यः सत्तर्क उच्यते ।**

तर्कस्य प्रकारान्तरेण पञ्चधात्वमाह—**आत्मेति** । आत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थातदन्यबाधितार्थप्रसंगभेदात् पञ्चधा स्वस्य स्वाऽपेक्षितत्वेऽनिष्टप्रसंगः-आत्माश्रयः, स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा, यथाक्रमशः 'यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटानधिकरणोत्तरक्षणवर्ती न स्यात्' । 'यद्ययं घट एतद्घटवृत्तिः स्यात् एतद्घटव्याप्यो न स्यात्' । 'यद्ययं घट एतद्घटज्ञानाऽभिन्नः स्यात् ज्ञानसामग्रीजन्यः स्यादि'ति सर्वत्राऽऽपाद्यम् ॥ तदपेक्षाऽपेक्षितत्वनिबन्धनोऽनिष्टप्रसंगोऽन्योन्याश्रयः, सोपि-उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा यथा 'यद्येतौ बीजवृक्षौ अन्योन्यजन्यौ स्यातां तदा उभयभिन्नौ स्याताम् एकाऽसिद्ध्या वा उभावपि न स्याताम् यद्वा-'सुखदुःखे परस्पराऽभावात्मके स्याताम् एकाऽसिद्ध्या उभेऽपि न स्याताम्' । 'यदि सुखदुःखस्थितिः परस्पराऽसाधारणकारण (अदृष्ट) जन्या स्यात् परस्परविजातीयप्रतियोगिताका न स्यात्' । 'यदि सुखदुःखे' परस्पराऽभावज्ञानाऽभिन्ने स्याताम् ज्ञानसामग्रीजन्ये स्याताम्'-इति ॥ तदपेक्षाऽपेक्षितत्वनिबन्धनोऽनिष्टप्रसंगश्चक्रकम्; अयमपि ज्ञप्त्युत्पत्तिस्थितिभेदात् त्रेधा, यथा 'व्याप्तिः संसर्गाऽभावघटिता, संसर्गाऽभावः (संसर्गारोपजन्यप्रतीतिविषयाऽभावः) जन्यताघटितः, जन्यत्वं (तद्व्याप्यत्वे सति तन्निष्ठाऽन्यथासिद्ध्यनिरूपकत्वं) व्याप्तिघटितम्, व्याप्तिश्च संसर्गाऽभावघटितेति । तत्र 'व्याप्तिज्ञानं यदि स्वग्रहसापेक्षजन्यताग्राहसापेक्षसंसर्गाऽभावग्रहसापेक्षग्रहविषयं स्यात् स्वभिन्नं स्यादिति ज्ञप्तितर्कः । उत्पत्तितर्को यथा—घटो यदि स्वकारणसापेक्षकारणसापेक्षकारणसापेक्षकारणात्मकः स्यात् स्वभिन्नः स्यादिति । स्थितितर्को यथा—'घटो यदि स्ववृत्तिसापेक्षवृत्तिसापेक्षवृत्तिसापेक्षवृत्त्यात्मकः स्यात् स्वाभिन्नः स्यादिति । चतुःकक्षादावपि स्वस्य स्वापेक्षाऽपेक्षाऽपेक्षितत्वसत्त्वात् चक्रकमेव । अथाऽव्यवस्थितपरम्पराऽऽरोपाधीनाऽनिष्टप्रसंगोऽनवस्था, यथा—'यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यादिति । तदन्यबाधितार्थप्रसङ्गस्तु-'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादिति ॥ ३१३ ॥

तर्के दोषानाह—दोषास्त्रय इति । तर्के त्रयो दोषाः—इष्टापत्तिः, मूलशैथिल्यं, विपर्यये तर्ककोटिमात्राऽपर्यवसानं चेति' 'ह्रदो निर्वह्निः स्यान्निर्धूमः स्यादि'तितर्के आद्यो दोषः । ह्रदो यदि निर्वह्निः

स्यात् तर्हि द्रव्यं न स्यादि'तितर्के द्वितीयो दोषः, वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात् । 'रूपे चक्षुर्ग्राह्यत्वशंकानिरासतात्पर्यके 'रूपं चक्षुरि'तराऽग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात् तर्हि ग्राह्यं न स्यादि'त्यादितर्के तृतीयो दोषः । चक्षुर्ग्राह्यत्वात्मककोटिमात्राऽसिद्धेः । तादृशदोषत्रयाऽन्यतमविशिष्ट एव तर्काभासः, तादृशान्यतमशून्यस्तु सत्तर्क इति ॥

ननु 'धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादि'तितर्क एव न भवति, तत्र वह्निजन्यत्वनिश्चयस्य प्रतिबन्धकत्वादिति चेन्न' आहार्यव्याप्यारोपेण आहार्यव्यापकारोपस्य तर्कतया आपाद्यव्यतिरेकनिश्चये आपाद्यव्याप्यवत्तानिश्चयस्य न प्रतिबन्धकत्वम्, न वा आपाद्यव्यतिरेकनिश्चयस्य तर्के प्रतिबन्धकत्वमिति ॥

ननु तर्कसामान्यस्य साक्षात्परम्परया वा व्यभिचारज्ञानप्रतिबन्धकत्वे प्रमाणाभावः, वह्निव्यभिचारित्वात्मकाऽऽपादके वह्निजन्यत्ववदवृत्तित्वात्मकवह्निजन्यत्वाऽभावात्मकाऽऽपाद्यव्याप्यत्वप्रकारकज्ञानस्य च तत्कारणत्वेन तत्पूर्वम् आवश्यकतया तेनैव व्यभिचारशंकानिवृत्तेः तद्विरुद्धज्ञानकालीनतद्वत्ताज्ञानस्य तद्विरुद्धतया ज्ञायमानधर्मप्रकारकज्ञानप्रतिबन्धकत्वादिति चेन्न । अनाहार्यतादृशज्ञानस्य निरुक्तज्ञानप्रतिबन्धत्वेऽपि आहार्यज्ञानस्य केनापि अप्रतिबध्यत्वात् निरुक्तज्ञानकाले आहार्यव्यभिचारादिज्ञानोत्पत्तौ बाधकाऽभावेन तन्निरासार्थं तर्कस्याऽऽवश्यकत्वात्, अनिष्टप्रसञ्जनात्मकतर्केणाऽऽपाद्यज्ञाने द्वेषस्यैवोत्पत्त्या तेन चात्र प्रतिबन्धात् तादृशज्ञानस्य इष्टत्वाऽभावेन आपादकज्ञाने इष्टसाधनताज्ञानाऽनुत्पत्त्या कारणाऽभावेन इच्छाया अनुत्पत्त्या आहार्यशंकाया उत्पत्त्यसंभवात् तादृशाऽऽशंकां प्रति इच्छायाः कारणत्वादितिरीत्या तर्कस्य तादृशाशंकानिवर्तकत्वम् । यद्वा—व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतायां तर्कस्योत्तेजकत्वस्वीकारात् तर्ककाले व्यभिचारज्ञानसत्त्वेऽपि उत्तेजकाऽभावविशिष्टव्यभिचारज्ञानाऽभावरूपकारणसंभवात् तत्संपादकत्वरूपम् औपचारिकमेव तस्य व्यभिचारशंकानिवर्तकत्वमिति । यद्वा—आहार्यज्ञानसाधारणतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदापादकतर्कत्वेन मणिमन्त्रादिन्यायेनाऽनुमितौ सिद्धेरिव तर्कस्यापि प्रतिबन्धकत्वमिति ॥ ३१४ ॥

**फलं तु व्यभिचारित्वाऽऽशंकानाश इति स्मृतम् ३१५**
**कार्यकारणहान्यात्मव्याघाताद् वाऽपसार्यते ।**
**आशंकाऽनवतारे तु तर्काऽपेक्षा न विद्यते ॥३१६॥**

तर्कस्य फलमाह—फलं त्विति । अत्रेयं प्रक्रिया—'कार्यम् अनुमितिः, तदुपयोगि व्याप्तिज्ञानम्, तद्विरोधिनी व्यभिचारशंका, शंकाविघटकस्तर्कः, तर्कजनकः कार्यकारणभावनिश्चयः, तन्निश्चयं प्रति प्रत्यक्षतोऽन्वयव्यतिरेकनिश्चयौ प्रयोजकौ । यथा 'पर्वतो वह्निमान् धूमादि' तिस्थले 'पर्वतो वह्निमानि' त्यनुमितौ कारणस्य 'साध्याभाववदवृत्तिर्हेतु' रितिव्याप्तिज्ञानस्य विघटिका यदि 'हेतुरस्तु साध्यं माऽस्त्वि' ति (धूमो वह्निव्यभिचारी न वेति' शंका भवेत्, तदा तन्नाशकोऽनुकूलः 'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादि' ति तर्कोऽपेक्षणीयः, तर्के प्रथमदलमापादकम्, द्वितीयं दलमापाद्यम्, आपाद्याभावेन आपादकाऽभावस्य सिद्धिर्भवति, वह्निजन्यत्वाऽभावेन वह्निजन्यत्वात्मकेन वह्निव्यभिचारित्वाऽभावस्य वह्निव्याप्तिनिश्चयस्य सिद्धिः शंकानाशश्च भवतीति फलम्, तर्के च 'धूमं प्रति वह्निः कारणमि'ति वह्निजन्यत्वनिश्चयः कारणम्, निश्चये च प्रत्यक्षतो 'वह्निसत्त्वे धूमसत्त्वम्, वह्न्यभावे धूमाभाव' इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम्, तथा च अन्वयसहचारग्रहं विना कार्यकारणभावनिश्चयो न भवति, निश्चयं विना तर्को नोत्पद्यते, तर्कं विना शंका न नश्यति, शंकोच्छेदं विना व्याप्तिज्ञानं न सुस्थिरम्, तथा सत्यनुमितिर्न स्यात्, इत्यतोऽन्वयव्यतिरेकाभ्यां कार्यकारणभावनिश्चयः कर्तव्य इति ॥ ३१५ ॥

ननु'धूमत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नं कारणमि'ति कार्यकारणभावग्रहेऽपि 'क्वचित्कारणं विनाऽपि कार्यं भविष्यती'त्याशंका भवति, तद्वारणार्थं पुनस्तर्कान्तरं, तत्कारणे कार्यकारणभावग्रहे च पुनराशंकाया विघटनाय पुनस्तर्कान्तराऽवतार इत्यनवस्थेत्यत आह—कार्यकारणभावहान्यात्मेति । तत्र

प्राथमिकतर्कप्रयोजककार्यकारणभावग्रहे धूमविषयिणी 'क्वचित्कारणं' विनाऽपि कार्यं भविष्यति न वे'त्याशंका प्रतिबन्धिका भवेत्, एवं—'धूमः किं निर्हेतुक एव भविष्यती'ति—आशंका भवेत्, तदा तद्द्वयमपि तर्कप्रयोक्तुः प्रवृत्तेर्व्याघातज्ञानात् अपसारणीयम् •। प्रवृत्तेर्व्याघातःवह्न्युपादानप्रवृत्त्यनुपपत्तिः, व्याघातज्ञानस्य मणिमन्त्रादिन्यायेन स्वतन्त्रप्रतिबन्धकत्वात्। यदि हि कारणं विनापि कार्यं भविष्यति, तदा 'धूमार्थं वह्नेः व्याप्तिनियमतो ग्रहणानुकूला प्रवृत्तिस्तव तर्कप्रयोक्तुरेव नोपपद्यते'ति-व्याघातः उपस्थापनीयः, तेन च किन्तूपपद्यतेऽतो धूमो वह्निं विना नैव भवती'ति तादृशव्याघातविपरीतनिश्चये सति शंका नश्येदिति ॥ उक्तं च तार्किकैरपि "यदि हि गृहीताऽन्वयव्यतिरेकं हेतुं विना कार्योत्पत्तिं शंकते, तदा स्वयमेव धूमार्थं वह्नेः तृप्त्यर्थं भोजनस्य, परप्रतिपत्त्यर्थं शब्दस्य, चोपादानं कथं कुर्यात्, तेन विनापि तत्संभवात्। तस्मात्तत्तदुपादानमेव तादृशशंका प्रतिबन्धकम्, शंकायां न नियतोपादानं नियतोपादाने च न शंका, तदेव ह्याशंक्यते यस्मिन्नाशंक्यमाने स्वक्रियाव्याघातो न भवतीति, नहि संभवति स्वयं वह्न्यादिकं धूमादिकार्यार्थी, नियमत उपादत्ते तत्कारणं, तन्नेत्याशंकते चे" ति **'आशंकाऽनवतारे त्विति'** यादृशसाध्यहेतुकादिव्याप्तिनिश्चये भूयोदर्शनेन शंका निवर्तते यद्वा सामग्र्यभावात् शंकावतारो न भवति तत्र तर्काऽवतारोऽपि न, तथा च क्वचिदेव शंकानिवर्तकस्तर्को बोध्यः ॥ ३१६ ॥

**तर्कसाम्या भवेदाद्योपस्थितिर्लाघवं तथा।**
**गौरवं च तथोत्सर्गो विनिगमनशून्यता ॥३१७॥**

**तर्कसाम्या इति।** प्रथमोपस्थितिलाघवगौरवोत्सर्गविनिगमनाविरहास्तु प्रसंगाऽनात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वात्मकसाधर्म्यात् तथाव्यवहारः, ते तु सत्या युक्तय एव,। आद्योपस्थितिर्यथा—'शास्त्रारम्भे मंगलस्याऽदृष्टादिफलेषु प्रथमदृष्टोपस्थितिविषयत्वात् समाप्तिरेव फलम्। प्रयोगस्तु—'यद्यत्प्रथमोपस्थितं तत् प्रथमाऽभिप्रेतस्थानभागि' ति ॥

**लाघवमिति।** तथा—तर्कसाम्यम्। उपस्थितिकृतम् सम्बन्धकृतं शरीरकृतं चेति त्रिविधं लाघवम्। आद्यं यथा-कारणलक्षणेषु कार्यलक्षणेषु व्याप्तिलक्षणेषु वा यः परिष्कारः प्रथमोपस्थितः तदेव तन्निर्वचनमिति। द्वितीयं यथास्वाश्रयजन्यभ्रमिजन्यभ्रमिवत्तापेक्षया स्वजन्यभ्रमिजन्यभ्रमिवत्ताया लाघवेन दण्डे घटकारणत्वम्, न तु दण्डत्वे, सम्बन्धकृतगौरवात्। तृतीयं यथा—परिष्काराऽपेक्षयाऽनुगमादौ, धर्मे लघुत्वं च—'स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतरूपवृत्तित्वम्। वृत्तित्वं च—स्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतधर्मवत्त्वसम्बन्धेन, तथा च कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं कम्बुग्रीवादिमत्त्वगतबहुत्वं तद्वृत्तित्वस्य घटत्वे सत्त्वात् घटत्वविषयकग्रहत्वव्यापकव्यापकताकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकीभूतं कम्बुग्रीवादिमत्त्वगतसमुदायत्वगतसमुदायत्वत्वं तद्वत्त्वस्य तादृशसमुदायत्ववृत्तित्वस्य घटत्वे सत्त्वात् घटत्वं लघुधर्मः। एवं यथालक्ष्यम् ऊह्यम् ॥

**गौरवमिति।** उपस्थितिकृतं सम्बन्धकृतं शरीरकृतं चेति त्रेधा गौरवम्। उपस्थितिः—स्मृतिः कल्पना। धर्मे गुरुत्वं च स्वविषयकग्रहत्वव्यापकताका या संख्या तादृशसंख्यात्वाऽवच्छिन्नाऽऽवृत्तिर्यः संख्याविभाजकीभूतो धर्मस्तद्वत्संख्यावच्छिन्नाऽनुयोगिताकपर्याप्तिकाऽवच्छेदकताकविषयताशून्यप्रतीतिविषयताऽनवच्छेदकत्वम्। स्वं-लघुधर्मो घटत्वं घटत्वविषयकग्रहत्वव्यापकत्वस्य एकत्वसंख्याव्यापकत्वे, तादृशैकत्वाऽवृत्तिसंख्याविभाजकभूतकम्बुग्रीवादिमत्त्वगतसमुदायत्वत्व—द्वित्वादिधर्मवत्समुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयताशून्यप्रतीतिविषयतानवच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वे सत्त्वेन तस्य गुरुत्वम्। यद्वा—तद्धर्मावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकसंख्यासामान्यनिष्ठभेदप्रतियोगितावच्छेदकसंख्यात्वव्याप्यजातिमत्प्रकारताश्रयत्वं तद्धर्माऽपेक्षया गुरुत्वम्। तद्धर्मो लघुत्वधर्मः ॥

यद्वा—किञ्चिन्निष्ठलघुतानिरूपिताऽवधितासमनियतधर्मवत्त्वं गुरुत्वम्। किञ्चिद् घटत्वादिकम्। एवं किञ्चिद्धर्मवत्त्वनिष्ठगुरुतानिरूपिताऽवधितासमनियतधर्मवत्त्वं लघुत्वम्। किञ्चित्–कम्बुग्रीवादिमत्त्वम्। गुरुत्वलक्षणे लघुत्वस्य लघुत्वलक्षणे गुरुत्वस्य तद्वचक्तित्वेन प्रवेशान्नाऽन्योन्याश्रयः॥ यद्वा—इदमेतदपेक्षया गुरु लघ्वित्यादिव्यवहारसाक्षिकः सावधिकोऽखण्डधर्मविशेष एव लघुत्वगुरुत्वादिकम्॥

**उपसर्ग इति**। बहूनां प्राप्तावेकस्य सम्पादकः प्रामाणिको नियमः॥ **विनिगमनेति**। एकत्र पक्षे पातिनी युक्तिरिति। विनिगमनाविरहः–एकपक्षसाधकयुक्त्यभाव इति॥ ३१७॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमाणचिन्तामण्याख्ये द्वितीये खण्डे तर्कनिरूपणनामा परिच्छेदः॥ ७॥

## तत्त्वप्रभावल्याः नवप्रमाणोद्देशः

**कारणं संस्कृतिद्वारा कार्यं ज्ञानं द्विधा मतम्।**
**कार्यं स्मृतिर्हि संस्कारैर्हेतुश्चाऽनुभवो मतः॥३१८॥**
**सोऽयं नवविधश्चात्र करणं कार्यसर्जकः।**
**प्रोक्तः स्वयं स्मृतेर्हेतुः करणं दशमं पृथक्॥३१९॥**

**कारणमिति**। आत्मवृत्तिज्ञानं कारणकार्यव्यूहतया द्वेधा प्रोच्यते। कारणव्यूहोऽनुभवः। कार्यव्यूहः स्मृतिः। अनुभवेन संस्काराः संस्कारैः स्मृतयः स्फूर्तयो जायन्ते, अतः स्मृतिकरणमनुभवः, अनुभवस्य नवविधत्वात् तस्य करणानि नव सम्मतानि॥ प्रत्यक्षम्, अनुमितिः, उपमितिः, शाब्दबोधः, अर्थापत्तिः, अनुपलब्धिः, संभवः, ऐतिह्यं, चेष्टा, चेति नवधाऽनुभवः प्रमा, स्वयं तु दशमः करणविधया पृथग् गणनीयः॥ ३१८॥ ३१९॥

**नवधा स्याद् यथार्थोऽनुभवस्तु सविकल्पकः।**
**प्रत्यक्षं चाऽप्यनुमितिरुपमितिश्च शब्दजः॥३२०॥**
**अर्थापत्तिरनुपलब्धिजः सांभविकस्तथा।**
**ऐतिह्यजश्च चेष्टाजो, नवैषां करणान्यपि॥३२१॥**

**नवधेति**। प्रत्यक्षात्मक एवाऽनुभव इति चार्वाकाः। अनुमितिरपीति काणादा बौद्धाश्च। उपमितिरपीति नैयायिकैकदेशिनः। शाब्दबोधोऽपीति गौतमीयाः। अर्थापत्तिरपीति प्राभाकराः। अनुपलब्धिबोधोऽपीति भाट्टा वेदान्तिनश्च। साम्भविकः, ऐतिह्यं, चेति पौराणिकाः। चैष्टिकोऽपीति तान्त्रिकाः॥ अनुभवः प्रत्यभिज्ञा आहार्यमिति तु तद्भेदाः। प्रत्यक्षं ज्ञानं साक्षात्कारः, स चेन्द्रियैर्विविधसन्निकर्षद्वारा जायमानोऽनुभवः। मानसोऽप्यनुभवो मानससाक्षात्कारः। अनुमानजन्यं ज्ञानम् अनुमितिः, अनुमानं व्याप्तिज्ञानं, तच्च परामर्शद्वारा कारणम्। सादृश्यज्ञानजन्यम् उपदिष्टवाक्यार्थस्मरणद्वारा जायमानम् उपमितिः। शब्दजन्यं शक्त्यादिद्वारा जायमानं पदार्थानाम् अन्वयज्ञानं शाब्दबोधः। अर्थाऽनुपपत्तिज्ञानोत्तरं कल्पनाद्वारकं कारणोपपत्तिज्ञानम् अर्थापत्तिज्ञानम्। अनुपलब्धिप्रसक्तिद्वाराऽभावज्ञानम् अनुपलब्धिजं ज्ञानम्। घटितार्थविमर्शद्वारा जायमानं घटकज्ञानं सांभविकं ज्ञानम्। प्राचीनपारम्परिककिंवदन्तीद्वारा जायमानमैतिहासिकम् ऐतिह्यभानम्। चेष्टाभिस्तदनुपतिताऽभिप्रेतार्थभानद्वारा मानसो बोधश्चैष्टिकोऽनुभवः॥ अनुभवजन्यं संस्कारद्वारा च स्फुरणज्ञानमपि दशमं त्वनुभवभिन्नम्॥ तत्तत्पदवाच्यत्वं, तत्तदीयमात्रधर्मवत्त्वम्, असंकीर्णतत्तदीयव्यापारमात्रजन्यज्ञानत्वं, तत्तद्वचक्तिवृत्त्यनुभवत्वन्यूनवृत्तिधर्मवत्त्वं वा तत्तत्प्रमालक्षणम्। तत्तदीयकरणेतराऽजन्यज्ञानत्वं नित्याऽनित्यसाधारणाऽनुभवप्रमात्वं प्रज्ञाप्रमात्वमित्यविलक्षणं भवति॥३२०-३२१॥

**प्रत्यक्षं सप्तधा तत्र घ्राणजादिप्रभेदतः।**
**घ्राणजं, रासनं, कर्णजन्यं, त्वगुत्थमान्तरम्॥३२२॥**
**चाक्षुषं, दिव्यमेवाऽपि, द्रष्टृभेदात्तथेष्यते।**
**गन्धजातिविरहाद्या घ्राणजा गोचरा मताः॥३२३॥**

**प्रत्यक्षमिति**। साक्षात्कारः सप्तविधः, घ्राणजन्यः, चक्षुर्जन्यः, कर्णजन्यः, त्वगुत्थः, रसनाजन्यः, आन्तरं-मानसप्रत्यक्षं, दिव्यं-देवेश्वरयोगिनां परमेश्वरस्य च सर्वतत्त्वसाक्षात्कारः॥ गन्धो गन्धत्व-

सुरभित्वाद्या धर्मा गन्धाभावा गन्धत्वाद्यभावास्त-त्तद्योग्यसंसर्गाः संसर्गाऽभावाद्याश्च घ्राणकरणकसाक्षात्कारवन्तो बोध्याः। सूक्ष्मा गन्धाद्यास्तन्मात्राद्याश्च देवादीनां गोचराः, असूक्ष्मा विशेषा गन्धाद्याः अस्मदादीनां गोचराः। गन्धवद्द्रव्यग्रहे नाऽस्मद्घ्राणसामर्थ्यम् नित्यैकज्ञप्तिमत ईश्वरस्य तु तत्र सामर्थ्यम् ॥ ३२२-३२३ ॥

**रसो रसत्वादिधर्मा रसाऽभावाऽन्वयादयः।**
**स्थूला नोऽस्थूलरूपास्ते देवादीनां हि गोचराः ३२४**

रस इति। रसनेन्द्रियग्राह्या रसा रसत्वाद्या रसाद्यभावा रसादिसम्बन्धाद्याश्च स्थूला अस्मदादिरसनाग्राह्याः, अस्थूलाः सूक्ष्मास्तन्मात्राद्या रसादयो देवेश्वरयोगिनां प्रत्यक्षाः। रसवद्द्रव्यग्रहे नाऽस्मद्रसनायाः शक्तिः। परमेश्वरस्य तु नित्यैकसाक्षात्कारात्मकज्ञप्तिमत्तया रसतदाश्रयादिग्रहणवत्वम् ॥३२४॥

**कर्णस्य गोचराः शब्दतद्धर्मविरहाऽन्वयाः।**
**उद्भूतोऽस्मद्गोचरोऽन्यो देवादीनां हि गोचरः ३२५**

**कर्णस्येति।** श्रोत्रेन्द्रियग्राह्याः शब्दतद्धर्मतद्भावतदन्वयाः, सर्वेऽपि उद्भूता अस्मद्गोचराः। उद्भूतत्वं त्र्यणुकेन्द्रियग्राह्यत्वम्, तद्भिन्नत्वम् अनुद्भूतत्वं द्व्यणुकेन्द्रियग्राह्यत्वम्, विन्दुनादध्वनिपरापश्यन्तीमध्यमावैखरीवर्णादियावद्विधशब्दशब्दत्वतद्भावतत्संसर्गादिग्राहकत्वं नित्यसाक्षात्कारवत्त्वं नित्यसर्वेतस्य योगिनां च नैसर्गिकम्। उद्भूतत्वं विशेषत्वं वा, तच्च शान्तघोरमूढत्वानुभावकत्वम्, अविशेषत्वम् अनुद्भूतत्वम्। नित्यानां त्वनुद्भूतत्वमेव। उद्भूतवृत्तितया समानधर्मे आश्रयौपाधिकतथाविधव्यवहारः। यद्वा—उद्भूतत्वं 'यद्येतत्प्रत्यक्षप्रयोजकसन्निकर्षवत्स्यात्तर्ह्युपलभ्येतै'त्यापादनविषयत्वं स्थूलचक्षुष्मताम् ॥ ३२५ ॥

**स्पर्शधर्माऽन्वयाभावास्त्वग्ग्राह्या नः स्थूला अथ।**
**अस्थूला अपि देवादिग्राह्या दिव्याः परात्मनः॥३२६॥**

**स्पर्शेति।** अस्मदादित्वगिन्द्रियग्राह्याः स्थूलाः स्पर्शाः स्पर्शत्वादयः स्पर्शाद्यभावाः स्पर्शाद्यन्वयाश्च। सूक्ष्मास्तु स्पर्शाद्या देवयोगिसिद्धेश्वराणामपि ग्राह्याः। स्पर्शाश्रयद्रव्याणि योग्यानि तद्धर्मास्तद्भावास्तत्संसर्गाश्चापि योग्यास्त्वग्ग्राह्या भवन्ति, योगिप्रभृतीनामपि तथा बोध्यम् ॥ द्रव्यस्पार्शने स्पर्शतद्धर्मादिस्पार्शने उद्भूतस्पर्शः कारणम्, त्वक्संयोगेन द्रव्यं, त्वक्संयुक्तसमवायेन स्पर्शः, त्वक्संयुक्तसमवेतसमवायादिना स्पर्शत्वाद्या गृह्यन्ते, ते साक्षात्परम्परया वा उद्भूता बोध्याः। तद्भावास्तत्तद्विशेषणतादिभिर्गृह्यन्ते। रूपरूपत्वादिभिन्नं चक्षुर्ग्राह्यं यत्तत् त्वग्ग्राह्यमपि भवति ॥ ३२६ ॥

**आत्मतद्धर्मसंसर्गाऽभावा मानसगोचराः।**
**आत्मगुणास्तथा ग्राह्याः शक्तयोऽपि यथायथम् ३२७**

**आत्मेति।** आत्मनां तद्गुणधर्मसम्बन्धाऽभावादीनामान्तरं मानसप्रत्यक्षं सर्वतन्त्रसम्मतम्। आत्मीयशक्तीनामपि मानसग्राह्यम्। इन्द्रियत्वेन मनस्तत्र करणम्। सर्वज्ञानानि प्रति मनसो मनस्त्वेत करणत्वम्। आत्मना मनःसंयोगस्य सर्वज्ञानेषु द्वारत्वात्। स्थूलविषयकमिव सूक्ष्मविषयकमपि मानसं प्रत्यक्षं यथायथमुपपुज्यते। स्वाप्नाः पदार्था अपि अन्तःकरणेन मनसा ग्राह्याकारा भोग्याकाराश्च गृह्यन्ते। सर्वेषां मानसं योगिजनतो न्यूनस्थितिकमपि योगिकल्पं हृत्सु निहितं यद् योगिसिद्धेश्वरमुक्तपरमेश्वरसाक्ष्यादिवत् सर्वमपि साक्षात्करोति ॥ प्रतिभया वेत्ति। प्रातिभं ज्ञानं सर्वविषयं सर्वथाविषयं वर्तते। द्रव्यगुणक्रियागताः शक्तयोऽपि मानसग्राह्याः। संस्कारसाक्षात्कारात् पूर्वजातीयताज्ञानमपीति योगिभिरुक्तम्। अदृष्टं धर्माऽधर्मौ न साक्षात्क्रियेते—इति सर्वसिद्धम्। तस्मात् ज्ञानादयो गृह्यन्ते, तद्भावास्तत्संसर्गास्तद्धर्मा अपि च यथायथं योग्याः साक्षात्क्रियन्ते, साक्षाद्गृह्यन्ते। योगीश्वराणां सर्वस्य चैतन्यदृग्विषयत्वं, साक्षिदृग्विषयत्वं सर्वस्य। विशिष्टपरब्रह्मदृग्विषयत्वं सर्वस्येति नित्यसाक्षात्कारवतो न द्वाराऽपेक्षा। सुखदुःखेच्छाद्वेषज्ञप्तिकृतिसंस्कारसंख्यापरिमाणपृथक्त्वसंयोगविभागाऽच्छत्वद्रवत्वस्वापकामभयमोहशूरत्वाद्या आत्मगता मानसग्राह्याः साक्षाद्ग्राह्याः। आन्तरिक्याया मायायास्त्रयो गुणाः सत्त्वरजस्तमोरूपास्तत्संसर्गास्तद्धर्माद्यास्तदभावाद्या अपि मनोग्राह्याः। बाह्यास्तु सत्त्वादयो बाह्येन्द्रियग्राह्या यथायथं मन्तव्याः ॥

मनःसंयोगेनाऽऽत्मप्रत्यक्षम् , मनःसंयुक्तसमवाये-नाऽऽत्मत्वाक्तगुणशक्त्यादीनां यथायथं प्रत्यक्षम् , साक्षिणः स्वप्रत्यक्षं चैतन्यतादात्म्येन, मानसप्रत्यक्षं तु मनःसंयुक्ताऽधिष्ठातृत्वेन मनःसंयुक्तसंयोगेनेति यावत् । उपाध्यादीनां तु मनःसंयुक्तसमवेतविशेषण-ताद्यैर्मानसप्रत्यक्षं सम्पद्यते ॥ बाह्ये तु आत्मनो मनसा, मनस इन्द्रियैः, इन्द्रियाणां विषयैः संयोगात् , विषयेषु तु संयुक्तसमवेतत्वविशेषणत्वाद्यैर्वर्तमानानां तथातथाविधपारम्परिकसम्बन्धैः प्रत्यक्षं सम्पद्यते ॥ प्रत्यक्षसामान्यं प्रति त्विन्द्रियत्वेन कारणत्वम् , प्रत्यक्षविशेषान्प्रति तत्तदिन्द्रियमनःसंयोगाः कारणा-नि । विषयसंयोगाः सुतरामपेक्षिताः, तत्र संयुक्त-समवेतस्वरूपा यथायथं योक्तव्याः ॥ ३२७ ॥

**चाक्षुषं चक्षुषा जन्यं रूपरूपत्ववरूपिगम् ।**
**उद्भूतं गृह्यते तद्वद्द्रव्यादि गणना पृथक् ॥३२८॥**
**संयोगश्च विभागश्च परत्वं चाऽपरत्वकम् ।**
**स्नेहो द्रवत्वं शक्तिश्च परिमाणं क्रिया तथा ॥३२९॥**
**योग्यवृत्तयः संसर्गा धर्माश्च विरहास्तथा ।**
**स्वच्छत्वं रूक्षताऽध्यक्षा रूपाऽऽलोकाऽन्वयाश्च वै ॥**
**महत्त्वस्याऽपि योगात्तत्तदैकत्र न चेद् वृथा ।**
**दोषाऽभावास्तथा तत्र हेतवोऽपि यथायथम् ॥३३१॥**

**चाक्षुषमिति** । चक्षुर्जन्यं चाक्षुषप्रत्यक्षं द्रव्यस्य चक्षुः संयोगाज्जायते, द्रव्यगुणक्रियाधर्मप्रत्यक्षं चक्षुः संयुक्तसमवायेन, गुणत्वादिप्रत्यक्षं चक्षुःसंयुक्तसमवेत-समवायेन, शक्तिप्रत्यक्षमपि यथायथं तथा, शक्ति-त्वप्रत्यक्षं तु चक्षुःसंयुक्तसमवेतसमवेतसमवायेन जायते, द्रव्यगुणकर्मशक्त्यादिसंसर्गाणां प्रत्यक्षं यथा-योग्यसम्बन्धैर्भवति । तत्तदभावानां प्रत्यक्षे संयुक्ता-दिविशेषणतादयो हेतवः । तथा उद्भूताः स्थूला उद्भूतरूपवन्तो गृह्यन्ते । योग्याः–स्थूला ॥ **रूपाऽऽलोकेति** । विषयस्य घटादेः प्रत्यक्षे सामानाधिकरण्येन घटे यत्र चक्षुःसंयोग आलोकसंयोग उद्भूतरूपं महत्परिमाणं च ॥ **एकत्रेति** । एकप्रदेशावच्छेदेन मिलिताः साक्षाद्वा परम्परया कारणानि भवन्ति । घटप्रत्यक्षे यद्यालोकसंयोगः कारणं न स्यात्तदाऽन्ध-कारेऽपि स दृश्येत, यद्युद्भूतरूपं कारणं न स्यात्तर्हि पिशाचादिरपि दृश्येत, यदि महत्परिमाणं कारणं न स्यात्तदा द्व्यणुकमपि दृश्येत, यदि सन्निकर्षाः कारणानि न स्युस्तदाऽसम्बद्धमपि दृश्येत, एवं द्रव्य-गुणक्रियाशक्तिधर्माऽभावादीनां तत्र तत्र रूपादिनिष्ठ-कारणता तर्केणाऽऽपादनीया भवति । ऊष्मा त्वचा गृह्यते न चक्षुषा, अनुद्भूतरूपत्वात् । प्रभा चक्षुषा गृह्यते न त्वचा, अनुद्भूतस्पर्शवत्त्वात् । स्वाप्नाः पदार्था मनसा गृह्यन्ते, न बाह्यकरणैः । तस्मात् विशेषकरणान्येव स्वस्वविषयग्राहकाणि, न तु सर्व-सामान्यग्राहकाणि ॥ **वृथेति** । यत्र न्युब्जे कृते घटेऽ-न्तर्गत आलोकसंयोगः, बहिरन्धकारे चक्षुःसंयोगो महत्त्वादिसम्बन्धश्च, तत्र घटस्य न चाक्षुषं भवति, एकप्रदेशावच्छेदेन तत्तत्कारणकूटाऽभावात् । तस्मा-त्कारणत्वं सदपि वृथा स्यात्, फलाऽभावात् । अतो यदवच्छेदेन चक्षुःसंयोगस्तदवच्छेदेनोद्भूतरूपाऽऽ-लोकसंयोगमहत्त्वानि कारणानि, तानि फले न व्यभिचरन्ति ॥ **दोषाऽभावेति** । प्रत्यक्षेऽतिदूरत्वमति-सामीप्यमिन्द्रियघातो मनोऽनवस्थितिः सौक्ष्म्यमभि-भवो व्यवधानमसंसर्गोऽन्यतमकारणानुपस्थितिश्चेति दोषा भवन्ति, अतो दोषाऽभावोऽपि प्रत्यक्षे कारण-मास्थेयः ॥ भ्रान्त्यादौ पित्तदूरत्वाद्या दोषाः सर्वैरङ्गी-क्रियन्ते ॥ ३२८-३३१ ॥

**रूपं स्वयं तु तादात्म्यात्स्वाऽध्यक्षे कारणं ह्यपि ।**
**घटेऽपि विषयिज्ञानं तादात्म्येन घटस्थितेः ॥३३२॥**

**रूपं स्वयमिति** । रूपे रूपं तादात्म्येन वर्तते, तत्र चाक्षुषज्ञानं विषयतया सम्पद्यते वर्तते च, तत्र रूपाऽ-ध्यक्षे कार्ये रूपं तादाम्येन विषयं भवेत्, स्वाश्रय-समवेतत्वाऽपेक्षया तादात्म्यस्य लाघवम् । विशिष्टज्ञाने विशेषणज्ञानस्य प्राक्क्षणवृत्तितया कारणत्वेन द्रव्य-मनादाय प्रागेव रूपे चक्षुःसन्निपाताऽऽवश्यकत्वम् । व्यतिरेकस्थले वायौ रूपं नास्ति तत्र चक्षुःसन्निपा-तोऽपि नास्ति, प्रभायां रूपमस्ति यत्र चक्षुःसन्निपा-तोऽवश्यं प्रागस्ति । अथ वायावपि त्वचा स्पर्शे प्राक्सन्निपातः स्यात्, कर्णस्य शब्दे प्राक्सन्निपातः स्यात् । एवं द्रव्याऽनाश्रयेण गुणप्रत्यक्षं ज्ञानप्रत्यक्षवत् स्यादिति चेत्, । का हानिः ?, बुद्धिवृत्त्याऽऽत्मनः

साक्षात्कारश्चिरेण श्रुतिप्रणालिकयाऽङ्गीकारात् । अन्यथा श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्तव्य इति व्याहतिः स्यात् । यथा च कर्णाऽऽकाशेनेन्द्रियेण शब्द आश्रयं विनाऽपि द्राक् तादात्म्यद्वारको गृह्यते समवायद्वारको वा गृह्यते, तथाविधग्रहणेऽबाधात् । तस्माद् रूपं तादात्म्येन, द्रव्यग्रहे रूपं समवायेन, रूपस्य गुणतया ग्रहे स्वाश्रयसमवायेन ग्रहणे बाधकाऽभावात्, साक्षात्परम्परा वा सन्निकर्षाणां यथायोगं स्वीक्रियत एव, अतो विविधाः सन्निकर्षाः अपृथक्सिद्धाः पृथक्सिद्धाश्च यथायोगमनैकान्तिकतापरिहारार्थां उपयुज्यन्ते ॥

जात्याकृतिव्यक्तयः पदार्थाः शक्या इत्यभिप्रायोऽपि विशेषणघटत्वादिनिर्विकल्पकस्य घटेन सहैव जायमानत्वे दार्ढ्यमावहति, संसर्गोऽपि प्रागेव तत्र गृहीतो भवतीति तार्किकाणां मतम्, ततश्चक्षुषा स्वतन्त्रं घटघटत्वसमवायानां व्यूहज्ञानं चतुर्थीविषयतावत् स्वीकृतमेव, तदानीं घटत्वे चक्षुःसंयुक्तसमवायो नोपयुक्तः, समवाये चक्षुःसंयुक्ताऽनुयोगिताको वा घटत्वप्रतियोगिकोऽपि नोपयुक्तः, निर्विकल्पे विविधविषयताया अस्वीकारात् ॥ अथ निर्विकल्पकस्यापि विशिष्टज्ञानतामते तु प्रथमक्षणे एव त्रिविषयतान्वितं ज्ञानं तज्जायते, ततस्तादात्म्यं वाऽन्वययोग्यतया संयोगः संयुक्तसमवायस्तादात्म्यं वा स्वरूपश्चेति तत्र विषया एव भवन्तीति नैतावता पदार्थक्षतिर्वा न्यायदूषणम् , यथासंभवपदार्थानुमतिप्रामाण्यात् ॥

तस्मात् संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, संयुक्तसमवेतसमवेतसमवायः, तत्र तत्र केवलसमवायः, समवेतसमवायः, तत्र तत्र च संयुक्तविशेषणता, समवेतविशेपणता, इत्यादिवत् , तादात्म्यं, तादात्म्याश्रयः, तादात्म्याश्रयसमवायः, तादात्म्याश्रयसमवेतसमवायः, तादात्म्यसमवेतः, तादात्म्यसमवेतसमवायः, तादाम्यसंयोगः, तादात्म्यवृत्तिसमवेतविशेषणता चेत्यादिसन्निकर्षा अपि प्रामाणिका हेतुभूता एव मन्तव्याः । अतः पटरूपस्य स्वाश्रयसमवायित्वेनाऽधःप्रणाल्या मतेत संसर्गेण तन्तुषु स्थापनेन तन्तुरूपेऽसमवायिकारणता साध्यते । अतोऽनुयोगित्वाद्या अपि सम्बन्धाः स्वीक्रियन्ते । दूरतमद्रव्ये स्थिता अपि सूर्यक्रियाऽधःप्रणाल्या स्वाश्रयतपनसंयोगिसंयोगेन पिण्डादौ स्थाप्यते परत्वादौ कारणीक्रियते च ॥ तस्मात् षोढा सप्तधाऽधिकधा अपि संसर्गा अंगीकार्याः । कालिकदैशिकस्वरूपा अभावीयाः स्वरूपा असंख्या यथापदार्थस्थितिमुन्नेयाः । अतः—

सम्बन्धाः—संयोगः, समवायः, स्वरूपः, तादात्म्यः, कालिकः, पर्याप्तिः, विशेषणता चेति सप्तधा अपि यथापेक्षं मिलिता अनेके मन्तव्याः । यथासंभवं ते हेतवः ॥

अथ—आत्ममनःसंयोगस्य ज्ञानसामान्ये कारणता तु आत्मनः आगन्तुकज्ञानमतेन, न तु नित्यज्ञानिज्ञानद्रव्यस्वरूपात्मनः सार्वदिकचैतन्यस्वरूपिमतेन । ततः सुषुप्तौ स्वापेऽपि स्वस्य स्वरूपभानस्य निराबाधात् स्वप्रकाशस्याऽऽत्मनोऽप्रकाशत्वे बाधादेव नित्यसाक्षित्वे विरोधादेव नाऽऽगन्तुकज्ञानवत्त्वमात्रम् । आगन्तुकज्ञानवत्तामतेनैव सुषुप्तावात्ममनःसंयोगाऽभावाज्ज्ञानरहितत्वं मानसाऽप्रत्यक्षं चाऽऽत्मनोऽप्यप्रत्यक्षं वर्णितं तार्किकैः । जायमानज्ञानसामग्र्यभावेनाऽनित्यज्ञानाऽभावत्वे तार्किकाऽभिप्रायः । आत्ममनःसंयोगस्य सार्वदिकज्ञानसामान्यकारणत्वम् , जाग्रति तु विशेषविशेषेन्द्रियमनःसंयोगस्य ज्ञानेषु कारणत्वम्, शरीरनाडीषु सर्वत्र चर्म तु विद्यत एव, स्वाप्नाः पदार्थाः पुण्यादिसहकृतज्ञानविमर्शोपादानकाः । तत्र सर्वपदार्थानां ज्ञानात्मकत्वात् ज्ञानतादात्म्येन मनसा संयोगेन विषयत्वेन वा सम्बन्धेन ग्रहणात् परम्पराविशिष्टाः संसर्गास्तत्र नोपयुक्ताः । स्वप्नोत्पन्नशरीरेन्द्रियविषयाणामेकपदार्थत्वात् तद्ग्रहणे तादात्म्यस्यौचित्यात् । जाग्रति तु बाह्यविषयाऽपेक्षाः संसर्गा अपेक्ष्यन्ते, अतः सन्निकर्षाणां विस्तारः॥

पदार्थानां स्वरूपसत्ज्ञानपक्षे मीमांसकैरपि घटे प्राकट्यात्मिका ज्ञातता ज्ञानजन्या ज्ञानग्राह्या ज्ञानप्रामाण्यसाधिका च निर्विशेषणाऽङ्गीक्रियते । वेदान्तिभिर्ब्रह्मणि परिच्छिन्नेऽविद्यावृत्तिरंगीक्रियते । योगिभिः समाधौ निरुपक्रमं प्रातिभं ज्ञानमङ्गीक्रियते, दिव्याः प्रातिभश्रावणवेदनास्वादवार्ता जायन्ते, तत्र सन्निकर्षा व्यभिचार्यन्ते, असन्निकृष्टा अपि गृह्यन्ते, तानि ज्ञानानि दिव्यानि वा न स्वग्रहेऽन्वयप्रकारादिप्राक्त्वाऽपेक्षावन्ति, किन्तु स्वतादात्म्यमात्रं साक्षा-

त्स्वरूपाणि जायन्ते ।। अतो विशिष्टज्ञाने विशेषणज्ञानं कारणं, विशेषणे यज्ज्ञानं तद्विशेषणतावच्छेदकगोचरं ज्ञानम्, अवच्छेदकं च निष्प्रकारकतया औपयोगिकमिति तस्य न सप्रकारताकत्वाऽपेक्षणम् । इति सर्वमेतद् बाह्यक्रमिकधर्मधर्मिभावसापेक्षज्ञानजनने तार्किकाणां नियमः । न तु सर्वत्र । तथा च तादात्म्याद्या अपि सन्निकर्षा युक्ताः । तेऽपि उद्भूता ग्रहणे समर्थाः । 'यद्ययं प्रत्यक्षः सन्निकर्षः प्रत्यक्षप्रयोजकसन्निकर्षवत्ता चेति स्यातांम् तर्ह्येव तत्पदार्थ उपलभ्येत' इति आपादनविषयता एव उद्भूतत्वं तदभावः अनुद्भूतत्वमिति ।। ३३२ ।।

**इन्द्रस्य शक्तयो ज्ञानात्मिक्य इन्द्रियसंज्ञिकाः ।**
**तभिश्चैतन्यरूपाभिश्चेत्यन्तेऽथा जडा अपि ।।३३३।।**

**इन्द्रियस्येति** । चिदात्मनश्चेतनस्य नित्यचैतन्योद्भवाः शक्तयश्चैतन्यज्ञानात्मिक्य एव स्वस्वस्वच्छगोलकमाप्ता इन्द्रियाणि प्रोच्यन्तेऽतः सुप्रकाशात्मिकाभिस्ताभिरप्रकाशाः पाषाणादयोपि विषयत्वेन सप्रकाशाः क्रियन्ते साक्षात्क्रियन्ते, विषयतासम्बन्धेन गृह्यन्ते, ज्ञानद्रव्यात्मकवृत्तिमतेन तु विषयाणां संयोगादिभिर्विविधैः सन्निकर्षैर्ग्रहणं क्रियते, अतः सद्वारकम् अद्वारकं वा ज्ञानं जन्यते । योगिनां तु संस्कारसाक्षात्करणात् पूर्वजातिज्ञानं भवतीत्युक्तम् । भावना वासना वा चिरञ्जीवी संस्कारः स्वाश्रये विना सन्निकर्षं साक्षात्क्रियते, तादात्म्यो वा तत्रोपयुज्यते, स्वाश्रयवृत्तित्वरूपो वा स्वाश्रयसंयुक्तसमवायो वा स्वात्मक एव संस्कारपिण्डः साक्षात्क्रियते । तत्राऽलौकिकत्वे तु दिव्याः सन्निकर्षाः स्वीकृताः सर्वेः । आत्मीयास्ते आविद्यका वा सिद्धिस्वरूपा वा पुण्यप्रचयपरिणामा वा चैतन्यशक्तयो वा स्वीकृताः । ते च सूक्ष्माश्च स्थूलाश्च सन्निकर्षा सन्निकृष्टसन्निकर्षा निरूप्यन्ते । वस्तुतस्तु परपरास्वरूपाः शक्यसम्बन्धात्मकलक्षणावत् सृज्यन्ते ।। ३३३ ।।

**धर्मस्वरूपो ज्ञप्त्यात्मा सिद्धिरूपोऽथ शाश्वतः ।**
**एवं निसर्गाः संसर्गाश्चत्वारोऽलौकिका मताः ।।३३४**

**धर्मेति** । घटे चक्षुषा घटत्वं सूर्ये सूर्यत्वं धर्मी जातिरुपाधिश्च संयुक्तसमवेततया गृह्यते, घटत्वं जगतां सर्वघटेषु जातिरूपमेकं व्यापकः सम्बन्धः सर्वसूर्येषु ब्रह्माण्डान्तरवर्तिषु सूर्यत्वं च व्यापको धर्मात्मकसम्बन्धो यत्र मतस्तत्र तद्वतां घटानां सूर्याणां च चाक्षुषमपि प्रत्यक्षं सर्वे घटाः सर्वे सूर्या इति जायते, एकस्मिन् धूमे दृष्टे धूमत्वेन सन्निकर्षेण सर्वे धूमाः साक्षात्कृता भवन्ति । एवं तन्तवो वस्त्रवन्त इति वस्त्रात्मकधर्मेण तद्वचूहीयवस्त्राणां कालान्तरीणदेशान्तरीणानां विलक्षणश्चाक्षुषसाक्षात्कारो भवति, विद्युन्नाटकीयपात्राणां दर्शनेऽपि तथैव कालान्तरीणदेशान्तरीणतत्पदार्थानां साक्षात्कारो भवतीति चाक्षुषः सः साक्षात्कारः, नहि स मानसः, चक्षुरपेक्षारहितत्वाऽभावात्, संस्काराऽपेक्षाया अभावात्, अन्तिकपदार्थाभावाच्च, स विलक्षणोऽलौकिकसाक्षात्कारः, तत्र 'चक्षुःसंयुक्तघटसमवेतघटत्ववत्तासन्निकर्षोऽलौकिको मन्यते । अथ—

**ज्ञप्त्यात्मेति** । मधुरा शर्करेत्यत्र मधुरो रसः स्वरूपसन् रसनया ज्ञातः, स मधुर एव ज्ञाने विषयितया वर्तमानो यत्र शर्करा तत्र स मधुर इति श्वैत्यमिति च ज्ञानविषयत्वसंसर्गेण साक्षात्क्रियते, कालान्तरीणदेशान्तरीणमाधुर्यज्ञानं रासनं साक्षादेवाऽलौकिको ज्ञानसम्बन्धो यत्र तत्र तत्र जायते ।।

**सिद्धिरूप इति** । योगाभ्यासजन्याः सिद्धयो दूरदर्शनदूरश्रवणदूरस्पर्शदूररसास्वादनदूरघ्राणनाद्या अपि ऐश्वर्याणि सामर्थ्यानि शक्तयश्च संसर्गा भवन्ति, समाधिमतां ध्यानसिद्धय एव संसर्गाः परकायप्रवेशाद्याः परलोकभ्रमणाद्या अपि अस्मितावृत्तिरूपयोगसम्बन्धाः धर्ममेघसमाधिरूपा अपि संसर्गाः संयमसंसर्गाश्चाऽलौकिकवस्तुपदार्थप्रत्यक्षकारिणो भवन्ति । ईश्वरतादात्म्ययोगस्तु सार्वलौकिकसंसर्गः सार्वलौकिकसाक्षात्कारकारकः । बहिर्जत्यादिसंसर्गः । आन्तरं मानसं तु ज्ञानमात्रसंसर्गजन्यं प्रत्यक्षम् । मायासृष्टेर्विराट्स्वरूपस्य ब्रह्माण्डानां ब्रह्मलोकस्य तेजसां मुक्तानां च साक्षात्कारास्तु मानसा ज्ञानसंसर्गसम्पाद्या भवन्ति । धर्मज्ञानं धर्मिणं साक्षात्कारयति । ज्ञानलक्षणसंसर्गस्तु स्वविषयं साक्षात्कारयति । धूमत्वेन धर्मेण धूलि-

पटलज्ञानोत्तरं तदनुव्यवसायो ज्ञानलक्षणसंसर्गेण धूमत्वेन धूलिपटलविषयको भवतीति ॥ **शाश्वत इति** । परमेश्वरस्यैव विष्णुवासुदेवादीनां नित्य सर्वदर्शित्वसंसर्गस्तु स्वनित्यप्रत्यक्षतादात्म्य एवेति ते सर्वं पश्यन्ति ॥ ब्रह्मद्रष्टारो नित्ययावत्साक्षात्कारवन्तः ॥ ३३४ ॥

**अथाऽन्ये सन्ति योगानां संयमो, ब्रह्मवादिनाम् ।**
**निदिध्यासनरूपश्चोपासना भक्तिसंजुषाम् ॥३३५॥**
**वृत्तिव्याप्तिस्त्वात्मजुषां प्रेमा दास्यत्वयोगिनाम् ।**
**ज्ञानं तत्त्वार्थमग्नानां पुण्यमैश्वर्यमीशिनाम् ॥३३६॥**

**अथाऽन्ये त्विति** । अन्येऽप्यलौकिका दिव्याः संसर्गाः सन्निकर्षा असन्निकर्षा अपि सन्निकर्षत्वभाजः स्वतन्त्रमताः सन्ति, योगशास्त्रे संयमः सर्वार्थसाक्षाद्दर्शकः, त्रयं धारणाध्यानसमाधिरूपमेकत्र कृतं संयमरूपं, तेन सर्वं साक्षात्क्रियते ॥ अथ ब्रह्मवादिनामेकमेव ब्रह्मतत्त्वं सत्यमिति शास्त्राऽऽरूढानां निदिध्यासनम् 'अहं ब्रह्माऽस्मी'ति सततस्फूर्तिरूपं ध्यानं दिव्यः सन्निकर्षः, तेन ब्रह्मदृष्ट्या सर्वं भासते । अथ भक्तिपराणां भक्तानां भगवतो दिव्यमूर्तेर्नारायणस्योपासना सततस्मृतिसम्बन्धो दिव्यस्तेन भगवत्तादात्म्ययोगेन सर्वं भासते ॥ अथाऽऽत्मज्ञानिनां व्यापकः 'सोऽहमात्मे'ति एकात्मवादिनाम् आत्मनाऽऽत्मग्रहे निजतदात्मकदिव्यवृत्तिश्चरमा निजमात्रविषयिणी निजग्राहिका सर्वैकात्म्यदर्शिकाऽलौकिकसन्निकर्षरूपा, यथा सर्वं दृश्यते ॥ अथ दास्यादिभक्तिमतां प्रेमप्रवाहः स्नेहो निरवधिरलौकिकः सन्निकर्षः प्रेमपात्रं सर्वथा साक्षात्कारयति ॥ अथ पदार्थतत्त्वचिन्तकानां तत्त्वज्ञानं प्रमात्मकं सर्वदर्शिताऽऽपादकं सन्निकर्षरूपं भवति । अथ तपस्विनां व्रतिनां सदाऽऽराधनापराणां च पुण्यं धर्मोऽसीमतथाऽर्जितः सन्निकर्षो दिव्यो भवति सः सर्वमादर्शयति आपादयत्यपि च ॥ ऐश्वर्याणि दिव्याः सिद्धयः प्राकाम्येशित्ववाशित्वकामावसायित्वाद्याः सन्निकर्षा दिव्या ईश्वराणां भवन्ति हस्ताऽऽमलकदर्शनवत् सर्वलोकसृष्टिप्रदर्शका भवन्तीति । दिव्यं चक्षुःप्रभृति चापि सन्निकर्षनिभं भवति तदैश्वरयोगदर्शकं भवत्यर्जुनस्येवेति ॥ एवं त्रिकालदर्शित्वादिसामर्थ्यशक्तयोऽपि सन्निकर्षा बोध्याः । तैरेतैः बाह्यसाक्षात्कारा आन्तरसाक्षात्काराश्च जायन्ते । आकाराऽवभासकाः साक्षात्काराः । विनाऽऽकारं भानप्रदास्त्वनुमानाद्या इति बोध्यम् ॥ ३३५-३३६ ॥

**प्रमायाः करणं यद्यत् सद्वारं तत्प्रमाणकम् ।**
**इन्द्रियं मानसं सन्निकर्षद्वारा प्रमाणकम् ॥३३७॥**
**अनुमानं वक्ष्यमाणमुपमानमपि स्ववत् ।**
**प्रमाणं सदृशं हेतु जनयत्युपमां प्रमाम् ॥३३८॥**

**प्रमाया इति** । अद्वारकं कारणं द्वारम्, सद्वारकं कारणं करणम्, तच्च प्रमाणम्, तानीन्द्रियाणि प्रत्यक्षप्रमायां करणानि, मनोऽपीन्द्रियं करणम् । अलौकिकदिव्यप्रमासु साक्षाद्रूपासु त्विन्द्रियाण्येव प्रमाणानि ॥ अनुमित्यादिषु धूमत्ववह्नित्वादिधर्मलक्षणा उपयुज्यते । अनुमानं सविस्तरं वक्ष्यते ॥ **सदृशमिति** । स्वसदृशोऽन्योऽपीति सर्वेषामनुभवः स्ववदिति यथा, तथा-एतत्सदृशोऽन्य इत्यपि, तत्, उपमितिं प्रमां प्रत्युपमानं करणं प्रमाणम् ॥ ३३७-३३८ ॥

**अरण्ये गवयद्रष्टा नागरायोपदिष्टवान् ।**
**'गोसदृशो गवयाऽऽख्यः' श्रावणाऽनुभवस्त्वयम् ॥**
**संस्कारस्तत्समो जातो नागरस्य गिरौ गतिः ।**
**गोसादृश्याऽन्वितोऽयं गवयवाच्यत्ववानिति ॥३४०**
**प्रत्यक्षो गवयो जातः, प्रत्यक्षं तूपमानकम् ।**
**'गोसदृशो गवयाऽऽख्यः स्मृति' द्वारं तदा मतम् ॥**
**उपमा 'गवयो गवयवाग्वाच्यः' प्रमा फलम् ।**

**अरण्ये इति** । उपमितिप्रमाणादीनि निरूपयति— **गवयद्रष्टेति** । कदाप्यदृष्टगवयाय नागरिकाय वार्ताप्रसंगे आरण्यकेन गवयप्रष्टा केनचिदुक्तम्—'गोसदृशो गवयपदवाच्यः' इति,-अयं श्रावणाऽनुभवः— 'गवयपदवाच्यत्वप्रकारकगोसादृश्यावच्छिन्नविशेष्यकः । उक्तवाक्यश्रवणजन्यवाक्यार्थाऽनुभवोत्तरम्, नागरिकोऽरण्यं गत्वा गवयपिण्डं ददर्श, तस्मिन् गवयपिण्डे दर्शनविषये गवयव्यक्तित्वावच्छिन्नविशेष्यकगोसादृश्यप्रकारकं प्रत्यक्षं तत् उपमितिकरणम

उपमानम् । ततः सादृश्यप्रकारकव्यक्तिविशेष्यकोद्बोधकनिश्चयजन्यं 'गोसदृशो गवयपदवाच्य' इत्युपदेशवाक्यानुभवसमानाकारसंस्कारद्वारा 'गोसदृशो गवयपदवाच्य' इति स्मरणम् व्यापारः। स्मरणानन्तरं गवयपदवाच्यत्वप्रकारक-गवयविशेष्यकं ज्ञानं 'गवयो गवयपदवाच्य' इति सामान्या प्रमा गवये गवयपदशक्तिनिश्चयरूपा-उपमितिः जायते। शक्तिज्ञानविषयिणी नेयं प्रत्यक्षरूपा, नाऽनुमितिरूपा च, व्याप्तिज्ञानाऽभावात्, किन्तु विलक्षणा फलम् । गवयान्तरेष्वपि गवयपदवाच्यताग्रहो निराबाधः ॥ ३३९-३४१ ॥

**त्रेधोपमानं सादृश्यविशिष्टपिण्डदर्शनम् ॥३४२॥**
**असाधारणधर्मात्मविशिष्टपिण्डदर्शनम् ।**
**तृतीयं चापि वैधर्म्यविशिष्टपिण्डदर्शनम् ॥३४३॥**

**त्रेधोपमानमिति** । उपमानं त्रिविधम् एकं सादृश्यविशिष्टपिण्डदर्शनं करणम् । द्वितीयं तु—'भल्लुकः कीदृगि' तिपृष्टे, 'पञ्चाङ्गुलिविशिष्टपादचतुष्टयसम्पन्नो लम्बनासिकालसन्मुखो दीर्घोऽनत्युच्चैस्तरः कृष्णदीर्घरोमाकुलितशरीरो भल्लुकः'—इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशाऽसाधारणधर्मादिविशिष्टं पिण्डं पश्यन्, उपदेशवाक्यार्थं स्मरन् 'भल्लुको भल्लुकपदवाच्य' इत्युपमिनोति ॥ तृतीयं तु—'सिंहः कीदृगि' तिपृष्टे 'करशृंगपक्षखुरादिरहितशरीर' इति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे करशृंगादिधर्मविरुद्धधर्मविशिष्टपिण्डं पश्यन्, उपदेशवाक्यार्थं स्मरन्, 'सिंहः सिंहपदवाच्य' इत्युपमिनोतीति ॥

तर्कसाम्प्रदायिकास्तु—अतिदेशवाक्यार्थशाब्दबोधः करणम् । अतिदेशवाक्यार्थस्मरणं व्यापारः। सादृश्यविशिष्टपिण्डदर्शनं तु सहकारि । 'गवयो गवयपदवाच्य' इत्युपमितिरिति वदन्ति ॥

गंगेशोपाध्यायास्तु—सादृश्यज्ञानमात्रं करणम् 'गोसदृशो गवय' इति । विशेषणज्ञानविधया तज्जन्यम् उपदेशवाक्यार्थज्ञानं सादृश्यविशिष्टपिण्डदर्शनं च द्वयमेव व्यापारः। 'गवयो गवयपदवाच्य' इत्युपमितिरिति निरूपयन्ति ॥

अन्ये तु—वाक्यज्ञानं करणम्, वाक्यार्थानुभवो व्यापारः, 'गवयो गवयपदवाच्य' इत्युपमितिरिति विवृण्वन्ति ॥ ३४२-३४३ ॥

**कार्यकारणभावस्य ज्ञानं चोपमितिस्तथा ।**
**कार्यकारणभावाख्यवाक्यस्फूर्तिर्हि कारणम् ३४४**
**तथाविधौषधिसाक्षात्कारोऽत्र करणं मतम् ।**

**कार्यकारणभावस्येति** । रघुनाथशिरोमणयस्तु—कार्यकारणभावज्ञानमप्युपमितिः, तद्यथा—'मुद्गपर्णसदृशौषधिर्ज्वरहरे' ति वैद्यवाक्यं श्रुत्वा तदर्थबोधानन्तरं 'मुद्गपर्णसादृश्यविशिष्टौषधिदर्शनं' तत्करणम् । मुद्गपर्णसादृश्यविशिष्टविशेष्यकज्वरहरत्वप्रकारकोपदेशवाक्यार्थस्मरणं कारणं व्यापारः । तदनन्तरम् 'इयं ज्वरहरे' तिकार्यकारणभावज्ञानम् उपमितिरिति उपमिन्वन्ति ॥ मीमांसकाः—'गोसदृशो गवयपदवाच्य' इत्युपमिन्वन्ति ॥ संज्ञासंज्ञिसम्बन्धज्ञानत्वमुपमितित्वमिति तल्लक्षणम् । उपमितित्वजातिमत्त्वमुपमितेर्लक्षणम् । 'अयं गवयपदवाच्य' इत्युपमितित्वे देशान्तरीयकालान्तरीयगवयेषु गवयपदवाच्यत्वग्रहो भज्येत । पदस्य तदर्थे शक्तिज्ञानं सा उपमितिः प्रमा, इति सर्वसम्मतम् । सादृश्यं तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । धर्मज्ञानं धर्मिणि तत्पदवाच्यताज्ञानं जनयतीति ॥ ३४४ ॥

**विशेषतश्चोपमितिरयं पिण्डोऽस्ति गोसमः ॥३४५॥**
**धेनुर्मदीया त्वेतत्सदृशीत्युपमितिस्तथा ।**
**अत्र प्रकारधीर्व्यत्यासेन द्वारं भवत्यपि ॥३४६॥**

**विशेषत इति** । विशेषप्रश्ने विशेषोपमितिस्तु 'अयं गवयो गोसदृश' इत्यपि व्यक्तिविशेषस्य भवति । किञ्च—सादृश्यप्रमायाः करणमप्युपमानं भवति । नागरिको दृष्टगोपिण्डो वनं गतो गवयेन्द्रियसन्निकर्षे सति भवति 'अयं पिण्डो गोसदृश' इति गोनिरूपितगवयपिण्डनिष्ठसादृश्यज्ञानवान्, एतज्ज्ञानं करणम् । करणानन्तरम् व्यत्यासेन प्रकारज्ञानं द्वारम् । ततः 'अनेन सदृशी मदीया गौ'रिति गोनिष्ठगवयसादृश्यज्ञानं गवयपिण्डनिरूपितगोनिष्ठसादृश्यज्ञानं फलमुपमितिः । नैतत्प्रत्यक्षप्रमा, गवेन्द्रियसन्निकर्षाऽभावात् । नाऽनुमा, गोनिरूपितगवयनिष्ठसादृश्यस्य गवि पक्षेऽ

वृत्तेस्तल्लिङ्गत्वाऽभावात्, अनुमानाऽनवतारे गोनिष्ठस्य गवयसादृश्यज्ञानस्याऽनवतारात्, उपमिनोमीत्यनुव्यवसायप्रामाण्याच्च ।। ३४५–३४६ ।।

**अर्थोपपाद्यज्ञानेनोपपादकप्रकल्पनम् ।**
**अर्थाऽऽपत्तिः फलं चोपपाद्यधीः करणं मता ।। ३४७ ।।**

अर्थापत्तिं निरूपयति—**अर्थोपपाद्येति** । उपपाद्यज्ञानेन उपपादकज्ञानम् अर्थापत्तिः । उपपाद्यज्ञानं करणम् । उपपादकज्ञानं फलम् । उपपादकाऽभावव्यापकाऽभावप्रतियोगित्वम् उपपाद्यत्वम् । उपपाद्याऽभावव्याप्याऽभावप्रतियोगित्वम् उपपादकत्वम् । 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र दिवाभोजनाऽभाववान् पीनत्ववांश्च देवदत्त इति बोधस्तु पीनत्वकार्यस्य भोजनात्मककारणस्याऽभावेऽसंभवेनाऽन्वयव्यभिचारपराहतत्वेन न यथार्थः। दिवापदम् अभुक्तिसमयं ज्ञापयति, स्वेतरसमयं रात्र्यात्मकं भुक्तियुक्तं पीनत्वबलेन कल्पयति । तत्र रात्रिभोजनमन्तरा दिवाभुक्तिरहितस्य पीनत्वाऽनुपपत्तेः पीनत्वमुपपाद्यं भवति, रात्रिभोजनाऽभावे पीनत्वानुपपत्तिरिति रात्रिभोजनमुपपादकम् । उपपादककल्पनं रात्रिभोजनस्यार्थस्याऽऽपत्तिः कल्पनमापादनम् अर्थापत्तिः प्रमा फलम् । करणे पीनत्वज्ञाने उपपाद्यज्ञाने त्वर्थस्य रात्रिभोजनात्मकोपपादकज्ञानस्य कल्पना यस्माद् दिवाभोजनाऽभावविशिष्टपीनत्वज्ञानात्, इति पीनत्वज्ञानमुपपाद्यज्ञानं करणं प्रमाणम् अर्थापत्तिप्रमाणं भवति । उपपादकं कारणम्, उपपाद्यं कार्यमिति चात्र कार्येण पीनत्वेन कारणस्य रात्रिभोजनस्य कल्पनं कार्यते । अर्थापत्तिकरणेनाऽर्थापत्तिप्रमा जायते–इति ।। ३४७ ।।

**दृष्टाऽर्थापत्तिरेकाऽन्या श्रुतार्थापत्तिरित्यपि ।**
**अभिधानाऽनुपपत्त्यभिहिताऽनुपपत्तिके ।। ३४८ ।।**

अर्थापत्तिद्वैविध्यमाह—**दृष्टार्थेति** । एका प्रमा दृष्टार्थापत्तिः, द्वितीया प्रमा श्रुतार्थापत्तिश्च । तत्र दृष्टार्थापत्तिर्यथा दूरपुरोवर्तिषु मरुमरीचिकासु 'इमानि तृषानिवर्तकजलानी' तिप्रतिपन्नानां तृषानिवर्तकजलानां पश्चात् 'नेमानि तृषानिवर्तकजलानी' ति तासु निषिध्यमानत्वं घट्टत्वे तृषानिवर्तकत्वे सति अनुपपन्नमिति तृषाऽनिवर्तकजलानां तृषानिवर्तकघट्टजलभिन्नत्वं कल्पयतीति । घट्टजलभिन्नत्वमुपपादकं करणम्, निषिध्यमानत्वम् उपपाद्यं कार्यं फलम् ।। **श्रुतार्थापत्तिर्यथा**—'एकेन विज्ञातेन सर्वं विज्ञातं भवती' त्यत्र श्रुतस्य सर्वविज्ञानस्य विशिष्टैकविज्ञानाऽन्यथाऽनुपपत्त्या एकस्य विशिष्टैकत्वं कल्पयति । विशिष्टैकविज्ञानम् उपपादकम् । सर्वविज्ञानमुपपाद्यम् ।। जीवी देवदत्तो गृहे नास्तीति श्रुत्वा जीविनो गृहाऽसत्त्वं बहिःसत्त्वं कल्पयतीति बहिःसत्त्वमुपपादकम्, गृहाऽसत्त्ववतो जीवित्वमुपपाद्यम् ।।

अथ श्रुतार्थापत्तिर्द्विधेत्याह—**अभिधानेति** । अभिधानाऽनुपपत्तिः, अभिहिताऽनुपपत्तिश्च ।। यत्र वाक्यैकदेशश्रवणेऽन्वयाऽभिधानाऽनुपपत्त्या अन्वयाऽभिधानोपयोगि पदान्तरं कल्प्यते, तत्र अभिधानाऽनुपपत्तिः । यथा 'द्वारमि' त्युक्तिश्रवणे द्वारनिष्ठकर्मतायाः साकांक्षत्वेन तद्योग्याऽन्वयाऽन्यथाऽनुपपत्त्या पिधानोपस्थापकपदं विनाऽन्वयाऽनुपपत्त्या 'पिधेहि' त्यादिपदाऽध्याहारं कल्पयति ।। पदान्तराऽध्याहार उपपादकः । अन्वय उपपाद्यः, स च निरूपकत्वादिः । यथा वा 'विश्वजिता यजेते' त्यत्र 'स्वर्गकाम' इति पदाध्याहारः कल्प्यते । स्वर्गकाम इत्युपपादकम् । यजनम् उपपाद्यम् ।। अथ **अभिहितानुपपत्तिर्यथा**—'स्वर्गकामो ज्योतिष्टोमेन यजेते' त्यत्र द्रुतविनाशिकर्मात्मकज्योतिष्टोमस्य कालान्तरभाव्यभिधेयस्वर्गकारणत्वाऽन्यथाऽनुपपत्त्या सम्बन्धात्मकमदृष्टं द्वारं कल्पयतीति । यागजन्याऽदृष्टमुपपादकम् । स्वर्गमुपपाद्यम् ।। यत्र व्यतिरेकव्याप्तिर्न स्मर्यते किन्त्वर्थापत्तिरुपतिष्ठते तत्रेयं प्रमाणं प्रमा च । अनेनोपपाद्येनेदमुपपादकं कल्पयामीत्यनुव्यवसायबलात् पृथगर्थापत्तिः प्रमाणं प्रमा च । पृथिव्यामितरभेदं साधयामि वा कल्पयामीति व्यक्तिभेदेनाऽनुव्यवसायस्वरूपभेदाद् उपधेयसंकरेऽप्युपाधेरसंकरात् नाऽनुमानाऽर्थापत्त्योर्मिथो गतार्थत्वम्, किन्तु स्वस्वबलेन पार्थक्यम् ।। ३४८ ।।

**अभावधीप्रतियोग्यनुपलब्धेर्हि वस्तुनः ।**
**यत्राऽऽपादनसम्भूतिस्तत्र प्रमाणता पृथक् ।। ३४९ ।।**

अनुपलब्धिप्रमाणमाह—**अभावधीरिति** । इन्द्रि-

यभिन्नत्वे सत्यभावप्रत्यक्षकरणत्वम् अनुपलब्धिप्रमाणत्वम्। अभावानामिन्द्रियैः प्रत्यक्षनिर्वाहेऽपि यत्रेन्द्रियप्रयोगं विनाऽपि वस्तूनामनुपलब्धिर्भवति तत्र वस्त्वभावो निर्णीयते, योग्याऽनुपलब्धेरभावग्राहकत्वम्। अनुपलब्धौ योग्यता बोध्या, सा च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपा। 'यद्यत्र घटः स्यात्तर्ह्युपलभ्येते' तितर्कः, अनुपलब्ध्या घटाऽभावः प्रमीयते। सोमवल्ल्यौषधिविशेषाऽभावोऽनुपलब्ध्या सर्वदा प्रमीयते। स्फीतालोकवति भूतले 'यदि घटः स्यात्तर्हि घटोपलब्धिः स्यात्' इत्यापादनसंभवेन तत्र घटानुपलब्ध्या प्रमाणेन घटाभावो गम्यते। अन्धकारे दोषे घटग्राह्यत्वाऽभावात् आपादनाऽभावात् नाऽनुपलब्धिरपि प्रयुक्ता भवति। घटो यदि पिशाचः स्यात् पिशाचाकार उपलभ्येत, यतस्तथा नोपलभ्यतेऽतो न पिशाचः, इति पिशाचाऽनुपलब्धिगम्यः। भेदस्तु अधिकरणयोग्यतापेक्षो नाऽनुपलब्धिगम्यः। संसर्गाऽभावग्रहे प्रतियोगियोग्यताऽपेक्ष्यते। अतीन्द्रियपदार्थानामभावोऽपि नाऽनुपलब्धिगम्यः। सत्त्वेन तर्कितस्य प्रतियोगिस्वरूपघटस्य प्रतियोगितयाऽधिकरणे प्रसक्तिः स्थितिः, तद्विघटकम्, तदीयमभावम्, अवलम्ब्यैवोद्भाव्यते, नाऽन्यथा, इन्द्रियगृहीते सत्त्वे तर्कानुत्थानात्। अभावसत्त्वे एव प्रतियोगिसत्त्वे तर्कोत्थानम्। तर्कस्य प्रमाभिन्नत्वेन परिगणनात्, तर्को नाऽभावे प्रमाणम्, तर्कोत्थाने इन्द्रियाणां सहकारित्वेन न तत्र तदानीं कारणत्वम्, तस्मात् करणतया पृथगपेक्षिताऽपरिहार्याऽनुपलब्धिरभावप्रमायामसाधारणकारणम्। यज्ञे षोडशर्त्विजां प्रत्यक्षोपस्थितावपि 'ब्रह्मा त्वमसि, होता त्वमसि, उद्गाता त्वमसि'—इत्यादिवाक्यजन्यबोधे वाक्यस्य पृथक्प्रमाणतावत् अभावे साक्षाद्विषयेऽपि तर्कितसत्त्वेन प्रमिते प्रतियोग्यनुपलब्धेः पृथक्प्रमाणत्वे हान्यभावात्। मेघाऽऽडम्बराऽभ्रसंकुलिताऽम्बरे प्रत्यक्षेऽपि अभ्रमण्डले चन्द्रशालासु स्वापार्थं प्राप्तानां जनानां निशीथेऽभ्रमण्डले भवति तर्कप्रसक्तिः 'यद्यभ्रमण्डलं वर्षणप्रदं स्यात् तथाविधतया उपलभ्येत, किन्तु न तथाविधतयोपलभ्यतेऽतो वर्षणाऽभाववदेव स्यादिति' तत्राऽनुपलब्ध्या अभावः प्रमीयते, एतादृशस्थलेषु प्रारम्भितोद्यमेषु फलीयतर्काऽवतारैः फलाऽभावा अपि प्रमीयन्ते तत्र तत्राऽनुपलब्धिः प्रमाणम्। फलैक्येऽपि क्वचिद् घटे कपालयोस्तत्संयोगस्याऽपि असाधारणकारणत्वेन करणानैक्येऽविरोधात्॥

तन्तुषु यदि घटो जन्येत कदाचिदप्युपलभ्येत, किन्तु कदापि नोपलभ्यतेऽतोऽभाव एवेति घटप्रागभावाऽभावे तत्राऽनुपलब्धिः प्रमाणम्, उपलभ्यते तु क्वचित्कपालेऽतः इदानीमनुपलब्ध्या कपाले प्रागभावसिद्धिः तन्तुषु वा पटप्रागभावग्रहः, स त्वनुपलब्ध्या। एवं नष्टे पटे सति तन्तुषु पटः स्यात्तर्ह्युपलभ्येत, नोपलभ्यतेऽतो नास्तीति पटध्वंसोऽनुपलब्ध्या प्रमीयते। एकप्रमाणप्राधान्येऽन्यस्य नैर्बल्यं न तत्स्वरूपनाशकरमिति॥ ३४९॥

**संभवोऽपि प्रमाणं यद् व्याप्यवस्तुनिवेदकः।**
**व्यापकाऽपेक्षको व्याप्त्या नाऽन्येनाऽस्य गतार्थता॥**
**खार्यां द्रोणाऽऽढकप्रस्थाद्यवज्ञप्तिः प्रमा यतः।**
**अनंगाऽगभ्रमोच्छेदो घटिताऽगप्रमापणम्॥**
**असंभवविरोधित्वात् पृथक् चाऽस्य प्रमाणता।**

संभवाख्यं प्रमाणान्तरं दर्शयितुमाह—**संभवोऽपीति**। 'पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाऽऽढकम्॥ अष्टाऽऽढको भवेद् द्रोणो द्विद्रोणः सूर्प उच्यते। सार्धसूर्पो भवेत्खारी द्विद्रोणा गोण्युदाहृता॥ तामेव भारं जानीयाद् वाहो भारचतुष्टयम्'॥ इति। यदंगतया यद् घटयते तत् तत्र संभवति, नाऽन्यत्र, अन्यत्र चेत् संभवति तदंगतां जह्यात् व्यभिचरिततां असंभवितां च गच्छेत्'। शते नवतिः संघटयते, स्वतन्त्रा नवतिः स्वोत्तरसंख्याशून्या चेत् न साऽगतया संघटते, यतोऽगिनीप्रतीतिविषया साऽगत्वेनाऽसंभविता, ततः सामान्यधर्मेण नवतित्वेन नवतिरंगं नवेति शंकास्पदा भवति, एवंविधया शतमंग्यपि शंकितम्। अप्रमास्पदं स्यात्, कापि संख्या प्रमात्वं न भजेत, खार्यादिव्यूहज्ञप्तयोऽपि अंगिप्रमात्वं न भजेयुः, एवंरीत्याऽनेकद्रव्यत्वादिप्रमा विलुप्येत वा भ्रान्तित्वं भजेत, तन्निरासार्थं घटिते घटकानाम्-

गानां संभवितत्वे एव प्रामाण्यमिति संभवस्य पृथक्प्रमाणत्वं सिद्धयति येन घटिता व्यूहाः प्रमाविषयाः स्युः। सम्भवेन प्रमाणेनाऽसंभवोऽप्रामाण्यं च स्वाश्रयसम्पाद्यत्वसंसर्गेणाऽवसार्यते प्रमात्वं सर्ज्यते चेति ॥ अत एव च लक्ष्ये लक्षणं संभवति न वेति विचारः परीक्षायामुपादीयते, संभवेन विधिकोटयवधारणं भावकोटयवधारणं क्रियते। तस्मात्संभवः प्रमाणम्। व्याप्ति विनाऽपि घटकताज्ञानेनाऽप्येतत्प्रसञ्जनात् तद्योग्यतासत्त्वे तत्संभवस्याऽपरिहार्यत्वात्। एवमजीर्णे रोगसंभवः, मूर्छायाम् अमानसंभवः, अशने तृप्तिसंभवः, राज्ञि प्रसन्ने पारितोषिकसंभवः, ज्ञानभक्तिभ्यां निःश्रेयससंभवः, काम्यकर्मसु जन्मसम्भवः, सत्यभ्यासे पाण्डित्यसंभवः, सत्सु सुसस्येषु कणसंभवः, सत्सु ऋतुयोगेषु गर्भसंभवः, असम्बद्धप्रलापिषु विचित्ततासंभवः, कार्याऽनभिज्ञाने निवृत्तिसंभवः, इष्टे प्रवृत्तिसंभवः, सुश्रद्धश्रोतृषु शास्त्रकथासंभवः, भूतप्रकोपे लयसंभवः, सति पुण्ये निर्विघ्नतासंभवः, सति चमत्कारे स्वाऽवलम्बितासंभवः, सत्यां योगसिद्धौ भूतलयसंभवः, ध्यानसिद्धौ समाधिसंभवः, मायावियोगे मोक्षसंभवः, इत्येवं सर्वत्र संभवप्रमाणेन संभविताः प्रमा उत्पद्यन्ते, असंभविता निरस्यन्ते, अतः स्वतन्त्रं प्रमाणत्वं प्रमात्वं च संभवयोरिति ॥ खारीकथनेन द्रोणादीनां संभवादेव खारीपदेन द्रोणादीनां बोधजनकं संभवप्रमाणमिति ॥ ३५०–३५१ ॥

**प्राच्यवृत्तान्त ऐतिह्यम् इतिहोचुः पुराजनाः॥३५२॥**
**इति-ह-आस चेत्येवं प्रमाणं वर्ण्यते जनैः।**
**इतिहासा हि वृत्तान्ता पुरातत्त्वप्रवर्णकाः॥३५३॥**
**जनताऽऽभाणतां प्राप्ताः प्रमाऽर्थान् प्रदिशन्ति हि।**
**श्मशानस्य वटे चाऽऽस्ते पिशाचो भणितिः प्रमा॥**
**भयदा विद्यते बोधो भयकृत् स प्रमात्मकः।**
**अर्चासु भगवानास्ते वैदिकी भणितिर्हि सा॥**
**ऐतिह्यं तत्प्रमाणं वै वृद्धाधारं समीकृतम्।**
**उपरागादिविज्ञानं वृद्धैतिह्यसमुद्भवम् ॥३५६॥**
**भविष्यत्कलिधर्माश्चैतिह्यशास्त्रप्रवर्णिताः।**
**यथावत् ते प्रवर्तन्ते ऐतिह्यं तत्प्रमाणकम् ॥३५७॥**

ऐतिह्यं प्रमाणं दर्शयितुमाह—**प्राच्यवृत्तान्त** इति। अनिर्दिष्टप्रवक्तृकं प्रवादपरम्पराऽऽगतम् 'इह श्मशानवटे पिशाचस्तिष्ठतीति ह ऊचुर्वृद्धाः' इति वाक्यं, तज्जन्यबोधस्योपपत्त्यर्थम् ऐतिह्यं प्रमाणम्। वृद्धसम्मतिरैतिह्यम्। नेदं शब्दात्मकम्, अन्वयबोधाऽनुपस्थानात्, मानसाऽऽश्चर्यकरबोधाऽवगमात्। पूर्वाऽतिपूर्ववृत्तान्तानां जिज्ञासितत्वात्, कल्पनया लिखिता आर्थवादिका अपि वृत्तान्ता ऐतिहासिकाः प्रामाणिका भवन्ति, महाभारतपुराणादिशास्त्राणि चाऽप्यैतिह्यप्रमाणप्रबलानि चतुर्दशभुवनाऽण्डाऽऽवरणानि सूर्यादिरथाः स्थलजलप्रदेशपरिवर्तनविनिमया ऐतिह्येन प्रामाणिका अपि भवन्ति ॥ **भयदेति।** युद्धवार्ता राक्षसपिशाचादिवृत्तान्ताः प्रमा अपि भयदाः, क्वचिदप्रमा विकल्पवृत्त्युद्भावका अपि अन्यार्थपराः शिक्षासारा अपि भवन्ति ॥

**अर्चास्विति।** प्रतिष्ठाविधिना वैदिकरीत्या शाब्दी प्रमाऽपि क्वचिदन्यत्र तत्र तत्र कल्पितदेवादिस्थापनतन्निवासतन्मानतातच्छपथादिकरणमैतिह्याऽन्तर्गतं भवति, चैत्यवन्दनादि क्षुद्रमान्त्रिकैन्द्रजालादि चाप्यैतिह्यप्रमाणप्रवर्तितं भवति ऐतिह्यं फलश्रुतिरूपं तु श्रद्धां भावनां भक्तिं च यथार्थां प्रमारूपां जनयति। यत्र 'वटयक्षो धनत्रयोदश्यां पूजितः प्रत्यहं शतदीनारकान् ददाती'त्यैतिह्यश्रद्धालवः प्रवर्तन्ते। 'ऐन्द्रजालिकस्ताम्रौषधिप्रयोगेण बहुगुणितं सुवर्णं कृत्वा ददाती'त्यैतिह्येनाऽज्ञाः प्रवर्तन्ते। ऐतिह्यस्य फलं प्रमा वाऽप्रमा इति तु पश्चादासाद्यते। प्रमायाः करणं प्रमाणमित्यपि सति दोषेऽप्रमोत्पादकमपि भवति। नैतावता प्रमाणतां मुञ्चति। नहीन्द्रियं चक्षुः शुक्तौ रजतं वीक्ष्य स्वप्रमाणतां जहाति। नहि शाब्दभ्रमे शब्दोऽप्रमाणतां भजते, प्रमावत् अप्रमाऽपि प्रमाणेन दोषसहायेन जायते। ऐतिह्ये तु भवत्येवं प्रायः फल्गुफलार्जनम् ॥

**समीकृतमिति।** यथोच्यते वृद्धैस्तथा तत्समतयैव पाल्यते। आचर्यतेऽनुप्रजाभिरिति समीकृतमैतिह्यं मूर्ततां भजते। उपरागः सूर्यादिग्रहणम्, राहु-

स्पर्शः । समुद्रमन्थने पीयूषपानाऽवसरे कन्धरायां निकृन्तितो राहुः सूर्यचन्द्रपीयूषं पिबति प्राप्तपर्वणीति ऐतिह्यं प्रामाणिकं प्रमाणं प्रमा चोभयं यथार्थं चानुभूयते ॥ अर्वाचीनानां प्रकारान्तरता छायारूपेति त्वन्यदेतत् ॥

**भविष्यदिति**—भाविनि कलेरन्ते ह्रस्वा मानवाः स्युः, आयुः स्थावराणि जंगमानि शक्तयः कर्माणि साधनानि वृष्ट्यो निर्वाहा हृदयानि जन्मानि निवासाः सम्बन्धाः शुद्धयः स्नेहाः स्थितयः स्वरूपाणि चेति सर्वमिदानीमदृष्टमपि दृष्टवत् कल्पितं प्रवर्णितं च, यथोक्तं तथा अंशेन प्रवर्तते प्रवर्त्स्यते चेति तत् ऐतिह्यप्रमाणगोचरं प्रमात्मकं सम्पत्स्यते 'चातुर्मास्ये यत्र क्वापि भविष्यति वृष्टिरि'तिवत् स्वभावसहकृतमैतिह्यं प्रवर्तते । सत्स्वपि प्रमाणान्तरेषु तत्र व्याप्तेषु ऐतिह्यमपि तन्मध्ये लब्धावसरं स्थानं लभते, तस्मात्प्रामाणिकैस्तत्प्रमाणतयोद्दिष्टमिति ॥ ॥ ३५२-३५७ ॥

**अथाऽपि भवति चेष्टा जगतां सर्वदेहिनाम् ।**
**स्थावराणां जंगमानां स्वल्पाऽनल्पा प्रमाणकम् ॥**
**नेत्रौष्ठकरपादानां कामांऽगानां मुखाकृतेः ।**
**वक्षोजानां नितम्बानां शाकुनिस्फूर्तिकर्मणाम् ॥५५९॥**
**हावभावविलासानां हास्यादिरससंभृताम् ।**
**नृत्यानां गतिचाञ्चल्यविक्षेपाश्च जटायुषाम् ॥३६०॥**
**वाणीनां खाद्यपेयानां भूपालंकारधारिणाम् ।**
**गन्धसारादिलिप्तानां यौवनोद्भेदयोगिनाम् ॥३६१॥**
**पशूनां पक्षिणां कीटसरीसृपतरंगिणाम् ।**
**वाताधारजलाधारभूधारस्थास्नुयायिनाम् ॥३६२॥**
**वृक्षवल्लीस्तवकानां तृणसस्याऽल्पशाखिनाम् ।**
**नाडीनां त्वक्प्रसाराणां वीजांकुरपतत्रिणाम् ॥३६३॥**
**स्वेदजाऽण्डजदेहानामुद्भिज्जप्राणजीविनाम् ।**
**म्लानम्लानिप्रफुल्लादिविकृत्यार्जवशालिनाम् ३६४**
**तात्पर्यबोधिका चेष्टा समा विषमा विकृता ।**
**प्रतिक्षणं वर्तमाना प्रमाणं बोधदा मता ॥३६५॥**

चेष्टां प्रमाणमाह—**अथाऽपीति** । हिताऽहितप्राप्तिपरिहाराऽनुकूला क्रिया चेष्टा शारीरिकी । तथाविधोऽभिप्रायो ज्ञापनात्मको हि आध्यात्मिकी सा चेष्टा आन्तरिकी मानसी चापि व्यंग्यादिरूपा, भावनाबोधिका विकारादिबोधिका व्यापारबोधिकाऽपि च कारणकार्यमयी बहुविधा चेष्टा, स्वबोध्यप्रमार्थवत्त्वात् फलवती असाधारणकारणरूपा भवति करणं सर्वथा सर्वत्र सर्वेषु प्रमाणम् । मूकानां जडानां बालानां बधिराणां सचेतना चेष्टा वृक्षवल्ल्यादीनां पत्रांकुरप्रान्तादिप्रसादभाजां ग्लानिम्लानताप्रसन्नतासशक्ततापोषणादिभाजां भवति सुचेष्टा तत्तच्छरीरानुसारं प्रमाफलबोधिका इतिकर्तव्यताबोधिका इतिकृततताबोधिका इत्यभिप्रायबोधिका इतिस्थितिबोधिका इतिभावबोधिका इष्टताऽनिष्टताबोधिका व्यवहारकारणीभूता प्रमाणं भवति ॥

**नेत्रौष्ठेति** । नेत्रगोलकनिमेषोन्मेषतिरश्चीनाऽवलोकनभावनाभिन्नाऽवलोकनक्रूरतादिसंभृताऽवलोकनेषन्निमीलनभ्रूविक्षेपणकोणमारणादिचेष्टा बह्व्यः प्रमाबोधिका भवन्ति । प्रवर्तिका निवर्तिकाश्च भवन्ति । नेत्रकोणाऽङ्गुलिभ्रूकुटिनिमेषौष्ठीयमन्दहास्यादिरूपा स्वल्पा, कराऽञ्जलिसमाह्वानोर्ध्वोत्थानयोगासनादिरूपा धावननर्तनविहरणकेशाकेश्यालिंगनादिरूपाऽनल्पा विशाला चेष्टा तत्तदभिप्रायप्रमाबोधिकाः प्रमाजनिका भवन्ति । कामनाचेष्टा मुखानां तदाकृतिविशेषचेष्टा अपि सभायां रहो न्यायालयादौ निर्णायिकाः प्रमापिण्यो भवन्ति ॥

**वक्षोजानामिति** । दुग्धस्राविगवादिस्तनानां मातृस्तनानां पत्नीकुचानां चेष्टा दुग्धादिप्रदानार्थबोधिका भवन्ति । कामुकीनां स्तननितम्बाऽन्तःकुण्डल्याद्यंगचाञ्चल्यं नर्तकीनां तथाविधाश्चेष्टा हर्षदा भवन्ति ॥ **शाकुनीति** । शकुनाऽपशकुनफलाः पक्षिप्राणिमानवादिस्फूर्तयो निजकर्माऽवरोधादिविघ्नचेष्टा अपि फलप्रमात्र्यो भवन्ति ॥ **हावेति** । हावाः श्रृंगारभावजाः क्रियाः, विलासो विभ्रमो लालित्यं हेलनं लीला वाग्वेषचेष्टाः केलिः अंगमोडनं कण्ठकूजनं सांगभंगजृम्भणं कर्णललाटकण्डूयनं गाढपरिपीडनम् आश्लेषणं परिहसनं नर्मकरणं कूर्दनं त्वरास्मितत्वं रोमाञ्चं शयनं नेत्रप्रमीलनमश्रुस्रावो

वेपथुः उद्धर्ष उत्सवः श्वासधमनमित्याद्याश्चेष्टास्तात्पर्येष्टिविषयप्रमाजनिकाः ॥ **भावा इति** । स्वभावाऽभिप्रायचेष्टाद्याः । उद्बुद्धा प्रथमविक्रिया भावः । भाव एवाऽल्पसंलक्ष्यविकारो हाव उच्यते । अनुभावाः आलम्बनोद्दीपनकारणैः रत्यादिबहिःप्रकाशाः कार्याणि अनुभावात्मकानि । स्वभावजानि अंगजानि अलंकरणानि सात्त्विका भावाः, सात्त्विक्यश्चेष्टा अपि च । आस्वादांकुरकन्दरूपः स्थायीभावः । नानारसान् भावयन्ति ये ते भावाः । धीरा दृष्टिश्चित्रा मतिः सस्मितं वचः—विलासव्यूहः ॥ **हास्यादीति** । रसाः–शृंगारो हास्यं करुणो रौद्रो वीरो भयानको बीभत्सोऽद्भुतः शान्तो वत्सलः । 'नाऽनुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम् । आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः' ( सा० द० ५१४) ॥ अर्थापत्तिसिद्धत्वमपि रसानां न, अर्थापत्तेः पूर्वसिद्धमर्थमुपजीव्यैव प्रवृत्तेः । वस्त्वलंकारग्रहार्थं व्यञ्जना स्वीक्रियते, व्यज्यते रसोऽर्थोऽनेनेति व्यञ्जना, सा च चेष्टाधीनेति । रसनाख्यव्यापारजन्यो बोधः प्रमा चेष्टाकरणक इति चेष्टा ध्रुवं प्रमाणम् । गर्भशूलम् अर्भकजन्मप्रमाजनकमिति शूलचेष्टा प्रमाणम् ॥

**नृत्यानामिति** । नर्तकीनां पादन्यासचञ्चलताऽङ्गक्षेपादिचेष्टा दर्शकानां विलक्षणबोधानां जनिका भवन्ति । जटिनां तापसानां चेष्टा फललब्धिप्रमाजनिका ॥ **वाणीनामिति** । भिन्नाऽलंकाराऽन्वितवाणीनां चेष्टात्मिकानां भिन्नार्थप्रमापकता । खानपानादिपथ्यग्राहिचेष्टावतां मल्लादीनां दृढाऽऽघातादिप्रमापकत्वं तच्चेष्टासु । भूषालंकारधारिणां विवाहादिप्रमाफलकत्वम् । सुगन्धिसारलेपादिचेष्टानां मानसप्रफुल्लताऽऽकर्षणादिप्रमापकत्वम् । युवत्वयोगवतां चेष्टासु रतिप्रमादिकरणता ॥ **पशूनामिति** । तिर्यग्योनीनां मूकानां प्राणिनां जलतरंगवासिनां मत्स्यमकरकच्छपादीनां गगनवारिभूमिप्रभृत्याधारवतां स्थायिनां गतिमतां च स्वस्वचेष्टाभिः स्वस्वप्रमोत्पद्यते ॥ **वृक्षेति** । वृक्षादीनां जलादिलाभे पत्रादिप्रसन्नतात्मकचेष्टया जीवनसुखप्रमोत्पद्यते । शरीरेषु नाडीनां धमनीनां बीजानामंकुराणां रसादिखाद्यपानादिलाभे सुचेष्टाभिश्च स्वास्थ्यप्रमोत्पद्यते ॥ **स्वेदतेति** । मत्कुणादीनां प्राणजीविसस्यानां चापि स्वानुकूलपानादिलाभे विकसितत्वं वह्निकुठारादियोगे म्लानतेत्यादि चेष्टया प्रमाप्यते । सुसमा चेष्टा सुखदा, विषमा चेष्टा दुःखदा, विकृता ह्रासदेति फलानि प्रमीयन्ते ॥

**प्रमाणमिति** । नहि सर्वदास्याश्चेष्टायाः प्रमासम्पत्तौ अदायभावत्वम् । यावदंशे प्रमापकत्वं तावदंशे स्वतन्त्रदायभाक्त्वम् । इन्द्रियादिप्रमाणान्यपि चेष्टाऽविनाभूतानि निजीयप्रामाण्यवत् चेष्टायाः प्रामाण्यं रक्षन्ति न त्वन्यथयन्ति, इति चेष्टायाः स्वविषयप्रमायां करणत्वमिति ॥ **बोधदेति** । चैष्टिकभानजनिका । गुप्तचराणां प्रायशश्चेष्टा प्रधाना प्रमात्री ॥ बाष्पयन्त्राणां मानवधृतरक्तहरिद्ध्वजाः सर्वत्रापि स्वचेष्टया गतिरोधादिप्रमापयित्र्यो भवन्तीति ॥ ३५८–३६५ ॥

इति श्रीमद्दार्शनिकपञ्चाननन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमाणचिन्तामण्याख्ये द्वितीये खण्डे उपमानाऽर्थापत्त्यनुपलब्धिसंभवैतिह्यचेष्टानां प्रमाणतानिरूपणं नामाऽष्टमः परिच्छेदः ॥ ८ ॥

## तत्त्वप्रभावल्याः विप्रतिपत्तयः

**सत्ख्यात्यादिकसिद्धान्ता नैकरूपाऽऽत्यनिर्णयाः ।**
**रूपरूपिस्वभावस्वप्रकाशादिविचारणाः ॥३६६॥**
**क्षणिकाऽनित्यनित्याऽऽविर्भावसंकोचनादयः ।**
**विशिष्ट-द्वैत-शुद्धाद्यद्वैतवादाश्च वैदिकाः ॥३६७॥**
**यमाश्रित्य प्रवर्तन्ते श्रेयोऽङ्गं परमं च यत् ।**
**मर्दितं बहुधा विज्ञैस्तत् तत्त्वं समुपास्महे ॥३७८॥**

**सत्ख्यात्यादीति** । सत्ख्यातिरसत्ख्यातिरन्यथाख्यातिरनिर्वचनीयख्यातिरित्यर्थः ॥ **नैकरूपात्मेति** । शरीरेन्द्रियप्राणमनोऽन्तःकरणज्ञानाद्यात्मवादाः । रूपरूपिस्वभावो धर्मधर्मिभावः । स्वप्रकाशादिः—

स्वपरप्रकाशादिः। क्षणिकेति बौद्धाः। अनित्यमिति नैयायिकाः। नित्यमिति वेदान्तिनः। आविर्भावतिरोभावाविति सांख्ययोगाः। संकोचविकासाविति रामानुजाः॥ **विशिष्टेति।** विशिष्टाऽद्वैत-द्वैताऽद्वैत-शुद्धाऽद्वैताऽद्वैतेति वादाः, यज्ज्ञानमश्रित्य प्रवर्तन्ते। यच्च श्रेयसो मोक्षस्य साधनम्, तत्, विज्ञैः शास्त्रविचारद्वारा बहुधा तर्कितं स्वस्वरूपस्वभावादिना स्फुटीकृतम्, तदेव ज्ञानसत्त्वं पुनःपुनर्विचारपरम्पराविषयं कुर्महे॥

अथ मुमुक्षुभिर्मोक्षसाधनमेष्टव्यम्, तच्च 'ऋते ज्ञानान्न मुक्तिरि' त्यादिश्रुत्या सर्वतन्त्रसिद्धान्तितं ज्ञानमेव। तथा च मोक्षत्वावच्छिन्नं प्रति सामान्यतः ज्ञानत्वावच्छिन्नं कारणम्॥

न च यावतीनां संविद्व्यक्तीनामतथात्वम्, ईश्वरविषयकसंविदां मोक्षहेतुत्वेन घटादिज्ञप्तिव्यक्तीनां कारणत्वाऽभाववत् अन्वयव्यभिचार इति वाच्यम्। तत्तज्ज्ञानव्यक्तित्वेन मोक्षसाधनत्वाऽभावेऽपि तन्निष्ठसाधनताप्रयोजकतत्त्वज्ञानत्वेन सामान्यरूपेण साधनत्वे व्यभिचाराऽनवकाशात्॥

ननु तत्त्वज्ञानस्य निःश्रेयससाधनत्वेऽपि तत्र प्रेक्षावतां प्रवृत्तिर्न स्यात्, समानप्रकारकसमानविशेष्यकप्रवृत्तीच्छाज्ञानानां कार्यकारणभावात्, मोक्षज्ञानिनाम् 'अयं मोक्ष' इति ज्ञानेन 'मोक्षो मे जायतामि' तीच्छया मोक्षीयप्रवृत्तिभवनात् इति चेन्न। मोक्षात्मककार्यज्ञानेन 'मोक्षस्य किं कारणमि' तिजिज्ञासाद्वारा यथाकथञ्चित् श्रुत्या वा सामान्यतस्तत्त्वज्ञाने मोक्षसाधनत्वग्रहाऽनन्तरं तत्रेष्टसाधनताज्ञाने सति तत्त्वज्ञानेच्छया प्रवृत्तेर्निराबाधात्॥

अथ—यदर्थं प्रवृत्तिस्तस्य तत्त्वज्ञानस्य वक्ष्यमाणाऽलीकत्वादिविषयवैपरीत्यप्रयुक्तवैपरीत्यम्, अनुव्यवसाये घटत्वादिभानवत् सम्बन्धभानवच्चाऽयाथार्थ्यं स्यात्॥ ननु—तत्त्वानि तु तत्त्वज्ञाने वैपरीत्याऽऽधायकानि तत्त्वज्ञानविषयाणि, न तु तत्त्वज्ञानविषयकज्ञानविषयाणि, तेन प्रवृत्तिकारणीभूते तत्त्वज्ञानविषयकज्ञाने न वैपरीत्याऽऽपादकानीति चेन्न। स्वविषयविषयस्याऽपि स्वविषयत्वनियमात्, तथा च कारणवैपरीत्ये प्रवृत्तौ विसंवादित्वाऽऽपत्तिः, मोक्षस्याऽलाभश्च॥ ननु यावतां तत्त्वानां वैपरीत्ये तादृशाऽऽपत्तिर्भवेत्, न चैवमस्ति, केषाञ्चित्तत्त्वानामवैपरीत्यात् तद्विषयकज्ञानविषयकज्ञानप्रवृत्तेर्निराबाधत्वमिति चेन्न। ज्ञानसामान्यस्य मोक्षहेतुत्वे सति अयथार्थात् तदन्तर्गतकारणात् मोक्षाऽनवगमेनाऽन्वयव्यभिचारस्य दुर्निवार्यत्वात्॥

अत्रोच्यते—विषयाणाम् अलीकत्वात्मकवैपरीत्यस्याऽसंभवात्, सिद्धत्वाऽभावात्। तच्च नाऽलीकत्वम्, सत्त्वेन परीतत्वात्। न न्यायवत् भ्रमीयविषयितानिरूपकत्वं, तत्र भ्रमाऽभावात्। नाऽद्वैतमतवत् प्रातिभासिकसत्तावत्त्वं शुक्तौ रजतवत्, व्यावहारिकविषयत्वात्। न वा स्वाधिकरणनिष्ठाऽत्यन्ताऽभावप्रतियोगित्वरूपं घटादिवत्, तत्राऽभावाऽनुपलम्भात्। न वा बौद्धादिवत् प्रतिक्षणपरिणामित्वादिकम्, स्थिरविषयत्वात्। तत्र तत्र सदूषणत्वाच्च॥ अत एव विषयाणामवैपरीत्यात् तद्विषयकज्ञानस्य याथार्थ्यात् तस्य ज्ञानस्य याथार्थ्यात्, तस्य प्रवृत्तिकारणत्वे मोक्षकारणत्वे चाऽक्षतेर्व्यभिचाराऽभावात्॥

ननु ज्ञानयाथार्थ्यं निःश्रेयससाधनत्वव्याप्यम्, तथा च ज्ञानयाथार्थ्यनिःश्रेयससाधनत्वयोः समव्याप्यव्यापकभावात् प्रवर्तकज्ञाने तद्याथार्थ्यतत्त्वाऽवधारणस्याऽपेक्षितत्वेन तत्त्वज्ञाने याथार्थ्यतत्त्वाऽवधारणं विना तत्त्वज्ञानविषयकप्रवृत्त्यनुत्पादात्, तद्धर्मिविषयकप्रवृत्तिं प्रति तद्धर्मज्ञानस्याऽपि कारणत्वेन तत्त्वज्ञानविषयकप्रवृत्तिं प्रति तत्त्वज्ञाननिष्ठयाथार्थ्यरूपधर्मज्ञानस्याऽपि कारणत्वेन तत्र याथार्थ्यज्ञानस्याऽवश्याऽपेक्षणीयत्वम्, इति चेन्न। प्रवृत्तिमात्रे तस्य व्यभिचारात्, अयाथार्थ्यादपि शुक्तिरजतस्थले प्रवृत्तिदर्शनात् व्यतिरेकव्यभिचारात्॥

'न च—"यद्व्यतिरेकसंशयनिश्चययोर्यत्प्रतिबन्धकत्वं तन्निश्चयस्य तद्धेतुत्वम्, अनुमितौ व्याप्तेरिवेति। यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावद्वृत्ति तत् तन्निश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावद्वृत्तीति सामान्या व्याप्तिः। व्याप्त्यभावस्य संशये निश्चये वा सति अनुमितिर्न भवति, व्याप्तिनिश्चयसत्त्वेऽनुमितिर्भवति, अतो व्याप्तिनिश्चयोऽनुमितिजनकः, तत्त्व-

ज्ञाने याथार्थ्यव्यतिरेकस्य संशये निश्चये वा सति प्रवृत्तिर्न भवति, अतो याथार्थ्यनिश्चयस्यैव प्रवृत्तिहेतुत्वं सिद्धयति, अतस्तत्त्वज्ञाने याथार्थ्यनिश्चयोऽपेक्षितः, अयाथार्थ्यव्यतिरेकस्य संशये निश्चये वा सति प्रवृत्तिर्न जायते इति न, अपि तु जायते, अयाथार्थ्यनिश्चयस्य प्रवृत्तिं प्रति कारणत्वाऽभावादेव न भवति व्यतिरेकव्यभिचारः, 'प्रवृत्तिः,-याथार्थ्यनिश्चयजन्या, याथार्थ्यव्यतिरेकसंशयनिश्चयप्रतिबध्यत्वात्'-इति" वाच्यम् ॥

याथार्थ्यसन्देहे सति पदार्थसन्देहात् पदार्थाऽनिश्चयादेवाऽप्रवृत्तेः, प्रवृत्तिं प्रति याथार्थ्यव्यतिरेकसंशयनिश्चययोरप्रतिबन्धकत्वादिति चेत् ?

उच्यते—याथार्थ्यसंशयाऽनन्तरं 'ज्ञानं मोक्षसाधनमेवे'त्यवधारणस्य सफलप्रवृत्त्यंगस्य याथार्थ्यनिश्चयाऽधीनत्वात्, याथार्थ्यनिश्चयश्च तद्विरुद्धकोटिनिरासमृते न संभवति ।

पदार्थाऽनिश्चयादेवाऽप्रवृत्तेः, पदार्थनिश्चयाऽभावनिष्ठा प्रतिबन्धकता कल्पनीया, तथा च—याथार्थ्यव्यतिरेकसंशयनिश्चयनिष्ठा प्रतिबन्धकताऽन्यथासिद्धा, अतश्च याथार्थ्यव्यतिरेकसंशयनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यताया अपि अप्रसिद्धया उक्तानुमानं स्वरूपाऽसिद्धम् ।

यथार्थनिश्चयमन्तरेण पदार्थनिश्चयो न स्यात्, पदार्थनिश्चयाऽभावे च तत्त्वज्ञाने प्रवृत्तिर्न स्यात्, प्रवृत्त्यभावे च तत्त्वज्ञानोत्पादकशास्त्रे प्रवृत्तिर्न स्यात्, प्रवृत्त्यभावे निष्फलत्वं स्यात्, एतदापत्त्परिहारार्थं, मोक्षात्मकेष्टफलं प्रति तत्त्वज्ञानं कारणं, तत्प्रति शास्त्रप्रवृत्तिः कारणम्, तां प्रति अयाथार्थ्यज्ञानाऽनास्कन्दितकृतिसाध्यत्वविशिष्टेष्टष्टसाधनताज्ञानं कारणम्, तत्र याथार्थ्यज्ञानमुपयुज्यते, याथार्थ्यज्ञानेनाऽर्थनिश्चयः, अर्थनिश्चयात्प्रवृत्तिः, तत्र याथार्थ्यनिश्चयस्तद्विरुद्धकोटिनिरासमृते न संभवतीत्यतस्तन्निरासाय विप्रतिपत्तयः प्रदर्श्यन्ते-तथाहि—

१—सर्वं ज्ञानं यथार्थं न वा ?। २—ज्ञानम् आत्मा न वा ?। ३—ज्ञानं क्षणिकं न वा ?। ४—ज्ञानं नित्यं न वा ? ५—ज्ञानं स्वप्रकाशं न वा ?। ६—ज्ञानं संकोचस्वभावं न वा ?। ७—ज्ञानं विशिष्टाऽद्वैतविषयं न वा ?। ८—चिद्भिन्नज्ञानविषयो मिथ्या न वा ?। ९—ब्रह्मभिन्नं सर्वं शरीरं न वा ?। १०—सर्वं विशिष्टब्रह्माऽद्वैतं न वा ?। ११—ज्ञानम् अहं न वा ? ॥

१—आनन्दः परब्रह्म न वा ?। २—परब्रह्म स्वरूपसत्साकारं न वा ?। ३—परब्रह्म अन्तर्यामि न वा ? ४—परब्रह्म एकदेशित्वे सति सर्वदेशि न वा ?। ५—परब्रह्म सगुणं न वा ?। ६—परब्रह्म एकतत्त्वं न वा ?। ७—परब्रह्म विशिष्टब्रह्माऽद्वैतं न वा ?। ८—परब्रह्म नित्यं न वा ?। ९—परब्रह्म सर्वज्ञं न वा ?। १०—परब्रह्म सन्न वा ? ॥

१—ब्रह्म मूर्तं न वा ?। २—ब्रह्म प्रकाशो न वा ?। ३—ब्रह्म अन्तर्यामि न वा ?। ४—ब्रह्म सर्वाधारं न वा ?। ५—ब्रह्म एकतत्त्वं न वा ?। ६—ब्रह्म सगुणं न वा ?। ७—ब्रह्म साकारं न वा ? ८—ब्रह्म सर्वात्मकं न वा ?। ९—ब्रह्म सर्वज्ञं न वा ?। १०—ब्रह्म सर्वशक्तिकं न वा ?। ११—ब्रह्म प्राप्यं न वा ? ॥

१—मुक्ताः साकारा न वा ?। २—मुक्ताः सगुणा न वा ?। ३—मुक्ताः चैतन्यमूर्तयो न वा ?। ४—मुक्ताः सेवका न वा ?। ५—मुक्ता नित्या न वा ?। ६—मुक्ता ब्रह्म न वा ?। ७—मुक्ताः सच्चिदानन्दा न वा ?। ८—मुक्ताः सर्वज्ञा न वा ?। ९—मुक्ता इष्टवेषधरा न वा ?। १०—मुक्ता अनेके न वा ?

१—माया त्रिगुणा न वा ?। २—माया साम्याऽवस्था न वा ?। ३—माया नित्या न वा ?। ४—माया आश्चर्यकरी न वा ?। ५—माया सतत्त्वा न वा ?। ६—माया एका न वा ?। ७—माया चेतना न वा ?। ८—माया धामस्था न वा ?। ९—माया चेतनशरीरं न वा ?। १०—माया मोक्षवृत्तिर्न वा ? ॥

१—ईश्वरा ऐश्वर्यघना न वा ?। २—ईश्वराः सगुणा न वा ?। ३—ईश्वराः सच्चिदानन्दा न वा ?। ४—ईश्वराः सर्वज्ञा न वा ?। ५—ईश्वरा नियाम्या न वा ?। ६—ईश्वरा अज्ञानसम्पर्का न वा ?। ७—ईश्वरा नित्या न वा ?। ८—ईश्वराः

तत्त्वान्तरं न वा ? । ९—ईश्वरा भावपदार्था न वा ? । १०—ईश्वरा दैवशक्तयो न वा ? ॥

१—जीवः कार्यात्मको न वा ? । २—जीवो निर्लेपो न वा ? । ३—जीवो ज्ञानं न वा ? । ४—जीवो ब्रह्म न वा ? । ५—जीवः स्वतन्त्रो न वा ? । ६—जीवः सगुणो न वा ? । ७—जीवो नित्यो न वा ? । ८—जीवो व्यापको न वा ? । ९—जीवो निराकारो न वा ? । १०—जीवा भिन्ना न वा ? । ११—जीवास्तत्त्वान्तरं न वा ? ॥

१—तत्त्वानि साऽवस्थानि न वा ? । २—तत्त्वानि सन्ति न वा ? । ३—तत्त्वानि प्रामाणिकानि न वा ? । ४—तत्त्वानि जडानि न वा ? । ५—तत्त्वानि परतन्त्राणि न वा ? । ६—तत्त्वानि नित्यानि न वा ? । ७—तत्त्वानि अतत्त्वानि न वा ? । ८—तत्त्वानि अभिन्नानि न वा ? । ९—तत्त्वानि सपरिणामानि न वा ? । १०—तत्त्वानि निरुपाख्यानि न वा ? । ११—सर्वम् एकं न वा ? ॥

१—ज्ञानपरिणामो भक्तिर्न वा ? । २—भक्तिश्च स्नेहप्रवाहो न वा ? । ३—भक्तिर्मुख्यं साधनं न वा ? । ४—सा च तथा सती साध्यभक्तिर्न वा ? । ५—एषा च कृपोपार्जिका न वा ? । ६—सेयं प्रसन्नतामयी न वा ? । ७—प्रसादः प्रियप्राप्तिदो न वा ? । ८—अत्राऽन्यसाधनानामाराद्धा-सन्निपत्योपकारकत्वं न वा ? । ९—पूर्णस्य मूर्तौ प्रवेशो न वा ? । १०—सेवाऽव्याहृतिः सर्वव्यापिनीति सर्वकामाऽशनफलिनी पर्यवस्यतीति ॥ ३६८ ॥

**विद्याऽब्धितलशेमुषी यस्य वै विदुषो भवेत् ।**
**स निर्मथ्याऽत्र सिद्धान्तान् स्फुटीकरोतु वैष्णवः ।**
**अथाऽप्यभावविधयो निषिद्धा अपि धीबलात् ।**
**एता एवाऽन्यमतखण्डिका विप्रतिपत्तयः ॥३७०॥**

विद्येति । विशिष्टब्रह्माऽद्वैतशेमुषीमान् स्फुटीकरोतु ॥ ३६९ ॥

अथेति । धीबलाद् विधिं निषेधे निषेधं विधौ चापि संक्लृप्त्वा स्वसिद्धान्तसाधिका अपि नियोगार्हा भवन्तीति ॥ ३७० ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमाणचिन्तामण्याख्ये द्वितीये खण्डे नवमो विप्रतिपत्तिपरिच्छेदः ॥ ९ ॥

## तत्त्वप्रभावल्याः अनुमाननिरूपणम्

**प्रभाप्रत्यक्षरूपाय तत्त्वानां दर्शकाय च ।**
**अनादिश्रीकृष्णनारायणाय ब्रह्मणे नमः ॥३७१॥**
**साक्षात्क्षेत्रं विविधानां हेतूनां न्यायसञ्जुषाम् ।**
**पृथक्फलप्रमाभाजां क्रियते साऽङ्गरूपणम् ॥३७२॥**
**अनुमितिर्भवेद्व्याप्तिविशिष्टपक्षधर्मता-**
**ज्ञानजन्यज्ञानरूपाऽनुमानं करणं मतम् ॥३७३॥**
**तच्च लिङ्गपरामर्शो न लिङ्गं ज्ञानगोचरम् ।**
**व्याप्तिज्ञानं करणं चेत् परामर्शस्तु कारणम् ॥३७४॥**

पक्षे साध्यवैशिष्ट्यज्ञानमनुमितिः । साध्यविशिष्टपक्षज्ञानमनुमितिः । अनुमितयः सर्वाः साक्षात्परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीवकाः । उपजीवकत्वं कार्यत्वं प्रयोज्यत्वरूपो हेतुप्रत्यक्षादिनाऽप्रत्यक्षस्य सिद्धिविषयतासमानाधिकरणः तत्र तत्र दृष्टद्वारापेक्षः । व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यं ज्ञानमनुमितिः । तत्करणम् अनुमानं परामर्शो व्याप्तिज्ञानं चेति यथायोगम् । व्याप्तिविशिष्टत्वपक्षधर्मत्वसामानाधिकरण्यावगाहिज्ञानजन्यज्ञानत्वस्य भ्रमानुमितिरपि लक्ष्यम् । न च प्रमैव लक्ष्या, भ्रमसामग्रीसत्त्वे तत्फलस्य निषेधाऽयोगात् । लिङ्गोपहितलैङ्गिकभानस्य, व्याप्तिविशिष्टे पक्षधर्मताज्ञानस्य, व्याप्तिविशिष्टत्वपक्षधर्मत्वावगाहित्वस्य, व्याप्यतावच्छेदकरूपेण व्याप्तिपक्षधर्मत्वावगाहित्वस्य, मिथो व्याप्तित्वपक्षधर्मत्वसामानाधिकरण्यसम्बन्धावगाहित्वस्य, व्याप्तिपक्षधर्मत्वोभयविषयत्वनियतधर्मावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वस्यापि स्व-

स्वज्ञप्तिभेदेनाऽनुसरणमपि निवेशप्रवेशादिभिः सुव्यवस्थं भवति। व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तज्जन्यत्वमनुमितित्वमिति तु सुस्थम्। साधनाधिकरणपदार्थानाम् अधिकरणाऽऽधेयत्वादिपदार्थांऽशे तत्तत्सम्बन्धावगाहित्वस्य ग्रहणात् भ्रमानुमितिसंग्रहः। अन्वयव्याप्तिमत्त्वे व्यतिरेकव्याप्तिमत्त्वे च नियमतो गृहीते व्यभिचारादिधीप्रतिरोधात्। उपमितौ शाब्दबोधे परामर्शानुव्यवसाये तु तत्तद्विशेषसामग्रीजन्ये व्यावर्तनात्। विशिष्टस्मरणं तु चरमज्ञानपदस्याऽनुभवपरत्वेन निवार्यते। व्याप्यपक्षोभयवैशिष्ट्यावगाहिनिश्चयत्वेनाऽनुमितिं प्रति कारणत्वं लक्षणघटकमनुसन्धेयम्। वह्न्यनुमितौ वह्निव्यभिचारधीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानत्वेन हेतुत्वमित्यपि निराबाधम्। तदेकोपादानेऽन्यानुमितौ दैवादव्याप्तिरवशिष्यते। सा तु अनुमितिव्यक्तिवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनीया। पर्वतवह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्यताया वह्निव्याप्यवत्पर्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकव्याप्त्यविषयकवृत्तिकार्यताया वाऽवच्छेदिका ज्ञानवृत्तिः सामानाधिकरण्येन वाऽवच्छेदिका या जातिस्तद्वत्त्वमनुमितित्वम्। यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेताऽनुभवत्वाऽन्यधर्मसमवायित्वम्, तद्व्यक्तिसमवेताऽनुभवाऽन्याऽसमवेतधर्मसमवायित्वम्, तद्व्यक्तिसमवेतस्मरणाऽसमवेसधर्मसमवायित्वम्। व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्नकारणताप्रतियोगिककार्यता तत्समानाऽधिकरणानुभवत्वव्याप्यजातिमत्त्वं वाऽनुमितित्वम्। पक्षतासहकृतपरामर्शजन्यत्वम्, पक्षताजन्यतावच्छेदकावच्छिन्ना या परामर्शत्वावच्छिन्नजनकतानिरूपितजन्यता तद्वत्त्वम्, पक्षताजन्यतावच्छेदकावच्छिन्ना या परामर्शत्वावच्छिन्नजनकतानिरूपितजन्यता तादृशजन्यतावच्छेदकाश्रयवृत्त्यनुभवत्वव्याप्यजातिमत्त्वं वाऽनुमितित्वम्। परामर्शज्ञानजन्यज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्करणत्वम् असाधारणकारणत्वम् व्याप्तिज्ञानत्वम्॥ लिङ्गपरामर्शः—व्याप्तिविशिष्ट्याव्यावैशिणवगाहिज्ञानं तृतीयलिङ्गपरामर्शः कारणं द्वारं व्यापारः। तत्कारणमसाधारणं व्याप्तिस्मरणम् अनुमितिकरणम्।

अनुमानं संभावनया न गतार्थम्, संभावनया हेतुभूतयाऽप्रमाणत्वसाधनेऽनुमाने पक्षे तवाऽङ्गीकारस्यार्थात् सिद्धेः। अप्रत्यक्षं न प्रमाणमिति योग्याऽनुपलब्ध्याऽप्यप्रामाण्ये साधिते प्रमाणीकृते तत्रापि तव व्याघातात्। किञ्चाऽनुमानाद्यप्यंशे प्रत्यक्षमेव। यदप्रत्यक्षं तदप्रमाणमिति चेत्, हेतोरप्रमाणतया तव हेतुतावच्छेदकस्याऽप्रमाणतावच्छेदकतया प्रामाण्यविरहात् प्रत्यक्षेऽपि प्रामाण्यहानेश्च।

अथाऽतीन्द्रियं सर्वं प्रत्यक्षसम्बद्धं साक्षात्परम्परया वा प्रत्यक्षमेव, मनसः प्रत्यक्षस्यैव ज्ञानात्मकस्य विषयितया निर्धारात्। एकत्र दृष्टस्य संसर्गस्य सर्वत्र दर्शनात् एकांशदृष्टस्य घटस्य समन्ततो दृष्टातिदर्शनगोचरात्, शारीरं समस्तं तत्त्वं स्पार्शनाऽव्यभिचारि रक्तकणस्यापि स्पार्शनोपलब्धिः, आत्मा चैतन्यशरीरं चैतन्यं प्रत्यक्षवित्तिरूपं सर्ववेदनाधारम्, व्यवहितविप्रकृष्टादीनामपि मानसप्रकाशगोचरत्वात् साक्षात्त्वमेव, व्याप्तिसम्बन्धोऽपि साक्षात्कृत एवाऽन्यत्र चाक्षुषजनकः, सन्निकर्षविशेषविरहे विशेषज्ञप्त्यनुत्पत्तिरेव गर्भाऽर्भकस्य पुंस्त्रीपिण्डविशेषज्ञप्त्यनुत्पत्तिरिव। सामान्यलक्षणस्य ज्ञानलक्षणस्य योगजबललक्षणस्य यत्र प्रवृत्तिस्तत्र तत्र तत्साक्षात्कार एव, आनुश्राविकाणां तत्तत्संसर्गप्राप्तौ साक्षात्कार एव राहुकेत्वोरिव, नीलं गगनमपि दृग्विषयं प्रकाशव्योमापि प्रकाशसंसृष्टतया दृग्विषयमेव, अदृग्विषयो यावदंशः स संभावनात्मकदृष्ट्या दृष्टार्थापत्तिदृष्ट्या योग्याऽनुपलब्धिदृष्ट्या मानसाऽलौकिकदृष्ट्या साक्षात्क्रियते पारम्परिकनेत्रेण दूरदर्शियन्त्रेणेव सर्वं लीनं विप्रकृष्टमपि चात्मनि ज्ञातं प्रत्यक्षमेव, त्रेधा पदार्थस्य सान्निध्ये विश्रामात्'। तथाहि—ग्राह्यं साक्षात् स्वप्नेपि तरुणीवत्, धार्यं सौषुप्तं निजात्मानुसन्धानवत्, भोग्यं सदानन्दः साक्षादानन्द एव' उपमेयमपि साक्षात्तत्सम्बद्धमप्यन्यन्मानसम्, शाब्दमपि साक्षात् शक्तीनां साक्षात्प्रचारात्, साक्षात्कृदिन्द्रियं सूक्ष्मं मध्यं स्थूलं दिव्यं सर्वगोचरमपि साक्षात्कार्येव प्रतिपक्षिणामीश्वरसाक्षात्कारवत्। योगजधर्माऽपि स्वयं साक्षाद्धर्मिणं साक्षादगृह्णाति धर्मयो-

ग्यमपि साक्षाद्गोचरयति । गुरुत्वादिकमपि सूक्ष्मयानेन सूक्ष्मदृष्ट्या निश्चितमेव व्यवर्धत्साक्षाद्गोचरं सद्वारकं भवति, निर्विकल्पकं सर्वं स्वरूपसदपि तादात्म्येन वृत्तिगोचरं भवति, अगोचरमपि ब्रह्मवृत्तिगोचरवादिनामिव सर्वमपि साक्षाद्वृत्तिगोचरं सुषुम्णागामिनामिव सर्वं करतलामलकवद्गोचरीभवति। संस्कारा अपि प्रत्यक्षस्येव सर्वेऽपि साक्षान्मूर्तयोऽनुसन्धानदृष्टिफला आकृतिगोचरा दृश्यन्ते। मन्त्रेन्द्रजालसमाधिप्रातिभादिदृष्टयोऽपि साहाय्यानुसारिण्यः साक्षाद्रूपा एव तदतद्विषया भावाऽन्यभावगोचरा उपलभ्यन्ते। दूरमरणमपि साक्षादनुपलब्धिवृत्तिरूपं साक्षाद्भयसाध्वसवृत्तिरूपं दृष्टिमयमेव कम्पशोकादिदृष्टिविकारं जनयति यदश्रुपुलकितमालिन्यादिधर्माः साक्षात्प्रयोज्या उपलभ्यन्ते। होमानुष्ठानचैत्यवन्दनाद्यपि साक्षान्मूलकं प्रत्यक्षद्रव्याऽग्निमूलकं सुगन्धिपुण्यप्रसादतृप्त्याद्यात्मकं सक्षात् सिद्धयति कर्मठानां दक्षिणाऽशनादि साक्षादेव। संयोगस्नेहशब्दज्ञप्त्याद्याः साक्षाद्भिन्नमूर्तय एव साक्षात्पदार्थाऽऽश्लेषणोत्थरतितृप्तिप्रत्यक्षावहाः । वृद्धव्यवहाराः साक्षात्प्रवृत्ताः, साक्षात्तया पाल्यन्ते, शास्त्रव्यवहारास्तादृशदृक्प्रवर्त्या मानसदृक्प्रपाच्याः स्वीक्रियन्ते। ऋतवः कालाः क्षणा अवसरा अपि साक्षात्कृता एव जायन्ते। दिग्व्यवहारा अपि ध्रुवयन्त्रसाक्षादाधारा भवन्ति। नेत्रयोर्नेत्रे सूर्यचन्द्रौ ततः प्रत्यक्षप्रकाशगोचरं सर्वं पराभिमतपृथङ्मितिरूपं साक्षात्त्वं न व्यभिचरति ॥

अत्राऽऽह—साक्षात्त्वे सर्वं प्रमितं प्रमाणं नाऽप्रमाणं किञ्चिदवशिष्येतेति प्रलयः सर्वलयात्मकः साक्षात्साधनाऽभावात् साक्षात्सम्बन्धाऽभावात् सम्भावनाया अप्यभावात् अस्वीकारे हेत्वभावात् स्वीकारे दृष्ट्यप्राप्तेः मानसादीनामसत्त्वात् शब्दानामपि प्रलयात् हेतूनामपि तत्राऽगमनात् केन प्रतीयेत, येन प्रतिविरोधिना प्रतीयेतेदानीं पक्षाऽसिद्धावपि विमतसाधनापेक्षेण केनापि सम्बन्धेन स व्यतिरेकव्याप्त्यात्मकस्तेनाऽनुमानस्याऽस्तित्वं तत्फलस्याऽप्यस्तित्वं गम्यते। असर्वज्ञनामेकत्रैकस्याऽप्राप्तौ तदन्यसंसर्गसृत्या प्राप्तिनिर्णयस्तत्साधनप्रमायां प्रमाणं सहकारभावेन शक्तिमत्त्वभावेनोपादानोपादेयभावेन साक्षादविषयकज्ञप्तिभावेन वा निश्चीयते सर्वाऽविरुद्धमिति साक्षात्सम्बद्धं वा तदसम्बद्धं सर्वमपि साक्षादन्यसम्बद्धं प्रतीतं प्रमा स्वप्रमाणं साक्षदन्यं व्यवस्थापयतीति प्रत्यक्षेतराणि प्रमाणानि सिद्धान्येव। लाघवगौरवादिकं तु धीक्षेत्रं प्रमाणतां न हन्ति। पूर्वे प्रवर्तकेऽपि ज्ञाने फलाऽलाभे निवृत्तौ तत्राऽप्रामाण्यं साक्षादतिरेकेण प्रतीतं चेति भ्रमादिरपि चानुमानं साधयति ॥ असाक्षाद्दृष्टिगोचरेषु सर्वत्र यत्र यत्राऽप्रामाण्यं सर्वसंसारे तत्र तत्र साक्षादतिरिक्तानामपूर्णसामग्रीणां करणानां सिद्धिरनिरसनार्हा ॥ ३७१-३७४ ॥

**व्याप्तिज्ञाने विषयिण्यो व्याप्तयो भिन्नलक्ष्यतः ।**
**भिन्ना वैका च सा साध्यहेतुस्था कीदृशी मता ३७५**
**भावस्वरूपा वाऽभावगर्भा वाऽव्यभिचारिणी ।**
**साध्याऽभाववदवृत्तित्वाद्यनेकविधाऽस्ति वा।३७६॥**

अनुमितिकरणं यद्व्याप्तिज्ञानं तद्विषया हेतुनिष्ठा साध्यनिरूपिता व्याप्तिः किंस्वरूपिणीति । सा एकाऽपि लक्ष्यभेदादनेकविधा परिष्क्रियते । सा भावाऽभावादिपदार्थलभ्यशरीरा । अन्वयसंसर्गमयी अन्वयसहचारजन्याऽन्वयव्याप्तिर्व्यतिरेकसहचारज्ञानजन्या व्यतिरेकज्ञानमयी व्याप्तिर्बहुपक्षा परिष्क्रियते॥ अथ व्यभिचारः साध्याऽभाववदवृत्तित्वं हेतौ, व्यभिचाराऽभावः साध्याऽभाववदवृत्तित्वं हेतौ, तच्चाऽव्यभिचरितत्वं, तदर्थः—साध्याऽभाववदवृत्तित्वं, साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं, साध्यवत्प्रतियोगिकाऽन्योन्याभावाऽसामानाधिकरण्यं, सकलसाध्याऽभाववन्निष्ठाऽभावप्रतियोगित्वं, साध्यवदन्याऽवृत्तित्वं वा, पञ्चापि परिष्काराः 'घटोऽभिधेयः प्रमेयत्वात् पटवत्' इत्यत्र साध्यवतोऽतिरिक्तस्याऽप्रसिद्धेरव्याप्ताः ॥

अथ तर्हि साध्याऽसामानाधिकरण्याऽनधिकरणत्वं, साध्यवैयधिकरण्याऽनधिकरणत्वं वा व्याप्तिः, तदुभयमपि साध्यानधिकरणत्वं, तच्च केवलान्वयिनि साध्यनिष्ठाऽऽधेयत्वाऽनिरूपकाऽधिकरणाऽप्रसिद्धया, नानाव्यक्तिसाध्यके च एकसाध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः । क्वचिद् व्यभिचारिण्याद्यस्याऽतिप्रसंगः । द्वितीयस्य साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छि-

न्नप्रतियोगिताको भेदस्तदा केवलान्वयिनि, यदि तु यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्ये सर्वत्राऽव्याप्तिश्च ॥

अथ तर्हि 'सर्वमभिधेयं प्रमेयत्वादि'त्यादौ समवायित्वेन वाच्यत्वाभावस्य घटे एव प्रसिद्धत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य भावत्वेनाऽभावस्याऽभावत्वेन भावानां वह्नित्वेन निर्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्वपटत्वाभ्यां च सर्वत्र प्रसिद्धत्वेन प्रमेयमात्रस्याऽभावः सुलभः। अथ साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वस्य व्यभिचारस्य व्यधिकरणधर्मेण साध्याभावस्य च घटे सत्त्वेन हेतुमत्तयाऽसद्धेतुत्वापत्तिरिति चेत् । तर्हि साध्यतावच्छेदकावच्छिन्नसाध्याभावसामानाधिकरण्याऽभावो व्याप्तिरिति हेतौ तादृशाऽभावाऽसत्त्वेन सर्वत्रैव केवलान्वयिनि वाऽन्यत्र यथा तथारीत्याऽप्रसिद्धिरेव व्यधिकरणधर्मस्याऽनवच्छेदकत्वेन तद्विशिष्टप्रतियोग्यप्रसिद्धेस्तदभावस्याऽप्रसिद्धत्वात् ॥

अथ यत्समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगिसमानाधिकरणास्तत्त्वं हेतुत्वम् । यत्–धूमत्वावच्छिन्नहेतुः । यावन्तोऽभावा घटत्वेन वह्न्यभावाः । साध्यहेत्वोः सम्बन्धभेदनिबन्धना दोषास्तदीयसम्बन्धैक्यविवक्षया निरसनीयाः ॥ यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावदभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्त्वं हेतुत्वमिति । ज्ञेयत्वत्वेन वाच्यत्वाभावादिः सुलभः । व्याप्यवृत्तेर्हेतुसामानाधिकरण्यस्य साध्याभावस्य प्रतियोगितायाः अनवच्छेदकं हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वाऽभावस्य प्रतियोगितायाः सामानाधिकरण्येनाऽनवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः । हेतौ साध्यतावच्छेदकाऽवच्छिन्नसाध्याभाववद्वृत्तित्वं तथा साध्ये हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं च व्यभिचारः । अव्यभिचारिसम्बन्धो व्याप्तिः । अवच्छेदकत्वं च तत्पर्याप्त्यधिकरणत्वम् । प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वमप्यवच्छेदकत्वम् ॥ साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यावच्छेदकस्वसमानाधिकरणसाध्याभावकत्वं, यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं व्याप्तिः ॥ साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिः ॥ यावन्तः साध्याऽभावाः प्रत्येकं तत्तत्सजातीया ये तत्तदधिकरणनिरूपितवृत्तित्वाऽभावास्तद्वत्त्वं व्याप्तिः । साजात्यं समानाऽसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण। यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वम् अवच्छिद्यते तद्रूपवत्त्वं हेतुत्वम् ॥ वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्तित्वाऽभावास्तद्वत्त्वं व्याप्तिः ॥ वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाऽधिकरणवृत्तित्वाऽभावास्तद्वत्त्वं व्याप्तिः ॥ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिसमानाधिकरणयावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तयस्तत्त्वं व्याप्तिः ॥ सर्वत्र प्रतियोग्यवृत्तिधर्मो न प्रतियोगितावच्छेदकः । प्रतियोगी च न व्यधिकरणधर्मावच्छिन्नः । किन्तु तथाविधो भ्रम एव सः । यदि वा तथाऽङ्गीकारस्तदा तथाविधाऽभावगर्भकव्याप्तिस्सद्व्याप्तिरेव । किन्तु 'शशशृंगं गवि नास्ती'त्यत्र गोशृंगाऽभावः शशे, घटत्वेन पटो नास्तीत्यत्र पटे घटत्वाभाव इत्यर्थस्याऽभ्रान्तत्वम् सर्वत्र यथाप्रमं निर्वाह्यम् ॥

अथाऽन्येऽपि व्याप्तिप्रकाराः—साध्याऽसामानाधिकरण्याऽनधिकरणत्वे सति साध्याधिकरणत्वं व्याप्तिः । अभिधेयः प्रमेयत्वादित्यादौ साध्याऽसामानाधिकरण्यं निरधिकरणे गगनादौ प्रसिद्धम् । साध्यवदवृत्तिसकलपदार्थाऽभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वं हेतुत्वं व्याप्तिः । साध्याऽसमानाधिकरणानि यत्सामानाधिकरण्यानधिकरणानि तत्त्वं हेतुत्वं व्याप्तिः । साध्यसामानाधिकरण्याऽभावव्यापकाऽभावप्रतियोगिसामानाधिकरण्यसामान्यकत्वं तत्त्वं व्याप्तिः । साधनवन्निष्ठान्योन्याभावाऽप्रतियोगिसाध्यवत्कत्वं व्याप्तिः । साधनसमानाधिकरणयावद्ध-

र्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यं व्याप्तिः। यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य समानाधिकरण्यं व्याप्तिः। साधनसमानाधिकरणधर्मनिरूपितवैयधिकरण्याऽवच्छेदकं यद्यत् तद्भिन्नधर्मवता यावत्तादृशावच्छेदकत्वशून्यधर्मवता वा समं सामानाधिकरण्यं व्याप्तिः।

अथाऽनौपाधिकसम्बन्धो व्याप्तिः। उपाधिश्च साध्यव्यापकत्वे सति साधनाऽव्यापकः। व्यापकत्वं तु तद्वन्निष्ठाऽत्यन्ताभावाऽप्रतियोगित्वम्, साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूतसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वम् उपाधित्वम्। यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधिकरणाऽभावप्रतियोगितायाा अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव साधनसमानाधिकरणाऽभावप्रतियोगतायाा अवच्छेदकम् उपाधित्वम्। यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं यावत् साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमुपाधित्वम्। यावत्साधनाऽव्यापकं यत्साध्यव्यापकं तत्त्वम्, यावत्साध्यव्यापकं यत्साधनाऽव्यापकं तत्त्वमुपाधित्वम्। हेतुसमानाधिकरणाऽन्योन्याभावप्रतियोगितावच्छेदकं यावद्यद्धर्मावच्छिन्नंयत्समानाधिकरणाऽन्योन्याभावप्रतियोगितावच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिः। साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं यावत्समानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकं तत्त्वं व्याप्तिः। साध्यं यावदव्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वं व्याप्तिः। स्वाभाविकः सम्बन्धो व्याप्तिः कार्त्स्न्येन सम्बन्धो व्याप्तिः। कार्त्स्न्येन साध्येन सम्बन्धो व्याप्तिः। यावत्साधनाश्रयाश्रितसाध्यसम्बन्धो व्याप्तिः। साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यं व्याप्तिः। अविनाभावसम्बन्धो व्याप्तिः। यद्धर्मावच्छिन्नसामानाधिकरण्यत्वेन साधनसामानाधिकरण्यव्यापकत्वं तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिः। साधनव्यापकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यं व्याप्तिः। साध्याऽभावव्यापकीभूताऽभावप्रतियोगित्वं व्याप्तिः। सम्बन्धमात्रं व्याप्तिः, दोषाणामपि केनचिद्व्याप्तिमत्त्वात्। व्याप्तिपदप्रवृत्तिनिमित्तत्वं व्याप्तिः। केवलान्वयिधर्मसम्बन्धो व्याप्तिः। साध्यवदन्याऽवृत्तित्वं व्याप्तिः। सकलसाध्यवदन्याऽवृत्तित्वं व्याप्तिः। सामानाधिकरण्यविशिष्टपक्षधर्मत्वं व्याप्तिः॥

अथ प्रतियोग्यसमानाधिकरणयत्समानाधिकरणाऽत्यन्ताऽभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः। प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिः। दण्डिमान् दण्डिसंयोगादित्यादौ परम्परया सम्बद्धं दण्डत्वं साध्यतावच्छेदकं मन्तव्यम्। हेतुतावच्छेदकविशिष्टव्यापकसाध्यसामानाधिकरण्यं, तादृशसामानाधिकरण्यवति हेतुतावच्छेदकवत्त्वं वा व्याप्तिः। यो यदीययावद्विशेषाऽभाववान् स तदीययावत्सामान्याभाववानिति व्यतिरेकयोरपि व्याप्तिः संभवति। प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणीभूतहेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वधिकरणवृत्ति-वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्न-यादृशप्रतियोगितावच्छेदकाऽवच्छिन्नाऽनधिकरण-हेतुतावच्छेदकावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्न-हेत्वधिकरणवृत्ति-वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नतादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाऽभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं व्यापकसामानाधिकरण्यं

च व्याप्तिः। निरुक्तप्रतियोग्यनधिकरणीभूतहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं व्यापकसामानाधिकरण्यं च व्याप्तिः॥ ३७५-३७६॥

**तत्तद्व्याप्तेस्तत्र तत्र लक्षणे प्रतियोगिताऽनवच्छेदकमित्युक्तं तत्राऽवच्छेदकं नु किम्॥३७७॥**

व्याप्तिलक्षणे प्रतियोगितानवच्छेदकं प्रोक्तम्। तत्र किं नामाऽवच्छेदकम्, अवच्छेदकपदस्य स्वरूपतः कोऽर्थ इति। घटत्वेन घटोऽभावप्रतियोगीतिप्रतीतौ प्रतियोगितया अवच्छेद्यया सह घटत्वस्य अवच्छेदकभावरूपः-अवच्छेद्याऽवच्छेदकभावरूपो नियामकः संसर्गः कल्पितस्तृतीयो द्वाभ्यामतिरिक्तः पदार्थान्तरात्मको यद्वा प्रतियोगिताघटत्वोभयस्वरूपात्मक एव नाऽतिरिक्तः कश्चित्पदार्थान्तरात्मकः इति विचार्यते। तत्र 'घटाऽभाव' इतिप्रतीतिविषयास्त्रयो भावोऽन्वयोऽभावश्च घटोऽभावस्तत्सम्बन्धश्च, घटत्वमपि विषयः तत्समवायोऽपि विषयः, अभावत्वं विषयस्तत्स्वरूपोऽपि विषयः, घटे प्रतियोगिता ज्ञानकल्पिता ज्ञानविषयता विशेषणतास्वरूपा, प्रतियोगितासंसर्गेण घटोऽभावे प्रकारः, अभावः प्रकारी विशेष्यः, अभावे विशेष्यता, घटप्रतियोगिताकोऽभावो घटाऽभावः, घटाभावीयां घटनिष्ठां प्रतियोगितां घटत्वं स्वयं स्वाश्रयादन्यत्र गन्तुं निषेधति घटातिरिक्तेभ्योऽवच्छेदयति ततो घटत्वं भवत्यवच्छेदकं प्रतियोगिता भवत्यवच्छेद्या, सोऽयमवच्छेद्याऽवच्छेदकभावो ज्ञानकल्पितो ज्ञानीयविषयतात्मकः, विषयता च विषयस्वरूपा नातिरिक्तः पदार्थः, विषये एवान्तर्भावः कल्पितधर्माणां ज्ञानाधीनजीवनानामिति, अवच्छेद्याऽवच्छेदकभावः स्वरूप एव सम्बन्धः, निरूप्यनिरूपकभावः स्वरूपसम्बन्धः, प्रयोज्यप्रयोजकभावः, विशेषणविशेष्यभावः, ज्ञेयज्ञातृभावः, एवंविधाः कल्पिता धर्मसंसर्गाः पदार्थस्वरूपा एव। स्वरूपसम्बन्धरूपाऽवच्छेदकता घटाभावीयप्रतियोगितावच्छेदकता प्रकारीभूते घटत्वे, क्वचिच्चाऽप्रकारीभूते धर्मेऽपि, यथा कम्बुग्रीवादिमदभावप्रतियोगिताऽवच्छेदकता घटत्वे, 'सम्भवति लघौ धर्मे गुरौ तदभावात्' इतिनियमात्। पर्वतः प्रमेयधूमवान् वह्नेः, कम्बुग्रीवादिमान् द्रव्यत्वादित्यादौ प्रमेयधूमत्वेन कम्बुग्रीवादिमत्त्वेन च साध्यम्, तत्र हेत्वधिकरणेऽयोगोलके पटे च साध्याभावप्रतियोगितावच्छेदकधूमत्वघटत्वभिन्नं साध्यतावच्छेदकं प्रमेयधूमत्वकम्बुग्रीवादिमत्त्वादि तदवच्छिन्नसाध्यसामानाधिकरण्यं हेताविति व्यभिचारिण्यतिव्याप्तिः। तस्मात् अनतिरिक्तवृत्तित्वरूपं ग्राह्यमवच्छेदकत्वम्, प्रतियोगिताऽनतिरिक्तवृत्तित्वम्, प्रतियोगित्वाऽभाववदवृत्तित्वं, कल्पितधर्मान्तरस्वरूपम्। प्रतियोगित्वाऽभावः—प्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः, प्रतियोगितात्वावच्छिन्नप्रतियोगिताको वा। तदवच्छेदकं गुरुधर्मेऽपि, तद्भिन्नसाध्यतावच्छेदकाऽनुपलब्धेर्नातिप्रसंगः। परन्तु प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्तिभिन्नत्वेन 'धूमवान् वह्ने' रित्यत्र धूमाभावीयतत्प्रतियोगित्वाऽनतिरिक्तवृत्ति न धूमत्वं किन्तु अतिरिक्तवृत्ति, अतस्तद्घटाऽभावं गृहीत्वा तत्प्रतियोगिताऽनतिरिक्तवृत्तितद्घटत्वं तद्भिन्नधूमत्वाऽवच्छिन्नसामानाधिकरण्यं वह्नावित्यतिव्याप्तिः स्यात्। अथ तादृशप्रतियोगिताऽन्यूनाऽनतिरिक्तवृत्तित्वरूपम् अवच्छेदकत्वं वक्तव्यम्, तदपि न, तार्णाऽतार्णवह्निवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाऽभावप्रतियोगिताऽन्यूनाऽनतिरिक्तवृत्तिवह्नित्वं तद्भिन्नं साध्यतावच्छेदकं न मिलतीति सर्वत्र सद्धेतौ धूमेऽसम्भवः। अथ तादृप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वम् अवच्छेदकम्, वृत्तिभिन्नं च साध्यतावच्छेदकं, तथा च नञ्द्वयं विहाय प्रतियोगितावच्छेदकं यद्यत् तत्तत्प्रत्येकातिरिक्तवृत्तिसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति। स्वसमानवृत्तिकं चाऽवच्छेदकम्। स्वम्—अनतिरिक्तवृत्तित्वेनाऽभिमतम्। तथा च—स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकं तदनतिरिक्तवृत्तित्वम् अवच्छेदकमित्यर्थः। स्वसमानवृत्तिकत्वं च—स्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकत्वम्। यावत्त्वादिकं तु न वह्नित्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकम्। स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वमित्यर्थः। पर्याप्तिश्च—अयमेको घटः, इमौ द्वाविति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र घटकं प्रतियोगितायाः अवच्छेदकं

तु स्वरूपसम्बन्धविशेष एव। हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववति असम्बद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकाऽवच्छेदकम्। कालो घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगितावच्छेदकं यद् गगनत्वं तदवच्छिन्नाऽभावस्य कालिकेन गगनत्वाऽवच्छिन्नाधिकरणत्वाऽप्रसिद्धेरव्याप्तिवारणाय 'साध्यतावच्छेदकसम्बन्धसामान्ये तादृशधर्मावच्छिन्नप्रतियोगिकत्वयदनुयोगिकत्वोभयाऽभावस्तदसम्बद्धत्वस्य विवक्षितत्वात्। संयोगेन घटाभावस्य गगनत्वेन संयोगेन घटाभावस्य ग्रहणेन कालिकसम्बन्धे गगनत्वेन घटस्य संयोगे च गगनत्वावच्छिन्नप्रतियोगिकत्वाऽभावात् तदसम्बद्धत्वस्य घटत्वावच्छिन्नघटकालिकस्वरूपे सत्त्वात् व्यापकत्वेन सामानाधिकरण्यस्य हेतौ सत्त्वात्। "यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्यं 'साध्यतावच्छेदकसम्बन्धसामान्ये यादृशधर्मावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः'-तादृशधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसम्बन्धेनाऽसम्बद्धं तत्तत्सम्बन्धेन तत्तद्धर्मावच्छिन्नविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकताकं विशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्त्वं विवक्षितम्"॥ हेतुमन्निष्ठाऽभावप्रतियोगितावच्छेदकं यद्विशिष्टिसम्बन्धिनिष्ठाऽभावप्रतियोगिताऽनवच्छेदकं स एव परिभाषिकाऽवच्छेदकः तदन्यत्वं साध्यतावच्छेदकविशेषणम्॥ यत्प्रतियोगित्वावच्छिन्नस्याऽनधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मो यद्विशिष्टसम्बन्धनिष्ठप्रतियोगिव्यधिकरणाऽभावप्रतियोगितानवच्छेदकः तत्पारिभाषिकावच्छेदकम्॥ घटाभावस्य घटविशिष्टवाच्यत्वाऽभावस्वरूपत्वेऽपि तस्य घटत्वावच्छिन्नं यत्प्रतियोगित्वं तदाश्रयव्यधिकरणत्वस्य सुलभत्वात्॥ स्वविशिष्टप्रतियोगिकत्वानि विशिष्योपादाय—साध्यतावच्छेदकसम्बन्धसामान्ये हेतुसमानाधिकरणाऽभावप्रतियोगिताऽवच्छेदकीभूततत्तद्धर्मावच्छिन्नाऽभाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकाऽवच्छेदकः। कालो घटवान् महाकालत्वादित्यत्र गगनत्वमादाय लक्षणसमन्वयः॥ विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिताऽनवच्छेदकाऽवच्छेद्यत्वं तत्सबन्धावच्छिन्नसाधनसमानाधिकरणाऽत्यन्ताभावप्रतियोगितासामान्ये नास्ति, साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिः। कम्बुग्रीवादिमान्नास्तीतिप्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः। एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीति न प्रमाणम्, घटसामान्यशून्ये तु प्रमाणम्, अतो गुरुधर्मोऽवच्छेदकः। प्रतियोगितावच्छेदकावच्छिन्नाभाववन्निरूपितवृत्तितानवच्छेदकत्वं पारिभाषिकाच्छेदकत्वम्। प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसम्बन्धिनिष्ठाऽभावप्रतियोगितानवच्छेदकं तदेव स्वव्यापकतत्कत्वम्। क्वचित् अवच्छेदकत्वं स्वाश्रयसम्बन्धित्वात्मकम्। नितम्बे पर्वते वह्निरित्यत्र वह्निवृत्तितावच्छेदको नितम्बोऽवच्छेद्या तु वृत्तिता। अथ 'इदानीं तन्तौ न घटः' 'गृहे नेदानीं गौ' रित्यादौ तत्प्रत्ययबलात् देशकालयोरप्यवच्छेदकत्वं, तच्च स्वरूपसम्बन्धरूपम्, भावाऽभावयोरेकत्र समावेशादवच्छेदकत्वस्वीकारः। देशे कालः काले देशोऽप्यवच्छेदकः, तदधिकरणं तन्निष्ठधर्मावच्छेदकं भवति, प्रलयो न गवाद्यवच्छेदकः, विषणे व्यावर्त्तकत्वरूपम् अवच्छेदकत्वम्, क्वचिद्विषयतारूपं यथा साध्यतावच्छेदकत्वम्। व्यधिकरणधर्मे तु प्रतियोगितातिरिक्तवृत्तित्वे सति प्रतियोगितासमानाधिकरणं यत् तदन्यत्वम् अवच्छेदकत्वम् पारिभाषिकम्। अन्यूनाऽनतिरिक्तवृत्तित्वं प्रतियोगिताया व्यापकत्वे सति तस्या व्याप्यत्वम्। पारिभाषिकाऽवच्छेदकं स्थलभेदैर्बहुधा परिष्कृतिं लभते। एते परिष्कारा व्याप्त्यादिलक्षणगर्भेऽनुयोक्तध्या भवन्तीति॥ ३७७॥

**विशेषाऽभावकूटात्तु सामान्याऽभाव एव तु।**
**पृथक्, कूटेन सन्देहात् सामान्याभावसिद्धितः॥**

सामान्यावच्छिन्नप्रतियोगिताकाऽभावो विशेषाऽभावकूटात्पृथगेव, वायौ रूपविशेषाऽभावनिश्चयेऽपि 'वायू रूपाभाववान् तद्विशेषाऽभावकूटवत्त्वादि'त्यत्र सामान्याभावसंशये सति पक्षताव्याप्तिविशिष्टवैशिष्ट्यज्ञानेनाऽनुमितिः। विरुद्धयोरेकधर्मिसंसर्गावगाही संशयः, न तूभयप्रकारता तत्र नियता, यद्वाऽत्र 'रूपं वायुवृत्ति न वे'ति रूपधर्मिकः संशयः। अभावप्रति-

योगिका अभावाधिकरणकाश्चाऽभावा यदि पृथक्प्रयोजनाऽनर्हास्तर्हि त्वभिन्नाः, स्वरूपैणैक्ये ह्यन्यभावात्, अभावाऽभावाऽभावस्य प्रथमाऽभावरूपत्वात्॥ ३७८॥

**यद्वा विशेषतो व्याप्तिः सामान्याऽसंभवान्मता।**
**तद्धेतुतत्प्रतियोगितत्साध्यसंग्रहादिभिः॥३७९॥**

सा च प्रतियोगिव्यधिकरणस्वसमानाधिकरणाऽत्यन्ताऽभावाऽप्रतियोगिना सामानाधिकरण्यं व्याप्तिः। भूतलीयवह्न्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगिना पर्वतीयवह्निना सह सामानाधिकरण्यं धूमे संगतम्। सामान्यव्याप्तौ साध्यजातीयसमानाधिकरणसाधनजातीयत्वस्य व्याप्तित्वम्। विशेषव्याप्तौ साध्यसाधनयोः सामानाधिकरण्यस्य व्याप्तित्वे तात्पर्याद् भिन्नता। यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्वन्न भवति तेन समं तस्य सामानाधिकरण्यं वा व्याप्तिः। स्वसमानाधिकरणान्योन्याभावाप्रतियोगियद्वत्कत्वं वा व्याप्तिः। युगपदुत्पन्नविनष्टयोर्व्याप्तिः। यद्रूपावच्छिन्नं तादृशान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपावच्छिन्नसामानाधिकरण्यं व्याप्तिः। अथवा—अनौपाधिकत्वं व्याप्तिः। तच्च-यावत्स्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यत् तत्प्रतियोगिकात्यन्ताभावसमानाधिकरणं यत् तेन समं सामानाधिकरण्यं यत् तेन समं समानाधिकरण्यं व्याप्तिः। स्वं साधनत्वेनाभिमतम्। साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदका यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताऽभावप्रतियोगितावच्छेदकास्तद्धर्मावलीढसमानाधिकरण्यं व्याप्तिः। साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावा यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिः। अभावोऽत्र भावभिन्नो ग्राह्यः। यावत्स्वव्यभिचारिसाध्यसामानाधिकरण्यम् अनौपाधिकत्वम्। यद्वा यावद्यत्समानाधिकरणात्यन्ताभावाऽप्रतियोगिप्रतियोगिकाऽत्यन्ताऽभावाऽसामानाधिकरण्यं यस्य तस्य तदेवाऽनौपाधिकत्वं व्याप्तिः। सोपाधिकस्थले साध्यवन्निष्ठात्यन्ताभावाऽप्रतियोगिन उपाधेः योऽत्यन्ताभावस्तेन समं हेतोः समानाधिकरण्यं व्याप्तिः। साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वव्यापकस्वसामानाधिकरण्यसामान्याभावकत्वं व्याप्तिः। स्वं हेतुः। साध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताका यावन्तोऽभावाः प्रत्येकं तदभावशून्यत्वं यदधिकरणताया व्यापकं तत्त्वं व्याप्तिः। यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः। धूमस्य वह्निसम्बन्धित्वे धूमत्वम् अवच्छेदकम्। धूममात्रस्य वह्निसम्बन्धित्वात्। यत्सामानाधिकरण्यावच्छेदकावच्छिन्नत्वं यस्य स्वरूपं तत्तस्य व्याप्यम्। वह्निसामानाधिकरण्यं धूमे धूमत्वेन, उपाधौ तूपाधिनाऽवच्छिद्यते। अतिरिक्ते घटे यद्धर्मविशिष्टहेत्वधिकरणवृत्तित्वं न वर्तते तत्त्वं घटत्वे प्रतियोगिताया अनतिरिक्तवृत्तित्वम् अवच्छेदकत्वम्। साध्याऽसमानाधिकरणाऽवृत्तिस्वविशिष्टाऽधिकरणवृत्तित्वसामान्यकत्वं, स्वविशिष्टाधिकरणाऽवृत्तियावत्साध्याऽसमानाधिकरणकत्वं चाऽवच्छेदकत्वम्। यद्वा स्वरूपसम्बन्धविशेषोऽवच्छेदकत्वम्। यद्धर्मविशिष्टहेत्वधिकरणत्वं साध्याधिकरणताया अवच्छेदकं स धर्मो व्याप्तिः। अत्र स्वाऽन्यूनावृत्तिकत्वम् अवच्छेदकत्वम्। निरूपाधिकसम्बन्धो व्याप्तिः॥ ३१९॥

**सोपाधौ हेतुतावच्छेदकान्यन्नियतं तु यत्।**
**अवच्छेदकमेवाऽस्य विशेषोपाधिरुच्यते॥३८०॥**

साधनतावच्छेदकभिन्नेन येन साधनताऽभिमते साध्यसम्बन्धोऽवच्छिद्यते स एव तत्र साधने विशेषणमुपाधिः। साधनतावच्छेदकातिरिक्तो विशेषणीभूतसाध्यसम्बन्धितावच्छेदको नियतो विशेषधर्मं उपाधिः। अत्राऽवच्छेदकत्वम्, अन्यूनवृत्तित्वं, व्यापकत्वं समानाधिकरण्येन। ततः साध्यविशिष्टसाधनतावच्छिन्नसाधनवत्त्वव्यापकाधिकरणतावत्त्वम् उपाधिः। साध्यतावच्छेदकावच्छिन्नविशिष्टसाधनतावच्छेदकविशिष्टसाधनव्यापकत्वमुपाधिः। साध्याभावविशिष्टप्रकृतसाधनाधिकरणसामान्यात् साध्यविशिष्टप्रकृतसाध्याधिकरणसामान्यस्य व्यावर्तकत्वमुपाधित्वम्। उपाधिसामानाधिकरण्यं हेतौ साध्यसामाधिकरण्याऽन्यूनानतिरिक्तवृत्ति तत्त्वम् अवच्छेद-

कत्वम् । यद्वा—सर्वत्रोपाधौ सत्त्वे तत्र तत्र सर्वेणोपाधिना साध्यसम्बन्धोऽवच्छिद्यते इति न नियमः । तथा च—साधनाऽव्यापकत्वे सति साधनावच्छिन्नसाध्यव्यापकत्वम् उपाधिः । व्यभिचारिहेतौ साध्यतदभावयोर्विरोधेन अवच्छेदकभेदं विना साध्यतदभावोभयसम्बन्धाऽभावात् अवश्यं साध्यसम्बन्धितावच्छेदकं वर्तते तदेव साधनावच्छिन्नसाध्यव्यापकं साधनाऽव्यापकं च तत्रोपाधिः । साध्याभावसम्बन्धिनि विरुद्धस्य साध्यसम्बन्धस्य अवच्छेदकभेदं विनाऽनुपपद्यमानस्य अवच्छेदकीभूय उपपादनम् उपाधिफलम् । व्यभिचारे विपक्षगामित्वरूपव्यभिचारोन्नयनमेवोपाधिफलम् । साध्यसम्बन्धितावच्छेदकं रूपमेव व्याप्तिः । सोपाधौ तु स्वाभाविकं हेतुतावच्छेदकं न साध्यसम्बन्धितावच्छेदकम् । स्वसमीपवर्तिनि स्वसमानाधिकरणे व्यभिचारिणि हेतौ स्वनिष्ठसाध्यसम्बन्धितावच्छेदकरूपलक्षणव्याप्तिसंक्रामकतया साध्यव्याप्यस्यैवोपाधित्वमिति जपाकुसुमवदुपाधिरसावुच्यते । साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः । विषमव्याप्तो नोपाधिः । व्यभिचारोन्नायकत्वं दूषकत्वम् । नैतावता व्यभिचारोन्नायकत्वमुपाधित्वम् । अप्रयोजकसाध्यव्यापकव्यभिचारिणोऽप्युपाधित्वापत्तेः जलसंयोगादेस्तथाविधत्वापत्तेरिति ॥ ३८० ॥

**अथ व्याप्तिग्रहोपायः को वा दर्शनसंस्तरः ।**
**यद्वा तज्जन्यसंस्काराः सहचारविलोकजम् ॥३८१॥**

**यद्वोपायस्तु सम्बन्धभूयोदर्शनमित्यपि ।**
**तर्कः सामान्यप्रत्यासत्तिर्वाऽनौपाधिकत्वधीः ३८२**
**स सकृद्दर्शनं किंवा साध्यहेत्वन्वयेक्षणम् ।**
**उच्यते व्यभिचारज्ञप्त्यभावसहितं मतम् ॥३८३॥**
**व्याप्तिग्राहकमेवाऽत्र सहचारादिदर्शनम् ।**
**ज्ञप्तिनिश्चयशंकाऽभावस्तर्कात्स्वत एव वा ॥३८४॥**

भूयःसाध्यसाधनसहचारदर्शनेन व्याप्तिज्ञानं जायते इति न्यायमतम्। व्याप्तिः सकृद्दर्शनगम्येति प्राभाकरमतम् । दर्शनसमुदायास्तु नैके भवन्ति । दर्शनजन्याऽनेकसंस्कारसंस्तराः इन्द्रियसहकृता वा व्याप्तिग्रहहेतवः। तत्र समानविषये स्मरणे प्रत्यभिज्ञाने वा संस्कारो हेतुः, व्याप्तिगतपदार्था एव बहवः, यत्प्रत्यक्षाऽभावेन कथं संस्काराः स्युः, ग्रहजनकाश्च स्युः । अन्यथाऽतिप्रसंगात् । व्यापकत्वांशसंस्काराभावात्, व्यापकत्वांशे वा सहचारदर्शनजन्यसंस्काराऽभावात् अहेतुत्वात् ॥ किं तर्हि सकृत्सहचारदर्शनं हेतुः । तदपि न । उपेक्षात्मकेन तेन कालान्तरे व्याप्तिग्रहाऽभावप्रसंगात । सकृद्दर्शनं संस्काराधायकमित्यपि नियमाऽभावात, अदढतरसंस्काराद्वा शीघ्रनाशयोगिनस्तस्मात व्याप्तिग्रहाऽजननात ।। यत् सम्बन्धभूयोदर्शनं भूयःसु स्थानेषु सम्बन्धदर्शनं भूयसां वा सम्बन्धानां दर्शनं भूयांसि वा दर्शनानि, तदपि न । एकत्राऽऽम्रफले रूपरसयोर्व्याप्तिग्रहात् । एकत्राऽनुव्यवसायिसम्बन्धधारादर्शने व्याप्तिग्रहाऽभावात् । भूयसां सम्बन्धदर्शनानामननुगमात् । अपि च शतशो दर्शनेऽपि पार्थिवत्वलौहलेख्यत्वयोर्व्याप्त्यग्रहात् ।। तर्कसहकृतं भूयोदर्शनं तर्क एव वा कार्यकारणादिसहचारात्मको व्याप्तिग्राहकोऽस्तु इत्यपि न । व्याप्तिग्रहपूर्वं यत्र तर्कानुत्थानं तत्र व्यभिचारात् । यद्वा सहचारदर्शनव्यभिचाराऽदर्शनसहकृतस्तर्को व्याप्तिग्राहकः स्यात्, येन भूयोदर्शनं निरर्थकं स्यात् । यदि प्रथमदर्शने तर्कस्ततो भूयोदर्शनं ततो व्याप्तिग्रहस्तर्हि जातमात्रस्य प्रवृत्त्यादिजनककृतिसाध्यत्वानुमित्यौपयिकव्याप्तिग्रहस्य तर्कं विनाऽपि जायमानत्वेन व्यभिचारात्। व्याप्तिग्राहकतर्कमूलव्याप्तितन्मूलाऽपरव्याप्तिपरम्परागतानां सकलव्याप्तीनां तर्काधीनग्रहसामान्यकत्वोपगमेऽनवस्थानात् । सामान्यलक्षणाप्रत्यासत्तिर्हि घटत्वपृथिवीत्वरूपा देशान्तरीयघटे साधनसाध्यव्याप्तिग्राहिकेत्यपि न । सामान्यप्रत्यासत्तिस्तु सर्वोपसंहाररूपा न द्वारे करणे वा कारणम् , फलाऽन्तिकस्थितिकत्वात् भूयोदर्शनं विना सामान्यप्रत्यासत्त्यसंभवात्, तेन अन्यथाकरणात् । अथ—अनौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुः । तदपि न । उपाधिज्ञानोत्तरमत्र तदभाववत्ताज्ञानं ततः पक्षवृत्तित्वज्ञाने सत्येव सामानाधिकरण्यग्रहस्तत्र क्षणे उपाधिज्ञानस्याऽभावादेव कारणाऽभावात् । प्रतियोग्योपाध्यभावस्य तु अनुमानाधीनज्ञाने सति तत्रापि पुनरनुमानं तत्र पुनरित्यनवस्थापातात्, व्याप्तिग्रहक्षणपूर्वमेव

तस्य विलम्बकृतनाशाच्च। अथ साध्यसाधनसहचरितधर्मान्तराणामुपाधित्वसंशये सति न व्याप्तिग्रहः, तेषामनुपाधित्वज्ञानं न सकृद्दर्शनेन, किन्तु भूयोदर्शनाऽधीनसाध्याऽव्यापकत्वज्ञानेनेति न विलम्बादिः, यावद्व्याप्तिनिश्चयस्तावदनुवृत्तत्वात् इति चेत्। तन्न। अन्यधर्मोपाधयो न व्याप्तिग्रहनिरोधकाः, तदाहितव्यभिचारसंशयस्य प्रकृतसाध्यहेतावनियतत्वात्, नियतत्वे वा तस्य भूयोदर्शनं तद्विषयधर्मधर्मिकसंशयनिवर्तकं न तु साध्यहेतुसंशयनिवर्तकम्, भूयोऽन्वयादिसहचारज्ञानवतोऽपि व्याप्तिग्रहात् अनौपाधिकत्वम् अकिञ्चित्करम्। मानसग्राह्ये संस्कारद्वारकव्याप्तिग्रहे तु मनसः प्रमाणान्तरतापत्तिः। अथ स व्याप्तिग्रहोपायो न सकृद्दर्शनं न वा साध्यहेतुसम्बन्धभूयोदर्शनं न वा परिशेषानुमानं, तत्तदनुपस्थितावपि व्याप्तिग्रहसंभवात्। अथ तर्ह्येतेषामन्यतमोऽस्तु तद्धेतुरिति चेद् अननुगमात्? उच्यते—व्यभिचारज्ञानविरहसहकृतं सहचारदर्शनं व्याप्तिग्रहोपायः, ज्ञानं निश्चयः शंका च, तद्विरहः क्वचिद्विपक्षबाधकतर्कात्, स्वतो वा सिद्धः। साध्यतावच्छेदके तत्पुरुषीयतादृशाऽवच्छेदकत्वग्रहस्य विषयतयाऽभावस्तद्विषयत्वाऽभावो वा तत्पुरुषीयव्याप्तिग्रहे हेतुः। व्याप्तेः साध्यसाधनभेदभिन्नत्वेन विशिष्यैव कार्यकारणभावः, यत्र साधनं साध्याऽभाववद्वृत्ति, साध्यतावच्छेदकं साधनवन्निष्ठाऽभावप्रतियोगितावच्छेदकमेकविधमनेकविधं वा व्यभिचारज्ञानं प्रसिद्धं तत्र यथायोगं तदभावः पुरुषनिष्ठो व्याप्तिग्रहे हेतुः। व्याप्तिः—धूमादिव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वादिकम्, अत्र व्यापकत्वांऽशग्रहे व्यभिचाराऽग्रहो हेतुः, समानाधिकरणवृत्तित्वांऽशग्रहे विशेषणं समानाधिकरणग्रहो हेतुः। साध्यसम्बन्धितावच्छेदकरूपवत्त्वलक्षणव्याप्तिग्रहे विशेषणं सम्बन्धग्रहो हेतुः॥ व्यभिचारस्याऽग्रहः सहचारग्रहश्च व्याप्तिग्रहे हेतुः। तत्र शंकानिवर्तकस्तर्कः। भूयोदर्शनेन यत्र शंका न निवर्तते तत्र तर्कः शंकानिवर्तकः॥ ३८१-३८४॥

**व्याप्यारोपजनिव्यापकारोपस्तर्क उच्यते।**
**व्याप्यव्यापकधीर्व्याप्तिज्ञानं तज्जन्य एव सः।३८५।**
**कार्यकारणभंगादिशंकानिवर्तको मतः।**
**आपाद्यविरहेणाऽऽपादकाऽभावस्य साधकः॥ ३८६॥**

तर्कः—आहार्यव्याप्यवत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमात्मकः 'यद्ययं वह्निमान्न स्यात् धूमवान्न स्यादि'त्याकारकः। शंका—'वह्निविरहिणि यदि धूमः स्यादि'ति। 'धूमो वह्निव्यभिचारी न वेति' शंकाकारः। शंकाविघटकस्तर्कः। तर्कजनकः कार्यकारणभावनिश्चयः। धूमसमानाधिकरणाऽभावप्रतियोगिताऽनवच्छेदकत्वाऽन्यथासिद्धचनिरूपकत्वोभयविशिष्टवह्नित्ववत्त्वात्मकवह्निनिष्ठधूमकारणत्वनिश्चयान्निवर्तते शंका। धूमत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नं कारणम्, वह्निः धूमसमानाधिकरणाभावप्रतियोगिताऽनवच्छेदकत्वाऽन्यथासिद्धचनिरूपकत्वोभयविशिष्टवह्नित्ववान्। तन्निश्चयजन्यस्तर्कः। तत्र 'वह्निमान्न स्यादि'त्यापादकदलम्। 'धूमवान्न स्यादि'त्यापाद्यदलम्। आपाद्याभावेन धूमाभावाऽभावेन धूमेन, आपादकाभावस्य वह्न्यभावाभावस्य वह्नेः सिद्धिर्भवति, तेन शंका नश्यति। कार्यकारणभावनिश्चये तु अन्वयव्यतिरेकसहचारज्ञानं प्रत्यक्षं कारणम्, तज्जन्यं वा। 'वह्निमान्न स्याद् धूमवान्न स्यादि'ति तर्को विषयपरिशोधको न व्याप्तिग्रहौपयिकः। किन्तु 'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादि'तिव्याप्तिग्रहौपयिकः। अत्र आपाद्यव्याप्याऽऽपादकवत्ताज्ञानं कारणम्, तच्च 'पर्वते वह्निं विना धूमानुत्पत्ति' रिति। आपादकस्य वह्न्यभावस्य आपाद्यधूमाभावव्याप्यत्वेन तज्ज्ञानेन व्याप्तिग्रहौपयिकतर्कावतारे सति वह्निजन्यत्वाऽभावेन वह्निजन्यत्वेन वह्निव्यभिचारित्वाऽभावाऽभावस्य वह्निव्याप्तिनिश्चयस्य सिद्धिः। व्याप्तिज्ञाने शंकाविघटकस्तर्कः। अथ—धूमवह्निकार्यकारणभावेऽपि शंका भवति, तद्वारकः पुनस्तर्कः, तत्कारणे कार्यकारणभावे पुनराशंका पुनस्तर्कः, इत्येवमनवस्थापत्तिस्तु व्याघातेनाऽपसारणीया। 'वह्निं विना धूमः स्यान्न वा' 'धूमोऽहेतुक एव स्यान्न वा' एतच्छंकाद्वयम्। पुरुषः स्वप्रवृत्तिक्रियया व्याघातज्ञानेन च निवर्तयेत्, व्याघातज्ञानं स्वतन्त्रं शंकानाशकम्। 'यदि वह्निं विना धूमः स्यात्—धूमः स्वप्राक्क्षणीयवह्निकारणको न' वे'ति

शंका तु 'धूमार्थं वह्न्युपादानप्रवृत्तिस्तवैव न स्यात्' किन्तु प्रवृत्तिर्भवति उक्तो धूमकारणं वह्निर्भवति। किञ्च 'भोजनं विना तृप्तिर्भवति न वेति' शंकानाशार्थं तृप्त्यर्थं भोजनस्य प्रवृत्तिरेव न स्यादिति तृप्त्यन्यथानुपपत्त्या भोजनप्रवृत्तिज्ञानं तृप्तिभोजनयोः कार्यकारणभावस्य शंकाविघटनद्वारा दार्ढ्यप्रयोजकम्, धूमप्राप्त्यन्यथानुपपत्त्या वह्न्युपादानप्रवृत्तिज्ञानं वह्निधूमयोः कार्यकारणभावस्य शंकाविघटनद्वारा दार्ढ्यप्रयोजकम्। तत्तदुपादानग्रहणमेव तत्तच्छंकानाशकम्, शंकायां न नियतोपादानं, नियतोपादाने वा न शंकेति॥

व्याप्यारोपेण व्यापकारोपस्तर्कः, वह्न्यभावस्य व्याप्यस्य आहार्यज्ञाने, व्यापकस्य धूमाभावस्य आरोपः। आहार्यव्याप्यवत्ताभ्रमजन्य आहार्यव्यापकवत्ताभ्रमजन्यस्तर्कः। बाधनिश्चयकालीनेच्छाजन्यज्ञानम् आहार्यम्। बाधनिश्चयो वह्निधूमयोः पर्वते निश्चयः, तत्कालीनेच्छा 'वह्निव्याप्यधूमवति पर्वते वह्न्यभावज्ञानं धूमभावज्ञानं च जायतामि'ति। तज्जन्यं ज्ञानं 'पर्वतो वह्न्यभाववान् स्यात् धूमाभाववान् स्यात्। आहार्यव्याप्यवत्ताभ्रमः—'निर्वह्निः स्यात्'। तज्जन्यः—आहार्यव्यापकवत्ताभ्रमः—'निर्धूमः स्यात्'। व्याप्यत्वं स्वसमानाधिकरणाऽभावाऽप्रतियोग्यापाद्यकत्वम्। स्वम् आपादकत्वेनाऽभिमतम्। व्यापकत्वं निरुक्तव्याप्यत्वघटकाऽप्रतियोगित्वपर्यन्तम्। तर्को द्वेधा विषयपरिशोधको व्याप्तिग्राहकश्च। विषयपरिशोधकः—वह्न्यभाववान्स्याद् धूमाभाववान्स्यात्। व्याप्तिग्राहकः—धूमो वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यात्। तर्के आपाद्यव्यतिरेकनिश्चयः कारणम्। आपाद्यापादकयोर्व्याप्तिनिश्चयोऽपि कारणम्॥ तर्कः प्रकारान्तरेण द्विविधः—साक्षाद्व्यभिचारशंकानिवर्तकः, परम्परया वा। आद्यः—'धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यात्'। द्वितीयो 'वह्न्यभाववान् स्याद् धूमाभाववान् स्यात्' एतस्य धूमवति वह्न्यभावशंकानिरासद्वारा हेतुता। तर्कः प्रकारान्तरेणापि पञ्चधाः—आत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थातदन्यबाधितार्थप्रसंगभेदात्।

स्वस्य स्वाऽपेक्षितत्वेऽनिष्टप्रसंगः—आत्माश्रयः, स च उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा, क्रमशः 'यद्ययं घट एतद्घटजन्यः स्यात् एतद्घटाऽनधिकरणोत्तरक्षणवर्ती न स्यात्'। 'यद्ययं घट एतद्घटवृत्तिः स्याद् एतद्घटव्याप्यो न स्यात्'। 'यद्ययं घट एतद्घटज्ञानाऽभिन्नः स्याज्ज्ञानसामग्रीजन्यः स्यात्'। एवं सम्बन्धाभिन्नः स्यात्सम्बन्धी न स्यात्। एवम् अवयवव्यूहः स्याद् अवयवी न स्यात्। गुणः स्याद् गुणाश्रयो न स्यात्। जातिः स्यात् सामान्यवान्न स्यात्। अभावोऽधिकरणात्मकः स्यात् अधिकरणम् अभावः स्यात्। इत्याद्यास्तर्का अनुसन्धेयाः॥

तदपेक्षाऽपेक्षितत्वनिबन्धनोऽनिष्टप्रसंगोऽन्योन्याश्रयः, अयम् उत्पत्तिस्थितिज्ञप्तिद्वारा त्रेधा, क्रमशः—यद्येतौ बीजवृक्षौ अन्योन्यजन्यौ स्यातां तदा उभयभिन्नौ स्याताम् एकाऽसिद्ध्या वा उभावपि न स्याताम् यद्वा सुखःदुखे परस्पराऽभावात्मके स्याताम् एकाऽसिद्ध्या उभेऽपि न स्याताम्। यदि सुखदुःखस्थितिः परस्पराऽसाधारण (अदृष्ट) जन्या स्यात् परस्परविजातीयप्रतियोगिताका न स्यात्। यदि सुखदुःखे परस्पराऽभावज्ञानाऽभिन्ने स्यातां ज्ञानसामग्रीजन्ये स्याताम्। यदि सुखदुःखे सह स्यातां मोक्षेऽपि स्यातांम् यदि असहे स्यातां मोक्षे क्रमेण स्याताम्। यदि नैव स्याताम् अत्रैवाऽसंसारः स्यात्।

तदपेक्षाऽपेक्षापेक्षितत्वनिबन्धनोऽनिष्टप्रसंगश्चक्रकम्। अयमपि ज्ञप्त्युत्पत्तिस्थितिभेदात् त्रेधा, क्रमशः-व्याप्तिः संसर्गाऽभावघटिता, संसर्गाऽभावः—संसर्गारोपजन्यप्रतीतिविषयाऽभावः जन्यताघटितः, जन्यत्वं तद्व्याप्यत्वे सति तन्निष्ठाऽन्यथासिद्ध्यनिरूपकत्वं व्याप्तिघटितं, व्याप्तिश्च संसर्गाऽभावघटिता। तत्र व्याप्तिज्ञानं यदिस्वग्रहसापेक्षजन्यताग्रहसापेक्षसंसर्गाभावग्रहसापेक्षग्रहविषयं स्यात् स्वभिन्नं स्यादिति ज्ञप्तितर्कः। अथ उत्पत्तितर्कः—घटो यदि स्वकारणसापेक्षकारणसापेक्षकारणात्मकः स्यात् स्वभिन्नः स्यात्। अथ स्थितितर्काकारः—घटो यदि स्ववृत्तिसापेक्षवृत्तिसापेक्षवृत्तिसापेक्षवृत्त्यात्मकः स्यात् स्वभिन्नः स्यात्। चतुःकक्षादावपि स्वस्य स्वापेक्षाऽपेक्षितत्वादिसत्त्वात् चक्रकमेव॥

अथ—अव्यवस्थितपरम्पराऽऽरोपाऽधीनाऽनिष्ट-

प्रसंगोऽनवस्था—यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। कपालत्वं कपालिकाजन्यत्वव्याप्यं स्यात् खण्डसमवेतत्वव्याप्यं न स्यात् कपालिकात्वं पिण्डजन्यत्वव्याप्यं स्यात् गूटिका समवेतत्वव्याप्यं न स्यात्। गूटिकात्वं कणिकाजन्यत्वं व्याप्यं स्यात् पश्चाण्वादिसमवेतत्वव्याप्यं न स्यात् इत्याद्यनवस्था ॥

अथ—तदन्यबाधितार्थप्रसंगः-प्रकाशो यदि सूर्य व्यभिचारी स्यात् सूर्यजन्यो न स्यात्। प्रकाशो यदि परतः प्रकाशितः स्यात् अप्रकाशः स्यात् तत्त्वज्ञनिः स्यात् ॥

प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकं तु प्रसंगाऽनात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात् तर्कादिव्यवहारः ॥

तर्के त्रयो दोषाः—इष्टापत्तिः, मूलशैथिल्यम्, विपर्यये तर्ककोटिमात्राऽपर्यवसानं च। आद्यो दोषः— ह्रदो निर्वह्निः स्यान्निर्धूमः स्यात्। द्वितीयो दोषः— ह्रदो निर्वह्निः स्याद् द्रव्यं न स्यात्, वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात्। तृतीयो दोषः—रूपे चक्षुर्ग्राह्यत्वशंकानिरासतात्पर्यके 'रूपं चक्षुरितराऽग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात् नहि ग्राह्यं न स्यात् चक्षुर्ग्राह्यत्वात्मककोटिमात्राऽसिद्धेः ॥ तादृशदोषान्यतमविशिष्टस्तर्काभासः। दोषशून्यः सत्तर्कः ॥

ननु तर्कसामान्यस्य साक्षात्परम्परया वा व्यभिचारज्ञानप्रतिबन्धकत्वे प्रमाणाऽभावः, वह्निव्यभिचारित्वरूपाऽऽपादके वह्निजन्यत्ववदवृत्तित्वरूपवह्निजन्यत्वाऽभावात्मकाऽऽपाद्यव्याप्यत्वप्रकारकज्ञानस्य च तत्कारणत्वेन तत्पूर्वमावश्यकतया तेनैव व्यभिचारज्ञाननिवृत्तेः, तद्विरुद्धज्ञानकालीनतद्वत्ताज्ञानस्य तद्विरुद्धतया ज्ञायमानधर्मप्रकारकज्ञानप्रतिबन्धकत्वात्, इति चेन्न। अनाहार्यतादृशज्ञानस्य निरुक्तज्ञानप्रतिबध्यत्वेऽपि आहार्यज्ञानस्य केनाऽप्यप्रतिबध्यत्वान्निरुक्तज्ञानकाले आहार्यव्यभिचारादिज्ञानोत्पत्तौ बाधकाऽभावेन तन्निरासार्थं तर्कस्याऽऽवश्यकत्वात्। अनिष्टप्रसञ्जनात्मकतर्केण आपाद्यज्ञाने द्वेषस्यैवोत्पत्त्या तेन चाऽत्र प्रतिबन्धात् तादृशज्ञानस्य इष्टत्वाऽभावेनाऽऽपादकज्ञाने इष्टसाधनताज्ञानाऽनुत्पत्त्या कारणाऽभावेन इच्छाया अनुत्पत्त्याऽऽहार्यशंकाया उत्पत्त्यसंभवात् तादृशशंकां प्रति इच्छायाः कारणत्वादिति रीत्या तर्कस्य तादृशशंकानिवर्तकत्वात्। यद्वा—व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतायां तर्कस्य उत्तेजकत्वस्वीकारात् तर्ककाले व्यभिचारज्ञानसत्त्वेऽपि उत्तेजकाऽभावविशिष्टव्यभिचारज्ञानाऽभावरूपकारणसंभवात् तत्सम्पादकत्वरूपम् औपचारिकमेव व्यभिचारशंकानिवर्तकत्वं तस्येति। यद्वा—आहार्यज्ञानसाधारणतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदापादक तर्कत्वेन मणिमन्त्रादिन्यायेनाऽनुमितौ सिद्धेरेव तर्कस्याऽपि प्रतिबन्धकत्वम् आवश्यकम् ॥

ननु 'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्य एव न स्यात्' इति तर्क एव न भवति। तत्र वह्निजन्यत्वनिश्चयस्य प्रतिबन्धकत्वादिति चेन्न। आहार्यव्याप्यारोपेण आहार्यव्यापकारोपस्य तर्कतया आपाद्यव्यतिरेकनिश्चये आपाद्यव्याप्यवत्तानिश्चयस्य न प्रतिबन्धकत्वं, न वा आपाद्यव्यतिरेकनिश्चयस्य तर्के प्रतिबन्धकत्वमिति। तर्कत्वं मानसत्वव्याप्यो जातिविशेषः। तर्कपदशक्यतावच्छेदकतया सिद्धजातिमत्त्वं वा तर्कत्वम् ॥ ३८५–३८६ ॥

**शंकाद्वयं भवतीष्टापत्तिपर्यवसानकम्।**
**शंका तृतीया पुनरापादकाद्यप्रसिद्धिगा ॥३८७॥**

किं धूमोऽवह्नेरेव भविष्यति ?, क्वचिद्वह्निं विनापि भविष्यति ?, अहेतुक एव चोत्पत्स्यते ?, तर्हि सर्वत्र तत्र तत्र क्रियाव्यापारप्रवृत्तिव्याघात एव, तेन विना तत्संभवात्। अतस्तत्तत्कारणग्रहणं सर्वशंकानाशकं भवति। कार्यकारणभावाऽधीना व्याप्तिधीः, सामानाधिकरण्येनाऽन्वयव्यतिरेकग्रहाज्जायमानकार्यकारणभावग्रहवतो व्याप्तिर्जायते। कार्यकारणभावे शंकिते भावमात्राऽवलम्बितर्कोऽभावकोटिकशंकां निवर्तयति। प्रामाणिकावन्वयव्यतिरेकौ। तद्ग्रहः सामान्यव्यभिचारशंकाप्रतिबन्धकः। तत्र विशेषतः शंकाया निवर्तकस्तर्कः। यद्वा—अन्वयव्यतिरेकानुविधायिज्ञानं विशेषदर्शनरूपं शंकाप्रतिबन्धकम्, तच्च तर्कनिर्वाहकम्। यद्वा कार्यकारणभावग्रहोत्तरं व्याप्तिग्रहार्थं व्यधिकरणस्य जनकत्वशंकानिवारणार्थं तर्कः—'धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्या-

सत्या वह्निजन्यो न स्यात्तर्हि वह्निजन्यो न स्यात्' अप्रत्यासन्नस्याऽजनकत्वात्। यद्वा 'धूमो यदि वह्न्यन-धिकरणदेशानुत्पत्तिकत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात्' अनुत्पत्तिकत्वं तु बह्निसम्बन्धाऽभावात् ॥ ३८७ ॥

**नाऽऽशंका नियते हेतौ शंकायां व्यापृतेर्हतिः।**
**न व्याघातस्ततस्तत्र क्रिया शंकानिवर्तिका ॥३८८॥**

शंकायां नियतग्रहणं न, नियतग्रहणे शंका न, शंकायां व्यापारो न, व्यपारेण शंका नास्त्येव, ततस्तत्र व्याघातो नाऽपेक्ष्यते शंकानिवर्तकतया। स्वक्रियायाः शंकाप्रतिबन्धकत्वात्। न हि व्याघातः शंकाश्रितः, व्यापारेण शंकानाशात्। भूयोदर्शनं विना न तर्कावतारः, महानसे प्रथमं सहचारदर्शनेऽपि गोष्ठे वह्निं विनापि धूम उत्पत्स्यते इति शंकायां गोष्ठे तत्र द्वितीयतृतीयादिदर्शनैस्तर्कावतारः, क्वचिच्छंकानिवर्तकश्च। एतावता भूयःसहचारग्रहस्तर्कमद्वारीकृत्य न व्याप्तिग्रहोपयोगीति तर्को न मानान्तरम् अप्रमात्वात्। व्यभिचाराऽदर्शनं तु प्रत्यक्षव्याप्तिज्ञाने हेतुः। व्यभिचारशंकाविरहोऽनुकूलतर्कश्चेति द्वयं स्वरूपसदेव व्याप्तिग्रहोपायः। सत्तर्कात् व्याप्तिप्रमा, असत्तर्काद् व्याप्यप्रमा। आपाततः चिद्विपरीत ज्ञानोत्तरप्रत्यक्षनिवारणार्थं विशेषदर्शनमिव तर्कोऽप्युपयोगी, न तु विशेषतः सः कारणम् ॥ ३८८ ॥

**अथ तर्कान्तरापेक्षाऽनवस्थाकारिणी भवेत्।**
**यत्र व्याप्तिस्मृतिर्हेतुर्नाऽनवस्थाऽनपेक्षणात् ॥३८९॥**

यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तराऽपेक्षा, यत्र तु तर्के व्याप्त्यनुस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नाऽनवस्था। जातमात्राऽर्भकस्येष्टानिष्टज्ञानहेतुसंस्कारादिद्वारकव्याप्तिस्मरणपरम्परा तत्र तर्कान्तिरापेक्षेत्यनवस्था। अन्यत्र तु तत्रैव विश्रान्तिः। अनादिसिद्धकार्यकारणभावो व्याप्तिग्राहकतर्के मूलम्। भेदाऽभेदयोस्तादात्म्यादिना वृक्षशिंशपादिव्याप्तिग्राहके 'शिंशपा यदि वृक्षान्यतादात्म्या स्याद् वृक्षताद्यात्म्या न स्यात्, भेदाऽभेदयोर्विरोधात्' इति विरोधितर्केऽनादिसिद्धत्वस्य स्वरूपतः शंकाविरोधित्वे तज्ज्ञापकप्रमाणानुयोगाऽसंभवेऽपि तादृशतर्का अनुमानपर्यवसन्ना अवसेयाः। व्याप्तिग्रहाऽन्यथाऽनुपपत्तिरेवाऽनुमानम् ॥ यद्वा विपक्षबाधकतर्काद् अनौपाधिकत्वग्रहः, तदधीनः व्याप्तिग्रहः, तदधीनः परामर्शग्रहस्ततः फलम् ॥ यद्वा अनुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहः ॥ ३८९ ॥

**बह्व्यस्तु व्याप्तयस्तासु त्वन्योन्याभावगर्भितः।**
**लाघवाऽनुगमश्चानुमितिहेत्वनुपाधिकः ॥३९०॥**

अनौपाधिकत्वं सर्वासामन्योन्याभावगर्भाणां व्याप्तीनां धर्मो लक्षणमनुगमकम्। आर्द्रेन्धनसंयोगनिष्ठोपाधिविषयकज्ञानं न साध्यहेतुनिष्ठव्याप्तिज्ञानप्रतिबन्धकं व्यधिकरणत्वात्। अत उपाधिः न स्वतो दूषणम् अतो न हेत्वाभासः सः। किन्तु व्यभिचारज्ञानद्वारा उपाधिर्दूषकः, व्यभिचारोऽपि साध्याभाववद्वृत्तित्वरूपस्तदभावो न अव्यभिचारः, किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यरूपः, न चानयोः व्यभिचाराऽव्यभिचारयोः परस्परविरहत्वम्, येनाऽभिचारत्वं व्याप्तित्वं स्यात्। व्यभिचाराऽज्ञानं व्याप्तिज्ञाने हेतुः ॥ प्रतियोग्यधिकरणभिन्नसाध्याधिकरणाऽभिन्नाऽधिकरणवृत्तिहेतुत्वं व्याप्तिः। हेत्वनधिकरणाऽनधिकरणसाध्याधिकरणवृत्तिहेतुत्वं व्याप्तिः। साध्यानधिकरणाऽनधिकरणहेतुत्वं व्याप्तिः। साध्यवदन्यवृत्तिभिन्नवृत्तिहेतुत्वं व्याप्तिः। इत्याद्या अपि अन्योन्याभावघटिता व्याप्तयः संभवन्ति ॥ अन्योन्याभावाऽत्यन्ताभावगर्भव्याप्त्योरेकतराऽग्रहेऽन्यतरज्ञानादप्यनुमितिः, तदुभयज्ञानं तत्र हेतुः ॥ यद्वा—यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितोऽभावो धर्मिणि गृह्यमाणः साध्यवत्ताबुद्धिं विरुणद्धि तद्रूपावच्छिन्नप्रतियोगिताकाऽभावसामानाधिकरण्याऽवगाहिनो ग्रहस्य विरोधित्वेन व्याप्तिबुद्ध्योऽनुगमनीयाः ॥ साध्यतद्वदत्यन्ताभावाऽन्योन्याभावग्रहौ साध्यवत्ताबुद्धिं प्रतिबध्नीतः, केवलान्वयिनि भ्रमरूपस्य प्रसिद्धिः ॥

साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वावगाही च यो ग्रहस्तद्विरोधित्वं व्याप्तिज्ञानेषु अव्यभिचारग्रहत्वम् ॥ यद्वा-साध्याभाववदवृत्तित्व-साध्यवदन्यवृत्तित्वोभया-

प्रसंगोऽनवस्था—यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। कपालत्वं कपालिकाजन्यत्वव्याप्यं स्यात् खण्डसमवेतत्वव्याप्यं न स्यात् कपालिकात्वं पिण्डजन्यत्वव्याप्यं स्यात् गूटिका समवेतत्वव्याप्यं न स्यात्। गूटिकात्वं कणिकाजन्यत्वं व्याप्यं स्यात् पश्चाण्वादिसमवेतत्वव्याप्यं न स्यात् इत्याद्यनवस्था॥

अथ—तदन्यबाधितार्थप्रसंगः–प्रकाशो यदि सूर्य व्यभिचारी स्यात् सूर्यजन्यो न स्यात्। प्रकाशो यदि परतः प्रकाशितः स्यात् अप्रकाशः स्यात् तत्त्वज्ञनिः स्यात्॥

प्रथमोपस्थितत्वोत्सर्गविनिगमनाविरहलाघवगौरवादिकं तु प्रसंगाऽनात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात् तर्कादिव्यवहारः॥

तर्के त्रयो दोषाः—इष्टापत्तिः, मूलशैथिल्यम्, विपर्यये तर्ककोटिमात्राऽपर्यवसानं च। आद्यो दोषः–ह्रदो निर्वह्निः स्यान्निर्धूमः स्यात्। द्वितीयो दोषः–ह्रदो निर्वह्निः स्याद् द्रव्यं न स्यात्, वह्न्यभावादेर्द्रव्यत्वाभावाद्यव्याप्यत्वात्। तृतीयो दोषः–रूपे चक्षुर्ग्राह्यत्वशंकानिरासतात्पर्यके 'रूपं चक्षुरितराऽग्राह्यत्वे सति चक्षुर्ग्राह्यं न स्यात् नहि ग्राह्यं न स्यात् चक्षुर्ग्राह्यत्वात्मककोटिमात्राऽसिद्धेः॥ तादृशदोषान्यतमविशिष्टस्तर्काभासः। दोषशून्यः सत्तर्कः॥

ननु तर्कसामान्यस्य साक्षात्परम्परया वा व्यभिचारज्ञानप्रतिबन्धकत्वे प्रमाणाऽभावः, वह्निव्यभिचारित्वरूपाऽऽपादके वह्निजन्यत्ववदवृत्तित्वरूपवह्निजन्यत्वाऽभावात्मकाऽऽपाद्यव्याप्यत्वप्रकारकज्ञानस्य च तत्कारणत्वेन तत्पूर्वमावश्यकतया तेनैव व्यभिचारज्ञाननिवृत्तेः, तद्विरुद्धज्ञानकालीनतद्वत्ताज्ञानस्य तद्विरुद्धतया ज्ञायमानधर्मप्रकारकज्ञानप्रतिबन्धकत्वात्, इति चेन्न। अनाहार्यतादृशज्ञानस्य निरुक्तज्ञानप्रतिबध्यत्वेऽपि आहार्यज्ञानस्य केनाऽप्यप्रतिबध्यत्वान्निरुक्तज्ञानकाले आहार्यव्यभिचारादिज्ञानोत्पत्तौ बाधकाऽभावेन तन्निरासार्थं तर्कस्याऽऽवश्यकत्वात्। अनिष्टप्रसञ्जनात्मकतर्केण आपाद्यज्ञाने द्वेषस्यैवोत्पत्त्या तेन चाऽत्र प्रतिबन्धात् तादृशज्ञानस्य इष्टत्वाऽभावेनाऽऽपादकज्ञाने इष्टसाधनताज्ञानाऽनुत्पत्त्या कारणाऽभावेन इच्छाया अनुत्पत्त्याऽऽहार्यशंकाया उत्पत्त्यसंभवात् तादृशशंकां प्रति इच्छायाः कारणत्वादितिरीत्या तर्कस्य तादृशशंकानिवर्तकत्वात्। यद्वा–व्यभिचारज्ञानस्य व्याप्तिज्ञानप्रतिबन्धकतायां तर्कस्य उत्तेजकत्वस्वीकारात् तर्ककाले व्यभिचारज्ञानसत्त्वेऽपि उत्तेजकाऽभावविशिष्टव्यभिचारज्ञानाऽभावरूपकारणसंभवात् तत्सम्पादकत्वरूपम् औपचारिकमेव व्यभिचारशंकानिवर्तकत्वं तस्येति। यद्वा–आहार्यज्ञानसाधारणतत्प्रकारकबुद्धित्वावच्छिन्नं प्रति तदापादक तर्कत्वेन मणिमन्त्रादिन्यायेनाऽनुमितौ सिद्धेरेव तर्कस्याऽपि प्रतिबन्धकत्वम् आवश्यकम्॥

ननु 'धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्य एव न स्यात्' इति तर्क एव न भवति। तत्र वह्निजन्यत्वनिश्चयस्य प्रतिबन्धकत्वादिति चेन्न। आहार्यव्याप्यारोपेण आहार्यव्यापकारोपस्य तर्कतया आपाद्यव्यतिरेकनिश्चये आपाद्यव्याप्यवत्तानिश्चयस्य न प्रतिबन्धकत्वं, न वा आपाद्यव्यतिरेकनिश्चयस्य तर्के प्रतिबन्धकत्वमिति। तर्कत्वं मानसत्वव्याप्यो जातिविशेषः। तर्कपदशक्यतावच्छेदकतया सिद्धजातिमत्त्वं वा तर्कत्वम्॥ ३८५–३८६॥

**शंकाद्वयं भवतीष्टापत्तिपर्यवसानकम्।**
**शंका तृतीया पुनरापाद्काद्यप्रसिद्धिगा॥३८७॥**

किं धूमोऽवह्नेरेव भविष्यति?, क्वचिद्वह्निं विनापि भविष्यति?, अहेतुक एव चोत्पत्स्यते?, तर्हि सर्वत्र तत्र तत्र क्रियाव्यापारप्रवृत्तिव्याघात एव, तेन विना तत्संभवात्। अतस्तत्तत्कारणग्रहणं सर्वशंकानाशकं भवति। कार्यकारणभावाऽधीना व्याप्तिधीः, सामानाधिकरण्येनाऽन्वयव्यतिरेकग्रहाज्जायमानकार्यकारणभावग्रहवतो व्याप्तिर्जायते। कार्यकारणभावे शंकिते भावमात्राऽवलम्बितर्कोऽभावकोटिकशंकां निवर्तयति। प्रामाणिकावन्वयव्यतिरेकौ। तद्ग्रहः सामान्यव्यभिचारशंकाप्रतिबन्धकः। तत्र विशेषतः शंकाया निवर्तकस्तर्कः। यद्वा–अन्वयव्यतिरेकानुविधायिज्ञानं विशेषदर्शनरूपं शंकाप्रतिबन्धकम्, तच्च तर्कनिर्वाहकम्। यद्वा कार्यकारणभावग्रहोत्तरं व्याप्तिग्रहार्थं व्यधिकरणस्य जनकत्वशंकानिवारणार्थं तर्कः–'धूमो यदि सामानाधिकरण्यातिरिक्तप्रत्यासत्त्या वह्न्यजन्यत्वे सति सामानाधिकरण्यप्रत्या-

सत्त्या वह्निजन्यो न स्यात्तर्हि वह्निजन्यो न स्यात्' अप्रत्यासन्नस्याऽजनकत्वात्। यद्वा 'धूमो यदि वह्न्यचनधिकरणदेशानुत्पत्तिकत्वे सति वह्न्यधिकरणदेशोत्पत्तिको न स्यात् जन्यो न स्यात्' अनुत्पत्तिकत्वं तु वह्निसम्बन्धाऽभावात्॥ ३८७॥

**नाऽऽशंका नियते हेतौ शंकायां व्याप्तृतेर्हेतिः।**
**न व्याघातस्ततस्तत्र क्रिया शंकानिवर्तिका॥३८८॥**

शंकायां नियतग्रहणं न, नियतग्रहणे शंका न, शंकायां व्यापारो न, व्यपारेण शंका नास्त्येव, ततस्तत्र व्याघातो नाऽपेक्ष्यते शंकानिवर्तकतया। स्वक्रियायाः शंकाप्रतिबन्धकत्वात्। न हि व्याघातः शंकाश्रितः, व्यापारेण शंकानाशात्। भूयोदर्शनं विना न तर्कावतारः, महानसे प्रथमं सहचारदर्शनेऽपि गोष्ठे वह्निं विनापि धूम उत्पत्स्यते इति शंकायां गोष्ठे तत्र द्वितीयतृतीयादिदर्शनैस्तर्कावतारः, क्वचिच्छंकानिवर्तकश्च। एतावता भूयःसहचारग्रहस्तर्कमद्वारीकृत्य न व्याप्तिग्रहोपयोगीति तर्को न मानान्तरम् अप्रमात्वात्। व्यभिचाराऽदर्शनं तु प्रत्यक्षव्याप्तिज्ञाने हेतुः। व्यभिचारशंकाविरहोऽनुकूलतर्कश्चेति द्वयं स्वरूपसदेव व्याप्तिग्रहोपायः। सत्तर्कात् व्याप्तिप्रमा, असत्तर्काद् व्याप्यप्रमा। आपाततः चिद्विपरीतज्ञानोत्तरप्रत्यक्षनिवारणार्थं विशेषदर्शनमिव तर्कोऽप्युपयोगी, न तु विशेषतः सः कारणम्॥ ३८८॥

**अथ तर्कान्तरापेक्षाऽनवस्थाकारिणी भवेत्।**
**यत्र व्याप्तिस्मृतिर्हेतुर्नाऽनवस्थाऽनपेक्षणात्॥३८९॥**

यत्र तर्के व्याप्त्यनुभवो मूलं तत्र तर्कान्तराऽपेक्षा, यत्र तु तर्के व्याप्त्यनुस्मरणं हेतुस्तत्र न तर्कान्तरापेक्षेति नाऽनवस्था। जातमात्राऽर्भकस्येष्टानिष्टज्ञानहेतुसंस्कारादिद्वारकव्याप्तिस्मरणपरम्परा तत्र तर्कान्तरापेक्षेत्यनवस्था। अन्यत्र तु तत्रैव विश्रान्तिः। अनादिसिद्धकार्यकारणभावो व्याप्तिग्राहकतर्के मूलम्। भेदाऽभेदयोस्तादात्म्यादिना वृक्षशिंशपादिव्याप्तिग्राहके 'शिंशपा यदि वृक्षान्यतादात्म्या स्याद् वृक्षताधात्म्या न स्यात्, भेदाऽभेदयोर्विरोधात्' इति विरोधितर्केऽनादिसिद्धत्वस्य स्वरूपतः शंकाविरोधित्वे तज्ज्ञापकप्रमाणानुयोगाऽसंभवेऽपि तादृशतर्का अनुमानपर्यवसन्ना अवसेयाः। व्याप्तिग्रहाऽन्यथाऽनुपपत्तिरेवाऽनुमानम्॥ यद्वा विपक्षबाधकतर्काद् अनौपाधिकत्वग्रहः, तदधीनः व्याप्तिग्रहः, तदधीनः परामर्शग्रहस्ततः फलम्॥ यद्वा अनुकूलतर्कं विनैव सहचारादिदर्शनमात्रेण व्याप्तिग्रहः॥ ३८९॥

**बह्व्यस्तु व्याप्तयस्तासु त्वन्योन्याभावगर्भितः।**
**लाघवाऽनुगमश्चानुमितिहेत्वनुपाधिकः॥३९०॥**

अनौपाधिकत्वं सर्वासामन्योन्याभावगर्भाणां व्याप्तीनां धर्मो लक्षणमनुगमकम्। आर्द्रेन्धनसंयोगनिष्ठोपाधिविषयकज्ञानं न साध्यहेतुनिष्ठव्याप्तिज्ञानप्रतिबन्धकं व्यधिकरणत्वात्। अत उपाधिः न स्वतो दूषणम् अतो न हेत्वाभासः सः। किन्तु व्यभिचारज्ञानद्वारा उपाधिर्दूषकः, व्यभिचारोऽपि साध्याभाववद्वृत्तित्वरूपस्तदभावो न अव्यभिचारः, किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यरूपः, न चानयोः व्यभिचाराऽव्यभिचारयोः परस्परविरहत्वम्, येनाऽभिचारत्वं व्याप्तित्वं स्यात्। व्यभिचाराऽज्ञानं व्याप्तिज्ञाने हेतुः॥ प्रतियोग्यधिकरणभिन्नसाध्याधिकरणाऽभिन्नाऽधिकरणवृत्तिहेतुत्वं व्याप्तिः। हेत्वनधिकरणाऽनधिकरणसाध्याधिकरणवृत्तिहेतुत्वं व्याप्तिः। साध्यानधिकरणाऽनधिकरणहेतुत्वं व्याप्तिः। साध्यवदन्यवृत्तिभिन्नवृत्तिहेतुत्वं व्याप्तिः। इत्याद्या अपि अन्योन्याभावघटिता व्याप्तयः संभवन्ति॥ अन्योन्याभावाऽत्यन्ताभावगर्भव्याप्त्योरेकतराऽग्रहेऽन्यतरज्ञानादप्यनुमितिः, तदुभयज्ञानं तत्र हेतुः॥ यद्वा—यद्रूपावच्छिन्नप्रतियोगिताकत्वेनोपस्थितोऽभावो धर्मिणि गृह्यमाणः साध्यवत्ताबुद्धिं विरुणद्धि तद्रूपावच्छिन्नप्रतियोगिताकाऽभावसामानाधिकरण्याऽवगाहिनो ग्रहस्य विरोधित्वेन व्याप्तिबुद्धयोऽनुगमनीयाः॥ साध्यतद्वदत्यन्ताभावाऽन्योन्याभावग्रहौ साध्यवत्ताबुद्धिं प्रतिबध्नीतः, केवलान्वयिनि भ्रमरूपस्य प्रसिद्धिः॥

साध्यतावच्छेदके साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च साधनसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वावगाही च यो ग्रहस्तद्विरोधित्वं व्याप्तिज्ञानेषु अव्यभिचारग्रहत्वम्॥ यद्वा-साध्याभाववदवृत्तित्व–साध्यवदन्यवृत्तित्वोभया-

वगाहिग्रहविरोधित्वादिकं साधनधर्मिकतादृशव्यभिचारद्वयग्रहविरोधित्वेनाऽव्यभिचारत्वात्मकव्याप्तिज्ञानत्वानुगमः। व्यभिचाराऽज्ञानं व्याप्तिज्ञानहेतुरिति 'व्याप्तिग्रहप्रतिबन्धकग्रहविषयत्वेन व्यभिचारस्य दोषत्वम्। सोऽपाधित्वज्ञानं न साक्षाद्व्याप्तिज्ञानविरोधि, विरोध्यविषयकत्वात्, किन्तु व्यभिचारधीद्वारेति। निरुपाधित्वज्ञानं प्रयोजकज्ञानमपि उपाधिर्नाऽभासरूपः। जनकज्ञाने साक्षाद्विरोध्येवाऽऽभासः॥

व्याप्यवृत्तिसाध्यके 'स्वव्यापकसाध्यसामानाधिकरण्यमेव' व्याप्तिः। अव्याप्यवृत्तिसाध्यके स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन, तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योन्याभावेन, वा समसामानाधिकरण्यं व्याप्तिः। स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तिधर्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं व्याप्तिः। यद्धर्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाऽन्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्मविशिष्टत्वं व्याप्तिः। स्वाधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगिकाऽत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वं व्याऽप्तिः। स्वप्रतियोगिनिष्ठाऽऽधेयत्वाऽनिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगिताऽनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वं व्याप्तिः। साध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगिताऽनवच्छेदकत्वव्यापकस्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाऽभावप्रतियोगितानवच्छेदकत्वकत्वं व्याप्तिः। स्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगिताऽवच्छेदकत्वव्यापकसाध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाऽभावप्रतियोगितावच्छेदकत्वकत्वं व्याप्तिः। स्वसमानाधिकरणाः सर्वे यद्धर्मावच्छिन्नसमानाधिकरणास्तद्धर्मावलीढसामानाधिकरण्यं व्याप्तिः। साध्यसामानाधिकरण्याऽभावव्यापकतावच्छेदकस्वसामानाधिकरण्यसामान्याभावत्वकत्वं व्याप्तिः। साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तिद्वयम् एकेन सम्बन्धेन विशेषण वा ग्राह्यम्॥ ३९०॥

**व्याप्तिग्रहस्तु सामान्यलक्षणाऽऽसत्तिसर्गतः।**
**यावद्धूमादिविषयश्चेन्द्रियाऽऽसप्रकारतः॥३९१॥**
**क्लृप्तसंसर्गतो वापि सामान्यं तत्प्रतिश्च वा।**
**प्रत्यासत्तिर्यथाऽपेक्षा, तयाऽणुधीर्हि मानसी॥३९२॥**

सामान्यलक्षणाप्रत्यासत्त्या पर्वतीयवह्निव्याप्तिग्रहस्तेन पर्वतीयधूमे वह्निव्याप्तिविशिष्टधीः। समानाधिकरणयोश्च व्याप्तिरिति। सेयं प्रत्यासत्तिरिन्द्रियसम्बद्धविशेषणता सामान्यमेव सामान्यज्ञानं वा प्रत्यासत्तिः। इन्द्रियसम्बन्धो लौकिकः, ज्ञानस्य लौकिकसम्बन्धजन्यत्वं नियामकं, तथा चाऽणुत्वेन यत्किञ्चिदणूपस्थितावपि सकलाऽणुगोचरो मानसो बोधः प्रत्यासत्तिः। धूमभ्रमेण ज्ञानेन सकलधूमज्ञाननिर्वाहः, धूमत्वाऽसत्त्वस्याऽकिञ्चित्करत्वात्, संयोगित्वसामान्यज्ञानलक्षणया सकलधूमभानात्। सामान्यं सखण्डम् अखण्डं च, यावतामाश्रयाणां भानमुपपाद्यं तावद्वृत्तित्वे सति तावद्वृत्तितावच्छेदकधर्मवत्त्वं सखण्डत्वम्, यथा वह्नित्वाऽवच्छिन्नस्य, तावद्व्यक्तिवृत्तित्वम् अखण्डत्वं यथा वह्नित्वादेः। सखण्डसामान्याश्रये वह्न्यादिमति वह्नित्वमखण्डं परम्परया प्रत्यासत्तिः। येन सम्बन्धेन चेन्द्रियसम्बद्धे सामान्यं ज्ञायते तेन सम्बन्धेनाऽधिकरणानां प्रत्यासत्तिः। नानाधिकरणप्रत्यासन्नघटादिप्रागभावस्तत्रापि स्वाश्रयप्रतियोगिकप्रागभाववत्त्वेन घटत्वज्ञानं प्रत्यासत्तिः। तदिन्द्रियसम्बद्धविशेष्यकतदिन्द्रियजन्यसामान्यप्रकारकज्ञानरूपा प्रत्यासत्तिः। तज्ज्ञानत्वं प्रत्यासत्तितावच्छेदकम्। अतीताऽनागताद्यनुरोधात् सामान्यज्ञानं प्रत्यासत्तिः। अन्धकारे विद्युद्विलासे क्षितौ चरमे घटप्रत्यक्षे न निखिलघटचाक्षुषसाक्षात्कारसन्तानः, तत्र चक्षुरादिकरणकघटवत्त्वज्ञानस्य घटचक्षुःसंयोगादिसामग्र्यन्तराऽसत्त्वे किञ्चिद्घटांशे चाक्षुषत्वं न तु निखिलघटांशे इति तत्र तथाविधसामग्र्यन्तरमपेक्षते। यदा बहिरिन्द्रियेण चक्षुषा घटलक्षणया भूतलं घटवदिति ज्ञानं जननीयं तदा किञ्चिद्घटवद्भूतलधर्मिणि चक्षुःसंयोगादिसामग्र्यन्तरमपेक्षणीयम्। धर्मज्ञानं धर्मिप्रत्यासत्तिः सामान्यलक्षणा। ज्ञानलक्षणा तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिः, सुरभिचन्दनमित्यादौ सौरभत्वभानं ज्ञानलक्षणयेति॥ ३९१-३९२॥

**सर्वसाधारणव्याप्त्या प्रत्यक्षरूपया ततः ।**
**स्मृत्या लिंगपरामर्शेऽनुमा सामान्यतोज्झिता ।३९३**

ननु सामान्यलक्षणा नोपेया, महानसीये धूमे प्रत्यक्षेण धूमत्वेन व्याप्तिर्ज्ञायते, पर्वतीयधूमे स्मर्यते व्याप्तिः, तृतीयलिङ्गपरार्शे तु पक्षनिष्ठधूमवृत्तितया ज्ञायते, ततोऽनुमितिः, एवं सर्वत्र । सामान्यलक्षणां विनाऽपि सन्निकृष्टे धूमे धूमत्वेन धूमो वह्निव्याप्य इत्यनुभवस्थैव व्याप्तिस्मरणं ततो धूमवानयमिति व्याप्तिस्मृतिप्रकारेण धूमत्वेन पक्षवृत्तिधूमज्ञानादनुमितिः । व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारकत्वेनाऽनुमितिहेतुत्वात् । अत्र धूमसमानाधिकरणात्यन्ताभावाऽप्रतियोगिवह्निसमानाधिकरणवृत्तिधूमत्वं वह्निमदन्यावृत्तिधूमत्वं, वह्निसम्बन्धितावच्छेदकधूमत्वरूपवत्त्वं वा व्याप्तिः । एकैव हि सा व्याप्तिः सर्वधूमसाधारणी । अनुमाने पक्षधर्मताबलात् धूमो वह्निव्याप्य इत्यनुभवः, न तु सर्वो धूमो वह्निव्याप्य इत्यनुभवः, यदर्थं सामान्यलक्षणस्वीकृतिः स्यात् । प्रमेयत्वेन सार्वज्ञ्यापत्तिश्च स्यात् । विशिष्टवैशिष्टयज्ञाने विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वं न तु विशेषणज्ञानस्य, यदर्थं सामान्यलक्षणा स्वीकृता स्यादिति ॥

अत्रोच्यते—प्रसिद्धधूमे वह्निसम्बन्धावगमात्, कालान्तरीयदेशान्तरीयधूमस्य प्रमाणविरहेणाऽभानात्, सामान्यलक्षणया तु सकलधूमोपस्थितौ धूमान्तरे विशेषाऽदर्शनेन अनुकूलतर्कादिना च संशयो व्यभिचारसंशयो युज्यते, ततः पक्षतादिज्ञानोत्तरं फलं स्यात् । संशये धर्मिभानार्थं सामान्यलक्षणायाः स्वीकारात्, संशयस्य प्रत्यक्षतया तत्राऽप्रत्यासन्नस्य भानाऽसंभवात् । तद्धर्मप्रकारकज्ञानस्य तद्धर्म्याश्रयप्रत्यासत्तित्वोपगमात् । नियमतश्चोपस्थितानामतिरिक्तानां विशेषदर्शनाऽऽक्रान्ततया अतिरिक्तान्तरोपस्थितयेऽवश्यं सामान्यलक्षणा स्वीकरणीया । सामान्याभावसम्भावनार्था सा स्वीकार्या, तां विना सकलतत्प्रतियोगिज्ञानाऽसम्भवात् । घटो भविष्यतीति प्रतियोगिविशेषितप्रागभावमवगाहते तत्र सामान्यलक्षणया घटत्वेनाऽनुभूतं स्मृतं वा तदालम्बते । अत्र पिण्डे इदानीं घटप्रागभाव इतिप्रतीतिविरहाऽभावप्रतियोगिबोधः सामान्यलक्षणया । क्वचित्सामानाधिकरण्यमिव समानविषयकत्वमपि प्रत्यासत्तिः । घटेतिज्ञानं निश्चयात्मकं तत्र घटत्वांऽशे निर्विकल्पकं कारणं सामान्यलक्षणायास्तत्र सामान्यप्रकारकज्ञानजनकत्वम् । सर्वं साजात्यं वैजात्यं सामान्यलक्षणात्मकमेव ज्ञानसम्बन्धः । सर्वो व्यवहारः स्फुरणात्मकस्ततः शब्दात्मकस्ततोऽर्थात्मकस्त एते व्यवहारा साजात्याद्यवलम्बनाः सामान्यलक्षणान्विता एवेति ॥ ३९३ ॥

**उपाधिनैकान्तिकत्वे व्याप्तिरेव न मीयते ।**
**साध्यव्यापकहेत्वव्यापकस्तूपाधिरुच्यते ॥३९४॥**

उपाधिज्ञानाद् व्यभिचारज्ञाने सति व्याप्तिनिश्चयो न भवेदत उपाधिर्निरूपणीयः । स च साध्यत्वादभिमतव्यापकत्वे सति साधनत्वाभिमताऽव्यापकः यो यद्व्यापकत्वे सति यदव्यापकः स तत्रोपाधिः । व्यापकत्वाऽव्यापकत्वे एकरूपेण विवक्षिते, यद्वा—व्यापकत्वं तद्वन्निष्ठात्यन्ताभावाऽप्रतियोगित्वम्, तत्प्रतियोगित्वं चाऽव्यापकत्वम्, प्रतियोगित्वं च तदधिकरणाऽनधिकरणत्वम्, यद्वाप्रतियोगित्वं तदधिकरणाधिकरणत्वविरोधि यत्प्रतियोगित्वं प्रतियोगिव्यधिकरणाऽभावप्रतियोगित्वम् । अभावः प्रतियोगिव्यधिकरणो ग्राह्यः । मित्रातनयत्वेन श्यामत्वसाधने शाकपाकजत्वस्य, प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षस्पर्शाश्रयत्वेन वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य चोपाधित्वस्वीकारात् । पक्षेतरत्वं बाधोन्नीतपक्षेतरत्वं चाप्युपाधिर्यथावश्यकं भवति । साध्यव्यापकः पक्षेतर उपाधिः, पक्षेतरे साध्यव्यापकताग्रहादुपाधेर्दूषकत्वम् । यद्विषयतया ज्ञानस्याऽनुमितिप्रतिबन्धकत्वं तदेवोपाधित्वमत्र । यद्वा—विपक्षाऽव्यावर्तकविशेषणानवच्छिन्नसाध्यव्यापकत्वसाधनाऽव्यापकत्वशालित्वम् उपाधित्वम् । अथ साध्यव्याप्येन हेतुना साध्यस्य साध्यव्यापकोपाधिव्यावृत्त्या साध्याभावस्यापि साधनीयत्वेन व्याप्तिग्रहतौल्यात् दूषकताबीजं सत्प्रतिपक्षस्वरूपमिति । यदि तत्र व्याप्ति पक्षधर्मतारूपबलदार्ढ्यं तदा एकेन बहूनां प्रतिरोधात्तत्र सत्प्रतिपक्षोत्थापकतया नोपाधेर्दूषकत्वम् । सत्प्रतिपक्षे चोपाध्युद्भावनविरहापत्तिश्च । हेतुमति पक्षे बाधे पक्षेतरत्वमुपाधिः, । असंकीर्णबाधस्थले तु

व्यभिचारः। पर्वताऽवयववृत्त्यन्यत्वं पर्वतेतरद्रव्यत्वं ह्रदपर्वतसंयोगाऽनाधारत्वं ह्रदपर्वतान्यत्वादिकम् उपाधिः स्यादेव, व्यतिरेकेऽसाधारण्याऽभावात् सत्प्रतिपक्षसंभवात् सत्प्रतिपक्षोत्थापकतया दोषत्वम्, उभयव्याप्तिसाम्ये न व्याप्तिनिश्चयोऽपि तु व्यभिचारसंशयः, व्यभिचारसंशयाऽऽधायकत्वेनोपाधेस्तत्र दूषकत्वम्, पक्षेतरत्वं तत्र दूषकं स्यात्। यदि सकलानुमानभंगभिया पक्षेतरत्वं नोपाधिस्तथापि तत्रोपाधित्वलक्षणातिव्याप्तिनिवारणार्थं विपक्षाऽव्यावर्तकविशेषणाऽनवच्छिन्नसाध्यव्यापकत्वसाधनाव्यापकत्वशालित्वं वक्तव्यमेव। यदि तु जन्याऽणवः सकर्तृकाः कार्यत्वादित्यत्र अनणुत्वस्य उपाधित्वं स्यात्। यदि साध्यसमव्याप्तत्वे सति साधनाऽव्यापकत्वमुपाधित्वम्, तर्हि विषमव्याप्तोपाधावव्याप्तिः। अथ साध्यप्रयोजको धर्म उपाधिः, दूषणौपयिकं प्रयोजकत्वम्, तच्च साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमेव। अथ यद्धर्मोऽन्यत्र प्रतिबिम्बते जपाकुसुमस्य लौहित्यं स्फटिके इव तस्योपाधित्वम्, उपाधिवृत्तिव्याप्यत्वं हेतुत्वाभिमते चकास्तीति चकासक उपाधिः, तथा च समव्याप्त उपाधिः। अनुमानदूषणार्थं तु साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधित्वमुचितम्। यद्वा—यद्भावो व्यभिचारविरोधी स उपाधिः, विषमव्याप्तस्याऽभावो न व्यभिचारविरोधी, तस्याऽभावेऽपि व्यभिचारात्। समव्याप्तस्याऽभावो व्यभिचारविरोधी, अतः समव्याप्तत्वमुपाधिः, साध्यव्यापकव्याप्यीभूतस्य व्याप्यं यत्तत् साध्यं न व्यभिचरति, व्यभिचारे च तत्साध्यमेव तादात्म्येन उपाधिः, अभेदेन व्याप्यव्यापकत्वात् साधनाऽव्यापकत्वाच्च। किं वा साध्यव्याप्यव्यापकत्वं साध्यव्याप्यत्वं वाऽनौपाधिकत्वम्। उपाध्यभावस्वरूपत्वमनौपाधिकत्वम्। यद्वा—यस्य यद्व्यभिचारस्य यद्व्याप्यत्वस्य वाऽभावः साध्यव्यापके साध्यव्यभिचारविरोधी स साधनाऽव्यापक उपाधिः। यद्व्यभिचाराऽभावः साधने साध्यव्यभिचाराऽभावापादकः स साध्यव्यापक उपाधिरिति॥ यदि व्याप्तिलक्षणम् अनौपाधिकत्वं तर्हि—यावत्साध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधिः। यस्मिन्सत्यनुमितिर्न भवति तदेव तत्र दूषणम्। पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वलक्षणस्य तु साधनावच्छिन्नसाध्यव्यापकोपाधावव्याप्तिर्भवति॥ अथ यत्र हेतुः पक्षाऽवृत्तिः साध्यं च हेतुमति पक्षे, तत्र पक्षाऽवृत्तिर्हेतुसमानाधिकरण उपाधिकरण उपाधिः, काकः श्यामो मित्रातनयत्वादित्यत्रसाधनावच्छिन्नसाध्यव्यापकः। अथ पक्षनिष्ठः साध्यवति हेतुसमानाधिकरणः, हेत्वसमानाधिकरण एव वा उपाधिः,—वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र पक्षधर्मावच्छिन्नसाध्यव्यापकम् उद्भूतरूपवत्त्वम् उपाधिः। अथ—साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाऽव्यापक उपाधिः पक्षवृत्तित्वे सति पर्यवसितसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधित्वम्। शब्दः अनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वादित्यत्र कृतकत्वमुपाधिः॥ ३९४॥

**यद्व्यभिचारिहेतोर्वै स्वसाध्यव्यभिचारिता।**
**उन्नीयते येन सोऽयमुपाधिः परिकीर्त्यते॥३९५॥**

यद्व्यभिचारित्वेन हेतोः साध्यव्यभिचारित्वमुन्नीयते स उपाधिः। यद्व्यभिचारो यद्धर्मावच्छिन्नाऽभावाऽधिकरणीभूतयत्किञ्चिदधिकरणवृत्तित्वसामान्यं साध्यव्यभिचारव्याप्यं साधनवृत्ति च तद्धर्मावच्छिन्नं तत्रोपाधिः। शुद्धसाध्यव्यापके तद्भाववन्मात्रवृत्तित्वं साध्यव्यभिचारव्याप्यम्। अवच्छिन्नसाध्यव्यापके त्ववच्छेदकाधिकरणीभूततदभावाधिकरणवृत्तित्वम्। अथ स्वव्यभिचारेण हेतौ व्यभिचारोन्नायकत्वमुपाधित्वम्। साध्याभावसाधनोभयाऽधिकरणवृत्त्यभावप्रतियोगित्वमुपाधित्वम्। यद्भावेन यद्वदन्यत्वेन वा साधनवति साध्याऽभाव उन्नीयते स उपाधिः। यद्व्यभिचारित्वेन हेतुमवृत्तत्वविधया साधनस्य पक्षतावच्छेदकीभूतस्य साध्याऽभावरूपसाध्यवत्पक्षवृत्तित्वं तत्त्वम् उपाधित्वम्। द्रव्यत्वादिना कम्बुग्रीवादिमत्त्वादौ साध्ये स्वव्यभिचारेण स्वाऽभावेन वा व्यभिचारस्य साध्याभावस्य वा साधकं घटत्वादिव्यभिचारित्वम् उपाधिः॥

पर्यवसितसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वमुपाधित्वम्। यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तदवच्छिन्नं साध्यं पर्यवसितमुच्यते। यद्धर्मावच्छेदेन साधनवति साध्यं प्रसिद्धं तद्धर्मावच्छिन्नसाध्यव्यापकत्वे

सति साधनाव्यापकत्वमुपाधित्वम् । साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम् । यद्धर्मावच्छिन्नसाध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमुपाधित्वम् । स्वानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वं साधनाव्यापकत्वमुपाधित्वम् । साध्याऽसमानाधिकरणस्य साध्यव्यापकाऽभावस्य वाऽधिकरणं यत्साधनवत् तन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाऽत्यन्ताभावप्रतियोगितावच्छेदकसाध्यासमानाधिकरणवृत्तिधर्मवत्त्वम् उपाधित्वम् । साध्यव्यापकत्वसाधनाऽव्यापकत्वावच्छेदकरूपानतिरिक्तवृत्तिसाध्यसमानाधिकरणयत्किञ्चिद्धर्मव्यापकत्वावच्छेदकरूपवत्त्वम् उपाधित्वम् । स्वविशिष्टसाध्यानधिकरणीभूतसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाऽव्यापकत्वम् उपाधित्वम् । साध्याऽसमानाधिकरणधर्मस्य साध्यव्यापकाऽभावस्य वा समानाधिकरणं यत्साधनं तद्वन्निष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तिधर्मवत्त्वं वा उपाधित्वम्, वाय्वादौ रूपाद्यसमानाधिकरणवायुत्वादेरुपाधिव्यापकतावच्छेदकवायुभेदाद्यवच्छिन्नाभावस्य च समानाधिकरणं यत्साधनं द्रव्यत्वादिकं तादृशधर्मसामानाधिकरण्योपलक्षिततदधिकरणे पृथिव्यादौ पृथिवीत्वाभावत्वाद्यवच्छिन्नाभावसत्त्वात् पृथिवीत्वाऽभावे लक्षणसमन्वयात् । साधनवति साध्याऽसमानाधिकरणधर्मवत्त्वस्य, साधने च तादृशधर्मादिसामानाधिकरण्यस्याऽगृहीतत्वात् साधनवति साध्यासमानाधिकरणधर्मादिना साध्याभावः साधने वा साध्याऽसमानाधिकरणधर्मादिसामानाधिकरण्येन व्यभिचारो ज्ञातुं शक्यते । यद्वा साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वम् उपाधित्वम् । व्यतिरेकप्रतियोगित्वं च व्यतिरेकाऽभावत्वम्, प्रतियोगितावच्छेदकस्यैवाऽन्योन्याभावत्वम् । संयोगत्वस्य संयोगवद्भेदाभावत्वावच्छेदकत्वम् । द्रव्यं सत्त्वादित्यादौ संयोगस्य संग्रहः । लक्षणे यद्धर्मावच्छेदेनेति किञ्चिद्धर्मविशिष्टसाध्यव्यापकत्वमुक्तं लक्षणघटकमतः स धर्मः साध्ये क्वचित्साधनं क्वचिद्द्रव्यत्वादि क्वचिन्महानसत्वादि । समव्याप्तस्य विषमव्याप्तस्य वा साध्यव्यापकस्य व्यभिचारेण साधनस्य साध्यव्यभिचारः स्फुट एव, व्यापकव्यभिचारिणः तद्व्याप्यव्यभिचारनियमात् । साधनावच्छिन्नपक्षधर्मावच्छिन्नसाध्यव्यापकयोर्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वमेव । ध्वंसस्याऽनित्यत्वे साध्ये भावत्वस्य, वायोः प्रत्यक्षत्वे साध्ये उद्भूतरूपवत्त्वस्य च विशेषणाऽव्यभिचारिणि साधने विशिष्टव्यभिचारस्य विशेष्यव्यभिचारित्वनियमात् । विशेषणाऽव्यभिचारित्वेन ज्ञाते साधने विशिष्टव्यभिचारः सिद्धयन् विशेष्यसाध्यव्यभिचारमादायैव सिद्धयति, पक्षधर्मताबलात् प्रकृत सिद्धयति ॥ वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादिति हेतुः बहिर्द्रव्यप्रत्यक्षत्वव्यभिचारी बहिर्द्रव्यत्वाऽव्यभिचारित्वे सति बहिर्द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वात् जन्यमहत्त्ववत् । मित्रातनयत्वं मित्रातनयत्वविशिष्टश्यामत्वव्यभिचारि मित्रातनयत्वाऽव्यभिचारित्वे सति श्याममित्रातनयत्वव्यापकव्यभिचारित्वात् अघटत्ववत् । अव्यभिचारश्च तत्समानाधिकरणात्यन्ताभावाऽप्रतियोगित्वम्, तच्चाऽभेदेऽपि ॥

यद्वा—साधननिष्ठं यद्व्यभिचारित्वं साध्यव्यभिचारोन्नायकं तत्त्वमुपाधित्वम् । तत्त्वं च साक्षात्परम्परया वेति । अतो व्यभिचारोन्नायकत्वेन दोषत्वं न त्वर्थान्तरत्वं दूषकत्वम् । अथ साध्योपन्यासानन्तरं तत्साधनस्येव साधनोपन्यासानन्तरं व्यभिचारादिदोषस्याऽऽकांक्षितत्वेन तमनुद्भाव्य साक्षात्तत्साधकस्य शुद्धसाध्यव्यापकस्योपाधेरुद्भावने अप्राप्तकालत्वम्, एवम् अनुमितिदोषोन्नायकानाम् आश्रयासिद्धयादीनामुन्नायकत्वमिति न शंक्यम् । प्रथमं शुद्धसाध्यव्यभिचारस्योद्भाव्यत्वात्, तद्धेतुत्वेन शुद्धसाध्यव्यापकोपाधिव्यभिचारः, विशेषणाऽव्यभिचारित्वे सति विशिष्टसाध्यव्यापकस्योपाधेर्विशिष्टसाध्यस्य वा व्यभिचारः, विशेष्ये विशिष्टसाध्यव्यापकोपाधिव्यभिचारः, व्यभिचारव्याप्यत्वविशिष्टस्य व्यभिचारान्तर्भावात्तादृशस्योपाधिव्यभिचारस्य प्रथममुद्भावनेपि नाऽप्राप्तकालत्वम् । तद्व्याप्यवत्त्वज्ञानं व्याप्त्यादिग्रहप्रतिबन्धकत्वेन हेत्वाभासत्वमेवोपाधेः, साध्यव्यभिचारव्याप्योपाधिव्यभिचारवानयं हेतुरित्युद्भावनात् ॥ ३९५ ॥

**साध्याऽवृत्तिर्हेत्ववृत्तिर्यस्तच्छून्यौ ह्युभौ मतौ।**
**साध्यहेतू तदभावोन्नायकत्वमुपाधिता ॥३९६॥**

साध्यावृत्तित्वे सति साधनाऽवृत्तिर्यस्तच्छून्यत्वेन साध्यसाधनेऽनुगमय्य तदभावोन्नायकत्वमुपाधित्वम्। पक्षतावच्छेदके साधने च न वर्तते यस्तच्छून्यस्य पक्षतावच्छेदकसाधने इति प्रतीतिविशेष्यस्य वाऽऽश्रये साध्यव्यावर्तकत्वम् उपाधित्वम्। अथ—उपाधिमात्रस्य लक्षणं व्यतिरेकित्वम्। पक्षेतरोऽपि क्वचिदुपाधिः। तत्तत्साध्यव्यापकत्वे सति तत्तत्साधनाऽव्यापकत्वं तत्तदुपाधित्वम्। यद्वा—अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकत्वमुपाधित्वम्। यद्वा—स्वव्यभिचारेण साध्यव्यभिचारोन्नायकत्वमुपाधित्वम्। यद्वा—तत्तत्साध्यसमानाधिकरणत्वे सति तत्तत्साधनाऽव्यापकत्वमुपाधित्वम्। तद्रूपावच्छिन्ने साध्ये तद्रूपावच्छिन्ने साधने च क उपाधिरित्यत्र तद्रूपावच्छिन्नसाध्यसमानाधिकरणत्वे सति तद्रूपावच्छिन्नसाधनाऽव्यापकत्वमुपाधित्वम्। यद्वा—साध्यव्यापकत्वे सति साधनव्यापकोऽप्युपाधिः। यत्र पक्षाऽवृत्तिर्हेतुस्तत्रेदं लक्षणम्। करका पृथिवी कठिनसंयोगादित्यत्र अनुष्णाशीतस्पर्शवत्त्वमुपाधिः। स्वरूपाऽसिद्धिसंकरितोऽत्रोपाधिः। साध्यं नोपाधिः, साध्याऽविशिष्टः साध्यसमः। उपाधिर्निश्चितः सन्दिग्धश्च। आर्द्रेन्धनप्रभववह्नित्वं निश्चितोपाधिः, साध्यव्यापकत्वेन साधनाऽव्यापकत्वेन च निश्चितत्वात् व्यभिचारनिश्चयाधायकत्वात्। यत्र साधनाऽव्यापकत्वसन्देहः साध्यव्यापकत्वसंशयस्तदुभयसन्देहो वा तत्र हेतुव्यभिचारसंशयाधायकतया सन्दिग्धोपाधिः। साध्यमेवोपाधिः स्यात् अनुमितिमात्रोच्छेदः स्यात् हेतौ व्यभिचारसन्देहात् अनिश्चयात्। लिङ्गसन्देहो लिंगतदभावौ व्यापकतदभावौ धर्मिणश्चावगाहते, लिंगलैङ्गिकभानं सन्दिग्धं, तथा च नाऽनुमितिः। साधनाऽव्यापकत्वसंशये साध्यव्यापकत्वव्यभिचारसंशयात् साध्यव्यभिचारसन्देहो हेतौ स्फुट एव। साध्यव्यापकत्वसन्देहे तु साधनाऽव्यापकव्याप्यत्वसंशयात् साध्ये साधनाऽव्यापकत्वसन्देहोऽपि स्फुटः। उपाधेः साध्यव्यापकत्वसन्देहेनाऽऽहितात्साधने साध्यव्यापकत्वव्यभिचारसन्देहात् साध्यव्यभिचारसन्देहश्चापि स्फुटः। साध्यसामग्रचा सह हेतोर्यत्र व्याप्तिग्राहकं नास्ति तत्र सा सामग्री चोपाधिः। यत्र व्याप्तिग्राहकमस्ति तत्र नोपाधिः। उपाधिसन्देहस्तु नोपाधिर्न वा हेत्वाभासान्तरमिति न। व्यभिचारसंशयाऽऽधायकत्वेन दूषकत्वात् व्यभिचारनिश्चयाऽऽधायकतयाऽप्युपाधौ दूषकत्वम्। न तु साध्याभावद्वारा सत्प्रतिपक्षत्वेन दूषकत्वम्; तत्र पुनः सत्प्रतिपक्षान्तरं तूद्भवेत्, परमुपाधेरुद्भावनं न स्यात्, प्रतिपक्षबाहुल्येनाऽधिकबलार्थमुद्भावनमपि न, एकेन बहूनां प्रतिबन्धात्। व्याप्तिपक्षधर्मतावलं तुल्यम्। न तु भूयस्त्वम्, एकस्मादप्यनुमितिदर्शनात्॥ साध्यव्यापकव्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वम् अनुमेयमिव साध्यव्याप्यव्यभिचारित्वेन साध्यव्यभिचारित्वमुपाधेरनुमेयम्, व्याप्तिग्राहकसाम्यात्। तस्मादुपाधिर्हेत्वाभासान्तरमिति। साध्यव्यापकाऽव्याप्यत्वेन व्याप्तिविरहोन्नायकतयोपाधेर्वा दूषकत्वम्। यद्वा—साध्यव्यापकाभाववद्वृत्तितया साध्यव्यभिचारित्वमुन्नेयम्। मानसे व्यभिचारनिश्चये उपाधिज्ञानं विशेषदर्शनरूपत्वेन उपयुज्यते। साधनतावच्छेदके साध्यसम्बन्धितानवच्छेदकत्वम् उन्नेयम्। साध्यवदन्याऽवृत्तित्वविशिष्टसाध्यवद्वृत्तित्वाभावो वा उन्नेयः। साध्यव्यापकोपाधिव्यभिचारित्वेन हेतौ साध्यव्यभिचारित्वं साधनाऽव्यापकोपाधिव्याप्यत्वेन साध्ये साधनाऽव्यापकत्वम् उन्नेयम् क्वचिदुपाधेस्तुल्यबलत्वे सत्प्रतिपक्षोन्नायकतया तर्कादिसाचिव्याद् अधिकबलत्वे च बाधोन्नायकतयाऽपि दूषकत्वम्,अनुमितिनिरोधस्य दुर्वारत्वात्॥ ३९६ ॥

**ये सन्त्युपाध्याभासास्ते रूपवैकल्ययोजनात्।**
**कादाचित्कास्तत्र तत्राऽनौपाधिकात्मकात् फलात्॥**

यत्र यद्दोषोन्नायकतया दूषणत्वमुपाधेस्तत्र तदुन्नयनौपयिकरूपवैकल्यमेवाऽऽभासत्वे प्रयोजकम्। एवं च यत्र स्थापनायां पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिरुद्देश्या तत्र पक्षाऽव्यापकविपर्ययस्याऽऽभासत्वम्। यत्र तु पक्षतावच्छेदकाऽवच्छेदेन साध्यसिद्धिरुद्देश्या तत्र पक्षतावच्छेदकावच्छिन्नाऽव्यापकविपर्ययस्याऽऽभासत्वम्। साध्यविपर्ययस्याऽसत्त्वम् अनुपाधित्वे प्रयोजकम्। सिद्धसाध्यविपर्ययत्वेन चाऽऽ

भासत्वम्। आभासाः कादाचित्का न तु नित्याः, निश्चये सति आभासानां विलयात् दूषकत्वेन हेत्वाभासत्वाच्च। तत्र–असाधारणविपर्ययो यथा—अन्वयव्यतिरेकिणि साध्ये बाधोन्नीताऽन्यपक्षेतरत्वम्। अप्रसिद्धिसाध्यविपर्ययो यथा—केवलान्वयिनि साध्ये पक्षेतरत्वादिः। बाधितसाध्यविपर्ययो यथा—वह्निरुष्णः तेजस्त्वादित्यत्र अकृतकत्वम्। पक्षाव्यापकविपर्ययो यथा—क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र अणुव्यतिरिक्तत्वम्। पूर्वसाधनव्यतिरेको यथा–शर्करारसः अनित्यः अनित्यवृत्तिगुणत्वात्। रसो नित्यः रसनेन्द्रियजन्यनिर्विकल्पकविषयत्वात् रसत्ववत्, इत्यादौ अगृह्यमाणविशेषदशायां सत्प्रतिपक्षसंभवात्। पूर्वसाधनव्याप्यव्यतिरेको यथा—अकर्तृकत्वानुमाने नित्यत्वादिः। पक्षविपक्षान्यतराऽन्यो यथा–प्रसिद्धानुमाने पर्वतजलह्रदान्यतरान्यत्वम्। पक्षेतरसाध्याभावो यथा--अत्रैव पर्वतेतराऽग्नित्वम्। पक्षेतरसाध्याभावतुल्यश्च यथा—अत्रैव पर्वतेतरेन्धनवत्त्वम्। एवं वह्निसामग्र्यादिकमपि। एते उपाध्याऽऽभासाः॥ ३९७॥

**सन्दिग्धसाध्यधर्मत्वं पक्षत्वं, न विशेषणम्।**
**नोपलक्षणमेवाऽपि सन्देहश्चेति नो हि तत्॥३९८॥**

सन्दिग्धसाध्यधर्मत्वं पक्षत्वम्। तत्र सन्देहस्य विशेषणत्वे परामर्शपूर्वमेव लिङ्गदर्शनव्याप्तिस्मरणादिना नाशात् कारणत्वम्। उपलक्षणत्वेऽव्यावर्तकत्वेन पक्षज्ञानाऽभावात् स्थापनाहानेः। यत्र साध्यस्य यादृशसम्बन्धावगाहिनिर्णयनिवर्त्यो यः संशयस्तत्र सः संशयस्तादृशसम्बन्धेन साध्याऽनुमितौ पक्षता। तन्न। प्रत्यक्षादिना निर्णीतस्यापि साध्यस्यानुमित्सयाऽनुमितेरानुभविकत्वात् संशयस्य पक्षतात्वे तदनुपपत्तेः, अनुभवाऽपलापे विशेषदर्शनमूलकप्रत्यक्षादेव सर्वत्र प्रवृत्त्यादिसंभवेऽनुमानप्रामाण्यस्यैव विलयापत्तेः, संशयाऽनन्तरजातसिद्ध्यात्मकपरामर्शादनुमित्यापत्तेश्च। अतः संशययोग्यताऽपि न पक्षता, योग्यता हि सिद्धिबाधप्रमाणाभावः, सोपि न पक्षता, उभयाऽभावस्य प्रत्येकसत्त्वेऽपि सत्त्वादनुमित्यापत्तेः॥ अभावद्वयमपि न पक्षता, सिद्ध्यभावेन निर्वाहे बाधाऽभावस्य व्यर्थत्वात्। नाऽपि सिद्ध्यभावः पक्षता, प्रत्यक्षसिद्धिसत्त्वेऽप्यनुमानदर्शनात्। एकलिंगाऽवगतेऽपि लिंगान्तरेणाऽपि तदनुमानात्। न बाधाऽभावः पक्षता, केवलान्वयिनि बाधस्यैवाऽप्रसिद्धत्वात्। न वा सिषाधयिषा पक्षता, गर्जनया मेघानुमाने जाग्रत्सुप्तस्य तदभावात्। ईश्वरसिषाधयिषायाः सत्त्वेऽपि नित्यया तया सर्वत्र वर्तमानया सर्वदा सिद्धौ सत्यामपि सर्वदा पक्षताप्रसंगात्। कारणाधीनतृतीयलिङ्गपरामर्शबलेनाऽनपेक्षितानुमानदर्शनात्॥३९८॥

**सिषाधयिषाविरहान्वितसिद्ध्यनवस्थितिः।**
**पक्षता व्याप्तिसहिता तज्ज्ञानं त्वनुमाकरम्॥३९९॥**

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता, सिषाधयिषाविरहविशिष्टसिद्धिः प्रतिबन्धिका, सिद्धौ सत्यामसत्यां वा सिषाधयिषायां सत्यां, सिद्धौ सिषाधयिषायां चाऽसत्याम्, पक्षता, विशिष्टाऽभावात्पक्षत्वम्। पक्षत्वं केवलान्वयि पक्षपदप्रवृत्तिनिमित्तमात्रम्, सिद्धिः प्रतिबन्धिका, प्रतिबन्धकतावच्छेदकीभूताऽभावप्रतियोगित्वमुत्तेजकत्वम्। सिषाधयिषा उत्तेजिका। यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा, तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे च यल्लिंगकाऽनुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता। सिषाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नाऽनुमितिस्तादृशी सिद्धिरेव तत्तदनुमितौ प्रतिबन्धिका। पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि पक्षतावच्छेदकावच्छेदेनाऽनुमितेर्दर्शनात् पक्षतावच्छेदकावच्छेदेनाऽनुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिः प्रतिबन्धिका। पक्षतावच्छेदकसामानाधिकरण्येनाऽनुमितिं प्रति तु सिद्धिमात्रं विरोधि। अनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री अनुमितिं प्रति स्वातन्त्र्येण प्रतिबन्धिका। प्रत्यक्षेच्छाविरहविशिष्टाऽनुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका। लिंगभेदेन पक्षत्वं भिन्नम्, तेन तल्लिंगकाऽनुमितीच्छाविरहविशिष्टाऽन्यलिंगकाऽनुमितीच्छा तल्लिंगाऽनुमितौ प्रतिबन्धिका। अथ साध्यविशेष्यकसिद्ध्यनन्तरं पक्षविशेष्यकाऽनुमितेः प्रामाणिकत्वे तां प्रति पक्ष-

विशेष्यिकैव सिद्धिर्विरोधिनी। समानप्रकारविशेष्यकसिद्धिर्विरोधिनीति पर्यवसानात्। साध्यविशेष्यकानुमितिं प्रति सिद्धिमात्रं विरोधि। प्रथमानुमित्साया व्याप्तिस्मरणेन नाशे च परामर्शकाले सिद्धसत्त्वेऽनुमित्सान्तरोत्पत्त्यैवाऽनुमितिः, नाऽन्यथा, तथैव विशिष्टाभावस्य कारणत्वसम्पत्तेः। अथ द्वित्रिक्षणान्तरितायामप्यनुमित्सायां लिंगदर्शनक्रमेण यावत्क्षणकालेन परामर्श उत्सर्गतो जायते, तावता कालेनैवाऽनुमित्सायोग्यतास्वीकर्तव्या, ततोऽनुमित्सायोग्यताविरहविशिष्टसिद्ध्यभावः पक्षता वक्तव्या। अथवा प्रथमानुमित्सोत्पत्त्यनन्तरं तन्नाशेऽपि सिद्धौ सत्यां यावत्कालमध्येऽनुमितिर्जायते तावान्कालोऽनुमित्सोपलक्षितो ग्राह्यः, तथा चाऽनुमित्सोपलक्षितत्वविरहविशिष्टसिद्ध्यभावः पक्षता। यदि तु सिद्ध्यनन्तरं तन्नाशेऽपि द्वित्रिक्षणमध्ये विनाऽनुमित्साम् अनुमित्यनुत्पादोऽनुभवसिद्धस्तदा सिषाधयिषाविरहविशिष्टसिद्ध्युपलक्षितसमयः प्रतिबन्धको वक्तव्यः। समयस्तु चतुःक्षणाधिको नेति नीतिकुशलैर्निर्णेतव्यः। अथ साध्यनिर्णयेच्छानन्तरं साध्यतद्व्याप्तिविशिष्टपक्षस्य प्रत्यक्षं स्मरणं वा ततोऽनुमित्सा, ततः साध्यतद्व्याप्यवत्त्वानुमितिस्तत्रेच्छायोग्यतासत्त्वात् तदनन्तरमनुमितिवारणार्थं विशेष्येच्छाविषयसिद्ध्यनुपहिता या सिषाधयिषा तद्विरहविशिष्टसिद्धिविरहः पक्षता वक्तव्येति। यत्र सिद्ध्युत्तरं कदापि नाऽनुमितिस्तत्र सिद्ध्यभाव एव पक्षता। सिषाधयिषाविरहविशिष्टस्वक्षणाऽव्यवहितोत्तरक्षणोत्पत्तिकाऽनुमितिकभिन्ना या सिद्धिः सिषाधयिषाविरहविशिष्टायास्तस्या अभावः पक्षता। प्रथमद्वितीयतृतीयक्षणानामव्यवहितोत्तरक्षणत्वेन यत्र सिद्धिसिषाधयिषाऽनुमितिक्रमस्तत्र प्रथमक्षणे पक्षतावारणाय प्रथमं विशिष्टान्तं द्वितीयक्षणे पक्षतासम्पत्तये द्वितीयं विशिष्टं विशेषणं, सर्वत्र स्वध्वंसाधिकरणकालध्वंसानधिकरणत्वे सति स्वाऽधिकरणकालध्वंसाधिकरणत्वं स्वाऽव्यवहितोत्तरत्वम्। यदोच्छासामग्र्याऽनुमितिप्रतिबन्धस्तदाऽनुमित्यव्यवहितपूर्ववर्तिसिद्धिभिन्नसिद्ध्यभावमात्रं पक्षता। स्वसमानाधिकरणाऽनुमित्यव्यवहितपूर्वक्षणवृत्तिभिन्नत्वं, यद्वा स्वसमानाधिकरणाऽनुमित्यव्यवहितपूर्वत्वाऽनधिकरणवृत्तित्वविशिष्टत्वं, यद्वा—स्वसमानाधिकरणाऽनुमित्युत्पत्त्यनधिकरणसमयाऽव्यवहितपूर्वक्षणवृत्तित्वविशिष्टत्वं, प्रतिबन्धकत्वम्। तदव्यवहितपूर्वत्वं च—तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वम् ॥ यद्वा—सिषाधयिषाविरहविशिष्टस्य सिद्ध्यनुमानातिरिक्तसाधकमानयोरन्यतरस्याऽभावः पक्षता। स्वतन्त्राऽन्वयव्यतिरेकशालित्वान्नियमेन प्रथमोपस्थितत्वाल्लाघवाच्च प्रत्येकमेव तत्तत्सिद्धित्वेन प्रतिबन्धकम्। आत्मनिष्ठः तादृशसिद्ध्यभावः कारणम्। सिद्धेः सिषाधयिषाविरहेण वैशिष्टयम् एककालावच्छेदेन एकात्मवृत्तित्वम्। सामग्रीविशेषाऽभावस्य हेतुत्वेऽपि लाघवात् सिद्ध्यभावः पक्षताव्यवहारनिमित्तम्। आत्मनिष्ठविशिष्टसिद्ध्यभावस्य पर्वतादौ स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकवत्त्वसम्बन्धेन सिद्ध्यभावस्य सत्त्वेन पक्षता। तत्पुरुषीयाऽनुमितिं प्रति तत्पुरुषीयानुमित्साविरहकालीनतत्पुरुषीयसिद्धिसामग्रीविशेषविरहो हेतुः। यस्य कार्यसमकालतयाऽन्वयव्यतिरेकित्वं तस्यैव प्रतिबन्धाऽभावविधया हेतुत्वम्। सर्वत्र न सन्देहः। न सिद्ध्यभावः, किन्त्विच्छा तु नियता पक्षता। हेतुभाने द्रागेव पक्षतयेष्टभानात्, इष्टत्वम् अव्यभिचरितं कारणम् ॥ ३९९ ॥

अथ परामर्शोऽद्वारकोऽनुमितिजनकः, परामर्शद्वारकं व्याप्तिज्ञानं जनकम्, अत्र तु फलं प्रमाऽनुमितिः। तथा च—

**फलं त्वनुमितिस्तत्र परामर्शोऽस्ति कारणम्।**
**करणं व्याप्तिविज्ञानं सहचारग्रहाद्धि तत् ॥४००॥**

स्वोत्तराऽनुत्पादकस्वत्वं, उत्तरानाकांक्षाशालित्वं, द्वारोत्तरावश्यजायमानत्वं, ज्ञाताऽवलम्बिनिश्चयात्मकज्ञानत्वं वा फलत्वम्। साध्यप्रकारकपक्षविशेष्यकनिश्चयोऽनुमितिः, साध्यवत्तांशोऽनुमितिः, तत्र पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरविशिष्टवैशिष्ट्यज्ञानं पक्षे वा तृतीयलिङ्गपरामर्शः साध्यव्याप्यहेतुमान्पक्ष इति ज्ञानं कारणम्। अयं लिंगपरामर्शः—व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानं व्याप्तिज्ञानजन्यव्यापारविधया कारणम्। असाधारणं कारणं करणं, व्यापारवत्कारणं करणं, व्याप्तिज्ञाने

च समनियतत्वं व्याप्यव्यापकभावः सहयोगित्वं साध्यनिरूपितसम्बन्धत्वं व्यापकतानिरूपितव्याप्यतावत्त्वं नियतसम्बन्धित्वं ज्ञाप्यज्ञापकभावत्वं नियतान्वितत्वं व्यतिरेकाऽवलम्बितैकविश्रमितत्वं वाऽपि व्याप्तिर्विषयः। व्याप्तिज्ञानं करणम्। हेतुव्यापकत्वं साध्ये, साध्यव्याप्यत्वं हेतौ, साध्यहेतूभयव्याप्यत्वं पक्षत्वे, साध्यहेतुपक्षविषयकत्वव्यापकत्वं परामर्शे। साहचर्यनियमजन्यज्ञानत्वं व्याप्तिज्ञानत्वं, तथाविधज्ञानविषयत्वं व्याप्तित्वम्। द्वितीयं विशिष्टं ज्ञानं व्याप्तिज्ञानम्। यदंशे इन्द्रियाऽप्रवृत्तिस्तदंशेऽनुमितिः परम्परया लिंगप्रत्यक्षजन्या सिद्धिलिंगजन्यापि। भूयः सहचारग्रहाद् व्याप्तिज्ञानम्, अव्यभिचरितसहचारग्रहाद् व्याप्तिज्ञानम्। साहचर्यम् ऐकाधिकरण्यम्। सहचारः साहित्यम्। तत्साक्षात्तु निर्मितं, परम्परया तु क्लृप्तं भवति। ऐकाधिकरण्यम् उभयवैशिष्टयप्रयोजकम्। संसर्गा वैशिष्टयरूपाः अतः संसर्गा व्याप्तयः। ते च परिष्काररूपाः, एकतः कृतप्रवासा अन्यत्र लब्धविश्रामा विशिष्टवैशिष्टयोद्भावकाः फलमुद्भाव्य विश्राम्यन्तीति पुरुषः प्रमातानुमाता सम्पद्यते संस्कारानुसन्धानाद्यैश्चिरमध्यवस्यति स्फूर्त्या विशेषाकारान् भुंक्ते इति ॥ ४०० ॥

**व्याप्यतावच्छेदकानुप्रकारव्याप्तिसंस्मृतिः।**
**सत्पक्षधर्मताधीश्च द्वयं हेतुर्न गौरवात् ॥४०१॥**

ज्ञानद्वयाऽपेक्षया विशिष्टपरामर्शत्वावच्छिन्नं लाघवादनुमितिकारणम्। व्याप्यतावच्छेदकप्रकारकव्याप्तिस्मरणं पक्षधर्मताज्ञानं चेति ज्ञानद्वयस्य विशिष्टपरामर्शाऽपेक्षया प्रथममुत्पन्नतया स्वप्रकाशवादिनां प्राभाकराणां ज्ञानद्वयस्यैव ज्ञानद्वयोपस्थितिरूपतया प्रथमोपस्थितत्वेऽपि कल्पनालाघवायितपरामर्शस्यैव कारणत्वम्, मीमांसकानां तु ज्ञानद्वयकारणत्वे प्रत्येकज्ञानवद्वयक्तिद्वयस्याऽनुमित्यापत्तिः, एकपुरुषीयज्ञानद्वयकारणत्वे तु कालान्तरीयप्रत्येकेनाऽप्यनुमित्यापत्तिः, एककालीनतत्पुरुषीयज्ञानद्वयकारणत्वे एकविशिष्टाऽपरकारणत्वे विनिमयेन कार्यकारणभावद्वयं, पुरुषभेदात्तु असंख्यकार्यकारणभावाः, स्वतन्त्रज्ञानद्वयस्य कारणत्वे 'साध्यव्याप्यहेतुः' 'अव्याप्यवान्पर्वतः' इतिज्ञानद्वयादप्यनुमित्यापत्तिः। अतो व्याप्तिविशिष्टपक्षधर्मताज्ञानं विशिष्टज्ञानं परामर्शः कारणम्। कार्यकारणभावज्ञानोत्तरं गौरवज्ञानं न प्रतिबन्धकम् ॥ अथ—चक्षुःसंयुक्ते धूमे वह्निव्याप्यधूमे स्मृते धूमत्वसाधारणधर्मदर्शनेन सामान्यलक्षणया व्याप्यः पक्षवृत्ति'रित्यभेदप्रत्ययः संभवन्नेवाऽनुमितिहेतुः स्यादिति चेन्न। व्याप्याऽभेदप्रत्यक्षस्य व्याप्याऽभेदानुव्यवसाये कारणत्वं, न त्वनुमितौ, प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात्, सा च परामर्शरूपा, तयाऽनुमितिरेव स्यात्। परामर्शोत्तरं व्याप्याऽभेदप्रत्ययेन व्याप्याऽभेदप्रत्यक्षानुव्यवसायजनने बाधकाऽभावात् ॥ अथ—पूर्वं पक्षाऽग्रहेऽपि गृहीतधूमे स्मृतव्याप्तिवैशिष्ट्यभानम्, अनन्तरं च गृहीते पक्षे पर्वतीयधूमेन्द्रियसन्निकर्षेणाऽनुमितिसामग्रीपूर्वमेव स्मृतव्याप्तिधूमत्ववैशिष्ट्यभानं तत्र, तथा आप्तवाक्याद् वह्निव्याप्यवानयमिति शाब्दज्ञानं तत्र च, सिद्धपूर्ववर्तिविशिष्टज्ञानं पक्षधर्मव्याप्यत्वज्ञानं हेतुरित्यनुमितिहेतुरपि तदेवाऽस्तु, कृतं परामर्शेनेति चेन्न, इन्द्रियाऽसन्निकृष्टेऽतीन्द्रिये च लिङ्गेऽसन्निकर्षात् प्रत्यक्षविशिष्टज्ञानसामग्र्यभावेन अनुमित्यनुत्पादापत्तेः। व्यतिरेकव्यभिचारात्कारणत्वं बाधितम्। मम तु लिंगपरामर्शस्य स्मरणात्मकस्य तस्य तत्र सत्त्वेन नाऽनुमित्यनुपपत्तिः ॥ अथ—निद्रासहकृतमनसा बहिर्विषयगोचरस्वाप्नानुभव इव कोटिस्मरणविशेषाऽदर्शनसहकृतमनसा परमाणुर्गुरुर्न वेति बहिर्विषयकोऽपि सन्देह इव ज्ञानविशेष्ये व्याप्तिस्मरणसहकृतमनसा परामर्शो भवन्ननुमितिं जनयेत्, कृतं व्याप्तिस्मरणकरणत्वेनेति चेन्न। तथा सति व्याप्तिस्मरणादेरपि पृथक्प्रमाणान्तरतापत्तेः, अतो विलक्षणप्रमायां विलक्षणकरणत्वस्यैवाऽऽवश्यकत्वात्। स्मृते धूमे धूमत्वेन वह्निव्याप्यत्वाऽनुमानात्, ततो यो वह्निव्याप्यवान् स वह्निमानिति व्याप्तिज्ञानवतोऽनुमितेरवश्यजायमानत्वात्। धूमत्वपुरस्कारेण व्याप्तिस्मरणे पक्षधर्मताज्ञाने चानुमितिर्भवत्येव ॥ अथ—'वह्निव्याप्यत्ववान् धूमालोकान्यतरत्वादि'ति धूमाऽऽलोकान्यतरपक्षके प्रयोगे, अयमालोको धूमो वेतिसन्देहेऽनुमापकत्वं लिंगे परामर्शच्चिानुमितिः। एवम् 'इदं नीलत्वेन प्रतीयमानं तमस्तेजोऽभावो वा भावोऽभावो वोभयथापि प्रमेयम्,

भावत्वाऽभावत्वाऽन्याऽन्यधर्मवत्त्वात्' अभावोऽतिरिक्तः, केवलान्वय्यनुमानम्, व्याप्तिविशिष्टपक्षधर्मताज्ञानात् अनुमितिः। अथ—धूमत्वपुरस्कारेण व्याप्तिस्मरणपक्षधर्मताज्ञाने सति विशेषपरामर्शादनुमितिः। एवं व्याप्यतया पक्षधर्मतयां चाऽवगतस्य भेदाऽग्रहः परामर्शं जनयन्ननुमितिहेतुः। असन्निकृष्टधूमज्ञानादपि परामर्शद्वाराऽनुमितिः। इदं गोपदप्रवृत्तिनिमित्तकम्, तादात्म्येन गोत्वात्' 'अयं पिण्डः सास्नादिव्यापकजातित्ववान्, तादात्म्येन गोत्वात् ( सकलगोसमवेतत्वात्)', । इयं स्तस्नादिमती गोत्वात् (गवेतराऽसमवेतत्वे सति सकलगोसमवेतत्वात्), इत्यादावपि व्याप्यस्य पक्षधर्मस्य परामर्शादनुमितिः। तत्र तत्पुरुषतत्क्षणतद्व्याप्यताद्यनन्तत्वप्रयुक्तगौरवात् ज्ञानद्वयं स्वतन्त्रं न कारणम् ॥ ४०१ ॥

**आलोकोऽयं च धूमो वोभयथा वह्निव्याप्यता।**
**यत्र तज्ज्ञानतश्चाऽनुमितिः सद्वारिका मता ॥४०२॥**

पर्वतो वह्निमान्, आलोकधूमान्यतरं वह्निव्याप्यम्, धूमात्, आलोकधूमान्यतरत्वाद्वेत्यादौ पक्षधर्मतासहितसाध्यव्याप्यत्वज्ञानात् अनुमितिः, स एव परामर्शो ज्ञानं द्वारं व्याप्तिस्मरणस्येति विशिष्टैककारणकत्वे लाघवम्। विशेषणज्ञानविशेषणविशेष्यसम्बन्धविशेषणविशेष्येन्द्रियसन्निकर्षतदसंसर्गाऽग्रहविशेषदर्शनानां सत्त्वेन वह्निव्याप्यत्वप्रत्यक्षसत्त्वात्, तत्र तदन्यान्यत्वज्ञानं तु व्याप्यताज्ञानोपक्षीणं न साक्षादनुमितिहेतुः, परामर्श एव साक्षादनुमितिहेतुः। वह्निव्याप्यवानयमितिशाब्दज्ञानेऽपि व्याप्यत्वज्ञानं कारणम् यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तिबुद्धौ शाब्दव्याप्यत्वबुद्धौ च प्रत्येकवृत्तिव्याप्तिज्ञानं कारणम्। यत्र धूमत्वव्याप्त्योर्वैशिष्ट्यं प्रथमं प्रत्यक्षेणाऽयुगपत्पक्षधर्मे भासते तत्र व्याप्यत्वज्ञानत्वं कारणतावच्छेदकम्, विशिष्टपरामर्शनिष्ठकारणत्वं च सप्रमाणम्, यद्धर्मविशिष्टसमानाधिकरणाऽभावप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके गृह्यते तत्प्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम् अयं वह्निव्याप्यवान्, धूमो वह्निव्याप्योऽयं धूमवान्, वह्निधूमव्यापकोऽयं धूमवान्, इत्यादिसकलवित्तिव्यापकत्वाद्धेतुत्वम्। व्यभिचारज्ञानविरोधिज्ञानविषयत्वेन व्याप्तीनामनुगमात्। परमाणुर्निरवयवद्रव्यं नित्यपरिमाणवत्त्वात् आकाशवदित्यादौ प्रत्येकानुमानोपनीताऽतीन्द्रियसाध्यसाधनयोराकाशवृत्तितया स्मरणे व्यभिचाराऽज्ञाने मनसा व्याप्त्यनुभवः, चिन्तोपनीतपदार्थानां मनसा संसर्गाऽनुभवस्य कविकाव्यादिवत् सर्वजनसिद्धत्वात्। विशिष्टज्ञानस्यैव व्यवहारहेतुत्वात्। एकैव सा व्याप्तिः, तयोरसंसर्गाऽग्रहो धूमत्वविशेषदर्शनं व्याप्तिविशिष्टधूमेन्द्रियसन्निकर्षश्च व्याप्तिविशिष्टज्ञानकारणम्। अनुमिनोमीत्यनुव्यवसायसाक्षिको ज्ञानविशेषो यत्र कारणम् अन्वयव्यतिरेकाभ्यां व्याप्यपरामर्शस्तत्राऽनुमितिः। पक्षधर्मे व्याप्तिविशिष्टज्ञानं तदनन्तरं विशिष्टवैशिष्ट्यज्ञानं पक्षे वा तृतीयलिंगपरामर्शस्ततोऽनुमितिः। स्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वं व्यापकत्वं तत्सामानाधिकरण्यं च व्याप्यत्वं व्यापकताज्ञानमनुमितिहेतुः। साध्यस्य पक्षधर्मव्यापकताज्ञानं च परामर्शः, साधनसमानाधिकरणात्यन्ताभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वरूपव्यापकत्वज्ञानमपेक्ष्य साध्यवदन्याऽवृत्तित्वकत्वज्ञानस्य लघुत्वम्। यो यो धूमवान् स सोऽग्निमानिति साध्याऽयोगव्यवच्छेदेन धूमव्यापकता वह्नेरुपदर्श्यते। असन्निकृष्टधूमादाविव मानसः क्वचिच्छाब्दः क्वचित्साध्येन्द्रियसन्निकर्षजोऽपि परामर्शः, तत्र पक्षे साध्यसम्बन्धस्याऽग्रहे ग्रहेऽपि वाऽनुमित्सयाऽनुमितिः। पुरुषस्य दण्ड इति ज्ञानोत्तरं दण्डी पुरुष इति ज्ञानवत् पक्षवृत्तिलिंगपरामर्शः स्वभावत एव स्वाश्रयपक्षविशेष्यिकामनुमितिं जनयति। लिंगपरामर्श एव कारणं न तु परामृष्यमाणं लिंगम्, यतः अतीताऽनागतादिना तेनाऽनुमितिर्न स्यात् ॥ ४०२ ॥

**अथ लिंगपरामर्शो हेतुर्विशिष्टविग्रहः।**
**लिंगं हेतुर्विशिष्टांशं न, व्यापाराऽन्तराऽगमात् ॥**

विशिष्टस्य कारणत्वे बाधकं विना विशेषणमपि हेतुरिति लिङ्गं हेतुः, परामर्शस्तद्व्यापारः, परामर्शस्तु निर्व्यापारश्चरमकारणम्। एवं चेत् लिंगत्वेन हेतुताऽस्तु, परामर्शस्तु व्यापारमात्रं स्यात्। अथ—नवीननये कालाद्यवच्छिन्नत्वं साध्यस्य भासते, तर्हि हेतावपि वर्तमानावच्छिन्नत्वं भासेत, एवं च भूतभवि-

प्यत्कालीनलिंगेनाऽनुमित्यनुत्पत्तिरतो लिंगपरामर्शः कारणं न तु लिंगं कारणम्, लिङ्गज्ञानं कारणम् व्याप्तिज्ञानेन तेन लिंगपरामर्शजननात्, ज्ञानसम्बन्धं विना लिंगस्य केवलस्याऽनुपयोगात्। विधुरेण फलाऽजननात्। अतीताऽनागतधूमादिज्ञानेनाऽनुमितिदर्शनात् न लिंगं हेतुः, तस्य तयोश्च व्यापारपूर्ववर्तित्वाऽभावात्, अन्वयव्यतिरेकविरहादपि लिंगमात्रं न हेतुः। व्याप्तिपक्षधर्मत्वेन ज्ञायमानत्वाऽपेक्षया लिंगज्ञानत्वेन लाघवाद्धेतुतायाः सुवचत्वात्। विद्यमानलिंगान्तरेऽपि आलोकादावपरामर्शादनुमित्युत्पादकत्वाऽभावात्। परामर्शाऽविषयलिंगस्य कारणताग्राहकप्रमाणाऽविषयत्वात्। वर्तमानेन तु वर्तमानसाध्योपपत्तेः अन्यथा तदनुमानानुपपत्तेश्च, भाविभूतादिलिंगप्रागभावध्वंसयोर्वर्तमानत्वेन हेतुत्वे तु चिरन्तनाऽतीतभाविव्याप्ततया निश्चिताद् वर्तमानसन्दिग्धत्वान्न तयोरपि हेतुत्वम्। भूतभाविवर्तमानाऽविषयात् 'पर्वते धूम' इतिज्ञानादनुमितिः, तत्र भूताद्यन्यतमाऽज्ञानेऽपि धूमज्ञानादनुमितिरिति न प्रागभावाद्यन्यतमवत्त्वं धूमाद्यत्यन्ताभावाऽभाववत्त्वं वा लिंगम्, अर्थान्तरात्। अतः प्रतिबन्धकाऽभावादीनामपि न कारणतावच्छेदकत्वम्, लाघवेन परामर्शस्यैव प्रयोजकत्वात्। अनुमितावेकार्थप्रत्यासत्त्या परामर्शस्यैव हेतुत्वात्। तत्पुरुषादिप्रवेशे त्वनन्तकार्यकारणभावप्रसंगः, समवायेन कारणत्वे न तथाप्रसंगः। लिंगं विनापि धूलिपटलात् लिंगभ्रमेणापि भवत्यनुमितिः। नापि लिंगं प्रमानुमितौ परामर्शोऽनुमितौ हेतुरिति पार्थक्यम्। यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषे तद्विशेषस्य प्रयोजकत्वात् तद्विशेषप्रमात्वाऽप्रमात्वाभ्यामेव परामर्शस्याऽनुमितिहेतुत्वात्। व्यापाराऽभावादेव परामर्शो न कारणं किन्तु व्याप्तिज्ञानमेव कारणम्, परामर्शो व्यापारः, न वा परामर्शजन्यसंस्कारो व्यापारः, संस्कारोत्पादनक्षणे एवानुमितेरुत्पादात्। नापि तर्को व्यापारः, व्याप्तिग्राहकस्य वा विषयपरिशोधकस्य तस्य परामर्शाऽजन्यत्वात् व्याप्त्यजन्यत्वाच्च न द्वारत्वम्। यं जनयित्वैव यस्य यज्जनकत्वं तस्यैव परामर्शस्य तत्र व्यापारत्वम्। परामर्शजन्यज्ञानमनुमितिरिति ॥ ४०३ ॥

**तत् केवलान्वयि केवलव्यतिरेकि चोभयम्।**
**अन्वयव्यतिरेकीति त्रेधाऽनुमानमीरितम् ॥४०४॥**

तत्राऽसद्विपक्षं केवलान्वयि, अभिधेयत्वस्य विपक्षाऽभावात्, अभिधाने पक्षत्वात्, अभिधानेऽनभिधाने एकत्र व्याघातात् विपक्षत्वव्याहतिः अत्यन्ताभावाऽप्रतियोगिसाध्यकं केवलान्वयि, अगृहीताऽन्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि, गृहीतान्वयव्यतिरेकिसाध्यकम् अन्वयव्यतिरेकि, अत्यन्ताऽभावाऽप्रतियोगितत्तत्साध्यकानुमितिकरणत्वं तत्तत्साध्यककेवलान्वय्यनुमानत्वम् अगृहीतसाध्यसहचारकत्वे सति अभावप्रतियोगिहेतुत्वं केवलव्यतिरेकित्वम्। गृहीतसाध्यसहचारकत्वे सति अभावप्रतियोगिहेतुत्वम् अन्वयव्यतिरेकित्वम्। प्रकृतव्याप्तिग्रहजनकताऽवच्छेदकसहचारविषयितात्वव्यापकप्रकृतसाध्यसहचारविषयितात्वकाऽनुमितिकरणत्वं केवलान्वयित्वम्। प्रकृतहेतुधर्मिकसाध्यसहचारनिश्चयाऽधीनव्यापकताग्रहनिष्ठजनकता-निरूपित-सामानाधिकरण्यसम्बन्धावच्छिन्नजन्यताशून्यप्रकृतसाध्यकप्रकृतहेतुकानुमितिफलोपहितकरणत्वं प्रकृतहेतुकप्रकृतसाध्यककेवलव्यतिरेकित्वम्।

केवलान्वयित्वलक्षणस्य 'जलं निर्गन्धं पृथिवीत्वव्यापकाऽभावप्रतियोगिमत्त्वात्' इत्यत्र, तथा 'वह्न्यभाववान् वह्निव्यापकीभूताऽभावप्रतियोगिमत्त्वादि'-त्यत्र च केवलान्वयिनि समन्वयः। घटोऽभिधेयः प्रमेयत्वात्, घटः प्रमेयः अभिधेयत्वात्, इत्यादौ अनभिधेयत्वपदोपस्थाप्यमनभिधेयत्वं ततो व्यावृत्तं चाभिधेयत्वं विपक्षव्यावृत्तं कथं केवलान्वयि इति चेन्न। व्यावृत्तत्वं चाऽभिधेयत्वगतं यदि अव्यावृत्तं तर्हि सर्वत्र वृत्तं केवलान्वयि, यदि कस्माच्चित् व्यावृत्तं व्यावृत्तत्वं तदाऽव्यावृत्तत्वात् तदेवाऽधारं केवलान्वयि। एवम् अत्यन्ताभावप्रतियोगित्वं यदाऽत्यन्ताभावाऽप्रतियोगि तर्हि तत् केवलान्वयि, यदि अत्यन्ताभावप्रतियोगित्वं यन्निष्ठात्यन्ताभावप्रतियोगि तदाधारस्य तस्य केवलान्वयित्वम्। अत्यन्ताभावप्रतियोगित्वं व्यावृत्तत्वं चैकैकमेव प्रतीतिबलेन सिद्धम्। अव्याप्यवृत्त्यत्यन्ताभावो न केवलान्वयी, तस्याऽत्यन्ताभावप्रतियोगित्वात्। नापि अवृत्त्यत्य-

न्ताभावः केवलान्वयी, तस्य प्रतियोगिरूपाऽत्यन्ताभावप्रतियोगित्वात्, अभावात्यन्ताभावस्य भावत्वात् अत्यन्ताभावात्यन्ताभावः प्रतियोग्येव, अन्योन्याभावात्यन्ताभावस्तु प्रतियोगिवृत्त्यसाधारणधर्मः। अथ—प्रतियोगितावच्छेदकसम्बन्ध एवाऽभावाऽभाव इति चेन्न। यद्वत्त्वे ज्ञाते यद्वत्त्वं न प्रतीयते तदभाववत्त्वं च व्यवह्रियते तस्यैव तदभावाऽभावकत्वमुपेयते, सम्बन्धे तथात्वाऽभावात् नाऽभावात्मकः। वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वं केवलान्वयित्वम् आकाशाभावस्य, प्रमेयत्वाऽभिधेयत्वादेश्चापि। यत्सम्बन्धावच्छिन्नप्रतियोगिताकाऽभावाऽप्रतियोगित्वं यस्य तस्य तेन सम्बन्धेन केवलान्वयित्वम्, ज्ञानस्य विषयत्वेन ज्ञानत्वस्य स्वाश्रयविषयत्वेन ज्ञानविषयत्वस्य स्वरूपेण केवलान्वयित्वम्। अथ प्रमेयत्वं प्रमाविषयत्वं प्रमाजातीयविषयत्वं वा केवलान्वयि। अथ—केवलान्वयिप्रयोगे संशयाऽभावात् कथं पक्षताऽनुमितिश्चेति चेन्न। प्रमेयत्वपक्षकेऽस्तित्ववत्तासंशयसत्त्वात्। एवं चेदन्वयव्यतिरेकित्वं स्यात्। घटः प्रमेयो न वेति प्रमेयत्वसंशयस्तु नास्त्येव। प्रमेयत्वसाध्यकानुमानाऽसंभवेऽपि प्रमेयत्वपक्षकाऽस्तित्वसाध्यकानुमानं केवलान्वय्यनुमानं निष्प्रत्यूहम्। सिद्ध्यभावरूपपक्षतायां सन्देहपक्षताया अनपेक्षणात्। 'पक्षः साध्यवान्' 'पक्षे साध्यमिति' चानुमितिबलेन तत्समानाकारावेव संशयौ पक्षः साध्यवान्न वा पक्षे साध्यं न वेति पक्षतारूपौ। यः संशयः पक्षे साध्यसिद्धिविरोधी स एवाऽनुमानांगं, न तु समानविषयकत्वं तन्त्रम्, प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयस्य 'घटः प्रमेय' इतिसाध्यसिद्धिविरोधित्वम्, संशययोग्यत्वं वाऽनुमानांऽगम्, पक्षनिष्ठात्यन्ताभावाऽप्रतियोगिज्ञानं साध्यसाधकं तदभावश्च योग्यतात्वम्। अन्वयव्यतिरेकव्याप्त्योरन्यतरनिश्चयेनाऽनुमित्युद्भवः। उभयव्याप्त्युपस्थितौ व्यतिरेकोपासना, विपक्षवृत्तित्वशंकानिरासद्वारा व्यतिरेकव्याप्तावुपयुक्तो व्यतिरेकः। केवलान्वयिनि तु विपक्षाऽभावात् शंकाऽभावात् साध्याऽभाववदवृत्तित्वं व्याप्तिमालम्ब्य यत्सम्बन्धावच्छिन्नसाध्याभाववत्यवृत्तित्वं हेतोस्तत्सम्बन्धेन साध्यसिद्धिः फलम्, साध्याभाववति हेतोरवृत्तित्वं येन सम्बन्धेन तेन पक्षधर्मताधीः कारणम्। किञ्च व्यतिरेकव्याप्तिग्रहाऽधीना धीर्नानुमितिः, किन्तु विजातीया, तत्करणं त्वर्थापत्तिः, यद्वा—पक्षताजन्यत्वमनुमितित्वं प्रयोजकम् ॥ ४०४ ॥

**असत्यसपक्षो हेतुस्तु व्यतिरेकी हि केवलः।**
**व्याप्तिग्रहो व्यतिरेकसहचारेण साध्यगः ॥४०५॥**
**प्रसिद्धः सा तद्वदन्याऽवृत्तित्वादिस्वरूपिणी।**
**अन्वया वा निरुपाधिव्यतिरेकेण गृह्यते ॥४०६॥**

अगृहीतव्याप्तिकत्वं केवलव्यतिरेक्यनुमानत्वम्। व्यतिरेकसहचारेण, साध्यव्याप्यत्वं साध्यवदन्याऽवृत्तित्वं साध्ये प्रसिद्धम्, निरुपाधिकव्यतिरेकसहचारेणाऽन्वयव्याप्तिर्गृह्यते 'गन्धवती इतरभिन्ने'ति 'पृथिवी इतरभिन्ना' प्रयोगे गन्धवत्त्वावच्छेदेन इतरभेदस्य साध्यत्वात्, पक्षतावच्छेदके हेतुत्वाऽभावात्, व्याप्तेर्नियतसामानाधिकरण्यरूपत्वे पृथिवीत्वमितरभेदव्याप्यमिति प्रतीतावपि 'सर्वा पृथिवी इतरभिन्ने'तिबुद्धेः व्यतिरेकिसाध्यत्वात्। व्यतिरेकव्याप्तेरन्वयेन साध्याभावव्यापकसाधनाभावस्याऽभावेन साधनेन पक्षे साध्यात्यन्ताभावस्य साध्यस्य साधनात्। साध्याभावत्वादिकं ज्ञानघटितम्, तेन मेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिज्ञानादनुमानम्। व्यापकाऽभावनिश्चयेन व्याप्याऽभावनिश्चयाऽवश्यम्भावात्, यद्रूपावच्छिन्नं प्रति व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेनाऽभावसिद्धिः फलम्। येन रूपेण व्यापकता गृह्यते तद्रूपावच्छिन्नीयत्वेन व्यापकत्वविशिष्टतत्तद्रूपावच्छिन्नीयत्वेन चाऽभाववत्ताज्ञानं हेतुः। 'पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादि'तिव्यतिरेकिणि साध्यमप्रसिद्धं, तत्र पृथिवी तेजोभिन्ना न वेतिसंशयेन तेजोभिन्नत्वेऽवगते 'पृथिवी तेजोभिन्ना सती जलादिद्वादशभिन्ना न वेति' संशये तेजोभिन्नत्वे सति जलादिद्वादशभिन्नत्वं प्रसिद्धं साध्यम्। 'पृथिवी जलादिभिन्ना न वेति प्रत्येकं त्रयोदशसंशयविषयाणां त्रयोदशाऽन्योन्याऽभावानां समुदायः पृथिव्यामवगतो व्यतिरेकादिनिरूपकः। साध्यनिश्चये साध्यव्यतिरेकानिश्चयो भवत्येवेति साध्यसन्देहे तद्व्यतिरेकसंशयस्य वज्रले-

पत्वात्तथा च संशयरूपा साध्यसिद्धिः। अथ घटादौ जलादिसकलभेदस्य प्रत्यक्षतः प्रसिद्धिः 'घटो न जलादि'रिति। अनुपलम्भोऽधिकरणे प्रतियोगिमत्त्वविरोधी अभावं ग्राहयति। 'सर्वा पृथिवी इतरभिन्ना न वे'तिसंशयस्य तत्प्रकारकसिषाधयिषायाश्च सामान्यतो घटविषयत्वाद् घटत्वेन विशेषदर्शनं सिद्धिर्वा, पृथिवीत्वेन संशयसिषाधयिषे भवतः। न ह्यनुमितौ सर्वत्र पक्षस्य सिद्धेः सिद्धसाधनम्, साध्यवत्त्वेन पूर्वमसिद्धेः। अन्वयितुल्यतया व्यतिरेकिणोऽपि सामर्थ्यात् अन्वयाऽप्रतिसन्धानदशायां व्यतिरेक्युपन्यासस्य निर्बाधात्। 'जलं तेजःप्रभृतिद्वादशभिन्नप्रतियोगिकान्योन्याभाववत् द्रव्यत्वात् तेजोवत्' इत्यनुमानात् त्रयोदशभिन्नस्य सामान्यतः सिद्धौ पृथिव्यां त्रयोदशभिन्नत्वं साध्यम्, पक्षाऽन्यस्मिन् साध्याऽप्रसिद्धिः। व्यतिरेकिणा 'पृथिवी त्रयोदशभिन्ने' तिप्रतीतिः। 'पृथिवी जलादित्रयोदशभिन्नप्रतियोगिकान्योन्याभाववती द्रव्यत्वात्' इति इतरभावाऽन्योन्याभावस्य साध्यत्वम्, स्वरूपभेदस्याऽन्वयिना व्यतिरेकिणा वा साध्यत्वम्। यद्वा पृथिवीत्वभिन्नधर्मात्यन्ताभाव एव साध्यः, जलत्वादिप्रतियोगिकास्तावन्तोऽत्यन्ताभावा वा साध्याः, तत्तदसाधारणतत्तद्धर्मात्यन्ताभावयोगो वा साध्यः। एतेऽभावाः—जलत्वं न घटादौ, घटादि जलात्यन्ताऽभाववदिति प्रत्यक्षात् क्वचित्तत्तद्वैधर्म्यात् प्रसिद्धाः तावतामभावानां वैशिष्ट्यं च प्रसिद्धम्। यद्वा—'जलत्वात्यन्ताभावः तेजस्त्वात्यन्ताभावाधिकरणवृत्तिः अत्यन्ताभावत्वात् घटत्वाऽत्यन्ताभाववत्'इति साध्यप्रसिद्धिः। भेदप्रतियोगिन इतरेऽपि मेयाः प्रसिद्धा इतीतरभेदोऽपि प्रसिद्धः सुग्रहः। चतुर्दशभेदानामेकत्र वृत्तावविरोधः। नाऽत्र 'पृथिवी जलं पृथिवीत्वादि'ति प्रतिप्रयोगः, घटादौ व्यभिचारात्। जीवच्छरीरं सात्मकं प्राणादिमत्त्वात्, इच्छादिकार्यवत्त्वाद्वेति'तत्र इच्छाऽसमवायिकारणसिद्धौ 'इच्छात्वं संयोगाऽसमवायिकारणकवृत्ति नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात् शब्दत्ववत्' 'स चाऽत्राऽसमवायिकारणं संयोगः किञ्चिदवच्छिन्नः संयोगत्वात्' आत्मसंयोगमात्रस्येच्छाजनकत्वे सात्मकत्वं शरीरे साध्यते। 'आत्मनि इच्छाधारता महत्संयोगावच्छेद्या जन्यविभुविशेषगुणाधारत्वाद् वाय्वादिसंयोगाद्यवच्छेद्यशब्दाधारत्ववत्' ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं सात्मकत्वम्, स्वशरीरे प्राणादिमत्त्वस्येच्छादिमत्त्वस्य च चेष्टावयवोपचयादिव्याप्यत्वग्रहात् घटादौ चेष्टादिविरहेण प्राणादिमत्त्वेच्छादिमत्त्वविरहाऽनुमानात्। कार्याऽभाववति कारणाभावनियमात् इच्छादिविरहात् इच्छाद्यसमवायिकारणसंयोगविरहानुमानात्। शरीरं सात्मकमिति शरीरविशेष्यकबुद्धेः व्यतिरेकितयोपपत्तेः। 'चेष्टा संयोगाऽसमवायिकारणिका संस्काराऽजन्यक्रियात्वात्' प्रयत्नाऽन्वयव्यतिरेकानुविधायिप्रयत्नवदात्मसंयोगः सिद्धयति। जीवच्छशरीरे सात्मकत्वं चेष्टाऽसमवायिकारणसंयोगाश्रयशरीरत्वं साध्यं, चेष्टावत्त्वात् हेतुः, चेष्टाविरहो घटे प्रत्यक्षसिद्धः, चेष्टाविरहात् तत्कारणसंयोगविरहः। 'जीवच्छरीरं जीवच्छरीराऽवयवो वा, आत्मभिन्नत्वे सति आत्मविशेषगुणकारणभोगानधिकरणाऽवृत्तिसंयोगवत्, प्राणान्यत्वे सति ज्ञानकारणीभूतप्राणसंयोगवत्त्वात्, यन्नैवं तन्नैवं यथा घटः। शरीरप्राणसंयोगस्तत्र ग्राह्यः, आत्मप्राणयोर्मनःप्राणयोः संयोगस्तेनाऽन्यथासिद्धः। 'भोगाधारत्वं भोगसमवायिकारणातिरिक्तवृत्ति सकलभोगाधिकरणवृत्तित्वात् प्रमेयत्वादिवत्। अथ—इच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता अष्टद्रव्याऽनाश्रितत्वे सति गुणत्वात् यन्नैवं तन्नैवं यथाऽनाश्रितम् अष्टद्रव्याश्रितं वेति इच्छाया द्रव्याश्रितत्वेऽनुमिते आश्रितत्वादिसाधारणधर्मदर्शनात् तद् द्रव्यम् अष्टद्रव्यातिरिक्तं न वेति सन्देहेनाऽष्टद्रव्यातिरिक्तद्रव्योपस्थितिः। इच्छाश्रयद्रव्यसिद्धौ पृथिव्यादाविच्छाधारताऽभावे तद्द्रव्यं पृथिव्याद्यष्टद्रव्यभिन्नम् अष्टद्रव्याऽवृत्तिधर्मवत्त्वात् पृथिव्यादित्वे बाधकसत्त्वाद्वा, इत्यष्टद्रव्यातिरिक्तद्रव्यसिद्धौ इच्छायाम् अष्टद्रव्यातिरिक्तद्रव्यवत्त्वम् अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं वा साध्यते। साध्यसिद्धिर्द्रव्यत्वे इच्छाविशेष्यकाऽष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वप्रतीतेर्व्यतिरेकिसाध्यत्वात्। अन्वयव्याप्त्यप्रतिसन्धाने व्यतिरेकव्याप्तिप्रतिसन्धाने व्यतिरेकिसंभवात्। सुवर्णं तैजसम् असति प्रतिबन्धकेऽत्यन्ताऽग्निसंयोगेऽप्यनुच्छिद्यमानजन्यद्रवत्वाधिकरणत्वादित्यपि व्यतिरेकि।

शब्दोऽनित्यः शब्दत्वादित्यपि च।

अथ व्यतिरेकि नाऽनुमानम्, सर्वत्र प्रमेयत्वादिना सत्प्रतिपक्षग्रस्तत्वादिति चेन्न, विपक्षबाधकेन व्यतिकिणो बलवत्त्वात्। व्यतिरेकिण्यभाव एव साध्यः, स चाऽप्रसिद्ध एव सिद्धयति, पृथिवी इतरभिन्ना पृथिवीत्वादित्यत्र जलादिव्यापकः पृथिवीत्वाभावो गृहीतस्ततः पृथिवीत्वाऽभावाऽभावरूपेण पृथिवीत्वेन पृथिव्याम् इतरान्योन्याभावोऽप्रसिद्ध एव सिद्धचति प्रतियोगिज्ञानस्य वृत्तत्वात्, प्रत्यक्षेण भूतले घटाभाववत्। प्रामाण्यसाध्यकव्यतिरेकिणि 'विवादास्पदमिदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा' अत्र व्यधिकरणप्रकारावच्छिन्नत्वस्य व्यापकः समर्थप्रवृत्तिजनकत्वाऽभावोऽप्रमायां गृहीतोऽतो विवादाध्यासितानुभवे समर्थप्रवृत्तिजनकत्वेन व्यधिकरणप्रकारावच्छिन्नत्वस्याऽभावः सिद्धचति, व्यधिकरणप्रकारानवच्छिन्नत्वमेव प्रमात्वम्। साध्याभावव्यापकहेत्वभावस्याऽभावात्मकहेतुमत्तया पक्षज्ञानं व्यतिरेकिणि गमकतौपयिकम्। योऽभावो यस्य भावस्य व्यापकत्वेन गृहीतस्तदभावाऽभावेन तस्य व्याप्यस्याऽभावः पक्षे साध्यते इत्यनुगताऽनतिप्रसक्तस्य गमकतौपयिकत्वात्। व्यतिरेकिप्रकारः स्वार्थे एव, परं प्रति साध्याऽप्रसिद्धया प्रतिज्ञाद्यसंभवात्। द्विविधे परामर्शेऽपि अनुमितिस्तु यथायथमनुमापकधीगोचरेति न पक्षविशेष्यकविशेषणकत्वाद्यग्रहः ॥४०५-४०६॥

**नन्वर्थापत्तिरेवाऽत्र मताऽन्यैर्मानकोटिका।**
**व्यतिरेक्यनुमानेन निर्वाहे न पृथक्प्रमा ॥४०७॥**
**यद्वा प्रमातुः सन्ध्याने व्यतिरेको न तिष्ठते।**
**तदा चोपस्थिता द्राक् सा प्रमात्वं भजते क्वचित् ॥**

अथ अर्थापत्तिः; ज्योतिःशास्त्रात् तत्कथितलिंगाद्वा देवदत्तस्य शतवर्षजीवित्वेऽवगते गृहे प्रत्यक्षेणाऽनुपलब्धे योग्याऽनुपलब्ध्या गृहाभावो जीवननियमग्राहकप्रमाणयोः समबलत्वेन जीवति न वेति संशयोत्तरं जीवनोपपादकं बहिःसत्त्वं कल्पयति। अन्वयव्यतिरेकाभ्यां संशयद्वारा गृहाभावः, गृहाभावोत्पादितनियमद्वयविषयकसंशयो जीवनसंशयो वा करणम्। प्रमाणविरोधज्ञानं संशयद्वारा वा करणम्। जीवित्वस्य लिङ्गविशेषणस्य सन्दिग्धत्वेनाऽनुमानाऽसंभवात् अर्थापत्तिर्मानान्तरम्। श्रुतार्थापत्तिरपि नियमप्रमाणाभ्यां निश्चितार्थं कल्पयति। कार्यकारणभावविघातेन तर्कसहयायिन्योऽप्यर्थापत्तयो लब्धस्वरूपा जायन्ते। संशयेऽपि नियमप्रमाणबलादयुक्तार्थे निर्बलत्वेऽर्थनिश्चयः प्रमा। यथोक्तसामग्रीप्रभवसंशयस्य कल्पनांगत्वेन मृतादौ जीवनसंशयस्य कल्पनांगत्वाभावात्। योग्यानुपलब्धिनिश्चितश्च गृहाभावः। प्रमाणयोर्बलाऽबलत्वे सबलस्य फलम् अपरस्य बाधादफलम्, तथा चाऽवधारणनिश्चयाभ्यां बहिःसत्त्वबोधनं फलम्। तर्हि तत्र 'देवदत्तो बहिः सन् जीवित्वे सति गृहनिष्ठाभावप्रतियोगित्वादि'तिव्यतिरेकिणा बहिःसत्त्वप्रमा, यदि व्यतिरेक्यनुसन्धानं तदाऽर्थापत्तिर्नामान्तरं वा प्रमाणान्तरम्। यदि गृहाभावनिश्चयः प्रमाणद्वयसंशयं प्रोत्थाप्य जीवनसंशयमापाद्य बहिःसत्त्वं कल्पयेत्। तत्तु संशयकारणस्य निश्चयाऽर्थाऽसामर्थ्याद् व्यतिरेकिणा निर्वाह्यमेव। जीवननियमग्राहकप्रमाणयोरप्रमाणत्वादेव बहिःसत्त्वं कल्पयित्वा गृहनियमो बाध्यताम्, मरणाऽपेक्षया जीवनकल्पने लाघवम्। ततश्चार्थापत्तिकल्पितं जीवित्वमुपजीव्याऽनुमानादपि बहिःसत्त्वज्ञानं स्यादपि। तर्कस्य विपर्ययपर्यवसानेऽनाभासत्वेनाऽनुमानं तर्कसहायं बहिःसत्त्वम् अनुमापयति। विपर्ययाऽपर्यवसानास्तर्का लाघवगौरवात्मकाः प्रमाणसहकारिणः प्रत्यक्षशब्दादावपि सहकारिणः, अर्थापत्तिसहकारिणश्च भवन्ति। यथा वा प्रमापकेन्द्रियस्य दोषेण प्रमाशक्तितिरोधाने ऐन्द्रियकभ्रमवत् संशयस्य दोषेण प्रमातिरोधानेऽग्रहभ्रमेण प्रमा न स्यादपि। ततो दोषाऽभावसहकृतसंशयस्य बहिःसत्त्वप्रमाकत्वम्। 'अनयोरेकं बाध्यं, विरुद्धार्थग्राहकत्वादि'ति सामान्यतोदृष्टादेव तर्कसहकृताद् गृहनियमग्राहकबाधे जीवनप्रमाणात् लिंगविशेषण जीवित्वनिश्चयेऽनुमानादेव बहिःसत्त्वसिद्धिस्तत्र नाऽर्थापत्त्यपेक्षा। अन्यश्चेत्तां प्रयुंक्ते तस्य त्वपेक्षा, अनुमानाऽननुसन्धानात्। तर्कसहकारेण सामान्यतोदृष्टस्य बलवत्त्वेन संशयदशायां जीवनबाधे गृहनियमग्राहकबाधस्याऽवश्यकत्वेन तर्कानन्तरं बहिःसत्त्वज्ञानमिति, तर्कस्य ग्राहकबाघद्वारा बहिःसत्त्वपरम्परासाधके सामान्यतोदष्टे

लाघवम्, सामान्यतोदृष्टं विना एकबाधाऽप्राप्तेः, विरोधज्ञानानन्तरम् एकम् अप्रमाणमित्यस्याऽवश्यम्भावात् प्रमाण्यसंशयानुरोधात् जीवनसंशयानुरोधाच्च। सहकारिवैचित्र्येण एकस्यापि विचित्रफलजनकत्वेन यत्तर्काऽसहकृतं विरुद्धार्थग्राहकत्वम् अनिर्धारितैकाऽप्रामाण्याऽनुमितिं जनयति तदेव तर्कसहकृतं पुनरनुसन्धीयमानं गृहनियमग्राहकप्रमाणम् अनुमितिं जनयत्येवेति। अथ पर्यवसन्नमपि प्रमाणं पुनः सहकारिविशेषेणाऽनुसन्धीयमानं सत् फलान्तरजनकम्, तदाऽन्यथाऽनुपपत्त्या ,व्यतिरेकिणा वा भिन्नभिन्नफलसम्पादकमिति द्वयोः पृथक्करणत्वे पृथक्प्रमात्वं च सामान्यतोदृष्टाद्वाऽर्थापत्त्या वेति। क्वचित्'देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वात् मद्वदि' ति सामान्यतोदृष्टं लाघवसहकारेण जीवनप्रतियोगित्वं गोचरीकरोति तदा लिंगविशेषणकनिश्चयादनुमानाद् बहिःसत्त्वसिद्धिः। अथ सामान्यतोदृष्टस्यापि विशेषविषयत्वेन मरणसाध्यकप्रयोगेण सत्प्रतिपक्षत्वम्, व्याप्तिपक्षधर्मतयोस्तुल्यत्वेन ज्ञानत्वात्। अथैवं विशेषपर्यवसाने सत्प्रयोगे सर्वत्र प्रतिप्रकरणसमतापत्तिः स्यादिति, अप्रयोजकत्वस्योभयत्र तुल्यत्वात्, प्रमाणविरोधेन तर्कस्याऽसहकारित्वात्, तर्ह्येवमर्थापत्तावपि प्रमाणविरोधेन तर्कस्याऽसहकारित्वमिति प्रमाणान्तरत्वे का हानिः। तर्हि तर्कावतार आवश्यकः, अधिकबलं साध्यते, न्यूनबलं निवर्त्यते, मरणकल्पनं शतवर्षावच्छिन्नजीवी गृहे एवेति बाध्यते, अन्यथा शतवर्षजीवित्वस्य विशेषणस्य बाधः, तदबाधे शास्त्रदृढीकृतेऽन्यपक्षो बाध्यते, उभयविशिष्टे देवदत्तेऽन्यत्रास्तित्वं तर्कानुमानेन वा तर्कार्थापत्त्या साध्यते, इति नैकेनाऽपरस्याऽन्यथासिद्धत्वं, संशयस्तु वास्तविकाऽप्रमाणविरोधिकल्पकः, तर्कं विनाऽप्रमाणविरोधोऽनुन्नेयः, अतस्तर्कार्थापत्त्या विरुद्धं विहत्याऽविरुद्धफलमुन्नीयते, अनुपपत्त्या वा उन्नीयते। जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति बहिःसत्त्वं विना जीवतो गृहाऽसत्त्वमनुपपन्नमिति ज्ञानानन्तरं बहिरस्तीति धीरस्ति, तत्राऽन्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं करणम्, किन्तु हेतुसाध्ययोः सहचाराऽज्ञानदशायाम् अनुपपत्तिज्ञानमकिञ्चित्करम्, बहिःसत्त्वज्ञानस्य जायमानत्वेन सामान्यव्याप्त्युपसंहाराऽशक्यत्वेन भिन्नदेशे सिद्धिरर्थापत्त्यैव। जीवतो गृहाऽसत्त्वाऽनुपपत्त्या बहिःसत्त्वकल्पनया देवदत्ते सिद्धे, देवदत्तबहिःसत्त्वं पर्यवस्यति, सामान्याकारं विनाऽनुपपत्तिज्ञानं करणं सामान्याकाराऽशेषज्ञानं फलम्। उपपादकाऽभाववति उपपाद्याभावनियमोऽनुपपत्तिः, तथा च—व्यतिरेकव्याप्तिमत उपपाद्याद् व्यतिरेकानुमानमुद्रयैव साध्यसिद्धिः, साध्याभावव्यापकाभावप्रतियोगित्वस्य नियामकत्वात्। अत्र हि व्यतिरेकव्याप्तिरन्वयस्य पक्षधर्मत्वमिति व्याप्तिधीजन्यमपि बहिःसत्त्वज्ञानं नाऽनुमितिः व्याप्तिपक्षधर्मताज्ञानजन्यत्वाभावात्, केवलान्वयिनि साध्याभावव्यापकाभावप्रतियोगित्वेन पक्षधर्मस्य ज्ञानस्याऽनुमितिप्रयोगजस्याऽत्राऽसंभवात्, साध्यव्याप्यत्वज्ञानस्य लघुत्वात्। व्यतिरेकसहचाराद्धेतोरेव व्याप्तिर्दृश्यते, अन्वयस्य व्यतिरेकस्योभयस्य वा सहचाराद् व्याप्तिग्रहत्रैविध्येऽनुमानत्रैविध्यम्, अतो धूमो दशाविशेषेऽन्वयी व्यतिरेकी अन्वयव्यतिरेकी चापि। अथ यदा जीविदेवदत्ताऽभावो गृहे वर्तमानो देवदत्तेऽवर्तमानो न स्याद् बहिःसत्त्वे हेतुः, व्यधिकरणत्वेन व्याप्त्यभावात्। भूमेरूपरि सविता आलोकवत्त्वात् 'भूमिः सपितृसंयुक्तोपरिदेशवती उपर्यवच्छेदेनाऽऽलोकसंयोगात्' इत्यनुमानम्। गृहनिष्ठाऽभावप्रतियोगित्वस्याऽसन्निकर्षेण ज्ञातुमशक्यत्वात्। विशेष्याऽसन्निकर्षात् तृतीयलिंगपरामर्शाऽभावात्। व्यतिरेकव्याप्तिगृहनिष्ठाऽभावयोर्ज्ञानं सहकारि, तेन मानसः परामर्शः स्यादपि तु सहकार्येव मानान्तरं प्रसज्येत, व्याप्तिज्ञानाऽनन्तरं लिंगपरामर्शाऽनुपस्थितावपि पक्षधर्मधूमस्मरणसहिताद् धूमो वह्निं विना नास्तीत्यनुपपत्तिज्ञानाद् वह्निज्ञानं भवतीति दृश्यमानो धूमो वह्निं विनाऽनुपपन्न इति यदा ज्ञायते तदाऽर्थापत्तिरेव, यदा त्वनुपपत्तिज्ञानं विना व्याप्यत्वेन प्रतिसन्धीयते तदाऽनुमानम्, व्यतिरेकव्याप्तिमुपजीव्य जीविदेवदत्तगृहाऽभावो बहिःसत्त्वं कल्पयति। अथ गृहे देवदत्तप्रतियोगिताकत्वस्य तदवच्छिन्नाभावस्य च प्रत्यक्षतया निरूपकतासम्बन्धेन प्रतियोगित्वस्य प्रत्यक्षस्य देवदत्ते सत्त्वेन तत्प्रत्यक्षतया सम्बन्धज्ञानस्य सम्बन्धिद्वयविषयकतया सामान्यलक्षणया ज्ञानलक्षणया वा प्रत्यक्षतया स्मृत-

व्याप्तिवैशिष्ट्यस्य प्रत्यक्षग्रहेण पक्षवृत्तिलिंगपरामर्शस्याऽनुमितिजनकत्वेन च तत्सत्त्वेऽनुमानाऽवश्यंभावेऽपि नाऽर्थापत्तेर्निरर्थकता, अनतिप्रसक्तसहकारिवशात् मानस एव स्मृतदेवदत्तविशेष्यकस्तृतीयलिंगपरामर्शः, सहकारिणो मानान्तरत्वं निरर्थकम्, अर्थापत्तेः स्वक्षेत्रे प्रमाणता निराबाधा चेति। मयूरः पर्वतेतरे न नृत्यति नृत्यति चेति ज्ञानानन्तरं पर्वते नृत्यतीति ज्ञानमस्ति, अधिकरणं विनाऽनुपपद्यदानं नृत्यं प्रसिद्धाऽधिकरणबाधसहकृतं प्रसिद्धेतरमधिकरणं कल्पयतीति तत्र चाऽर्थापत्तिः। किन्तु 'मयूरनृत्यं साधिकरणं नृत्यत्वादि'तिसामान्यतोदृष्टं प्रसिद्धाधिकरणबाधसहकृतं प्रसिद्धेतरं पर्वतमधिकरणमादाय नृत्यज्ञानं जनयतीति, यः सम्भावितत्तद्दितराऽवृत्तिः संस्तदतिरिक्तवृत्तिर्न भवति स न तद्वृत्तिर्भवतीति सामान्येन यत्तदर्थान्तर्भावेन व्याप्त्या नृत्यस्य पर्वतवृत्तित्वं सिद्धयति, पीनो देवदत्तो दिवा न इत्यत्रापि भुंक्ते अप्रसिद्धरात्रिभोजनसाध्यपीनत्वज्ञानं रात्रिभोजनमादाय सिद्धयति पर्वतेतरे न नृत्यतीतिशब्देन वा नृत्याऽभावबोधानन्तरं मयूरो नृत्यतीतिबोधाज्जायमानं ज्ञानं पर्वतनृत्यं गोचरयति। यद्वा—मयूरनृत्यं पर्वताधिकरणकं पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात् पर्वतत्ववदित्यन्वयव्यतिरेकि चेदम्। पीनो देवदत्तो दिवा न भुंक्ते इतिज्ञानानन्तरं पीनत्वं भोजनवत्त्वं विनाऽनुपपन्नमितिज्ञानात् दिवाभोजनबाधसहकृतात् देवदत्तो रात्रौ भुंक्ते इति ज्ञानं जायते तत्राऽनुमानाऽसंभवात् अर्थापत्तिः। यथा अभोजी पीन इत्यत्राऽयोग्यताज्ञानवत् पीनो दिवा न भुंक्ते इत्यत्रापि बाधात् योग्यताघटकरात्रिभोजनस्याऽप्रतीतेः, योग्यताघटकोपस्थितिं विनाऽन्वयमलभमानमिदं वाक्यं योग्यताघटकरात्रिभोजनोपपादकं रात्रौ भुंक्ते इति वाक्यं कल्पयित्वा तेन सहाऽन्वयबोधं जनयति, शाब्दया आकांक्षायाः शब्देनैव पूरणात्, शब्दोपस्थापितमादाय शब्दस्याऽन्वयबोधजनकत्वात्, एवं च श्रूयमाणशब्दस्याऽन्वयबोधजनकत्वं योग्यताघटकोपस्थापकेन शब्देन विनाऽनुपपद्यमानं तं कल्पयित्वा यत्राऽन्वयबोधं जनयति तत्र श्रुतार्थाऽऽपत्तिः। द्वारमित्यादौ पिधेहीति शब्दकल्पनं श्रुतार्थापत्तिः। अश्रूयमाणोऽपि शब्दोऽभिप्रायस्थोऽपि गृह्यते। स्वर्गकामो यजेतेत्यत्र योग्यताज्ञानाय परम्परासाधनताघटकमपूर्वं लिङादिवाच्यं कल्प्यते, ततः स्वर्गसाधनं याग इति ज्ञानं जायते, अन्यथाऽपूर्वमपि वाच्यं न स्यात्, तथा 'द्वारमिति वाक्यं पिधेहीति शब्देन सहाऽन्वयबोधं जनयत्वित्येतदभिप्रायविषयशब्दकल्पनात्। तादृशाभिप्रायविषयत्वसम्बन्धेन तद्वत्ताज्ञानमर्थापत्त्या जननीयम्, योग्यता तु बाधकप्रमाणाऽभावो वाऽन्वयविरोधिरूपविरहः, अतो दिवा अभोजने रात्रिभोजनाऽप्रतीतावपि भोजनसाध्यपीनत्वात् दिवा न भुंक्ते इति शब्दाद् धीरुत्पद्यते न प्रतीत्यनुपपत्तिः, किन्तु प्रतीताऽनुपपत्त्या रात्रिभोजनं कल्प्यते, अतोऽपूर्वं न वाच्यम्, एवं चेत्, तत्राऽनुमानमुपयोक्तव्यम्, वाच्यत्वानुसन्धाने त्वर्थापत्तिरिति, एवं च नैकत्राऽऽग्रहः, यद्बलाभिसन्धिस्तत्फलोदयात् पृथग्वा प्रमाणत्वं न हन्यते, लाघवगौरवादिदण्डचोऽन्तर्भावस्तु न स्वरूपलोपकृत्, प्राधान्ये तद्विधिमन्तराऽनुवृत्तेः प्रवर्तमाने वाऽन्यस्मिन् पूर्वत्यागे तर्करअबुभुत्सानामनिरोधात् यदनुसृतं तत्तत्र प्रमाणतामावहति। व्याप्तिस्मरणं वाऽनुपपन्नताज्ञानं विद्वत्सिद्धं नैकेनाऽपरं पराभाव्यं, स्वस्य फले स्वस्वबले समर्थत्वात्॥ ४०७–४०८॥

**न्यायसाध्यं परार्थं तच्चानुमानं तथा स्वकम्।**
**स्वार्थमुक्तं परार्थं तु पञ्चावयवशाब्दजम्॥४०९॥**

**पञ्चवाक्यात्मको न्यायो न्यायावयवपञ्चकम्।**
**प्रयुक्तं तु परार्थानुमितिप्रोद्भावकं त्विह॥४१०॥**

अनुमानं परार्थं पञ्चावयवात्मकन्यायसाध्यम्, त्रिविधमपि तथा, स्वीयानुमानं तु स्वार्थं व्याप्तिज्ञानपरामर्शज्ञानसाध्यम्, शब्दप्रयोगं विनाऽपि ज्ञानप्रयोगसाध्यम्। तदपि त्रिधा। सर्वत्र विशिष्टवैशिष्ट्यावगाहि ज्ञानं चोत्थापकमावश्यकम्। उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वं न्यायत्वम्, अनुमितिचरमकारणलिंगपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यत्वं न्यायत्वम्। प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते तेन च विशिष्टवैशिष्ट्यावगाहि मानान्तरं मन उत्थाप्यते, तेन सहकारिणा च चरमपरामर्श उत्पाद्यते, तेन चानु-

मितिरुत्पद्यते। असाधकविरलवाक्यानि समानि चापि न न्यायात्मकानि। समस्तरूपोपपन्नलिङ्ग-प्रतिपादकवाक्यत्वं स्वयं लक्षणमपि वाक्यात्मकमिति न्यायधर्मेऽतिप्रसक्तत्वान्न तथाविधं निर्वचनमुचितम्। पक्षसत्त्वसपक्षसत्त्वविपक्षाऽसत्त्वाऽसत्प्रतिपक्षितत्वाऽबाधितत्वानि पञ्चरूपाणि, यथासंभवं चत्वारि वा, उपनयेन सपक्षसत्त्वस्य, उदाहरणेन व्याप्तिघटक-सपक्षसत्त्वविपक्षाऽसत्त्वयोः, निगमनेन चाऽबाधित-त्वाऽसत्प्रतिपक्षितत्वयोः प्रतिपादनम् तर्हि अवयवा उचिता इति चेन्न। पक्षे साध्यप्रतिज्ञां विना हेतुनि-श्चयं विना त्रयाणामुद्दिष्टे विधेयाऽसामर्थ्येन विधेय-मात्रसाधकत्वाऽसामर्थ्येन च प्रतिज्ञाहेत्वोरप्यावश्य-कत्वात्, साध्यवत्तया पक्षबोधजनकवाक्यं प्रतिज्ञा, साधकलिंगप्रतिपादकवाक्यं हेतुः, व्याप्तिप्रतिपादक-वचनमुदाहरणम्. व्याप्तिविशिष्टहेतुप्रतिपादकवचन-मुपनयः, हेतुसाध्यवत्तया पक्षप्रतिपादकवचनं निगम-नम्। पञ्चावयववाक्यप्रयोगेण "पर्वतो वह्निमान्, हेतुत्वं धूमीयम्, महानसं धूमवद्वह्निमच्च महान-सान्यद्धूमवद्वह्निमच्च, वह्निव्याप्यधूमवान्पर्वतः साध्यव्याप्यधूमज्ञानज्ञाप्याऽबाधिताऽसत्प्रतिपक्षित-वह्निमान्," इतिमहावाक्यार्थबोधे सति मध्यस्थस्य वह्निव्याप्यधूमवान्पर्वत इति परामर्शे सति अनुमि-तिर्भवति। तादृशयत्किञ्चिच्छाब्दबोधं प्रति यादृश-यादृशधर्मप्रकारकज्ञानत्वेन शब्दज्ञानस्य कारणता प्रत्येकं तद्धर्मावच्छिन्नवाक्यसमुदायत्वस्य तादृशयत्कि-ञ्चिच्छब्दज्ञाननिष्ठा या या कारणता तत्तदवच्छेदक-कोटिप्रविष्टयत्किञ्चिज्ज्ञानीयविषयताश्रयवर्णत्वव्या-पकसमुदायत्वं न्यायत्वम्, धर्माः प्रतिज्ञादीनामानुपूर्वी-विशेषाः, उचितानुपूर्वीप्रतिज्ञोत्तरहेतूत्तरोदाहरणो-त्तरोपनयोत्तरनिगमनत्वरूपा तु निगमने विश्रान्ता, निगमनपूर्वोपनयपूर्वोदाहरणपूर्वहेतुपूर्वप्रतिज्ञात्वस्य प्रतिज्ञायां विश्रान्तिः, मध्ये मध्येऽव्याप्तिः। स्वाश्रयीभूतप्रतिज्ञाद्यव्यवहितोत्तरत्वशून्यहेत्वादि-वृत्ति यद्यत्समुदायत्वं तत्तदन्यसमुदायत्वं न्यायत्वम्, समुदायत्वं चाऽनेकपर्याप्तधर्मः। पर्याप्त्या न्यायपद-प्रवृत्तिनिमित्तत्वम् अनेकपर्याप्तधर्मत्वम्। परामर्श-प्रयोजकवाक्यत्वं न्यायत्वम्, अनुमितिचरमकारण-लिङ्गपरामर्शप्रयोजकशाब्दबोधजनकशाब्दज्ञानजन-कवाक्यत्वम् अवयवत्वम्। न्यायान्तर्गतत्वे सति प्रतिज्ञाद्यन्यतमत्वम्, प्रतिज्ञाद्यघटकत्वे सति उभय-घटकभागद्वयाऽघटितत्वं वाऽवयवत्वम्, प्रतिज्ञादि-प्रतिपाद्यतत्तद्विशिष्टार्थविषयकज्ञानपञ्चकान्यतमज्ञा-नजनकवाक्यत्वम् अवयवत्वम्। स्वरूपसम्बन्धेन न्यायत्वाऽऽश्रयत्वं न्यायान्तर्गतत्वम्। विजातीयतत्त-द्बीजनकशब्दत्वं न्यायत्वम्। तत्तज्ज्ञानजनकशब्दत्वं न्यायत्वम्। स्वाऽविषयकप्रतीत्यविषयन्यायकत्वं न्यायान्तर्गतत्वम्॥ ४०९-४१०॥

**प्रतिज्ञा साध्यनिर्देशः पक्षे धर्मिणि धर्मिता।**
**विशिष्टे न विशिष्टादिज्ञानं नाऽतोऽन्यगामिता ४११**

उद्देश्यानुमितिहेतुलिंगपरामर्शप्रयोजकवाक्यार्थ-ज्ञानजनकत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविष-यकशाब्दज्ञानजनकवाक्यत्वं प्रतिज्ञात्वम्, साध्यो विधे-यधर्मविशिष्टो धर्मी तत्र निर्देशः, पक्षतावच्छेदकपर्व-तत्वादिविशिष्टे साध्यतावच्छेदकवह्नित्वादिविशि-ष्टवैशिष्ट्यज्ञानजनको न्यायाऽवयवः प्रतिज्ञा, उदा-हरणाच्च साध्यतावच्छेदकविशिष्टज्ञानं न पक्षताव-च्छेदकविशिष्टे, उपनयाच्च पक्षतावच्छेदकविशिष्टे न साध्यतावच्छेदकविशिष्टवैशिष्ट्यज्ञानमिति तयो-र्व्युदासार्थमुक्तम् विशिष्टे नेत्यादि···गामितान्तम्। उद्देश्यद्वयं प्रकृतार्थकम्। यादृशसाध्यपक्षकन्याया-वयवत्वं तादृशसाध्यपक्षकानुमित्यन्यूनानतिरिक्तवि-षयकशाब्दज्ञानजनकत्वं प्रतिज्ञात्वम्। यादृशपक्ष-साध्यिकाः पक्षे यादृशयादृशविशिष्टार्थबोधिकाः प्रतिज्ञाः सम्प्रदायप्रसिद्धाः तादृशानां बोधानामन्यत-मेनाऽप्यनिवर्त्यस्य संशयस्याऽनिवर्तको यस्तावद्बोधा-न्यतमो बोधस्तज्जनकत्वं प्रतिज्ञात्वम्। तादात्म्येन गवि साध्ये पक्षे गवाऽभेदस्य संयोगेन समवायेन वा वह्नौ वह्निमदभेदस्य समवायेन पाकस्य कृतौ पाक-कृतिमत्त्वस्य पाककर्त्रभेदस्य विशेषणतया इतरेभ्यो भेदे इतरभेदवत्त्वस्य इतराऽन्याऽभेदस्य इतरभिन्ना-ऽभेदस्य च बोधा विशिष्य वक्तव्याः, तावद्बोधाऽनि-वर्त्यासंशयाऽनिवर्तकतावद्बोधनिवर्त्ययावत्संशयनिव-र्तकबोधजनकत्वं प्रतिज्ञात्वम्। उद्देश्यानुमितिहेतु-लिंगपरामर्शप्रयोजकवाक्यार्थज्ञानजनकत्वे सति

लिंगाऽविषयकशाब्दज्ञानजनकवाक्यत्वं प्रतिज्ञात्वम्। उद्देश्यानुमितिसमानविषयकशाब्दज्ञानजनकन्यायावयवत्वं प्रतिज्ञात्वम्। हेतुविषयकज्ञानजनकत्वव्याप्याऽवयवाऽवच्छेदकरूपशून्यत्वे सति उदाहरणाऽन्यन्यायाऽवयवत्वं प्रतिज्ञात्वम्। हेत्वभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वं प्रतिज्ञात्वम्। लिंगाऽविषयकलिंगिविषयकज्ञानजनकन्यायाऽवयववाक्यत्वं प्रतिज्ञात्वम्। लिंगविषयकज्ञानजनकत्वाऽनियतलिङ्गिविषयकज्ञानजनकत्वाऽनियताऽवयवताऽवच्छेदकरूपवत्त्वं प्रतिज्ञात्वम्। इतरान्वितस्वार्थबोधकत्वे सति स्वीयं यदन्त्यभिन्नं पदं तदर्थविशेष्यकाऽन्वयबोधकत्वे सति अन्त्यपदवत्त्वं प्रतिज्ञात्वम्। स्वीयाऽनन्त्यपदार्थविशेष्यकाऽन्वयबोधाऽजनकाऽन्यत्वे सति इतरान्वितस्वार्थबोधकन्यायावयवत्वं प्रतिज्ञात्वम्॥ ४११॥

**साध्ये निर्देशिते कस्मादित्याकांक्षानिवृत्तये।**
**यत्पञ्चम्यन्तवचनं तल्लिङ्गं सम्प्रयुज्यते॥४१२॥**

अनुमितिकारणीभूतलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकसाध्याऽविषयकशाब्दधीजनकहेतुविभक्तिमच्छब्दत्वं हेतुत्वम्। न्यायावयवत्वे सति साध्याऽविषयकशाब्दधीजनकत्वे सति प्रकृतसाध्यान्वयबोधनक्षमाऽर्थोपस्थितिजनकविभक्तिमच्छब्दत्वं हेतुत्वम्। साध्यविषयकधीजनकत्वाऽनियतहेतुविभक्तिमत्त्वनियताऽवयवतावच्छेदकरूपत्वं हेतुत्वम्। विभक्त्यर्थहेतुत्वविशेष्यकाऽन्वयबोधजनकन्यायावयवत्वं हेतुत्वम्। उदाहरणप्रयोजकाऽऽकांक्षाजनकशाब्दज्ञानजनकन्यायावयवत्वं हेतुत्वम्। साध्याऽविषयकज्ञानजनकहेतुपञ्चम्यन्ताऽनुमितिपरशब्दत्वं हेतुत्वम्। प्रतिज्ञावाक्यधीजन्यकारणाऽऽकांक्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यत्वं हेतुत्वम्। स्वेतराऽवयवाऽजन्यहेतुत्वविशिष्टसाध्यविषयकज्ञानजनकं यत्तदन्यत्वं हेतुत्वम्। पञ्चम्यन्तलाक्षणिकपदवदनुमितिपरवाक्यत्वं हेतुत्वम्। अनुमितिहेतुज्ञानकारणधूमवत्त्वादितिशब्दजन्यज्ञानवृत्तिप्रतिज्ञादिजन्यज्ञानाऽवृत्तिजातियोगिज्ञानजनकवाक्यत्वं हेतुत्वम्। अन्वयव्याप्त्यभिधायकाऽवयवाऽभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायाऽवयवत्वम् अन्वयिहेतुत्वम्। व्यतिरेकव्याप्त्यभिधायकाऽवयवाऽभिधानप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वं व्यतिरेकिहेतुत्वम्। अन्वयव्यतिरेकोदाहरणकाऽऽकांक्षाप्रयोजकज्ञानजनकहेतुत्वप्रतिपादकविभक्तिमन्न्यायावयवत्वम् अन्वयव्यतिरेकिहेतुत्वम्। पक्षसपक्षवृत्तिविपक्षाऽवृत्तिविषयकपञ्चम्यन्तन्यायावयवहेतुवचनत्वम् अन्वयव्यतिरेकिहेतुत्वम्। अत्यन्ताऽभावाऽप्रतियोगिसाध्यसमानाधिकरणपक्षसद्धेतुवचनत्वं केवलान्वयिहेतुत्वम्। अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याऽविषयकशाब्दधीजनकप्रतीताऽन्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वम् अन्वयिहेतुत्वम्। अनुमितिकारणीभूतपरामर्शप्रयोजकशाब्दज्ञानकारणसाध्याऽविषयकशाब्दधीजनकाऽप्रतीताऽन्वयसाध्यसाधनवाचकहेतुविभक्तिमच्छब्दत्वं व्यतिरेकिहेतुत्वम्। प्रकृतपक्षान्वितस्वार्थबोधकपदोपस्थापितप्रकृतसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तलाक्षणिकपदवदवयवत्वं हेतुत्वं। पञ्चम्यन्तलाक्षणिकपदवत्त्वनियतावच्छेदकरूपवत्त्वं हेतुत्वम्। पञ्चम्यन्तलाक्षणिकपदवत्त्वव्यभिचार्यवयवतावच्छेदकशून्याऽवयवत्वं हेतुत्वम्। प्रकृतपक्षाऽन्वितस्वार्थबोधकपदोपस्थापिताऽर्थान्वितस्वार्थबोधकन्यायावयवत्वं हेतुत्वम्। स्वार्थविशिष्टवैशिष्टयबोधजनकन्यायावयवत्वं हेतुत्वम्। विशिष्टवैशिष्टयबोधजनकस्वार्थोपस्थितिजनकन्यायावयवत्वं हेतुत्वम्। विशिष्टबोधजनकस्वार्थविशिष्टबोधजनकन्यायावयवत्वं हेतुत्वम्॥ ४१२॥

**हेतावुक्ते कथमस्य गमकत्वं तु कांक्ष्यते।**
**व्याप्त्या च पक्षधर्मेणेत्येवं प्रदर्शने पुरा॥४१३॥**
**व्याप्तिर्यत्र द्वयोस्तत्स्यादुदाहरणमत्र तत्।**
**न्यायावयवदृष्टान्तवचनं सूत्रितं खलु॥४१४॥**

व्याप्तिप्रदर्शनाय दृष्टान्तवचनं न्यायावयव उदाहरणम्। इतरान्वितस्वार्थबोधकन्यायावयवत्वम् उदाहरणत्वम्। अन्वयव्याप्तिबोधकन्यायावयवत्वम् अन्वय्युदाहरणत्वम्। व्यतिरेकव्याप्तिबोधकन्यायावयवत्वं व्यतिरेक्युदाहरणत्वम्। अनुमितिहेतुलिङ्गपरामर्शवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवन्निष्ठनियतत्वाऽभिमतसम्बन्धबोधजनकशब्दत्वम् उदाहरणत्वम्। साध्यसाधनसम्बन्धबोधकत्वम् अन्वय्युदाहरणत्वम्।

साध्यसाधनाऽभावसम्बन्धबोधकत्वं व्यतिरेक्युदाहरणत्वम्। प्रकृतानुमितिहेतुलिंगपरामर्शपरवाक्यजन्यज्ञानविषयव्याप्त्युपनायकं वचनमुदाहरणम्। उपनयाऽभिधानप्रयोजकजिज्ञासाजनकवाक्यत्वम् उदाहरणत्वम्। उपनयाऽभिधानप्रयोजकजिज्ञासाजनकाऽन्वयव्याप्तिविषयकवचनत्वम् अन्वय्युदाहरणत्वम्। उपनयाभिधानप्रयोजकजिज्ञासाजनकव्यतिरेकव्याप्तिविषयकवाक्यत्वं व्यतिरेक्युदाहरणत्वम्। हेत्वाकांक्षानिवर्तकत्वे सति साध्यसाधनतद्व्यतिरेकाऽन्यतरव्याप्तिस्थलबोधकत्वे सति दृष्टान्तवचनत्वम् उदाहरणत्वम् ॥ ४१३-४१४ ॥

**व्याप्तस्य पक्षवृत्तित्वाऽऽकांक्षाया विनिवृत्तये।**
**पक्षधर्मत्वनिर्देष्टृवचस्तूपनयात्मकम् ॥ ४१५ ॥**

अनुमितिकारणतृतीयलिङ्गपरामर्शजनकाऽवयवत्वम् उपनयत्वम्। साध्यव्याप्यविशिष्टपक्षबोधकाऽवयवत्वं, साध्याभावव्यापकाऽभावप्रतियोगिमत्पक्षबोधकाऽवयवत्वं वा उपनयत्वम्। इतरोपस्थापितार्थविशेषणकस्वार्थबोधकन्यायावयवत्वं वा उपनयत्वम् ॥ ४१५ ॥

**यद्व्याप्यवत्तया पक्षे यस्योपसंहृतेर्वचः।**
**प्रोक्तं निगमनं पश्चाद् बोधात् सद्वारकं फलम् ॥४१६॥**

साध्यव्याप्यहेतुमत्त्वात् साध्यवानिति निगमयति यद्वचस्तन्निगमनम्। उपसंहारवचनं निगमनम्। अनुमितिहेतुलिंगपरामर्शप्रयोजकशाब्दज्ञानकारणव्याप्तिपक्षधर्मताधीप्रयुक्तसाध्यधीजनकं वाक्यं निगमनम्। अबाधितत्वाऽसत्प्रतिपक्षितत्वलाभार्थं पञ्चमांगीकारः। 'तस्यात्तथेति'—तस्मादिति सर्वनाम्ना पूर्वोक्ताऽशेषरूपलाभाय हेतोः परामर्शः, साध्यांशस्यापि पूर्वोक्ताऽशेषरूपलाभाय तथेति सर्वनाम्ना विरोधादिवारणाय युक्तः परामर्शः। अवयवार्थविशेष्यकस्वार्थबोधजनकन्यायावयवत्वं निगमनत्वम्। यदि मध्यस्य एव 'तस्मात्तथे'ति द्राक् फलं गृह्णाति तदा निर्दुष्टफलेन गतार्थत्वम्। बाधसत्प्रतिपक्षाऽननुसन्धाने तत्रैव पर्यवसानात्। चतुर्भिर्निर्वाहेऽपि पञ्चाऽवयववाक्यात्मकन्यायत्वं न व्याहन्यते, विपरीतार्थोपस्थितौ तन्निवृत्त्यर्थं तत्र तत्राऽऽवश्यकत्वात् ॥४१६॥

**स्वार्थे द्वयोस्तु सामानाधिकरण्यं पुरेक्षितम्।**
**स्मृत्या मानसबोधेनाऽऽवृतसिद्धिः फलं स्वकम् ॥४१७**

स्वार्थानुमाने तु पक्षे व्याप्यहेतोर्बुद्ध्या सामान्यया विशेषया वा मानसविशिष्टवैशिष्ट्यावगाहिबोधेनोचितज्ञानाऽवयवगर्भेण परोक्षस्य सिद्धिः स्वस्य जायते, नाऽत्र शब्दावयवा युज्यन्ते ज्ञानावयवोपयोगात्। सहचारवाक्यादिभिन्नसामग्रीसहकारेऽपि व्याप्तिपरामर्शयोरावश्यकत्वं चाऽनुमितौ प्रमान्तरताप्रयोजकम् ॥ ४१७ ॥

**हेतुवद्ये तु भासन्ते चतुर्न्यूनैर्हि रूपकैः।**
**ज्ञातव्यास्तेऽपि दोषा वै तत्त्वनिर्णयकारिणः ॥४१८॥**

पक्षसत्त्वसपक्षसत्त्वविपक्षाऽसत्त्वाऽसत्प्रतिपक्षितत्वाऽबाधितत्वानि पञ्चरूपाणि, अन्वयिनि व्यतिरेकिणि वा चतूरूपाणि सद्धेतुत्वप्रयोजकानि, ततो न्यूनानि दोषान्वितानि त्वसद्धेतुत्वप्रयोजकानि, असन्तो वै दोषाः स्वस्वरूपे सन्तः, प्रमितिकोटिनिश्चये विजये च प्रयोजकाः तज्ज्ञानं प्रयोजकम्, व्याप्तिपक्षधर्मताविशिष्टप्रकृतहेतुज्ञानमिव तद्विपरीतकोटिसाधकहेत्वाभासज्ञानमपि चोपयुज्यते। सद्धेतुत्वज्ञानवत् दुष्टहेतुत्वज्ञानमुपयुज्यते। प्रकृतसाध्यग्रहाऽप्रामाण्यग्राहकविपरीतसाधकहेत्वदुष्टत्वग्रहविघटकत्वात्। सद्धेतोर्न्यायप्रयोगद्वारा दुष्टहेतोर्दोषोद्भावनद्वारा विजयप्रदत्वम् ॥ अनुमितिकारणीभूताऽभावप्रतियोगियथार्थज्ञानविषयत्वं हेत्वाभासत्वम्। यद्विषयकत्वेन लिंगज्ञानस्याऽनुमितिविरोधित्वं तत्त्वं हेत्वाभासत्वम्। यद्विशिष्टं लिंगं ज्ञायमानं सत् अनुमितिप्रतिबन्धकं तत्त्वं दोषत्वं तद्वत्त्वम् असद्धेतुत्वम्। यद्विषयकं ज्ञानम् अनुमितितत्कारणान्यतरप्रतिबन्धकं भवति तत्त्वं दोषत्वम्। दोषवत्त्वं स्वविषयकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वेन तादात्म्येन वा। अनुमितिविरोधिबाधभ्रमवारणाय–ज्ञाननिष्ठ–यद्रूपावच्छिन्नविषयतानिरूपितविषयिता प्रकृताऽनुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकताऽनतिरिक्तवृत्ति तद्रूपवत्त्वं दोषत्वम्। दोषवत्त्वाऽवच्छेदकसम्बन्धावच्छिन्नयद्धेतुनिरूपिताऽऽधेयतावद्यादृशविशिष्टविषयकनिश्रयत्वं प्रकृतयद्धेतुकानुमितितत्कारणान्यतरनिष्ठ-

प्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्धेतुधर्मिकस्य तस्य तत्सम्बन्धेन दोषत्वम् । यद्रूपावच्छिन्नविषयकाऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वं प्रकृताऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वं दोषत्वम् प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकताऽवच्छेदकं यद्रूपं तद्रूपावच्छिन्नाऽविषयकप्रतीतिविषयतावच्छेदकं स्वं तादृशस्वावच्छिन्नविषयकाऽनाहार्याऽप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वम् । यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् । यादृशधर्मिणि यादृशधर्मवत्ताज्ञानम् अनुमितिप्रतिबन्धकं तस्य धर्मिणस्तद्धर्मवत्त्वं हेतुदोषस्तद्वत्त्वं दुष्टत्वम् । यद्विषयकनिश्चयस्य विरोधिविषयताप्रयुक्तः तदुत्तरमनुमितौ अनाहार्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वाऽवगाहित्वस्य च द्वयोर्व्यतिरेकस्तद्वत्त्वं हेतुदोषत्वम् । पक्षतावच्छेदकवैशिष्ट्यादिकं वैज्ञानिकं न तु वास्तवम् । व्याप्तिश्चाऽन्वयतो व्यतिरेकतश्च ग्राह्या, तादृशाऽवगाहित्वप्रसिद्धिश्चाहार्यज्ञानेऽभ्युपेतव्याऽनन्यगतिकत्वात् । साध्यनिश्चयोत्तरं तस्याऽननुमितावपि मानसज्ञानाऽविरोधित्वाच्च तादृशि पक्षे तादृशसाध्यवैशिष्ट्यस्य तादृशसाध्यनिरूपितव्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चाऽवगाहिनो ज्ञानस्य यद्विषयं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम् । ज्ञानविरोधित्वं च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम् । ज्ञानस्य यदनुमितिप्रतिबन्धकतावच्छेदकं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वं च दोषत्वम् । दादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वं दोषत्वम् । सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धिबाधिताः पञ्चाऽसद्धेतवः ॥ ४१८ ॥

**व्यभिचारी त्रिधा साधारणोऽसाधारणोऽपरः ।**
**तृतीयोऽनुपसंहारी तदन्यान्यत्वलक्षणः ॥४१९॥**

साध्यसंशयजनककोटिद्वयोपस्थापकपक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतत्वं सव्यभिचारत्वम् । यत्किञ्चित्साध्यसन्देहनिरूपितायां जनकतायामवच्छेदिका या या धर्मितावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकारता तत्तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं सव्यभिचारत्वम् । साधारणोऽन्वयेन कोटिद्वयोपस्थापकः । असाधारणो व्यतिरेकेण कोटिद्वयोपस्थापकः । अनुपसंहारी तु पक्षे उभयसाहचर्येण कोटिद्वयोपस्थापकः । केवलान्वयिसाध्यकाऽनुपसंहारी तु सद्धेतुः । असाधारणसत्प्रतिपक्षयोरनित्यदोषत्वं पुरुषदोषाधीनदोषत्वम्, बाधस्य नित्यदोषत्वम् । पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाऽव्यावृत्तित्वम् अनैकान्तिकत्वम् । साध्यतदभावव्याप्यत्वग्रहविरोधिवृत्तिमत्त्वग्रहाऽविरोधिरूपवत्त्वम् । सपक्षविपक्षगतसर्वसपक्षविपक्षव्यावृत्तान्यतरत्वं, पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्तिभिन्नत्वम्, पक्षवृत्तित्वे सति विरुद्धान्यत्वे सति अनुमित्यौपयिकसम्बन्धशून्यत्वम्, वाऽनैकान्तिकत्वम् । साध्यसन्देहजनकोभयकोट्युपस्थापकतावच्छेदकरूपवत्त्वं सव्यभिचारत्वम् । धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वम् अनैकान्तिकत्वम्, यद्रूपविशिष्टत्वेन गृहीतस्य धर्मस्य धर्मिवृत्तिताज्ञानं साध्यसन्देहजनकं तद्वत्त्वम् अनैकान्तिकत्वम् । यत्किञ्चित्संशयजनकताऽवच्छेदकताऽवच्छेदकत्वनिरूपिता या निरूपकत्वसंसर्गाऽवच्छिन्नाऽवच्छेदकता तदवच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं, यत्किञ्चित्संशयजनकतावच्छेदकवैशिष्ट्यघटकविशेष्यतानिरूपितप्रकारतापर्याप्त्यधिकरणधर्मवत्त्वम् अनैकान्तिकत्वम् । विरुद्धान्यत्वे सति पक्षवृत्तित्वे सति अनुमितिविरोधिसम्बन्धाऽव्यावृत्तित्वम् अनैकान्तिकत्वम् । यद्यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैव ऽनुमितिविरोधि यद्रूपं तद्वत्त्वम् अनैकान्तिकत्वम् । सधर्मितावच्छेदकहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतुमत्तानिश्चयसमानधर्मितावच्छेदककाऽनुमितिसामान्यप्रतिबन्धकं तादृशधर्मवत्त्वम् अनैकान्तिकत्वम् । साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वम् अनैकान्तिकत्वम् ॥ ४१९ ॥

**साधारणो व्यभिचारी साध्याभाववति स्थितः ।**
**व्याप्तिज्ञानं प्रतिबध्य फलं रोधयति प्रमाम् ॥४२०॥**

साध्याभावपद्गामित्वं साधारणत्वम् । साध्यवत्तदन्यवृत्तित्वम्, निश्चितसाध्यवत्तदन्यवृत्तित्वं, सपक्षगतत्वं, सपक्षविपक्षगतत्वं, पक्षाऽन्यसाध्यवत्तदन्यवृत्तित्वं वा साधारणत्वम्, साध्यवद्वृत्तित्वे सति सर्वसाध्यवदन्यवृत्तित्वमपि तत् । अथ–विपक्षवृत्तित्वं, साध्यतदभाववद्वृत्तित्वमपि साधारणत्वम् ॥ ४२० ॥

**सपक्षाऽवृत्तिना हेतावसाधारणदुष्टता ।**
**सामानाधिकरण्यस्य प्रतिबन्धप्रयोजिका ॥४२१॥**

साध्याऽसमानाधिकरणो हेतुरसाधारणः, सपक्षाऽवृत्तिरसाधारणः, सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः, सर्वनिश्चितसाध्यवद्विपक्षव्यावृत्तत्वमसाधारणत्वम्, सर्वसपक्षव्यावृत्तित्वमसाधारणत्वम्, वृत्तिमत्त्वे सति यावद्विपक्षसपक्षव्यावृत्तत्वम् असाधारण्यम्, अभावीयवृत्तिमत्प्रतियोगित्वे सति यावत्सपक्षविपक्षवृत्त्यभावीयप्रतियोगित्वम् असाधारण्यम्, विशिष्टसाध्यसाधनग्रहाऽविरोधित्वे सति साध्यतदभाववद्व्यावृत्तत्वम् असाधारण्यम् ॥ ४२१ ॥

**व्याप्तेरनुपसंहारोऽनुपसंहारिदोषिता ।**
**अभावाऽप्रतियोगिसाध्यकादिहेतुता हि सा ॥४२२॥**

असत्सपक्षविपक्षोऽनुपसंहारी, केवलान्वयिधर्मावच्छिन्नपक्षकोऽनुपसंहारी, अत्यन्ताभावप्रतियोगिसाध्यकत्वे सति केवलान्वयिधर्मावच्छिन्नपक्षकत्वम् अनुपसंहारित्वम्, पक्षातिरिक्ते व्याप्तिग्रहानुकूलाऽप्रतीतसहचारकत्वम् अनुपसंहार्यत्वम्, विप्रतिपत्तिविषयमात्रवृत्तित्वम् अनुपसंहारित्वम्, हेतौ व्याप्तिग्रहाऽनुकूलैकधर्म्युपसंहाराऽभाववत्त्वमनुपसंहारित्वम्, केवलान्वयिधर्मावच्छिन्नपक्षकत्वमनुपसंहारित्वम्, तद्धेतुकप्रकृतसाध्यसिद्ध्यौपयिकव्याप्तिग्रहानुकूलोपसंहाराभाववत्त्वम् अनुपसंहारित्वम्, व्याप्तिग्रहानुकूलसहचारविषयकनिश्चयत्वावच्छिन्नविरोधिरूपवत्त्वम् अनुपसंहारित्वम्, केवलान्वयिधर्मावच्छिन्नसाध्यसन्देहविषयवृत्तित्वम् अनुपसंहारित्वम्, साध्यवत्तानिश्चयसामान्यविरोधिसंशयविषयवृत्तित्वम् अनुपसंहारित्वम्, साध्याऽसन्देहविषयताव्याप्यसाध्यसिद्ध्यनुकूलव्याप्तिग्रहौपयिकसत्ताकत्वम् अनुपसंहारित्वम्, विशिष्टसाध्यसाधनग्रहाऽविरोधिनो ज्ञानस्य विषयतया व्यतिरेकव्याप्तिग्रहविरोधितावच्छेदकरूपवत्त्वम् अनुपसंहारित्वम्, प्रकृतसाध्यसाधनग्रहाऽविरोधिनो ज्ञानस्य विषयतया विशिष्टसाध्यसाधनोभयसामानाधिकरण्यग्रहविरोधितावच्छेदकरूपवत्त्वमनुपसंहारित्वम् ॥ ४२२ ॥

**विरोधो दूषणं साध्याभावव्याप्ते तु साधने ।**
**परामर्शोऽजनिर्व्याप्त्यभावान्नैव फलं प्रमा ॥४२३॥**

साध्याभावव्याप्तो हेतुर्विरुद्धः, साध्यवन्निष्ठात्यन्ताऽभावप्रतियोगिव्याप्यत्वं विरुद्धत्वम्, साध्याऽसमानाधिकरणसाध्याऽभावव्याप्यत्वं, साध्यवदन्योन्याभावव्याप्यत्वं वा विरुद्धत्वम् । अभावत्वं भावाऽभावसाधारणम् । साध्याऽनवगतसहचारकत्वे सति साध्याभावसहचारकत्वं विरुद्धत्वम् । विपक्षमात्रगामिहेतुत्वं, विरुद्धत्वम् । साध्याभावसाधकहेतुत्वं, साध्याभावप्रमापकहेतुत्वं, साध्यवदन्यत्वव्याप्यत्वं, स्वव्यापकाऽभावप्रतियोगिसाध्यकत्वं, वा विरुद्धत्वम् । साध्यव्यापकाऽभावप्रतियोगित्वं विरुद्धत्वम् । वृत्तिमतः साध्यवदवृत्तित्वं, वृत्तिमतः साध्यवद्वृत्तित्वाऽनधिकरणत्वं, वृत्तिमतः साध्याऽसमानाधिकरणधर्मत्वं, वृत्तिमतः साध्यवद्वृत्तित्वाऽनधिकरणधर्मत्वं, वा विरुद्धत्वम् । विधिसाधने विरुद्धस्त्रेधा—साक्षात्साध्याभावव्याप्यः, साध्यव्यापकाऽभावव्याप्यः, साध्यव्यापकविरुद्धोपलब्धश्च । अथ निषेधसाधनेऽपि विरुद्धस्त्रिधा—प्रतियोग्युपलम्भप्रयोज्यः, साध्यव्यापकाऽभावोपलम्भप्रयोज्यः, साध्यव्यापकविरुद्धोपलम्भप्रयोज्यः, । विरुद्धः सर्वो विशेषणद्वाराऽपि भवति । कृष्णाऽगुरुप्रभववह्निमान् कटुकाऽसुरभिपाण्डुरधूमवत्त्वात्, अयं बाधाऽऽश्रयासिद्धस्वरूपासिद्धऽसाधारणसंकीर्णः क्वचिद्भवति । साध्याभावव्याप्यत्वरूपेण विरोधितेति ॥ ४२३ ॥

**साध्यस्य विरहो यत्र साध्यते प्रतिहेतुना ।**
**हेतू समबलौ स्वस्वसाध्यानुमापकौ यतः ॥४२४॥**
**सत्प्रतिपक्षसमता यावत्समबलिष्ठता ।**
**निर्बलत्वं यदैकस्य फलं स्यात्सबलस्य वै ॥४२५॥**

सामानबलबोधितसाध्यविपर्ययलिङ्गत्वं सत्प्रतिपक्षत्वम्। प्रकृतसाध्यानुमापकबलशालित्वे सति प्रकृतसाध्याऽभावाऽनुमापकबलशालिहेत्वन्तरकत्वं सत्प्रतिपक्षत्वम्। बलं बहुप्रकारं—पक्षसत्त्वसपक्षसत्त्वविपक्षाऽसत्त्वादिरूपं, यद्वा—समानव्याप्तिपक्षधर्मतावत्त्वं, यद्वा—व्याप्तिपक्षधर्मतया ज्ञातत्वम्, यद्वा—अनिर्धारितविशेषेण बोधितसाध्यविपर्ययकत्वम्। साध्यविरोध्युपस्थापनसमर्थसमानबलोपस्थित्या प्रतिरुद्धकार्यलिङ्गत्वं सत्प्रतिपक्षत्वम्। बलं च व्याप्तिपक्षधर्मते। विरोधिबोधकाऽन्यगमकतौपयिकरूपसम्पत्तिमत्तया ज्ञायमानेन प्रतिरुद्धकार्यत्वं सत्प्रतिपक्षत्वम्। सत्प्रतिपक्षो विरोधिव्याप्त्यादिमत्तया परामृश्यमानहेतुर्विरोधिपरामर्शो वा यस्य परामृश्यमानस्य हेतोरसौ सत्प्रतिपक्षः। विरोधिपरामर्शप्रतिरुद्धकार्यकविशिष्टपरामर्शविषयत्वं सत्प्रतिपक्षत्वं, बाधोपस्थितिपरामर्शकालीनसाध्यसिद्धिसमर्थपरामर्शविषयत्वं सत्प्रतिपक्षत्वम्। दोषसांकर्ये यस्योपस्थितिः प्रथमा स प्रथमः। व्याप्तिपक्षधर्मतान्यतरभंगोऽपि दोषः। समबलविरोधिसामग्रीप्रतिबन्धेन निर्णयाऽजनकत्वं, यद्वा व्याप्तिपक्षधर्मताविरहवत्त्वं दूषकताबीजम्। वादिवाक्यमात्रस्य प्रतिरोधकत्वस्वभावेऽपि समबलत्वाऽनियमेनाऽधिकबलस्य विजयः। साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः। अगृहीताऽप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनाऽगृहीताऽप्रामाण्यकतदभावव्याप्यवत्त्वोपस्थितिविषयः सत्प्रतिपक्षः। परस्पराऽभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः। यद्वोभयकोटिव्याप्यदर्शनं यावत् तावत्संशयरूपाऽनुमितिः। एककोटचधिकबले तु न संशयः। प्रत्येकाद्धि ज्ञानमुत्पद्यमानम् अर्थात्संशयः। फलबलकल्पनीयो न्यूनाऽधिकसमबलभावः। तत्तद्धर्मिकतत्तत्प्रकारकज्ञानत्वप्रयोजकसमाजप्रयोज्यत्वात् सामाजस्याऽर्थात् तत्समाजज्ञानस्य संशयत्वमिति। यद्वा—हेत्वाभासानां फलद्वारकलक्षणाऽभिमतौ—संशयजनककोटिद्वयोपस्थापकाऽन्वयव्यतिरेकाऽन्यतरवत्त्वम् अनैकान्तिकत्वम्। साध्यविपरीतज्ञानजनकत्वं विरुद्धत्वम्। विपरीतज्ञानजनकहेत्वभिमतान्यत्वं बाधत्वम्। अनैकान्तिकादिचतुष्टयज्ञानाऽन्यमात्राऽधीनाऽलिङ्गत्वज्ञानजनकत्वम् असिद्धत्वम्। पक्षधर्महेतुनिष्ठव्याप्तिबाधकत्वं बाधत्वम्। प्रकृतसाध्यहेतुलभ्यतत्त्वार्थजिज्ञासाजनकव्याप्तिपक्षधर्मतोपस्थितिकत्वं प्रकरणसमत्वम्। अनैकान्तिके संशयद्वारा साध्ये जिज्ञासा, सत्प्रतिपक्षे तु हेतुसमीचीनत्वे जिज्ञासा। व्याप्तिपक्षधर्मताज्ञानद्वन्द्वानन्तरजायमानाऽपरव्याप्तिपक्षधर्मताज्ञाननाश्यं पूर्वद्वन्द्वं, संस्कारजन्यस्मरणं चाऽपरद्वन्द्वनाशकम्। इत्येवं परामर्शप्रतिबन्धः। यद्वा—हेतुद्वयसमूहालम्बनाद् युगपदुभयव्याप्तिस्मृतौ एकदा उभयव्याप्यवत्ताज्ञानात् विरुद्धकार्यद्वयकारणान्नैकमपि परामर्शरूपं कार्यमुत्पद्यते, इतिमिथः प्रतिबन्धः। स्वार्थानुमाने प्रत्यक्षादिबलात्परामर्शः, परार्थानुमाने न्यायोत्थापितप्रमाणबलात् परामर्शः॥ साध्याभावव्याप्यवान्पक्षः, साध्यवदन्यत्वव्याप्यवान् पक्षः, पक्षवृत्ती साध्याभावसाध्यवद्भेदव्याप्यौ, आधेयतया प्रकृतपक्षसाध्यप्रकृतसाध्याभावादिपक्षकाऽनुमितिजनकपरामर्शविषयप्रकृतपक्षव्याप्यविशिष्टप्रकृतसाध्याभावश्च सत्प्रतिपक्षः। प्रकृतपक्षतावच्छेदकावच्छिन्ने प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदिका सती विशिष्टपक्षविशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानवच्छेदकनिरुक्तपक्षसाध्यवैशिष्टचग्रहप्रतिबन्धकतावच्छेदकविषयतावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदिका यादृशविशिष्टनिरूपितविषयिता तादृशत्वं सत्प्रतिपक्षविभाजकं रूपं सत्प्रतिपक्षत्वम्॥४२४-४२५॥

**असिद्धिर्बहुधा धर्मोऽसिद्धिः संसर्गधर्मिणोः।**
**असिद्धिर्व्याप्त्यसिद्धयाद्यास्तद्वैशिष्टयोज्झितत्वतः॥**

विशेषणाऽसिद्धिर्विशेष्यासिद्धिर्विशिष्टाऽसिद्धिरन्वयाऽसिद्धिर्व्याप्यत्वाऽसिद्धिरन्यथासिद्धिः। स्वरूपासिद्धिः। पक्षाऽसिद्धिः साध्यासिद्धिर्हेत्वसिद्धिः फलाऽसिद्धिश्चेत्येवमनेका असिद्धयः स्वस्वस्वरूपे सिद्धिविरोधिन्यः। व्याप्तिपक्षधर्मत्वाऽभाववत्त्वमसिद्धिः। प्रत्येकाऽभावाऽनुगत-व्याप्तिपक्षधर्मताविशिष्टाऽभाववत्त्वमसिद्धिः। व्याप्तिपक्षधर्मताविशिष्टज्ञानविषयाऽभावत्वं प्रत्येकाऽभावानुगतम् असिद्धित्वम्। व्याप्तिपक्षधर्मतान्यतराऽभावत्वमप्यसिद्धित्वम्।

व्याप्तिपक्षधर्मताप्रमितिविरहत्वम् आश्रयासिद्ध्याद्यनुगताऽसिद्धित्वम्। व्याप्तिप्रमितिपक्षधर्मताप्रमितिविरहान्यतरत्वमसिद्धित्वम् । व्याप्तिपक्षधर्मतानिश्चयाऽभावत्वमसिद्धित्वं, स्वरूपसद्दूषणत्वम् । गमकतौपयिकप्रतिद्वन्द्विव्याप्तिपक्षधर्मताविरहतन्नियतयोरन्यतरत्वं हेत्वाभासत्वं, तत्राऽधिकसमानबलौ बाधविरोधौ प्रतिद्वन्द्विनौ। व्याप्तिपक्षधर्मताविरहश्चाऽसिद्धिः, तन्नियतौ च सव्यभिचारविरुद्धौ। आश्रयाऽसिद्धिः स्वरूपासिद्धिः व्याप्यत्वासिद्धिश्च प्रत्येकं दोषः । साधारणकथिताऽसाधारण्याऽनुपसंहारित्वभिन्नं ज्ञानस्य विषयतया परामर्शविरोधिताऽवच्छेदकं रूपम् असिद्धिः। साधारण्याद्यनिपिरूता ज्ञानस्य विषयितया परामर्शविरोधिताऽवच्छेदकरूपम् असिद्धिः। ज्ञानस्य विषयतया विशिष्टपक्षग्रहविरोधितावच्छेदकं रूपम् आश्रयासिद्धिः। विशिष्टपक्षविशिष्टसाधनग्रहाऽविरोधिनो ज्ञानस्य विषयतया तदुभयवैशिष्टयग्रहविरोधितावच्छेदकं स्वरूपाऽसिद्धिः। उक्ताऽऽश्रयाऽसिद्धिस्वरूपासिद्धिभिन्नाऽसिद्धिर्व्याप्यत्वाऽसिद्धिः। स्वविषयवृत्तिप्रकृतसाध्यसाधनग्रहविरोधितानवच्छेदकप्रकृतपक्षप्रकृतसाधनवैशिष्टयग्रहविरोधिताऽवच्छेदकरूपशून्यज्ञानस्य विषयोऽसिद्धिर्व्याप्यत्वाऽसिद्धिः। हेतुतावच्छेदकस्य व्याप्यतानवच्छेदकत्वमपि व्याप्यत्वाऽसिद्धिः। हेत्वाभासत्वे सति परामर्शविषयप्रतियोगिकाऽभावत्वम् असिद्धित्वम्। पक्षे पक्षतावच्छेदकाऽभाव आश्रयासिद्धिः, तथा पक्षे पक्षतावच्छेदकविरहव्याप्यः, पक्षे पक्षतावच्छेदकवदन्योन्याभावः, पक्षे पक्षतावच्छेदकवदन्योन्याभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाऽभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकाऽभावव्याप्यः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकतावच्छेदकवदन्योन्याभावः, पक्षतावच्छेदके पक्षतावच्छेदकतावच्छेदकवदन्योन्याभावव्याप्यः, पक्षतावच्छेदकाभावव्याप्यवान्पक्षः, पक्षतावच्छेदकवदन्योन्याभाववान्वक्षः, तदन्योन्याभावव्याप्यवान्पक्षः, पक्षतावच्छेदकतावच्छेदकाऽभाववत्पक्षतावच्छेदकं, तद्वयाप्यवत्पक्षतावच्छेदकं, पक्षतावच्छेदकतावच्छेदकवदन्योन्याभाववत्पक्षतावच्छेदकं, तद्व्याप्यवत्पक्षतावच्छेदकं चाप्याश्रयासिद्धयः ॥ समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वमिति नव्यानां नये तु—पक्षतावच्छेदकाभाववान्पक्षः, तद्व्याप्यवान्पक्षः, पक्षतावच्छेकवदन्योन्याभाववान्पक्षः, तद्व्याप्यवान्पक्षः, इत्याद्या आश्रयासिद्धयः ॥ सर्वसाधारणाश्रयाऽसिद्धयानुगतलक्षणं पक्षतावच्छेदकप्रकारकपक्षग्रहविरोधितावच्छेदकत्वम् तादृशग्रहविरोधितावच्छेदकत्वं चाऽत्रापि–अगृहीताऽप्रामाण्यकनिर्णयनिष्ठं यादृशविशिष्टनिरूपितविषयितासामान्यं तादृशपक्षग्रहप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशविशिष्टत्वम् ॥

एवं स्वरूपाऽसिद्धिरपि नानाविधा—साधनतावच्छेदकाऽवच्छिन्नसाधनाऽभाववत्पक्षः, तादृशसाधनाऽभावव्याप्यवत्पक्षः, साधनवदन्योन्याभाववान्पक्षः, तादृशान्योन्याभावव्याप्यवान्पक्षः, पक्षे साधनतावच्छेदकावच्छिन्नप्रतियोगिताकसाधनाभावः, पक्षे तादृशसाधनाभावव्याप्यः, पक्षे साधनतावच्छेदकावच्छिन्नसाधनवदन्योन्याभावः, पक्षे तादृशान्योन्याभावव्याप्यश्च। पक्षतावच्छेदकावच्छिन्नपक्षविशेष्यकसाधनतावच्छेदकावच्छिन्नसाधनप्रकारकग्रहविरोधितावच्छेदकत्वं स्वरूपासिद्धित्वम्। पक्षतावच्छेदकावच्छिन्नविशेष्यकसाधनतावच्छेदकावच्छिन्नप्रकारकग्रहविरोधितावच्छेदकत्वं च अगृहीताऽप्रामाण्यनिर्णयनिष्ठयादृशविशिष्टनिरूपितविषयितासामान्यं तादृशग्रहविरोधिताऽनतिरिक्तवृत्ति तादृशविशिष्टत्वं स्वरूपासिद्धित्वम् ॥ ४२६ ॥

**व्याप्यत्वाऽसिद्धिरितरा हेतुसाध्याद्यसिद्धितः ।**
**सोपाधिको भवेद्धेतुर्व्याप्यत्वाऽसिद्ध इत्यपि ॥४२७॥**

आश्रयासिद्धिस्वरूपासिद्धिभिन्नाऽसिद्धिर्व्याप्यत्वाऽसिद्धिः । यादृशविशिष्टमाश्रयासिद्धिर्यादृशविशिष्टं च स्वरूपासिद्धिस्तदुभयविशिष्टिाऽनिरूपितं साधारणत्वविरुद्धत्वाऽनुपसंहारित्वनिरूपितं च निर्णयनिष्ठं यादृशविशिष्टनिरूपितविषयितासामान्यं परामर्शविरोधितानतिरिक्तवृत्ति तादृशविशिष्टं व्याप्यत्वासिद्धिः। व्याप्यत्वासिद्धिस्त्रिविधा-साध्यविशेषणाऽसिद्धिः, साधनविशेषणाऽसिद्धिः, व्याप्तिविरहरूपाऽसिद्धिश्च । साध्यतावच्छेदकप्रकारकसाध्यग्रहविरोधितावच्छेदकरूपं साध्यविशेषणाऽसिद्धिः। तादृशं रूपं-साध्यतावच्छेदकाभाववत्साध्यं,तादृशभावव्याप्य-

वत्साध्यं, साध्यतावच्छेदकवदन्योन्याभाववत्साध्यं, तादृशान्योन्याभावव्याप्यवत्साध्यं, साध्यतावच्छेदकताऽवच्छेदकाऽभाववत्साध्यतावच्छेदकं, तादृशाभावव्याप्यवत्साध्यतावच्छेदकं, साध्यतावच्छेदकतावच्छेदकवदन्योन्याभाववत्साध्यतावच्छेदकं, तादृशान्योन्याभावव्याप्यवत्साध्यतावच्छेदकमित्यादि । भिन्नप्रकारकज्ञानस्यापि प्रतिबन्धकत्वनये—साध्ये साध्यतावच्छेदकाऽभावः, साध्ये तादृशाभावव्याप्यः, साध्ये साध्यतावच्छेदकवदन्योन्याभावः, साध्ये तादृशाऽन्योन्याभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकाऽभावः, साध्यतावच्छेदके तादृशाभावव्याप्यः, साध्यतावच्छेदके साध्यतावच्छेदकतावच्छेदकवदन्योन्याभावः, साध्यतावच्छेदके तादृशाऽन्योन्याभावव्याप्यः, 'पर्वतः काञ्चनमयवन्हिमान् धूमादि' त्युदाहरणम् ॥ साधनतावच्छेदकप्रकारकसाधनग्रहविरोधितावच्छेकरूपं साधनविशेषणासिद्धिः, तादृशं च रूपं साधनतावच्छेकाभाववत्साधनम् । काञ्चनमयधूमहेतुस्तथा । साध्यविशेषणाऽसिद्धिसाधनविशेषणाऽसिद्धयाश्रयासिद्धिस्वरूपासिद्धिभिन्नाऽसिद्धिर्व्याप्यत्वासिद्धिः । तत्स्वरूपं च साध्याऽव्यभिचरितसम्बन्धित्वरूपाऽन्वयव्याप्त्यभाववत्साधनं, तादृशव्यावप्त्यभावव्याप्यवत्साधनं, तादृशव्याप्तिमदन्योन्याऽभाववत्साधनं, तादृशव्याप्तिमदन्योन्याभावव्याप्यवत्साधनं, तादृशव्याप्तिमत्साधनाभाववत्पक्षः, तादृशव्याप्तिमत्साधनाभावव्याप्यवत्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याभाववान्पक्षः, तादृशव्याप्तिमत्साधनवदन्योन्याऽभावव्याप्यवत्पक्षः, साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिमत्साधनाभाववत्पक्षादिः, साध्याभाववदवृत्तिसाधनाभाववत्पक्षादिः, साध्यसमानाधिकरणसाधनाभाववत्पक्षादिः, साधने तादृशान्वयव्याप्त्यभावादिश्च ॥

उपाधिः—साध्यव्यापकत्वे सति साधनाव्यापकत्वम् । साध्यसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वं साध्यव्यापकत्वं, साधनवन्निष्ठात्यन्ताऽभावप्रतियोगित्वं साधनाऽव्यापकत्वम्, धूमसाध्ये, वह्निहेतौ आर्द्रेन्धनसंयोग उपाधिः, हेतुः साध्यव्यभिचारी तद्व्यापकोपाधिव्यभिचारित्वात् । सोपाधिकहेतुर्व्याप्यत्वासिद्धः । यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यं व्याप्तिः, व्याप्तिविरहनियतः साध्यव्यापकसाधनाऽव्यापक उपाधिः । स व्यभिचारोन्नायकतया स्वाऽभावेन प्रकरणसमतया वाऽनुमितिविरोधी । व्यभिचारवत्त्वसम्बन्धेन सोपाधिको हेतुः । समव्याप्त उपाधिः । स त्रिविधः–शुद्धसाध्यव्यापकः, पक्षधर्माऽवच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकश्च । धूमवान्वह्नेरित्यत्राऽऽर्द्रेन्धनसंयोगःप्रथमः । वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकमुद्भूतरूपवत्त्वं द्वितीयः । आत्मा प्रत्यक्षः प्रत्यक्षः जन्यद्रव्यत्वादित्यत्र प्रत्यक्षपरिमाणवत्त्वं तृतीयः । व्याप्तिग्राहकप्रमाणाऽभावमात्रादपि व्याप्यत्वाऽसिद्धो यथा—'शब्दः क्षणिकः सत्त्वादित्यत्र यत्सत्तत्क्षणिकं यथा जलधरपटलं, तथा च शब्दादिरिति । न च सत्त्वक्षणिकत्वयोर्व्याप्तिग्राहकं प्रमाणमस्ति, सोपाधिकतया सत्त्वस्य व्याप्यत्वासिद्धावुच्यमानायां क्षणिकत्वम् अन्यप्रयुक्तमभ्युपगतं स्यादिति । स्वानधिकरणसाधनाऽधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वमुपाधित्वम् । यद्वा—स्वावच्छिन्नाऽनधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकतावच्छेदकधर्मवत्त्वं तत्, तच्च स्वावच्छिन्नाऽनधिकरणहेतुमन्निष्ठयत्किञ्चिद्धर्मावच्छिन्नसाध्यसमानाधिकरणवृत्तियावद्धर्मावच्छिन्नसमानाधिकरणस्तद्वत्त्वम् । सद्धेतौ पक्षेतरत्वं नोपाधिः, पक्षमात्रवृत्तिधर्मे तत्सामानाधिकरण्याऽभावात् । स्वतोऽदूषकं न हेत्वाभासः किन्तून्नायकम्, तर्कादिवत् जात्युत्तरवत् निग्रहस्थानवत् करणदोषादिवत्, यथार्थप्रमाविरोधिनः सर्वोऽपि दोषाः साक्षात्प्रयोगे परिपन्थिनो हेत्वाभासाः, परम्परया परिपन्थिनस्तु सामग्रयन्तर्गताः सर्वविधोत्पन्नज्ञानकोटिव्याप्ता गुणसामग्रीभिर्बाध्यन्ते फलानुपधायका भवन्तीतिप्रतिकूलतर्काऽनुकूलतर्काऽभावौ उपजीव्यत्वे सति स्वतो दूषकावपि न हेत्वाभासौ स्वरूपसतोरेव प्रतिबन्धकत्वात् । उपाधेरपि परमुखवीक्षकस्य स्वतो न दूषकत्वम् । तथाप्युभयमध्यचारित्वेन साध्याऽसिद्धिरिव व्याप्त्यसिद्धिः साध्यव्यापकाऽव्याप्यत्वरूपा व्यभिचारद्वारिकाऽनुमित्यादिरोधिनी, अतो हेत्वाभाससाधनं,दूषणम् । साधनसाधनमुन्नायकम् । अन्ततः

ज्ञायमानत्वावच्छिन्नाऽनुमितितत्कारणज्ञानान्यतर-कारणीभूताऽभावप्रतियोगित्वाश्रयस्य हेत्वाभासत्वम् ॥ ४२७ ॥

**स्यात्साध्याभाववत्पक्षकत्वं बाधोऽनुमित्यकृत् ।**
**साध्याभावप्रमा ज्ञाता नित्यदोषा हि बाधिका॥४२८**

पक्षे साध्याभावो बाधः । साध्याभाववत्पक्षकत्वं, पक्षवृत्त्यभावप्रतियोगिसाध्यकत्वं, साध्याभाववत्पक्षवृत्तित्वं, साध्याभाववत्त्वप्रमाविषयपक्षकत्वं, प्रमितसाध्याभाववत्पक्षकत्वं, पक्षनिष्ठप्रमाविषयत्वप्रकाराऽभावप्रतियोगिसाध्यकत्वं वा बाधः, साध्याभावप्रमा प्रमात्वेन ज्ञाता हेत्वाभासः, न तु स्वरूपसती, प्रमात्वज्ञानं विनाऽधिकबलत्वाऽभावेनाऽदोषत्वात्, अप्रमायामपि प्रमात्वज्ञानेऽनुमितिप्रतिबन्धाच्च । यस्य ज्ञानमनुमितिप्रतिबन्धकं स हेत्वाभासः, साध्याभावः प्रतिबन्धकतया न ज्ञातश्चेत् स न हेत्वाभासः । यत्र सामान्यतो दृष्टानुमानमेवेतरबाधसहायं विशेषानुमापकं तत्र बाधकानामाभासत्वे तत्प्रयुक्तं सामान्यतोदृष्टस्याप्याभासत्वमिति बाधस्याऽसांकर्यात् स्वार्थानुमाने स्वन्त्रदोषत्वम् । पक्षे साध्याभावे ज्ञाते तु साध्याभावव्याप्यसामानाधिकरण्यबुद्धिर्व्यभिचार एव । यदि पक्षे साध्याभावबुद्धिं विनैव साध्याभावव्याप्यसामानाधिकरण्यबुद्धिस्तदा सत्प्रतिपक्षत्वम् । तत्र तत्र गमकतौपयिकरूपसाकल्यं बलम् । यदि तु साध्याभावव्याप्यबुद्धेरनन्यथासिद्धत्वं बलं तदा त्वनैकान्तिकत्वम् । साध्यसिद्ध्युन्मुखहेतुज्ञानस्य प्रमितसाध्याभावसहचरितहेतुविषयत्वेन व्यभिचारज्ञानतया दूषकत्वम् । व्यभिचारे साध्याभावप्रमा तन्त्रम् । सा साध्याभावज्ञानत्वेन दूषिका । पक्षे साध्याभावज्ञानत्वेन प्रतिबन्धिका । अनुमित्यसाधारणदोषो बाधः, मनोयोगाऽभाव इव स्वरूपसन्नेव प्रतिबन्धकः । अथ पक्षे साध्याभावनिश्चयस्तु साध्याभावज्ञानप्रामाण्यनिश्चयाद्भवति । साध्याभावनिश्चयाऽधीनं व्यभिचारज्ञानं, तत्पूर्वं ज्ञातं साध्याभावज्ञानप्रामाण्यं दोषः, उपजीव्यत्वात्, यदि तादृशप्रामाण्यनिश्चयो न विरोधी तदा विशेषदर्शनेन साध्यानुमितिरेव । साध्याभाववान्पक्षः, साध्यवदन्यः पक्षः,पक्षाऽवृत्ति साध्यं,पक्षे साध्याभावः, पक्षनिष्ठसाध्याभाववत्त्वादिकं, साध्यादेः पक्षवृत्तित्वादिकं, साध्यवत्सामान्यादेः पक्षान्यत्वादिकं, विशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्त्वादिकं, यथामतं पक्षे साध्यवत्ताज्ञानस्य साक्षाद्विरोधि प्रत्येकमेव बाधः, तन्निश्चयश्च विरोधिनिश्चयत्वेन दोषविशेषाद्यजन्यज्ञानमात्रे एव विरोधी । प्रकृतपक्षप्रकृतसाध्यवैशिष्टचग्रहविरोध्यनुन्नायकत्वे सति प्रकृतपक्षप्रकृतसाध्यग्रहविरोधित्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्टचग्रहविरोधित्वं बाधत्वम् । पक्षादेः साध्याऽसमानाधिकरणधर्मवत्त्वादिकमपि बाधः । साध्यसंसृष्टत्वज्ञानविरोधितया बाधः प्रकरणसमोऽसिद्धश्च हेत्वाभासा इत्यपि मतान्तरम् । पक्षधर्मताबलेन सिद्धमपि बाधे सति त्वसिद्धमिति बाधः पृथगेव दोषः । बाधस्य पृथग्दोषाऽभावत्वे तु पक्षाऽवृत्तिधूमे व्यभिचारः पक्षे वह्निं न साधयेत्, साधयेच्चेन् सिद्धमपि साधयेत्, यदि बाधो न नियामकः स्यान्, बाधितमपि च साधयेत् सल्लिंगपरामर्शाद् बाधितविशेषमानमपि प्रसजेत च । तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाऽजन्यदोशविशेषाऽजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति । भ्रमादिज्ञानाऽनास्कन्दितबाधबुद्धिः प्रतिबन्धिका । यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र बाधस्यैवाऽनुमितिप्रतिबन्धकतया दोषत्वम् । बाधव्याप्यः सत्प्रतिपक्षोऽपि स्वक्षेत्रे पृथग्दोषः । यत्क्षणावच्छेदेन रूपप्रागभावस्तत्र प्रतियोगिसाधने बाध एव । एवं साध्यवत्तानवच्छेदकदेशावच्छिन्नपक्षेऽपि बाध एव । विरोधिज्ञानं प्रतिबन्धकम्, प्रत्यक्षप्रमा प्रत्यक्षभ्रमविरोधिनी । अनुमितौ त्वभावप्रमामात्रं विरोधि ॥ बाधो दशधा—धर्मिग्राहकप्रमाणबाधितः—'घटः व्यापकः सत्त्वादि' तिप्रत्यक्षेण । परमाणवः सावयवा मूर्तत्वादित्यनुमानेन । मेरुः पाषाणमयः पर्वतत्वादिति स्वर्णबोधकागमेन ॥ साध्यप्रतियोगिग्राहकबाधितो यथा—वह्निः अनुष्णः कृतकत्वादिति प्रत्यक्षेण । शब्दः अश्रावणः गुणत्वादिति अनुमानेन' गवयत्वं गवयपदाप्रवृत्तिनिमित्तं जातित्वादित्युपमानेन ॥ साध्यग्राहकबाधितं 'नरशिरःकपालं शुचि प्राण्यंगत्वादित्यत्रागमेन । हेतुग्राहकबाधितं—जलाऽनिलौ उष्णौ पृथिवीतो विपरीतस्पर्शत्वात् तेजोवदिति प्रत्यक्षेण । मनो विभु ज्ञानसमवाय्याधारत्वादित्यनुमानेन । राजसूयं ब्राह्मणकर्तव्यं स्वर्गसाधनत्वादग्निष्टोमवदिति राजसूय-

कर्तव्यताबोधकागमेनेति ॥ पक्षतावच्छेदकावच्छेदेन साध्यसिद्धौ पक्षतावच्छेदकावच्छेदेन हेतुमत्ताज्ञानं प्रयोजकम् ॥ ४२८ ॥

**प्रमित्यर्थं प्रयुक्तेषु त्वसाधकत्वसाधकाः ।**
**हेतुषु न्यूनरूपत्वे हेत्वाभासाः सदुत्तराः ॥४२९॥**

वायौ गन्धसाधने स्नेहहेतुः पञ्चहेत्वाभासव्याप्तः, 'स्नेहः आसाधकः हेत्वाभासत्वात्', 'हेत्वाभासाः सदुत्तराः असाधकतासाधकत्वात्' । 'इमे—हेत्वाभासाः अपूर्णरूपवत्त्वात् पूर्णरूपवत्त्वभिन्नत्वाद्वा' । कथाप्रवृत्तौ द्वयम् उद्देश्यं–परानुमितिप्रतिबन्धः, स्थापनाया असाधकतासाधनत्वं च तत्र दूषणमात्रज्ञानात् अनुमित्यादिप्रतिबन्धः, अलिंगत्वज्ञापनात्तु असाधकतासाधनतोद्भवः । प्रतिबन्धकत्वेन रूपेण असाधकतासाधनत्वेन वा रूपेण दूषकत्वम् । दूषणं त्वसाधकताव्याप्यं तत्र पक्षधर्मता उद्भाव्या न तु पञ्चावयवा अपि, कथायां दूषणेऽसाधकताव्याप्त्युपस्थितिरावश्यकी । यावदावश्यकमुन्नेयं न तु सर्वावयवप्रयोगः । तदनंगीकर्तृवाद्यस्वीकारात् कथाप्रस्तावविरोधात् । असाधकत्वं—पक्षे साध्यप्रत्ययाऽजनकत्वम्, एतत्कालीनसाध्यविशिष्टपक्षधर्मिज्ञानाऽजनकत्वं, पक्षे साध्यभ्रमजनकत्वं, व्याप्तिपक्षधर्मताऽन्यतराराहित्यम्, अनैकान्तिकाद्यन्यतमत्वम्, एतत्कालीनैतत्पक्षीयत्वाऽवच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाऽभावः, तत्तत्कालतत्तत्पक्षविषयसाध्यत्वाभिमताऽनित्यत्वादिप्रमाजनकत्वाऽभावः, तृतीयलिंगपरामर्शीयतदनुकूलप्रमात्वम्, अनुमितिहेतुभूताऽभावप्रतियोगिज्ञानविषयत्वम्, अनुमितिप्रतिबन्धकप्रमाविषयत्वम्, तुल्यबलतया ज्ञायमानेन बोधितसाध्यविपर्ययकत्वप्रमाविषयत्वम्, अनैकान्तिकतादिज्ञानस्य तत्तदनुमितिप्रतिबन्धकत्वं, समीचीनसाध्यविशिष्टपक्षप्रत्ययाऽजनकत्वं, स्वाज्ञानदशायां पक्षे साध्यप्रत्ययाऽजनकत्वम्, अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वम्, वाऽसाधकत्वम् । तत्राऽनैकान्तिकबाधितविरुद्धेष्यव्याप्यत्वं, व्याप्यत्वाऽसिद्धेऽनैकान्तिकत्वं, स्वरूपाऽसिद्धसत्प्रतिपक्षाऽसाधारणेषु दशाविशेषेऽनुमितिप्रतिबन्धकज्ञानविषयत्वम् असाधकत्वम् । अनैकान्तिकेऽव्याप्यत्वम् असाधकत्वम्, असाधकत्वमननुगतमपि यस्य ज्ञानमनुमित्यादिप्रतिबन्धकं तस्य हेत्वाभासत्वमिति हेत्वाभासत्वमनुगतं पारिभाषिकमिति तत्त्वात्तदप्यनुगतम् अन्ततो हेत्वाभासत्वनियतं साध्यप्रत्ययाऽजनकत्वं सर्वत्रेति ॥४२९॥

**विमृश्य साधनोपालम्भाभ्यामर्थावधारणम् ।**
**निर्णयोऽभिमतो जल्पवितण्डास्थलयोगत्रान् ॥४३०**

साधानं स्थापना, उपालम्भः प्रतिषेधः, परपक्षदूषणं, तौ पक्षप्रतिपक्षाश्रयौ, तयोरन्यतरस्य निवृत्तिः, एकतरस्याऽवस्थानमवश्यन्भावि, यस्याऽर्थस्याऽवस्थानं तस्याऽवधारणं निर्णयः । तदभावाऽप्रकारकं ज्ञानं निर्णयः । जल्पवितण्डास्थले परीक्षास्थले परीक्षणविषये विमृश्यैव निर्णयः । शास्त्रे वादे च विमर्शवर्जम्, प्रत्यक्षेऽपि विमर्शवर्जम् । वादे षट्पक्षी प्रवर्तते—

१—शब्दोऽनित्यः प्रयत्ननान्तरीयकत्वात् घटवत् । इतिस्थापनावादिनः स्थापना **प्रथमः पक्षः** ॥ २—प्रयत्ननान्तरीयकत्वस्य हेतोः प्रयत्नानन्तरोत्पन्ने कीलके व्यभिचारित्वं नाऽनित्यत्वस्य साधकम्, हेतुर्न साध्यसाधको व्यभिचारित्वात् इतिप्रतिषेधो **द्वितीयः पक्षः** ॥ ३—हेतुरूपे पक्षे यो व्यभिचारित्वहेतुस्त्वया दर्शितः सः, प्रयत्ननान्तरीयकत्वे प्रयत्नाऽनन्तरमभिव्यक्तिमापन्ने प्रयत्नानन्तराभिव्यक्ते नित्येऽपि सत्त्वेन व्यभिचरितत्वात् न तव प्रतिषेधस्य साधकः, किञ्च—अनैकान्तिकत्वं यदि साध्याऽसाधकं तदा तवाऽपि तत्, तव साध्यसाधकत्वाभावात्मक साध्य तस्यापि असाधकं स्यात्, प्रतिषेधस्याऽसाधकं स्यात्, तथा च प्रतिषेधस्यापि प्रतिषेधो **विप्रतिषेधः** हेतु र्न साध्यसाधकाभावसाधकः व्यभिचारित्वात् इति विप्रतिषेधः **तृतीयः पक्षः** ॥ ४—हेतौ प्रतिषेधविप्रतिषेधोऽपि साध्यसाधकाभावसाधकाऽभावोऽपि हेतौ न, व्यभिचारित्वात् । इति **चतुर्थः पक्षः** ॥ ५—द्वितीयपक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसजतो दूषणवादिनस्तव **मतानुज्ञा** मन्मतानुप्रवेशः निग्रहः प्रसज्यते इति **पञ्चमः पक्षः** ॥ ६—प्रथमपक्षं सदोषमभ्युपेत्याऽनुज्ञाय द्वितीये चतुर्थे पक्षेऽपि तदुक्तं सदोषमभ्युपेत्य पञ्चमे स्वमताऽनुज्ञायां तं प्रावर्तयतस्तवाऽपि तन्मतानुज्ञा प्रसज्यते इति **षष्ठः**

पक्षः ॥ एतादृश्यां षट्पक्ष्यां नार्थविशेषः कश्चित् सिद्धयति ॥ अत्र वात्स्यायनन्यायभाष्यम्—( ५-१-४३ ) १—स्थापनापक्षे प्रयत्नकार्यत्वाऽनेकत्वादिति दोषः व्यभिचारः, स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति, स्वपक्षसमुत्थत्वात् । २—तं दोषमनुद्धृत्याऽनुज्ञाय प्रतिषेधे समानं दोषमुपसंहरति, तेन स्थापनां सदोषामभ्युपेत्य परपक्षाभ्युपगमात् । ३—तत्र परस्य प्रतिषेधमपि सदोषमभ्युपेत्य । ४—प्रतिषेधविप्रतिषेधेऽपि समानदोषप्रसंगः प्रसज्यते । तथा—५—तन्मतमनिषिध्य, समानदोषं प्रसजतः मतानुज्ञा प्रसज्यते ॥ ६—सा स्वस्यापि मतानुज्ञा प्रसज्यते, सोऽयं षष्ठपक्षः ॥ स्थापनावादिनः द्वितीयचतुर्थषष्ठपक्षाः, तेषां साध्यसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात् पुनरुक्तदोषप्रसंगः । चतुर्थपक्षे समानदोषत्वं परस्योच्यते, प्रतिषेधविप्रतिषेधेऽपि प्रतिषेधदोषवद्दोष इति । षष्ठेऽपि परपक्षाऽभ्युपगमात् समानो दोषो मतानुज्ञा च नार्थविशेषः कश्चित्सिद्धः । तृतीयपञ्चमयोः पुनरुक्तदोषप्रसंगः समानः । तृतीयप्रतिषेधेऽपि समानो दोषः । पञ्चमे प्रतिषेधविप्रतिषेधेऽपि समानो दोषः, नार्थाविशेषः कश्चिदुच्यते । पञ्चमषष्ठयोः अर्थाऽविशेषात् । पुनरुक्तदोषः । तृतीयचतुर्थयोर्मतानुज्ञा । प्रथमद्वितीययोर्विशेषहेत्वभावः । इत्येवं षट्पक्ष्याम्—उभयोः समानो दोषः प्रवर्तते तदोभयोरर्थाऽसिद्धिः । यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति तदा षट्पक्षी न प्रवर्तते, निर्णयो लभ्यते । त्रिपक्षी तु प्रवर्तते । यद्वा—१—विषयवाक्यन्यासः । २—विमतसंशयः । ३—पूर्वपक्षः । ४—तद्दूषणानि । ५—तत उत्तरपक्षः । ६—समन्वयसिद्धान्तनिर्णयः । इति षट्पक्षी ॥४३०॥

वादे निर्णयः फलम्, न तु जल्पे वितण्डायां च । तत्र वादः—

**विप्रतिपत्तितस्तर्कप्रमाणाभ्यां तु साधनम् ।**
**उपालम्भश्च सिद्धान्ताऽविरुद्धो न्याययन्त्रितः॥४३१**
**वीतरागकथावादस्तत्त्वनिर्णयलाभकृत् ।**
**विजयाऽर्थोऽपि सन्दर्भः कथांगं वाद ईरितः॥४३२**

तत्त्वनिर्णयविजयाऽन्यतरस्वरूपयोग्यन्यायानुगतवचनसन्दर्भः कथा । तिस्रः कथा भवन्ति—वादो जल्पो वितण्डा च । एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात् 'अस्त्यात्मा, नास्त्यात्मे'ति । विप्रतिपत्ती पक्षप्रतिपक्षौ । तयोस्तत्साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भो वादः, स च ज्ञाताभ्यां प्रमाणतर्काभ्यां साधनं तथोपालम्भो दूषणं यत्र तथाविधः, प्रकृतसिद्धान्ताऽविरुद्धः । पञ्चावयववाक्यं न्यायः प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकस्तेन वीतरागकथा वादः प्रवर्तते, वादस्य तत्त्वनिर्णयः फलम् । कथाधिकारिणः तत्त्वनिर्णयविजयाऽन्यतराऽभिलाषिणः सर्वजनसिद्धानुभवाऽनपलापिनः श्रवणादिपटवः अकलहकारिणः कथोपयिकव्यापारसमर्थाः ॥ ४३१ ॥ ४३२ ॥

**स वादश्छलजात्याढ्यो निग्रहस्थानयुक्कथा ।**
**साधनोपालम्भरब्धो विजिगीषुप्रजल्पना ॥४३३**

विजिगीषुकथा जल्पः, विजिगीषुर्हि छलानि जात्युत्तराणि च प्रयुंक्ते, निग्रहस्थानानि समादत्ते, स्वसाधनं परकीयदूषणं परकीयसाधने दूषणं च छलजात्युत्तरनिग्रहस्थानैरुद्भावयति । आरोपितप्रमाणैरारोपमयतर्कैश्च तत्र तत्र विजयार्थं यतते, सिद्धान्तं स्वकीयं न निरुणद्धि, परकीयं नाऽनुसरति । प्रतिज्ञादिपञ्चान्यतमानि यथास्वानुकूलं प्रयुंक्ते । एवंविधा कथा जल्पना । छलजातिनिग्रहस्थानानि प्रयुज्यमानानि परपक्षविघातेन स्वपक्षं रक्षन्ति प्रतिषेधविघातकानि सहकारीणि भवन्ति । वादिना १—'आत्मा नित्यः पयःपानप्रवृत्त्यादिना जन्मान्तरवत्त्वात्' इति प्रयुज्य, २—'आत्मा अनित्यः सर्वविस्मरणादि'त्यादिना दूषणं दत्तमव्याप्त्या तदुद्धृत्य, ३—'स्थापनां दृढयति । ४—प्रतिवादी तत्सर्वं स्वाऽज्ञाननिरासायाऽनूद्य छलजातिनिग्रहस्थानानि प्रयुंक्ते,—परमाणुसाधर्म्येण अनवयवत्वेन च यदि नित्यः स्यात्तर्हि शरीरजन्यत्वेन वैधर्म्येणाऽनित्योऽपि स्यात्, आत् आकाशाद्वा मापितः शब्द इवाऽनित्यः कस्यचिद् धर्मो गुणः स्यादनित्यः स्यात् । अनितिकः—स्थैर्यैतिकः अस्थिरः स्यात् । इत्यादिदूषणानि दद्यात् निग्रहस्थितिकं वादिनं कुर्यात् । तदा वादी हेत्वाभासान् अग्रे कृत्वा व्याप्तिपक्षधर्मताभ्यां तर्केण वा प्रमाणेन वा तस्य

छलादीन्निराकुर्यात्। न निराकुर्याच्चेत्, प्रतिवादी जल्पनेन विजयवान् चरमानुसन्धानवान् स्यात्, तत्त्वार्थं तु नाऽऽप्नुयात् ॥ ४२३ ॥

**जल्पोऽपि प्रतिपक्षस्य स्थापनाहीन एव चेत्।**
**वितण्डा खण्डनं मात्रं साध्यार्थनिरपेक्षकम् ॥४३४**

जल्पे समानाधिकरणौ पक्षौ, तत्रैकतरं वैतण्डिको न स्थापयति परपक्षप्रतिषेधेन प्रवर्तते, परपक्षप्रतिषेध एव वैतण्डिकस्य पक्षः। न किञ्चित्साध्यमर्थं प्रतिज्ञाय स्थापयति, परखण्डनेनैव स्वपक्षे विजयाऽऽख्येऽर्थात् सिद्धे, स्वजयस्याऽऽनुषंगिकतयेष्टत्वात् प्रवृत्तिः। प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डा १ 'आत्मा स्वर्गयोग्यतावान् धर्मित्वात्, तत्र २—आत्मैव नास्ति, अस्ति चेन् स्वर्गं नास्ति, तदस्ति चेन्, कर्मणां धर्मत्वमनुपपन्नम्, अपादस्य स्वर्गगामित्वं न संभवति, कर्मिणो नारकित्वयोग्यत्वेन स्वर्गयोग्यत्वहानिः। अस्त्वात्मा विपर्ययविषयः सुखयोग्यत्वात् धर्मकर्मवत्त्वाच्छरीरमात्मा, शून्यं वाऽऽत्मा, न तु तवाऽभिमतः, अन्यस्तु यथाकथञ्चित्स्वरूपो वाऽस्वरूपोऽस्तु. तव तु मास्त्वित्यादिरूपा वितण्डा ·विरुद्धं व तण्डा तुण्डवादनात्मिका कुकथा वितण्डा। क्वचिद् वैतण्डिकेषु विज्ञप्रामाणिकैरपि वितण्डा प्रयोक्तव्या भवति, अतः कथात्वेन स्वीकरणम् ॥ ४३४ ॥

**छलं त्वर्थविकल्पोपपत्त्या वाचोविघातकम्।**
**वाक्छलं जातिच्छलं चोपचारच्छलमित्यपि ॥४३५॥**

वाद्यभिमतार्थतो विरुद्धार्थान्तरकल्पनेन वाद्युक्तवचनस्य विघातो दूषणम्, वक्तृतात्पर्याऽविषयार्थकत्वं विशेष्ये विशेषणे संसर्गे वा कल्प्यते। 'अयं नेपालादागतो नवकम्बलवत्त्वादि' ति नवीनार्थमपन्हूय नवसंख्यार्थकल्पनेन हेत्वसिद्धिः। 'सर्वं प्रमेयं धर्मत्वादि'-तिपुण्यार्थकल्पनया भागाऽसिद्धिः। 'वह्निमान्धूमादि'-ति धूमावयवे व्यभिचारः॥ अनेकशक्यार्थेऽविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना **वाक्छलम्**—नवकम्बलवानित्यत्र नवीनार्थं विहाय नाऽस्य नवसंख्याकाः कम्बला इत्यर्थान्तरकल्पनमिति वाचि छलं हेत्वसिद्धिः। सामान्याऽनेकार्थाऽवलम्बनकं विशेषार्थाऽनवधृतं मिथ्याभियोगमात्रमसिद्धिः। गौर्विषाणीत्युक्ते कुतो बाणस्य विषाणमिति। गजो विषाणीत्युक्ते कुतो गजस्य शृंगमिति। 'श्वेतो धावती'-त्युक्ते श्वेतं शुक्लामर्थं त्यक्त्वा 'श्वा इतो न धावती'-तिकल्पनम् ॥ सम्भवतोऽर्थस्याऽतिसामान्ययोगादसम्भूतार्थकल्पनं **सामान्यच्छलम्**—'ब्राह्मणो विद्याऽऽचरणसम्पन्न' इत्युक्ते ब्राह्मणत्ववत्त्वेन व्रात्योऽपि चाऽस्तु विद्याऽऽचरणसम्पन्न इति ब्राह्मणत्वं विद्याऽऽचरणाभावपति व्यभिचरितम् ॥ अत्र प्रत्युत्तरं 'प्रशंसावाक्यं तत्, न तु तादृशसम्पद्व्याप्यं हेतुवाक्यं तत्, किन्तु विद्याऽऽचरणसम्पद्योग्यतावत्तया ब्राह्मणत्वं प्रशस्यते, न तु ब्राह्मणत्वेन सम्पत्साध्यते, तथा च न व्यभिचारप्रसञ्जनम्। न वचनविघातः, योग्यतायां तात्पर्ये वा न दूषणम्। नाऽसम्भूतार्थकल्पनोपपत्तिरिति ॥ धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेधः—**उपचारच्छलम्** मञ्चाः क्रोशन्तीत्यत्र क्रोशनधर्मस्य भक्त्या प्रयुक्तस्य शक्त्या कल्पनेन अतद्भावे तद्वदभिधातेन मुख्योपचारेण प्रतिषेधनं 'न मञ्चाः क्रोशन्ति, किन्तु मञ्चस्थाः पुरुषाः क्रोशन्तीति' अर्थसद्भावप्रतिषेध उपचारच्छलम्, 'नीलो घट' इति कथं नीलाऽभिन्नघटः, 'अहं नित्य' इति कथं त्वमुत्पन्नो नित्य इति शक्तिलक्षणयोरेकतरवृत्त्या प्रयोगेऽपरवृत्त्या प्रतिषेधश्छलम्। छलमसदुत्तरम्। लाक्षणिकप्रयोगे वाहिनो नाऽपराधः वाक्छलेऽर्थान्तरकल्पना। उपचारच्छलेऽर्थसद्भावप्रतिषेधः ॥ ४३५ ॥

**जातिः साधर्म्यवैधर्म्यप्रत्यवस्थानदूषणम्।**
**निजव्याघातकमेतदुत्तरं घातितात्मकम् ॥४३६॥**
**व्याप्त्यनपेक्षकं प्रासं चैतच्चतुर्विंशतिधा मतम्।**
**हेतौ चाऽयं प्रतिषेधः प्रत्यनीकतयोत्थितः ॥४३७॥**

जातिः सामान्योऽवच्छेदको धर्मस्तद्विकल्पैः प्रयोगेषु परेष्टविपरीततया प्रतिषेधहेतवश्चतुर्विंशतिसंख्याः कल्पिताः प्रयोगतघातका घाता दोषाः।

साधर्म्यवैधर्म्योत्कर्षाऽपकर्षवर्ण्याऽवर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसंगप्रतिदृष्टान्ताऽनुत्पत्तिसंशयप्रकरणाऽहेत्वार्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्याऽनित्यकार्यसमाश्चतुर्विंशतिः। समशब्दः तैः समाः साध्यसमादयः कार्यसमान्ताः; समीकरणार्थं प्रयोगः।

समीकरणोद्देश्यकप्रयोगः। साधर्म्यं समं व्याप्तिरेकेणाऽधिकेति तादृशी कल्पना, तथाविधाः प्रतिषेधाः। स्थापनासु सत्यास्वपि प्रतिषेधाः कल्पिता अन्ततो निवेशप्रवेशादिभिर्निरासाऽर्हाश्च।

वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना साध्याभावादिप्रतिपादनं १—**साधर्म्यसमा,** शब्दः अनित्यः कृतकत्वात् घटवत्, व्यतिरेकेण वा व्योमवत्,—इतिस्थापनायामुत्तरम्, नैतदेवम्, यदि घटसाधर्म्यादाकाशवैधर्म्यादनित्यः, तर्हि आकाशमात्रसाधर्म्याद् अमूर्तत्वाच्च नित्य एव स्यात्, अन्यहेतुर्वा वक्तव्यः॥ अथ २–**वैधर्म्येण समा**-शब्दः अनित्यः कृतकत्वात् घटवत् आकाशवद्वेति स्थापनायाम् अनित्यघटवैधर्म्यात् अमूर्तत्वान्नित्यः स्यात्, विशेषहेतुर्वा वक्तव्य इति। अत्रोभयत्र सत्प्रतिपक्षदेशनाऽऽभासः। अत्रोत्तरं—व्याप्तिपक्षधर्मतासहितात्कृतकत्वादनित्यत्वसिद्धिः,न तु साधर्म्यमात्राद् वैधर्म्यमात्राद्वा, तथा सति तु प्रमेयत्वात् त्वद्वचनं सर्वथाऽदूषकं स्यादित्ययं विशेषः प्रत्युत्तररूपः॥ साध्यदृष्टान्तयोर्धर्मविकल्पाद् उभयसाध्यत्वाच्च ३, ८, उत्कर्षसमाऽपकर्षसमवर्ण्यसमाऽवर्ण्यसमविकल्पसमसाध्यसमाः षट् जात्युत्तराणि। अविद्यमानधर्मारोप उत्कर्षः, विद्यमानधर्मापचयोऽपकर्षः, वर्ण्यत्वं सन्दिग्धसाध्यकत्वादिः, अवर्ण्यत्वम्—असन्दिग्धसाध्यकत्वादिः, विकल्पो धर्मव्यभिचारित्वादिः, साध्यसमः—साध्यनिश्चयादिः, एतैः प्रतिषेधः स्थापनायाः।

तत्र ३—उत्कर्षसमा, साध्ये पक्षे, दृष्टान्ते सपक्षे, साध्ये साधने चापि धर्मस्य सहचरितस्याऽन्यस्य गुणादेरपि आपादनेन प्रतिषेधः स्थापनायाः, तथाहि 'शब्दः अनित्यः कृतकत्वाद् घटवत्' इतिस्थापनायां, साध्यं साधनं च घटे रूपसहचरितमिति शब्दोऽपि रूपवान् स्यात्, अर्थान्तरदोषः। एवं कृतकत्वसहितं सहचरितं श्रावणत्वं शब्दे इव घटेऽपि स्यादित्यप्यर्थान्तरं दूषणम्। शब्दे रूपमविद्यमानधर्मस्तस्याऽऽरोपः। घटे श्रावणत्वमविद्यमानधर्मस्तस्याऽऽरोपः॥ व्याप्तिमपुरस्कृतस्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेणाऽविद्यमानधर्मप्रसञ्जनमत्र, अतो विशेषविरुद्धोऽपि हेतुर्भवति॥ अथ—४—**अपकर्षसमा,** साध्यसाधनाऽन्यतरस्याऽभावप्रसञ्जनम्–अपकर्षः, पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माऽभावेन हेतुसाध्यान्यतराऽभावप्रसञ्जनम् अपकर्षसमा,—शब्दः अनित्यः कृतकत्वाद् घटवदित्यत्र यदाऽनित्यत्वसहचरितघटधर्मात् अनित्यः शब्दस्तदा कृतकत्वाऽनित्यत्वसहचरितघटधर्मरूपवत्त्वाऽभावेन शब्देऽपि कृतकत्वाऽनित्यत्वाऽभावः स्यात्, तथा च कृतकत्वस्याऽसिद्धिः अनित्यत्वस्य च बाधः। एवं शब्दस्थं कृतकत्वसहचरितश्रावणत्वं घटाद्व्यावर्तमानं सत् अनित्यत्वं कृतकत्वं च व्यावर्तयेत्, संयोगादौ अनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्यां घटेऽनित्यत्वं कृतकत्वं च व्यावर्तेतेति दृष्टान्ते साध्यसाधनवैकल्यमिति दृष्टान्ताऽसिद्धिः॥ अथ ५—**साध्यस्य वर्ण्यस्य समा**—'शब्दः अनित्यः कृतकत्वाद् घटवत्। इत्यत्र–साध्यः–सिद्ध्यभाववान् सन्दिग्धसाध्यकादिः, तस्य धर्मः सन्दिग्धसाध्यकादिवृत्तिर्हेतुः, तस्य विकल्पात्–सत्त्वापादनात् दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्याऽऽपादनं **वर्ण्यसमा**–पक्षवृत्तिहेतुर्हि गमकः, पक्षश्च सन्दिग्धसाध्यकः, सन्दिग्धसाध्यकवृत्तिहेतुस्त्वया दृष्टान्तेऽपि स्वीकार्यः तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात् सपक्षवृत्तित्वाऽनिश्चयात् असाधारणव्यभिचारी हेतुरिति। हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते तदा गमकहेत्वभावात् साधनविकलो दृष्टान्तो दृष्टान्ताऽसिद्धिः॥ अथ ६—**अवर्ण्यसमा**–दृष्टान्ते सिद्धसाध्यके यो धर्मो हेतुस्तस्य सत्त्वनिश्चयात् पक्षेऽपि शब्दादौ असन्दिग्धसाध्यकत्वापादनम्, सिद्धसाधनदोषः। यदि सिद्धसाध्यगमकहेतुर्न पक्षे तदा स्वरूपाऽसिद्धिः सन्दिग्धसाध्यकपक्षत्वाऽभावादाश्रयाऽसिद्धिश्च॥ अथ–७—**विकल्पसमा,** पक्षे दृष्टान्ते च यो धर्मो हेतुस्तस्य विरुद्धः कल्पो व्यभिचारित्वं कल्प्यते शब्दः अनित्यः कृतकत्वादित्यत्र कृतकत्वं शब्दे गुरुत्वव्यभिचारि गुरुत्वं पृथिवीजलपरमाणुषु अनित्यत्वव्यभिचारि, अनित्यत्वं गुणादौ मूर्तत्वव्यभिचारि, तथा च धर्मत्वाऽविशेषात् कृतकत्वम् अनित्यत्वव्यभिचारि स्यादिति अनैकान्तिकतादूषणम्॥ अथ ८—**साध्यसमा** पक्षदृष्टान्तादेः प्रकृतसाध्यवत्साध्यत्वापादनं,

यथा एतत्प्रयोगसाध्यस्यैवाऽनुमितिविषयत्वम्, पक्षादेरप्यनुमितिविषयत्वात् साध्यवत् पक्षप्रयोगस्य साध्यत्वम्, शब्दः पक्षः पूर्वं सिद्धश्चेत् एतत्प्रयोगसाध्यत्वाऽभावात् नानुमितिविषयत्वम्, प्रयोगाऽसंभवो बाधः, पूर्वमसिद्धश्चेत् पक्षादेरज्ञानात् आश्रयासिद्धिः एतेषां षण्णामुत्तरं तु—किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः इति। व्याप्तिसहितात्साधर्म्यविशेषात् उपसंहारस्य साध्यस्य सिद्धेः, तद्विपरीताद् व्याप्तिनिरपेक्षात् साधर्म्यमात्राद् वैधर्म्याच्च त्वत्कृतः प्रतिषेधो न संभवतीति। अन्यथा प्रमेयत्वरूपाऽसाधकसाधर्म्यात् सर्वं दूषणम् असम्यक् स्यात्। अनित्यत्वव्याप्यात्कृतकत्वात् शब्देऽनित्यत्वोपसंहारः, न कृतकत्वं रूपव्याप्यम्, येन रूपं शब्दे आपाद्यं स्यात्, अपकर्षस्थलेऽनित्यत्वं न रूपव्याप्यं येन रूपाऽभावादनित्यत्वाऽभावः शब्दे स्यात्। वर्ण्यसमेऽपि किञ्चित्साधर्म्यात् व्याप्यतावच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः, तादृशहेतुमत्त्वं च दृष्टान्तताप्रयोजकं, न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुस्तावदवच्छिन्नहेतुमत्त्वम्, अन्यथा त्वयाऽपि दूषणे यो दृष्टान्तीकर्तव्यः सोऽपि न स्यात्। 'अयं हेतुः असाधारणः सपक्षवृत्तित्वाऽनिश्चयात् शब्दत्ववत्' अत्र दृष्टान्तं शब्दत्वं सपक्षवृत्तित्वनिश्चयाऽभावरूपो हेतुः यावद्विशेषणान्तर्गतसन्दिग्धसाध्यकवृत्तित्वविशिष्टहेतुः दृष्टान्ते न तिष्ठति, असाधारणदुष्टः, अतो न साधकः स्यात्। अवर्ण्यसमे व्याप्यतावच्छेदकावच्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात् साध्यसिद्धिः, न तु दृष्टान्तवृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्वम्॥ एवं विकल्पसमेऽपि—प्रकृतसाध्यव्याप्यात्प्रकृतहेतोः साध्यसिद्धिः, तद्वैधर्म्यात् यत्किञ्चिद्व्यभिचाराद् कृतः प्रतिषेधो न संभवति, नहि अन्येन सह यत्किञ्चिद्व्यभिचारात् प्रकृतहेतोः प्रकृतसाध्यसाधकत्वम्, अनुमानोच्छेदप्रसंगात्॥ एवं **साध्यसमेपि** व्याप्यत्वाद्धेतोः सिद्धे पक्षे साध्यसिद्धिः, न तु पक्षदृष्टान्तादयोऽप्यनेन साध्यन्ते, तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात्, त्वदीयं दूषणमपि विलीयेत, अयं हेतुराश्रयाऽसिद्धः पक्षाऽसिद्धत्वादित्यत्रापि तव पक्षसाधने पक्षाऽसिद्धित्वेन हेतुना 'अयं हेतुरि'ति पक्षो दृष्ट एव न स्यात्॥ सन्दिग्धसाध्यवत्त्वादिधर्मो दृष्टान्ते न साध्यते किन्त्वतिदिश्यते, अनुमानमात्रोच्छेदप्रसंगात्॥ अथ ९-१०—**प्राप्त्यप्राप्तिसमौ**, साध्यं प्राप्याऽप्राप्य वा हेतोः साधकत्वे प्राप्त्याऽविशिष्टत्वाद् अप्राप्त्याऽसाधकत्वाच्च। एकक्षणे सह सम्बद्धाभ्यां प्राप्त्यप्राप्तिभ्यां दूषणम्। द्वयोः साध्यहेत्वोः सह प्राप्त्यैव साध्यत्वसाधनत्वं त्वनुपपद्यते, तत्र किं कस्य साधकं किं कस्य साध्यमिति **प्राप्तिसमा**। कार्यकारणभावहानिः॥ अथ साध्यम् अप्राप्त एव वियुक्तो हेतुः साध्यं साधयेत्, तदा तु सर्वमप्राप्यं संसारम् अप्राप्त एव सः साधयेत् अतिप्रसंग आपद्येतेति **अप्राप्तिसमा**, ज्ञाप्यज्ञापकभावस्याऽपि हानिः। समप्राप्तयोर्न जन्यजनकभावः, विषमाऽप्राप्तयोर्न ज्ञाप्यज्ञापकभावोऽपि। अप्राप्तं लिंगं साध्यबुद्धिं जनयेच्चे[illegible]ध्याभावबुद्धिं किं न जनयेत्, अनिष्टापा[illegible] प्रतिकूलतर्कदेशनाभासे चेमे॥ अनयोरुत्तरम्—न हि कारणं कार्येण प्रागेव प्राप्तं सम्बद्धं च क्वापि दृष्टम्, अतो न समक्षणकृताऽनिष्टता, न वाऽसम्बद्धं साधयेत्, अपि तु व्याप्त्यादिना सम्बद्धमेव साधयेत् अतो न सर्वोत्पादक[illegible]प्रसंगोऽपि। सर्वप्रमाणसिद्धकार्यकारणभावोच्छेदे तु तव हेतुरपि 'हेतुर्न साध्यसाधकः प्राप्यकारित्वाऽशक्तत्वात् अप्राप्यकारित्वाति प्रसंगात्' इतिप्रयोगे तव हेतुरपि 'साध्यसाधकत्वाऽभावस्य—साध्यस्यापि न स्यात्साधकः, तव देशनापि निरस्तेति॥ अथ—११, १२—**प्रसंगप्रतिदृष्टान्तसमौ**—साधनस्यापि साधनं वक्तव्यमिति प्रसंगेन प्रतिषेधः। हेत्वसिद्धिः। तत्रापि हेत्वन्तरमित्याद्यनवस्था च। अथ दृष्टान्ते दृष्टान्तान्तरं तत्र दष्टान्तान्तरमित्यनवस्था। यद्वा एकघटदृष्टान्तेनाऽनित्यः। शब्दस्तर्ह्याकाशदृष्टान्तेन नित्यो वा किं न स्यात्, विनिगमकाऽभावात्, बाधः सत्प्रतिपक्षो वाऽत्र देशने॥ अनयोरुत्तरम्—साध्यार्थं साधनं व्याप्तं सिद्धमेवेति न तदर्थं साधनान्तरापेक्षा। आशंकानिवृत्त्यर्थं तु कार्यकारणभावो ज्ञाप्यज्ञापकभावो नियत एवेति नानवस्था, किञ्च दृष्टान्तो लौकिकपरीक्षितबुद्धिनिश्चित एवेति न तत्र प्रतिदृष्टान्ताऽपेक्षा न वा विरुद्धदृष्टान्तसंभावना व्याप्तिपक्षधर्मतादिविरहात्। अतः प्रतिदष्टान्तो न साधकः॥ आकाशात्मकप्रति-

दृष्टान्तेनापि मदीयदृष्टान्तो न दुर्बलः, द्वयोः समबलत्वे न बाधः, न वा प्रतिदृष्टान्तो बलवान्, मम दृष्टान्तस्याऽधिकबलवत्त्वेन प्रतिदृष्टान्तः पराहतश्चेति ॥ सबलहेतौ हेत्वन्तराऽनपेक्षणान्नानवस्थापि । सुव्यवस्थानात् ॥ अथ १३ **अनुत्पत्तिसमः** साधनांगानां पक्षहेतुदृष्टान्तानाम् उत्पत्तेः प्राग् हेत्वभावादेवाऽसिद्धिर्हेत्वसिद्धिः । घटो रूपवान् गन्धात् पटवत् इत्यत्र घटोत्पत्तेः पटोत्पत्तेश्च पूर्वं गन्धाऽभावे न हेत्वसिद्धिः पटेऽपि तथा दृष्टान्ताऽसिद्धिः, आद्यक्षणे रूपाऽभावाद्बाधः ॥ अस्योत्तरम्–अनुत्पन्नेऽधिकरणाऽसत्त्वे हेत्वभावसंभव एव नास्तीति नाऽसिद्धिः कल्पनीया, साधनकाले हेपोरपेक्षणात्, नान्यदेति ॥ अथ १४—**संशयसमः**, नित्यत्वाऽनित्यत्वादिकारणवलात् संशयोद्भावनम्, यथा शब्दोऽनित्यः कार्यत्वात् घटवदित्युक्ते घटे इव घटत्वेऽपि ऐन्द्रियकत्वं तुल्यं, तेन कार्यत्वेनैन्द्रिकत्वेन चाऽनित्यत्वं सन्दिह्यताम्, शब्दत्वाद्यसाधारणधर्मदर्शनजन्यसंशयेन हेतुज्ञानेऽप्रामाण्यशंकया सत्प्रतिपक्षदेशनाभासेयम् ॥ अस्योत्तरम्—वैधर्म्यस्याऽवधारणादेव साधर्म्यान्न संशयः, यदि कार्यत्वविशेषदर्शनेऽपि संशयस्तदा सदा संशयापत्तिः,तव घटत्वमपि प्रमेयत्वेन नित्यत्वसन्दिग्धं स्यात् परपक्षप्रतिषेधकं न स्यात् ॥ अथ १५ **प्रकरणसमः**, अन्वयेन व्यतिरेकेण वा सहचारेण विपरीतसाधनम् आरोपितप्रमाणत्वेन बाधेन प्रकरणसमतोद्भावनम्, शब्दोऽनित्यः कृतकत्वात् नित्यस्तु श्रावणत्वात् सत्प्रतिपक्षः॥अस्योत्तरम्–पूर्वं साधितस्य बलवत्त्वात्। किञ्चसत्प्रतिपक्षता प्रतिपक्षाद्भवति, त्वया मम पक्षं प्रतिपक्षं कृत्वा खण्डयते प्रतिपक्षखण्डने प्रतिपक्षाऽधीना प्रकरणसमताऽपि खण्डिता भवतीति त्वत्कृतसत्प्रतिपक्षताऽनुपपत्तिरेवेति ॥ अथ १६–**अहेतुसमः**, हेतुः साध्यात्पूर्वोऽसति साध्ये त्वसाधकः । पश्चिमस्तु कस्य साध्यस्य साधकः, असाधकः स्यात् । युगपत्त्वे द्वयोरविशेषात् किं कस्य साधनं साध्यं वेत्यनिर्णयः । त्रैकाल्याऽसिद्धिः, दूषणम् ॥ अस्योत्तरम्—पूर्ववृत्तितामात्रेण हेतुत्वस्य साध्यसिद्धेश्च त्वयाऽप्यंगीकारात्, अन्यथा तव हेतुरहेतुस्त्रैकाल्याऽसिद्धे' रिति प्रयोगेऽपि हेतोस्तव विकल्पैरेव त्रैकाल्याऽसिद्धिमत्त्वेन अहेतुत्वसाधकत्वं नोपपद्यते । हेतुफलभावादिखण्डनं तव प्रयोगोऽपि समानमिति । तव यदि साधकं, ममापि तर्हि साधकम् ॥ अथ–१७—**अर्थापत्तिसमः**,—कृतकत्वेनाऽनित्यत्वेऽपि शब्दोऽस्पर्शत्वेन नित्यत्वमपि स्यात् । अर्थापत्तिः उक्तेन अनुक्तमप्याक्षिपति । शब्दोऽनित्य इत्युक्तेऽन्यन्नित्यमित्याक्षेपः । तेन दृष्टान्तासिद्धिर्विरोधश्च । प्रत्यक्षात् अन्यस्माद्धेतोर्बाधः सत्प्रतिपक्षो वा ॥ अस्योत्तरम्—अनुक्तमर्थापत्त्याऽऽपद्यते चेत् त्वयाऽनुक्तो मम प्रयोगोऽपि आपन्न एवेति त्वन्निषेधो निरर्थकः, तवाऽर्थापत्तिर्निर्बला, नहि अनित्यस्योपपादकं नित्यत्वं, नहि नीलो घट इत्युक्तेऽन्यत्सर्वमनीलमिति । अन्यथा तवापि अर्थापत्तिरित्युक्तेऽन्यत्सर्वमनर्थापत्तिरूपं मम तवाऽर्थापत्तेरविषयमिति तवाऽर्थापत्तिरेव व्यभिचरितेति न बाधः सत्प्रतिपक्षो वा ॥ अथ—१८–**अविशेषसमः**–शब्दे घटे च कृतकत्वसत्त्वेऽनित्यत्वोपपादने सत्ताप्रमेयत्वादिना सर्वेषामनित्यत्वे जात्यादिविलयः स्यादिति सर्वाऽविशेषो दोषः ॥ अवान्तरजात्युच्छेदः, पक्षसाध्याद्यविभागोऽपि दोषः; पतिकूलतर्कदेशनेयम् ॥ अस्योत्तरम्—तव 'सर्वम् अजातिकम् अविशेषात्' इत्युपपादनेऽपि अविशेषहेतोर्जातिकसाध्यस्यापि सर्वान्तर्गतत्वेन सामान्योपपत्तेरजातिकत्वविलयः पक्षसाध्याद्यविभागविलय इति मम स्थापना सबलाऽविचाल्या सिद्ध्यति । त्वदुक्तं तव प्रयोगमेवाविषयतीति प्रतिषेधोऽपि अविशेषः सन्निरर्थको भवति । व्याप्त्यादेः कृतकत्वे सत्त्वात् सत्ताप्रमेयत्यादौ व्याप्त्यसत्त्वात् त्वदुक्तप्रतिषेधाऽसंभवः ॥ अथ-१९–**उपपत्तिसमः**,-शब्देऽनित्यत्वसाधकं कृतकत्वं तर्हि नित्यत्वसाधकं श्रावणत्वमपि चोपपद्येत 'अनित्यत्वपक्षः प्रमाणं त्वत्पक्षत्वात्' तर्हि 'नित्यत्वपक्षोऽपि प्रमाणं त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत् । तथाच बाधो विरोधो वा, । अस्योत्तरम्–मत्पक्षप्रमाणस्य त्वया दृष्टान्तीकरणेन सप्रमाणत्वमंगीकृतमिति अनुज्ञातस्य प्रतिषेधः कर्तुमशक्यस्तथा च त्वत्पक्ष एव प्रतिषिद्धः, समानो वा व्याघातः, अव्याघाते ममैवोभयमतसिद्धो व्याप्त्यादिबलवांश्चेति ॥ अथ–२१–**उपलब्धिसमः**,—कृतकत्वं

विनापि ध्वंसेन भंगेन विभागेनाऽनित्यत्वं भवतीति कृतकत्वहेतुः सर्वत्र भागे व्यभिचरितः, धूमं विनाऽऽलोकेनाऽपि वह्निसिद्धेर्धूमो भागे व्यभिचरितः। धूमेन द्रव्यत्वादेरपि साधनान्न वह्निमात्रस्य साधनं धूमः, असाधकत्वापत्तिरपि। भागेषु पर्वतोऽपि वह्निशून्यो भवतीति बाधश्च। अस्योत्तरम्—सन्दिग्धस्य सिद्धयर्थं हेतुप्रयोगः, यत्र व्याप्त्यादिः स एव हेतुर्व्याप्यो ज्ञातः, नाऽन्यः, अन्यदा यदा व्याप्यतया ज्ञातस्तदा सोऽपि साधकः, न तु व्यभिचारापादकः, व्याप्तिसत्त्वेन साध्यसाधकः, न तु स व्याप्तिशून्यो बाधाऽऽपादकः। अन्यथा तथा सति तव प्रयोगोऽपि बाधित एव मम स्थापनां खण्डयितुमसमर्थ एव स्यात्। तवाऽपि असाधकतायां साधनं प्रयुक्तं तदपि साधनान्तरेण मत्साधनवत् असाधकं स्यात्, तेन मम साधनं तव साधनाऽगोचरं बलवत् न व्यभिचारबाधादिदुष्टमिति ॥ अथ–२१–**अनुपलब्धिसमः,**—शब्दोऽनित्यः। यदि तु नित्यः स्यात् उच्चारणात्प्राक् कुतो नोपलभ्यते, नहि शब्दस्याऽऽवरणमस्ति। अत्र जातिवादी प्राह—यदि आवरणाऽनुपलब्धेरावणाऽभावः सिद्धयति तदाऽऽवरणाऽनुपलब्धेरप्यनुपलम्भात् आवरणोपपत्तिः स्यात् अतो नित्योऽपि आवरणान्नोपलभ्यते तथा च नित्य एव, तर्कस्तु न बाधकः॥ अस्योत्तरम्—अनुपलब्धिः–उपलब्ध्यभावः, अभावपदार्थो निर्विषयकः, आवरणानुपलब्ध्यनुपलम्भोऽपि स्वविषयामनुपलब्धिं साधयमानो न तां निषेधति, अप्रतिषिद्धा आवरणाऽनुपलब्धिर्हेतुत्वाय कल्पते, तथा च तवाऽनुपलम्भात् अनुपलब्धिः सिद्धयति, आवरणानुपलब्धावपि शब्दो न श्रूयतेऽतोऽनित्य इति। तव तु—अनुपलब्धिर्यदि अनुपलब्धित्वं जह्यात् तदाऽऽवरणाऽनुपलब्ध्यनुपलम्भेनापि आवरणस्याऽनुपलब्धिरनुपलब्धित्वं जह्यात् तदा त्वदभीष्टं साधकत्वमेव जह्यात्, असाधिका तव देशना प्रतिषेधसाधिकाऽपि न स्यात्। तथा च प्रतिषेधाऽसिद्धिः, अनित्यत्वस्याऽप्रतिषेध इति ॥ अथ–२२–**अनित्यसमः,**–यदि वर्तमानकृतकत्वसाधर्म्येण शब्देऽनित्यत्वं तर्हि वर्तमानत्वसाधर्म्येण आत्मन्यपि अनित्यत्वं सर्वस्याप्यनित्यत्वं स्यादिति व्यतिरेकग्रहप्रतिबन्धापत्तिः। अस्योत्तरम्—वर्तमानत्ववत् प्रतिषेध्यत्वेन धर्मेण तव प्रयोगस्यापि प्रतिषेध्यत्वापत्तौ प्रतिषेधकत्वहानेः ममाऽप्रतिषेध्यं स्यादेवेति। त्वत्कृतप्रतिषेधाऽसिद्धिः॥ व्याप्त्यादिमता साधनेन साध्यसिद्धिर्न तु तदन्यधर्मेण साध्यसिद्धिर्वा देशनासिद्धिरिति ॥ अथ–२३–**नित्यसमः,**–अनित्यत्वं धर्मो यदि नित्यस्तदा तदाश्रयः शब्दोऽपि नित्यः स्यादिति बाधः सत्प्रतिपक्षो वा दोषः। अस्योत्तरम्—प्रत्यक्षाऽनित्यपदार्थेऽनित्यत्वधर्मस्याऽपि पदार्थाधीनसत्त्वप्रामाणिकतया विकल्पप्रश्नाऽनुत्थानात्, अनित्यत्वस्य नित्यत्वकल्पने व्याघातात्, प्रतिषेधाऽनर्हत्वादेव न बाधः न सत्प्रतिपक्षो वा अन्यथा तव नित्यत्वं नित्यं न वेति विकल्पेनाऽनित्यं स्यादाश्रयमनित्यं साधयेच्चेति ॥ अथ–२४–**कार्यसमः'**–शब्दोऽनित्यः प्रयत्ननान्तरीयकत्वात्। इत्यत्र प्रयत्ननान्तरीयकत्वस्य योगप्रयत्ननान्तरीयकत्वस्य आत्मलाभेऽपि परमाणुलाभेऽपि स्यात् अनित्यत्वापत्तिश्च स्यात्। असिद्धिदोषः। अस्योत्तरम्—तवापि प्रयत्नाऽनान्तरीयकत्वे मेघादौ निद्रादौ नित्यत्वापत्तिः स्यात्। अन्यथा व्याप्त्या साधने असिद्धिकल्पनाया असंभव एव। किञ्च प्रयत्ननान्तरीयकत्वं न शब्देऽनित्यत्वं साधयति अनैकान्तिकत्वादिति तव प्रयोगेऽपि प्रयत्नाभिव्यंग्यत्वस्य अनैकान्तिकहेतोस्तव साधनस्य अनित्यत्वसाधनत्वाभावस्य तव साध्यस्याऽप्यसाधकत्वादिति ॥ ४३६-४३७ ॥

**उद्देश्यानुगुणसम्यक्ज्ञानाऽनर्हत्वलिंगता।**
**प्रतिषिद्धाऽनुद्धतिर्या पराजयफलान्यपि ॥४३८॥**
**खलीकारस्थलीरूपा स्थापनाऽऽरम्भयोगिनी।**
**अनिष्टापादिकाऽज्ञप्तिर्दुर्ज्ञप्तिर्निग्रहाऽभिधा ॥४३९॥**

आरम्भे एवाऽज्ञप्त्या विरुद्धज्ञप्त्या वा स्थापनावादिनः पराजयकारणं निग्रहस्थानम्, परप्रयुक्तो विकल्पे स्वाऽज्ञानेन विपरीतज्ञानेन वा विकल्पोद्धाराऽसामर्थ्ये विप्रतिपद्यमानस्य स्वस्य खलीभावो निग्रहभावः पराजयो वा फलं स्यादिति स्वस्थापनायां सम्यक्ज्ञानाऽभावलिंगरूपो निग्रहस्थल्यो ज्ञातव्या उद्धारार्थं च यतितव्यमिति तानि निग्रहस्थानानि विकल्पबहुत्वाद् बहूनि भवन्त्यपि एकविंशतिर्मुख्यानि ज्ञातव्यनि ॥ तानि—१—प्रतिज्ञाहानिः,

२—प्रतिज्ञान्तरम्, ३—प्रतिज्ञाविरोधः, ४—प्रतिज्ञासन्न्यासः, ५—हेत्वन्तरम्, ६—अर्थान्तरम्, ७—निरर्थकम्, ८—अविज्ञातार्थम्, ९—अपार्थकम्, १०—अप्राप्तकालम्, ११—न्यूनम्, १२—अधिकम्, १३—पुनरुक्तम्, १४—अननुभाषणम्, १५—अज्ञानम्, १६-अप्रतिभा, १७—विक्षेपः, १८—मतानुज्ञा, १९—पर्यनुयोज्योपेक्षणम्, २०—निरनुयोज्यानुयोगः, २१—अपसिद्धान्तश्चेति। दृष्टान्ते साधनवैकल्यादयश्चापि ॥

निग्रहस्थानानां जातीनामिवाऽसाधकतासाधारण्येन पराऽसाधकतासाधकतया स्वपरव्याघातकत्वादसदुत्तरत्वम्, न तु असाधकतासाधकत्वेन हेत्वाभासानामिव सदुत्तरत्वम्। ततः पराजयफलकानि ज्ञातव्यानि। तत्र—

१—**प्रतिज्ञाहानिः**,—शब्दोऽनित्यः कृतकत्वाद् घटवदितिस्थापनायां शब्दः प्राचीनः स एवाऽयमिति-प्रत्यभिज्ञया कृतकत्वं बाधितं तर्हि भवतु घटः पक्ष इति पक्षत्यागः। ऐन्द्रियकत्वे हेतौ अनैकान्तिकत्वं जाताविति अस्तु तर्हि कृतकत्वं हेतुरिति हेतुत्यागः, पर्वतो वह्निमान् धूमात् अयोगोलकवदित्युक्ते दृष्टान्ताऽसिद्धौ प्रयुक्तायाम् अस्तु तर्हि महानसवदिति दृष्टान्तत्यागः, वह्नौ सिद्धसाधने प्रयुक्तेऽस्तु। र्हि इन्धनवानिति साध्यत्यागः, नीलधूमादित्युक्ते व्यर्थविशेषणत्वे प्रोक्तेऽस्तु तर्हि धूमादिति हेतुरिति विशेषणत्यागः, एवं सम्बन्धत्यागोऽपीति षड्विधा प्रतिज्ञातहानिः प्रतिज्ञाहानिर्निग्रहस्थानम् ॥ अथ २—**प्रतिज्ञान्तरम्**,—प्रतिज्ञातेऽर्थे दूषिते विशेषणयोजने तु प्रतिज्ञान्तरं दूषणं, शब्दः नित्यः प्रत्यभिज्ञानादितिस्थापनायां ध्वनौ बाधे प्रयुक्ते वर्णशब्दः पक्ष इति प्रतिज्ञान्तरम्। पृथिवी गुणजन्या कृतकत्वादित्युक्ते धर्माधर्मजन्यत्वेन सिद्धसाधने समुद्भाविते सविषयकगुणजन्योति साध्यान्तरम्। एवमुदाहरणान्तरम् उपनयान्तरम् निगमनान्तरं प्रतिज्ञान्तरत्वेन संगृहीतानि भवन्ति ॥ अथ—3-**प्रतिज्ञाविरोधः**,—प्रतिज्ञाहेत्वोर्विरोधः, घटो गुणभिन्नःरूपादितः पृथक्तयाऽनुपलम्भादित्यत्र साध्यप्रतिद्वन्द्विहेतुकथनम् ॥ अथ ४—**प्रतिज्ञासन्न्यासः**—शब्दः अनित्यः इन्द्रियग्राह्यत्वादित्युक्ते परेण जातौ व्यभिचारे उद्भावितेप्रतिज्ञां त्यजति—'नाऽहं वदामि शब्दोऽनित्य इति ॥ अथ ५—**हेत्वन्तरम्**,—शब्दः अनित्यः प्रत्यक्षविषयत्वादित्युक्ते जातौ व्यभिचारोद्भावने जातिमत्प्रत्यक्षविषयत्वादिति हेत्वन्तरानुसरणम् ॥ अथ—६—**अर्थान्तरम्**,—प्रकृताऽनुपयोगिकथनम्, शब्दः अनित्यः कृतकत्वादित्युक्ते तत्र शब्दो गुणो व्योम्नः, आश्रयोऽर्थस्य, जनको व्यवहारस्येत्यादिकथनमर्थान्तरम्॥ अथ—७—**निरर्थकम्**,—अवाचकपदप्रयोगो यथा, शब्दः अनित्यः कखगघत्वादितिं हेतुर्निरर्थक उक्तः ॥ अथ—८—**अविज्ञातार्थम्**,—परिषदा प्रतिवादिना च त्रिरभिहितमपि नाऽर्थो विज्ञायते श्लिष्टद्रुताऽस्फुटोच्चरितं निग्रहस्थानम् ॥ अथ—९—**अपार्थकम्**,—असम्बद्धार्थककथनम्,—दश दाडिमानि षडपूपाः त्रिकुण्डं मृगाजिनमित्यादि ॥ अथ—१०—**अप्राप्तकालम्**,—'तथा चाऽयं', 'पर्वतो वह्निमान्', 'तस्मात्तथा', 'धूमादि'त्येवं कालक्रमं विनोक्तम् ॥ असमये चोक्तमपि तत् ॥ अथ—११—**न्यूनम्**—अन्यतमावयवहीनम्,—'पर्वतो वह्निमान्', 'धूमात्', 'महानसवदि'तिमात्रम् ॥ अथ—१२—अधिकम्,—पर्वतो वह्निमान् धूमात् प्रकाशात् वह्निसंयोगात् इत्याद्यधिकं कथनम् ॥ १३—**पुनरुक्तम्**,—पर्वतो वह्निमान्, पर्वतो वह्निमात्, इत्यादिरूपम् ॥ अथ—१४—**अननुभाषणम्**,—विज्ञातस्य परिषदा त्रिरभिहितस्याऽपि अप्रत्युच्चारणम्। तथाऽननुवदन् कथं परप्रतिषेधं कुर्यात् ॥ अथ—१५—**अज्ञानम्**,—परिषदा विज्ञातार्थस्य प्रतिवादिना त्रिरभिहितस्यापि अविज्ञानं, अविज्ञाता कस्य प्रतिषेधं ब्रूयात् ॥ अथ—१६—**अप्रतिभा**,—परोक्तं बुद्ध्वाऽपि उत्तरं न स्फुरतीति ॥ अथ—१७—विक्षेपः,—कार्यान्तरव्यासंगाय कथाविच्छेदादिः ॥ अथ—१८—**मतानुज्ञा**,—स्वपक्षे दोषमनुद्धृत्य वदति तव मतेऽपि समानो दोष इति स्वमतमिव परमतमपि सदोषमनुजानातीति निग्रहः॥ अथ-१९-**पर्यनुयोज्योपेक्षणम्**,—निग्रहस्थानं प्राप्तस्याऽपि 'त्वं निगृहीत'—इत्यनुद्भावनम्। निग्रहपराभवयोग्ये उपेक्षा ॥ अथ—२०—**निरनुयोज्यानुयोगः**,—अनिग्रहपात्रस्यापि मिथ्यानिगृहीतताकथ-

नमपि कथकं न गृहीतं करोति । अस्थाने दूषणप्रयोगः ।। अथ—२१—अपसिद्धान्तः,—एकसिद्धान्तेन स्थापनायां चान्यसिद्धान्तेनोत्तरदानादि त्वपसिद्धान्त उक्तः ।। एतद्वचाप्यान्यपि निग्रहाणि प्रतिभाभास्यानि समुद्भाव्यानि भवन्ति, तानि कथासूपयोक्तव्यानि शाब्दादावपि कल्पनीयानि ।। ४३८-४३९ ।।

**सिद्धान्तस्तन्त्रगमितः स्वशास्त्रितार्थनिश्चयः ।**
**सर्वतन्त्रप्रतितन्त्राऽधिकृत्यभ्युपगस्थितिः ॥४४०॥**
**सर्वतन्त्राऽविरुद्धोऽर्थस्तन्त्रेऽधिकृत एव यः ।**
**उभयाऽभिगतः सर्वतन्त्रसिद्धान्त ईरितः ॥४४१॥**
**समानतन्त्रसिद्धोऽर्थः परतन्त्रे न साधितः ।**
**एकतरमतः प्रतितन्त्रसिद्धान्त ईरितः ॥४४२॥**
**अन्यप्रकरणसिद्धिर्यत्सिद्धौ जायतेऽर्थतः ।**
**सोऽधिकरणसिद्धान्तो नाऽन्यथा मानतोऽपि सः॥४४३**
**अपरीक्षित एवाऽपि यो विशेषपरीक्षणे ।**
**सिद्धो वै सोऽभ्युपगमसिद्धान्तः कथितोऽस्ति हि॥४४४**

इदमित्थम्भूतमित्यभ्यनुज्ञायमानं यदर्थजातं तस्य सिद्धस्य शास्त्रेण व्यवस्था सिद्धान्तः । कर्णग्राह्यः शब्द इत्यभ्युपगतस्यापि शास्त्रेण गगनगुणः श्रावणप्रत्यक्ष इत्यादिविशेषव्यवस्था सा शास्त्रनिर्णीतसिद्धान्तरूपा । सा चतुर्विधा—१ सर्वतन्त्रसिद्धान्तरूपा, २—प्रतितन्त्रसिद्धान्तरूपा, ३—अधिकरणसिद्धान्तरूपा, ४—अभ्युपगमसिद्धान्तरूपेति च ।। अथ-१—सर्वशास्त्राऽविरुद्धः । एकशास्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः, यथा घ्राणादीनीन्द्रियाणि गन्धाद्या इन्द्रियार्थाः, पृथिव्यादीनि भूतानि, विशिष्टशास्त्रेऽधिकृतानि सर्वेषु शास्त्रेषु तथाविधतयाऽविरुद्धानि, वादिप्रतिवादिभ्यां प्रमाणगृहीतानि सिद्धानि ।। अथ-२—एकतन्त्रसिद्धः परतन्त्वाऽसिद्धः प्रतितन्त्रसिद्धान्तः, वादिप्रतिवादिभ्यामेकतरमात्राभ्युपगतः, यथा—मीमांसकानां शब्दनित्यत्वम् एकतन्त्रसिद्धान्तः, अन्येषां तु शब्दस्याऽनित्यत्वम् । स्वामिनारायणीयानां ब्रह्म च परब्रह्म च भिन्नम्, अन्येषामेकमिति ।। अथ-३—यस्याऽर्थस्य सिद्धौ जायमानायामेव तदन्तर्गता अर्थाः सिद्धचन्ति, सोऽधिकरणसिद्धान्तः, यथाऽन्यप्रमाणाऽसिद्धा अपि मध्ये सिद्धचन्ति 'देहेन्द्रियव्यतिरिक्तात्मा ज्ञाता दर्शनस्पर्शाभ्यामेकार्थग्रहणादि' ति, अत्राऽऽनुषंगिणोऽर्था इन्द्रियनानात्वम् इन्द्रियनियतविषया इत्यपि सिद्धचन्ति तेऽधिकरणसिद्धाः, मीमांसाशास्त्रे वेदान्तशास्त्रे चाधिकरणानि एतत्तात्पर्येण योजितानि ।। अथ-४—सूत्राद्यैरपरीक्षितोऽप्यर्थः, स विशेषपरीक्षणे स्वीकृततयाऽभ्युपेतो भवतीति, सोऽभ्युपगमसिद्धान्तः, यथा न्यायदर्शने षोडशपदार्थेषु परीक्षितेषु तत्राऽपरीक्षितोऽपि मिथः षोडशभेदतयाऽभावोऽपि परीक्षितो भवतीति, वैशेषिकाणां षट्पदार्थानां परीक्षणेऽपि सूत्रेऽभावनिर्देशात् अभावस्वीकृतिरिति । एते प्रमाणिका अर्थाः ।।४४०-४४४।।

**यमर्थं लौकिका बुद्धचन्ते तमर्थं परीक्षकाः ।**
**अपि बुद्धचन्त एषोऽर्थो दृष्टान्तो हि निदर्शनम्॥४४५**

नैसर्गिकं वैनयिकं बुद्धचतिशयमाप्ता लौकिकाः, तर्केण प्रमाणैरर्थपरीक्षणपराः परीक्षकाः, ते यं समानं स्वीकुर्वन्ति स दृष्टान्तो भवति, दृष्टान्तविरोधिपक्षः प्रतिषेद्धव्या भवन्ति, दृष्टान्तसमाधिपक्षाः स्थापनीया भवन्ति, दृष्टान्तः साध्यसाधननिश्चयविषयो भवति, वादिप्रतिवादिभावाऽभावाऽन्यतरबुद्धिसमगोचरतावान् दृष्टान्तः । सोऽन्वयिदृष्टान्तो व्यतिरेकिदृष्टान्तोऽपि च भिद्यते । यथाऽपेक्षोऽङ्गीक्रियतेऽवयवांगम् ।। ४४५ ।।

**फलं प्रयोजनं प्रोक्तं प्राप्तव्यार्थादितन्मयम् ।**
**प्रवर्तकं जनेष्टं तत् लिप्सागोचरमुच्यते ॥४४६॥**

स्पष्टमर्थं सुखं दुःखाऽभावं प्राप्तव्याऽर्थमभिज्ञायाऽभिलष्य प्रवर्त्यं च स्वायत्तीकरोति जनादिः । प्रयोजनसाधनस्य प्रयोजनेच्छाधीनेच्छाविषयत्वात् गौणं प्रयोजनत्वमिष्यते ।। ४४६ ।।

**अथ बुद्धिः सविषया विषयाकारजीवनी ।**
**सत्यपि विषयस्थैर्ये सा तु त्रिक्षणसंक्रमा ॥४४७॥**

चिद्गुणश्चैतन्यं धीर्ज्ञानं प्रत्यक्षं तु 'घटमहं पश्यामी'तिप्रतीतिरूपं धर्मिग्रहान्वितं धर्मिविषयतानिरूपकं विषयि भवति, विषयताप्रतियोगिको घटानुयोगिकः सम्बन्धोऽपि ज्ञाननिरूप्यः स्वरूपसम्बन्धः,

तावन्मात्रौपयिकत्वात् ।। स च ज्ञानात्मकः सर्वथाऽनुयोगिप्रतियोगिव्यतिरिक्तपदार्थः । विषयतानिष्ठप्रकारतया घटनिष्ठविशेष्यतायाश्चाऽवच्छेदकं प्रकारप्रकारिभावं ज्ञानं 'ज्ञायते घट'इतिरूपम्, सामान्यविशेषज्ञानयोरविरोधात् । तत्पूर्वं निर्विकल्पकं घटसंसर्गविषयतामात्राऽवगाहकं धर्मानवगाहि, तत्र संसर्गतया ज्ञानं निर्विकल्पकं द्वितीयक्षणे सविकल्पकं वैशिष्ट्यावगाहि जायमानं विशेष्यसंसर्गप्रकारावगाहि धारावाहि व्यवसायात्मकमनुव्यवसायाद्यात्मकं चापि अधिकविषयसंगाहात् सम्पद्यते तत्र तत्र तत्तज्ज्ञानाकांक्षिता, संसर्गाः क्लृप्तसिद्धसंसर्गातिरिक्ता यथापेक्षाः स्वीक्रियन्ते, नैतावता स्थलान्तराणां समान्तराणां चापत्त्यनुपपत्त्याद्युद्भवः, ज्ञानाधीननियमानां ज्ञानापार्थक्ये पार्थक्यात् सर्वत्रैकस्याऽप्रचार्यत्वात् । समूहालम्बने समुच्चये समूहितज्ञाने ज्ञानैक्ये सामान्या विषयता त्वेका विशेषा सा व्याप्या प्रतिविषयनियता भिन्ना, नैतावता भ्रमाद्यापत्तिः, सामान्यतया ज्ञानधर्मिणि अभ्रमात्, विशेषविषयताभिः प्रत्येकविषयिणि चाऽभ्रमात् । नहि घटविषयता पटं समारोहति, न च सामान्यज्ञानगतविषयता विशेषमारोहति, स्वतन्त्रविषयतानिरूपकस्वभावत्वात्, न वा गौरवं तन्निरोधकम्, गौरवलाघवविचारव्याप्ये काले एव विषयतानां ज्ञानानां च परिवर्तनात् । व्यधिकरणधर्मेणाऽपि धर्मिणोऽभावादिज्ञाने ससुच्चितज्ञानैक्येऽपि प्रत्येकाऽन्विताऽनन्वितानां ज्ञानविशेषाणां व्याप्यानां प्रागेव पार्थक्यं, तेन न भ्रमत्वापत्तिः, अभावस्य सम्बन्धत्वेन स्वीकारात् । व्यभिचारिसम्बन्धस्य हेत्वाभासादौ सर्वत्रांऽगीकारात् । वस्तुयाथार्थ्यं व्याप्यव्यापकधर्मेण तद्वत्ताऽवगाहि, व्यभिचारादिसंसर्गेण प्रतियोगिविशिष्टाऽभावविशिष्टपदार्थावगाहीति तदपि तद्वत्तावगाहि भवति । बाधज्ञानमपि वस्तुप्रतियोगिकाऽभावप्रकारकस्वरूपसंसर्गकधर्मिविशेष्यताकं स्वव्यूहे यथार्थं विरोध्यं ज्ञानं निरुणद्धीति भ्रमाद्यापत्तेरभावात् । असंसर्गितविप्रकृष्टपदार्थानां तद्वत्त्वं भ्रमः स्यात् । समूहालम्बनज्ञानीयविषयतातः । प्रत्येकविषयज्ञानस्य सम्बन्धावगाहित्वेन विषयताया भिन्नत्वात् । अथ भासमानवैशिष्ट्यप्रतियोगित्वं प्रकारत्वं, भासमानवैशिष्ट्यानुयोगित्वं विशेष्यत्वं, तन्न निर्विकल्पके, यदि कश्चिदाह—प्रथमक्षणीयं तदपि विशिष्टमेव ज्ञानाऽविषयं ज्ञानं तर्ह्यपि तत्र प्रकारविशेष्यभावो येन ज्ञानेनैव निर्धारितो निजस्वरूपे तत्स्वरूपज्ञानं निर्धारकं च ज्ञानं विभिन्नमिति विषयतानां तत्तदाकाराहितविषयिज्ञानजन्यानां विषयगतानां भिन्नत्वमेव यथार्थतया च सदेव ज्ञानम् । अथ भूतले घट गुणे गुणी जातौ व्यक्तिरभावे भाव इति ज्ञानानामपि तत्र तत्र तत्तत्संसर्गाणां यथार्थतया प्रयोगाणां यथार्थत्वात् विशेषणविशेष्यभावभावितज्ञानानां याथार्थ्यमेव, वृक्षस्य तादात्म्येन व्यूहत्वेनांऽशत्वेन स्वात्मकत्वेन शाखापत्रमूलस्तम्बाद्यात्मकतया वृत्तेस्तथातथाविधतत्तद्यथार्थव्यवहारजनकसंसर्गैर्वृक्षः स्वव्यूहात्मक इतियथार्थमेव ज्ञानं, तदेव चाऽवयवाऽन्वयविभावविषयकं चेत् समवायसांसर्गिकादिमानं, तदेव चाऽनवयविकेवलभागात्मकं विशेषविशेषरूपं चेत् व्याप्यज्ञानविषयतानिरूपकं विशेषज्ञानं तर्ह्यपि सदेव यथार्थमेव यावत्क्षणस्थायिज्ञानं यादृशं यादृशविषयावगाहितामवलम्बमानं जीवनवत् तावत्तद् यथार्थं स्वसंसर्गादिगोचरं, यदि परमेश्वरस्य सर्वज्ञतारूपमेकक्षणावगाहिब्रह्माण्डादिरूपमपि चेत् असंख्यसम्बन्धप्रकारविशेष्यतावगाहिसाधर्म्यवैधर्म्यावगाहिकारणकार्यावगाहिपृथङ्नामरूपविभागावगाहिभावाऽभावाऽवगाहिसर्जनाऽसर्जनावगाहिपरिणामविवर्ताद्यवगाह्याभासभासावगाहिस्वाप्नजाग्रदाद्यवगाहिकालान्तरीयदेशान्तरीयावगाहिसर्वाऽसर्वधर्मधर्म्याद्यवगाहिवर्तमानं कालाद्यनवच्छेद्यं तद् याथार्थ्यम् अव्यभिचरद् भवतीति योगिनामपि तथाऽयोगिनामपि स्वल्पं स्वल्पमपि मनागविषयम् अपरित्यज्यैव भवति, मरुजलीयमनागंशजलविषयावगाहियाथार्थ्यवत् सर्वत्र याथार्थ्यं भवत्येवेति व्याप्यविषयताभिः सर्वत्र याथार्थ्यं नाऽलीकायते । समूहालम्बने विशेषविषयतयोरपि सत्त्वात् । व्यासज्ज्यवृत्तिर्वा पर्याप्त्यादिर्वा याथार्थ्यनियामका एव संसर्गा विद्वद्भिरभिमताः । तेऽपि कराद्यग्राह्या अपि धीग्राह्या वस्तुस्वरूपीकृताः शाब्दभानगोचराः। आकांक्षाभास्यानां संसर्गाणां याथार्थ्या-

देव तज्जन्यबोधानां याथार्थ्यं जायमानं भासमानं च सत् आकांक्षाणामपि याथार्थ्यं दृढयन्ति, तथा च सर्वा आकांक्षा व्यक्त्यधीना व्यवहारपदनिर्वाहिका यथार्था ज्ञप्तयस्तत्कारणीभूता याथार्थ्यमेव भजन्ते। अरण्यशैलतारामण्डलसैन्यादिदर्शनक्षणीयैकज्ञानेऽपि सामान्यपदार्थत्वविषयताव्याप्या अगणिता विषयता भिन्नजातीयवर्तुलाकृत्यादिविषयताः समनियता एव भिन्नज्ञाननिरूप्या जायन्ते इति नैकक्षणे यथार्थत्वे विरोधः, स्वाप्नसैन्यानां ज्ञानस्य ज्ञानानां चाप्यविरोधः, संस्कारेन्द्रियसहोद्भवप्रत्यभिज्ञानानामपि याथार्थ्ये सामान्यविशेषात्मकेऽविरोधः। आधाराधेयभावास्तु सशक्तिका वा कारणकार्यनियता मानवधीव्यापृता ज्ञानविषया ज्ञानकृताः परिचयं नीता एव यथार्था याथार्थ्यविषयितानिरूपका यथार्थविषयतादार्ढ्यंकरा भवन्तीति। घटत्वेन परं जानामीत्यादिर्नाऽऽपत्तिः किन्तु ज्ञानक्लृप्तिरेव यथार्था यथापेक्षिततथागोचरा इति। पटात्मके घटे पटनिर्मिते पटत्वेन घटज्ञानेऽविरोधात्। तथा बुद्ध्या कल्पितेन घटत्वेन पटज्ञाने घटत्वविषयकत्वे त्वविरोधात्। नास्तिव्यवहारयाथार्थ्यपुष्ट्यर्थं व्यधिकरणावच्छिन्नत्वमलम्ब्य प्रवृत्तेर्व्यधिकरणे वाऽवच्छेदकत्वे वा संसर्गे वा विषयत्वे वा निरूपकत्वे सर्वत्र सत्यत्वे एव तद्व्यवहारयाथार्थ्याद् यथार्थत्वं सर्वत्र न व्यभिचरति। तत्तत्स्वरूपे प्रत्येकस्मिन् व्यक्तिविशेषे विश्रान्तत्वात्। एकविषयस्यापि तद्रूपेण घटादिवृत्तित्वं विषयतात्वेन घटादिवृत्तित्वं चातिरिक्तविषयकमेव, ज्ञानस्य विषयस्यैकविध्ये सामान्यतया याथार्थ्यम्, अवस्थाक्षणक्रमादिभिरनैकविध्ये विशेषतया याथार्थ्यम। विषयत्वमनुयोगित्वं प्रतियोगित्वं चेत्यादि पृथगेव, न तु तत्र सम्बन्धस्यापि सम्बन्धः पुनस्तस्य सम्बन्धः पुनस्तस्येत्यनवस्था ज्ञाननिरूपिता कल्पनीया, सत्यताबलेन कल्पनाबलस्य क्वचिन्निरर्थकवस्तुशून्याकारनिर्माणे ज्ञाते ततो निवृत्तेर्ज्ञानस्य विश्रान्तिस्थलाकारे एव व्यवस्थानात् तावत्पर्यन्तमेव याथार्थ्यम्, तत ऊर्ध्वं विना विषयं कल्पितं चाऽयथार्थकक्षापतितं, तच्च भ्रान्तमित्यादिव्यवहारलक्ष्यमिति तत्र नाऽन्यविधाऽऽग्रहः। 'घट' इतिविशिष्टधीगोचरघटत्वसंसर्गघटादिषु भिन्ना भिन्ना विशेषविषयतास्तद्व्यापिका तु ज्ञानसामान्ये एका विषयिताया एकत्वात्। भिन्नभासे त्वनेका सा विषयाधीनत्वात् ज्ञानक्लृप्तिगोचरत्वाच्च। दीर्घशरीरिज्ञानानां क्रमशः संस्कारद्वाराऽन्तिमहास्मरणस्यैकक्षणे जायमानस्य व्यापकस्य सर्वथैकविषयताविषयिताऽन्वितत्वेऽपि तत्पूर्वीयस्मरणानां तदुत्पत्तिपर्यन्तं प्राप्तानां विषयता भिन्ना भिन्ना विशेषरूपाऽनिरुद्धा एवोपतिष्ठन्ते, एवमेव प्रारम्भाच्चरमान्तं कतिज्ञानानां विषयताः सामान्यविशेषात्मिकयः उत्पद्यन्ते विलीयन्ते चेति तु तत्र तत्राऽवधानिनां नाऽविहितम्, अन्येषां तु तदशक्यम्, किन्तु याथार्थ्यंऽव्यभिचरितत्त्वम्, अज्ञानेऽपि तत्र याथार्थ्यं न विलीयतेऽपसरति वा नामरूपशून्यं भवेत्। तस्मात् तत्र तत्र सामान्यानि पदार्था वा धर्मा वा ज्ञानीयकृताः सर्वे सम्बन्धिसम्बन्धादिव्यवस्थानाः यथार्थस्वस्वरूपव्यञ्जका याथार्थ्यं ज्ञानगतं न विवर्तयन्तीति रिक्तप्रसक्तत्वं प्रतियोगित्वादौ कल्पितेऽपि तत्राऽतिरिक्तत्वं वा तदात्मकत्वमिति तु ज्ञानीयवित्तिनिर्धार्यं नैतावता याथार्थ्यं व्यभिचारयति। विशेषणज्ञानेन विशिष्टज्ञानं तेन चोपनीतमानं तेन च महाबोधादि चापि स्वस्वविषयतासर्जकं याथार्थ्यमवलम्ब्य विषयत्वं क्लृप्तयति। तत्र तत्र मानससम्बन्धाननुगमो न दोषः फलत आवश्यकत्वात् भिन्नताया यथार्थत्वात्। यत्सिद्धिमुपजीव्य गौरवाऽवतारस्तत्सिद्धौ तस्याऽविरोधित्वात्। घटवद्भूतलं जानामीत्यनुव्यवसायवत् घटं जानामि भूतलं जानामि संयोगं जानामि त्रयं जानामीत्यादिज्ञानेषु तत्र तत्र विषयतात्मकज्ञानसम्बन्धा आवश्यकाः, पदार्थानां सर्वथा यथाकथञ्चिदन्वयित्वात्, अन्वयः पदार्थो वा ज्ञानपदार्थ एव विषयताप्रयोजकः विषयिपदार्थाऽवलम्बिज्ञानयाथार्थ्याऽऽवेदक इति। मनसः सर्वैरंगीकारात् मानसी वृत्तिर्वा धीवृत्तिर्वाऽन्तःकरणवृत्तिर्वा चिच्चैतन्यवृत्तिर्वाऽऽभासवृत्तिर्वा साक्षिवृत्तिर्वा परब्रह्मज्ञप्तिरिति सर्वासामधस्तादेकविषयकतया परब्रह्मज्ञप्तेर्यथार्थतया तद्व्याप्यज्ञप्तीनां विषयपर्यन्तानां विषयतायोजिकानां याथार्थ्यमेव, अन्यथाऽनुव्यवसायस्य समानाकारतायां क्षतौ तदुत्तरोत्तरतद्विषयकसर्वज्ञज्ञप्तेरप्यन्यथाख्यातित्वापत्तेः। विषयभेदेन तु सार्वज्ञ्या-

पत्त्यभावात्, एकस्य सार्वज्ञ्ये तद्विषयाकार-यावद्ग्रहत्वे तद्व्यक्तीनामनियमात् करणाधीन-ज्ञप्तिमतां यावच्छक्तिव्याप्तिस्तावत्प्रचारिणां तावन्मात्रे एव याथार्थ्योपलम्भात्। निखिलादि-भानस्य अनीश्वरे कदाप्यनुपगमात्। सार्वज्ञ्य-मुक्तावपि मध्यादिपरिच्छेदक्षतौ तत्पूर्त्यनुपलम्भात् संस्कारसापेक्षे ज्ञाने परिच्छिन्नोऽपि स्वरूपतः संस्का-राणां भिन्नधर्म-धर्मिप्रभृतिगोचराणां तत्संसर्गगोच-राणां तदनुसन्धानादौ स्वरूपत एव याथार्थ्ये प्रयोज-कत्वात्। प्रत्ययज्ञानमपि नित्यान्वितमनित्याऽभावा-न्वितं च सान्वयं ज्ञानविषयकं विशेषसामान्यरूपमिति तत्रापि तद्गोचरे ज्ञाने याथार्थ्यमेव, यत्र वृत्तिर्याति तद् यथार्थम्, अनुपयाने त्वज्ञानं न तु सा भ्रान्तिः। ज्ञानाऽभावस्यैवाऽऽवेदकत्वात्। समानाभिहारेण वै-कल्येन वाऽस्फुटता यावती तावती भ्रान्तिपदोपार्चा, न तु स्वरूपभ्रान्तिर्मिश्रणता, मिश्रणेऽपि मृत्पिण्डे चतु-र्दशतत्त्वानां परिगणितत्वात् ततोऽन्यत आगन्तुकानां त्वनन्तानामपि तत्र तत्तत्प्रातिस्विकरूपेण याथार्थ्या-ज्ज्ञप्तौ याथार्थ्यमेव। प्रवर्तकं सामान्यस्वरूपे यथार्थ-मपि निवर्तकं तद्व्याप्येषु यत्र कुत्रचिदपि संसर्गानव-गमत्वमेव न तु याथार्थ्यप्रतिद्वन्द्वि किञ्चित्तत्रोपेयते, संसर्गाऽवगमे तु तत्रैव निवर्तनं प्रतिरुद्धय प्रवर्तनायाः स्वीकारात् तत्फललाभाच्च। यत्रांऽशे प्रमोपस्तत्र तद्ध्रासक्रोद्बोधाऽनवगमः। तथा च सर्वत्र विषयता-सम्पत्तेरावश्यकत्वेन सम्बन्धानवगाहिता सम्बन्धान-वलम्बितता न कथञ्चिदपि कंचित् अनिर्वाहमाव-हति। गुरुधर्माः कल्पिता वा पदार्था विस्तृतसंक्षिप्ताऽ-क्षरगणितादिव्यवहारा रेखामानादिप्रतिकृतिनिका-शाद्या अपि प्रतिभानिर्मिताः स्थानिवदादेशा उपमेया वा नीर्णीता एव धीविषया यथार्थाः एकेनैव ज्ञानेन पदार्थानां प्रकारताप्रकारिताऽवगाहिना मध्यस्थ-पदार्थानां तत्तज्ज्ञानविशेषनिरूपिताः प्रकारता एव प्रकारितारूपा ऐकाधिकरण्यात् विशेषणतात्मक-विशेष्यता विशेष्यतात्मकविशेषणता चेत्येवं ज्ञानैक्ये वक्तुमुचितम्। अथ ज्ञानाकाराणां भिन्नत्वे त्वाकार-भिन्नताप्रयोजिका यत्र तत्र प्रकारकासमानाधिकरणा प्रकारिता भवति तेन विषयताऽपि तत्तद्धर्मावच्छेद्या भिन्नैवेति शब्दव्यवहारोऽपि भिन्न एवोपादेयो भवति, एकधर्मस्य शक्यतावच्छेदकत्वे तदन्यतत्समनियत-धर्माणामशक्यतावच्छेदकत्वं तु देशभाषाकोशप्रभृति-निर्देशोद्देश्यादिभेदान्निर्वलमिति सर्वधर्मानुपूर्वीभिन्न-धर्मविषयतानां धर्मिविषयतानां च भिन्नत्वमेव, न त्वर्थभिन्नत्वम्, अर्थानामपि सूक्ष्मभेदादेव प्रयोगभेदः, नञ् विरहाऽभावव्यतिरेकशून्यादीनां किञ्चिदंशभेदो-ऽपि सामान्यार्थे प्रयुक्तपदविषयताया ऐक्यात्, न तु विशेषविषयतैक्यम्, नञो निषेधे विरहस्य वियोगे-ऽभावस्याऽनस्तित्वे व्यतिरेकस्याऽसहकारे शून्यस्य रिक्तत्वे चेत्येवमर्थभेदात्॥ प्रकारताविशेष्यतादीनां निरूप्यनिरूपकभावसंसर्गोऽपि स्वरूपविशेष एवं अव-च्छेदकत्वमपि स्वरूपसम्बन्धरूपं किं वा पदार्थता-वच्छेदकातिरिक्ताऽवृत्तित्वरूपम् अनतिरिक्तवृत्तित्वा-द्यात्मकं समानाधिकरण्यरूपं तदात्मकमेव वा ज्ञाननिरूपितं सर्वं ज्ञानीयविषयतावच्छेद्यं वा विषय-तात्मकम् आनुपूर्वीभेदेन भिन्नमपि तेन तेन च पदार्थयथातथत्वे तज्ज्ञानस्य याथातथ्यं याथार्थ्यं सूप-पादमेव। प्रकारता द्वेधा—निरवच्छिन्ना, विशेषणाऽ-न्तरावच्छिन्ना च, यत्र स्वरूपतो घटत्वादिभानं तत्र निरवच्छिन्ना घटत्वप्रकारता, सावच्छिन्ना तु घट-वदितिज्ञानीया घटादिप्रकारता, घटवदितिज्ञानं विशिष्टं सामान्यम्, केवलं विशेषरूपं च, तत्र केवल-सामान्यविषयता घटत्वावच्छिन्नप्रकारता भूतलादि-विशेष्यतात्मिका, विशेषविषयता तु प्रकारतात्मक-विशेष्यतानिरूपितं प्रकारत्वं, न तु प्रकारतावच्छेद-कत्वमपि। अथ विशेष्यताऽपि क्वचिन्निरवच्छिन्ना, क्वचिद्विशेषणान्तराऽवच्छिन्ना, निर्धर्मितावच्छेदके घटज्ञाने घटत्वप्रकारतानिरूपितविशेष्यता निर-वच्छिन्ना, 'अयं घट' इत्यत्र तु घटत्वप्रकारता-निरूपितविशेष्यता इदन्त्वावच्छिन्ना, इदन्त्वं धर्मिता-वच्छेदकम्, विशेष्यतावच्छेदकताया धर्मितावच्छेद-कतापदार्थत्वात्। विशेष्यतानिरूपितमवच्छेदकत्वं च स्वरूपविशेषः, पदार्थान्तरं कल्प्यं, प्रकारताविशेष एव वा। विशेष्यताऽपि समूहालम्बनादौ प्रकार-भेदाद्भिन्ना, प्रत्येकप्रकारकज्ञानसामग्रीसमाजनियत-तया तदीयज्ञानीयनानाविशेष्यताप्रतियोगित्वस्यैव

तत्र सत्त्वात्, प्रकारभेदेन विशेष्यताभेदात्, प्रकारता विषयता विशेष्यता बहुविशेषणवत्यप्येकैकविशेषणवति शान्ताकांक्षायां भिन्नैव विशेष्यता विषयता प्रकारता च। अशान्ताकांक्षायां तु विषयता विशेष्यता चैका। समूहालम्बने तु प्रत्येकप्रधाना विषयताविशेष्यतेति। बहुविशेषणकैकविशेष्यकस्थले त्वेकविशेष्यता पश्चिमविशेष्यताऽवच्छेदकभावापन्नेति। विधेयत्वमपि विषयतान्तरम्, विशेष्यताऽवच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारताख्यविषयतैव विधेयता। उद्देश्यताऽपि प्रकारतादिभिन्नविषयताविशेष एव, न तु विशेष्यतैवोद्देश्यता, पर्वते वह्निरित्यत्रोद्देश्यत्वाऽनुपपत्तेः, उद्देश्यतानिरूपकत्वं च विधेयत्वम्। यत्र प्रतिबध्यप्रतिबन्धकभावाऽऽवश्यकता तत्र प्रकारताविशेष्यताव्यवहारस्य मुख्यत्वेऽपि ज्ञप्तिजन्यतया तत्र विषयतानाम् अपरिहार्यतया प्रत्येकनियतविषयता ज्ञप्तिक्लृप्ता विशेषरूपा व्यवस्थितिं लभते। लाघवगौरवं तु बुद्धिकृतं विषयतासर्जकं न विलयकृदिति॥ चित्स्वरूपात्मज्ञानप्रकाशविषयितायाः शाश्वतत्वेन तन्निरूपितचैतन्यनिष्ठाऽसंख्यविषयितानां विषयतानां चाऽसंख्यत्वं निराबाधम्। यत्र ज्ञप्तिविश्रान्तिस्तदा तत्र विषये विषयताविश्रान्तिरिति॥ ४४७॥

**अभावो नञ्पदार्थोऽत्र षड्विधः सम्प्रकीर्तितः।**
**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ॥४४८॥**
**अप्राशस्त्यं विरोधश्चेत्येते लाक्षणिका अपि।**
**अत्यन्ताभावभेदौ तु द्वयं शक्यं सुसम्भवम् ॥४४९॥**
**'अनिक्षुः शर' इत्यत्र 'घटो नाऽयं' 'घटो न' च।**
**'नार्या अनुदरं चाप्युदरं' तुर्यमुदाहृतम् ॥४५०॥**
**'अब्राह्मणो वार्धुषिक'श्चा'ऽसुरो दैत्य' इत्यपि।**
**लाघवाद् गृह्यते चाऽथ त्यज्यते गौरवान्विता॥४५१॥**

अथ नञर्थोभावः षड्विधः,—'इक्षुसदृशः शरः'—घटाभावः. घटभिन्नः, अल्पमुदरम् अप्रशस्तो ब्राह्मणः, सुरविरोधी दैत्यः' इत्यादिस्थलेषु भिन्नार्थशक्तो नञ्। यदि लक्षणया सादृश्यार्थे प्रयोगनिर्वाहस्तदा षट्सु शक्तिकल्पनमयुक्तम्। अभावाऽन्यत्वरूपाऽर्थद्वये एव शक्तिरावश्यिकी। अभावत्वभेदत्वयोः शक्यतावच्छेदकत्वे लाघवात्। संसर्गाऽभावेऽभावत्वेनैव शक्तिः, न तु तादात्म्यातिरिक्तसंसर्गविच्छिन्नप्रतियोगिताकाऽभावत्वरूपसंसर्गाऽभावत्वेन गौरवात्। अथ तर्हि अभावत्वेनैव निर्वाहेऽन्योन्याभावेऽपि पृथक्शक्तिर्माऽस्त्विति चेन्न। 'नाऽयं घट' इत्यादौ घटत्वावच्छिन्नस्य घटत्वावच्छिन्ननिरूपिताऽनुयोगितासम्बन्धेनाऽभावत्वावच्छिन्ने विशेषणतया भानं, तस्य विपरीतभानविरोधिताप्रयोजकत्वंकल्पनञ्चाऽपेक्ष्य लाघवादभावविशेषणतापन्नायामनुयोगितायां घटत्वावच्छिन्ननिरूपितत्वसम्बन्धेन घटत्वावच्छिन्नस्य भानं तस्य विपरीतधीविरोधिताप्रयोजकञ्च कल्पयितुमुचितम्, अनुयोगितायाः प्रतियोगिरूपसम्बन्धिनिर्मोकेणाऽभानात्। अभावमात्रस्य पदार्थस्य तु इदन्त्वादिना 'अयमभाव' इति भानात्, अभावे धर्मिणि प्रतियोगिनः प्रकारत्वमनावश्यकमित्यनुयोगिताऽंशे प्रतियोगिप्रकारकत्वम् अनुभवविरुद्धमिति, भेदेऽनुयोगिताविशिष्टे तु शक्तिं विनाऽनुयोगितायां प्रतियोगिनोऽन्वयासंभवात् भेदे शक्त्यन्तरम्॥ यद्वा—नञर्थाऽभावाऽन्वयबोधे 'घटो न भूतले' इत्यादौ सप्तमीसमभिव्याहारज्ञानं हेतुः 'घटो न भूतलमि'त्यादौ तु समानविभक्तिकपदसमभिव्याहारज्ञानं हेतुरिति व्युत्पत्तिभेदसूचकं पृथगभिधानम्, शक्तिभेदस्तु व्यवहारतः सिद्ध एवेति। अभावे भेदे च अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वम्, येन रूपेण प्रतियोगिनोऽभावांऽशे विशेषणता तद्धर्मपर्याप्तप्रतियोगितावच्छेदकत्वं व्युत्पत्तिबललभ्यम्, घटत्वावच्छिन्नप्रतियोगिताकत्वं तु घटत्वावच्छिन्नप्रतियोगितानिरूपिताऽनुयोगिता, सा च घटादिरूपविशेषणप्रतियोगिकसंसर्गतया भासते, अनुयोगितायां घटत्वावच्छिन्नप्रतियोगितानिरूपितत्वं संसर्गतावच्छेदकतया भासते, नञर्थावच्छेदकाऽनुयोगितायां घटादेरन्वये तु घटत्वावच्छिन्नप्रतियोगितानिरूपितत्वं संसर्गः घटादिनिष्ठप्रतियोगिताप्रतियोगिकं निरूप्यत्वं घटादिरूपप्रतियोगिप्रतियोगिकत्वमपि घटादिसम्बन्धरूपम्॥ यद्वा घटादेः सम्बन्धोऽभावेऽनुयोगित्वम्, घटत्वादेरपि अभावविशेषणात्तस्य स्वावच्छिन्नप्रतियोगिताकत्वं सम्बन्धः। अनुयोगि-

तायां घटाऽन्वये तु धटादिपारतन्त्र्येण घटत्वान्वयः, सर्वत्रैवं विशिष्टवैशिष्ट्यबोधरीतिः कम्बुग्रीवादिमत्त्वस्य गुरुत्वेनाऽनवच्छेदकत्वे तु—अवच्छिन्नप्रतियोगिताकत्वं खण्डशः प्रसिद्धमिति स सम्बन्धस्तत्र, न तु कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वम्, भ्रमत्वापत्तेः । प्रतियोगितांऽशे कम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्य भ्रमः । तदवच्छिन्नत्वस्य प्रसिद्धिस्तु विषयित्वसम्बन्धावच्छिन्नकम्बुग्रीवादिमत्त्वावच्छिन्नविशिष्टाऽभावस्य घटत्वादिविशिष्टाऽभावाऽसमनियतस्य प्रतियोगितायां भवति तथा वृत्त्यनियामकतया विषयिताया अभावप्रतियोगिताऽवच्छेदकसम्बन्धताविरहेऽपि तेन सम्बन्धेन तद्विशिष्टवद्भेदप्रतियोगितावच्छेदकतायां च प्रसिद्धिः । तद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकतदभाववतितद्रूपेण तत्संसर्गकतत्प्रकारकज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तद्भ्रमः, विशिष्टसम्बन्धाऽप्रसिद्धिस्थले व्यधिकरण तद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकाऽभावप्रसिद्ध्या तादृशाऽभावमादाय तद्रूपावच्छिन्नतत्सम्बन्धेन भ्रमत्वनिर्वाहात्, यादशसम्बन्धेन यद्रूपवत्त्वयत्प्रतियोगिकत्वयद्धर्म्यनुयोगिकत्वानां त्रयाणामभावः तद्रूपविशेषिततत्सम्बन्धेन तत्प्रकारकं तद्धर्मिविशेष्यकं ज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तस्य तद्धर्मिणि भ्रमः वस्तुतस्तु गुरुधर्मस्याऽवच्छेदकत्वमावश्यकम् , कम्बुग्रीवादिमान्नास्तीतिवाक्यस्य घटत्वाऽनुपस्थितौ प्रामाण्यात् । अन्वयितावच्छेदकता च यत्र· यद्रूपान्तराऽवच्छिन्नाः तत्र तद्रूपविशिष्टाऽवच्छिन्नप्रतियोगिताकत्वम् अभावे भासते ॥

अथ व्यधिकरणधर्मावच्छिन्नाभावस्य व्यधिकरणधर्मवत् प्रतियोगिविशेषणतया भासमानः समानाधिकरणधर्मोऽपि प्रतियोगितावच्छेदकः, घटत्वेन·घटपटोभयं नास्तीतिप्रतीतिविषयाऽभावस्य प्रतियोगिताया अव्यासज्ज्यवृत्तित्वेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं निर्वहते । घटत्वादेः तत्प्रतियोगितासमानाधिकरणत्वेऽपि प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणस्य घटत्वादिसहितघटपटोभयत्वादेः प्रतियोगिताऽधिकरणघटपटयोरपर्याप्तेः, अथवा— व्यासज्ज्यवृत्तितदभावप्रतियोगिताऽवच्छेदकतापर्याप्त्यधिकरणघटत्वपटत्वोभयत्वाद्यधिकरणाऽप्रसिद्ध्या तादृशाऽभावविरोध्यधिकरणताया अप्यप्रसिद्ध्या तस्य व्यधिकरणधर्मेणाऽभावस्य केवलान्वयित्वमुपपद्यते । घटत्वेन पटो नास्तीत्यादौ यद्धर्मावच्छिन्नप्रतियोगिताकत्वं तृतीयान्तेनाऽभावे प्रत्याय्यते यश्च धर्मोऽभावनिरूपितप्रतियोगिनिष्ठप्रकारताऽवच्छेदकतया भासते तदुभयपर्याप्तप्रतियोगितावच्छेदकत्वम् अभावांशे प्रतियोगिनः सम्बन्धतया भासते । अभावांऽशे धर्मान्तरावच्छिन्नप्रतियोगिताकत्वबोधकतृतीयान्तासमभिव्याहारस्थले तु यादृशधर्मोऽन्वयिता·· वच्छेदकस्तत्पर्याप्तिप्रतियोगितावच्छेदकताकत्वमेव । सम्बन्ध इति ॥

अथ ध्वंसप्रागयवयोरत्यन्ताऽभावविरोधितामतेऽन्तरा श्यामे रक्तं रूपं नास्तीत्यादिव्यवहारानुरोधेन ध्वंसप्रागभावयोरपि समयविशेषावच्छेदेन सामान्याविच्छन्नप्रतियोगिकत्वोपगमेन तयोर्नञा प्रतिपादनात् । असदातनभावरूपाऽभावाऽभावसाधारण्यानुरोधेन प्रवृत्तिनिमित्ततया तयोर्नञ्पदवाच्यत्वात् । तद्वयक्तिर्नास्तीति तद्वयक्तित्वावच्छिन्नप्रतियोगिताकयोर्ध्वंसप्रागभावयोर्बोधनात् ध्वंसप्रागभावसाधारणशक्तेरावश्यकत्वात् । तद्वयक्तिध्वंसप्रागभावाधिकरणे तदत्यन्ताभावस्याऽनंगीकारात् । न घट इतिप्रमाणकर्तुंमते घटभेदबोधस्याऽविरोधात् , सर्वत्र तथाप्रयोगाऽस्वीकारात् । शुद्धप्रतियोगितायाः सम्बन्धेऽबाधितविशेषाऽन्तराऽभावबोधकतया तत्तद्वाक्यानां प्रामाण्यांऽगीकारात्, अव्युत्पन्नानां तदर्हंप्रामाण्यात् । वस्तुगत्या नीलघटादिमति नीलघटादौ च 'अत्र न घटः', 'अयं न घटः' इत्यादिप्रयोगप्रामाण्यात् । नञादिपदजन्यशाब्दज्ञाने प्रतियोगितारूपसंसर्गे प्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणपर्याप्ताऽवच्छेदकताकत्वभाननियमवत्, प्रतियोगितासम्बन्धेन प्रतियोगिप्रकारकज्ञानमात्रे तथाविधभाननियमः । 'चैत्रादन्य' इत्यत्र चैत्रप्रतियोगिकभेदानुयोगीत्यर्थः । 'न पचति चैत्र' इत्यत्र पाककृत्यभाववांश्चैत्र इतिबोधः । येन सम्बन्धेन 'अयमिहे'-तिव्यवहारस्तत्सम्बन्धेन 'नाऽयमिहे'-तिविपरीतव्यवहारः । नञोऽसत्त्वे यत्पदार्थे यत्पदार्थो विशेषणतया भासते तत्र

तत्र सत्त्वात्, प्रकारभेदेन विशेष्यताभेदात्, प्रकारता विषयता विशेष्यता बहुविशेषणवत्यप्येकैकविशेषणवति शान्ताकांक्षायां भिन्नैव विशेष्यता विषयता प्रकारता च। अशान्ताकांक्षायां तु विषयता विशेष्यता चैका। समूहालम्बने तु प्रत्येकप्रधाना विषयताविशेष्यतेति। बहुविशेषणकैकविशेष्यकस्थले त्वेकविशेष्यता पश्चिमविशेष्यताऽवच्छेदकभावापन्नेति। विधेयत्वमपि विषयतान्तरम्, विशेष्यताऽवच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारताख्यविषयतैव विधेयता। उद्देश्यताऽपि प्रकारतादिभिन्नविषयताविशेष एव, न तु विशेष्यतैवोद्देश्यता, पर्वते वह्निरित्यत्रोद्देश्यत्वाऽनुपपत्तेः, उद्देश्यतानिरूपकत्वं च विधेयत्वम्। यत्र प्रतिबध्यप्रतिबन्धकभावाऽऽवश्यकता तत्र प्रकारताविशेष्यताव्यवहारस्य मुख्यत्वेऽपि ज्ञप्तिजन्यतया तत्र विषयतानाम् अपरिहार्यतया प्रत्येकनियतविषयता ज्ञप्तिक्लृप्ता विशेषरूपा व्यवस्थितिं लभते। लाघवगौरवं तु बुद्धिकृतं विषयतासर्जकं न विलयकृदिति ॥ चित्स्वरूपात्मज्ञानप्रकाशविषयितायाः शाश्वतत्वेन तन्निरूपितचैतन्यनिष्ठाऽसंख्यविषयितानां विषयतानां चाऽसंख्यत्वं निराबाधम्। यत्र ज्ञप्तिविश्रान्तिस्तदा तत्र विषये विषयताविश्रान्तिरिति ॥ ४४७ ॥

**अभावो नञ्पदार्थोऽत्र षड्विधः सम्प्रकीर्तितः।**
**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ॥४४८॥**
**अप्राशस्त्यं विरोधश्चेत्येते लाक्षणिका अपि।**
**अत्यन्ताभावभेदौ तु द्वयं शक्यं सुसम्भवम् ॥४४९॥**
**'अनिक्षुः शर' इत्यत्र 'घटो नाऽयं' 'घटो न' च।**
**'नार्या अनुदरं चाप्युदरं' तुर्यमुदाहृतम् ॥४५०॥**
**'अब्राह्मणो वार्धुषिक'श्चा'ऽसुरो दैत्य' इत्यपि।**
**लाघवाद् गृह्यते चाऽथ त्यज्यते गौरवान्विता ॥४५१॥**

अथ नञर्थोभावः षड्विधः,—'इक्षुसदृशः शरः'—घटाभावः, घटभिन्नः, अल्पमुदरम् अप्रशस्तो ब्राह्मणः, सुरविरोधी दैत्यः' इत्यादिस्थलेषु भिन्नार्थशक्तो नञ्। यदि लक्षणया सादृश्यार्थे प्रयोगनिर्वाहस्तदा षट्सु शक्तिकल्पनमयुक्तम्। अभावाऽन्यत्वरूपार्थद्वये एव शक्तिरावश्यिकी। अभावत्वभेदत्वयोः शक्यतावच्छेदकत्वे लाघवात्। संसर्गाऽभावेऽभावत्वेनैव शक्तिः, न तु तादात्म्यातिरिक्तसंसर्गविच्छिन्नप्रतियोगिताकाऽभावत्वरूपसंसर्गाऽभावत्वेन गौरवात्। अथ तर्हि अभावत्वेनैव निर्वाहेऽन्योन्याभावेऽपि पृथक्शक्तिर्माऽस्त्विति चेन्न। 'नाऽयं घट' इत्यादौ घटत्वावच्छिन्नस्य घटत्वावच्छिन्ननिरूपिताऽनुयोगितासम्बन्धेनाऽभावत्वावच्छिन्ने विशेषणतया भानं, तस्य विपरीतभानविरोधिताप्रयोजकत्वंकल्पनश्चाऽपेक्ष्य लाघवादभावविशेषणतापन्नायामनुयोगितायां घटत्वावच्छिन्ननिरूपितत्वसम्बधेन घटत्वावच्छिन्नस्य भानं तस्य विपरीतधीविरोधिताप्रयोजकश्च कल्पयितुमुचितम्, अनुयोगितायाः प्रतियोगिरूपसम्बन्धिनिर्मोकेणाऽभानात्। अभावमात्रस्य पदार्थस्य तु इदन्त्वादिना 'अयमभाव' इति भानात्, अभावे धर्मिणि प्रतियोगिनः प्रकारत्वमनावश्यकमित्यनुयोगितांऽशे प्रतियोगिप्रकारकत्वम् अनुभवविरुद्धमिति, भेदेऽनुयोगिताविशिष्टे तु शक्तिं विनाऽनुयोगितायां प्रतियोगिनोऽन्वयासंभवात् भेदे शक्त्यन्तरम्॥ यद्वा—नञर्थाऽभावाऽन्वयबोधे 'घटो न भूतले' इत्यादौ सप्तमीसमभिव्याहारज्ञानं हेतुः 'घटो न भूतलमि'त्यादौ तु समानविभक्तिकपदसमभिव्याहारज्ञानं हेतुरिति व्युत्पत्तिभेदसूचकं पृथगभिधानम्, शक्तिभेदस्तु व्यवहारतः सिद्ध एवेति। अभावे भेदे च अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वम्, येन रूपेण प्रतियोगिनोऽभावांशे विशेषणता तद्धर्मपर्याप्तप्रतियोगितावच्छेदकत्वं व्युत्पत्तिबललभ्यम्, घटत्वावच्छिन्नप्रतियोगिताकत्वं तु घटत्वावच्छिन्नप्रतियोगितानिरूपिताऽनुयोगिता, सा च घटादिरूपविशेषणप्रतियोगिकसंसर्गतया भासते, अनुयोगितायां घटत्वावच्छिन्नप्रतियोगितानिरूपितत्वं संसर्गतावच्छेदकतया भासते, नञर्थावच्छेदकाऽनुयोगितायां घटादेरन्वये तु घटत्वावच्छिन्नप्रतियोगितानिरूपितत्वं संसर्गः घटादिनिष्ठप्रतियोगिताप्रतियोगिकं निरूप्यत्वं घटादिरूपप्रतियोगिप्रतियोगिकत्वमपि घटादिसम्बन्धरूपम् ॥ यद्वा घटादेः सम्बन्धोऽभावेऽनुयोगित्वम्, घटत्वादेरपि अभावविशेषणात्तस्य स्वावच्छिन्नप्रतियोगिताकत्वं सम्बन्धः। अनुयोगि-

तायां घटाऽन्वये तु घटादिपारतन्त्र्येण घटत्वान्वयः, सर्वत्रैवं विशिष्टवैशिष्ट्यबोधरीतिः कम्बुग्रीवादिमत्त्वस्य गुरुत्वेनाऽनवच्छेदकत्वे तु—अवच्छिन्नप्रतियोगिताकत्वं खण्डशः प्रसिद्धमिति स सम्बन्धस्तत्र, न तु कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकत्वम्, भ्रमत्वापत्तेः। प्रतियोगितांऽशे कम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्य भ्रमः। तदवच्छिन्नत्वस्य प्रसिद्धिस्तु विषयित्वसम्बन्धावच्छिन्नकम्बुग्रीवादिमत्त्वावच्छिन्नविशिष्टाऽभावस्य घटत्वादिविशिष्टाऽभावाऽसमनियतस्य प्रतियोगितायां भवति तथा वृत्त्यनियामकतया विषयिताया अभावप्रतियोगिताऽवच्छेदकसम्बन्धताविरहेऽपि तेन सम्बन्धेन तद्विशिष्टवद्भेदप्रतियोगितावच्छेदकतायां च प्रसिद्धिः। तद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकतदभाववतितद्रूपेण तत्संसर्गकतत्प्रकारकज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तद्भ्रमः, विशिष्टसम्बन्धाऽप्रसिद्धिस्थले व्यधिकरण तद्रूपावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताकाऽभावप्रसिद्ध्या तादृशाऽभावमादाय तद्रूपावच्छिन्नतत्सम्बन्धेन भ्रमत्वनिर्वाहात्, यादशसम्बन्धेन यद्रूपवत्त्वयत्प्रतियोगिकत्वयद्धर्म्यनुयोगिकत्वानां त्रयाणामभावः तद्रूपविशेषिततत्सम्बन्धेन तत्प्रकारकं तद्धर्मिविशेष्यकं ज्ञानं तद्रूपावच्छिन्नतत्सम्बन्धेन तस्य तद्धर्मिणि भ्रमः वस्तुतस्तु गुरुधर्मस्याऽवच्छेदकत्वमावश्यकम् , कम्बुग्रीवादिमान्नास्तीतिवाक्यस्य घटत्वाऽनुपस्थितौ प्रामाण्यात्। अन्वयितावच्छेदकता च यत्र यद्रूपान्तराऽवच्छिन्ना तत्र तद्रूपविशिष्टाऽवच्छिन्नप्रतियोगिताकत्वम् अभावे भासते ॥

अथ व्यधिकरणधर्मावच्छिन्नाभावस्य व्यधिकरणधर्मवत् प्रतियोगिविशेषणतया भासमानः समानाधिकरणधर्मोऽपि प्रतियोगितावच्छेदकः, घटत्वेन घटपटोभयं नास्तीतिप्रतीतिविषयाऽभावस्य प्रतियोगिताया अव्यासज्ज्यवृत्तित्वेऽपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वं निर्वहते। घटत्वादेः तत्प्रतियोगितासमानाधिकरणत्वेऽपि प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणस्य घटत्वादिसहितघटपटोभयत्वादेः प्रतियोगिताऽधिकरणघटपटयोरपर्याप्तेः, अथवा— व्यासज्ज्यवृत्तितदभावप्रतियोगिताऽवच्छेदकतापर्याप्त्यधिकरणघटत्वपटत्वोभयत्वयोरधिकरणाऽप्रसिद्ध्या तादृशाऽभावविरोध्यधिकरणताया अप्यप्रसिद्ध्या तस्य व्यधिकरणधर्मेणाऽभावस्य केवलान्वयित्वमुपपद्यते। घटत्वेन पटो नास्तीत्यादौ यद्धर्मावच्छिन्नप्रतियोगिताकत्वं तृतीयान्तेनाऽभावे प्रत्याय्यते यश्च धर्मोऽभावनिरूपितप्रतियोगिनिष्ठप्रकारताऽवच्छेदकतया भासते तदुभयपर्याप्तप्रतियोगितावच्छेदकत्वम् अभावांऽशे प्रतियोगिनः सम्बन्धतया भासते। अभावांऽशे धर्मान्तरावच्छिन्नप्रतियोगिताकत्वबोधकतृतीयान्तासमभिव्याहारस्थले तु यादृशधर्मोऽन्वयितावच्छेदकस्तत्पर्याप्तिप्रतियोगितावच्छेदकताकत्वमेव। सम्बन्ध इति ॥

अथ ध्वंसप्रागभावयोरत्यन्ताऽभावविरोधितामतेऽन्तरा श्यामे रक्तं रूपं नास्तीत्यादिव्यवहारानुरोधेन ध्वंसप्रागभावयोरपि समयविशेषावच्छेदेन सामान्याविच्छन्नप्रतियोगिकत्वोपगमेन तयोर्नञा प्रतिपादनात्। असदातनभावरूपाऽभावाऽभावसाधारण्यानुरोधेन प्रवृत्तिनिमित्ततया तयोर्नञ्पदवाच्यत्वात्। तद्वचक्तिर्नास्तीति तद्वचक्तित्वावच्छिन्नप्रतियोगिताकयोर्ध्वंसप्रागभावयोर्बोधनात् ध्वंसप्रागभावसाधारणशक्तेरावश्यकत्वात्। तद्वचक्तिध्वंसप्रागभावाधिकरणे तदत्यन्ताभावस्याऽनंगीकारात्। न घट इतिप्रमाणकर्तुर्मते घटभेदबोधस्याऽविरोधात्, सर्वत्र तथाप्रयोगाऽस्वीकारात्। शुद्धप्रतियोगितायाः सम्बन्धेऽबाधितविशेषाऽन्तराऽभावबोधकतया तत्तद्वाक्यानां प्रामाण्यांगीकारात्, अव्युत्पन्नानां तदर्हप्रामाण्यात्। वस्तुगत्या नीलघटादिमति नीलघटादौ च 'अत्र न घटः', 'अयं न घटः' इत्यादिप्रयोगप्रामाण्यात्। नञादिपदजन्यशाब्दज्ञाने प्रतियोगितारूपसंसर्गे प्रतियोगितासंसर्गाविच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणपर्याप्ताऽवच्छेदकताकत्वभाननियमवत्, प्रतियोगितासम्बन्धेन प्रतियोगिप्रकारकज्ञानमात्रे तथाविधभाननियमः। 'चैत्रादन्य' इत्यत्र चैत्रप्रतियोगिकभेदानुयोगीत्यर्थः। 'न पचति चैत्र' इत्यत्र पाककृत्यभाववांश्चैत्र इतिबोधः। येन सम्बधेन 'अयमिहे'-तिव्यवहारस्तत्सम्बन्धेन 'नाऽयमिहे'-तिविपरीतव्यवहारः। नञोऽसत्त्वे यत्पदार्थे यत्पदार्थो विशेषणतया भासते तत्र

नञा तत्पदार्थे तत्पदार्थाऽभावो विशेषणतयैव प्रत्याय्यते। 'भूतले न घट' इत्यत्र भूतलवृत्तित्वाभाववान् घट इतिबोधः, न तु भूतलवृत्तित्ववान् 'घटाभाव इति। यत्र नञोऽसत्त्वे प्रतियोग्यनुयोगिनोर्यः सम्बन्धो भासते तत्रैव नञा तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावः प्रत्याय्यते। अथ 'यजतिषु येयजामहं करोति', 'नानुयाजेषु येयजामहं करोती'-त्यत्र पर्युदासाश्रयात् अनुयाजसम्बन्धाश्रयेण 'अनुयाजव्यतिरिक्तेषु यजतिषु येयजामह इतिमन्त्रं कुर्यादिति'वाक्यार्थबोधे नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वम्। यजतिषु येयजामहं करोति तत् अनुयाजव्यतिरिक्तेषु यजतिविशेषेषु येयजामहमन्त्रं कुर्यादिति, यजतिषु नानुयाजेष्वित्यत्र सप्तमीसाधुत्वमात्रार्था च॥

'अनीलो घट' इत्यत्र भेदवानिति लक्षणया नञर्थः। अश्राद्धभोजो असूर्यम्पश्या—इत्यत्र श्राद्धभोजनसूर्यदर्शनकर्तृभिन्नाऽभिन्नविप्रराजदाराद्यर्थः। तादृशक्रियाकर्तृत्वाऽभाववानिति यावत्। अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यत्र षोडशिपात्रग्रहणस्य निषेधः प्रतिषेधार्थः। न कलञ्जं भक्षयेदित्यत्रापि भक्षणनिषेधार्थः। दीक्षितो न ददाति न जुहोति इत्यादौ दानहोमनिषेधवान् दीक्षित इतिबोधः। ऋतौ स्त्रियं नोपेयादित्यत्र ऋत्वधिकृतस्य स्वस्त्रीगमन निषेधः क्रियते। निषेधवाक्यानाम् अनर्थहेतुक्रियानिवृत्तिजनकत्वेनैव पुरुषार्थाऽनुबन्धित्वम्। घटो नास्तीत्यत्र यथा नञ् घटाऽसत्त्वं गमयति, तथा लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनामेव बोधयति। निषेधवाक्यस्थले निवर्तनावाक्यार्थः। नेक्षेतोद्यन्तमादित्यमित्यत्र पर्युदासः विध्यर्थप्रवर्तनेक्षणरूपविरोधिनिवर्तनार्थः धात्वर्थविरोध्यनीक्षणसंकल्प एव लक्षणया प्रतिपाद्यते तस्य कर्तव्यत्वसंभवात्; आदित्यविषयकाऽनीक्षणसंकल्पं भावयेदिति तत्र वाक्यार्थः। उपसंहारे तन्मात्रसंकोचः। पर्युदासे तदन्यमात्रसंकोचार्थः। रजतं न देयमित्यत्र अदानार्थस्य निन्दितत्वे तात्पर्यात्, रजतनिषेधप्राशस्त्यं वा। रात्रौ श्राद्धं न कुर्वीत अमावास्यायां श्राद्धं कुर्वीतेत्यत्र रात्रिभिन्नाऽमावास्याकालः श्राद्धकृतिक्रियायोग्य इतिविधानात् नञो रात्रिभिन्नतार्थः। ब्राह्मणाय दीयताम् अशौचिने न दातव्यमित्यत्र अशुचिभिन्नब्राह्मणाय दानविधिः अशौचिपदे शुद्धिविरोधिमालिन्यादिपदार्थाऽऽवृतजने तात्पर्यात् विरोधार्थो नञ्॥ ४४८-४५१॥

**विकल्पः पर्युदासो वा विरोधो वा निषिद्धता।**
**अतिरिक्तत्वमित्येवं नञर्थाः विधिसंश्रिता॥४५२॥**

निवर्तको निषेधः, निषेधस्य स्वनिवर्तकत्वाऽन्यथाऽनुपपत्त्या निषेध्यस्य पुरुषनिष्ठाऽनिष्टसाधनत्वप्रत्यायनेन पुरुषनिवृत्तिजनकत्वेनाऽर्थवत्त्वम्। तत्र ब्राह्मणं न हन्यादित्यत्र न धात्वर्थस्य नञर्थेनाऽन्वयः, तस्य प्रत्ययार्थभावनोपसर्जनत्वेनोपस्थितेः, न ह्यन्योपसर्जनत्वेनोपस्थितमन्यत्राऽन्वेति, अतः प्रत्ययार्थस्य नञर्थेनाऽन्वयः, नञः स्वभावः स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम्। लिङ्समभिव्याहृतो नञ् लिङर्थप्रवर्तनाविरोधिनीं निवर्तनां बोधयति। यत्र प्रत्ययार्थस्य नञर्थे बाधस्तत्र धात्वर्थस्याऽन्वयः। स्नातकव्रताऽन्तर्गते 'उद्यदादित्यं नेक्षेते'-त्यत्र प्रत्ययार्थान्वयो न, किन्तु विध्यर्थप्रवर्तनाविरोधिनिवर्तनायास्तादृशनञा बोधनम्। सूर्याऽनीक्षणसंकल्पोऽनुष्ठेयत्वेन विधीयते इति पर्युदासार्थः। शास्त्रप्राप्तस्य मन्त्रकरणस्य 'न कुर्यादिति' प्रतिषेधे विकल्पः, न तु बाधः, निरपेक्षयोर्बाध्यबाधकभावः, न तु सापेक्षयोः, तस्माच्छास्त्रविहितस्य शास्त्रान्तरेण प्रतिषेधे विकल्पः। विरोधस्तु गुणत्वं न कर्मत्वम्, गुणत्वविरुद्धं कर्मत्वमिति। निषेधस्तु 'मा कुर्वि'-ति क्रियाप्रतिरोधः। अतिरिक्तत्वमिति 'गन्धौ न पृथिवी'-ति पृथिवीभिन्नो गन्ध इति। अथ यत्रोत्तरपदेन नञ् तत्र पर्युदासः, 'ह्रदो न वह्निमानि'-त्यत्र तु नञर्थो बाधः वह्न्यभाववान् ह्रद इति। अनित्यमित्यत्र नञो नित्यप्रतिद्वन्द्वर्थः। बलीयसा दुर्बलं बाध्यते, रागतः प्रवृत्तिविषये निषेधवाक्यं बलीयः। यत्र नञ् नास्ति, किन्तु वर्जयेत् त्यजेत् परिहरेदित्यादिनिवर्तकधात्वर्थास्तत्र वर्जनाद्यर्थानामेवेष्टसाधनत्वेन प्रवृत्तिनिवृत्तिसंयोगवियोगाद्यर्थरूपधात्वर्थेनाऽन्वय एव, धात्वर्थे इष्टसाधनत्वं प्रत्याय्यम्। कुत्रचिद्विपरीतकरणे प्रत्यवायादिर्वा तत्करणं वा तथात्वं स्यादतस्तत्र तत्र विशेषार्था अनुकूलनीयाः, नैकत्राऽऽग्रहः। अर्थानां व्यवहारानुसरणजीवनात्। अथ अप्रमाणमित्यत्र

प्रमाणाऽभासोऽर्थः. न तु प्रमाणाऽभावोऽर्थः प्रतिपादनविषयत्वात् घटो न द्वावित्यत्र घटे द्वित्वाभावः। घटपटोभयाभावीयप्रतियोगितावच्छेदकतापर्याप्तिरुभयत्वे तद्धर्मितावच्छेदकतापन्नेः घटत्वे पटत्वे च, तादृशाऽभावप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणस्यैवाऽत्राऽवर्तमानत्वेन तदवच्छिन्ननिरूपकत्वाऽप्रसिद्धया विरोध्यधिकरणताया असत्तया तदवच्छिन्नाऽभावस्य केवलान्वयित्वम् ॥ घटपटावत्रेतिप्रतीतेः उभयत्वतद्धर्मितावच्छेदकतापन्नघटत्वपटत्वैतत्समुदायपर्याप्ताऽवच्छेदकताकनिरूपकताकाऽधिकरणत्वाऽङ्गीकारस्याऽवश्यकत्वेन तादृशाधिकरणतावति निरुक्ताऽभावस्याऽसत्त्वेन न केवलाऽन्वयित्वमिति तु न शंकनीयम्। व्यधिकरणधर्मावच्छिन्नाऽभावप्रामाण्ये, भेदस्य प्रतियोग्यंशप्रकारीभूतधर्मविशिष्टप्रतियोगितावच्छेदकस्याऽधिकरणतया समं विरोधित्वेन, अत्यन्ताभावस्य तु तादृशाऽवच्छेदकावच्छिन्नाधिकरणतया समं विरोधित्वेन, व्यधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितायाः स्वाश्रयांशे प्रकारीभूतधर्मस्याऽनवच्छेदकत्वेऽपि केवलान्वयित्वाऽनुपपत्तिशंकाऽनवकाशात्। यदि स्वप्रतियोगिनिष्ठविशेष्यतानिरूपितप्रकारताश्रयधर्मविशिष्टस्वप्रतियोगितावच्छेदकनिष्ठस्वप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपकस्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाऽधिकरणतया समं विरोध इति स्वीक्रियते तदा समनियताभावानमैक्यात् सकलस्य व्यधिकरणधर्मावच्छिन्नाभावस्य तथात्वेन व्यधिकरणधर्मेण साध्याद्यभावस्याऽसद्भावप्रसंगः। तद्वारणार्थम् स्वनिरूपकाऽभावस्य स्वाश्रयनिष्ठविशेष्यतानिरूपितप्रकारतावद्धर्मविशिष्टस्वावच्छेदकावच्छिन्नाधिकरणतया सार्धं विरोधस्य कथनात्। समनियताऽभावानामैक्येऽपि अवच्छेदकभेदेन प्रतियोगिताया भिन्नत्वेन उक्तदोषव्युदासात्। यद्वा—स्वनिरूपकाऽभावस्य स्वनिष्ठसंसर्गतानिरूपितप्रकारताऽवच्छेदकतात्वाऽवच्छिन्नपर्याप्त्यनुयोगिताऽवच्छेदकरूपावच्छिन्नाऽनुयोगिताकपर्याप्तिकसामानाधिकरण्यसम्बन्धावच्छिन्नाऽवच्छेदकताकस्वावच्छेदकनिष्ठस्वावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नाऽवच्छेदकताकस्वावच्छेदकसम्बन्धावच्छिन्ननिरूपकताकाऽधिकरणतया सममेव विरोध इति न केवलान्वयित्वाऽनुपपत्तिः। स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य स्वप्रतियोगितावच्छेदकतायां निवेशात्,—न महानसीयवह्नित्वेन वह्न्यभावस्य स्वप्रतियोगितानिष्ठसंसर्गतानिरूपितप्रकारतावच्छेदकवह्नित्वविशिष्टस्वप्रतियोगितावच्छेदकैकदेशवह्नित्वावच्छिन्ननिरूपकताकाऽधिकरणत्वस्य पर्वतादौ सत्त्वेन तत्राऽवृत्तित्वप्रसंगः॥ यद्वा—वह्निधूमोभयत्वविशिष्टवह्नित्वावच्छिन्नाधिकरणत्वस्य पर्वते सत्तया वह्नित्वेन वह्निधूमोभयाभावस्याऽवर्तमानत्वप्रसक्तिवारणाय 'स्वनिरूपकाऽभावस्य स्वविशिष्टावच्छेदकताकनिरूपकताकाऽधिकरणतया विरोधो वाच्यः, वैशिष्ट्यं च—स्वविशिष्टप्रकारतावच्छेदकतापर्याप्त्यधिकरणनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नाऽवच्छेदकत्व-स्वावच्छेदकतापर्याप्त्यधिकरणनिष्ठत्वोभयसम्बन्धेन, वैशिष्ट्यं च—स्वनिष्ठसंसर्गताकत्व-स्वावच्छेदकधर्माऽव्याप्यव्यासज्ज्यवृत्तिधर्मानवच्छिन्नत्वोभयसम्बन्धेन, तेनोक्ताऽनुपपत्त्यनवकाशः॥ यद्वा-स्वनिरूपकाऽभावस्य—स्वविशिष्टावच्छेदकनिरूपकताकाधिकरणतया सार्धं विरोधः, वैशिष्ट्यं च-स्वविशिष्टनिरूपकतावच्छेदकतापर्याप्त्यधिकरणपर्याप्तसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकताकत्व-स्वावच्छेदकतापर्याप्त्यधिकरणपर्याप्तत्वोभयसम्बन्धेन निरूपकतायां वैशिष्ट्यं च—स्वनिरूपकानुयोगितानिरूपितत्व-स्वावच्छेदकाऽव्याप्यव्यासज्ज्यवृत्तिधर्मानवच्छिन्नत्वोभयसम्बन्धेन। तथा च नोक्तानुपपत्तिप्रससंगः॥ यद्वा—स्वनिरूपकाऽभावस्य—स्वविशिष्टावच्छेदकताकनिरूपकताकाऽधिकरणतया साकं विरोध इति। वैशिष्ट्यं च—स्वावच्छेदकताघटकसम्बन्धावच्छिन्नत्व—स्वावच्छेदकतापर्याप्त्यधिकरणनिष्ठत्व—स्वनिरूपकानुयोगिताकनिरूपकतावत्त्वैतत्त्रितयसम्बन्धेन, निरूपकतावत्ता च स्वावच्छेदकतापर्याप्त्यधिकरणनिष्ठसामानाधिकरण्यसम्बन्धावच्छिन्नाऽवच्छेदकताकत्व-स्वावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नाऽभेदसम्बन्धावच्छिन्नप्रमीयप्रकारतानिरूपितविशेष्यताऽवच्छेदकतापर्याप्त्यधिकरणनिष्ठत्वोभयसम्बन्धेन, तेन वह्निर्वह्निधूमोभयमित्यप्रयोगात् पर्वते सत्तया वह्नित्वेन वह्निधूमोभयाऽभावस्याऽवर्त-

मानत्वप्रसक्तिनिरास इति ॥ ४५२ ॥

**न्यूनवारकपर्याप्तिश्चेतरस्य निवारकः ।**
**धर्मसंसर्गता-तत्त्वादीनां दोषनिवारकः ॥४५३॥**

साध्यतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारो यथा—साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकत्वं, यद्वा—स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम् ॥ अथ—साध्यतावच्छेदकतेतरप्रचारकपर्याप्तिनिवेशप्रकारः—साध्यतावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वम्, यद्वा—साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वम्, यद्वा—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम् ॥ अथ—साध्यतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारः—साध्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नत्वे सति साध्यतावच्छेदकतातिरिक्तधर्मानवच्छिन्नत्वम् । अथवा—साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपाऽवच्छिन्नानुयोगिताकस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वम् । अथवा—स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति ॥ अथ—साध्यतानिरूपितसंसर्गतावच्छेदकतान्यूनवारकपर्याप्तिनिवेशप्रकारः—साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वम् । साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताऽवच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिकाऽवच्छेदकताकसंसर्गताकत्वम् । यद्वा—स्वनिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति ॥ अथ—साध्यतानिरूपितसंसर्गतावच्छेदकतेतरवारकपर्याप्तिनिवेशप्रकारः—साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्माऽनवच्छिन्नसंसर्गताकत्वम् । यद्वा—साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वम् । यद्वा—स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति । अथ—साध्यनिरूपितसंसर्गतावच्छेदकतान्यूनेतरवारकपर्याप्तिद्वयनिवेशप्रकारः—साध्यतानिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नसंसर्गताकत्वे सति साध्यतानिरूपितसंसर्गतावच्छेदकातिरिक्तधर्मानवच्छिन्नसंसर्गताकत्वम् । यद्वा—साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकस्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वम्, यद्वा—स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वमिति ॥ ४५३ ॥

**पदार्थभिन्नता शब्दवाच्यता वस्तुसत्यता ।**
**विशिष्टयोग्यता तत्र संसृष्टव्यवहारिता ॥ ४५४ ॥**

आनन्दघनः परमात्मा, सर्वज्ञः सर्वशक्तिरन्वयी व्यतिरेकी सर्वनियामको नित्यप्रत्यक्षदर्शी च । ब्रह्मधामाऽक्षरपदं दिव्यतेजः सर्वतेजःप्रकाशकं भूम व्यापकं साक्षि चान्तर्यामि परब्रह्मान्वितं सर्वनिरीक्षकं च ब्रह्मलोकात्मकं पदं तदेवाऽमूर्तमपि सुमूर्तं चेति सर्वधारकम् । 'द्वे ब्रह्मणी वेदितव्ये परं चाऽपरं चे'ति । 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्' । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' । 'उत्तमः पुरुषस्त्वन्यः

परमात्मेत्युदाहृतः'। 'मूर्तं चाऽमूर्तं च'। 'यत्र पूर्वे साध्याः सन्ति देवाः'। 'वृष्णस्य परमं पदमवभाति भूरि'। 'तद्धाम परमं मम',। 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः'। 'पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि'। 'त्रिपादूर्ध्वमुदैत् पुरुषः'। 'यत्र गावो भूरिशृंगा अयासः'। 'प्रधानपुरुषेश्वराः'। 'प्रकृतेः पुरुषः परः'। 'वासुदेवादयो व्यूहाः'। संकर्षणादयस्तस्य मूर्तयः'। 'नारायणाद् ब्रह्मा नारायणाद् रुद्रो जायते'। 'नोदतिष्ठत्तदा विराट्'। 'ब्रह्माण्डाभिमानिनः'। 'हिरण्यगर्भाद्या ईश्वराः'.। 'तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति'। 'जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः'। 'पृथमात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेति'। 'तमेव विदित्वाऽतिमृत्युमेति'। मायां तु प्रकृतिं विद्यात्'। 'अजामेकां लोहितशुक्लकृष्णाम्'। तदानीं तम आसीत्केवलम्'। 'एकाकी न रमते द्वितीयमैच्छत्'। 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'। 'सः सच्च त्याच्चाऽभवत्'। 'रूपं रूपं प्रतिरूपो बभूव'। 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता'। इत्यादिश्रुतिस्मृतिभिः परब्रह्मणो ब्रह्मणो मुक्तानामीश्वराणां जीवानां मायायाश्च स्वरूपतो भिन्नता प्रतिपाद्यते। 'पृथगात्मानं प्रेरितारं च मत्वा ततस्तेनाऽमृतत्वमेती'ति स्फुटतया भेदज्ञानस्य मोक्षहेतुत्वम्। जीवेश्वरमायानां नित्यत्वश्रुतेस्तत्प्रतियोगिकभेदानां नित्यतयैव ज्ञानं स्वरूपज्ञानाऽधीनमिति स्वरूपोपासनज्ञानाऽगतया भेदज्ञानं विवेकज्ञानविधया माहात्म्यज्ञानोपबृंहणतया च मोक्षदमिति ॥

प्रत्यसिद्धो भेदस्तेजस्तिमिरयोः, घटपटयोः, भेदप्रत्यक्षेऽधिकरणप्रत्यक्षस्य प्रयोजकत्वात्, 'ईश्वरो न घटः' 'जोवो न शरीरमि'तिप्रत्यक्षतया सिद्धेः। ईश्वरधर्मिको जीवप्रतियोगिको भेदः सर्वज्ञस्य तस्य प्रत्यक्षः, ईश्वरप्रतियोगिको जीवधर्मिको भेदश्च जीवस्य प्रत्यक्षः,। 'भेदः सत्यः सत्यप्रतियोगिकत्वादि'त्यनुमानमपि। न च—'भेदः असत्यः कल्पितघटादिप्रतियोगिकत्वादि'-ति सत्प्रतिपक्ष इति वाच्यम्। घटादिसाधनप्रवाहस्याऽनादित्वेनाऽनादित्वात्। अर्थक्रियाकारित्वादिसाक्षात्सिद्धानामसत्यत्वे बाधकत्वात्। अथ तव सिद्धसाधनमिति चेन्न, विप्रतिपन्नं प्रति प्रयोगात्, मम तु प्रत्यक्षं सत्यत्वम्। अथ ममाऽपि प्रत्यक्षम् असत्यत्वम्, ध्वंसादिति चेन्न। यदि असत्यत्वं तव सत्यं, तदेव तर्हि सत्यत्वाऽभावो वा सत्यत्वभेदो मम त्वदुक्त्या सत्य इति तवैव व्याघातः। भेदं स्वीकृत्यैव 'भेदो नास्ती'तिप्रयोक्तॄणां भेदबाधकानां भेदविषयकत्वेन भेदस्य दुरपह्नवत्वात्। 'अस्थूलमनण्वि'त्यादिश्रुतिभिरेव स्थूलाऽण्वादिभेदानां प्रतिपादितत्वात्। अथ—अस्थूलमित्यादौ स्थूलाऽत्यन्ताभाव एव प्रतिपाद्यते, न विद्यते स्थूलं यत्रेति। एतद्विधया सर्वं द्वैतात्यन्ताभाववद्भवति। अथ इष्टमेव, प्रपञ्चानां मिथ्यात्वात्। तन्न। तव मिथ्यात्वहेतोः सत्यत्वे व्याघातात्। असत्यत्वे तवेष्टाऽसाधकत्वम् अथ प्रपञ्चो मिथ्या ब्रह्मभिन्नत्वात्, इति चेन्न, तव हेतोर्ब्रह्मभिन्नत्वेन मिथ्यात्वादसाधकत्वात्, साधकत्वे वाऽनवस्थानात्, ब्रह्मणो भिन्नत्वस्य चैकत्राऽप्रसक्तेर्हेत्वसिद्धिश्च, प्रपञ्चे तु ब्रह्मभेदस्य ब्रह्मणो नित्यतया नित्यस्याऽऽश्रयस्याऽपि नित्यत्वेन मिथ्यात्वस्य बाधात्। मिथ्यापदार्थस्य मिथ्यात्वसाधने तत्राऽपि मिथ्यात्वसाधनमित्यनवस्थानात् सिद्धसाधनाच्च ॥ 'अविनाशी वाऽरेऽयमात्मे' त्यनेनापि विनाशशीलितो भिन्नतोक्ताऽऽत्मनः। 'अनुच्छित्तिधर्म' इत्यनेन उच्छेदधर्मभिन्न आत्मा कथितः। भेदः पारमार्थिकः पारमार्थिकप्रतियोगिकत्वात्, ब्रह्मभिन्नताविशिष्टसर्वस्य पारमार्थिकाऽव्ययविसत्यतया अविरोधात्। 'आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्। पृथिवीत्ववत्'। 'जीवः ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाऽधिकरणम्, ब्रह्माऽननुसंहितदुःखाऽनुसन्धातृत्वात्, व्यतिरेकेण ब्रह्मवत्'। 'ब्रह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणम्, जीवाऽनुसंहितदुःखाऽननुसन्धातृत्वात्, व्यतिरेकेण ब्रह्मवत्'। 'ब्राह्म जीवप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं, जीवानुसंहितदुःखाऽननुसन्धातृत्वात्, व्यतिरेकेण जोववत्'। 'घटः पटप्रतियोगिकतादात्म्याधिकरणं न भवति, प्रतियोगिसमानाधिकरण्यावच्छेदकानवच्छिन्नपटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वात्, व्यतिरेकेण पटवत्। तत्राऽऽद्यम्

आत्मनां परस्परं भेदस्य, द्वितीयं जीवधर्मिकेश्वर-भेदस्य, तृतीयम् ईश्वरधर्मिकजीवभेदस्य चतुर्थं घटपटादिभेदस्य, साधकं बोध्यम्। 'अहं नेदानीमानन्दवानि'त्यादिप्रत्यक्षस्याऽबाधितत्वेनाऽल्पज्ञत्वसंसारित्वादिहेतुकं जीवे ब्रह्मभेदाऽनुमानं सुवचम्। भेदस्याऽनादित्वात्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगायजोऽन्यः'। 'नित्यो नित्यानां चेतनश्चेतनानाम्'। 'य आत्मनि तिष्ठन्'। 'सर्वे एव आत्मानः सदर्पिताः'। 'विद्वान् पापपुण्ये विधूय निरञ्जनः परमं साम्यमुपैती'ति मुक्तावपि भेदगर्भसाम्यबोधनात् निर्दुःखत्वादिनाऽपहतपाप्मत्वादिना च साम्यबोधनाय—परममिति। भेदश्रुतीनां षड्विधतात्पर्यलिंगवत्त्वात् भेदः सत्यः, तथाहि—आथर्वणे-'द्वा सुपर्णे'त्याद्युपक्रमः। 'परमं साम्यमुपैती'त्युपसंहारः। 'तयोरन्यः, अनश्नन्नन्यः, अन्यमीश'मित्याद्यभ्यासः। 'परमेश्वरसम्बन्धिभेदस्य कालत्रयाऽबाध्यस्य शास्त्रं विनाऽप्राप्तेरपूर्वता। 'पुण्यपापे विधूयेति' फलम्। 'अस्य महिमानमि'तिस्तुतिरूपोऽर्थवादः। अत्ति, अनश्नन्नि'त्युपपत्तिः ॥

अथाऽभेदश्रुतीनां षड्विधतात्पर्यवत्त्वम्—आर्थवणप्रथममुण्डके—'कस्मिन्नु खलु-भगवो विज्ञाते सर्वमिदं विज्ञानं भवती'तिशौनकप्रश्नानन्तरं 'द्वे विद्ये वेदितव्ये' इति विद्याद्वयम् अवतार्य 'ऋग्वेदादि'लक्षणाम् अपरां विद्यामुक्त्वा 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमि'त्यादिना परविद्याविषयमक्षरं प्रतिपादयताऽभेदस्योपक्रमः। अथ द्वितीयमुण्डके—'पुरुष एवेदं विश्वम्' 'ब्रह्मैवेदं विश्वमिदं वरिष्ठमि'ति मध्ये परामर्शः। तृतीयमुण्डकं च—'परेऽव्यये सर्वे एकीभवन्ति'। 'स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवती' त्यैक्यलक्षणफलेनोपसंहाराच्च महाप्रकरणस्यैकपरत्वे स्थिते तद्विपरीततात्पर्यकल्पनाऽयोगात् परमसाम्यमैक्यमेव। इत्थं च ऽभ्यासोपपत्ती काल्पनिकभेदपरे, भेदस्य प्रत्यक्षेणं ततुल्यप्रमाणेन वा प्राप्तत्वात् नाऽपूर्वत्वं फलाऽर्थवादौ ऐक्यपक्षेऽपि अविरुद्धौ, इति, तन्न।

तात्पर्यभंगात्—तथाहि-'कस्मिन्नु खलु भगव' इत्यादावभेदाऽप्रतिपादनात्, नहि एकवचनेन प्रश्नात् अभेदप्रत्यायनम, प्रकृते विद्याद्वयज्ञानेनोत्तरेण बाधात् नोपक्रमोऽभेदविषयः, उपक्रमे जीवोपस्थापकाऽभावेनाऽभेदः सर्वैः सह वक्तव्यः, स च जन्यजनकभावादेव, नित्याऽनित्ययोरभेदाऽसंभवात्, न जीवो जन्यः, येन तदभेद उपक्रान्तः स्यात्। 'पुरुष एवेदं विश्वं कर्मं तपो ब्रह्म परामृतमि'त्यत्राऽपि जन्यजनकभावेनोक्तत्वात् शरीरविशिष्टतया जन्यत्वकथनात्। ब्रह्मैवेदममृतं पुरस्तादि'त्यादावपि विशिष्टतया सर्वात्मकत्वकथनात्, एकीभावोऽपि साम्येनैव 'परेऽव्यये सर्वे एकीभवन्ति' 'यथा नद्यः स्पन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाये' त्यत्र 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि'त्यादिना साम्येन उपायनकथनात्। 'ब्रह्मैव भवती'-त्यस्य साम्ये पर्यवसानम् अविभागलक्षणाऽभेदोऽर्थः सकलप्रकरणाऽनुरोधात्। 'तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथे'-त्यनेन तु परब्रह्मणो ज्ञानवार्ताः कुरुथ अन्या वाचो विमुञ्चथेति बोध्यते। 'एषोऽन्तश्चरते बहुधा जायमानः' इत्यस्यापि अजायमानोऽन्तर्यामी सर्वेषामित्यर्थः। इत्येवमभेदे षड्विधलिंगतात्पर्यं भज्यते।

भेदश्रुतीनां तु षड्विधलिंगवत्त्वेन भेदे विशिष्टे तात्पर्यं स्पष्टं ज्ञायते। श्वेताश्वतरोपनिषदि—'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इत्युपक्रमो भेदबोधकः। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इत्युपसंहारस्य भेदे तात्पर्यम्। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्योऽभिचाकशीति' श्रुत्याऽपि भेदोऽभ्यस्तः। त्रिकालाऽबाध्यभेदस्याऽन्यतोऽप्राप्तत्वेन अपूर्वता। 'वीतशोक' इति फलम्। 'महिमानमि'त्यर्थवादः। 'अत्ति अनश्नन्नि'त्युपपत्तिः। तत्रैव प्रथमे चाऽध्याये—'पृथगात्मानं प्रेरितारं च मत्वे'ति। अनीशश्चात्मा बध्यते, ज्ञाऽज्ञौ द्वावजावीशाऽनीशाविति। द्वितीयेऽध्याये यदात्मत्वेन तु ब्रह्मतत्त्वम्। तृतीयेऽध्याये—यस्मात्परं नाऽपरमस्ति किञ्चिदि'त्यनेन यतो भिन्नं श्रेष्ठं नास्तीति प्रतिपाद्यते। चतुर्थेऽध्याये—अजो ह्येक इत्यादीनि। पञ्चमेऽध्याये विद्याऽविद्ये ईशते

यस्तु सोऽन्यः, कर्मफलभोक्तेत्यारम्य आराग्रमात्रो ह्यवरोऽपि दृष्टः,—तेषां संयोगहेतुरपरोऽपि दृष्टः। षष्ठेऽध्याये—परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयमिति। मोक्षधर्मे च—'अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयात्। यदा तु पश्यतेऽन्यं तमहन्यहनि काश्यप ॥ तदा स केवलीभूतः षड्विंशमनुपश्यति'। आश्वमेधिके च—'पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः' इत्यादिभिर्भेदो ज्ञाप्यते ॥

भेदाऽभेदश्रुतीनां न विरोधः—तथाहि—'ब्रह्मैव सन् ब्रह्माऽप्येति वार्थः, 'ब्राह्मणा विविदिषन्ति' 'ब्राह्मणो निर्वेदमायादि'त्यादिभिः 'भक्ता राजर्षय' इत्यपि भक्तिमद्ब्रह्मवेतृपरकत्वं 'स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गति'-मित्यादावपि ब्रह्मसम्बन्धेन ब्रह्मवेतृत्वप्राप्तौ परमगतिमत्त्वम्। 'यो देवानां प्रत्यबुद्धचत स एव तदभवदि' त्यादावपि देवो ब्रह्मवेत्ता भवन् मुक्तिं यातीति। मघवादीनां बृहस्पत्युपदेशो जन्मान्तरे चोपकारकः। काशीमरणादपि कीटादीनां ब्रह्मवेत्तृजन्मोत्तरं मुक्तिरिति। मनुराह—'ब्राह्मणः प्रव्रजेद् गृहादि'ति। द्वादशाऽध्याये—नैःश्रेयसं कर्मविधिं प्रशस्य 'इमं निबोधते'त्युपक्रम्य 'अस्मादप्रच्युतो विप्रः प्राप्नोति परमां गतिमि' त्युपसंहरति स्मेति ॥ 'अयमात्मा ब्रह्मे'तिमाण्डुक्योपनिषदि—प्रणवाऽभिन्नमात्मानं परब्रह्म वदति, ओमित्येतदक्षरमिदं सर्वमिति सर्वं ह्येतद् ब्रह्म अयमात्मा ब्रह्मे' त्युक्त्वा अकारोकारमकारेषु स्वरूपतया विश्वतैजसप्राज्ञतुरीयभावनां दर्शयित्वा प्रणवाऽभिन्नां विशिष्टगोचरामुपासनां दर्शयति। 'एक एव हि भूतात्मा भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादावपि अवस्थाभेदेन रूपभेदेन भिन्नत्वेऽपि विशिष्टैक्यप्रतिपादनपरमिति भेदे बाधकाऽभावः ॥ ४५४ ॥

**अवस्थाभेदतो भेदो भवेद्वैशिष्ट्यभेदतः।**
**अपृथक्सिद्धतादात्म्ये तात्पर्यं तत्र रूप्यते ॥४५५॥**

विशिष्टः परमात्मा स्वशरीरात्मककार्यावस्थाभेदेन भिन्नतया वर्ण्यते, यः कारणं परमात्मा सः सूक्ष्माऽवस्थजडचिद्विशिष्टः यः कार्यं परमात्मा स स्थूलावस्थजडचिद्विशिष्टः, देवदत्तविशिष्टाद् यज्ञदत्तविशिष्टो भिन्न इति तत्त्ववैष्टिचं भेदप्रयोजकम्। 'सन्मूलाः सौम्येमाः प्रजाः सदायतनाः'। 'ऐतदात्म्यमिदं सर्वम्' 'तत्सत्यं स आत्मा' 'तत्त्वमसी' त्यादौ चाऽपृथक्सिद्धविशेषणविशिष्टपरमात्माऽपृथक्सिद्धतादात्म्यतया वर्ण्यते। स्वरूपतस्तु शरीरशरीरिभिन्नताऽस्त्येव। 'स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो' इत्यत्राऽकारप्रश्लेषेण अतत्त्वमसीति जीवो ब्रह्मभिन्न इति वर्ण्यते। राजाऽसाविति तदीयत्वेन, सिंहो माणवक इति साम्येन, मृद्घट इत्यत्र, आत्मा वै जायते पुत्र इत्यत्र, कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेत्यत्र च, जन्यत्वेन, अपृथक्सिद्धत्वं प्रतीयते। 'ऐतदात्म्यमिदं सर्वमि' ति तु ऐतदात्म्यसम्बन्धोऽभ्यस्यते। 'सम्मूला' इत्यत्र विशिष्टब्रह्मकारणिकाः प्रजाः विशिष्टब्रह्मकार्यात्मिक्यो विशिष्टब्रह्माऽऽयतना इत्युक्तत्वेन स्वरूपतस्तेषां भेद एव। 'सौम्येमाः प्रजाः सर्वाः सति सम्पद्य न विदुः' 'सति सम्पद्यामहे'। 'नद्यः समुद्रमेवाऽपियन्ति' इत्यादौ लवणोदकदृष्टान्तेन लवणवत् अपार्थक्यमात्रं प्रदर्श्यते, न त्वैक्यम् ॥ ४५५ ॥

**जीवब्रह्मभिदा जीवेश्वरभेदस्तथा मिथः।**
**जीवानां भिन्नता ब्रह्मपरब्रह्मभिदा तथा ॥४५५॥**
**जीवमायाभिदा जीवपरब्रह्मभिदाऽपि च।**
**ईशमायाभिन्नता चेश्वरब्रह्मप्रभिन्नता ॥ ४५७ ॥**
**परब्रह्ममुक्तभेदो मिथो मुक्तप्रभिन्नता।**
**परब्रह्मेशभेदश्च मायापरेशभिन्नता ॥ ४५८ ॥**
**ब्रह्ममायाप्रभेदश्चाऽपीशानां भिन्नता तथा।**
**कालस्य भिन्नता चेमे भेदाः पञ्चदश स्मृताः ॥४५९॥**

ज्ञानघनः कर्मफलभोक्ताऽल्पज्ञो जीवः, स च साक्षिणा ब्रह्मणाऽन्तर्व्याप्तः। ब्रह्म प्रकाशरूपं, तेजोमयं सर्वभासाप्रदं व्यापकं धमादिस्वरूपं चेति प्रकाशघनं तत्। ईश्वरा ऐश्वर्यघनाः प्रधानपुरुषहिरण्यगर्भवैराजाद्यास्ते जीवब्रह्मभिन्ना मिथोऽपि भिन्नाः। जीवा मिथो भिन्ना भिन्नकर्मसंसारिणः।

ब्रह्म तु परब्रह्माऽऽनन्दघनसर्वनियामकपरब्रह्मतो भिन्नं मूर्तं सेवकमपि च। ईश्वराः शुद्धसत्त्वमायाऽधिष्ठातारः, मायाभिन्नाः। जीवः परब्रह्मभिन्नः शरीरत्वात्, शरीरि परब्रह्म। ईश्वराणां ब्रह्मतो भिन्नता, तेषां ब्रह्म साक्षि च। ब्रह्मधामस्था असंख्या मुक्ताः परब्रह्मसारूप्यमाप्ताः परब्रह्मभिन्नाः। मिथश्च मुक्ता भिन्ना अनन्ताः परब्रह्म चेश्वराश्च भिन्नाः परब्रह्मप्रदत्ताऽधिकारवन्तः। त्रिगुणाऽऽश्चर्यकारिणी माया महत्तत्त्वादिपृथिव्यन्ततत्त्वगर्भा नित्या जडाऽजा परमेशशक्तिः संसारजननी एका सा परमेश्वरशरीरं परमेशभिन्ना च माया विकारवती साम्यवैषम्यवती ब्रह्माऽधिष्ठिता सक्रिया सपरिणामा ब्रह्मभिन्ना परमात्मशक्तिः। ईश्वरा मिथो भिन्ना। कालो नित्यः सहकारिकारणं सृष्टिक्षोभकतत्त्वं परब्रह्मशक्तिश्च, कालः सर्वतत्त्वेभ्यो भिन्नः। इत्येवं भेदा मुख्याः, मुख्यतत्त्वानि बोध्यानि ॥

'अथ नानेव पश्यति' 'येऽन्यथा विदुः' 'अन्योऽसावन्योऽहमस्मि' 'द्वितीयाद्वै भयं भवति' तत्र तत्राऽपृथक्सिद्धतादात्म्यं स्तूयते। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणे'ति मुक्तौ भेदः श्रूयते। भेदस्य तात्त्विकत्वं विनाऽनुपपाद्यत्वादर्थापत्त्याऽपि भेदसिद्धिः। परब्रह्मणि प्रवृत्तिनिमित्तं तद्वचक्तित्वम्, नित्यज्ञानवत्त्वं वा, आत्मपरमात्मसाधारणी वोभयसाधारणात्मत्वसिद्धिः। जीवाः परस्परं भिद्यन्ते—सुखित्वदुःखित्वादिविरुद्धधर्माधिकरणत्वात्। 'अन्नमयं हि सौम्य मनः' इति त्वन्नभोजनेन प्राणसञ्चारेण ज्ञानात्मकमनःसञ्चारो भवतीत्यन्नस्योपकारिता कथिता अथाऽभेदश्रुतीनां बलवत्त्वे 'असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानं स्वयमकुरुत तस्मात् स्वकृतमुच्यते' इत्यादिभिर्ब्रह्मणोऽसत्त्वादिप्रसंगात् ॥४५६-४५९॥

**श्रुतिसिद्धः परमात्माऽनुमानविषयोऽपि सः।**
**तथा सर्वप्रमाणैश्च मननाऽर्होऽत्र रूप्यते ॥४६०॥**

श्रुतिसिद्धोऽपीश्वरो निजेतरतत्त्वव्यावृत्तो जगन्निर्माता सृष्टिमण्डले घटे कुलाल इव कार्यत्वेन मननविषयो भवति स उपास्यते। सृष्टिः सकर्तृका कार्यत्वात् घटवत् वेदादिरिव वा। अथ वेदादिः सृष्टिस्तर्हि पक्षत्वं, घटस्यापि पक्षत्वम् कर्माऽदृष्टद्वारा सृष्टिरिति नेश्वरोऽदृष्टवान्, न तत्सिद्धिः, अदृष्टजनिकाया ईश्वरकृतेरन्यथासिद्धत्वात्। दृष्टान्तं वेदाः पक्षपूर्वं तदाऽसृष्ट्या हेत्वसिद्धिः, दृष्टान्ताऽसिद्धचा पक्षेऽनुपसंहारात् नाऽनुमितिः, भागे सिद्धसाधनं च, यदि सृष्टिवेदयोः पृथक्सर्जनं तदैकसर्जनसंशयात् नेश्वरसिद्धिः, यदि वेदं सृष्ट्वाऽन्यसर्जनं तदा सृष्टिपक्षो निष्प्रयोजनः ॥

अथ सकर्तृकत्वं यदि कृतिमज्जन्यत्वं तदाऽस्मदादिनां सिद्धसाधनम्, यदि उपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं तदा सृष्ट्यन्तर्गतगगनस्योपादानकारणस्याऽभावादेव वेदशब्दकर्तृत्वं बाधितम्, यदि महत्तत्त्वादिगोचरत्वं तदा प्रधानपुरुषेणाऽर्थान्तरत्वम्, तदानीन्तनदृष्टान्ताऽसिद्धिश्च। सर्वसृष्टित्वेनेश्वरकृतकत्वेऽन्यकृतकत्वाऽभावप्रसंगश्च। सृष्ट्यारम्भे व्याप्तिप्रत्यवस्थानाश्रयाऽभावादेव व्याप्तिग्रहणाऽभावात् प्राक्सृष्टिकव्याप्त्यनुसन्धानेऽपि तदीयप्राथम्ये त्वाश्रयाऽभाव एव दोष इति तत्पूर्वं तत्पूर्वमिति कदापि व्याप्तिग्रहारम्भो न स्यादेवेत्यनुमानाऽनुत्थानम् ॥ अथ यदि योगजधर्मप्रत्यक्षाऽलौकिकसन्निकर्षवती श्रविकृतभिन्ना सृष्टिः पक्षः, सर्वगोचरसाक्षात्प्रत्यासत्त्यजन्योपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं साध्यम्, तथा च नोक्तदोषाः, अनीश्वराणां ज्ञानानां तादृशप्रत्यासत्त्यजन्यत्वाऽभावात्, घटादीनां च संग्रहात्, द्वचणुकानां नादध्वनिवेदानां चापि संग्रहात् तत्कर्ता सर्वज्ञः परमात्मा सिद्धचति। अत्र व्याप्तिः—यत्र कार्यत्वं, तत्र सर्वज्ञधीजन्यत्वं, सा सर्वत्र प्रवर्तते, आत्मनि व्यतिरेकिणी सा। व्याप्यधीजन्ये सर्वत्र व्यापकधीजन्यत्वसत्त्वात्, महाप्रलये विशिष्टकारणावस्थात्मककार्ये सर्वज्ञधीजन्यत्वादन्वयित्वम्, परमाण्वाकाशादीनां तु अहंकारजन्यत्वादेव द्वचणुकस्यांऽकुरोपचाराऽभावात् ॥ अत्र कार्यत्वम्, अवस्थान्तरत्वम्, कारणावस्थायामपि तत्त्वात् तत्र सर्वज्ञधीजन्यत्वात् नाऽनैकान्तिकत्वाद्या दोषाः, यत्स्वरूपतो न परिवर्तते तन्नित्यम्, अवस्थाः परिवर्तन्ते ता अनित्याः, साकारविशिष्टवादिनाम-

स्माकम् अनुपादानकत्वं नित्यत्वम्, सोपादानकत्वम् अनित्यत्वम्, तदेव च कार्यत्वम्, अतः सर्वज्ञधीमानीश्वरः सिद्ध्यति। सृष्ट्यसृष्टिव्यापकशक्तिमन्नियामकत्वं परमेश्वरत्वम्। स्वतन्त्रसंकल्पमात्रप्रयोज्याऽवस्थावत्त्वं कार्यत्वम्। यत्र यत्रैतादृशकार्यत्वं तत्र तत्रेश्वरीयज्ञानचिकीर्षाकृतिजन्यत्वं वर्तते, ज्ञानचिकीर्षाकृत्यन्यतमवत्त्वं कर्तृत्वम् प्रत्येकं साध्यत्रयम् अविनाभावेनाऽन्वययोर्योगात्॥ सिषाधयिषामात्रस्य पक्षत्वम्, जन्यकृतिजन्ये त्वन्यादृशी पक्षता। अथ असिषाधयिषिते व्याप्तिग्रहो बाध्येतेति चेन्न। साध्यसन्देहवति हेतुनिश्चयस्य गुणत्वेनाऽबाधात्, सन्देहं विना स्थापनाया अनुपक्रमात्, तत्र सिषाधयिषाया अवश्यम्भावात्, एकस्यैव पक्षतात्वेनाऽपरस्य तदनंगीकारात्। साध्ये ज्ञानेच्छायत्नानां विशेषणत्वेन विशिष्टस्य साध्यत्वं, पक्षताबलेनाऽभिमतविशेषसिद्धिश्च। अथ पुरुषो ब्रह्म वा सिद्ध्येत्, न तु परब्रह्मेति, तथा चाऽर्थान्तरम् इति चेन्न। विशिष्टस्यैव कारणत्वेन व्याप्याऽवस्थान्तरकारणताया अन्ततः परब्रह्मणि विश्रामात्, सकलाऽवस्थात्मकतदुपादानगोचरज्ञानेच्छाकृतीनां परमेशगुणानामेव सर्वत्र प्राप्तत्वान्नांऽशतः सिद्धसाधनतादि॥

ननु नित्यविज्ञानस्यैव कारणत्वमस्तु, ज्ञानी त्वन्यथासिद्ध इति चेन्न। नित्यज्ञानमेव ज्ञानधन आनन्दधनः परमात्मा, यद्वा-गुणत्वेऽनाधारस्य शक्तिस्वरूपतया कार्यशक्तस्याऽर्थात् सिद्धिः, विशिष्टस्य कारणत्वेन नाऽन्यथासिद्ध्यवकाशः। ज्ञानाऽश्रयस्य परमेश्वरस्यैव कर्तृत्वात्। प्रयत्नवतश्चेष्टावत्त्वेन लोके चेष्टाद्वारा प्रयत्नवदात्मा हेतुः, तत्र विज्ञिष्टपरमात्माऽपि हेतुः, अतोऽनुकूलकृतिसमवायित्वं तादृशज्ञानसमवायित्वं तादृशचिकीर्षासमवायित्वं कर्तृत्वम्, तथा च ज्ञानेच्छाकृतिजन्यत्वं साध्यम्, सार्वज्ञ्याद्याश्रयत्वं परमेश्वरस्य कर्तृत्वम्। परमेशस्य प्रत्यक्षं ज्ञानं चिकीर्षा साक्षाद्गोचरा प्रयत्नश्चैते शक्तिसहकृताः सृष्टिजनकाः, चेष्टाया द्वारत्वाऽनावश्यकत्वात्। परमेश्वरे चेष्टाया अनंगीकारात्। ईश्वरेऽदृष्टाऽभावात् अदृष्टद्वारकत्वमपि न। मानवानामम्बरादिसर्जने चेष्टाया अदृष्टस्य वा द्वारत्वमुपपद्येताऽपि तत्र विशिष्टस्य कारणत्वे परमेश्वरस्य मानवाऽदृष्टचेष्टायाः कारणत्वं नाऽन्यथासिद्धं न वा निरर्थकं, परम्परया तत्संभवात्। मानवीयाऽनुमितौ विशिष्टस्य कारणत्वेऽपि नाऽनुमातृत्वं परमेश्वरे, नित्यप्रत्यक्षदर्शित्वात्, परम्परया तु सद्वारकं सर्वं कार्यं विशिष्टस्यैव परमात्मनो भवतीति॥ न चाऽदृश्यस्य कर्तुरनुपलब्धिबाधः, अतीन्द्रियाऽनुच्छेदार्थं योग्याऽनुपलब्धेरन्यत्र स्वीकारात् परमेश्वरे योग्यत्वाऽसिद्धेः अयोग्यत्वनियमात्, अयोग्यानामपि द्व्यणुकपरमाण्वादीनां बाधाऽभावात्। कर्तुः कार्यमात्रे कारणत्वाऽवधारणात्॥ अथ कृतिकार्यत्वयोर्नाऽन्वयव्यतिरेकाभ्यां व्याप्तिग्रहः, व्यापककृतेर्व्यतिरेकाऽनिरूपणात्। नित्यकृतेरन्वयोऽपि न गृहीतो भवति, कार्यत्वस्याऽसामानाधिकरण्यादिति चेन्न। कृतिविशेषकार्यविशेषयोरन्वयव्यतिरेको बाधकं विना कृतिकार्यत्वमात्रयोर्व्याप्तिग्रहे उपायः, न तु पक्षधर्मताबललभ्यविशेषाऽन्वयव्यतिरेकग्रहः, तथा च विशिष्टकारणस्यैव विशिष्टकार्यरूपतया वर्तमानत्वेन तत्र बाधकं विना विशिष्टविशेषकृतिकार्यत्वयोः कार्यत्वगोचरकृतिमात्राऽन्वयव्यतिरेकग्रहो जायते। अनित्यकृत्या व्याप्तिग्रहे नित्यकृत्या परामर्शे च सति तदनुमानमव्याहतमेव, सामान्यलक्षणाया व्याप्तिग्रहे उपयोगात्। ज्ञानेच्छाप्रयत्नैकैकव्यतिरेकात् कार्यव्यतिरेको गृह्यतेऽत एव कार्यत्वादेरेकैकं सिद्ध्यत् त्रयमपि सिद्ध्यति, ततस्तद्वत्तया परमेशः सिद्ध्यतीति॥ ४६०॥

**अथाऽशरीरपुंसो न कार्यक्लृप्तिसमर्थता।**
**किन्तु सर्वत्र सामर्थ्यं भयत्यस्य शरीरिणः॥४६१॥**

अथ घटादौ सुशरीरिकुलालादेः कर्तृत्वं दृश्यते, अशरीरस्य कुत्रापि कार्यकारित्वं न लभ्यते, तथा च शरीराऽनपेक्षस्य कार्यत्वं त्वसिद्धं तज्जनकप्रयत्नादि बाधितं चेति तत्प्रयुक्तो नेश्वरोऽपेक्षितः, इत्यशरीरसर्वज्ञनित्यज्ञानादिमान्न कर्ता, किन्तु सशरीरः कश्चित्ततोऽन्यः स्यादिति चेन्न। साधनस्य विवक्षितसाध्यविपरीतसहचारमात्रस्याऽदूषकत्वात्। न चाऽनित्यज्ञानाऽसर्वज्ञशरीरिकर्तृत्वेन समं कार्यत्वस्य

व्याप्तिरस्ति बहुत्र व्यभिचारात् न च ततः तद्विपरीतसाधने विरुद्धताऽपि बाधोऽपि च, अंकुरादौ शरीरिकर्तृत्वाऽभावात् । यदि तत्र सूक्ष्मशरीरिकार्यत्वं मन्यते तर्हि बीजशरीरधरणिसलिलशरीरिपरमात्मा कर्ता स्यादेव । चतुर्विधखनिषु विभिन्नानि शरीराणि, शरीरोपादानान्यपि शरीराणि 'यस्य पृथिवी शरीरमि'-त्यादिनोक्तत्वात् । महत्तत्त्वाऽहंकारेन्द्रियाणामपि सूक्ष्मशरीरत्वेनोक्तत्वात्, अज्ञानस्य कारणशरीरत्वेनोक्तत्वात्, वासनाया लिंगशरीरत्वेनोक्तत्वात्, 'यस्याऽऽत्मा शरीरमि'त्यात्मनामपि शरीरित्वेनोक्तत्वात्, शरीरी येषां परमात्माः त्रिगुणशरीरी परमात्मा, शरीरिणा सर्वं क्रियते, वैराजभूतादीनि वैराजशरीराणि सुतरां तानि तदन्तर्नियामकपरमात्मशरीराणि, ततः सुशरीरी परमात्मा कर्ता, नाऽतो बाधो विरोधोऽसिद्धिश्च । यद्यपि घटादियथादर्शनव्याप्त्या प्राकृतशरीरी उन्नेयः, ततः पक्षधर्मताबलेनाऽप्राकृतदिव्यशरीर्युन्नेयः स्यात्, किन्तु पूर्वत्यागे व्याप्त्यभावात्, पक्षधर्मताया व्याप्त्युन्नायकातिरिक्ताऽगोचरत्वात् निरपेक्षतायां चेष्टसिद्ध्यभावात् पृथग्व्यक्त्यनुधावनस्य व्यर्थत्वम् । अथ शरीरिणः परिच्छिन्नस्य स्वाऽविषये सयत्नकत्वं न स्यादिति चेन्न । सर्वशरीरिणः स्वरूपतः शक्त्यादिभिर्व्यापकस्य न किञ्चिदपि स्वाऽविषयं स्वमूर्तितेजःस्वरूपब्रह्मणः सर्वत्र सत्त्वेन 'यस्याऽक्षरं शरीरमि'ति अक्षरब्रह्मणः परमात्मनः शरीरस्य व्यापकस्य परिच्छेदाऽपराभवात् । स्वेच्छादर्शितपरिच्छेदस्य सर्वत्र व्यापकत्वेऽबाधकत्वात् । 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इतिश्रुत्या प्राकृतकरचरणचक्षुःश्रोत्रादिरहितत्वं दिव्यैकरसाऽऽनन्दघनकरचरणचक्षुःश्रोत्रादिसहितत्वं वर्ण्यते । लौकिके तु लौकिकहस्तादिव्यापारोऽपेक्ष्यते, योगिनां तु संकल्पमात्रव्यापारो वर्ण्यते, परमेश्वरस्य तु सर्वविधा व्यापारा घटन्ते, यत्र यादृग्यथाविधाऽपेक्षा तत्र तादृक्तथाविधा उपयोज्यन्ते । परमेशस्य संकल्पाऽधीना कृतिसाध्यता सर्वत्राऽस्तीति न कृतिसाध्यत्वे शरीरव्यापारजन्यत्वं नियतम्, परमेशस्य संकल्पेन ईक्षणेन प्रेरणया शक्त्या ज्ञानेन बलेनैश्वर्येण वीर्येण तेजसा ब्रह्मणा पुरुषेण प्रकृत्या हिरण्यगर्भेण वैराजेन ब्रह्मणा कुलालादिना च समष्टिव्यष्टिसृष्टिकर्तृत्वं भवतीति सर्वशरीरिणस्तस्य किमप्यप्राप्यकार्यं नास्ति, सर्वं प्राप्यकारित्वमेव, प्रतिबन्धकाऽभावसहितस्येश्वरस्य तज्ज्ञानचिकीर्षाप्रयत्नानां नियतपूर्ववर्तित्वं विशिष्टस्य त्रिविधपूर्ववर्तित्वं नियतमेव, परिचायितव्यापारद्वाराऽपि कारणत्वं यत् तदपि विशिष्टस्य भगवतस्तु साक्षादेव, अन्येषामनित्यानां त्वचिरस्थायिनां स्वरूपयोग्यताऽपि तत्र स्वीकर्तव्या भवति, सहकारिविरहात् कार्याऽलाभोऽपि भवति, प्रागभावस्याऽपि कारणत्वमव्याहतम्, भगवदनिच्छा प्रतिबन्धिका, तदभावः कारणम्, पुनर्घटोत्पत्तिवारणाय कारणीभूताऽभावप्रतियोगित्वं प्रतिबन्धकत्वं कल्प्यते, सामग्र्यां सत्यां कार्यस्य सामग्र्यसत्त्वे कार्याऽभावस्य ध्रौव्यात् । लोके कर्ता शरीरी, ज्ञानं त्वनित्यमिच्छाद्वारा, इच्छा कृतिद्वारा, कृतिः क्रियाद्वारा कार्यसंपादिकेति । अलौकिके तु ज्ञानं संकल्पद्वारा संकल्पस्तपोधर्मद्वारा तपोधर्मो योगैश्वर्यद्वारा कार्यसम्पादकः, अत्रापि शरीरी त्ववर्ज्यः, शरीरं भौतिकं त्वनित्यम्, चेतनं तु नित्यम्, आत्मेश्वरादिशरीरी परमात्मा ब्रह्मशरीरी च परमात्मा, तथा च कार्यत्वं सकर्तृकत्वव्याप्तं सकर्तृत्वं शरीरित्वव्याप्तमिति नाऽशरीरकं किमपि भवतीति नितमत एव लौकिको वाऽलौकिकः शरीरी कर्ता सिद्ध्यति, कार्यत्वं पक्षधर्मताबलात् बलीयः, कर्ता शरीरी कर्तृत्वाद्बलीयान्, ज्ञानं कर्ता शरीरी द्वयमपि नित्यमित्यविरोधः, कार्यं स्यादेव, तथा च निष्कलंको व्याप्तिग्रहः पक्षधर्मताग्रहश्च, नित्यज्ञानादिव्याप्तिग्रहो निराबाधः, परामर्शेन साध्यसिद्धिरिति परमेशः कर्ता निराबाधः ॥ अथ पक्षधर्मताबलादेव सृष्टिसर्जकस्य नित्यसार्वज्ञ्यं सिद्ध्यत् व्यापकेन तेन खण्डशोऽस्मदादिकर्तृत्वेऽपि विशिष्टस्य तस्य नित्यसार्वज्ञ्यं सर्वत्र कारणं साध्यकोटिप्रविष्टम् अस्मदादीनामपि यथापेक्षं विशिष्टान्तर्गतं घटादिकारणतया प्रविष्टं न बाध्यतामावहते, विशिष्टस्य कारणत्वे द्वयोः समावेशात्, परमेश्वरप्रदत्ताऽस्मदादिज्ञानशक्त्यादिसमुपयोगात् । व्यक्तिविशेषज्ञानादिगतकारणत्वं विशेषकार्यनिरूपितं, सामान्यसृष्टिनिरूपितं कारणत्वं तु विशिष्टनित्यधीगतमिति न विरोधो न व्यभिचारादिश्च, समूहितकारणभावेन

मिथो भिन्नेनाऽपि कार्यजननात्। अथ सकर्तृकत्वं कर्तृजन्यत्वं, तत्र किं साध्यतावच्छेदकम्, इति चेत्, दृष्टान्ततावच्छेदकं यत् तत्समं जन्यत्वं साध्यतावच्छेदकम्, तच्च विशेषधर्मादि, अस्माकं तेन तेन धर्मेणाऽन्वयव्यतिरेकग्रहात्, जन्यत्वं चान्ततो विशेषे पर्यवस्यतीति चाऽनुगतं तत्तदवच्छेदकम्, यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपीति विना बाधकं स्वीकारात्। तथा च कार्यं कर्तृजन्यमिति व्याप्तितो नित्यज्ञानवान् कर्ताऽनित्यज्ञानवज्जन्यघटादिदृष्टान्तेन सिद्ध्यति, अनित्यज्ञानवतः कारणत्वे तु 'यथापूर्वमकल्पयदि'ति व्याहतं स्यात्, नित्यज्ञानिन एव तत्संभवात्, शरीरिजन्यत्वे शरीरजन्यत्वे चाऽविरोधात्, शरीरिणः शरीरसहकृतस्यैव कारणत्वात्, विशिष्टाऽविशिष्टभेदेन व्याप्यव्यापकभावाऽविरोधात्, अतो जन्यत्वेन कारणजन्यत्वमनुमीयते, कार्यमात्रस्य शरीरिजन्यत्वेन, यत्र कर्तृत्वं तत्र शरीरसहकृतत्वमिति शरीरजन्यत्वमपि व्याप्तमेव, बाधकं विना जन्यत्वमवच्छेदकम्, सर्वकार्याणां विशिष्टशरीरिजन्यत्वात्, उपादानकारणात्मकशरीरविशिस्टस्य परमात्मनस्तत्र शरीरित्वेन स्थितत्वादेव जन्यत्वस्याऽव्यभिचारात्, न चाऽत्र किञ्चिद्बाधकम्, हस्तांऽगुल्यादिजन्येऽपि शरीरिजन्यत्वसत्त्वात्, येन केनापि धर्मेण व्यावृत्ततत्त्वानां परमेश्वरशरीरत्वात्, जन्यमात्रे परमात्मनः शरीरित्वेन कारणत्वात्, स्वेतरसमस्तशरीरकत्वात्। न चाऽत्र कश्चिदुपाधिः कल्प्यः, साधनाव्यापकत्वाऽभावात्, यदुपाधिस्वरूप उपतिष्ठते सोऽपि यथाकथञ्चिच्छरीरमिति साधनव्यापकत्वान्नोपाधित्वं भजते। विशिष्टस्य कारणात्मकस्य ब्रह्मणो विशिष्टकार्यात्मकत्वे व्याप्येषु सर्वत्राऽन्वयव्यतिरेकग्रहेणाऽर्थाद् व्यापकाऽन्वयव्यतिरेकलाभादेव व्याप्तिग्रहात्, सृष्टिपक्षकाऽनुमाने व्यष्टिव्याप्त्यनतिरेकेण समष्टिव्याप्तेः स्वीकारात्, विशेषयोरन्वयव्यतिरेकेण कार्यकारणभावेन वा सामान्ययोस्तथात्वग्रहस्तौ च ग्रहौ तुल्यावेव, नैतावता सर्वत्र तथा, देवदत्तादीनां तु विशेषे एव विश्रामात्, यदि तस्याऽपि सामान्याऽपेक्षा तर्हि भवतु सामान्येपि विश्रामः। क्षत्यभावात्, स्वस्वकार्ये स्वस्य स्वस्य, महति कार्ये तु परमात्मनः शरीरितया कारणत्वात् अन्वयव्यतिरेकग्रहे विरोधाऽभावात्। शरीराऽजन्यत्वस्यैवाऽसिद्ध्या सत्प्रतिपक्षोद्भव एव नास्ति, यस्माज्जन्यते तस्य शरीरत्वात्, शरीरिजन्यत्वध्रौव्यात्। स्थापनाऽनुमाने सृष्ट्युपादानगोचराऽपरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वं सामान्यतोजन्यत्वस्य व्यापकं भवत्येव, सर्वसमष्टिव्यष्टिकार्येषु विशिष्टस्य परमेश्वरस्य तच्छरीरिणः कारणत्वाऽनपायात्, विरोधाद्यभावेन बहूनामेकस्य वा व्याप्यत्वं निराबाधम्, जन्यत्वस्य शीघ्रोपस्थितिकतया व्याप्यत्वे नित्यज्ञानजन्यत्वं साध्यम्, जन्यत्वस्य साध्यत्वे वा उत्पत्तिमत्त्वस्य हेतुत्वम्। सामान्यविशेषाऽभावाद् विरोधाऽभावेनोभयस्याऽपि व्याप्यत्वं तदा शरीरिजन्यत्वं व्यापकम्, स्वरूपत एव शरीरिपरमात्मा स्वेतरसमस्तशरीरकतया शरीरिजन्यत्वशरीरजन्यत्वयोरपि सर्वकार्येषु सत्त्वेन शरीराऽजन्यत्वाऽप्रसिद्ध्या बाधकाऽभावेनेश्वरसिद्धिरप्रत्यूहा। नीलधूमादौ व्याप्तिरस्ति धूमादेवाऽनुमितिः, व्याप्यतावच्छेदकं धूमत्वम्, नीलधूमत्वे व्याप्यतावच्छेदकत्वभ्रमः, धूमत्वे तु निश्चयः, न चाऽऽभासत्वम्, गौरवेणाऽऽभासत्वहननात्, लाघवेन व्याप्तेरुज्जीवनात्। विशिष्टस्य कारणत्वे विशिष्टाभावस्य हेत्वभावव्याप्यत्वं निराबाधम्, अन्वयवत् व्यतिरेकव्याप्तावपि न क्षतिः, सामान्यविशेषैक्यग्रहेण तदनुसरणात् न तु सर्वत्रैवम्, अल्पज्ञानां विशेषव्याप्तावेव पर्यवसानात् विशेषव्यतिरेकस्यापि ग्रहणात्। यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना न गृह्यते तत्र विशिष्टं व्याप्यतावच्छेदकं न तु सर्वत्र, तथा च जन्यत्वमवच्छेदकं, क्लृप्तं तच्च व्याप्यतावच्छेदकं ज्ञानादिजन्यत्वं वा शरीरिजन्यत्वं व्यापकमिति नित्यज्ञानादिमत्कर्त्रनुमितिर्निराबाधा। 'यदीश्वरः कर्ता स्याच्छरीरी स्यात्, यो न शरीरी स न कर्ता' इति तर्कस्य शरीरिकर्तृकत्वनिश्चयादेवाऽनुत्थानात्। यदीश्वरः कर्ता स्यात् इष्टसाधनताज्ञानवान् स्यात् प्रयोजनवान् स्यात्, सृष्टिर्यदि सकर्तृका स्यात् शरीरिकर्तृका स्यादि'-त्यादितर्काणां विपर्ययाऽपर्यवसानेनाऽऽभासत्वात्। 'तज्जलानिति' श्रुत्या सृष्टिमात्रस्यैककर्तृकत्वमावेद्यते, ततो यमर्थमनालम्ब-

मानाऽनुमितिः पक्षे न साध्यसंसर्गं विषयीकरोति स पक्षधर्मताबलात् सिद्धचति न त्वधिकं, तथा च द्वितीयं कर्तारं न विषयीकरोति न द्वितीयमवगाहते, एकमेव कर्तारं विषयीकरोति, एकश्च कर्ता सिद्धचति, तद्विषयत्वे कर्तृविषयतैव न स्यात्, एकविषयत्वाऽभावे नानाविषयत्वस्याऽप्यभावात्। यत्र प्रमाणे लघुगुरुविषयता संभवति तत्र लाघवसहकारिता, यत्र कारणताकार्यताव्याप्यतादिग्राहके प्रत्यक्षे प्रवृत्तिनिमित्तग्राहके उपवाने शब्दशक्तिग्राहकेऽनुमाने तथाविधप्रमाणमात्रे च सकलतान्त्रिकैः सहकारिताकल्पनात्। लाघवमेव गौरवमितिज्ञानाऽनन्तरं बाधकं बिना लघूनामेव कारणत्वकार्यत्वव्याप्यत्वप्रवृत्तिनिमित्तत्वशब्दशक्यत्वानां ज्ञानदर्शनात्। सृष्टौ च नानाकर्तृकत्वेऽपि लाघवादेकविशिष्टकर्तृकत्वसिद्धिः, लाघवेन कर्त्रैक्यं सिद्धचति। अनुमितेरेव लाघवसहकारेणैकत्वसाधकत्वात्। सृष्टिकर्ता अंकुरादिकर्त्रभिन्नः अलौकिककर्तृत्वात् द्वयणुककर्तृवत्, इत्यभेदाऽनुमानादप्येककर्तृसिद्धिः। पक्षधर्मताबलान्नित्यसार्वज्ञ्यसिद्धिः, अनुमितिर्यमर्थमनालम्बमाना पक्षे साध्यसम्बन्धं न विषयीकरोति सः अर्थः पक्षधर्मताबलात् सिद्धिचति, इत्यनुपपत्तिमूलकोऽन्वयी, प्रतीत्यनुपपत्त्या च व्यतिरेकी। तदिहाऽनादिसृष्टिप्रवाहस्य पक्षत्वे तदुपादानस्याऽनादिज्ञानगोचरत्वं विना नोपदानगोचरज्ञानजन्यत्वम् अनादिकार्यप्रवाहस्याऽनुमितिरालम्बते। अनादिता च नित्यता, सर्वमुक्तावपि ततसत्त्वम् अनादिभावत्वात्, पक्षतदुपादानविषयतैव सर्वविषयता, लाघवात् तावद्विषयकमनाद्येकं ज्ञानं सिद्धचति यद्वा—अनित्यज्ञानाऽजन्यायां सृष्टौ ज्ञानं सिद्धचत् नित्यमेव सिद्धचति, अनित्ये बाधात्। यद्वा—लाघवादेकज्ञानसिद्धावुत्पत्तिमतोऽनादिकार्यप्रवाहं प्रति अजनकत्वात् परिशेषेण नित्यज्ञानादिसिद्धिः, नियतविषयता तु ज्ञानस्य कारणाऽधीना, कारणं च नित्यज्ञानान्निवर्तमानं नियतविषयतामादाय निवर्तते, इत्येवं सर्वविषयकत्वसिद्धिः। सप्तादिपदार्थप्रतिपादकवेदादिकर्तृत्वेनेश्वरस्य सर्वपदार्थगोचरसाक्षात्कारवत्त्वेन सार्वज्ञ्यम्। घट ईश्वरकर्तृकः विशिष्टकार्यत्वादिति सर्वत्र व्यष्टावपीश्वरकर्तृकत्वं सिद्धचति, तज्ज्ञानादीनां नित्यत्वेन सर्वविषयकतया व्यष्टिकारणविषयत्वमपि न्यायप्राप्तमेव। न चेश्वरस्य भ्रान्तिः, भ्रमविषयविषयकत्वादिति वाच्यम्। रजतत्वप्रकारकज्ञानवानयमिति ज्ञानं न भ्रमः, रजतत्वांऽशे भ्रमस्तु इदं रजतमिति रजतत्वप्रकारकः, ईश्वरज्ञाने तु रजतत्वप्रकारकत्वं प्रकारो ज्ञाने इति स न भ्रमः। अतो भ्रान्तिज्ञो न भ्रान्त इति। अथेश्वरस्य प्रयोजनं विना कथं प्रवृत्तिः?, तस्य तादृशसुखाऽनपेक्षणात् अधर्माऽभावेन निर्दुःखत्वाच्च। करुणया प्रवर्तते इति चेत्!, तर्हि परसुखदुःखप्रहाणे प्रयोजने, ततः सुखिन एव सृजेत् न नारकिणः। धर्माऽधर्मतन्त्राणां तदनुरूपफलप्रापकत्वं प्रयोजनमिति चेत्!, कर्माऽधीनमेव विचित्रं जगदस्तु, किमीश्वरेणाऽनपेक्षितकीटादिज्ञानिना। कर्मनिरपेक्षत्वे एकदैव सदा स्वर्गप्रलयौ स्याताम्; ज्ञानादीनां नित्यत्वात्, करुणाजन्ययत्नवत ईश्वरस्य संसारित्वापत्तिश्चेति चेन्न। सृष्टेस्तदिच्छाविषयत्वेन स्वेष्टसाधनताज्ञानसत्त्वात्। क्षित्यादितत्तदसाधारणक्रमिकाऽदृष्टादिसामग्रीसमवहिता ईश्वरज्ञानादयो यदा भवन्ति तदा सः सृष्टयंकुरादिकं करोतीति व्यवहारः। सर्गप्रलयाऽसाधारणक्रमिकाऽदृष्टादिसामग्रीसमवहितत्वमेव तदिच्छायाश्चिकीर्षासंजिहीर्षात्वे, तज्ज्ञानजन्यतया सृष्टयंकुरादीनां तज्ज्ञाने जनकत्वात्। अथ सदा साकारः सुशरीरी परमात्मा दिव्यशरीरी मीनव्यासादिशरीरी वा सकलवेदार्थगोचरज्ञानी स्वयं विवक्षासहितान्मीनकलेवरकण्ठताल्वादिदिव्यतनुप्रयत्नाद् वेदं प्रकाशयति, शरीरद्वारा तु कुलालाघवच्छेदेन तददृष्टप्रयत्नवदात्मना स्वविशिष्टेन तज्ज्ञानेच्छादिभिर्घटाद्यनुकूलव्यवहारवता स्वीयज्ञानेच्छाप्रयत्नैः कार्याणि स परमात्मा निष्पादयति, तथाविधरचनाधिकारसाफल्यात्,एवं प्रयोज्यप्रयोजकज्ञानाय व्यापाराभिमतशरीराऽवच्छेदेनाऽपि निजीयज्ञानेच्छाप्रयत्नैर्थवहतो व्यापारी आवेशन्यायेन व्यापककर्त्रा विशिष्टः कर्ता सम्पद्यते ॥ सर्गान्तरोत्पन्नतत्त्वज्ञानवता भोगार्थमुत्पन्नेन मन्वादिना सर्वज्ञेश्वराभिप्रायस्थवेदः साक्षात्कृत्याऽनूद्यतेऽतः शाखासहस्रविस्तृतताऽग्रिमसम्प्रदायानुप्रविष्टा वेदा वेदो

वा कायव्यूहं कृत्वा व्यवहरतीति मतं तु असंख्य-सर्वज्ञोपस्थित्या बाधितम्, एवमेव सर्गान्तरसिद्ध-योगिना दृष्टो वेदः सृष्टिश्चेत्यपि न सुवचम्, लाघव-सहकृतैकस्यैवेश्वरस्य सर्वज्ञस्य वेदसृष्टिनिभालनताया युक्तत्वात् ॥ 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो-बाहुरुत विश्वतस्पात् । स बाहुभ्यां धमति संपतत्रै-र्द्यावाभूमी जनयन् देव एक' इत्यादिश्रुतयोऽपि मुख्याः परमात्मनि प्रमाणम् ॥ ४६१ ॥

**परमेशेऽनन्तशक्तयश्च ब्रह्मणि पूरुषे ।**
**मायायां तत्त्ववर्गे च सन्ति कार्यानुकूलिकाः॥४६२॥**

ज्ञानेच्छाक्रियाशक्तयः परमात्मनि, विधारण-प्रकाशनसाक्षिशक्तयो ब्रह्मणि, अनेकरूपधारित्व-शक्तयो मुक्तेषु, ईशनशक्तय ईश्वरेषु, आपूरकशक्तयो मायागुणेषु, तत्तत्कार्यशक्तयश्च स्वल्पकारणेषु, तेजसि रूपाऽनुरूपग्राहिशक्तयः,प्रकाशकशक्तयो दाहशक्तयश्च, वायौ ब्रह्माण्डानां यथावस्थितिरक्षिकाः शक्तयः, ध्रुवे आकर्षणशक्तयः, पृथिव्यां गुरुत्वाऽऽकर्षणशक्तयः, जले विद्युत्प्रवाहाऽऽस्कन्दनशक्तयः, सर्वपदार्थेषु यथा-पेक्षिताः शक्तयो वर्तन्ते, शरीरेषु वृक्षौषध्यादिषु विपरीतप्रतिद्वन्द्विशक्तयः, विरुद्धा अनुकूला वा शक्तयः स्वरूपसत्यः पदार्थेषु वर्तन्ते । दाहशक्तिस्तृप्तिशक्ति-र्नीरुग्णताशक्तिर्निद्रामदादिशक्तिश्चैताः प्रत्यक्षा अनुमेया अपि च भवन्ति, वह्निसंयोगात्करे दाहः, सति प्रतिबन्धके तु न, इति यदभावात्कार्याऽभाव-स्तदभ्युपेयं व्यतिरेकमुखेनेति शक्तिसिद्धिः । दाहेन दृष्टसाद्गुण्यात् । अदृष्टेन सा नाऽन्यथासिद्धा, मेघे व्योम्नि विद्युदुद्भावकशक्तेस्तत्र व्यभिचारात् । अदृष्टं तु भोग्यार्थे साधारणम्, यद्विलम्बेन कार्यविलम्बः । तदपि भगवत्प्रसन्नतादिरूपं, तेन न शक्त्यपह्नवः, वह्नौ चन्द्रकान्तयुजि कार्याऽभावः, चन्द्रकान्ताऽयोगे कार्यमिति दृष्टत्वात्, चन्द्रकान्ते सूर्यकान्ते च दाहो-त्पत्तिरिति सूर्यकान्ते उत्तेजकता दृश्यते, सा शक्तिरेव । शक्तिः पुण्यं चोभयमदृष्टम्, पुण्यं नास्ति अगम्यागमने पापे, फलं सुखं पापस्येति व्यभिचारः । शक्तिस्तु युवती सुखदा कारणम् । श्येनो मखो धर्मोऽपि हिंसाफल इति व्यभिचारः । शक्तिस्तु श्येनकाण्ठस्था न व्यभिचरति । दाहार्थी वह्निं गृह्णाति न त्वदृष्टं तदकारणम्, शौचाऽऽचमनस्नाना-द्यैरपि शुद्धिशक्तिरुत्पद्यते, पुण्यं तु यथोद्देशं स्वीक्रियते, परं न तत् कारणम् ।

अथाऽपि शक्त्यंगीकारोऽनावश्यकः, तत्र उत्तेज-काऽभावसहकृतप्रतिबन्धकाऽभावस्याऽन्वयव्यतिरेका-भ्यां हेतुत्वम्, एवं च सति केवलोत्तेजकसद्भावे उभयसद्भावे उभयाऽसद्भावे च विशिष्टाऽभावोऽनुगतो हेतुः, शक्तिरन्यथासिद्धा, प्रतिबन्धकत्वं च कारणी-भूताऽभावप्रतियोगित्वम्, तच्च मण्याद्यभावत्वेन, तथा च प्रतिबन्धकाऽभावकूटः दाहे कारणम्, तेन मन्त्राऽभावे मणिसद्भावे न दाहः, मन्त्रसद्भावे तु स्यात्, यादृङ्मन्त्रस्तथा कार्यम् । अभावो न कारण-मिति न । भित्तिसंयोगाऽभावस्य गतिकारणत्वात्, अभावज्ञाने उपलम्भाभावस्य कारणत्वात्, प्रत्यवाये विहिताऽनुष्ठानाऽभावस्य कारणत्वात्, वेदप्रामाण्ये दोषाऽभावस्य कारणत्वात् ॥ मैवम् । अभावानाम-ननुगतत्वात्, विशिष्टं तु विशेषणविशेष्यसम्बन्धाः, तेषां प्रत्येकाऽभावस्य हेतुत्वे क्वचिद् विशेषणमण्य-भावः, क्वचिदुत्तेजकाऽभावरूपविशेषणाऽभावः, क्वचिदुभयं कारणमिति व्यभिचारात् नैकमपि कारणं स्यात् । अथ प्रतियोगिभेदादिवत् प्रतियोगितावच्छेद-कविशेषणभेदेऽप्यभावो भिद्यते । केवलदण्डसत्त्वे दण्डपुरुषसत्त्वे द्वयाऽभावे च विशेषणविशेष्योभयाऽ-भावप्रयुक्तः केवलपुरुषाऽभावोऽबाधिताऽनुगतव्यव-हारबलात् प्रतीतिसिद्धः, तथा विशेष्यस्य प्रतिबन्ध-कस्याऽभावे विशेषणस्योत्तेजकाऽभावस्याऽभावे द्वयाऽ-भावे च केवलप्रतिबन्धकाऽभावो विशेषणविशेष्यो-भयाऽभावव्यापकोऽनुगत एव दाहकारणमस्तु, तत्र एकशक्तिमत्त्वाद् विशेषणाद्यभावात् केवलपुरुषाऽ-भावव्यवहारो भवतु ॥ तन्न । अनुगतव्यवहारस्याऽ-नुगतधीसाध्यस्याऽतीन्द्रियशक्तितो भिन्नत्वान्नैकशक्ति-मत्त्वमिति ॥

अथ—उत्तेजकयोगक्षणे चन्द्रमणेः कोऽभावः ?, प्रतियोग्यसमानकालीनध्वंसप्रागभावयोस्तत्राऽयोगात्, अत्यन्ताभावस्याऽकादाचित्कत्वादयोगात्, किन्तु प्रति-बन्धकाऽपनयोपनयवेलाव्याप्तः प्रतिबन्धकसंसर्गाऽ-भावो यद्वा तुरीयोऽनित्यसंसर्गाऽभावः स्वीकरणीयः ।

यद्वा प्रत्यासत्तिकादाचित्कः संसर्गाभावः स्वीकरणीयः, प्रत्यासत्तिश्च विशेषणाऽभावो विशेष्याभाव उभयाऽभावश्चाऽत्यन्ताऽभावो विशिष्टाऽभावः कारणमिति तत्र विशेषणविशेष्याऽभावयोः प्रत्यासत्तित्वावच्छेदकाऽनुगतधर्माऽभावात् शक्तित्वेनाऽनुगता शक्तिस्तदभावसहिता कारणमस्त्विति । अथ तर्ह्यभावसाहित्यमेव माऽस्त्विति चेन्न । प्रतिबन्धकाऽभावस्य निमित्ततायाः अपलपितुमशक्यत्वात् । अथ विशिष्टाऽभावत्वेन पृथक्कारणत्वं स्यात्, अस्तु नाम, तेन शक्तेरपह्नवाऽसंभवात्, पृथक्कारणतायास्तुल्यत्वात्, तत्तदुत्तेजकाऽभावानामननुगतत्वेन तद्विशिष्टाऽभावस्यैव कारणताया अनुधावनेऽपि विशेषणविशेष्याऽभावयोर्विशिष्टविरोधित्वेन तदन्यतराऽभावस्य विशिष्टरूपत्वेन तदन्यतरसत्त्वे विरोधिविशिष्टरूपत्वेन कारणत्वाऽभावात् शक्तेरेव पृथक्कारणत्वांऽगीकारः । अथ उभयाऽभावाऽभाव उभयं विशिष्टम्, अभावद्वयं विशिष्टाऽभावः, न स प्रत्येकाऽभावरूपः, एवं च विशेष्याऽभावस्य कारणत्वाऽलाभात् शक्तेः कारणत्वं निष्प्रत्यूहम्, केनाऽप्यनुगतरूपेण विशेषणविशेष्याऽभावस्य विशिष्टाऽभावत्वे प्रत्येकाऽभावस्य विशेषणविशेष्याऽन्यतरमात्रस्याऽपि विशिष्टत्वापत्तिः, तदभावाऽभावस्य विशिष्टत्वात्, तत एव, विशेषणविशेष्याऽभावो विशेषणावच्छिन्नविशेष्याभावो न विशिष्टाभावः, अतः शक्तौ कारणता मन्तव्येति ॥४६२॥

**सम्बन्धाऽभावतश्चाऽपि विशिष्टाऽभावनिश्चयः ।**
**एवं संसर्गविरहाऽपेक्षया शक्तिहेतुता ॥४६२॥**

अथ विशेषणविशेष्यसम्बन्धाद् विशिष्टव्यवहारेण तत्सम्बन्धाऽभावाद् विशिष्टाऽभावव्यवहारात्, यत्र यस्य सम्बन्धः स एव वैशिष्ट्यम्, सम्बन्धाऽभावो विशेषणाऽभावाद् विशेष्याऽभावाद् उभयाभावात् प्रत्येकाऽभावाच्च सर्वत्राऽविशिष्ट एको व्यापकोऽनुगतविशिष्टाऽभावव्यवहारकारणम्, एवञ्च प्रतिबन्धकोत्तेजकाऽभावयोः सम्बन्धाऽभावो दाहकारणम्, स च प्रतिबन्धकाऽभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाऽभावे प्रत्येकाऽभावे चाऽस्ति । प्रतिबन्धकोत्तेजकाऽभावयोः सम्बन्धो नास्ति च । प्रतिबन्धकोत्तेजकाऽभावयोर्विशिष्टप्रत्ययजननयोग्यत्वमेव स्वरूपसम्बन्धः, तदभावश्च प्रतिबन्धकाऽभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाऽभावेऽन्यतराभावे चाऽविशिष्ट एव कारणम् । एवं चेत्, शक्तिरेवाऽविशिष्टा हेतुरस्त्विति ॥ अथाऽधिकरणाऽभावावेव स्वरूपसम्बन्धः, स चोपश्लिष्टस्वभावत्वरूपः, सम्बन्धान्तरं विनाऽपि विशिष्टप्रत्ययजननयोग्यः, प्रतिबन्धकोत्तेजकाऽभावयोर्विशिष्टप्रत्ययजननयोग्यत्वं च स्वरूपसम्बन्धः, तदभावश्च प्रतिबन्धकाऽभावे प्रतिबन्धकोत्तेजकसद्भावे उभयाऽभावेऽन्यतराऽभावे चाऽविशिष्ट एव, अतिरिक्त एव, तथा च गौरवसाम्ये शक्तिरेव कारणमस्तु ॥ अथ केवलप्रतिबन्धकाऽभावे उत्तेजकसहकृतः प्रतिबन्धको न प्रतियोगी किन्तु तदन्यः, तदभावे उत्तेजकसहितप्रतिबन्धकसत्त्वे उभयाऽसत्त्वे वा विशिष्ट एवेत्यनुगमः सः, उत्तेजकाऽपनयने प्रतिबन्धकात् केवलाद् दाहाभाव इत्यत्रापि प्रतिबन्धकस्य स्वरूपतो दाहेऽसंसर्गात् अदृश्या दाहस्य व्याप्त्या रोधिनी शक्तिः स्वरूपसती प्रतिबन्धिकेति स्वीकार्या ॥

अथ यावत्कारणतावच्छेदकावच्छिन्नं यत्र तत्र कार्यं, तथा च प्रतिबन्धकाऽभावकूटस्य दाहहेतुत्वे शक्तिर्न कल्पनीयेति चेन्न । अशक्तेः प्रतिबन्धकत्वेन शक्तेरपि अशक्त्यभावस्य कारणाऽन्तर्गतत्वेन शक्तिमात्रे स्वतन्त्रकारणतायाः सुवचत्वात् । विद्युत्संयोगसत्त्वेऽपि ताम्रतारादिषु प्रतिफलकाऽयोगेऽशक्त्या प्रकाशाऽकरणात् प्रतिफलकयोगेऽशक्तिनाशेन तदभावस्य शक्तिस्वरूपस्य प्राकट्येन प्रकाशकरणात्, सत्यपि विद्युति, प्रवाहे सत्यपि चाऽऽस्कन्दनशक्तौ प्रकाशाऽभावेन प्रकाशकारकशक्त्यन्तरकल्पनात् विद्युत्प्रवाहेऽप्रधृष्यशक्तेः सर्वाऽनुभवात्, यन्त्रयुगे विद्युच्छक्त्या बाष्पशक्त्या च यान्त्रिकव्यापाराणां साफल्यात् । शब्दस्य गगने व्यापकसत्तया सत्त्वेऽपि ध्वनिवर्धनयन्त्रेण वायुयन्त्रेणाऽन्तरिक्षयन्त्रादिभिः शक्तिभिरेव स्थौल्यापादकत्वम् ॥

अथ प्रतिबन्धकत्वावच्छिन्नप्रतियोगिक एवाऽभावः कारणम्, स च यावद्विशेषाऽभावनियत इव शक्तिनियतोऽपि भवतीति विपरीतशक्तिसत्त्वे प्रतिबन्धकान्तराऽभावेऽपि न कार्योदयः, प्रतिबन्धकस्य

संसर्गोऽभावोऽपि शक्तिसहित एव हेतुः, तेन तत्सत्त्वेऽपि शक्तिसहित एव हेतुः, तेन तत्सत्त्वेऽपि तदन्योन्याऽभावेऽपि शक्तिविधुरत्वे न कार्यम्। किञ्च— प्रतिबन्धकाऽभावः शक्तियुगेव कार्यकृत्, येन तत्सत्त्वे तदन्योन्याऽभावसत्त्वेऽपि शक्त्यभावे न कार्यम्। यत्र प्रतियोगिनम् अधिकरणे समारोप्य निषेधाऽवगमस्तत्र संसर्गाऽभावः, यत्र त्वधिकरणे प्रतियोगितावच्छेदकमारोप्य निषेधाऽपगमः सोऽन्योन्याऽभावः, नेदमिह नेदमिदं चेत्यबाधितविलक्षणव्यवहारस्यैव तत्र मानत्वात्। एवं च प्रतिबन्धकाऽत्यन्ताऽभावोऽपि न हेतुः, तस्मिन् सत्यपि कार्याऽभावात् ततः शक्तिर्नियामिका कारणम्। यत्र च समयविशेषावच्छिन्नाऽत्यन्ताऽभावस्तत्र क्वचित् काल इव देशोऽप्यवच्छेदकस्तथा चोत्पादविनाशशाल्यभावव्याप्तिमती विरोधिनी वा सुयोगिनी शक्तिरुत्पद्यते, प्रतिबन्धकतावच्छेदिका वा जनकतावच्छेदिका सा कारणम्, न तु तत्र विशेषणाऽभावविशेष्याभावतदुभयाऽभावघटितं वा त्रयं हेतुः, तदपेक्षया दाहशक्तेः कारणत्वे लाघवात्। व्यक्तियोग्यत्वे शक्तियोग्यत्वस्याऽवर्जनीयत्वात्। अथ यत्र जपसंकल्पाऽनुष्ठानगोचरमन्त्राद्यैर्दाहप्रतिरोधस्तत्राऽपि मन्त्रशक्तिपराभूता दाहशक्तिः, मन्त्रव्यूहबलशक्तिविगमे दाहशक्तिरनुवर्तते, तत्र संकल्पविषयकालविशेषादिनिष्ठप्रतिबन्धकत्वाऽपेक्षया शक्तेः प्रतिबन्धकत्वमुचितम्। यमुद्दिश्य संकल्प्यते निरोधस्तत्रैव निरोधः फलति नाऽन्यत्रेति प्रतिबध्यप्रतिबन्धकभावोऽप्युभयशक्तिगत एव, न तत्र मन्त्रपाठजन्यमदृष्टं प्रतिबन्धकम्, अदृष्टस्य उद्दिष्टनिरोधकतयाऽनुपास्यत्वात्। अथ शक्तेरपि तथात्वमस्तु— इति चेन्न। यावन्नोद्दिष्टं सम्पद्यते तावत्पुरश्चरणसातत्येन शक्त्युत्पादकतया बलस्तराऽभिप्रेयत्वात्। उद्देश्यत्वज्ञानाऽऽहितसंस्कारविषयकालाऽपेक्षया शक्तिबलदार्ढ्यस्य प्रतिबन्धकत्वस्य भानात्। प्रतिबन्धमकुर्वतामपि अप्रतिबन्धकत्वेन शक्तिम् अनपकुर्वतां मन्त्रादीनां प्रतिबन्धकत्वाऽभावेन तत्र शक्तिसिद्धिः। न च कार्याऽनुत्पाद एव प्रतिबन्धस्तज्जनकत्वं च प्रतिबन्धकत्वं तच्चाऽभावे धर्मे शक्तौ वा भवेदिति वाच्यम्। न सः तत्प्रागभावो वा न तदुत्तरकालसंसर्गः, तस्य मन्त्राद्यजन्यत्वात्। किन्तु मन्त्रप्रयोक्तरि प्रतिबन्धकत्वे मन्त्रादिष्वकिञ्चित्करत्वेन प्रयोक्तृसातिशयत्वे तु तत्रैव वारम्वारं शक्त्युत्पत्तिनाशादियुद्धसंभवात्, तथा च सामग्रीपराभवाऽभिभवलभ्यं नैर्बल्यं प्राबल्यं च शक्तिं साधयतीति मन्त्राभावाऽभावो मन्त्रादिरिति स न प्रतिबन्धकः। प्रतिबन्धकाऽभावानामानन्त्येन शक्तिरेव प्रतिबन्धकाऽभावसहिता कारणम्, प्रतिबन्धकाऽभाववह्निशक्तीनां कारणत्वलक्ष्यतायां मणिसत्त्वे वह्निरफलः ओषधिपराभूतोऽपि वह्निरफलः उत्तेजके सति मणिरफलः सति सामर्थ्ये वह्निदाहोऽपि न, इति सर्वत्र व्यापिका शक्तिस्तत्र तत्राऽव्यभिचारिणी हेतुरिति। कार्याऽयोगव्यवच्छेदस्य नियतपूर्ववर्तित्वस्य सामग्रीरूपस्य सहकारिविशिष्टस्य वा कारणत्वस्य शक्तौ विश्रामात् ॥ ४६३ ॥

**अर्थापत्त्या भवेच्छक्तिश्चाऽनुमाविषया तथा।**
**प्रोक्षणादिकसंस्कारैः शक्तिः सिद्ध्यति सत्फला ॥**

वह्निसत्त्वेऽपि मणिना न दाह उत्तेजकसत्त्वे च दाहो विना नियतकारणं चाऽनियत इति तत्र तत्र वह्न्यादीतरत् कारणमाक्षिपति सा तादृशी उत्पादविनाशशालिनी शक्तिः हेतुः सिद्ध्यति। अथाऽनुमानेनाऽपि सिद्ध्यति—तथाहि—"स्थिरोऽवयवी जनकदशाविशिष्टो वह्निः, अजनकदशाव्यावृत्तभावभूतधर्मवान्, जनकत्वात्, कुण्ठकुण्ठारात्तीक्ष्णकुठारवत्। दाह्याऽसंयुक्तवह्नेर्दाह्यसंयुक्तवह्निवच्च" प्रतिबन्धकसत्त्वेऽपि संयोगादेरजनकदशावर्तित्वेन तदतिरिक्ताऽतीन्द्रियभावभूतधर्मसिद्धिः, स धर्मः शक्तिरिति। शस्त्रेषु तीक्ष्णधारेषु विलक्षणशक्तिरस्ति, अथवा स्थिरोऽवयवी जनकदशाविशिष्टो वह्निः कार्यानुकूलाऽतीन्द्रियद्विष्ठधर्मसमवायी जनकत्वात् आत्मवत्। अतीन्द्रियत्वं च संयोगाद्यन्यतरप्रत्यासत्तिजन्यसाक्षात्काराऽविषयत्वम्, अन्यतरत्वं च तदन्याऽन्यत्वम्। अथवा पिण्डीभूतो वह्निः दाहाऽनुकूलाऽद्विष्ठाऽतीन्द्रियभावभूतधर्मवान् दाहजनकत्वात् आत्मवत्। अथवा—करवह्निसंयोगः कार्याऽनुकूलाऽतीन्द्रियधर्मसमवायी जनकत्वात् आत्मवत् द्व्यणुकवच्च। यद्वा प्रतिबन्धकदशायां प्रत्यक्षसकलदाहहेतुसमवहितो

दाहजनको वह्निः जनकदशाऽवृत्तिकार्याऽनुकूलभावभूतधर्मशून्यः अजनकत्वात् कुण्ठकुठारवत्। यद्वा—तथाभूतो वह्निः दाहजनकदशाऽवृत्तिदाहानुकूलाभावभूतधर्मशून्यः, दाहाऽजनकत्वात् दाह्याऽसंयुक्तवह्निवत्। अनुकूलत्वं च कार्याऽभावप्रयोजकाऽभावप्रतियोगित्वं कारणतदवच्छेदकसाधारणम्। अथ साध्यं विनाऽपि उभयसिद्धप्रतिबन्धकाऽभावेन जनकत्वेन कार्यसंभवो यत्र तत्रापि शक्तिस्तु मानान्तरेण सिद्धयति। यदि तु सहचारदर्शनव्यभिचाराऽदर्शनोपाध्यनुपलम्भादिना व्याप्तिग्रहस्तदा तु शक्तिसिद्धौ सत्यां ततः शक्त्यतिरिक्तदाहाऽनुकूलाऽतीन्द्रियधर्मान्तरसिद्धौ शक्तिविषये न क्षतिः, प्रथमाऽनुमितिशक्त्यैव सामञ्जस्येऽग्रे धावनस्य निष्प्रयोजनत्वात्, कृतीनामिव शक्तीनामानन्त्यं तु कार्यकारणभावव्यवस्थापकं व्यभिचारादिवारकं स्वानुगुणमेव, भावकार्याणां समवायिकारणजन्यत्वेन शक्तेरपि कारणशक्त्या जन्यत्वेऽनवस्थादि तु प्राकृतसृष्टिवादिनां त्रिगुणे पर्यवसानाद् वार्यते। यद्वा सूक्ष्मा शक्तिः कारणत्वव्याप्ता स्थूला शक्तिः कार्यत्वप्रयोजिकेति नाऽन्याऽऽभासकल्पनाऽपि। सूक्ष्मलौहानाम् इक्षुप्रभृतिसूक्ष्मलाळानां वृश्चिकादिकण्टकानां विभिन्नशक्तिमत्त्वं सर्वजनसिद्धम्। 'स्तोमेन हि दिवि देवासो अग्निम् अजीजनच्छक्तिभी रोदसि प्राम्। शक्तिभिः कर्मभिर्द्यावापृथिव्योः पूरणम्, तम् अकुर्वंस्त्रेधा भावाय' इति ऋग्वेदमन्त्रेऽपि कारणत्वेन शक्तिः प्रतिपादिता, आहुतिभिर्देवा अग्निं त्रेधा कृतवन्त इति॥ अनुकूले शक्तिः कारणं प्रतिकूले तु विरोधिनी मेघास्त्रवह्न्यस्त्रादिगतशक्तिवत्। सा प्रत्यक्षा नेत्रवृत्तौ दर्शनशक्तिः, अप्रत्यक्षा ध्रुवतारकायां सर्वतारकागतिव्यवस्थाऽऽकर्षणशक्तिः। तृणाऽरणिमणीनां वह्निं प्रति भिन्नशक्तिमत्तया कारणत्वम्, बाष्पादौ शक्त्यैक्याऽभावात्। द्रव्येषु स्वस्वगुणान्प्रति विशेषकारणतायाः शक्तिसहकारादेव भवति, प्रदीपदारुदहनादौ विजातीया शक्तिः, गोमयवृश्चिकमृत्तिकावृश्चिकवृश्चिकवृश्चिकादावपि विभिन्नाः शक्तयः, विलक्षणकारणानां विलक्षणकार्यजनकत्वनियमात्। वह्नित्वेन कार्यत्वग्रहार्थं तृणादौ विलक्षणशक्तिकल्पनौचित्यात्। तृणाऽरणिमणिफूत्कारनिर्मन्थनतरणिकिरणानां वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वात्, विशिष्टे सहयोगिन्योऽपि शक्तयः भवन्ति हेतवः। यज्ञकर्मसु क्रमनियुक्ता अदृष्टशक्तयोऽपूर्वजनिकाः। न ह्यनुगतधीविषयजातिलाघवे व्यक्तिस्थशक्तिप्रमोषः, नहि चेतनेषु ज्ञानमात्रेण सर्वव्यवहारलाघवे संस्कारतत्त्वप्रमोषः, विशेषसामग्रीं विना सामान्यसामग्र्या अकिञ्चित्करत्वात् शक्तीनां तत्त्वत्वमव्याहतम्। अनन्तधा वह्निरनन्तधाश्रयस्थनियतसमवाय्यसमवायिजन्योऽपि निमित्तानां न लाघवादिनियतता तत्र ज्वालामुखशैले कीचकवनेऽरणिसमूहे स्फोटकद्रव्यचूर्णे उग्रतैले बाष्पाऽनिले निगूढाऽग्निस्थले अणुशक्तिकगोलकादौ च विभिन्नशक्तिककारणोत्थवह्नीनां वह्नित्वेनाऽनुगमेऽपि व्यभिचारवारणार्थं भिन्नकारणकशक्तिजन्यतया विशेषकार्यकारणभावाऽऽवश्यकत्वेन नैकेनाऽपरनिमित्तानां कारणत्वपराहतिः, विशेषकारणत्वग्रहस्वीकारात्। लाघवगौरवविचारे विनिगमनाविरहात् कारणतायाश्च ध्रौव्यात् सामग्रीणामावश्यकत्वात् यावत्कारणसमाजनियतधर्मत्वेन शक्तीनां कारणत्वं युक्तिसहं चानुगतं स्वीकार्यमेव॥ ४६४॥

**सहजाः शक्तयो यद्वदाधेयाः समकुक्षिजाः।**
**खाद्यलभ्या मिश्रजन्याः संस्कारप्रतिकर्मजाः॥४६५॥**

घृते आयुर्वर्धिका वह्नौ दाहिका जले तृप्तिदा चन्द्रे आह्लादप्रदा ओषधीषु विकारहन्त्री चेति शक्तयः सहजाः, नारीषु गर्भाधानशक्तयः, पुरुषे बीजारोपणशक्तयः, तेजस्सु आकारग्राहकशक्तयः सहजाः। तद्वत् प्रोक्षणेन पावनी पाकेन विक्लृतिः भ्राष्ट्रपाकेन दार्ढ्यं यौवने भोगदा यागकर्मणि स्वर्गयोग्यताऽभ्यासेन पाण्डित्यं तण्डुलगुडादिमिश्रणे मदशक्तिः गुटिकामन्त्रादिष्वदृश्यीकरणशक्तिः विषे प्राणहारिका पूजने पुण्यप्रसन्नताप्रदा नमस्कारे आशीर्नारायणनाम्नि याम्यनिवृत्तिर्वासनायां संसृतिरित्येवं परिकर्मशक्तयः शुद्धिशक्तयश्च जायन्ते। प्रोक्षणादयो भावभूतमतिशयं जनयन्त एव कालान्तरभाविकार्यजनकाः प्रमाणतस्तदर्थमुपादीयमानत्वात् रोगचिकित्सावत्, स चाऽतिशयः शक्तिविशेषः, तद्युक्तव्रीहयः साक्षात्पुरुषे

परम्परया यागे स्वर्गे च कारणानि। यो यद्गतफलार्थितया क्रियते स बाधकं विना तद्गतं तदनुकूलमतिशयं जनयति रोगचिकित्सावत्। न च अदृष्टेनाऽर्थान्तरम्, आरादुपकारकस्य प्रथमोपस्थितिकस्य व्रीह्यात्मकेऽवघातयोग्यतोत्पादनार्थं, शक्तिविशेषस्याऽनर्थान्तरत्वात्, शक्तेरुत्पत्तावेव पुरुषनिष्ठाऽदृष्टादीनां ततो लाभात्, अथ स्वस्थायां कुक्षौ भोजनशक्तयः शारीरव्यवस्थाहेतवः, नेत्रवृत्तिवर्धकशक्तिरूपनेत्रकाचपदार्थे तिष्ठत्येव, तादृश्यः स्वस्थकक्षाः शक्तयः, मेघे विद्युत्पातजन्या वृष्टिपातिकाः शक्तयः, ध्वनियन्त्रे शब्दस्फोटकशक्तयः, स्वाप्ने भोग्यशक्तयश्च समकुक्षिगताः॥ अथ वनस्पतिषु विचित्रखाद्यजन्या विचित्रफलदाः शक्तयः, ऋतुषु विचित्राः शक्तयः, बीजस्थाः खाद्यलभ्या विचित्राः शक्तयः। अथ मिश्रकारणजन्या विकृतयो विविधशक्तिमत्यः कलमफलादिलभ्याः। अथ संस्काराः षोडश गर्भाधानाद्यास्तज्जन्याः सुमेधावत्त्वाद्याः शक्तयः। एवं प्रतिष्ठाकृता देवप्रतिमादिषु चेतनचैतन्यशक्तयः। अभिचाराद्या यमुद्दिश्य प्रवृत्तिजन्यास्तमेव दुःखं जनयन्ति। कारीरीजनितसंस्काराधारपुरुषयोगाज्जलमुचां कार्यपरत्वम्। प्रतिमादौ प्रतिष्ठाजन्या शक्तिः पूज्यत्वप्रयोजिका, चाण्डालादिस्पर्शे तु अपूज्यत्वप्रयोजिका जन्यते। प्रतिष्ठाविधिनाऽहंकारममकारात्मको देवतासन्निधिः क्रियते इत्यपि सत्यं, शक्त्या तु चमत्कारजननम्, अस्पृश्यस्पर्शे शक्तिनाशे चमत्कारनाशः। प्रतिष्ठाविधिनाऽऽधेयशक्तिवत् अदृष्टमपि जन्यते तच्चाऽदृष्टवदात्मसंयोगाश्रयं मूर्तं रूपं पूज्यत्वप्रयोजकम्, तन्नाशे चाऽपूज्यत्वम्, एतत्तु वैदिकविधिनियतम्। अन्यत्र तु चाण्डालभक्त्योद्भूतभगवन्मूर्तौ शक्तिरेव पूज्यत्वप्रयोजिका, तत्राऽपूज्यताया अयोगात्॥ प्रतिष्ठाकर्मध्वंसोऽस्पृश्याऽस्पर्शनियतः शक्तिपोषकः, यावच्छक्तिस्तावत्पूज्यतेति॥ अशक्तावचमत्कृतिरपूज्यतापि च॥ ४६५॥

**कामिनीपादसंस्पर्शादशोकफलयोगिता।**
**कन्यापूजनसंलब्ध्या नदीपूरादिनिम्नता॥४६६॥**
**दैवसाक्ष्यकृता शक्तिरदृष्टा दृशिगोचरा।**
**यावद्गता न नियता नाऽसिद्धा तात्त्विकी हि सा॥**

दृश्यतेऽपि सगर्भाचरणाधातजन्यमशोकतरुफलवत्त्वम्, वीक्ष्यते च नदीपूराणामुर्वरितानामपि कन्याकृतनालिकेरकुंकुमाऽक्षुतशाटिकाशिरोमुकुटाद्यर्पणपूर्वकजलवरुणपूजनेन द्रागेव जलपूरक्षीणता, लभ्यते च दैवसाक्ष्येऽग्निलौहगोलकोद्धरणे तुलारोहणादौ च सत्योत्थशक्तिजन्यनिर्दोषफलनिर्णयवत्त्वम्, भवति च रज्ज्वादीनां तन्तुसमूहशक्तिर्भारोद्वहनप्रयोजिकेति च, तत्र तत्र कारणान्तरसत्त्वेऽपि भावाऽभावाभ्यां शक्तिविशेषाणां लाघवगौरवाऽविषयाणां दृष्टशक्तीनामदृष्टशक्तीनां च निह्नवाऽभावात्। ताम्रकांस्यादावपि मृद्भस्मजलसंयोगादिभिः शुद्धिराधेयशक्तिर्जायते। नहि ध्वंसः शक्तिपदप्रवृत्तिनिमित्तम् अभावो वा पारिभाषिकः, शकधातोः स्वादिदिवादिगणीयस्य स्वार्थेऽप्रवृत्त्यापत्तेः। अभिमन्त्रितपयःपल्लवादावपि व्यथाऽपनायकशक्तिमत्त्वस्य तत्तद्देवतासान्निध्यापादकशक्तिमत्त्वस्य च ध्रौव्यात्। कलमबीजादावपि विलक्षणशक्तिजननात्। लाक्षारसाऽवसेकादिभिरपि लवणनिक्षेपैर्मत्स्याँगदानैश्च हरिद्राऽनलसाधितहारीतमांसाद्यर्पणैश्च तत्तत्फलोत्पादनतत्तद्रसनाशनतत्तद्वस्तुव्यापादनादिकार्याणि तत्तज्जन्यशक्तिभिरेव जायन्ते। सत्यभावनोत्थशक्त्या देवतासान्निध्यलब्ध्या कर्मानुरूपं क्रियाफलं जन्यते। कारणसामग्रीसहकृतत्वे सति विलक्षणकार्यानुकूलधर्मत्वं शक्तित्वम्॥ एषा शक्तिः कारणेषु कार्येषु व्यापारेषु तद्भिन्नेष्वपि च वर्तमाना नाऽस्त ईदृशी नियता, नाऽपि कारणत्वादिनाऽसिद्धा, सर्वतत्त्वस्थितत्वात्, भिन्नैव पृथक् पदार्थान्तरमिति॥ ४६६-४६७॥

**कार्यप्राङ्नियतं साधारणं मुख्यं च कारणम्।**
**सहजीव्यं पृथगजीव्यं सापेक्षं वा मतं त्रिधा॥४६८॥**

कार्यनियतपूर्ववृत्ति कारणम्, प्रागभावप्रतियोगि कार्यम्, ध्वंसप्रतियोग्यनित्यम्, यद्विलम्बे कार्यविलम्बस्तदसाधारणं कारणं मुख्यम्, सहजीव्यम् असमवायि, पृथग्जीव्यं समवायि, सापेक्षं तु निमित्तम् अपृथक्सिद्धतादात्म्यं द्रव्यं समवायि गुणस्त्वसमवायि,

उपादानं त्वपृथग्जीव्यमपि, पृथग्जीव्यं तु तन्त्वाद्याः, सापेक्षं निमित्तं संकल्पोऽपि सहकारी कालोऽपि च। सकलोपस्थितौ तत्र कार्याऽभावव्यापकाऽभावप्रतियोगित्वं कारणत्वम्, तदभावाऽवच्छिन्ना कार्याऽभावव्याप्यता तत्त्वम्, अनन्यथासिद्धनियतपूर्ववर्तित्वम्, अन्याऽसमवधानाऽवच्छिन्नकार्याऽनुत्पत्तिव्याप्यत्वम्, अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वम्, अन्यथासिद्धत्वं-पूर्ववर्तिताऽवच्छेदकयद्रूपाऽवच्छेदेन प्रामाणिकानां न कारणत्वव्यवहारस्तद्रूपत्वम्, कारणतावच्छेदकधर्मत्वम्, स्वतन्त्राऽन्वयव्यतिरेकशून्यकारणगुणत्वम्, अन्यकारणकत्वेन गृहीतकारणकत्वम्, द्वारभिन्नं यत्कारणं तत्कारणत्वम्, यद्रूपाऽवच्छिन्नत्वं नियताऽऽवश्यकपूर्वभाविभिन्नत्वं तद्रूपवत्त्वम्, एवम्—अकारणत्वम् अन्यथासिद्धत्वम्, स्वस्वाऽनन्तरोत्पत्तिकसकलसमवधाने सत्यपि यस्याऽभावात्कार्यं न जायते सति च जायते तज्जातीयं प्रति तत् अनन्यथासिद्धम्। तभिन्नम् अन्यथासिद्धम्। न त्वन्योन्याश्रयः, परिचायकत्वेन निवेशात्॥ ४६८॥

**असंसारो भवेन्मुक्तिर्दुःखाऽभावो हि सर्वथा।**
**सुखं शाश्वतमेवाऽपि ब्रह्मानन्दः समस्तकः॥४६९॥**

सच्चिदानन्दो ज्ञानघन आत्मा नित्यशुद्धबुद्धमुक्तोऽपि बलवदज्ञानाऽविद्यामायाकर्मसंश्लिष्टः संसारी अमुक्तोऽतिवासनो भोक्तृत्वाऽभिमानी स्वनित्यमुक्तत्वमभिलषतीति चतुर्थः पुरुषार्थोऽपवर्गः शाश्वतस्वरूपानन्दात्मकः सर्वैरिष्यते। पुरुषार्थः पुरुषस्य प्रत्यक्षोऽपि अप्रत्यक्ष इव परोक्ष इति मत्वा प्रत्यक्षतयेष्यते। यत्र पफबभमाः पवर्गो नास्ति, पर्यायो जन्मनाम्, फल्गुता मानवभावस्य, बन्धनं प्राकृतिकवैकृतिकशारीरककर्मवासनानाम्, भ्रमोऽविद्यापर्वणाम्, माया ममतादीनां चेति, मुक्तावस्थायां न सन्ति। मिथ्याज्ञानजन्यवासना संसारः, वासनालयो मुक्तिः, स्वसमानाधिकरणदुःखप्रागभावाऽसहवृत्तिदुःखध्वंसो दुःखाऽत्यन्ताऽभावो मुक्तिः, आनन्दात्मकं शाश्वतसुखम्, तच्चस्वस्याऽपि परब्रह्मणश्चापि स्वस्य। 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति। अतीतदुःखध्वंसः सिद्ध एव, वर्तमानदुःखध्वंसोऽवश्यम्भोगभावी अनागतसञ्चितफलात्मकदुःखध्वंसाऽसंभवेऽपि तदनुत्पत्त्यर्थं पुरुषस्याऽर्थो यत्नः कर्तव्यतयोपतिष्ठते। दुःखाऽनुत्पादः पुरुषार्थः, सोऽपि दुःखप्रागभावस्य सत्त्वेऽनुत्पादस्याऽप्राप्तेः, जनिष्यमाणे दुःखे सत्येव प्रागभावनाशात् नान्यथेत्यनुत्पादाऽसंभवात्। किं तर्हि ?, अनागताऽनुत्पादमुद्दिश्य तद्धेत्वनुष्ठानस्य दुःखहेतूच्छेदस्य वा क्रियमाणत्वेन पुरुषार्थत्वविवक्षितत्वात्। तथा च दुःखाऽनुत्पादाऽनुष्ठानं दुःखहेतूच्छेदनाऽनुष्ठानं चोभयं पुरुषार्थ इति। तत्त्वज्ञानेन सवासनमिथ्याज्ञानाऽभावे दोषाऽभावे प्रवृत्त्यभावेऽदृष्टाऽभावे जन्माऽभावे च दुःखध्वंसो भवति, तत्त्वज्ञानात्मकस्य दुःखकारणत्रिरोधिनोऽनुष्ठानात्। तेन दुःखहेतूच्छेदोऽपि भवति, अतः पुरुषार्थसाधनानामपि पुरुषार्थत्वम्, चरमदुःखध्वंसस्तु तद्विषयकज्ञानात् स्यात्, विषयस्त्ववश्यमपेक्षणीयः, अन्यथा ध्वंसाऽभावात्, अथ प्रतियोगिवत् ध्वंसे तत्त्वज्ञानमपि कारणम्, तेन विना तदनुपपत्तेः, शुकादीनां तत्त्वज्ञानेन दुःखध्वंसस्य जायमानत्वात्, अन्वयव्यतिरेकानुविधायितत्त्वज्ञानजन्यतद्दुःखध्वंसस्यैव जायमानत्वात्। मुक्तौ ध्वंसोऽस्त्येव, तेन मुक्तिरस्त्येव, सध्वंसो मुक्त्युपपादकोत्पाद्य इति। अथ अनागतमपि प्रतियोगि स्वनाशार्थमुपादेयम्, तदनुत्पाद्य ध्वंसाऽनुत्पादात् इति चेन्न। पुरुषार्थहेतुत्वेन दुःखतत्साधनयोरपि उपादानदर्शनात्, अनागतजलपूरस्य निरोधार्थं सेतुनिर्माणादिप्रवृत्तिदर्शनात्, चरमदुःखध्वंसस्य स्वसमानाधिकरणदुःखप्रागभावाऽसहवृत्तिदुःखध्वंसत्वेन तस्योद्देश्यत्वात् पुरुषप्रयत्नसाध्यत्वाच्च। तत्तदात्मयावद्दुःखध्वंससमुन्मेलने तु तत्तदात्मनो दुःखध्वंसो मोक्षः। संस्काराऽजनकभोगविषयकदुःखध्वंसे मुक्तिः। संस्काराऽजनकाऽनुभवध्वंसोऽपि मुक्तिः। दृष्टत्वेन पुरुषार्थत्वात्। अथ— दुःखप्रागभावाऽसहवृत्तिदुःखसाधनध्वंसो मुक्तिः। लोकेऽहिविषवृश्चिककण्टकादिनाशस्य वैदिके तु प्रायश्चित्ते पापनाशस्य दुःखसाधनध्वंसत्वेन पुरुषार्थत्वात्। दुःखाऽनुत्पादस्य दुःखप्रागभावस्याऽनादित्वेनाऽसाध्यत्वादेवाऽप्रयोजनत्वेऽपि दुःखसाधनाऽभावस्य प्रयोजनत्वात्। 'यदिच्छया यत्साधने यस्य प्रवृत्तिस्तस्यैव तत्प्रयोजनत्वात्'। प्रयोजनमनुद्दिश्य द्वेषमात्राद्

दुःखैकफलके प्रयत्नाऽनुत्पादात् क्षुद्धानामपि तत्कालिकफलाभिमानवत्त्वात् उत्कटरागवतामपि विकर्मणि प्रवृत्तिमत्त्वम्। किञ्च—'दुःखं मे मा भूदि' त्युद्दिश्य प्रायश्चित्तादौ प्रवृत्तेः दुःखाऽनुत्पादस्याऽपि प्रयोजनत्वे बाधकाऽभावात्। दुःखप्रागभावस्यापि दुःखकारणविघटनद्वारा कृतिसाध्यत्वात्। दुःखकारणसमवधानदशायां कृतौ सत्यां दुःखसाधननाशे सति अग्रिमसमये प्रागभावस्वरूपमस्तीति तेन विना नास्तीत्यन्वयव्यतिरेकसत्त्वात्। योगवत् क्षेमस्याऽपि अनागताऽनिष्टाऽनुत्पादजनकस्य परीक्षकप्रवृत्तिविषयत्वात्। अथ प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावोऽस्ति हि चेत् दुःखमवश्यं स्यात्, तस्य प्रतियोगिजनकत्वनियमात्, प्रागभावो नास्ति चेत् दुःखाऽनुत्पाद एवेति प्रायश्चित्तनैष्फल्यम्, अतः दुःखसाधनध्वंसमुखेन प्रागभावस्य साध्यता कृतिसाध्यता दुःखसाधनध्वंसे तु पुरुषार्थो न तु दुःखाऽनुत्पादे। अथ तर्हि प्रागभावाऽभावे दुःखसाधनपापाऽभावे एव न तन्नाशप्रवृत्तिः, पापसत्त्वे तु दुःखोत्पादनियमात् प्रायश्चित्ते सत्यपि न पापनाश इति चेन्न। प्रागभावाऽसत्त्वेऽपि दुःखसाधनजातीयनाशस्य पुरुषार्थत्वेन पापान्तरमादायाऽपि दुःखजनकत्वसंभवात्, प्रायश्चित्तात्पापनाशः स्यादेव प्रागभावसत्त्वाऽसत्त्वसन्देहेऽपि प्रायश्चित्तप्रवृत्तिः स्यादेव, शंकानिवृत्तिरपि फलम्। मुक्तिपूर्वं कस्यचिदपि दुःखस्य प्रागभावस्त्वस्त्येव, अमरणेन तत्सिद्धेः, तस्यैव दुःखाऽनुत्पादरूपत्वेन पुरुषार्थत्वात्। स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेपि न निष्फलं प्रायश्चित्तम्, पापान्तरे सति तु दुःखं स्यात्। स्वरूपसतो दुःखानुत्पादस्य पुरुषार्थत्वात्, अनेन पापेन दुःखं मे मा भूदिति विद्यमानपापनाशार्थं प्रायश्चित्ते प्रवृत्तिः, चीर्णप्रायश्चित्ते तु दुःखप्रागभावो नास्ति, सत्त्वे अमोक्षप्रसंगात्, प्रायश्चित्तस्य सफलत्वात्, नरकसाधनपापनाशार्थमपि प्रवृत्तेः स्वीकारात्, दुःखसाधननाशस्य स्वतोऽपुरुषार्थत्वेऽपि पापान्तरजन्यप्रतियोगिनाशात् 'दुःखं मे मा भूदि' ति दुःखसाधनध्वंसार्थं प्रवृत्तेर्दुःखाऽनुत्पादस्य पुरुषार्थत्वात्। दुःखमयसंसारबीजमिथ्याज्ञानस्य ध्वंसो मुक्तिरिति चेन्न, द्राक् मरणप्रसंगात्, अमरणे तु व्यभिचारात्। अतो देहेन्द्रियबुद्धचादितन्निदानधर्माऽधर्मध्वंसो मुक्तिरित्यपि न, धर्मादीनां तत्त्वज्ञानाऽनाश्यत्वात्। भोगेन तन्नाशस्य पुरुषार्थत्वात्॥

अथ दुःखाऽत्यन्ताभावस्य मुक्तित्वे स्वस्य परदुःखाऽत्यन्ताभावसत्त्वात् मुक्तिमत्वापत्तिः। स्वदुःखसाधनध्वंसः स्वस्मिन् स्ववृत्तिदुःखाऽत्यन्ताभावसम्बन्धः साध्यो मुक्तिः, तदपि न, स्वतोऽपुरुषार्थत्वात्, दुःखाऽभावोद्देशेन तत्र प्रवृत्तेः, यद्यपि दुःखसाधनध्वंसविशिष्टदुःखात्यन्ताभावस्य साध्यस्य पुरुषार्थत्वं, विशेषणसाध्यत्वेन विशिष्टस्य साध्यत्वात्, तथापि अधर्मादिदुःखसाधनध्वंसस्य मुक्त्यनिर्वाहकत्वात्, मुक्तस्याऽनागतस्ववृत्तिदुःखाऽनभ्युपगमेन तदत्यन्ताभावसम्बन्धस्य साध्यत्वाऽभावात्, अभ्युपगमेऽमुक्तत्वापातात्, अत्यन्ताऽभावसम्बन्धविरोधाच्च। स्वस्य दुःखेन स्वात्यन्ताभावविरोधाच्च, परकीयदुःखात्यन्ताभावस्य स्वतःसिद्धत्वाच्च साध्यत्वाऽभावात्। सर्वदुःखप्रागभावसम्बन्धाऽभावो मुक्तिरित्यपि न, प्रागभावसंसर्गाभावस्य स्वतोऽनुद्देश्यत्वात् तस्य ध्वंसरूपत्वेन दुःखत्वेन हेयत्वाच्च॥

अथ आत्यन्तिकदुःखप्रागभावो मोक्षः, तस्य कदाचित् कृत्यनपेक्षत्वेऽपि प्रतियोगिजनकाऽधर्मनाशमुखेन कृतिसाध्यत्वेन पुरुषार्थत्वात्। यद्वा—युगपदधर्मध्वंस एव मुक्तिः, युगपत्सर्वाऽधर्मध्वंसेन सर्वप्रागभावस्याऽर्थात्साध्यत्वम्, अधर्मशरीरादिसहकारिविरहान्न प्रतियोग्यवश्योत्पादाग्रहः, सुखमनुदिश्याऽपि दुःखहान्यर्थं प्रवृत्तेर्दुःखाभावस्यापि सुखवत्स्वतः पुरुषार्थत्वात् दुःखाभावसुखान्यतरत्वं पुरुषार्थत्वम्, यद्वा—दुःखसुखोभयहानेच्छूनां मुक्त्यधिकारित्वम्, द्वन्द्वस्वरसेन मिलितसुखदुखोभयनिषेधस्य प्रतीयमानत्वात्, द्वित्वेनैकेन रूपेण उपस्थितयोः प्रत्येकं निषेधाऽन्वयेऽपि वाक्यभेदाऽभावात् 'अशरीरं वावसन्तं प्रियाऽप्रिये न स्पृशतः' इति मिलितनिषेधः एकैकाऽन्वये प्रत्येकाऽभावे पर्यवस्यति, अतः सर्वमुक्तिरपि, शमादीनां सहकारित्वं, साधनीयत्वात्। अथ—नित्यसुखाभिव्यक्तिर्मुक्तिः, सा प्राक् तु योगजधर्मसहकार्या ततस्तत्त्वज्ञानपोष्या धर्माऽधर्मादिक्षयेऽपि स्वरूपाऽभिव्यक्तिरनन्ताऽभिव्यक्तिप्रवाहोऽप्यनन्त इति। अनित्यानां बाधात् स्वभावत एव नित्य-

सुखसिद्धिस्तत्र ब्रह्मात्मविज्ञानस्य नित्यस्य सुखसाक्षात्कारात्मकस्याऽनुवर्तनादेव मुक्तित्वमव्याहतम्। 'आनन्दं ब्रह्मे'ति श्रुत्याऽऽनन्दवत्त्वं मुक्तिः ॥

अथ केचन स्वात्मकब्रह्माऽद्वैतसाक्षात्कारो मुक्तिः, स्वप्रकाशसुखात्मकब्रह्मस्वरूपता मुक्तिः। अपरे आनन्दात्मकपरमात्मनि जीवात्मलयो मुक्तिः, लिंगशरीरापगमो लयः, एकादशेन्द्रियाणि सूक्ष्मस्थूलदशभूतानि च लिंगशरीरम्, नित्यस्य लयाऽसंभवस्तु चिन्त्यः, परे तु निरुपप्लवा चित्तसन्ततिरपवर्गः, सन्ततिस्तु स्वयं शृंखलारूपा भागयोगिनीनित्यमोक्षाऽस्तदात्मिकेति चिन्त्यम्। केचित्तु—दुःखत्वेनाऽऽत्महानं मुक्तिः, अहानमोक्षस्य स्वरूपे हानाऽयोगोऽपि चिन्त्यः। योगर्द्धिलभ्याऽऽनन्दपूर्णा सिद्धमुक्तिरित्यपि परममुक्तिनिम्ना विरक्तिरहितेति चिन्त्या। सर्वत्र शाश्वताऽऽनन्दाशनसम्पत्तिः परमं स्वतः प्रयोजनम् ॥ नित्यानन्दात्मकब्रह्मसाक्षात्सम्पत्तिरिति श्रौताः, नित्यसुखभोगसम्पत्तिरिति कर्मठाः, उदितविमलज्ञानसम्पत्तिरिति क्षणिकाः, परिच्छिन्नसुखसम्पत्तिरिति दैहिकाः, संगमानन्दसम्पत्तिरिति ऐन्द्रियिकाः, प्रतिबिम्बितसुखसम्पत्तिरिति आन्तःकरणिकाः, स्वरूपकैवल्यसम्पत्तिरिति सामाधिकाः, वैतृष्ण्यसम्पत्तिरिति निरपेक्षाः, ब्रह्माऽऽविर्भावसम्पत्तिरिति ब्राह्माः, नित्यस्वर्गसम्पत्तिरिति धार्मिकाः, उर्वरितस्नेहसम्पत्तिरिति भक्ताः, सर्वकामसम्पत्तिरिति दासाः, ब्राह्मगुणसम्पत्तिरिति परिच्छिन्नाः विशिष्टज्ञप्तिसम्पत्तिरिति विशिष्टविज्ञाः, अदुःखचित्सम्पत्तिरिति तार्किकाः, निरवच्छिन्नसुखसम्पत्तिरिति पादार्थिकाः, दुःखप्रागभावानवच्छिन्नदुःखध्वंससम्पत्तिरिति भीरवः, दुःखप्रागभावमात्रसम्पत्तिरिति प्राभाकराः तत्त्वज्ञानाऽऽहितसर्वज्ञप्तिसम्पत्तिरिति व्यापकाः, दुःखात्यन्ताभावमात्रसम्पत्तिरिति चिन्तयितारोऽगतिकाः, दुरितमात्रध्वंससम्पत्तिरिति विरमिकाः, वासनामात्राऽनस्तित्वसम्पत्तिरिति भोगिनः, मिथ्याज्ञानविलयमात्रसम्पत्तिरिति संसारिणः, अविद्यायावत्स्पर्शाभावसम्पत्तिरिति मायिदण्डिनः, स्वतःस्फूर्तिसम्पत्तिरिति प्रत्यभिज्ञायिनः, ब्रह्मस्फूर्तिसम्पत्तिरिति त्वभेदिनः, लिंगशरीरनाशसम्पत्तिरिति त्रिकाण्डिनः, बुद्धिसंसर्गलयसम्पत्तिरिति सांख्याः, सर्गप्रयोजनविधुरदृश्याऽलिप्तसम्पत्तिरिति विवेकिनः, सुमूर्ताऽऽविर्भावसुखसुखिसम्पत्तिरिति तूपासनिनः, परमात्ममात्रसाक्षात्कारसम्पत्तिरिति स्नेहिलाः, आत्ममात्रसाक्षात्कारसम्पत्तिरिति स्वावलम्बिनः, एकविंशतिदुःखध्वंससम्पत्तिरिति प्राचीनतार्किकाः, सालोक्यसार्ष्टीसामीप्यसायुज्यसम्पत्तिरिति पौराणिकाः, चरमदुःखध्वंससम्पत्तिरिति नव्यौहिकाः, विज्ञानात्मसम्पत्तिरिति न्यासिनः, अविद्याकर्मनाशसम्पत्तिरिति वैदिकाः, आनन्दब्रह्माधिष्ठानात्मलयसम्पत्तिरिति दण्डविशिष्टिनः, स्वतन्त्रपञ्चत्वसम्पत्तिरिति प्रात्यक्षिकाः, धारावाहिकसततात्मसम्पत्तिरिति माध्यमिकाः, निर्मलविज्ञानोदयसम्पत्तिरिति ज्ञप्तिरसिकाः, आवृत्तिनिवृत्तिसम्पत्तिरिति अर्हणस्थितिकाः, सर्वनियामकत्वेतरसमस्तप्राप्तिमदात्मगतभगवद्याथात्म्यानुभवसम्पत्तिरिति श्रीश्रयिणः, जगत्कर्तृत्वश्रीवत्सलक्ष्मीतरसमस्तभागवतीयनिरवधिकानन्दादिनिभानन्दादिसम्पत्तिरिति द्वैतिनः, भगवदंशभूतजीवात्मगतभगवल्लीलानुभवसम्पत्तिरिति पुष्टिपेषिणः, सखीभावितकान्तरससम्पत्तिरिति रसिकभावुकाः, शिवभवनस्थितिकाऽऽत्मगताऽर्वशिवाऽऽलिंगनसम्पत्तिरिति कपालकेशिनः, अपरिच्छिन्नपूर्णात्मतासम्पत्तिरिति स्फूर्तिवादिनः, पारदरसपानोर्ध्वजीवनस्थैर्यसम्पत्तिरिति भिषग्रसवादिनः, परावाणीस्फुरणादर्शनसम्पत्तिरिति शाब्दिकाः, सखीमुक्तकेवलिकफिरस्तापैगम्बरसम्पत्तिरिति स्नेहिलाराधकाः, शून्यसम्पत्तिरिति त्वनास्थिनः, विशिष्टसमुच्चयितसर्वानन्दाविर्भावसम्पत्तिरिति तु स्वामिनः ॥ ४६९ ॥

**मोक्षेधिकारिणः सर्वे सिपाधयिषितस्तु यैः ।**
**वासनाक्षपणं ज्ञानोपासनाभ्यां हरिस्मृतिः ॥४७०॥**
**सर्वार्पणविधानेन कार्या भक्तिश्च माधवे ।**
**लग्नता श्रीहरौ यस्य मुक्तः स्याच्छीघ्रमेव स॥४७१॥**

यथाकथञ्चिन्मोक्षेच्छावन्तः साधनान्वेषणपराः सर्वे मानवा मोक्षाधिकारिणः, ज्ञानेन शास्त्रजन्येन गुरूपदिष्टेन विवेकेन वासनानाशः, उपासनया सततमूर्तिनिभालनम्, सर्वार्पणकर्मभिस्तदीयत्वज्ञापनम्, स्नेहादिप्रीतिभक्त्या परमात्मनि स्वसमर्पणम्, श्रीहरिमूर्तिलग्नता चेति तन्मयो यो भवेत् तस्य शीघ्रं मुक्तता स्यात् । धर्मः प्रसन्नतां जनयेत्, ज्ञानं त्वज्ञानं नाशयेत् वैराग्यो रागद्वेषौ क्षपयेत् भक्तिः स्वं स्वामिन्यर्पयेत्, तत्कृपा स्वमाकर्षयेत्, परमपदे सारूप्यमाप्य तत्सेवायां वर्तेत। यथामतं वा भवेत् धर्मज्ञानवैराग्याणि सन्निपत्योपकारकाणि भक्तौ, भक्तिश्चारादुपकारिका कृपायाम्, कृपा च मुक्तिसाधनमिति । एतदन्यथा तु बुद्धिवादमात्रम्, पक्षान्तराणां बहुत्र श्रद्धेयत्वात् ॥

यथामतानि वाक्यानि—'ऋते ज्ञानान्न मुक्तिः' । 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि हि मुच्यते' । 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' । 'तत्प्राप्तिहेतुर्विज्ञानम्' । 'तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्' 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण च' । 'परिज्ञानाद् भवेन्मुक्तिः' । 'आत्मा ज्ञातव्यः, न स पुनरावर्तते' । 'तावदेवाऽस्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते कैवल्येने'ति । 'एकभक्तिर्विशिष्यते' । 'कलौ तद्धरिकीर्तनात्' ॥ साधनैर्ज्ञानद्वारा भक्त्या सेवया समाधिना प्रीत्या कृपया भगवत्प्राप्तिर्मुक्तिः' ॥ 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' । 'निरञ्जनः परमं साम्यमुपैति' । 'जक्षन् क्रीडन् रममाणो मोहते' इतीयं परमा मुक्तिः ॥ अविद्यानिवृत्त्यर्थं ज्ञानमर्जनीयम्, भगवति प्रीत्यर्थं माहात्म्यज्ञानमर्जनीयम्, स्नेहसेवया प्रीतिरर्जनीया ॥ चिच्चैतन्यात्मा धर्मधर्म्येकचैतन्यतत्त्वात्मकः स्वयमणुरपि भगवन्मूर्तौ स्वज्ञानसमृद्धिसहितः प्रविष्टः सन् मूर्तिसारूप्यमाप्तः ज्ञानचैतन्यशरीरशरीरी स्वयमुपासनया भक्त्या कृपया भगवदिच्छया भगवत्सारूप्यमापन्नः समुद्भूतसर्वदिव्यगुणसामर्थ्यवीर्यबलशक्तितेजःसार्वज्ञ्यादिमान् नित्यतत्त्वमूर्तिरेव साकारोऽक्षरब्रह्मलोके मुक्तपुरुषः परमपुरुषसेवको विराजते सर्वकामान् भुंक्ते, यथाऽवसराऽवकाशाऽनन्तरूपधरः सन् सेवामुक्तिमान् शोभते ॥ ४७० ॥ ४७१ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशलवैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाचार्यस्वामिनारायणविरचितायां तत्त्वप्रभावल्यां प्रमाणचिन्तामण्याख्ये द्वितीयखण्डेऽनुमानपरिकरनिरूपणनामा दशमः परिच्छेदः ॥ १० ॥

## अथ श्रीतत्त्वप्रभावल्याः प्रमाणखण्डे-शब्दप्रमाणम्

शब्दः स्वार्थयुतः शक्त्या यद्वा लक्षणया युतः ।
वाच्यबोधकरः सर्वव्यवहारस्य साधनम् ॥४७२॥
व्यापको गगनस्थश्च गगनाऽभिन्नतद्गुणः ।
विद्युद्वायुसहायेन व्यक्तः सूक्ष्मोऽन्यथाऽस्ति खे ॥
जले पृथ्व्यामनले च वायौ निमित्तबन्धनः ।
कर्णग्राह्योऽक्षरादिश्च ध्वनिश्चाऽग्राह्यपूर्वकः ॥४७४॥
वृद्धिह्रासास्तरतमा बुध्यन्ते व्यक्तसंक्रमाः ।
शब्दधाराः पर्वतादावनुभूयन्त ऊर्ध्वगाः ॥४७५॥
अतः शब्दा दशदिक्षूत्पद्यन्ते सर्वतः समाः ।
कोमला मधुरा रूक्षा आनुपूर्वीसजातिकाः ॥४७६॥
कस्तु क एव सर्वत्र निमित्तानुगतः पृथक् ।
व्यापकोऽनन्ततां प्राप्नुवानोऽसंख्यविधो मतः ॥
लौकिकाः संस्कृताश्चापि विद्वद्भिः सन्निवेशिताः ॥
अर्थे योग्ये व्यवहार्ये रेखाबोध्याः कृता जनैः ॥४७८॥

श्रोत्रेन्द्रियमात्रग्राह्यतावच्छेदकजातिमत्त्वं शब्दत्वम्, आकाशगुणत्वं शब्दत्वम्, शब्दपदजन्यबोधविषयत्वं शब्दत्वम्, शृणोमीतिप्रत्यक्षगुणत्वं शब्दत्वम् । ककाराद्या द्विपञ्चाशदक्षराः प्रामाणिकैर्मताः, सस्वरा एकैके द्वादशाक्षरीसंकलनारूपाः, संयुक्ताश्च शब्दपदादिरूपाः, शब्दसमूहाः वाक्यरूपाः, वाक्यसमूहाः श्लोकगद्यप्रकरणादिरूपाः शास्त्ररूपाश्च सर्वेऽपि निजनिजाऽर्थान्विता विद्यन्ते । वाचकं पदम्, वाच्योऽर्थः, शब्दज्ञानं प्रमाणं करणम्

पदजन्यपदार्थस्मरणं द्वारम्, शक्तिलक्षणाऽन्यतरवृत्तिज्ञानं सहकारिकारणम्, शाब्दबोधः फलं प्रमा, पदज्ञानम् एकसम्बन्धिज्ञानविधया पदार्थोपस्थापकम्। संकेतो लक्षणा चाऽर्थे पदवृत्तिः। सा च—'अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा, इदं पदममुमर्थं बोधयतु'इति चेश्वरेच्छारूपा वा 'अस्याऽर्थस्य बोधोऽस्माच्छब्दाज्जायतामिति'वा। प्रथमे—एतत्पदजन्यबोधविषयतावानर्थो भवतु'इतीच्छा शक्तिः, एतत्पदनिष्ठप्रकारतानिरूपितजन्यत्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयोऽर्थः इति बोधः। स्वजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वम् पदस्याऽर्थे सम्बन्धः॥ अथ द्वितीये'एतदर्थविषयकबोधजनकतावदिदं पदं भवतु' इतीच्छा, एतदर्थनिष्ठप्रकारतानिरूपितविषयित्वनिष्ठप्रकारतानिरूपितबोधनिष्ठप्रकारतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयः पदमिति बोधः॥ 'पदं गां वक्ति' 'पदेन गौरुच्यते' इत्यादौ 'अस्मात्पदादयमर्थो बोद्धव्यः' इति संकेते बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं वाच्यर्थः। 'गां पदं वक्ती'त्यत्र विशेष्यतायाः परम्परया निरूपकप्रकारताश्रयत्वात्मककर्तृत्वं कर्त्राख्यातेन बोध्यते, तत् स्वरूपेण पदेऽन्वेति, गामिति द्वितीयार्थो निष्ठत्वम्, गोनिष्ठा या बोधविषयत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतानिष्ठविशेष्यतानिरूपित–निरूपितत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधत्वावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वसम्बन्धावच्छिन्नप्रकारताश्रयतावद् गोपदमिति बोधः॥ तादृशाद्यश्रयाऽन्तोऽत्र कर्त्राख्यातार्थः॥ 'पदेन गौरुच्यते' इत्यत्र तादृशविशेष्यतायाः आश्रयत्वसम्बन्धेन अर्थेऽन्वयः, तृतीयार्थ आधेयता, गोपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयतावान् गौरिति बोधः॥ अथ 'पदं गां वक्ति' 'पदेन गौरुच्यते' इत्यादौ 'इदं पदमिममर्थं बोधयत्वि' ति संकेते बोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं धात्वर्थः। 'पदं गां वक्ती'त्यत्र तादृशविशेष्यतायाः आश्रयत्वेन पदेऽन्वयः, गोविषयकबोधजनकत्वप्रकारतानिरूपितेश्वरेच्छीयविशेष्यताश्रयो गोपदमिति बोधः। 'गोपदेन गौरुच्यते' इत्यत्र तृतीयार्थ आधेयता, तत्र निरूपितत्वेन पदस्याऽन्वयः, आधेयताया विशेष्यत्वेऽन्वयः, गोपदनिरूपिताऽऽधेयतावती या बोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता तन्निष्ठविशेष्यतानिरूपितनिरूपितत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितप्रकारत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधत्वावच्छिन्नप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारताश्रयो गौरिति बोधः। तादृशाद्याश्रयान्तः कर्माऽऽख्यातार्थः। वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तलक्षणम्, आश्रयत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता घटे, अवच्छेदकत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता घटत्वे, अवच्छेदकताऽवच्छेदकत्वसम्बन्धावच्छिन्नघटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यता समवाये वर्तते। आकारस्तु 'घटो घटपदजन्यबोधविषयो भवतु' 'घटत्वं घटपदजन्यबोधविषयतावच्छेदकं भवतु' 'समवायः घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवतु' इति। अत्र आधुनिकसंकेतार्थमिच्छामात्रं शक्तिरित्यपि सुवचः। 'गौः गोपदवान्' इत्यत्र गोपदवत्ता प्रथमसंकेते ज्ञाने स्वजन्यबोधविषयत्वनिष्ठाऽऽश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितसंकेतीयविशेष्यता गवि गोपदसम्बन्धः। सम्बन्धेन आश्रयत्वसम्बन्धावच्छिन्नप्रकारतायां गोत्वनिष्ठविशेष्यतानिरूपितसमवायसम्बन्धावच्छिन्नाऽवच्छेदकतासम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्। द्वितीयसंकेते गोपदवत्ता स्वनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसम्बन्धावच्छिन्नसंकेतीयप्रकारतासम्बन्धेन। अत्र सम्बन्धे विषयत्वसम्बन्धावच्छिन्नगोनिष्ठप्रकारतानिरूपितबोधनिष्ठविशेष्यतायां समवायसम्बन्धाव-

च्छिन्नस्वनिष्ठावच्छेदकताकविषयत्वसम्बन्धावच्छिन्न-गोत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाऽवच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अस्माच्छब्दादस्याऽर्थस्य बोधो जायतामिति संकेते गोपदवृत्ता स्वनिष्ठ-निरूपितत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितजन्यत्व-निष्ठविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नजन्य-त्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वा-वच्छिन्नबोधनिष्ठविशेष्यतानिरूपितविषयत्वसम्बन्धा-वच्छिन्नप्रकारतासम्बन्धेन। अत्र सम्बन्धे विषयत्व-सम्बन्धावच्छिन्नगोनिष्ठप्रकारतानिरूपितबोधत्वाव-च्छिन्नविशेष्यतायां स्वनिष्ठसमवायसम्बन्धाव-च्छिन्नाऽवच्छेदकताकविषयत्वसम्बन्धावच्छिन्नगोत्व-निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वं विशेषण-विधया प्रविष्टत्वम्। वाच्यत्वज्ञानस्य शाब्दबोधौ-पयिकत्वात्। वाचकत्वज्ञानस्य न शाब्दबोधौपयिक-त्वम्, समवायस्य स्वरूपतः प्रकारत्वाऽसंभवेन सम-वायत्वानुपस्थितत्वात् समवायेन गोत्वप्रकारक-बोधाऽनुदयात्॥

'अस्मात्पदादयमर्थो बोद्धव्य' इत्यत्र वाच्यत्वपक्षे शब्दजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्न-प्रकारतावत्त्वसम्बन्धेन संकेतः। संकेतीयशब्दजन्य-बोधविषयत्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारताव-त्त्वं वाच्यत्वम्। प्रकारतावत्त्वं च स्वनिरूपित-विशेष्यत्वस्वावच्छिन्नाऽवच्छेदकत्वसम्बन्धावच्छिन्न-प्रकारतानिरूपितविशेष्यत्व-स्वावच्छिन्नप्रकारतानि-रूपितसंसर्गतावच्छेदकत्वैतदन्यतमसम्बन्धेन। गौः गोशब्दजन्यबोधविषयो भवतु इत्यर्थके गौः गोशब्दा-द्बोद्धव्य इत्याकारके संकेते गोशब्दजन्यबोधविषयत्वं गवि आश्रयतासम्बन्धेन प्रकारः, गोत्वे च समवाय-सम्बन्धावच्छिन्नाऽवच्छेदकता-समवायनिष्ठावच्छेद-कतानिरूपिताऽवच्छेदकतासम्बन्धेन प्रकारः, उक्त-संकेतीया शब्दजन्यबोधविषयत्वनिष्ठाश्रयत्वसम्बन्धा-वच्छिन्नप्रकारता स्वनिरूपितविशेष्यतासम्बन्धेन गवि, स्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाऽवच्छेद-कत्व-सम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्ब-न्धेन गोत्वे, स्वावच्छिन्नप्रकारतानिरूपितसंसर्गता-निरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेद-कतासम्बन्धेन समवाये विद्यते इति गोगोत्वसमवायाः गोशब्दस्य वाच्याः॥

अथ तत्रैव वाचकत्वपक्षे-अर्थविशिष्टाश्रयत्व-सम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नविषयत्वनिष्ठविशे-ष्यतानिरूपितप्रकारत्वावच्छिन्नबोधनिष्ठविशेष्यतानि-रूपितप्रकारत्वावच्छिन्नजन्यत्वनिष्ठविशेष्यतानिरूपित-प्रकारतावत्त्वसम्बन्धेन संकेतः, संकेतीयतादृशप्रकार-तावत्त्वं वाचकत्वम्। विषयत्वनिष्ठाऽऽश्रयत्वसम्ब-न्धावच्छिन्नप्रकारतायाम् अर्थवैशिष्ट्यं स्वनिष्ठ-विशेष्यतानिरूपितत्वस्वनिष्ठविशेष्यतानिरूपितसम-वायसम्बन्धावच्छिन्नाऽवच्छेदकत्वसम्बन्धावच्छिन्न-प्रकारत्वावच्छिन्नत्व-स्वनिष्ठावच्छेदकतानिरूपिताऽ-वच्छेदकतानिष्ठावच्छेदकतानिरूपितप्रकारत्वावच्छि-न्नत्वैतदन्यतरसम्बन्धेन। शब्दजन्यबोधविषयत्व-निष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतायां गौः स्वनिष्ठ विशेष्यतानिरूपितत्वसम्बन्धेन, गोत्वं स्वनिष्ठविशे-ष्यतानिरूपितप्रकारत्वावच्छिन्नत्वसम्बन्धेन, सम-वायश्च स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकता-निरूपितसंसर्गतानिरूपितप्रकारत्वावच्छिन्नत्वसम्बन्धेन वर्तते इति गोगोत्वसमवायानां गोशब्दो वाचकः॥

अथ—'अयं शब्दोऽमुमर्थं बोधयतु' इत्यनुसारेण वाच्यत्वम्, शब्दनिष्ठविशेष्यतानिरूपितजनकत्व-निष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधनिष्ठ-प्रकारत्वावच्छिन्नविशेष्यतावत्त्वसम्बन्धेन संकेतः, संकेतीयतादृशविशेष्यतावत्त्वं वाच्यत्वम्॥ अत्रैव वाचकत्वम्-अर्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्न-प्रकारतानिरूपितजनकत्वनिष्ठविशेष्यत्वावच्छिन्न-प्रकारतानिरूपितविशेष्यतावत्त्वसम्बन्धेन संकेतः, संकेतीयतादृशविशेष्यतावत्त्वं वाचकत्वम्॥ सम्ब-न्धोऽत्र प्रतिलोमतया नियोज्यः॥ तृतीयसंकेतानुसा-रेण वाच्यत्वम्—शब्दजन्यत्वनिष्ठप्रकारतानिरूपित-बोधत्वावच्छिन्नविशेष्यतावत्त्वसम्बन्धेन संकेतः, संके-तीयतादृशविशेष्यतावत्त्वं वाच्यत्वम्॥ तृतीयसंके-तानुसारेण वाचकत्वम्—अर्थविशिष्टबोधत्वावच्छिन्न-विशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशे-ष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नप्रकारता-सम्बन्धेन संकेतः, संकेतीयतादृशप्रकारतावत्त्वं वाच-कत्वम्॥

अथ प्रत्यक्षं सेन्द्रियम्, अनुमानं स्फुरणादिरूपम्, शब्दज्ञानं शब्दप्रत्यक्षमपि, शाब्दीवृत्त्या शक्त्या वा शक्यसम्बन्धात्मकलक्षणया सहकारिण्या शक्तिग्रहेण लक्षणाग्रहेण च श्रुतपदस्य पदार्थस्मृतिद्वारा सम्बन्धबोधात्मको वाक्यार्थबोधः इति पितृनिश्चये बालस्य मातृशब्दजज्ञानं करणं तदर्थधीर्व्यापारः शाब्दबोधः फलं तत्र शक्तिलक्षणान्यतरज्ञानं सहकारि कारणं यावच्छाब्दव्यवहारं बोध्यम् ॥ वाच्यार्थस्य बोधकरो वाचकः शब्दः, तज्जन्यस्य बाह्यस्य व्यवहारस्य मौनिश्लोकादिज्ञाप्यव्यवहारस्य स्फुरणादिव्यवहारस्यापि च साधनं शब्दज्ञानम्, तच्च प्रमाणम् ॥ रूपप्रत्यक्षं घटे धूमप्रत्यक्षं वह्नौ शब्दप्रत्यक्षं शाब्दे च बोधे करणमिति कारणमिति च वा सर्वसम्मतम्। असम्मतानामपि पितृपरिचये तु प्रमाणान्तरसम्मतमेव ॥ आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च विद्याः पारलौकिकपदार्थाश्च शब्दशास्त्रैकसमधिगम्याः। स्वाऽध्यायोऽध्येतव्य इति प्रमाकरणं शब्दप्रमाणं दृढीकृतम्। शिक्षाः सर्वाः शब्दमय्यः। काव्यानि शब्दप्रमाणकानि। राज्यतन्त्रं न्यायतन्त्रं शब्दप्रमाणकम्। भिन्नदेशीयानां व्यवहाराः शब्दार्थभाषाधीनाः। विधिनिषेधादिपरं शास्त्रं शब्दप्रमाणम्। मातृभूमिसम्बन्धः मातृभाषात्मकः। संगीतशास्त्रं शब्दप्रणाल्याधारम्। व्याकरणं शब्दप्रमाणम्। ओमित्यनादिशब्दः प्रमाणम्। यथार्था वाक् प्रमाणम्। शब्दशक्तिर्लक्षणाजीविका। प्रत्यक्षेऽनुमाने वा पराहते तत्र तत्र शब्दप्रयोगः प्रधातोऽर्थबोधफलः। काव्यरसाऽलंकाराद्याः शब्दवेद्याः। देवताद्रव्यसम्बद्धा मन्त्राः प्रमाणम्। आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्। विधिना त्वेकवाक्यत्वात् स्तुत्यर्थं विधीनां स्युः। सामवेदः स्तुत्यात्मकः शब्दप्रमाणम्। नित्यः शब्दार्थसम्बन्धः। वागर्थाविव सम्पृक्तौ। स्वरूपतः प्रमाणानां पुंस्त्रीनपुंसकानां परपरिचयार्थं शब्दप्रमाणमुपयुज्यते। अक्षरसमाम्नायो ब्रह्मराशिः प्रमाणम्। इष्टबुद्ध्यर्थो वर्णानामुपदेशः। अपदं न प्रयुञ्जीत, चतुर्दशसूत्राणाम् अनुकरणाऽनुकार्यात्मकानां भेदाऽभेदौ प्रामाणिकौ। सूत्रसमाम्नाये महेश्वरपरम्परा प्रामाणिकी। वृद्धिरादैच्, अकारो वासुदेवः, 'ओमित्येकाक्षरं ब्रह्म', अथ इति मंगले, प्रामाणिकाः प्रमाणशब्दाः ॥ ४७२–४७८ ॥

**व्याकरणादुपमानात् कोशादाप्तोक्तितस्तथा।**
**व्यवहाराद्वाक्यशेषाद्विवृतेश्च प्रसिद्धितः ॥४७९॥**
**शक्तिग्रहं प्रकरणाच्चेष्टाव्यापारयोगतः।**
**जायते फलतोऽभ्यासात् प्रमाऽन्यो भ्रम इत्यपि ॥**

शक्तिग्राहकं व्याकरणमपि, धातूनां स्वार्थे भू सत्तायामिति भ्वादीनां सत्ताद्यर्थे, पाचकादौ पाचकार्थे, कृत्प्रत्ययस्य कर्तृत्वार्थे, निपातानां विपूयेत्यादीनां मुञ्जतृणादौ, प्रकृतीनां स्वस्वार्थे, 'वर्तमाने लट्' इत्यादिलट्प्रत्ययानां वर्तमानार्थे, आख्यातस्य कर्तरि, विभक्तीनामाश्रयाद्यर्थे, तत्र द्वितीयातृतीयासप्तमीनामाश्रयार्थे, द्वितीयायाः क्रियाजन्यफलाश्रये कर्मणि, तृतीयाया धात्वर्थव्यापाराश्रये कर्तरि, सप्तम्या आश्रये, पञ्चम्या अवधौ, चतुर्थ्या उद्देश्ये सम्प्रदाने, षष्ठ्याः सम्बन्धे, स्वादिप्रत्ययानामेकत्वादौ, समासादिवृत्तीनाम् अर्थविशेषे, शक्तिग्रहो भवति। क्वचित् आख्यातानां कृतौ, सकर्मकधातुभ्यो यगाद्यनुत्तरं लकाराणां कर्तरि यगाद्युत्तरलकाराणां कर्मणि शक्तिः, अकर्मकधातुभ्यो यगाद्यनुत्तरलकाराणां कर्तरि, यगाद्यनुत्तरलकाराणां निरर्थकत्वम्, नैयायिका आख्यातस्य कृतौ शक्तिः, नवीनवैयाकरणाः कर्तृकर्माख्यातयोराश्रयमात्रे शक्तिः, एवकारस्य अन्ययोगव्यवच्छेदे अयोगव्यवच्छेदे अत्यन्तायोगव्यवच्छेदे वृत्तिः; इव सादृश्यवृत्तिः, मीमांसका आख्यातस्य व्यापारे शक्तिः, क्वचिन्निरूढा लक्षणा, चिन्तामणिकारः आख्यातस्याऽऽश्रयत्वे निरूढा लक्षणा, मीमांसका आख्यातार्थो भावना। इच्छतीत्यत्र आख्यातस्य आश्रयत्वे लक्षणा, यतते इत्यत्र आश्रयत्वे, नश्यतीत्यत्र प्रतियोगित्वे आख्यातस्य लक्षणा, रत्नकोशकारः आख्यातस्य उत्पादनायां शक्तिः ॥

अथोपमानात् गोनिरूपितगवयनिष्ठसादृश्यप्रत्यक्षात् गवयो गवयपदवाच्य इति शक्तिग्रहः, वैयाकरणमते धात्वर्थमुख्यविशेष्यकशाब्दबोधः—पश्य मृगो धावति मृगकर्तृकधावनकर्मकं त्वत्कर्तृकं दर्शनमिति बोधः, पचति—व्यापारविषयः पाकः, मीमांसकमते

आख्यातार्थमुख्यविशेष्यकः शाब्दबोधः—देवदत्त ओदनं पचति—पाककरणिका ओदनभाव्यिका देवदत्तकृतिरिति । नैयायिकमते—प्रथमान्तमुख्यविशेष्यकशाब्दबोधः—चैत्रस्तण्डुलान् पचति—तण्डुलनिष्ठपाकानुकूलकृतिमाँश्चैत्रः । भेदान्वयेन चैत्रस्य धनम्—चैत्रनिष्ठस्वामितानिरूपकं धनम्, अभेदान्वयेन—नीलो घटः नीलाऽभिन्नघट इति ॥

कोशात्—पीताम्बरोऽच्युतः शार्ङ्गी—इति-श्रीकृष्णे शक्तिग्रहः, नीलस्य नीलरूपे नीलविशिष्टे च शक्तिग्रहः, नीले शक्तिः नीलविशिष्टे लक्षणा वा ॥ आप्तवाक्यात्—प्रयोगयथार्थज्ञाता आप्तः,तदुच्चरितवाक्यात्—कोकिलः पिकपदवाच्यः इति व्यवहारात्—'घटम् आनये' ति श्रुत्वा बालस्य शिष्यकृतघटानयनमाकलय्य 'अस्य घटानयनक्रिया घटानयनप्रवृत्तिपूर्विका प्रवृत्तिश्च तज्ज्ञानजन्या, घटानयनज्ञानम्—'घटमानय' वाक्यजन्यं, तदन्वयव्यतिरेकानुविधायित्वादिति क्रियान्विते घटे शक्तिं गृह्णाति, ततो वाक्यान्तरेष्वपि तथारीत्या शक्तिग्रहः । मीमांसकाः स्मारिकाम् आनुभाविकीं च द्वेधा शक्तिं मन्यन्ते, घटपदस्य घटत्वे स्मारिका, पशुपदादीनां व्यक्तौ, अथाऽनुभाविकी क्रियान्वितघटादौ, सा इच्छैव स्वरूपसती । धातूनां तु क्रियान्वितघटान्वितशाब्दबोधप्रयोजकत्वम् । कार्यतान्वितशाब्दबोधं प्रति लिङ्लोट्तव्यादीनां प्रयोजकत्वम्, अतोऽर्थवादानां विधिवाक्यैकवाक्यतया प्रामाण्यम् । नैयायिकमते कार्यतां त्यक्त्वा घटादीनां स्वार्थे शक्तिः । भाट्टाः—इतरान्वितेऽर्थे पदानां शक्तिरिति । अन्विते शक्तिर्न किन्तु केवलेऽर्थे इति नैयायिकाः । वेदान्तिनोऽपि अन्विते शक्तिरिति ॥ वाक्यशेषात्—यवमयश्चरुः—यवविकारीभूतचरुभवनमिष्टसाधनमिति बोधः, दीर्घशूके 'मोदमानास्तिष्ठन्ती'ति वाक्यशेषात् । हरिपदस्य नानाऽर्थेषु शक्तिः । विवरणात्—घटोऽस्ति कलशोऽस्तीति, पचति पाकं करोतीति । आख्यातो यत्नार्थकः । प्रसिद्धपदयोगात् सहकारे पिको रौतीति कोकिलार्थे पिकपदशक्तिः, आम्रवृक्षार्थबलात् । एते शक्तिग्रहोपायाः । युद्धे सैन्धवमानयेति अश्वे प्रकरणाच्छक्तिः । क्रूरनेत्रकोणचेष्टया सहाऽपराधक्षमा द्रव्यदण्डमादायेत्यर्थे शक्तिर्वा लक्षणा गृह्यते । सभयधावनाऽऽक्रोशादिशक्तिरापत्तिबोधिका । फलप्रत्यक्षोत्तरं कथितशब्दशक्तिग्रहः । मुहुरभ्यासाद् वा पदाभ्यासात् तद्विशेषार्थे शक्तिग्रहो वेदान्ते इव भवति ॥ जात्याकृतिव्यक्तयः शक्याः ॥ लक्षणायाम् अन्वयाऽनुपपत्तिस्तात्पर्यानुपपत्तिर्वा बीजम् ॥

तत्पदस्य बुद्धिस्थप्रकारे शक्तिः, इदमेतदोः—प्रत्यक्षबुद्धिप्रकारे शक्तिः, अदसः परोक्षबुद्धिप्रकारे शक्तिः, किम्पदस्य अनिर्धारिते जिज्ञासिते शक्तिः, को घट—इति घटो मज्जिज्ञासाविषयः, सर्वपदस्य व्यापकत्वविशिष्टे, उद्देश्यतावच्छेदकनिरूपिते विधेयतावच्छेदकनिष्ठे व्यापकत्वे शक्तिः । सर्वे घटा रूपवन्तः—घटत्वव्यापकरूपवन्तो घटाः । त्वं-पदस्य-युष्मत्पदस्य तत्कालीनसम्बोध्ये शक्तिः, अहम्पदस्य—अस्मत्पदस्य तत्कालीनस्वतन्त्रोच्चारयितरि शक्तिः, स्वनिजादिपदानां समभिव्याहृतपदोपस्थाप्ये शक्तिः, एवपदस्य कैवल्यविशिष्टे सजातीयद्वितीयराहित्यविशिष्टे शक्तिः, धेनुपदस्य धानकर्मत्वगोत्वोभयविशिष्टैकधर्मिणि शक्तिः, पुष्पवन्तपदस्य सूर्यत्वचन्द्रत्वविशिष्टनानाधर्मिषु शक्तिः, तत्र शक्तेरैक्यान्न नानार्थता, हर्यादिपदानां तु विभिन्नधर्मविशिष्टव्यक्तिषु विभिन्ना शक्तिः, शक्तं पदम्, वाक्यं तु लाक्षणिकम्, पदं चतुर्विधम्—योगशक्तिमत्, रूढिशक्तिमत्, योगरूढचैकशक्तिमत्, योगार्थरूढार्थभिन्नशक्तिमत् । योगशक्तिमत् पाचकादिपदम्, पच् ण्वुल्—अवयवशक्तिजन्यार्थः पाककर्ता । यौगिकं त्रेधा—समासः, तद्धितोक्तं, कृदन्तं च । द्वन्द्वोऽपि यौगिकः । ब्राह्मणी श्वश्रूः शूद्रा इत्यादिपदानि यौगिकानि । पदघटितशक्ततावच्छेदकताशून्यसमुदायत्ववत्त्वं यौगिकत्वम् । यादृशानुपूर्व्यविच्छिन्नं स्वघटकाऽवयवमात्रलभ्ययादृशविशिष्टार्थविषयकशाब्दं प्रति विषयतया जनकतावच्छेदकं भवति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे यौगिकत्वम् । गोमण्डलादिपदम्, गच्छतीति गौः 'गमेर्डोः' इति निष्पन्नो गमनकर्तृत्वरूपाऽवयवार्थवत् गोपदम् । मण्डलं परिधिः । मण्डपस्तु वितानो रूढ्या । पदाऽघटितशक्ततावच्छेदकसमुदायत्ववत्त्वं रूढत्वम् । रूढं त्रेधा—नैमित्तिकं पारिभाषिकम्

औपाधिकं च, अथवा जातिद्रव्यगुणस्पन्दैः संकेतवत् चतुर्धा रूढम्। गोगवयादीनां गोत्वादिजात्या, पश्वाढ्यादीनां लांगूलधनादिना, धन्यपिशुनादीनां पुण्यद्वेषादिना, चलचपलादीनां कर्मणा यादृशानुपूर्वी यादृशार्थबोधजनकत्वप्रकारकेच्छाविषयताऽवच्छेदिकायोगरूढभिन्नत्वे सति तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे रूढत्वम्। पंकजादिपदं योगरूढम्—पंकाज्जायते ,इत्यवयवशक्त्या, समुदायशक्त्या रूढ्या अवयविपद्मं बोधयति। रूढिज्ञानं केवलयौगिकार्थज्ञाने प्रतिबन्धकम्। अथवा व्यक्तिवचनानां सन्निहितविशेषपरत्वात्, समुदायार्थेऽवयवाऽर्थाऽन्वयस्य सान्निध्येन बलिष्ठत्वात्। रूढ्यर्थबाधेऽन्वयाऽनुपपत्त्या लक्षणा कुमुदार्थे। यत्र तात्पर्यं तदितरबाधश्च तत्र यौगिकम्। पंकजेन स्थलपद्मार्थस्तु अन्वयाऽनुपपत्त्या लक्षणयार्थः। अवयवार्थबाधेऽन्वयाऽनुपपत्त्या न लक्षणा किन्तु यौगिकी शक्तिः, स्थलपद्मे त्वजहत्स्वार्थालक्षणा तात्पर्याऽनुपपत्त्या॥

अथ समासः कृष्णसर्पादिः,तद्धितान्तं वासुदेवादि, कृदन्तं पंकजादि च। यादृशानुपूर्वी स्वाश्रयशक्ययादृशार्थधर्मिकस्वाश्रयाऽवयववृत्त्युपस्थाप्ययादृशार्थप्रकारकाऽन्वयबोधजनकताऽवच्छेदिका तादृशानुपूर्वीमन्नाम तादृशार्थघटिततादृशार्थे योगरूढम्। रूढिशक्तिनिरूपकतावच्छेदकं रूढिशक्तिसमानाधिकरणशक्तिनिरूपकपदघटितं रूढिशक्यताऽवच्छेदकसमानाधिकरणधर्मावच्छिन्नशक्तपदघटितं समुदायत्वं यत्तद्वत्त्वं योगरूढत्वम्॥ अथ—उद्भित्, महारजतम्, मण्डपः, यक्षकर्दमः, इत्याद्या अवयवशक्त्या तरुगुल्मादीन्, बृहद्रजतम्, मण्डपानकर्तारं, यक्षाणां कर्दममिति यौगिकार्थान् बोधयन्ति, रूढ्या तु—यज्ञं सुवर्णं वितानं चन्दनं पृथगर्थं रूढं बोधयन्ति। यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येश बोधात्। रूढिशक्यतावच्छेदकावच्छिन्नविषयताशालिशाब्दबोधनिष्ठकार्यतानिरूपितज्ञाननिष्ठकारणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकतावच्छेदकं रूढिशक्यतावच्छेदकाऽसमानाधिकरणधर्मावच्छिन्नविषयताशालिशाब्दबोधनिष्ठकार्यतानिरूपितज्ञाननिष्ठकरणतानिरूपितविषयतासम्बन्धावच्छिन्नाऽवच्छेदकताश्रयपदघटितं च यत् समुदायत्वं तद्वत्त्वं यौगिकरूढत्वम्। सामान्यतः शक्तिज्ञानशाब्दबोधयोः कार्यकारणभावे तु संसर्गे शक्तिरवश्यमादरणीया भवति, पदार्थद्वयोः सुशक्ययोः शाब्दबोधोऽन्वयं विनाऽनुपपद्यमानोऽशक्यबोधानुपपत्तयेऽन्वयेऽवर्जनीये सर्वत्र शक्तिरस्त्येवेति। पदार्थयोरन्वये आकांक्षाज्ञाननियतत्वस्य प्राधान्येन शक्याऽन्वयांगीकारात्॥

अनुमाकारणेभ्यः शाब्दे भिन्नानि कारणानि परिकरश्च। व्याप्तिग्रहाद्भिन्नः शक्तिग्रहः, लिंगदर्शनाद्भिन्नं वाक्यश्रवणम्, व्याप्तिस्मरणाद्भिन्नं पदार्थस्मरणम्, अनुमितिभिन्नो वाक्यार्थबोधः, साध्यपक्षप्रतीतिभिन्ना पदार्थप्रतीतिः, व्याप्तिसम्बन्धाद्भिन्नाः शब्दार्थशक्तिलक्षणाव्यञ्जनासम्बन्धाः, पक्षसत्त्वादिभ्यो भिन्न आप्तोक्तत्वनिश्चयः, व्याप्तिविषयतातः सांकेतिताऽभिधाया भिन्नत्वम्, अनुमितेः शाब्दस्य चाऽनुव्यवसायभेदात्, पदपदार्थपक्षकाऽनुमानसिद्धाऽनुमितेर्भिन्ना योग्यताऽऽकांक्षाऽऽसत्तिमत्पदस्मारितार्थप्रमा। पदपक्षकानुमाने लिंगज्ञानमुपयोगि, अनुमाने हेतुरूपाऽऽकांक्षा ज्ञाता सत्येवोपयोगिनी, शाब्दबोधे तु स्वरूपसती आकांक्षा कारणम्, अतोऽनुमानेन संसर्गाऽसिद्धेः, शाब्दं प्रमाणमावश्यकम्, आकांक्षा नाम समभिव्याहृतपदस्मारितपदार्थजिज्ञासा, वैदिक इव लौकिकोऽपि शब्दः प्रमाणम्, न्यायालयो राज्यसत्ताको लौकिकोक्तिसाक्षिकः प्रमाणम्। शब्दमूलोऽतीन्द्रियार्थयाथात्म्यावगमः। प्रत्यक्षमनुमानं यत्र बाधिते, तत्र शब्दमूलकं ज्ञानं प्रमाणम्, अलौकिकमार्षज्ञानम् आगममूलकम्। गुहाऽन्तःस्थितवस्तुविषयकनिर्णये प्रमायां शब्दप्रमाणस्यैव शक्तिः। ब्रह्मसाक्षात्कारे श्रवणं कारणम्। शब्दस्य व्यापाररूपेण व्यञ्जनायाः पोषणं भवति। स्मृतिसहकारेण मनसाऽभिधया शाब्दबोधः, स्मृतिसहकारेण मनसा लक्षणया शाब्दबोधः, तथा व्यञ्जनयापि व्यंग्यार्थस्य बोधः, अतो व्यंग्यव्यञ्जनाऽऽवश्यकी। शब्देन व्यंग्यार्थानामवगतौ व्याप्तेरभावाच्छब्दप्रमाणं तत्र मुख्यम्। व्यंग्यार्थप्रतीतौ शब्दप्रमाणां करणम्। ब्रह्मणि विभिन्नप्रस्थानानामुपनिषत्प्रमाणता, कर्मकाण्डयज्ञादौ मीमांसाशास्त्रकृत-

निर्णयानां श्रुतीनां प्रमाणतेति शब्दप्रमाणं सर्वथा वाङ्मयं सध्रीचीनम्। 'न स पुनरावर्तते' इति मोक्षस्थितिप्रमाणं श्रुतिः। सर्वेषां लौकिकानां वैदिकानां च वाक्यानां यत्किञ्चिदर्थविशेषविषयकसंशयनिवर्तकज्ञानजनकत्वेन प्रामाण्यम्। शब्दैश्च परोक्षात्मकं ज्ञानं जायते शाब्दबोधात्मकम्। शब्दस्थानि सप्तसाहित्यिक तत्त्वानि लक्षणाऽलंकारगुणदोषरीतिध्वनिरसरूपाणि प्रमाणपोषणानि प्रामाणिकानि शाब्दप्रमाजनकानि। अपौरुषेयशब्दराशिर्वेदः प्रमाणम्, वेदशब्दो रूढो योगरूढोऽपि, ब्राह्मण-उपनिषत् यौगिकः, ऋच्यन्ते स्तूयन्ते देवा अनया-ऋक्, स्यति पापं साम, इज्यतेऽनेनेति यजुः यौगिकाः, विदन्ति अनेन धर्ममिति वेदो यौगिकोऽपि। ओमिति रूढः, यौगिकोऽपि त्रिवर्णः। आथर्वणः अथर्वणां समूहः, अथर्वमन्त्रेषु रूढः, अथर्वा नाम तु शक्तमंगिरसः पुत्रार्थे॥

अथ घटपटपचकाद्याः प्रकृतयः स्वार्थे शक्ताः, सुप्तिङाद्याः प्रत्ययाः, सुपाद्याः कर्मत्वकर्तृत्वादौ शक्ताः, तिङाद्या इष्टसाधनत्वकृतिवर्तमानत्वैकत्वादौ शक्ताः, निपाताः चवाहेत्याद्याः क्रमशः समुच्चयविकल्पस्फुटत्वाद्यर्थे शक्ताः, एकत्वे सुः, घटपटपाचकादीनां प्राकृतीनां नियमतो विभक्तिसहकारेण, प्रत्ययानां सुब्रादीनां नियमतः प्रकृतिसहकारेण, चवाहादिनिपानानां नियमतो लुप्तविभक्त्यादिसहकारेणाऽन्वयबोधजनकत्वम् अतः प्रकृतिः प्रत्ययः निपातश्चेति त्रेधा शब्दः सार्थकः। शशविषाणादिरयोग्योऽपि शशस्य विषाणस्य पृथक्प्रसिद्धत्वेन जन्यत्वसंसर्गाऽतिरिक्तसंसर्गेण बोधे न क्षतिरिति सवृत्तिकत्वम्। श्यप्श्यनाद्या विकरणप्रत्यया नुमाद्यागमा अपि प्रकृतिसहायाः, वसाद्यादेशाः सदृशाद्यार्थका निभनिकाशाद्या अपि च प्रकृत्याधाराः पूर्वप्रकृत्याद्यर्थार्थाः अन्याधीनवृत्तिका अन्यवृत्यात्मकस्ववृत्तिकाः शब्दत्वेन परिगणिताः, अन्यथा तत्प्रापकसूत्रस्याऽनभिधानत्वापत्त्या शब्दनिष्पन्नतैव न स्यात्। अन्ततः स्वरूपसच्छक्ता मन्तव्याः॥ एकत्वे सुः, द्वित्वे औ, बहुत्वे जस्, शक्ताः। हे सम्बोधने शक्तः। टाप् स्त्रीत्वविवक्षाविषयः। लट्प्रभृतयो लकाराः सकर्मकधातुभ्यः कर्मणि कर्तरि च, सकर्मकेभ्यस्तु भावे कर्तरि च शक्ताः अपि तु 'वर्तमाने लट्' इति लट्प्रत्ययानां वर्तमानार्थे शक्तिग्रहः, 'लः कर्मणि च भावे चाऽकर्मकेभ्यः' इति बलात् आख्यातस्य तिप्रभृतेः कर्तरि शक्तिग्रहः, विभक्तीनामाश्रयाऽवध्युद्देश्यसम्बन्धशक्त्याद्यर्थे शक्तिग्रहः, द्वितीयातृतीयासप्तमीनाम् आश्रये, क्रियाजन्यफलाश्रये कर्मणि द्वितीयायाः, धात्वर्थव्यापाराश्रये कर्तरि तृतीयायाः, आधारोऽधिकरणमिति सप्तम्या आश्रयेऽधिकरणे, 'ध्रुवमपायेऽपादानमि'ति पञ्चम्या अवधौ, 'कर्मणा यमभिप्रैति स सम्प्रदानमिति चतुर्थ्या उद्देश्ये 'सम्प्रदाने, षष्ठी शेषे इति षष्ठ्याः सम्बन्धे शक्तिग्रहः। स्वादिप्रत्ययानामेकत्वादौ शक्तिग्रहः, मैत्रोऽस्ति—आश्रयत्वार्थस्तिङर्थः, यजेत—इष्टसाधनत्वं तिङर्थः, स्थीयते—वर्तमानत्वं तिङर्थः, पाचकः—कृतां स्वार्थे कर्तरि, काश्यपिः—कश्यपावच्छिन्ने स्वार्थेऽपत्ये, शक्तिः।, मीमांसकाः—लकारसामान्यस्य व्यापारमात्रे शक्तिः। नैयायिकाः—व्यापारे आख्यातस्य निरूढा लक्षणा। चिन्तामणिकारस्तु-आश्रयत्वे निरूढा लक्षणाऽऽख्यातस्य। मीमांसकाः—जानातीत्यत्र ज्ञाततावच्छिन्नं ज्ञानं धात्वर्थः, आख्यातार्थो भावना—उत्पादना, ज्ञातताश्रयज्ञानोत्पादनावानिति बोधः। नश्यतीत्यत्र आख्यातस्य प्रतियोगित्वे निरूढा लक्षणा, नाशप्रतियोग्येको घट इति बोधः। रत्नकोशकारस्तु—आख्यातस्य भावनायामुत्पादनायां शक्तिः, आख्यातार्थे धात्वर्थोत्पादकत्वम्, पचति—पाकमुत्पादयति, गच्छति—गमनमुत्पादयति, यतते—यत्नमुत्पादयति, तत्राऽऽख्यातस्याऽऽश्रयताऽर्थता। लिट्—भूतानद्यतनपरोक्षार्थे शक्तिमान्। भविष्यति—अनद्यतनेऽर्थे लुट्शक्तिः। भविष्यार्थे लृट्। लोट्-विध्याद्यर्थेषु शक्तिमान्। आशिषि लिङ्लोटौ शक्तौ। अनद्यतनभूतार्थे लङ्शक्तिः। विधिनिमन्त्रणाऽऽमन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्शक्तिः। भूतार्थे लुङ्शक्तिः। धातवः स्वस्वार्थे शक्ताः। प्रेषणाऽध्येषणाऽनुमत्युपदेशाद्यर्थे वाच्ये णिच् शक्तिमान्। सन्प्रत्ययस्य इच्छायां शक्तिः। यङ्प्रत्ययस्य पुनःपौन्ये भृशार्थे च शक्तिः। क्यच् इच्छार्थे शक्तः। क्यङ्काम्यच् लालसायां शक्तौ। आचारार्थे क्यङ्। एवं नामधातुनिष्पादक-

प्रक्रियाप्रत्ययास्त्वनेकार्थशक्ताः धात्वर्थयोग्यार्थकाः। भावक्रियावाचिनि सार्वधातुके यक् भवति, तत्र लकारोऽनुवादकः। उत्तमैकत्वं भावे लकारे, तिङ्वाच्यो भावः, एकत्वप्राप्तिश्च। यत्र कर्मैव कर्तृत्वेन विवक्षितं तत्र कर्तरि भावे लकाराः, गौः पयो दुग्धे-स्वयमेव गौः पय उत्सृजतीत्यर्थः। उदुम्बरः फलं पच्यते-उदुम्बरवृक्षः फलं पचति काले इत्यर्थः। स्मृतिबोधिन्युपपदे भूतानद्यतने लृट् शक्तः। पक्षे लङ्, परोक्षे लिट्। अत्यन्ताऽपह्नवे लिट्। पृच्छ्यमानेऽर्थे लिङ्विषये लङ्लिटौ। भूतानद्यतने लट्। भूते लट् पुरायोगे भूतानद्यतनेऽर्थे लुङ्। यावत्पुरानिपातयोरग्रे लट्। कदा कर्हियोगे लट् वा। वर्तमानसामीप्येऽर्थे वर्तमानार्थप्रत्ययाः वाचकाः। भविष्यदाशंसायां भूतवर्तमानप्रत्ययाः शक्ताः। क्षिप्रपर्यायोपपदे लृट्। आशंसावचने लिङ्। हेतुहेतुमतोर्लिङ्। इच्छार्थे लिङ्लोटौ। समानकर्तृकेच्छार्थेषु लिङ्। विधिनिमन्त्रणादिषु लिङ्। प्रैषविध्यतिसर्गप्राप्तकालाद्यर्थेषु कृत्यप्रत्ययाः वाचकाः। तत्र लोट् च। अर्हाऽर्थे कृत्यतृजौ लिङ् च। शक्यार्थे लिङ् कृत्याश्च। तिङन्तवाच्यक्रियाप्राधान्ये गौणक्रियावाचिधातुतः सम्बन्धेऽन्यत्राऽपि च प्रत्यया वाचकाः। पौनःपुन्ये भृशार्थे लोट्। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च संख्याकालपुरुषविशेषबोधकाः। इति त्वभेदान्वयतात्पर्यवान्। कृत्यक्तखलर्थाः प्रत्यया भावे कर्मणि च। तव्यत्तव्याऽनीयर्प्रत्यया भावे धात्वर्थे शब्दसाधुत्वे प्रवृत्तिमन्तः। तत्र औत्सर्गिकम् एकवचनं क्लीबत्वं च। भावकर्मणोः केलिमर्। कर्मण्यर्थेऽपि केलिमर्। वसूधातोः कर्तरि तव्यत्। कृत्यलुटौ प्रवृत्त्यप्रवृत्तिविभाव्याऽनित्यत्वादिविषयौ। स्नाधातोः करणे अनीयर्। दाधातोः सम्प्रदायेऽनीयर्। उपलभेर्नुम् प्रशंसायाम्। आचरधातोर्गुरुभिन्नेऽर्थे यत्। यत् प्रत्ययः यत्प्रत्ययान्ताश्च स्वस्वार्थे निपात्यन्ते। भूधातुतो भावार्थे क्यप्। निष्ठायाम् अनिट्। अवश्यम्भाव्यर्थे ण्यत्। भव्यः गेय इत्यादौ कर्तरि यत्। प्रवचनीय इत्यादौ कर्तरि अनीयर्। आप्लाव्य इति कर्तरि ण्यत्। सूर्यः सृधातोः कर्तरि क्यप्। कृष्टपच्याः कर्मकर्तरि क्यप्। अमापूर्वकवसुधातोरधिकरणार्थे ण्यत्। चिधातोः चित्यः कर्मणि ण्यत् तुक् च। आशीर्वादार्थे वुन्। गोपाभ्यां कर्मणि उपपदे टक्। पुष्पाहरः ताच्छील्ये अच्। अधिकरणाऽर्थे डः। आशीर्वादार्थे डः। शक्तिद्योत्यार्थे टक्। ताच्छील्यद्योत्ये णिनिः। भूतार्थाद् यजेः णिनिः कर्तरि। अग्निस्थण्डिले श्येनचिदिति क्विप्। निन्दागम्ये भूतकाले इनिः सोमविक्रयी। कृञो भूतार्थे क्वनिप्। जनेर्डः संज्ञायाम्। घनीभूतार्थे श्यैङ्। आदिकर्मणि भूतांशविवक्षया क्तः कर्तरि भावे कर्मणि च भवति। अधिकरणेऽपि क्तः। वर्तमानेऽपि क्तः। क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः। भूतकाले ङ्वनिप्। भूतकाले अतृन्। वेदेषु भूतकाले लिट्। तच्छीलादिकर्तरि चानश् क्विप् तन् आलुच् इष्णुच् ग्स्नु क्नु घिनुण् युच् वुञ् उकञ् पाकन् उवरच् प्रत्यया भवन्ति। करणे ष्ट्रन् इत्र प्रत्ययौ। संज्ञायाम् इत्र। कृषधातोर्वर्णार्थे नक्। अशधातोः स्तुत्यर्थे असुन्। बलेऽसुन्। स्वांगेऽसुन्। वर्तमानकाले संज्ञार्थे उणादयः। तुमुन् भावे। ण्वुल कर्तरि। कर्तृभिन्नकारके घञ्। भावे करणेऽपि घञ्। निवृत्तार्थे मप्। भावे अथुच्। भावादौ किः। स्त्रीलिंगभावे क्तिन्। भावे क्यप्। भावे शः। निर्देशार्थे कारः, इफ। संज्ञायां घञ्। करणेऽधिकरणे घञ्। णिनिः कर्तरि। क्तिच् क्ति आशीर्वादार्थे। प्रातिपदिकार्थे लिंगमात्राधिक्ये परिमाणे संख्यायां च प्रथमा शक्ता॥

स्त्रीत्वद्योत्ये टाप् ङीप् ङीष्, आशीर्वादार्थे वुन्, गर्भसंयोगे भर्तृसंयोगेऽर्थे नुक्। देवतार्थे चाप् सूर्या। स्वार्थे ङीष् आनुक् क्षत्रियाणी। जातिवाचके स्त्रीत्वद्योत्येऽर्थे ङीष्। स्त्रीत्वद्योत्ये ऊङ्। स्त्रीद्योत्ये ङीन्-ति-प्रत्ययावपि॥ अथ प्राग्दीव्यतीयाऽर्थेषु अण् ण्य अञ् नञ् स्नञ्। अपत्यार्थे गोत्रापत्यार्थे यञ्, प्राग्दीव्यतीयार्थे अञ्। अपत्यार्थे इञ्, बह्वपत्येषु अः, ऋषिभिन्नाऽपत्यार्थे अञ्। अपत्यार्थे अण् ढक् यत् ठक्। स्वार्थे ञ्यः। गोत्रार्थे फक् फञ्। अपत्यार्थे ढक् छण् अञ् ण्यः। रक्तार्थे अण् ठक् अन् कन् अञ्। इष्टसामार्थे अण् ङ्यत् ङ्य। उद्धृतार्थे अण्। संस्कृतार्थे अण् यत् ठक्। अस्यार्थे घन् टचण् यत् छ ठञ्। षष्ठयन्तसमूहार्थे अण् वुञ् यञ् ठञ् तल्।

यज्ञवाच्ये समूहार्थे खः। समूहार्थे ठक् य इनि त्र क्यच्। क्रीडायां णः ञ्। अधीते वेदार्थे वुन् ठक्। अस्मिन्नस्त्यर्थे अण्, तन्निवृत्तार्थे अण्। निवासार्थे अण्, अदूरभवार्थे अण्, उक्तचतुरर्थेषु वुञ् छणाद्याः, तथा मतुप् इमतुप् मतुवर्थे इवलच् वलच्। चातुरार्थिकः छः। भवार्थे त्यप्, ध्रुवार्थे त्यप्, मतार्थे त्यप्, भवार्थे जातार्थे छः, वृद्धार्थे छः। कुत्सिते प्रावीण्ये वुञ्। देशगम्यार्थे छः। शेषार्थे खञ्। स्वार्थे ठञ्। साम्प्रतिकेऽर्थे अः। सामीप्ये यञ्। कालार्थे ठञ्, भवार्थे ठञ्। सन्धिवेलाद्यृतुनक्षत्रभवार्थे अण्। भवार्थे टचु टुल ल डिमच् टचुल्। जातेऽर्थे घः अण् ठप्, प्रायोभवेऽर्थे अण्, सम्भूतार्थे अण्, विकारार्थे ढञ्, भवार्थे घः यत्, भवार्थे ढञ् अण् ञ्य ठञ् छः। आगतार्थे अण् ठक् वुञ् ठञ् यत् रूप्य मयट्। तत्प्रभवार्थे अण्, विदूरप्रभवार्थे ञ्य, गच्छत्यर्थे अण्, अभिनिष्क्रमणार्थे अण्, अधिकृत्यार्थे अण्, निवासार्थे अण्, तत्प्रोक्तार्थे अण्, प्रोक्तार्थे णिनिः, प्रोक्ताऽध्ययनार्थे इनिः, प्रथमज्ञातेऽर्थे अणादिः, तस्येदमर्थे अणादिः, यत् अञ् ठक् वुञ्। अङ्कलक्षणाऽर्थे घोषार्थेच अण्॥ अथ विकारार्थे अणादिः, अवयवार्थे अण्, विकारार्थे अञ्, अवयवार्थेऽपि अञ्, प्राण्यादिविकारार्थे अञ्, शमीविकारे ष्लञ्, सामान्यविकारे मयट् अण्। गोः पुरीषार्थे मयट्, एणीविकाराद्यर्थे ढञ्, गोविकारार्थे यत्, फलविकारार्थे प्रत्ययस्य लुक्, प्लक्षादिविकारार्थे अण्। शब्दनिषेधार्थे ठक् आहेत्यर्थे ठक्, पृच्छत्यर्थे ठग्, ठक्। जितमित्यर्थे ठक्, संस्कृतार्थे ठक्, तरत्यर्थे ठक्, पृच्छत्यर्थे ठग् ठक्, जितमित्यर्थे ठक्, संस्कृतार्थे ठक्, तरत्यर्थे ठक् ठन्, चरत्यर्थे ठग्, चरत्यर्थे ष्ठन् ठञ्। जीवत्यर्थे ठञ्। हरत्यर्थे ठक् ष्ठन्। निर्वृत्तार्थे ठक्, संसृष्टार्थे ठक्, निर्वृत्तार्थे ठक्, उञ्छत्यर्थे ठक्, रक्षत्यर्थे ठक्, करोत्यर्थे ठक्, हन्त्यर्थे ठक्, पण्यार्थे ठक् इन्, शिल्पार्थे ठक्, प्रहरणार्थे ठक् ईकक्, मत्यर्थे ठक्, शीलार्थे ठक् ण, नियुक्तार्थे ठक्, वसत्यर्थे ठक्, हितार्थे यत्, विहितार्थे यत्, वहत्यर्थे ठक्, विध्यत्यर्थे यत्, योग्यार्थे यत्, साध्वर्थे यत्, समार्थे य, क्रीतार्थे छ, हितार्थे यत् छ ष्यन् ख। तुल्यार्थे ठञ्, क्रीतार्थे ठक् ठन् यत्। आर्हीयेऽर्थे कन्। क्रीतार्थे टिठन् ठञ्। ईश्वरार्थे अण्

अञ्। परिमाणार्थे ठञादि, स्तोमवाक्ये ड, परिमाणार्थे तिः शतिच शत् तः। अर्हत्यर्थे ठञादयः ठञ् यत्। निर्वृत्तार्थे ठञ्। तुल्यार्थे वति, इवार्थे वति, भावार्थे त्वतलौ, भावार्थे इमनिच् इयसुन् ष्यञ्। कर्मणि भावार्थे ष्यञ्, स्वार्थेऽपि ष्यञ्। कर्मणि भावे च यत्। भावे कर्मणि य ठक् यक्। भावे कर्मणि अञ् अण् वुञ्। क्षत्रभवनार्थे खञ् ढक् यत्। प्राप्नोत्यर्थे ख। संज्ञायां खञ्, पाकार्थे कुणप्, मूलार्थे जाहच् ति, वित्तार्थे चुञ्चुप्। विशिष्टकारकस्वार्थे शालच् शङ्कटक्। विशिष्टसाधने कटच्, रजसर्थे कटच्, स्थानार्थे गोष्ठच्, संघातार्थे कटच्, विस्तारार्थे पटच्, द्वित्वार्थे गोयुगच्, षट्त्वे षड्गवच्, स्नेहवाच्ये तैलच्, क्रियाविशिष्टसाधने कुटारच् कटच्, नासिकाऽवनतार्थे टीटच्, भ्रटच्। आसन्नार्थे अवरूढार्थे च त्यकन्। घटमानेऽर्थे अठच्। सञ्जातार्थे इतच्, प्रमाणार्थे द्वयसच्, दघ्नच् मात्रच्। ऊर्ध्वमानार्थे द्वयसच् दघ्नच्। परिमाणार्थे अण् द्वयसच्। परिमाणार्थे वतुप्। संख्यापरिमाणे डति वतुप्। अवयवसंख्यार्थे तयप्। अधिकार्थे डः, पूरणार्थे डट्। पूरणार्थे छ यत्, पूरणार्थे तीय डट्। सूक्तसामार्थे छ, अधीतार्थे घन्, भुक्तार्थके इनि ठन्, कृतार्थे इनि। इष्टार्थे इनि, अन्वेषणार्थे इनि, दृष्टार्थे संज्ञावाच्ये इनि, सम्बन्धाधिकरणयोः मतुप्, मत्वर्थे लच्, कामवदर्थे वलवदर्थे लच्, मत्वर्थे इलच् श न ण विनि अण्। औन्नत्याऽर्थे च मत्वर्थे उरच्। मत्वर्थे र म, संज्ञागम्ये मत्वर्थे व ईरत् ईरच् वलच्, संज्ञागम्ये वलच्। मत्वर्थे इनि ठन् इलच् मतुप्। प्रशंसार्थे यप्। मत्वर्थे विनि आरकन्। असहनार्थे मत्वर्थे आलु इनच् तप्। मत्वर्थे युस् ग्मिनि, बहुभाषितत्वेऽर्थे आलच् आटच्। ऐश्वर्यार्थे स्वे आमिनच्। मत्वर्थे अच् इनि। ब्रह्मचर्यगम्येऽर्थे मत्वर्थे इनि, सुखिमत्वर्थे ब भ युस् ति तु त यस्। मत्वर्थे भ युस्। स्वार्थे किमादिभ्यः तसिल्, सप्तम्यन्तस्वार्थे त्रल्। इदमः स्वार्थे ह तसिल्, काले दा हिल् अधुना दा दानीम् हिल् दा। अहनि द्यस्। सम्वत्सरार्थे उत्, तरार्थे आरि। अहन्यर्थे एद्यपि, अत्र सम्वत्सरे समसण्। अहन्यर्थे एद्युस्। प्रकारे थाल् थमु। वर्तमाने काले स्वार्थे अस्तातिः, अस्तात्यर्थे अतसुच् रिल्

रिष्टातिल आति। अवधिसामीप्ये एनप्, अस्तात्यर्थे आच्, आहि। वर्तमानसंख्यावाचके स्वार्थे धा। कुत्सितार्थे पाशप् तीय इकक्। असहायार्थे स्वार्थे आकनिच्। भूतपूर्वार्थे स्वार्थे चरट् रूप्य। विशिष्टार्थे स्वार्थे तमप् इष्ठन् तिङन्ते द्योत्ये तमप्। द्रव्यप्रकर्ष-भिन्नार्थे आमु। एकातिशयद्योत्येऽर्थे तरप् ईयसुन्। प्रशंसार्थे रूपप्, अपूर्णार्थे कल्पप् देश्य देशीयर् बहुच् अकच्। अज्ञातार्थे कः अकच्। कुत्सितार्थे कः, ह्रस्वार्थे र डुपच् कासू एरच्। तन्वर्थे ष्टरच्। द्वयोरेकनिर्धारणे डतरच्। बह्वेकनिर्धारणे डतमच् अकच्। इवाऽर्थे सादृश्ये कन् य छ। प्राचुर्ये मयट्। अधिकरणेऽपि मयट्। संख्यार्थे स्वार्थे कृत्व-सुच्। द्वित्र्यर्थे स्वार्थे सुच्। स्वार्थे सुच्। तादर्थ्ये यत् ञ्य। स्वार्थे त्नप् तनप् धेय अञ् तल क कन् विकन्। प्रशंसार्थे स स्न। स्वार्थे अण् ञ्य। मंगले अमंगलेऽर्थे शस्। वीप्सायां शस्। सार्वविभक्तिकार्थे तसि। विकारार्थे च्विः अभूततद्भावे च्विः। साकल्यार्थे साति। व्याप्त्यर्थे च्विः साति। त्रा साति डाच्, कर्षणे डाच्, यापनार्थे डाच्, अतिव्यथनार्थे डाच्, निष्कोणार्थे डाच्, आनुलोम्ये प्रातिलोम्ये पाकार्थे डाच्, अशपथार्थे मुण्डनार्थे डाच्, मंगल-भद्रार्थे डाच्॥ वर्जनार्थे परि। उपरि अधः देश-सामीप्ये कालसामीप्ये। वृथाऽर्थे सुन्दरः। सम्पत्तौ देवः, कोपे दुर्विनीतः, कुत्सने धानुष्कः, भर्त्सने चौरः, पीडायां गतः, सादृश्ये पटुः॥ ४७९-४८०॥

**शाब्दबोधो द्विधा खण्डशश्चाऽखण्डश इत्यपि।**
**खण्डानां योजनात् सोऽत्राखण्ड इत्यभिधीयते ४८१**

शाब्दबोधो द्वेधा, खण्डशाब्दबोधः, अखण्डशाब्द-८ बोधश्च। आद्यः घटमानयेत्यत्र घटः कम्बुग्रीवादिमान्-द्वितीयायाः कर्मत्वमर्थः, आङ्पूर्वकनयधातोरानय-नमर्थः, अख्यातस्य कृतिरर्थः, इत्येवं खण्डशो बोधः। अन्वया आकांक्षाभास्या बोधविषयाः। ततो द्वितीयः— घटकर्मकाऽऽनयनानुकूलकृतिमाँस्त्वमिति बोधः। न्यायनये प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधः—घट-कर्मकाऽऽनयनानुकूलकृतिमाँश्चैत्र इति। वैयाकरणैः भावप्रधानमाख्यातमितिनियमेन भावा (धात्व) र्थमुख्यविशेष्यकबोधोऽङ्गीक्रियते यथा चैत्रकर्तृकं-घटकर्मकमानयनम्। मीमांसकैः आख्यातार्थमुख्य-विशेष्यकशाब्दबोधोऽङ्गीक्रियते यथा घटकर्मकाऽऽन-यनानुकूला चैत्रसमवेता कृतिरिति॥

प्रथमाया नियतार्थाऽभावात् साधुत्वार्थत्वम्, न कारके गणितत्वम्, कर्तृत्वमेकत्वम् अभिन्नत्वम् इत्येवं मतभेदेन शक्तत्वम्॥ द्वितीयायाः निष्ठत्वं विषयत्वं विशेष्यत्वं प्रकारत्वं प्रतियोगित्वं निरूपित-त्वं व्यापकत्वं चेत्यादिरर्थः॥ तृतीयायाः कर्तृत्व-करणत्वं ज्ञानज्ञाप्यत्वम् अभेदः साहित्यं प्रतियोगित्वं निरूपितत्वं निष्ठत्वं समवेतत्वं समानकालिकत्वम् अवच्छिन्नत्वं चाऽर्थः॥ चतुर्थ्या उद्देश्यत्वं तृप्ति-प्रयोजकत्वं समवेतत्वं निष्पत्तिप्रयोजकत्वं विकारित्वं वृद्धिप्रयोजकत्वम् आश्रितत्वं विषयत्वं स्वापहरणेच्छा-प्रयोज्येच्छाविषयत्वम् प्रयोजकत्वम् इच्छाऽधीनेच्छा-विषयत्वं चेत्यादिरर्थः॥ पञ्चम्या अवधिमत्त्वं प्रतियोगित्वं जन्यत्वं स्वकर्तृकोच्चारणाऽधीनत्वं निरूपितत्वं ज्ञानज्ञाप्यत्वम् आरम्भः पर्यन्तः तदपेक्षत्वं चेत्यादिरर्थः॥ षष्ठ्या विषयत्वं विशेष्यत्वं प्रकारत्वं प्रतियोगित्वं निरूपितत्वं वृत्तिः स्वामिता—निरूपित-स्वत्वं प्रतिपादकत्वम् उच्चरितत्वं प्रतियोगित्व-मनुयोगित्वम् अभेदः कर्तृत्वं कर्मत्वम् अवयवत्वं करणत्वं समवेतत्वं स्वसमभिव्याहृतपदार्थताऽवच्छेदक-जातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्वं चेत्यादिरर्थः॥ षष्ठ्यर्था अनेके॥ सप्तम्याः आधेयत्वं विषयत्वं विशेष्यत्वं निरूपितत्वं व्यापकत्वम् अभेदः अवच्छेद्यत्वं घटकत्वं प्रतिपाद्यत्वं प्रकारत्वं समानाधिकरण्यात्मक-वैशिष्ट्यं समानकालिकत्वं पूर्वकालिकत्वम् उत्तर-कालिकत्वम् अनुयोगित्वं प्रतियोगित्वं स्वविषय-केच्छाऽधीनत्वं स्वसमभिव्याहृतपदार्थतावच्छेदक-जातिशून्यसप्तम्यन्तपदार्थव्यावृत्तत्वं कार्यकारणभाव-श्चेत्यर्थाः॥

इव-वा-वत्-यथादीनां सादृश्यमर्थः॥ इतिशब्दस्य पूर्वोक्तवाक्यार्थ एवाऽर्थः॥ इत्येवमादीनामपि स एवाऽर्थः॥ स्थाणुः पुरुष इति ज्ञात इत्यत्र इतिशब्दस्य प्रकारतानिरूपकत्वमर्थः:। ब्राह्मण इति नमस्क-रोमीत्यत्र इतिशब्दस्य स्वसमभिव्याहृतपदार्थता-

वच्छेदकप्रकारकज्ञानहेतुकत्वमर्थः । तमाल इति वृक्ष इत्यत्र इतिशब्दस्याऽभेदोऽर्थः, इति समाप्त्यर्थकः। किम्पदसमभिव्याहृतेतिशब्दस्य जिज्ञासाविषयहेतुकत्वमर्थः । इतिः शब्दस्वरूपार्थकः ।' दृष्ट्वा गत इत्यादौ क्त्वाप्रत्ययान्ताऽव्ययानामुत्तरकालीनत्वमर्थः । ल्यबन्तानामुत्तरकालीनत्वमर्थः । तुमन्ताऽव्ययस्थले तुमुन्प्रत्ययस्य इच्छाप्रयोज्यत्वमर्थः, इच्छाऽधीनेच्छाविषयत्वं वाऽर्थः ।। सम्यक्पदार्थः श्रद्धापूर्वकत्वम्, सम्यक् पठति । सम्यक् स्वपीतीत्यत्र जाग्रज्ज्ञानाऽभावसामानाधिकरण्यं सम्यक्पदार्थः। सम्यक् फलतीत्यत्र सम्पूर्णत्वम् । सम्यङ् नमस्करोतीत्यत्र भक्तिपूर्वकत्वम्, सम्यक् पश्यतीत्यत्र अनुरागपूर्वकत्वम्, सम्यक् ताडयतीत्यत्र दयाराहित्यपूर्वकत्वम्, इत्यर्था ऊह्याः । स्तोकं पचतीत्यत्र स्तोकपदार्थोऽल्पः । सुखं शेते इत्यत्र सुखजनके लक्षणा । मधुरं रौतीत्यत्र मधुराऽभिन्नकूजनानुकूलव्यापारानुकूलकृतिमानिति बोधः ।। चैत्र एव मैत्रं ताडयतीत्यत्र चैत्रो मैत्रकर्मकताडनकर्ता चैत्रान्यो मैत्रकर्मकताडनकर्तृत्वाऽभाववानिति बोधः । कामी कान्तामेव कामयते इत्यत्र कान्ताविषयकेच्छावान् कान्ताऽन्यविषयकेच्छाऽभाववान् कामीति बोधः ।।

आङ् ईषदर्थकः अभिव्याप्तार्थकः सीमार्थकः धातुयोगजार्थकश्च । आ स्मरणार्थको वाक्यार्थश्च । अः कोपपीडार्थकः। कुः पापकुत्सेषदर्थकः । धिक् निर्भर्त्सननिन्दार्थकः । च पादपूरणसमाहारसमुच्चयार्थकः। स्वस्ति आशीःक्षेमपुण्यार्थकः । अति प्रकर्षोल्लङ्घनार्थकः । स्वित् प्रश्नवितर्कार्थः। तु भेदाऽवधारणार्थकः। सकृत् एकवारार्थकः। सारात् दूरसमीपार्थकः। पश्चात् प्रतीचीचरमार्थकः। उत अर्थविकल्पार्थकः। शश्वत् पुनःसहाऽर्थकः। साक्षात् प्रत्यक्षतुल्यःर्थकः। बत खेदानुकम्पासन्तोषविस्मयाऽऽमन्त्रणार्थकः । हन्त हर्षाऽनुकम्पावाक्यारम्भविषादार्थकः। प्रति प्रतिनिधिवीप्सालक्षणार्थकः। इति हेतुप्रकरणप्रकाशसमाप्त्याद्यर्थकः । पुरस्तात् प्राचीप्रथमपुराऽग्रार्थकः। यावत् तावच्च साकल्याऽवधिमानाऽवधारणार्थकौ । अथोऽथ मंगलाऽनन्तराऽऽरम्भप्रश्नकात्स्न्यार्थ्थकौ । वृथा निरर्थकविधिवर्ज्यार्थकः । नाना अनेकोभयार्थकः । नु पृच्छाविकल्पार्थकः। अनु पश्चात्सादृश्यार्थकः । ननु प्रश्नाऽवधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणार्थकः । अपि गर्हासमुच्चयप्रश्नशंकासंभावनार्थकः । वा उपमाविकल्पार्थकः। सामि अर्धजुगुप्सार्थकः। अमा सहसमीपार्थकः। एवम् इवेत्थाऽर्थकः प्रकारोपमाऽङ्गीकाराऽवधारणार्थकश्च । नूनं तर्कनिश्चयार्थकः। किं प्रश्नाजुगुप्सनार्थकः। नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सनाऽर्थकः। अलम् भूषणपर्याप्तिशक्तिवारणवाचकार्थकः। हुं वितर्कपरिप्रश्नार्थकः। समया अन्तिकमध्यमाऽर्थकः । पुनः अप्रथमभिन्नार्थकः । निः निश्चयनिषेधार्थकः। पुरा प्रबन्धनिकटागामिकचिरातीतार्थकः । ऊरी उरी ऊररी विस्ताराऽङ्गीकारार्थकाः । किल वार्तासंभावनार्थकः खलु निषेधवाक्याऽलंकारजिज्ञासाऽनुनयाऽर्थकः।अभितः समीपोभयशीघ्रसाकल्याऽभिमुखार्थकः । प्रादुः नामप्राकाश्यार्थकः । मिथः अन्योऽन्यरहस्यार्थकः । तिरः अन्तर्धितिर्यगर्थकः । हा विषादशुगर्तिकुत्सार्थकः। अहह अद्भुतखेदार्थकः। हि हेत्ववधारणार्थकः। चिरं चिराय–चिररात्राय–चिरस्यचिरेण–चिरात्–चिरे–चिरार्थको दीर्घकालार्थकः। मुहुः पुनः–पुनः शश्वदभीक्ष्णमसकृदर्थकः। तत्क्षणं स्राक्–झटित्यञ्जसाह्नाय द्राङ्मंक्षुसपदिद्रुतार्थकम् । अतिशयः बलवत्सुष्ठुकिमुतस्वस्त्यतीवनिर्भरार्थकः। वर्जनम् पृथग्विनाऽन्तरेणर्तेहिरुङ्नानार्थकम् । हेतुः यततस्ततोयत इत्यर्थकः। चित् चन असकलार्थौ । जातु कदाचिदर्थकः। सह सार्धं साकं सत्रा समं सहेत्यर्थकः। प्राध्वम्—आनुकूल्यार्थकः। मुधा व्यर्थकव्यर्थवृथाऽर्थकः। वितर्क अहो आहो उताऽहो किं किमुतेत्याद्यर्थकः। तु हि च स्म ह वै पादपूरणार्थकाः। सु सुष्ठुचारुपूजनभृशस्मृद्धिप्रभृत्यर्थकः । अग्रम् पुरः पुरतः प्रान्त इत्यर्थकः। अमुत्र प्रेत्य भवान्तरार्थकौ। व वा यथा तथा एवैवं साम्यार्थकाः । अहो ही विस्मयार्थकौ। तूष्णीं तूष्णीकां मौनार्थकौ। दिव्या शम् उपजोषं कल्याणार्थकाः। अन्तराऽन्तरेणाऽन्तरे मध्यार्थकाः। प्रसह्य हठार्थकः । उचितं साम्प्रतं स्थाने युक्तार्थकाः। अभीक्ष्णं शश्वदनारतं निरन्तरा-

र्थकाः। अ अन नहि नो न स्वल्पार्थप्रतिषेधाऽभावाऽर्थकाः। मा स्म माऽलं वारणार्थकौ। चेद् यदि पक्षान्तरार्थकः। अद्धाऽञ्जसा तत्त्वार्थकौ। प्रादुः आविः प्रकटार्थाः। ओम् एवं परमम् अनुमत्यर्थकाः। परितः सर्वतः विश्वक् समन्ततार्थकाः। कामम् अकामाऽसूयानिकामाऽभ्यनुज्ञार्थकाः। अस्तु अभ्यनुज्ञार्थकाः। ननु च विरोधार्थकौ। कच्चित् इष्टप्रश्नार्थकः। निःषमं दुःषमं गर्ह्यार्थकौ। यथास्वं यथायथम् योग्यप्रकारार्थकौ। मृषा मिथ्या वितथार्थकौ। यथातथं यथार्थकः। एवं तु पुनः वै एव हि अवधारणार्थकाः नूनम्। अवश्यं निश्चयार्थकौ। अर्वाक् अवरार्थकः। आम् एवं निश्चयार्थकौ। स्वयम् आत्मना निजार्थकौ। नीचैः अल्पार्थकः। उच्चैः महदर्थकः। प्रायो बहुलं बहुगुणार्थकौ। शनैः अद्रुतार्थकः। सनात् सनत् नित्यार्थकौ। स्म अतीतार्थकः। अस्तम् अदर्शनार्थकम्। उ रुषोक्तिकोपनार्थकः। ऊं प्रश्नार्थकः। अयि अनुनयसान्त्वनार्थकः। हुं तर्कार्थकः दुष्ठु निन्दार्थकः। सुष्ठु प्रशंसनार्थकः। प्रगे प्रातरर्थकः। निकषा अन्तिकार्थकः। परुत् पूर्ववर्षार्थकः। परारि एषमसृ पूर्वतरवर्षार्थकौ। परेद्यवि उत्तरदिवसार्थकः। ह्यः अतीतदिनार्थकः। परश्वः परतरदिनार्थकः। एतर्हि सम्प्रतीदानीमधुना साम्प्रतम् एतत्कालार्थकाः। चटचटादिः हुम्फट् हु वाइदिस्तोमः। हुं क्रोधबीजम्, फट् अस्त्रबीजं, हावु हावु हावु स्तोमाः मन्त्रैकदेशाः, ते आधुनिकसंकेतवन्तः। चादयो निपाताः स्वार्थे समुच्चयादौ च। प्रादयः प्रकर्षाद्यर्थे। तेमनं व्यञ्जनार्थकम्। गौः रूढम्। गंगा तीरलक्षकम्। पंकजं योगरूढम्। पाचकं यौगिकम्। मण्डपः यौगिकरूढम्। महारजतं सुवर्णवाचकम्। अहं कर्तृशक्तिकम्। रूढसंज्ञा नैमित्तिकी पारिभाषिकी औपाधिकी च। तत्र जात्यवच्छिन्नसंकेतवती नैमित्तिकी गोचैत्रादिः। परिभाषया शब्दाश्रय आकाशः, पुच्छादिमान् पशुः, परिभाषया काष्ठगजो डित्थः। धनवान् श्रेष्ठी। उपाधिना क्रियया वा चाञ्चल्येन चपलश्चंचलादिः, पृथिव्यादीनि भूतानि, जडः चेष्टारहितप्राणी। मूर्खः विद्यादिरहितप्राणी। मूकः वाणीरहितप्राणी। आधुनिकसंकेतः परिभाषा पक्षतादिः, प्रकृतिस्त्रेधा नामघटाद्याः। धातवः भू अस् कृञ् प्रभृतयः क्रियाशक्ताः। प्रातिपदिका रामाद्याः। लाक्षणिकाः दाक्षिपाचकाद्या अपि। जात्यखण्डोपाधीनां स्वरूपतो भानम्। प्रमा प्रमाणं परिभाषयाऽर्थबोधके भवतः। अर्थवादाः शाब्दबोधजनका इति मीमांसकाः। तरतमाः प्रकर्षार्थकाः। मतुप् प्रशंसाद्यर्थकः। भवतीत्यत्र शाब्दबोधजनकतावच्छेदकः शप् आकांक्षासम्पादकः। प्रपराद्यास्तु लक्षणायां निरूढत्वसम्पादका अरीति केचित्। सुप्तिङ्कृत्तद्धिताः सर्वेऽपि सवृत्तयः स्वाद्या योगबलात्संख्यादिपराः। सन्-तलाद्याः स्वरूपमात्रार्था अपि भवन्ति। भावविहितघञाद्या अपि स्वरूपमात्रार्था भवन्ति। क्रियाविशेषणानाम् एकत्वं कर्मत्वं नपुंसकत्वं चाऽनुशासनात् स्वीक्रियते। स्तोकः प्रत्ययार्थविशेषणे प्रथमान्तः, धात्वर्थविशेषणे तु एकत्वकर्मत्वनपुंसकत्वार्थकः। स्थीयते आख्यातेन, गतं क्तेन, द्रष्टव्यं तव्येन, क्रमशो वर्तमानाऽतीतभविष्यकालप्रत्यायनम्। पानं द्रवद्रव्यस्य गलाऽधःसंयोगानुकूलव्यापारः। आवापः अन्वयित्वम्, उद्वापः व्यतिरिक्तत्वम्, प्राप्तिपरिहारौ वेति। विवरणं तुल्यार्थकता। ककुदः अलंकृतसत्कारकन्यादाता। स्वाराज्यम् इन्द्रत्वम्। स्वः नित्यसुखस्वर्गः लक्षकपदम्। अर्थसम्बन्धवति वृत्तिर्लक्षणा तद्वल्लक्षकं— समूहो यातीति समूहितजनो यातीति। सैन्धवपदं लवणे तुरगेऽपि शक्तम्। गाच् माच् आदयः आधुनिकसंकेतिताः। मीमांसका वाक्यमपि लक्षकं मन्यन्ते, चित्रगोस्वामीति। गौर्वाहीकः—गोसदृशे लक्षणा। भावे क्तः। आलंकारिका वाक्ये लक्षणां स्वीकुर्वन्ति। कसवातोर्विकसितार्थे लक्षणा। धेनुः धानकर्मत्वविशिष्टगौः शक्त्या रूढिः। एकाक्षरेषु शक्तिः नः खः, समुदाये नखः। योगरूढं तैलम्। तैलं योगेन तिलप्रभवं रूढ्या स्नेहम्। योगरूढ्या तैलं पत्रं चेति। योगेन पंकजं कुमुदं रूढ्या पद्मम्। योगरूढे समासः कृष्णसर्पादिः लोहितशल्यमिति। कृदन्तस्य पंकजादियोगरूढस्य सामासिकत्वमपि। इकण् स्वार्थे। पद्मनाभो युधिष्ठिरः मनसादेवी योगरूढाः। यौगिकं त्रेधा—समासः, तद्धितान्तं, कृदन्तं च।

द्वन्द्वोऽपि यौगिकः। ब्राह्मणी श्वश्रूः शूद्रा यौगिकानि ङीव् आङ् आप्। स्त्रीत्वविशिष्टब्राह्मणवाचकं ब्राह्मणीति। समासानां समुदायशक्तत्वं, समुदायत्वम् अपेक्षाबुद्धिविशेषविषयत्वम्। पदं विभक्त्यन्तं, वा सुप्तिङन्तं वा शक्तं पदम्। सुप्तिङन्तचयो वाक्यम्, समर्थः पदसमूहो वाक्यम्, व्यञ्जनमपि पदम्, व्यञ्जनया वृत्त्या च लक्षणा, लक्षणाया मूलं व्यञ्जना शक्तिः। अभिधा शब्दशक्तिः साऽपि मूलं व्यञ्जनाया इति च मूलं सहकारि। शक्त्या वृत्तिर्जहत्स्वार्था गंगायास्तीरे। शक्यलक्ष्योभयवृत्तिश्च अजहत्स्वार्था घटपदस्य द्रव्ये नीलघटस्य चापि द्रव्ये। अनादितात्पर्यवती निरूढा लक्षणा, अरुणं रक्तम्, अरुणया गवा सोमं क्रीणातीत्यत्र। आदितात्पर्यवती आधुनिकी घटत्वेन घटपदस्य। गौणी शक्यसदृशी अग्निर्माणवकः अग्निसदृशो माणवकः। शक्तत्वेन लक्षकत्वेन च पदज्ञानं हेतुः। अभिधया स्मृतिसहकारेण मनसा बोधः, लक्षणयाऽपि स्मृतिसहकारेण मनसा बोधः। व्यञ्जनयाऽपि तथा व्यङ्ग्यार्थस्य बोधः। स्मृतिसहकारेण वाच्यार्थस्य मनसा बोधः। स्मृतिसहकारेण लक्ष्यार्थस्यापि मनसा बोधः। स्मृतिसहकृतमानसबोधत्वेऽपि अभिधाया लक्षणाया व्यञ्जनायाश्च वृत्तित्वेन पार्थक्यम्। पदार्थोपस्थितिनियामकः संकेतो वृत्तिः, तात्पर्यज्ञानं साक्षाच्छाब्दबोधोपयोगीति तात्पर्यं न वृत्तिरूपम्। लक्षणायास्तु वृत्तित्वमावश्यकम्। पदार्थयोर्वाच्यवाचकभावः स्वतन्त्रः सम्बन्धः। अर्थज्ञाननिष्ठशक्त्या अर्थवाचकत्वं पदानामिति तु मीमांसकाः पदनित्यत्ववादिनः॥ कुमारीलभट्टस्तु पदार्थसंसर्गस्यापि वाच्यत्वं स्वीकरोति। शक्तिज्ञानं पदेऽर्थवाचकत्वावगाहि, अर्थे पदवाच्यत्वाऽवगाहि, चेत्युभयविधं शाब्दबोधप्रयोजकम्। आकांक्षा संसर्गभाननियामिका। पदार्थद्वयसंसर्ग आकांक्षाबललभ्यः। वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितिप्रकारत्वं प्रवृत्तिनिमित्तत्वम्। पदार्थः पदार्थेनाऽन्वेति न तु पदार्थैकदेशेनेति तत्र पदार्थत्वं बोधविषयताश्रयत्वेन संकेतविषयत्वं तदेकदेशत्वं तु बोधविषयताऽवच्छेदकत्वेन संकेतविषयत्वं, तदेव शक्यतावच्छेदकमिति। आकाशपदस्य निरवच्छिन्ने शक्तिः। अष्टद्रव्यातिरिक्तद्रव्यत्वेन आकाशपदवाच्यत्वेन वा आकाशपदे लक्षणाया उपगमः। यद्वा आकाशः शब्दाश्रय इति मुख्यशक्तिबोधः। द्रव्यं नास्ति गौर्नास्तीत्यत्र तदा लक्षणा। स्वर्गधेन्वादि लाक्षणिकम्। प्राभाकरास्तु धेनुपदस्य धानकर्मताविशिष्टे शक्तिः, न तु गोत्वविशिष्टे। दिवाकरनिशाकरयोः शक्तं पुष्पवन्तपदमिति शक्तिग्रहे उभयनिष्ठविषयताया ऐक्यात् समूहालम्बनविलक्षणे उभयत्वधर्मितावच्छेदकतापन्नचन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकत्वपर्याप्तिभानमिति। पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकशाब्दबोधो भवत्विति' तत्र संकेतः। उभयविषयकत्वावच्छिन्नाया बोधनिष्ठसंकेतविषयताया ऐक्याच्छक्तेरैक्यम्, न नानार्थता। एकया उक्त्या शक्त्या दिवाकरनिशाकरावित्यमरकोशोऽपि॥ सर्वनामपदानामपि शक्तेरैक्यान्न नानार्थता। हर्यादिपदानां नानार्थेषु शक्तिः। युष्मदस्मदोः युष्मत्पदविशिष्टो बोधो भवत्विति अस्मत्पदविशिष्टो बोधो भवत्विति भगवदिच्छासंकेतः। प्रथमे वैशिष्ट्यं स्वघटितवाक्यजन्यबोधाऽऽश्रयत्वप्रकारकेच्छोद्देश्यत्वाऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्व–स्वजन्यत्वोभयसंसर्गेण। द्वितीये वैशिष्ट्यं स्वोच्चारयितृत्वाऽवच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकत्वस्वजन्यत्वोभयसंसर्गेणेति। स्वत्वस्य संसर्गकुक्षिप्रविष्टतया नाऽननुगमः॥ 'अयमहं पण्डित इति जानातीत्युवाच' इति स्थले सर्वत्र वाक्यार्थो न कर्म, तत्रेतिपदं तद्वाक्यजन्यज्ञानसमानाकारपरम्, इतिपदार्थः अभेदेन धात्वर्थे तदवच्छेदकज्ञाने च विशेषणमिति सर्वत्र इतिपदं युष्मत्पदघटिताऽवान्तरवाक्यस्थले तद्वाक्यजन्यज्ञानसमानाकारकपरम्॥ त्वं स्थूलः अहं स्थूलः, त्वं स्वर्गं भोक्ष्यसे अहं स्वर्गं भोक्ष्ये इत्युभयत्रैव युष्मदस्मदोर्मुख्यत्वात् सम्बोध्योच्चारयितृशरीरतदात्मनोरेव युष्मदस्मदर्थता। सर्वे घटा रूपवन्त इत्यत्राऽशेषत्वं सर्वपदार्थः। उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यपर्याप्तिको धर्मः सर्वपदप्रवृत्तिनिमित्तं, तथाविधधर्मोऽत्र घटादिनिष्ठयावत्त्वम् व्यासज्ज्यवृत्तिघटत्वव्यापको रूपादिव्याप्यश्च, व्याप्यव्यापकभावोऽर्थाल्लभ्यते, उद्देश्यतावच्छेदकव्या-

पकत्वं तु तत्समानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वं,यावत्त्वपर्याप्तिश्च न भिन्ना,विधेयव्याप्यत्वं तु व्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकतत्तद्विधेयाऽभाववत्त्वम् ॥ काले सर्वे वृत्तिमन्त इति विधेयवाचकपदसमानाधिकरणसर्वपदस्य विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकावच्छिन्नसम्बन्धव्याप्यपर्याप्तिकं यावत्त्वमर्थः। कालः सर्वधर्मवान् इत्यत्रापि सर्वपदेन वृत्तिमत्त्वादिव्यापककालादिसम्बन्धव्याप्यपर्याप्तिकं यावत्त्वं प्रतीतिविषयम्। सर्वं प्रमेयमित्यत्र अन्योन्याभावप्रतियोगितानवच्छेदकविधेयव्याप्यपर्याप्तिकयावत्त्वार्थत्वं सर्वपदस्य। अयं सर्वं घटं वेत्तीत्यत्र इदमीयज्ञाने निरूपकतया द्वितीयार्थविषयताया अन्वयस्याऽऽनुभविकत्वेन इदमीयज्ञानविषयताव्याप्यघटत्वव्यापकपर्याप्तिप्रतियोगियावत्त्वावच्छिन्ने सर्वपदशक्तिरिति। अत्र न सर्वाणि रूपाणीत्यत्र नञर्थप्रतियोगिविशेषणार्थकसर्वशब्दस्य स्वार्थान्वयितावच्छेदकरूपत्वादिव्यापकपर्याप्तिनिरूपकयावत्त्वार्थकत्वेन तदवच्छिन्नाभावो घटादावबाधित एव सर्वं द्रव्यं न रूपवदिति द्रव्यत्वादिव्यापकयावत्त्वसामानाधिकरण्यभावस्य प्रतीयते, अनुयोगिविशेषणावच्छेदेनैव नञा अभावः प्रत्याय्यते। चैत्रो दधि, मैत्रः पयः, जैत्रो घृतं, पैत्रस्तु सर्वं भुंक्ते' इत्यत्र सर्वपदं तथाविधयावद्धर्मप्रकारकं बोधं जनयत्विति-संकेतरूपा विलक्षणा शक्तिः। 'एकस्मै वा अन्या इष्टयः कामायाऽऽह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ' इत्यत्र तु प्रत्येकफलकामस्य तत्राऽधिकारात् योगसिद्धिः—प्रत्येकप्रयोगसम्बन्धेन योगेन तत्तत्फलोत्पत्तिः क्रमेणेति सर्वेभ्य इत्यस्य प्रत्येकप्रयोगेण प्रत्येकस्मै इति पक्षो दृढीकृतः। किंपदस्य जिज्ञासिते शक्तिः, वक्तृजिज्ञासितो धर्मः प्रवृत्तिनिमित्तम्। कस्य पुत्रः सुन्दर इत्यत्र तु विशेषधर्मावच्छिन्नविशेषिततदवच्छिन्ननिष्ठोद्देश्यताऽवच्छेदकताकप्रकृतविधेयज्ञानगोचरेच्छा प्रतीयते। जिज्ञासिते विशेषधर्मावच्छिन्ने शक्तिः। अयं कः इत्यत्र इदन्त्वावच्छिन्नांऽशे विधेयतावच्छेदकत्वेन जिज्ञासितधर्मवानिति बोधः। इदं किं द्रव्यम्, इदं कस्य धनम्, भवतः पुत्राः कति, भवान् कस्य पुत्रः, इत्यत्र इदन्त्वावच्छिन्नोद्देश्यतानिरूपितस्वार्थाऽभेदाऽन्वयिताऽवच्छेदकाऽवच्छिन्नविधेयतानिरूपिताऽभेदसम्बन्धावच्छिन्नाऽवच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यः स्वार्थाऽभेदाऽन्वयित्वाऽवच्छेदकस्य विशेषधर्मस्तदवच्छिन्ने किंपदशक्तिः। इदन्त्वावच्छिन्नोद्देश्यतानिरूपितद्रव्यत्वावच्छिन्नविधेयतानिरूपिताऽभेदसंसर्गाऽवच्छिन्नाऽवच्छेदकताऽवच्छेदकत्वेन जिज्ञासितो यो द्रव्यत्वस्य विशेषधर्मस्तद्वदभिन्नद्रव्याऽभिन्नमिदमिति बोधः। इदं कस्येत्यत्र स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयितावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नाऽवच्छेदकत्वेन जिज्ञासितनिरूपितत्वप्रतियोगित्वन्यूनवृत्तिधर्मावच्छिन्ने किंपदस्य शक्तिः। इदन्त्वावच्छिन्ननिरूपितस्वत्वत्वावच्छिन्नविधेयताऽवच्छेदकतावच्छेदकत्वेन जिज्ञासितनिरूपितत्वप्रतियोगित्वन्यूनवृत्तिधर्मावच्छिन्नवत्स्वत्ववदिदमिति बोधः। उत्तरवाक्यं तत्र स्वीयमिति प्रयोगः॥ भवतः पुत्राः कति, इत्यत्र विधेयतावच्छेदकसंख्यायां किंपदार्थस्याऽभेदेनाऽन्वयः। भवान् कस्य पुत्र इत्यत्र विधेयतावच्छेदकषष्ठ्यर्थे जन्यत्वे किंपदार्थस्याऽभेदेनाऽन्वयः। प्रथमे जिज्ञासितस्वार्थाऽभेदाऽन्वयिताऽवच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तिधर्मावच्छिन्ना किंपदस्य शक्तिः। द्वितीये जिज्ञासितनिरूपितत्वसम्बन्धप्रतियोगित्वन्यूनवृत्तिधर्मावच्छिन्ना शक्तिः। किमिन्दुः किं पद्ममित्यत्र अव्ययकिमो वितर्कोऽर्थः प्रयोक्तुः संभावनात्मकं ज्ञानम् अभेदेन चन्द्रादिप्रकारिका संभावना, ज्ञानस्य विशेष्यता सम्बन्धेन प्रथमान्तपदोपस्थाप्ये विशेष्ये, प्रकारिता सम्बन्धेन च तत्र चन्द्रान्वयः। संभावनाः संशयः, इदमध्याहार्यम्, तथा च अभेदसंसर्गावच्छिन्नप्रकारतासंसर्गकेन्दुविशेष्यकसंशयस्य विशेष्यतासम्बन्धेनेदन्त्वावच्छिन्नविशेष्यताको बोधः। आलंकारिकमतेऽत्र व्यञ्जनातः शाब्दबोधः। नैयायिकमते मानसो बोधः। त्वदन्यः को न ददातीत्यादौ अन्योन्याभावप्रतियोगिताऽनवच्छेदकपर्याप्तिकधर्मावच्छिन्ने किंपदस्य शक्तिः। त्वमेव दानकर्तृभिन्नः। त्वदन्यः सर्वो दानकर्ता। नञ् तात्पर्यग्राहकः।

किंशब्दस्य नानार्थशक्तयः। इदं को जानीते इत्यत्र इदंविषयकज्ञानाश्रयत्वाऽभाववान् इति बोधः। किं गौरितिकुत्सार्थः किं शब्दः॥ यत्पदस्य तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिः। स्वोच्चारकपुरुषोच्चरितस्वपूर्वपदोपस्थाप्यतावच्छेदकधीस्थधर्मावच्छिन्ने प्रक्रान्तपरामर्शियत्पदस्य शक्तिः॥ यत्पदोपस्थाप्येऽर्थे तत्पदस्य शक्तिः। पूर्वप्रयुक्तपदोपस्थापितेऽर्थे तच्छब्दस्य शक्तिरिति। प्रसिद्धार्थे शक्तमपि तत्पदम्। इदमेतदोः प्रत्यक्षबुद्धिविषये पदार्थे शक्तिः। अदसः परोक्षबुद्धिविषये शक्तिः। स्वपदस्य स्वसमभिव्याहृतपदोपस्थाप्ये शक्तिः। समभिव्याहार एकपदघटकत्वम्॥ साक्षात्परम्परया वा यः स्वार्थस्य विशेष्यो यश्च समभिव्याहृतक्रियाकारकपदार्थस्तदुभयत्र स्वपदस्य शक्तिः। चैत्रः स्वपुत्रं, स्वं चैत्रपुत्रः, चैत्रभ्राता स्वपुत्रं, मैत्रः चैत्रं, पश्यतीत्यत्र, स्वपुत्रश्चैत्रेण दृश्यते, चैत्रः स्वं पश्यति, चैत्रेणाऽवलोकितं स्वपुत्रं मैत्रः पश्यति, स्वव्यापकवह्निव्याप्यवान् पर्वत, इत्यादौ यथायथं शक्त्या तल्लक्षणया च प्रतीत्युपपत्तिः। ब्राह्मणः स्वपुत्रं पश्यति, ऋतौ भार्यामुपेयादित्यादावपि स्वाश्रयत्वस्वनिरूपकदर्शनविषयपुत्रजनकत्वोभयसंसर्गेणाऽन्वयः। साक्षात्परम्परया स्वार्थनिष्ठविषयतानिरूपितविशेष्यताऽवच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षितधर्मावच्छिन्ने शक्तिस्तथा विभक्त्यर्थद्वारा स्वसमभिव्याहृतक्रियाऽन्वयिताऽवच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षितधर्मावच्छिन्ने शक्तिश्चेति तत्र तत्र सति तात्पर्ये बोधोऽव्याहतः॥ एकपदस्य कैवल्यादिविशिष्टे शक्तिः, कैवल्यं सजातीयद्वितीयरहितत्वं सजातीयनिष्ठभेदाऽप्रतियोगित्वं, सजातीयत्वं प्रकृतविधेयवत्त्वम् 'अत्राऽयमेको भुंक्ते' इत्यत्र एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाऽप्रतियोग्ययमत्र भुंक्ते इति बोधः। स्वजन्यत्वस्वसजातीयनिष्ठभेदाऽप्रतियोगिविषयकत्वैतदुभयसम्बन्धेन एकविशिष्टो बोधो भवत्विति संकेतः। पिण्डमय्यो गाव इत्यत्र तु लक्षणया प्रतीतिः। मीमांसकाः कुब्जां शक्तिं व्यक्त्यंशे मन्यन्तेऽपि, कुब्जा तु वाच्यत्वव्यवहाराऽप्रयोजिका, यद्वा पदार्थान्तरमेव शक्तिः। मण्डनमिश्रस्तु लक्षणा जाति-प्रकारेण व्यक्तिं बोधयति, आकृतौ शक्तिर्व्यक्तौ लक्षणेत्यपि पक्षान्तरम्। प्राभाकरास्तु संस्काराद् व्यक्तिस्मरणम्। शक्तित्वशक्यसम्बन्धत्वाभ्यामपि सहकारिज्ञानस्य कल्पनम्। वृत्तिसंसर्गकपदप्रकारकज्ञानं वा शाब्दबोधे कारणम्। यद्वा—गवादिपदादेः समवायादिना गोत्वादिप्रकारकज्ञाने एव शक्तिः॥४८१॥

**धर्माऽधर्मावपूर्वाख्यौ हरेः प्रसन्नतात्मकौ।**
**स्तरौ तौ पुद्गलौ वाऽपि भिन्नप्रक्रियया मतौ ४८२**

न्याये धर्मः पुण्यार्थकः, धर्माऽधर्मावदृष्टार्थकौ। मीमांसायाम् अपूर्वं पुण्यं धर्मः, उपासनायां भगवत्प्रसन्नताधर्मः। चोदनालक्षणेऽर्थे धर्मपदं लाक्षणिकम्। 'स्वाध्यायोऽध्येतव्य' इत्यत्र तव्यप्रत्ययः शाब्दभावनार्थकः। धर्मो वेदार्थज्ञानम्। जिज्ञासा जहल्लक्षणया इच्छासाध्यविचारबोधिका। प्रत्ययार्थः साध्यसाधनभावसम्बन्धः। जिज्ञासेत्यत्र शक्तिमज्ज्ञानम् अजहल्लक्षणयाऽनुष्ठानोपयोगिज्ञानपरम्। अनुष्ठानोपयोगिज्ञानेच्छासाध्यविचारः कर्तव्य इति बोधः॥

यागादौ धर्मपदं जनकत्वेन लाक्षणिकम्। धर्मपदस्य वेदप्रतिपाद्यप्रयोजनवदर्थो लाक्षणिकार्थः। 'श्येनेनाऽभिचरन् यजेते'त्यत्र श्येनपदं श्येनयागे लाक्षणिकम्। अभिचारपदस्य वैरिमरणानुकूलशस्त्रघातादिरूपहिंसात्मकार्थे लक्षणा। अधर्मपदस्य वेदबोधिताऽनिष्टसाधनताकेऽर्थे लक्षणा। यजेतेत्यत्र तिप्रत्यये लिङंशवाच्या शाब्दी भावना, आर्थीभावना तु तिप्रत्यये आख्यातैकांशवाच्या, अवच्छेदकैक्येऽपि विषयभेदेन भिन्नवाच्यार्थस्वीकारात्। मानसापेक्षो विषयत्वाकार उद्देश्यत्वार्थः। भावना प्रयोजकस्य व्यापारः शक्यार्थः। यस्माच्छब्दाद् यन्नियमतः प्रतीयते तत् तस्य वाच्यम्। अन्यत्र तु अभिप्रायविशेषः शक्तिः, अभिप्रेतार्थः शक्यार्थः। जातौ वा व्यक्तौ वा सम्बन्धे वेति मीमांसकाः। तदितरत्र लक्षणा। यजेतेत्यत्र यागानुकूलप्रवृत्त्यनुकूलव्यापारवानिति बोधः। भावनायाः शक्यं वा शक्यतावच्छेदकं प्रवर्तनात्वम्। अनुकूलत्वं जनकत्वम्। आप्तस्य यथार्थवक्तरि लोकवेदसाधारणप्रतारणाद्यजन्यहिताऽहितोपदेष्टृतदतिरिक्तोपदेष्टरि उपदेशे वा लक्षणा। प्रवर्तनाप्रेषणाविधिभावनावैदिकव्यापारो लिङादि-

वाच्यार्थः। लोकवाक्ये प्रेषणाऽऽज्ञाऽध्येषणाऽनुज्ञाऽनुमनिप्रैषकामचारपुरुषप्रवर्तनाभावना लिङादिवाच्यार्थः। अयं ज्ञानविशेषो वा इच्छाविशेष आशयविशेषोऽभिप्रायः पुरुषनिष्ठो लोके। लोकवाक्ये प्रैषे, वैदिके तु व्यापारे,व्यापारत्वं प्रवर्तनात्वं शक्यतावच्छेदकम्। व्यापाराख्यप्रवर्तनायां मुग्धाकारा शक्तिः। शक्ततावच्छेदकं तु लिङ्त्वलेट्त्वलोट्त्वादिकम्। भावनाया व्यापारत्वेन शक्तिग्रहात् व्यापारत्वेन प्रवृत्तिः। व्यापारो लिङाद्यर्थः। लोके तु अजहल्लक्षणया यादृशो व्यापारस्तद्धर्मेण प्रवृत्तिः,इष्टसाधनत्वाद्यपि लिङाद्यर्थः। मण्डनमिश्रस्तु इष्टसाधनत्वं प्रवर्तनात्वं लिङ्गाद्यर्थः। पार्थसारथिस्तु अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेरभिधाख्यायाः प्रवर्तनात्वेन लिङादिवाच्यत्वम्,प्रवर्तनाज्ञानं प्रवृत्तिकारणम्॥ अथ लिङादिश्रवणोत्तरं प्रवृत्तेस्तज्जननस्वरूपसञ्चिकीर्षात्मकसामग्रीजनन-द्वारा सामग्रीज्ञाने लिङादिज्ञानस्योपयोगः,ज्ञानं च बलवदनिष्टाऽननुबन्धित्वज्ञानं कृतिसाध्यत्वज्ञानम् इष्टसाधनत्वज्ञानं चेति लिङादिज्ञानेन त्रितयज्ञानजननाल्लिङादेर्बलवदनिष्टाननुबन्धित्वेष्टसाधनत्वकृतिसाध्यत्वे त्रितये शक्तिरिति तार्किकाः। मीमांसकास्तु बलवदनिष्टाननुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकमिति तदभावः स्वरूपसन्नेव प्रवृत्तिकारणमिति नेष्टसाधनत्वादित्रितयं लिङाद्यर्थः। शब्दभावनया साध्याऽर्थभावना,साधकसाध्यत्वं तयोरन्वयः। लिंगज्ञानं ज्ञापककारणं,भावनयोः सहैव नित्यसत्त्वात्॥

अथ विधिशब्दस्य पुरुषप्रवृत्तिरूपाऽर्थभावनाज्ञानहेतुव्यापारवाचकशक्तिमत्त्वेन ज्ञानद्वारा प्रवृत्तिजनकत्वं,ज्ञानकारणकश्च व्यापारः, तस्य स्वज्ञानं शक्तिज्ञानं शक्तिविशिष्टस्वज्ञानं च,तत्राऽऽद्ययोरन्यतरस्य शब्दभावनात्वं तृतीयस्य तत्र करणत्वम्,यस्य प्राशस्त्यज्ञानं फले रागश्च तस्य जनस्य प्रवृत्तिः। करणगतप्रकाशाऽऽकांक्षापूरकत्वम् इतिकर्तव्यतात्वम्। प्राशस्त्यविशेषज्ञापकोऽर्थवादविशेषः। विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाऽननुबन्धित्वे सति क्रियाजन्यदुःखाऽपेक्षयाऽधिकेष्टजनकत्वं प्राशस्त्यं विध्यर्थवादेषु लक्ष्यते। निषेधार्थवादेषु तु निषेध्यताऽवच्छेदकसामानाधिकरण्येन क्रियाफलाऽपेक्षयाऽधिकदुःखसाधनत्वम् अप्राशस्त्यं लक्ष्यते। सर्वत्र वाक्ये लक्षणा। एकस्मिन् पदे लक्षणायामितरपदानि तात्पर्यग्राहकाणि वा। पुरुषप्रवृत्तिलक्षणाऽर्थभावनाभाव्यको लिङादिज्ञानकरणको व्यापारज्ञानकरणको वा स्तुतिनिन्दाऽर्थवादबोधितप्राशस्त्यादीति कर्तव्यताको लिङादिशब्दस्य व्यापारविशेषः शब्दभावना लिङादिशब्देन लिङ्त्वांशेन उच्यते। स्वर्गादिफलेच्छाजनितो यागादिक्रियाविषयः प्रयत्नः सव्यापारोऽर्थभावनात्वेन उच्यते। प्रयत्न एव आख्यातसामान्यस्याऽर्थः। यद्वा—फलोत्पादनसामर्थ्यवान् व्यापार आख्यातसामान्याऽर्थः। व्यापारोऽयम् अग्न्यन्वाधानादिब्राह्मणतर्पणान्नप्रवृत्तिरूपः। रथे तु पूर्वोत्तराऽवान्तरदेशविभजनसंयोजनरूपः। कुठारे उद्यमननिपतनरूपः। प्रयत्नो धातुमात्रलभ्यः। ज्ञानेच्छाद्या अपि व्यापाराः। अथ यागविषयकव्यापारस्य स्वर्गं प्रति विलक्षणमानुकूल्यम्,पाकव्यापारस्य ओदनं प्रति विलक्षणमानुकूल्यम्,भैषजपानव्यापारस्य नैरोग्यं प्रति विलक्षणमानुकूल्यम्,विलक्षणाऽऽनुकूल्यविशिष्टव्यापारविशेषस्य प्रतिधात्वर्थविलक्षणत्वम्, अतो न प्रकृत्यर्थसामान्यं भावना,किन्तु धात्वर्थभिन्ना आख्यातार्थप्रत्ययसामान्याऽर्थभूताऽऽर्थीभावना। अर्थः साध्यं फलं स्वर्गं पुरुषविशेषणम्,अर्थः द्रव्यादिसाधनयजनादि अर्थार्थं कर्तव्यमपि अर्थः,अर्थः यागांगानि प्रयाजादीनि च अर्थार्थार्थानि चापि अर्थः। स्वर्गाऽऽकांक्षिताऽपूर्वाऽऽकांक्षितयागानुष्ठानकर्ता तिप्रत्ययार्थभावनाभ्यां व्याप्रियते सः अधिकारी लाक्षणिकः॥ अपूर्वं चतुर्धा वा बहुधा पारिभाषिकं यागस्वर्गसम्बन्धात्मकं यौगिकरूपं यद्वा लाक्षणिकम्। फलार्थमन्तिमं फलाऽपूर्वं तदर्थं समूहाऽपूर्वं तदर्थानि उत्पत्त्यपूर्वाणि तदर्थानि चांगाऽपूर्वाणि प्रारम्भादारभ्य भोग्याऽन्ताऽवस्थानानि सञ्चितानि प्रारब्धानि क्रियमाणानि अपि तानि विविधानि विविधवाच्यार्थवन्ति यद्वा व्यापारत्वेनाऽदृष्टत्वेनाऽपूर्वत्वेनैकेनाऽनुगतेन • लक्ष्याणि। अपूर्ववाचकं पदम् आख्यातज्ञानमेकमेव महाऽपूर्वबोधकम्,तदवान्तराऽऽख्यातपदानि तत्तदपूर्वबोधकानि। असंख्यानां धातूनां तदीयाऽऽख्यातव्यक्तीनामपि बहुत्वादेकधातु-

विशेषानुषक्तत्वेनोत्पन्नानां भावनावाचकत्वाद् यागदानहोमभावनाः परस्परं भिद्यन्ते भावनाभेदे तत्करणाभावार्थस्याऽपर्यायशब्दान्तराद् भेद एवेति, बहुवारप्रयोगाद् यजनादिकर्मभेदोऽपि, तदाख्यातलभ्याऽपूर्वभेदोऽपि। उपकार्योपकारकभावेन भेदोऽपि। द्वित्वत्रित्वादिसंख्यान्वयबलेन एकतिङन्तपदेनाऽपि संख्याधीनत्रियागत्रिभावनाश्चेति एवं बहुधाऽपि। द्रव्यदेवतालक्षणस्य रूपस्य भेदाद् भावनाया भेदः। घनीभूतपयःपिण्ड आमीक्षार्थः। जलमवशिष्टं वाजिनद्रव्यार्थः। वाजोऽन्नम्। शब्दान्तराऽभ्याससंख्यासंज्ञागुणभेदप्रकरणान्तरैः कर्मभेदैर्भावनाभिन्नाश्च। प्रयोजनवदर्थाऽवबोधकाऽपौरुषेयवाक्यसमूहत्वं वेदत्वमिति। अज्ञातार्थादिज्ञापकवेदभागत्वं विधित्वम्, सोमपदं सोमवति लाक्षणिकम्। प्रयोगसमवेतार्थस्मारकवाक्यत्वं मन्त्रत्वम्। उद्भिदा यजेत पशुकाम इत्यत्र उद्भिद्वता यागेन पशुं भावयेदिति उद्भित्पदस्य विशिष्टविधौ लक्षणा। चित्रया यजेत पशुकामः इत्यत्र यागस्य दधिमधुपयोधाना उदकं तन्दुला इति विचित्रदेयद्रव्यषट्कमाम्नातमितीष्टेरनेकद्रव्यत्वेन चित्राशब्दवाच्यत्वम्, इष्टिश्चित्रायागः, तत्परं चित्रापदं लाक्षणिकम्। अग्निहोत्रं जुहोतीत्यत्र अग्निमनूद्य तत्समुच्चितप्रजापतिदेवताविधानात् तत्प्रख्यशास्त्रान्नामधेयत्वम्, अग्निहोत्राख्यं कर्महोमात्मकम्। श्येनेनाऽभिचरन् यजेतेत्यत्र श्येनस्तुत्या श्येनव्यप्रदेशादुपमानात् श्येनसंज्ञकयागः स्तूयते। श्येननामकयागः कर्म। वैश्वदेवेन यजेतेत्यत्र प्रकृते वैश्वदेवनामके यागेऽष्टानामाग्नेयादीनां संघातात्मके 'यद्विश्वेदेवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्वमि'ति गुणप्रतिपन्नशास्त्रस्याऽर्थवादरूपस्य सत्त्वेन तत्प्रख्यशास्त्राद् वैश्वदेवस्य कर्मनामधेयत्वम्॥ निषेधविधिर्निवर्तनां प्रतिपादयन् स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणस्य पराऽनिष्टसाधनत्वमाक्षिपन् पुरुषं निवर्तयतीति, नञश्च स्वभावः स्वसमभिव्याहृतपदार्थविरोधिबोधकत्वम् 'न कलञ्जं भक्षयेदि'-त्यत्र कलञ्जकर्मकभक्षणानुकूलपुरुषप्रवृत्तिजनकप्रवर्तनां प्रति लिङर्थप्रवर्तनाविरोधिनिवर्तना वाक्यार्थः। नञ् स्वसमभिव्याहृतपदार्थविरोधिबोधकः। 'नेक्षेतोद्यन्तमादित्यमि'-त्यत्र तु उद्यन्तादित्येतरेक्षणार्थकत्वम्, विधिप्रकरणे निषेधस्य विध्यनुगुणो निषेधः पर्युदासो निषिद्धेतरकर्तव्यत्वे प्रयुक्त इति। व्रतपदं कर्तव्यार्थे रूढम्। पर्युदासपक्षे कर्तव्यार्थो लभ्यते। निषेधपक्षे दुर्लभ इति। धात्वर्थविरोध्यनीक्षणसंकल्पो लक्षणया प्रतिपाद्यते। आदित्यविषयकाऽनीक्षणसंकल्पेन भावयेदिति वाक्यार्थः। 'यजतिषु येयजामहं करोती'-तिशास्त्रात् येयजामहगानप्राप्तिः 'नाऽनुयाजेष्वि'-ति निषेधेन अनुयाजेषु, येयजामहं न कुर्यादिति निषेधः स्यात्, प्राप्तिपूर्वकप्रतिषेधे विकल्पः स्यान्न तु बाधः, शास्त्रान्तरेण प्राप्तिमूलशास्त्रस्य बाधाऽयोगात्, विकल्पे च द्विरदृष्टकल्पनायां पाक्षिकाऽप्रामाण्यापातः स्यादतो न प्रतिषेधाश्रयणं किन्तु पर्युदासाश्रयणम् 'अनुयाजव्यतिरिक्तेषु यजतिषु येयजामहमन्त्रगानं कुर्यादिति वाक्यार्थबोधः। नञोऽनुयाजव्यतिरिक्ते लाक्षणिकत्वम्। सामान्यशास्त्रप्राप्तयेयजामहइत्यनुवादेन तस्याऽनुयाजव्यतिरिक्तविषयकत्वं विधीयते। पर्युदासः तदन्यमात्रसंकोचार्थकः। उपसंहारस्तत्संकोचार्थकः। रागप्राप्तस्य निषेधः, न तु शास्त्रविधानविषयस्येति क्रतुवैगुण्यसम्पादकस्य निषेधः, तदितरकर्तव्यविधिश्चापि। प्राशस्त्ये निन्दायां वाऽर्थवादवाक्यं लाक्षणिकम्॥

अर्थवादः प्रशंसानिन्दापरकृतिपुराकल्पात्मकः, 'शोभतेऽस्य मुखं य एवं वेदे' ति प्रशंसार्थकः। 'वायुर्वै क्षेपिष्ठा देवते'-त्यादेर्विधेयार्थप्राशस्त्यबोधकतयाऽर्थवत्त्वम्। बर्हिषि रजतं न देय'-मितिनिषेधस्य 'सोऽरोदीत् तद्रुद्रस्य रुद्रत्वमि'-ति निषेध्यस्य रजतदाने पितरो रुदन्तीति सुवर्णं देयमिति रजतदानस्य निन्दितत्वबोधकतयाऽर्थवत्त्वम्। गुणवादो प्रमाणान्तरविरोधे सति अर्थवादो गुणवादः 'आदित्यो यूप' इत्यत्र आदित्यवदुज्ज्वलगुणोऽनेन लक्षणया प्रतिपाद्यते। प्रमाणान्तराऽवगतार्थबोधकोऽर्थवादोऽनुवादः 'अग्निर्हिमस्य भेषजमि'-ति हिमविरोधित्वस्याऽग्नौ प्रत्यक्षाऽवगमात्। प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधकोऽर्थवादो भूतार्थवादः 'इन्द्रो वृत्राय वज्रमुदयच्छदि'-ति। अथउत्पत्तिविधिं 'अग्निहोत्रं जुहोती'त्यत्र अग्निहोत्रहोमेनेष्टं भावयेदिति

कर्मस्वरूपमात्रबोधकविधिः । विधिशब्दो गुरुमते लिङादिशब्दवचनस्तदर्थवचनश्च । भट्टमते तदर्थः शब्दव्यापारविशेषो भावना, गुरुमते नियोगाख्यमपूर्वमिति, तच्च जीवनादिमतोऽधिकारिणः, होमादावपूर्वं कृतिसाध्यम् । अपूर्वं वा पापक्षयादि प्रयोजनम् । यागस्य द्वे रूपे द्रव्यं देवता च । यागबोध्ये द्वे द्रव्यत्वं देवतात्वं वाच्यं, लक्ष्ये च द्वे द्रव्यदेवते । अंगप्रधानबोधको विधोः विनियोगविधिः 'दध्ना जुहोती'ति । वाजपेयशब्दः पेयसुराद्रव्यवाचकः । फलं स्वाराज्यं प्रधानं, याग उपसर्जनम्, यागे च द्रव्यमुपसर्जनम् । पारार्थ्यम् अंगत्वमपि विधिना ज्ञाप्यते, क्वचिच्छ्रुत्या निरपेक्षरवात्मिकया विधानकर्त्र्याऽभिधानकर्त्र्या विनियोगकर्त्र्या वा सहकारिण्या सहकृतेन विधिनाऽङ्गत्वं ज्ञाप्यते । लिङलेडादिश्रवणेन, व्रीहीनितिश्रवणेन सम्बन्धप्रतीतिजनकशब्दश्रवणेन चांगत्वं ज्ञाप्यते । विभक्तिविनियोगेन एकाभिधानविनियोगेन एकपदविनियोगेन चापि अंगत्वं ज्ञायते । आक्षेपपदम् अनुमानेऽर्थापत्तौ च लाक्षणिकम् । भावनाक्षिप्तः कर्ता अशाब्दोऽपि लक्षणया शाब्दः संख्यायाश्चाऽन्वयः । शब्दगतं वाऽर्थगतं सामर्थ्यं रूढिलिंगम् । शेषशेषिपदसहोच्चारणात्मकसमभिव्याहारो वाक्यम् । जुहूः पर्णतयैव क्रियते जुह्वैवाऽपूर्वं जन्यते । सर्वांगोपदेशः प्रकृतिः, असर्वांगोपदेशो विकृतिः, उभयाकांक्षा किं कथमिति प्रकरणम्, मुख्यभावनासम्बन्धिप्रकरणं महाप्रकरणम्, अंगभावनासम्बन्धिप्रकरणम् अवान्तरप्रकरणम् । एकांगाऽनुवादेन विधीयमानयोरंगयोरन्तराले विहितत्वं सन्दंशः । देशसामान्यं स्थानं तच्च स्थानं क्रमश्चेति लक्ष्यौ । दब्धिः घातकम् आयुधम् । यौगिकशब्दः अवयवशक्तिमान् समाख्या, अध्वर्यवः पाचका इति । समुदायशक्तिमान् रूढः गवादिः । अवयवशक्तिमिश्रसमुदायशक्तिप्रवृत्तो योगरूढः पंकजादिः । स्वतन्त्रयोगशक्तिमान् स्वतन्त्ररूढशक्तिमान् यौगिकरूढः उद्भिदादिः । अवघातप्रोक्षणादि सन्निपत्योपकारकम् । प्रयाजादि आरादुपकारकम् । आश्रयिकर्म सन्निपत्योपकारकं द्रव्यदेवतारूपं परिभाषिकी संज्ञा । क्रमबोधकविधिः प्रयोगविधिः । क्रमः विततिः पौर्वापर्यम् । क्रमपरवचनं श्रुतिः । प्रयोजनवशेन क्रमनिर्णयोऽर्थक्रमः । पदार्थबोधकवाक्यक्रमः पाठक्रमः उपस्थितिक्रमः स्थानक्रमः । प्रधानक्रमाधीनांगक्रमो मुख्यक्रमः । कर्मजन्यफलस्वाम्यबोधको विधिरधिकारविधिः । आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी । अपच्छेदन्यायः कच्छमोचनम् । द्वयोः सहमोचनेऽपि प्रायश्चित्तम् । एकस्मिन्वा द्वयेऽपच्छेदेऽपि सर्वस्वं दातव्यं पुनः ॥ नानासाध्यसाधनक्रियामेकसाधनप्राप्तावप्राप्तस्याऽपरसाधनस्य प्रापको विधिः नियमविधिः । पक्षेऽप्राप्तस्य प्रापको विधिः सः । उभयोर्युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः, 'पञ्च पञ्चनखा भक्ष्या इति अपञ्चनखभक्षणनिवृत्तिपरम्, सोऽत्र वाक्यार्थः लाक्षणिकी परिसंख्येयम् ॥

गार्हपत्यो दाक्षिणात्य आहवनीयः सभ्य आवसथ्यो नाचिकेतसः पावकः पवमानः शुचिः अग्निपदवाच्यविशेषाः । वरं—गोदानबोधकः । पुरोडाशः क्षीरपक्वतन्दुलद्रव्यं तदेव चरुनामकम् । स्रुवः वर्तुलपुष्करो दर्वीसमाकारो निम्नमध्यो होमपात्रम्, स्रुक् नमच्चञ्चुकपुष्करो निम्नमध्यं होमपात्रम् । विंशत्याहुतयः अग्निहोत्रम् । अग्निहोत्राख्यं कर्म 'अग्न्याधानादारभ्याऽग्निहोत्रस्थालीप्रक्षालितजलस्य स्वशिरः सेचनान्तं सर्वकलापात्मकं लक्षणया बोध्यम् । अत्र पशुकामस्वर्गकामेन्द्रियबलकामग्रामकामाऽन्नकामौजःकामबलकामतेजःकामाद्या अधिकारिणः । तण्डुलैः शिथिलपक्वा विरलद्रवा यवागूः । वैवाहिकोऽग्निः गृह्याऽग्निः गार्हपत्यः । अग्निनाशपदम् अग्निधर्मह्रासे लाक्षणिकम् । पौर्णमास्यां प्रातरारभ्य प्रतिपत्पूर्वाह्णे समापनकर्म पूर्णमासपदबोध्यम् । अमावास्यायां प्रातरारभ्य प्रतिपत्पूर्वाह्णसमापनीयकर्म दर्शपदलक्ष्यम् । सायंप्रातर्होमसमुदायद्वयं मिलित्वा एकमग्निहोत्रं कर्म लक्ष्यम् । दर्शे पूर्णमासे तत् पृथक् । व्रीहयो यवा वा द्रव्याणि । याज्यानामकाः पुरोनुवाक्यानामका मन्त्रा यजुर्वेदे ऋग्वेदे च पठिताः । परिसमूहनं कुण्डसंस्कारा गोमयेन लेपनं तिसृतिसृरेखाकरणं पांसूद्धरणं चेत्यादि । प्रथमः कुशानां युग्मानामयुग्मानां नवपर्यन्तानां मुष्टिः—प्रस्तरः चमसः चतुष्कोणं दारुपात्रम् । योक्त्रम्—यजमानपत्न्याः कटिबन्धार्थी मुञ्जतृणीयरज्जुः । तप्ता आपो मदन्त्यः । पिष्टानां जलमिश्रणाय काष्ठपात्रं मेक्षणम् ।

वेदः दर्भमुष्टिविशेषः। ऋत्विग्भ्यो दक्षिणादेय ओदन अन्वाहार्यः। हविर्निर्वापः—पृथक्पात्रे शटस्थहविषो मुष्टिना स्थापनम्। न्यञ्चि अधोमुखानि अधोविलानि पात्राणि। फलीकरणं तण्डुलानां वितुषाणाम् उज्ज्वलीकरणायाऽवहननम्। दृषदमी—लिंगोपलया तण्डुलप्रेषणाधारशिला। पिष्टतण्डलचूर्णानि उष्णजलेन पिण्डीकृत्य वह्नौ सुपक्वपिण्डो अत्र पुरोडाशो एकमग्नये एकमग्नीषोमाभ्यां निर्दिशेत्। धातवः त्रिवारमावृत्तदर्भशलाकाः। उपस्तरणं पात्र्यां स्रुवेणघृतक्षेपणम्। अभिधारणम्—पुरोडाशोपरि स्रुवेण घृतक्षारणम्, कठिनहविर्द्रव्येषु कर्तव्यम्। सामिधेन्यः—सामिधेनीसंज्ञिकाः ऋचः। स्रुवेण आज्यधारा आघारः। समित्सु चापि आज्यधाराः। समित् तनूनपात्, इट्, बर्हिः, स्वाहाकारः, पञ्च प्रयाजाः, चतुर्णां ता एव देवताः, पञ्चमस्य स्विष्टकृदाज्यभागप्रयाजाऽनुयाजा देवताः। प्रैषो मन्त्रः। प्राशित्रं—ब्रह्मणे भक्षणार्थं दीयमानहविर्भागः। स्विष्टकृन्नामाऽग्निः। तण्डुलौदनं दुग्धपक्वम्, अनुयाजहोमाः। पत्नीसंयाजहोमाः। वत्साऽपाकरणं गोमातृभ्यो वत्सानां दूरीकरणम्। शृतपयःकुम्भ्यां स्वल्पदध्यासिच्य तत्पात्रं शिक्ये निदध्यादिति आतञ्चनं कर्म॥

स्रुवः खादिरोऽङ्गुष्ठपर्ववृत्तगर्तः पूर्वार्धखातः अरत्निमात्रपरिमाणो हवनसाधनं सहस्तकम्। स्फ्यः—खादिरः खड्गाकृतिः अरत्निमात्रपरिमाणः सहस्तो दर्वीविशेषः। जुहूः—मूलदण्डा त्यक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा तावत्खाता पलाशकाष्ठनिर्मिता हवनपात्रम्। पर्णमयी जुहूरपि च। उपभृत् मूलदण्डा त्यक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशाऽर्धपुष्करा तावत्खाता पलाशकाष्ठनिर्मिता हवनपात्रम्। ध्रुवात्यक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशार्धपुष्करा विकंकतवृक्षनिर्मिता हवनपात्रम्। अग्निहोत्रहवणी—त्यक्तोबिला हंसमुखसदृशैकप्रणालिकायुता प्रादेशाऽर्धपुष्करा तावत्खाता वैकंकती विकंकतवृक्षनिर्मिता हवनपात्रम्। अग्निहोत्रस्रुवः—स्रुववत् हंससदृशैकप्रणालिकायुतो वैकंकतवृक्षनिर्मितो हवनपात्रम्।

उलूखलं—कण्डनपात्रम् अर्थलक्षणं वरणकाष्ठनिर्मितम्। मुसलम्—अर्थलक्षणं वरणकाष्ठनिर्मितम् अवघातसाधनम्। कूर्चः—बाहुमात्रः पीठाकारः पट्टकः। इडापात्री—अरत्निमात्री चतुरंगुलदण्डा मध्यसंगृहीता चतुरंगुलपरिणाहवती। पुरोडाशपात्री—प्रादेशमात्री समचतुरस्रा षडंगुलवृत्तखातवती। शम्याबाहुमात्री पद्मकोशवत् पृथुतीक्ष्णाऽग्रमुखा गदाकारा साधनम्। उपवेषः—प्रादेशमात्रः पालाशशाखातः कृतो दण्डिकानिभः शलाकाविशेषः। प्राशित्रहरणम्—गोकर्णाकृति चरुनिष्कासनसाधनम्। शूर्पं वैणवं यथायोग्यपरिणाहकम्। चमसः—त्र्यंगुलदण्डः चतुरंगुलोच्छ्रायः षडंगुलविस्तारः प्रादेशमात्रो वरणकाष्ठनिर्मितः अप्प्रणयनार्थः साधनं पात्रम्। योक्त्रं—मुञ्जनिर्मिता पत्नीकटिबन्धनरज्जुः। मदन्तीपात्रम्—पित्तलपात्रं संयवनार्थं जलोष्णीकरणार्थकम्। मेक्षणम्—वरणवृक्षनिर्मितं पिष्टसंयवनार्थम् अरत्निमात्रं दर्वीसाधनम्। अन्वाहार्यस्थाली—पुरुषचतुष्टयभोजनपर्याप्ताऽन्नपचनयोग्यं ताम्रं पैत्तलं व पाकपात्रम्। पिष्टलेपपात्रम्—वरणवृक्षनिर्मितम्। फलीकरणपात्रम्—वरणवृक्षनिर्मितं प्रादेशमात्रम्। शकटः—शकटाकारं शकटम्। कपालानि—एकोनविंशतिः स्फुटितभाण्डाऽवयवाश्चतुरस्रादीनि। इध्मकाष्ठानि—इन्धनानि। कुशाः—वेद्यास्तरणपवित्रकरणपरिस्तरणसाधनानि दर्भाः। दर्भमयानि दारुमयानि चासनानि। यवागूः अग्निहोत्रार्था। कुम्भी पयःश्रपणार्था मृत्पात्री। अभिधात्री गोबन्धनो रज्जुः। निदाने—दोहनकाले पादबन्धनरज्जुः वत्सबन्धनरज्जुश्च। वृक्षखण्डकीलको यूपोऽष्टकोणः, तत्र तक्षितस्य प्रथमं शकलं स्वरुः पश्वंजनार्थः। यूपमस्तकं न दृश्येत तथा तथाविधपरिधापनार्थः चपालः। हृदयशूलाख्यं कण्टकम्। दध्ना मिश्रितमाज्यं पृषदाज्यम्। उपाकरणं—देवतामुद्दिश्य पशोरुपस्पर्शनपूर्वकं निर्देशः। तनूनपात् नराशंसो वाऽग्निः। वपा श्वेतरक्ता मृदुला तनीयसी अन्तस्त्वक्। यकृत्—कालखण्डमांसम्। वृक्यौ पार्श्वस्थपिण्डौ। सव्यं बाहुमूलम्। इडा पुरोडाशरूपा पक्वा वपा।

स्वधितिः—छुरिका मेदः जीर्णपटसदृशं हृदयवेष्टनं वपारूपम्। पाकभाण्डस्थः स्नेहात्मको रसो—वसा। एकादश देवा अनुयाजादौ, ते च नामभिः—बर्हिः, द्वारः, उषासानक्ता, जोष्टी, ऊर्जा, आहुती, होता, नराशंसः। तिस्रो देव्यः, वनस्पतिः, बर्हिः, स्विष्टकृत् अग्निः। चषालः—हृदयशूलं कण्टकः। अभ्रिः—यूपाऽवटखननार्था। चत्वारि पर्वाणि-वैश्वदेवः, वरुणप्रघासाः, साकमेघाः, शुनशीरीयः। पूर्णिमायामेते यागाः पर्ववाच्याः। अवभृथं यज्ञान्तस्नानम्। शुनासीरः—शुनः इन्द्रः, सीरो वायुः, शुनासीरीयं पर्व। 'यद्देवा देवहेडनम्' इत्यादयो मन्त्राः, तैः कृता होमाश्चापि कूश्माण्डाः। सोमो लताविशेषः—'श्यामाऽम्ला च निष्पर्णाक्षीरिणी त्वचि मांसला। श्लेष्मला वमनी वल्लीसोमाख्या छागभोजनम्'। तत्कृतसोमद्रव्यकयागः सोमपदप्रवृत्तिनिमित्तम्। सोमयागे द्वादश स्तोत्राणि, अग्निष्टोमाख्यमन्तिमं स्तोत्रम्, अतोऽग्निष्टोमनामाऽपि यागः। स्तोत्रवशानामानि—उक्थ्यः, अतिरात्रमित्यादीनि। पूतिकालताऽपि सोमलतास्थानीया। ऋत्विजां वरणार्थं प्रेष्यते वस्तुप्रभृति तत्सोमप्रवाकम्। अध्वर्युगणः—अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता। ब्रह्मगणः—ब्रह्मा, ब्राह्मणाच्छंसी, आग्नीध्रः, पोता। होतृगणः—होता, मैत्रावरुणः, अच्छावाकः, ग्रावस्तुत्। उद्गातृगणः—उद्गाता, प्रस्तोता, प्रतिहर्ता, सुब्रह्मण्यः॥ सदस्यः ऋत्विजः सप्तदशकः। प्रागग्रैराच्छादनधारणवंशैराच्छादिता शाला—प्राचीनवंशा विमिता वा नाम्ना कथिता। इषीकानिर्मितजालं—पत्न्याः शिरःकचबन्धनम्। पथ्या स्वस्तिः देवता। विचयनम्—सोममध्यस्थतृणादितन्तूनामपाकरणं संशोधनम्। प्रवर्ग्यं इति कर्मणो नामधेयम्। प्रवर्ग्यसंभारेषु महावीराख्यम् मृत्पात्रम् आजपयसा अन्यलोकादिमिश्रंकृतम् मन्तरवकाशं पुत्तलत्रयम् उपरिबिलम्। आसन्दी—मुञ्जासनम्। धृष्टी—अंगारनिरूहणार्थं काष्ठद्वयम्। मेथी—गोबन्धनार्था। शंकु—कीलकः। रुक्मः वर्तुलाकारः मृगचर्मजः। अभिधानी गोबन्धनरज्जुः, निदानं—पादबन्धनरज्जुः। विशाखदाम—वत्सबन्धनरज्जुः। प्रवृञ्जनम्—तप्ते घृते पयःप्रक्षेपणम्। एतत्सम्बन्धेन प्रवर्ग्यकर्म नाम। वम्रयः—उपदीकाः श्वेतपिपीलिकाः। धनुर्ज्याच्छेदेन कोटच्छिन्नशिरसो विष्णोः शिरःसन्धानम् यज्ञशिरः प्रतिसन्धानरूपं प्रवर्ग्यकर्म। महावीरो यज्ञशिरोरूपः। उपसत्—अपूर्वा इष्टिः। सुब्रह्मण्या—इन्द्रः। ऋत्विक् तत्कर्मकर्ता सुब्रह्मण्यः। गार्हपत्योऽग्निः पश्चात् प्राजहितसंज्ञको भवति। अभिषुतसोमरसवर्धनाय तडागजलं वसतीवरीसंज्ञकम्। शस्त्रं स्तोत्रम्। करम्भः—आज्यमिश्रिता यवसक्तवः। परिवापः—लाजा। पयस्या आमिक्षा। ग्रहं पात्रम्। अंशुग्रहपात्रम् अदाभ्यग्रहपात्रम् एकमेव। उपांशुग्रहः, ध्राराग्रहः, धारातो गृहीतव्या धाराग्रहाः। सोमांशवः पिष्टसोमलताकूर्चाः। ऋबीजं गृहीतसारो नीरसस्तृणांशः। अन्तर्यामग्रहः। बहिष्पवमानं स्तोत्रम्। याज्याऽनुवाक्या स्तोत्रे। वसन्तादिऋतुदेवताकाः ऋतुग्रहाः। मार्जालीयं—प्रक्षालनार्थसदनम्। खरं—निक्षेपसदनम्। द्वादश ऋतुग्रहाः—द्वादशमासनामकग्रहाः। प्रतिगरं—प्रतिपठ्यमानं स्तोत्रम्। चमसद्रव्यसघूननबिन्दुयतनमग्नौ—नाराशंसहोमः, नाराशंसचमसाः। प्रउगशस्त्रं—तन्नामकस्तोत्रम्। चात्वालः मृगशृंगस्थापनाऽर्हसदनम्। मरुत्वतीयं स्तोत्रम्। अनवस्रावितः तण्डुलपक्व ओदनः—चरुः। दधिद्रप्सः दध्यल्पांशरसः। सोमरसो यागात्पूर्वं यत्र स्थापितः सः राजासन्दी। षोडशस्तोत्राणि तत्सम्बन्धी ग्रहः षोडशी, ऋतुरपि षोडशी, धाराग्रहाणामन्ते चतुरस्रे पात्रे षोडश्याख्यग्रहं धाराग्रहं गृह्णीयात्। आश्विनग्रहस्तोत्रयोरश्विनीकुमारौ देवते। सोमयागाऽग्निष्टोमाऽत्यग्निष्टोमवाजपेयाऽप्तोर्यामनामका यागाः सोमसंस्थानान्तरीयकयागाः। सप्तदशदीक्षस्तोत्रचरुदेवताको वाजपेयः—आप्तो वाजपेयः कुरुवाजपेय इति च। प्रयोग्रहाः सप्तदशात्र। येन यज्ञेन प्रजापतिना पशवः प्राप्ताः स आप्तोर्यामसंस्था यज्ञः। एकोनत्रिंशतं स्तोत्राणि। यागाः श्रौतसूत्रादिभ्योऽवगन्तव्याः। रात्रिपर्याये सवने रात्रिशस्त्रं स्तोत्रम्। ऊनत्रिंशत् स्तोत्राण्यत्र॥ स्तोत्रसंख्याः स्तोमाः। स्तोमपदाऽभिधेयः स्तोत्रगताऽऽवृतिविशेषः। त्रिणवः—सप्तविंशतिः। त्रिवृत्—नवसंख्या। कुशाशब्दः तीक्ष्णाग्रे प्रादेशमात्रे उदुम्बरवृक्षीये एकत्र तष्टे लघुकाये काष्ठविशेषे लाक्षणिकः,

रुढो वा । चितिः—स्थण्डिलाः चितयः । आकाराः श्येनादिवत् भिन्ना । उखा—मृत्तिकापात्रम् । उख्यमग्निं नाम्युपरि पात्रं कृत्वा चतुरो विष्णुक्रमान् क्रामेत् इत्यादि विष्णुक्रमणम् । देवसुवां हवींषि अष्ट ॥ सौत्रामणी नाम पशुयागः—चरकसौत्रामणी कौकिल-सौत्रामणी च । राजसूयः—बह्वीनाम् इष्टीनां द्वयो पशुयागयोः सप्तानां दर्विहोमानां षण्णां च सोम-यागानां समुदायरूपः । वटांकुरमर्दितरसं राजानं पाययेत् । आतञ्चनमन्तरेण यत्पयो दधि सम्पद्यते तत् मूर्तमिति । तत्र बदराणि क्षिपेत् स्वयंमथितं भवेत्, तेन खण्डिततण्डुलैः चरुं पक्त्वा तेन मित्रं यजेतेति । शुनःशेपस्य कथां श्रावयेत् क्षत्त्रोऽधिकारी ॥ अथाऽश्वमेधः सम्राडधिकारी सार्वभौमः । साधारण-नृपस्य राजयज्ञः । महोपकरणयोगः, 'अश्वमेधः' । अश्वमेधे सांग्रहिणी इष्टिः । पुरुषमेधे पुरुषपशवः, जीवत्पुरुषा एव समर्प्य परित्याज्या ॥ पुरुषमेधे जीवन्नेव शुनःशेपः परित्यक्तः । सर्वमेधेऽपि मनुष्यस्यो-पाकरणानन्तरं परित्यागः । सवाः एकाहसम्पाद्याः सोमयागाः, द्वादशसवाः तत्तद्देवताकाः । प्रायणीयम् उदयनीयमिति दिनसंज्ञे आरम्भसमाप्तिसम्बद्धे वैदिकवाक्यप्रक्रियादिबोध्ये । द्वादशाहक्रतौ त्र्यनीका ग्रहाग्रग्रहाः । गवामयनं गोभिरनुष्ठितः क्रतुः सम्व-त्सरसत्रम् ॥ ४८२ ॥

**धातवो वाङ्मूलरूपाः शब्दास्तज्जनयो मताः ।**
**प्रत्ययास्तत्र संलग्नास्ततः स्युः कारकाणि च॥४८३॥**

गणपठिताः पञ्चभूप्रभृतयो मूलधातवः । सूत्र-मात्रोपात्ताः स्कन्भूजुप्रभृतिका धातवः सौत्राः योगलभ्यार्थकाः स्वाऽवयवलभ्यार्थस्य बोधकाः पाचिपिपक्षादयो यौगिकाः प्रत्ययान्ता धातवः । तितिक्षादयः सजर्यस्वरूपाद्यन्तर्भाविण यौगिका एव । हिन्दोलाऽऽन्दोलादयो लौकिका अपि धातवः । गमभूप्रभृतयः स्वार्थस्य गत्युत्पत्तिप्रवृत्तेर्मुख्ये गौणे वा परस्मैपदार्थे एव कर्तृत्वेऽन्वयधियं प्रति प्रभवः । संगच्छते भवते इत्यादिनः संगतिप्राप्त्यादिकर्तृत्वाऽवगमात् तादृशार्थे आत्मनेपदिनः । यजति करोती-त्यादित इव यजते कुरुते इत्यादितोऽपि यागादि-कर्तृत्वस्यावगतेर्यागाद्यर्थे यजिकृञादिरुभयपदी । समाहारस्वराऽनुबन्धा यजपचाद्याः ञ्यनुबन्धाः कृञ्सुञादयः, ण्यन्ताश्च भाविप्रभृतयः, कर्तृत्ववाचिना पदद्वयेन समं साकांक्षाः । सनन्तास्तु स्वप्रकृतिपदभाजः । स्मृदृशोः परस्मैपदित्वेऽपि तयोः सनन्तयोरात्मने-पदित्वम् । क्यङन्ताः हंसायाद्याः, यङन्ताः बोभूयाद्याः, ङानुबन्धाः शीङाद्याः, रुचादिगणश्च कर्तृत्ववाचिना आत्मनेपदेनैव साकांक्षाः ॥ उभमपद्यात्मनेपदभिन्नास्तु ये ते परस्मैपदेनैव साकांक्षाः ॥

प्रत्ययाः पञ्चधा—विभक्तिः, धात्वंशः, तद्धितं, कृत्, कप्रभृतिश्चेति । संख्यात्वाऽवान्तरजात्यवच्छिन्न-शक्तिमान् प्रत्ययो विभक्तिः सुप्तिङ् चेति भेदतो द्विविधा । यः शब्दः स्वार्थे धर्मिणि स्वप्रकृत्यर्थ-विधेयकाऽन्वयबोधं प्रति समर्थः सा सुबादिविभक्तिः । घटम् इत्यत्र कर्मत्वं घटीयं पचतीत्यादौ पाकीया कृतिरित्याद्युद्देश्यविधेयभावेन स्वार्थे प्रकृत्यर्थस्य धीरुत्पाद्यते । प्रथमाऽप्यभेदादौ स्वार्थे प्रकृत्यर्थस्य विधेयभावेन धियं जनयति । नीलो घटो नीलाऽभिन्नघटः । तत्र तादात्म्यं नीलीयमिति अवान्तर-वाक्यार्थबोधे सति नीलतादात्म्यवान् घट इति बोधः । प्रकृत्यर्थधर्मिकस्वार्थसंख्याऽन्वयबोधजनिका विभक्तयः सुपः । तादात्म्यभिन्नस्वार्थधर्मिकप्रकृत्यर्थबोधं प्रति या न स्वरूपयोग्या सा प्रथमा । एषा विशेषण-पदोत्तरस्था स्वोपस्थाप्ये तादात्म्ये प्रकृत्यर्थाऽन्वयं बोधयति । प्रथमाया द्विवचनम् औत्वावच्छिन्नं, बहुवचनं जस्त्वावच्छिन्नम् । इत्येवमन्यविभक्ति-वचनान्यपि । स्वर्गकामो यजेतेत्यत्र प्रथमोपस्थाप्य-नियोज्यत्वस्य तादात्म्यभिन्नस्य यागेऽन्वयाद् अव्याप्तिः, नियोज्यत्वं, ममेदं कार्यमिति बोध्यत्वस्य तद्भानस्य यागादौ मीमांसकैरंगीकारात् । आधेय-त्वस्य विध्यर्थकृतिसाध्यत्वादिघटककृत्यादौ संसर्गतया भानस्य नैयायिकैरंगीकारात्, स्वरूपसंसर्गेणाऽङ्गीकारात्, तत्रोभयत्राऽव्याप्तिरतो लक्षणान्तरम्—धात्वर्थावच्छिन्नतिङर्थस्याऽन्वयबोधं प्रति यदन्त-नामोपस्थाप्यत्वं प्रयोजकं तादृशी सुप् प्रथमा यजेते-त्यत्र तिङर्थेष्टसाधनत्वादेः केवलस्याऽन्वयो न तु धात्वर्थावच्छिन्नस्य यागादावन्वयः ॥ तिबन्तपचादि-धातूपस्थाप्यपाकादिधर्मिककर्मत्वानुभवानुकूलसुप्-

सजातीयत्वं द्वितीयाविभक्तित्वम्, ग्रामं गच्छतीति अमादेः पाकादेः कर्मत्वाद्यननुभावकत्वेऽपि कर्मत्वाद्यनुभावकसजातीयत्वात् समन्वयः ॥ पच्याद्यर्थधर्मिककरणत्वाऽन्वयबोधानुकूलसुप्सजातीयत्वं तृतीयाविभक्तित्वम्—रामेण पच्यते ॥ ददात्यर्थदानधर्मिकसम्प्रदानत्वानुभावकसुप्सजातीयत्वं चतुर्थीत्वम्—रामाय ददाति ॥ पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबोधानुकूलसुप्सजातीयत्वं पञ्चमीत्वम्—वृक्षात्पर्णं पतति ॥ तिङन्तादाधात्वर्थधर्मिकस्वार्थान्वयबोधस्वरूपाऽयोग्यत्वे सति प्रथमान्यसुप्त्वं षष्ठीत्वम् रामस्य शरः ॥ हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभावकसुप्सजातीयत्वं वा षष्ठीत्वम्,—मृगस्य हिंसकः ॥ सम्बन्धसामान्ये स्वत्वे वा शक्ता सुप् षष्ठी,—राज्ञः प्रजा, नृपस्य कोशः ॥ पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकस्वार्थाऽन्वयत्वबोधानुकूलसुप्सजातीयत्वं सप्तमीत्वम्, शाकसूपयोः पाचकः ॥ अधिकरणतायाम् आधेयत्वे वा सक्ता सुप् सप्तमी,—पृथिव्यां गन्धः, वलिनि चैत्रे। गन्धे पृथिवीगुणता। चैत्रधर्मिकस्वार्थाऽधिकरणत्वाऽन्वयबोधकसुप्समानानुपूर्वीकत्वं सप्तमीत्वम् । चैत्रे । चैत्रीयमधिकरणत्वमिति बोधः ॥ धात्वर्थांशे प्रकारः सुबर्थः कारकम् । कारकस्य वृत्त्या बोधिका कारकान्यस्य च बोधिका सुप्विभक्तिः । क्रियाप्रकारीभूतोऽर्थः कारकम् ॥

शेषः सम्बन्धः कारकादन्यः कारकादवशिष्टः, स न कारकम् । यद्धातूपस्थाप्ययादृशार्थेऽन्वयप्रकारीभूय भासते यः सुबर्थः सः तद्धातूपस्थाप्यतादृशक्रियायां कारकम् । ग्रामं गच्छति घटं पश्यति, दात्रेण छिनत्ति घटत्वेन जानाति, चैत्रेण पच्यते घटेन भूयते, ब्राह्मणाय ददाति पुत्राय क्रुध्यति, वृक्षात्पतति व्याघ्राद् बिभेति, स्थाल्यां पचति शुक्तौ भासते, इत्यादौ गमुप्रभृतिधात्वर्थे गमनादौ द्वितीयाद्युपस्थापितः कर्मत्वादिः प्रकारीभूय भासते, सः कर्मत्वादिः सुबर्थः तत्तद्धातूपस्थाप्यतत्तत्क्रियायां कर्मत्वादिकं प्रकृते कारकम् ॥ यादृशेन नामार्थेनाऽवच्छिन्नस्य सुबर्थस्य यादृशधात्वर्थेऽन्वयः स एव तादृशधात्वर्थेऽकारकतया व्यपदिश्यते । षष्ठ्यर्थः सम्बन्धो न धात्वर्थे प्रकारीभूय भासतेऽतः सम्बन्धो न कारकं, न तदर्थिका षष्ठी, न सा कारकविभक्तिः ॥ रजकस्य वस्त्रं ददातीत्यत्र परिष्कार्यत्वात्मकसम्बन्धो वस्त्रादौ षष्ठ्याऽनुभाव्यते । तण्डुलस्य पाचकः, मैत्रस्य भोक्तव्यमित्यादौ कर्मत्वकर्तृत्वादिकारकम्, धात्वर्थे पचनादौ कृद्योगे कर्तृकर्मणोः षष्ठ्यनुशिष्टेः । 'गुरुविप्रतपस्विदुर्गतानां प्रतीकुर्वीत भिषक् स्वभेषजैः' । 'पद्मस्याऽनुकरोत्येष कुमारीमुखमण्डलः' । 'सा लक्ष्मीरुपकुरुते यथा परेषाम्' । 'मातुः स्मरति' । 'चौरस्य हिनस्ति' । 'जलस्योपकुरुते' इत्यादौ क्रियाविशेषयोगे कारकार्था षष्ठी । 'सामान्यवत्त्वे सतीत्यत्र सतिसप्तम्याः सामानाधिकरण्यमित्यधिकरणार्थः । मम प्रतिभाति स्फुरति रोचते इत्यत्र प्रतिभाज्ञानेच्छानामाधेयतात्वेनाऽस्मदादेः सम्बन्धभानात् सप्तमीप्रसक्तौ विवक्षातः षष्ठी न तु सम्बन्धत्वावच्छिन्नत्वस्येति । अथवा चित्ते इत्यध्याहार्यम्, सप्तमीकारकम् ॥ ४८३ ॥

**शाब्दबोधोऽन्वयबोधोऽन्वय आकांक्षितोऽर्थगः ।**
**वृत्त्याऽर्थाः परिगृह्यन्तेऽन्वीयन्ते योग्यताबलात् ॥ ४८४**

शाब्दबोधोऽन्वयविषयकः, अन्वयाश्च योग्यानां पदार्थानामाकांक्षाभास्याः । अथ प्रत्यक्षे घटे घटत्वरूपादिसंसर्गः संयुक्तादिसम्बन्धनिष्ठा विशेषगताप्रयोज्याऽस्ति विषयता । अनुमाने वह्निनिष्ठा विषयता व्याप्तिज्ञानप्रयोज्या पर्वतीयवह्निसंयोगनिष्ठा विषयता पक्षधर्मताज्ञानप्रयोज्याऽस्ति । उपमितौ गवयनिष्ठा विषयता चक्षुःसंसर्गप्रयोज्या वाच्यवाचकभावनिष्ठा च विषयता सादृश्यज्ञानप्रयोज्याऽस्ति । राजपुरुष इति स्वत्वाऽभेदादिविषयता किंप्रयोज्याऽस्ति, शाब्दबोधे स्वत्वाऽभेदादिसम्बन्धानां च प्रतीतिश्च कथं भवतीति जिज्ञासायाम्, उत्तरम्—'पदार्थयोः संसर्गः राजप्रतियोगिकः पुरुषानुयोगिकश्च स्वत्वसंसर्गः आकांक्षाबलेन भासते । एवं सर्वत्र । अभेदादिसम्बन्ध आकांक्षाप्रयोज्यविषयतावान् भवति । 'नीलघट' इत्यत्र शब्दनिष्ठविषयता श्रावणप्रत्यक्षप्रयोज्या, अर्थविषयता पदप्रयोज्या, अभेदादिसंसर्गविषयता आकांक्षाज्ञानप्रयोज्येति । 'नीलो घट' इति-

व्यासस्थले विशेषणविभक्तेरभेदार्थः प्रकारो न तु संसर्गः, 'नीलाऽभेदवान् घट' इतिबोधः। विशेषणविभक्तेर्निरर्थकत्वपक्षे तु अभेदादिः संसर्ग आकांक्षाभास्यः। विशेषणविभक्तिःसाधुत्वार्था, अभेदसम्बन्धेन नीलविशिष्टो घटः, स्वत्वसम्बन्धेन राजविशिष्टः पुरुष इत्यादिर्बोधः। शाब्दबोधेऽभेदो भेदश्चेति द्वेधा संसर्गः पदार्थयोः। अभेद एकः सम्बन्ध, अनेकेऽपि अभेदत्वेन एकः। भेदास्तु ते स्वरूपानुपूर्वी त एव भिन्नाः, घटवद्भूतलमित्यत्राऽऽधेयाऽऽधारभावः, भूतले घटो नास्तीत्यत्र प्रतियोग्यनुयोगिभावः, घटे ज्ञानं, मोक्षे इच्छा, इत्यादौ घटविषयकं ज्ञानं मोक्षविषयकेच्छेति विषयविषयिभावः, एते प्रत्येकमपि भिन्नाऽऽधेयताऽऽधारतेत्याद्याः। अभेदसम्बन्धाः एकप्रातिपदिकार्थे स्वसमानविभक्तिकस्वाऽव्यवहितपूर्ववर्तिपदोपस्थाप्याऽर्थस्य आकांक्षया भासन्ते। विरुद्धविभक्तिमत्पदार्थयोस्तु अभेदो न भासते। स्वसमानविभक्तिकत्वं स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम्, साजात्यं च विभक्तिविभाजकप्रथमात्वादिना। 'शतं ब्राह्मणा' इत्यत्र 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनात् शताऽभिन्नब्राह्मणा इति प्रामाणिको बोधः। 'वेदाः प्रमाणमि'-त्यत्र प्रमाणाऽभिन्नवेदा इति बोधः प्रामाणिकः। समानानुपूर्वीकत्वं सुजसोः साजात्यमत्र नास्ति। किञ्च समानवचनकत्वं नास्ति। समानलिङ्गकत्वमपि नास्ति। एवं 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' 'पितरो देवताः' इतिसमानलिङ्गकत्वं नास्ति, कथं तत्प्रयोगप्रामाण्यम् ?। इत्थम्—यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनकत्वनियमः। तथा च उक्तस्थलेषु असमानवचनकत्वे वेदपदोत्तरजस्विभक्तितात्पर्यविषयबहुत्वसंख्यातो विरुद्धैकत्वसंख्याया अविवक्षितत्वाऽभावात् समानवचनकत्वनियामकाऽभावात् असमानवचनकप्रयोगः प्रमाणम्, प्रमितिकरणं प्रमाणमिति प्रकृत्यर्थतावच्छेदकं प्रमितिकरणत्वं चतुर्ष्वपि वेदेषु एकं विवक्षितमित्येकत्वस्य प्रमितिकरणत्वेऽन्वयो न तु वेदेषु, शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमिति न अयोग्यता॥ अथ 'असति बाधके पदार्थः पदार्थेनाऽन्वेति न त्वेकदेशेने'-तिनियमात् प्रमितिकरणत्वात्मकैकदेशे एकत्वान्वयस्य 'सम्पन्नो व्रीहि'-रित्यत्र एकत्वस्य अनेकव्रीहिषु बाधेन व्रीहित्वजातावन्वयवत् निर्दोषत्वात्। यद्वा स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन एकत्वस्य वेदेष्वन्वयः, न तु नानैकत्वानि, स्वसजातीयनिष्ठभेदप्रतियोगिताऽनवच्छेदकैकत्वरूपसजातीयद्वितीयरहितत्वम् एकवचनार्थो न त्वेकत्वमात्रं 'पशुना यजेते'-त्यत्र पशुनिष्ठतादृशैकत्वस्य विवक्षितत्वात् तत्करणकयागेऽदृष्टसिद्धेः। साजात्यं च स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण। 'अत्र घटोऽस्ती'-त्यत्र एतद्देशविद्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्य बोधात्नाऽप्रसिद्धिः। बहुघटसत्त्वदशायां जात्येकत्वात् प्रयोगः। 'त्रयः समुदिता हेतुरि'-त्यत्र प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नसमुदायपरं हेतुपदमिति समुदायत्वे एकत्वाऽन्वयः, एकत्वविशिष्टं यत् कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वं तद्धर्मवन्तस्त्रय इति बोधः। काव्ये त्रिसमुदायो हेतुः, वह्निं प्रति तु तृणाऽरणिमणिप्रभृतीनाम् असमुदितानामपि कारणता॥ अथ 'जात्याकृतिव्यक्तयः पदार्थः' इति सूत्रे त्रितयनिष्ठपदशक्तिरूपपदार्थत्वस्य एकत्वं विवक्षितम्, पदवाच्यत्वं जात्याकृतिव्यक्तितृतीयपर्याप्तमिति। पदार्थे पदार्थत्वं तत्र निरूपकत्वसम्बन्धेन पदशक्तिरिति पदशक्तिनिरूपकत्वं पदार्थत्वे। 'प्रत्यक्षाऽनुमानोपमानशब्दाः प्रमाणानी'-त्यत्र प्रमाकरणत्वनिष्ठैकत्वस्य चतुष्टये बाधितत्वेन बहुवचनान्तत्वं प्रमाणानीति। 'पितरो देवताः' इत्यत्र देवतात्वनिष्ठैकत्वमविवक्षितम्, विशेषणे बहुत्वं विवक्षितम्। स्वप्रकृतिकत्वं—स्वाऽव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वं स्वं तत्प्रकृतिकत्वम्। तेन 'दधि सुन्दरमि'-त्यत्र दध्युत्तरविभक्तेरसत्त्वेऽपि व्यासस्थले लुप्तविभक्तिस्मरणस्वीकारात् समानवचनकत्वादावक्षतिः। तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वं, तेन 'इदं दधी'-त्यत्र विशेषणपदानन्तरं विभक्तेरसत्त्वेऽपि नाऽन्वयबोधे क्षतिः॥

अथ 'नीलो घट'-इत्यत्र 'नीलाऽभिन्नघट' इति-शाब्दबोधं प्रति प्रथमान्तविशेष्यघटपदसमभिव्याहृत-प्रथमान्तनीलपदत्वम् आकांक्षा, घटपदाऽव्यवहितपूर्व-वर्तिनीलपदत्वं नीलपदाऽव्यवहितोत्तरवर्तिघटपदत्वं वाऽऽकांक्षा तज्ज्ञानं कारणं, सा यत्र नास्ति तत्र 'नीलस्य घट' इत्यत्र नाऽभेदेन बोधः। 'नीलं घट-मानये'-त्यत्र नीलोत्तरकर्मत्वस्य न कुत्राऽप्यन्वयः, विशेषणविभक्तेः साधुत्वार्थत्वात्, असमासस्थले तस्या अभेदार्थः। अभेदस्य संसर्गमर्यादया भानं तु समासे, विभक्तेर्लोपात्। अथ अभेदो भेदाऽभावः, भेदेऽभावे च खण्डशक्तिः विशेषणविभक्तेः, विशिष्टलाभस्त्वा-कांक्षावशात्। 'नीलो घट' इत्यत्र नीलपदार्थस्य प्रतियोगित्वेन विभक्त्यर्थे भेदे, भेदस्य प्रतियोगित्वे-नाऽभावे, अभावस्य विशेष्यतया घटे, अन्वयः, नीलभेदाऽभावविशेष्यो घट इतिबोधः। 'धान्येन धनवानि'-त्यत्र, गोत्रेण गार्ग्यः. इत्यत्र तूपपदविभक्ति-स्थलेऽभेदस्य प्रकारतया बोधं प्रति विरुद्धविभक्ति-राहित्यं न कारणम्, अतो धान्याऽभिन्नधनवान् गोत्राऽभिन्नगार्ग्य इति बोधः। 'प्रकृत्यादिभ्य उप-संख्यानम्' इतिवार्तिकेनाऽभेदार्थे तृतीयाविधानात्। प्रकृत्या चारुः, प्रायेण याज्ञिकः, समेन एति, विषमेण एति, द्विद्रोणेन धान्यं क्रीणाति, पञ्चकेन पशून् गृह्णाति, सुखेन दुःखेन वा यातीत्यादौ तृतीया साधुः॥ अथ 'प्रमेयो घट' इत्यत्र प्रमेयभेदाऽप्रसिद्धिः, 'कम्बुग्रीवा-दिमान् घट' इत्यत्र गुरुधर्माऽवच्छिन्नभेदाऽप्रसिद्धिः। अत्राह—तत्तद्व्यक्तित्वावच्छिन्नभेदाऽभावस्तत्तद्व्यक्तीनां सम्बन्धतया भासते, सम्बन्धता तस्य भेदप्रति-योगिताकाऽभावत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाऽ-भावत्वेन वा। 'नीलो (पटः) घट' इत्यत्र पटात्मक-नीलपदार्थस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेद एव घटे। 'प्रमेयो घट' इत्यत्र भासमानतत्तद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताकत्वस्य प्रसिद्धिः। कम्बु-ग्रीवादिमान् घट इत्यत्र भासमानकम्बुग्रीवादिमद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदेऽन्वयः प्रसिद्धः॥

अथ अभेदस्तादात्म्यमर्थः। तच्चैकमात्रवृत्ति-धर्मः, वृत्तिश्च संसर्गमर्यादया भासते, धर्मश्च तत्तद्व्य-क्तित्वादिः, तस्य सामान्यप्रत्यासत्त्या सुग्रहः। अभेदः संसर्गमर्यादयाभासते, तत्राऽपि अनुगतोऽभेदः संसर्गः। तादात्म्यं स्ववृत्त्यसाधारणो धर्मः, असाधारण्यम् एकमात्रवृत्तित्वम्, तच्च स्वसामानाधिकरण्यस्वप्रति-योगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत् तदन्य-त्वमित्येवोचितम्, न तु तत् तत्तद्व्यक्तित्वावच्छिन्न-भेदाऽभावकूटरूपम्, तथा च 'घटो न नीलः' 'नीलो न नीलः' इत्यत्रैकनीलभेदाऽभावमादाय प्रामाण्यं स्यात्। यादृशसमभिव्याहारस्थले येन सम्बन्धेन यत्र धर्मिणि येन रूपेण यद्वत्त्वं नञोऽसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृशसम्बन्धावच्छिन्नतादृशधर्माव-च्छिन्नप्रतियोगिताकतदभावबोधस्य व्युत्पत्तिसिद्धत्वात् नञो न भेदबोधकत्वम्। अनीलं घटमादायेत्यत्र तु नञो भेदवति लक्षणा, घटपदसामानाधिकरण्याऽनुरो-धेनाऽनीलपदस्य नीलभिन्नपरत्वम्। अभेदस्य प्रका-रत्वे तु 'घटो न नील' इत्यत्र नीलभेदाऽभावस्य अभावस्य नीलभेदस्वरूपतया भेदत्वप्रकारेण नञा भेदबोधः। नीलो घट इति व्यासस्थले तु विशेषण-विभक्तेः संसर्गे वृत्तिकल्पनम्। स्तोकं पचति मृदु पचतीत्यत्र आकांक्षयाऽभेदाऽन्वयात् स्तोकाऽभिन्न-पाककृतिमान् मृद्वभिन्नपाककृतिमानिति बोधः। क्रियाविशेषणानां क्लीवत्वं कर्मत्वं चेत्यनुशासनात्। स्तोकः पाक इत्यत्र घञः साधुत्वमात्रार्थकत्वं सार्थ-कत्वाऽभावान्न स्तोक इत्यत्र द्वितीया। अथ स्तोकं स्थीयते इत्यत्राऽऽख्यातस्य वर्तमानार्थकत्वेन सार्थक-त्वाद् द्वितीया। यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीया स्तोकं पाक इति। यत्र कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र समानविभक्तितेति स्तोकः पाक इति। तदर्थकपदो-त्तरविभक्त्या संख्याबोधनेऽभेदसंसर्गाविच्छिन्नप्रकार-ताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता, एको घटः, द्वौ घटौ, इत्यादौ। नीलौ घटावित्यादौ तु घटपदोत्तरविभक्त्या द्वित्वं प्रत्याय्यते न तु नीलोत्तर-विभक्त्या। क्रियाविशेषणपदोत्तरमेकवचनमेव साधु-त्वार्थम्। अभेदान्वयो विरूपोपस्थितयोः, तेन 'घटो घटः' 'दण्डवान् दण्डवान्' पाकं पचती'त्यादौ नाऽभे-देनाऽन्वयेन बोधः। 'द्रव्यं घट' इत्यत्र धर्मितावच्छेद-

कतासम्बन्धेन द्रव्यत्वेऽभेदसम्बन्धेन घटप्रकारको बोधो भवति ॥

आत्मनि समवायेन शाब्दबोधं प्रति समवायेनोपस्थित्यादि कारणम् । घटे धर्मितारूपविषयतासम्बन्धेन शाब्दबोधः,घटत्वे धर्मितावच्छेदकतारूपविषयतासम्बन्धेन समवायेन धर्मितावच्छेदकतावच्छेदकतारूपविषयतासम्बन्धेन,शुक्ले प्रकारताख्यविषयतासम्बन्धेन,शुक्लत्वे प्रकारतावच्छेदकतारूपविषयतासम्बन्धेन,समवाये प्रकारतावच्छेदकतावच्छेदकतारूपविषयतासम्बन्धेन,अभेदसंसर्गे तु अभेदसंसर्गाख्यविषयतासम्बन्धेन,शाब्दबोधो जायते । तथा च विषयत्वादिसम्बन्धेन शाब्दबोधं विषयत्वादिसम्बन्धेनोपस्थित्यादि कारणम् ॥ समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वात् । येन सम्बन्धेन तद्धर्मावच्छिन्नकार्यं प्रति येन सम्बन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्यास्तेन सम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षितत्वम् । प्रकारतासम्बन्धेन द्रव्यत्वादौ द्रव्यपदजन्यपदार्थोपस्थित्यभावे द्रव्यत्वादौ धर्मितावच्छेदकतासम्बन्धेनापि न शाब्दबोधोत्पत्तिः । तद्धर्मावच्छिन्नशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितिः कारणम् । एवं तद्धर्माऽवच्छिन्नाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्य हेतुत्वम् । 'स घट'इत्यत्र बोधार्थं प्रकारतावच्छेदकं विशेष्यतावच्छेदकं च निरवच्छिन्नं ग्राह्यम् । 'घटो घट'इत्यत्र धर्मभेदाऽभावान्न बोधः । 'घटो नीलघटः' इत्यत्र धर्मभेदेन बोधात् । 'द्रव्यं घट'इत्यत्र द्रव्यत्वघटत्वोर्भेदाद् बोधः ॥ तद्धर्मवृत्त्यभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगितारूपपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदः कारणम् । प्रकारतायां तद्धर्मवृत्तित्वं च स्वनिरूपिताऽवच्छेदकतात्वाऽवच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन,स्वम् अभेदसम्बन्धावच्छिन्ना प्रकारता । 'सः स'इति तत्पदयोः जातिमति शक्तत्वात् जातित्वावच्छिन्ना प्रकारता विशेष्यता च,तत्र 'जातिमान् जातिमान्'इतिबोधवारणाय 'तद्धर्मावच्छिन्नाऽवच्छेदकताकप्रकारतानिरूपितधर्मिनावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक् कारणत्वम् । 'दण्डवान् दण्डवान्' इति तत्रापि दण्डत्वादिभेदस्य पृथक् कारणत्वम् । 'जातिमद्वान् दण्डवान्' 'दण्डवान् जातिमद्वान्' इत्यत्राऽभेदाऽन्वयबोधार्थम् अवच्छेदकताद्वये निरवच्छिन्नत्वं देयम्। वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुत्वम् । 'घटो घट'इत्यत्र धर्मभेदसामग्रीः नास्ति,न बोधः। 'घटवान् घटवान्'इत्यत्रापि न बोधः । 'एकः' 'द्वौ' इत्यत्र भेदान्वयबोधाऽभावः । कर्म गच्छतीत्यत्र धर्मितावच्छेदककर्मत्वत्वस्य प्रकारतावच्छेदकतावच्छेदकस्य च कर्मत्वत्वस्यैक्यान्न बोधः । 'घटो न घट'इत्यत्रापि घटत्वस्यैक्येन न बोधः । इत्यभेदान्वयशाब्दबोधः ॥ ४८४ ॥

अथ भेदाऽन्वयशाब्दबोधप्रकारः—भेदसम्बन्धाः स्वस्वामिभावः प्रतियोग्यनुयोगिभावः आधाराधेयभावः निरूपितत्वम् अनुकूलत्वं स्वकर्मकत्वं चैत्रकर्तृकत्वं चेत्याद्याः ।

**विभक्त्या वा निपातेनोपस्थितेर्भेदबोधने ।**
**हेतुत्वं च तदन्यत्र भेदबोधो यथायथम् ॥४८५॥**

भेदसम्बन्धेनाऽन्वयबोधः प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन निपातार्थेन च समं जायते । भेदसंसर्गावच्छिन्ननामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिनिपातान्यतरजन्योपस्थितिः कारणम् । राज्ञः पुरुष इत्यत्र राजपुरुषयोः स्वस्वामिभावः,राज्ञः पुरुषे स्वत्वं सम्बन्धः । भेदसम्बन्धावच्छिन्नराजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति ङस्विभक्तिजन्यतदर्थोपस्थितिः कारणम् । घटो न पट इत्यत्र घटपटयोः प्रतियोग्यनुयोगिभावलक्षणो भेदसम्बन्धः । घटे पटस्य स्वप्रतियोगिकभेदविशिष्टत्वं सम्बन्धः,भेदसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधं प्रति नञ्पदजन्यतदर्थोपस्थितिः कारणम् । तण्डुलं पचतीत्यत्र प्रातिपदिकार्थतण्डुलस्य अम्प्रत्ययार्थकर्मत्वे आधेयतासम्क-

भेदसम्बन्धेन आधेयतासम्बन्धेन तण्डुलवती कमतेति बोधः। चन्द्र इव मुखमित्यत्र निरूपितत्वात्मकभेदसम्बन्धेन प्रातिपदिकार्थचन्द्रस्य इव निपातार्थसादृश्येन सहाऽन्वयः। सादृश्यस्य चाऽऽधारतासम्बन्धेन मुखेन सहाऽन्वयः—चन्द्रनिरूपितसादृश्यवन्मुखमिति बोधः। तण्डुलं पचतीत्यत्र धात्वर्थपाकस्याऽनुकूलतासम्बन्धेनाऽऽख्यातप्रत्ययार्थकृत्या सहाऽन्वयः—पाकानुकूला कृतिः, कृतेश्चाधारतासम्बन्धेन कर्त्रा सहाऽन्वयः—पाकानुकूलकृतिमानिति न कलञ्जं भक्षयेदित्यत्र धात्वर्थभक्षणे विध्यर्थभूतं यद् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वं तदभावस्य निपातनञर्थस्याऽनुयोगितासम्बन्धेनाऽन्वयः, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाऽभाववत्कलञ्जभक्षणमिति बोधः। मीमांसकगुरुमते कलञ्जभक्षणाऽभाववत्पण्डापूर्वमुत्पादयेत्, पण्डापूर्वं निष्फलाऽपूर्वम्, अपूर्वम् अदृष्टम् पुण्यात्मकम्॥ विभक्त्यर्थमन्तराकरणं विना प्रातिपदिकार्थयोः साक्षाद्भेदान्वयो न, किन्तु अभेदान्वयः—नीलो घट इति नीलाऽभिन्नघटः। विभक्त्यर्थमन्तराकृत्य तु भेदान्वयः—राज्ञः पुरुष इत्यत्र ङसर्थस्वत्वमन्तराकृत्य राजस्वत्ववान् पुरुषः। विभक्त्यर्थमन्तराकरणं विना प्रातिपदिकधात्वर्थयोरपि साक्षाद्भेदाऽन्वयो न भवति, किन्त्वभेदान्वयः—यथा स्तोकं पचति इत्यत्र स्तोकाऽभिन्नपाकः। विभक्त्यर्थमन्तराकृत्य तु भेदान्वयो भवति, तण्डुलं पचतीत्यत्र विभक्त्यर्थकर्मत्वद्वारा तण्डुलस्य स्वकर्मकत्वसम्बन्धेन पाकेऽन्वयः तण्डुलकर्मकपाकः। राजा पुरुष इत्यत्र ङस्प्रत्ययार्थोपस्थित्यभावात् स्वत्वसम्बन्धेन नाऽन्वयः। भूतलं घट इत्यत्र ङिप्रत्ययाऽभावेन तदर्थोपस्थित्य भावात् आधेयतासम्बन्धेन भूतलवान् घटः भूतलाधेयतावान् घट इति बोधो न भवति। तण्डुलः पचतीत्यत्र कर्मत्वबोधकाऽम्प्रत्ययाऽभावेन तदर्थोपस्थित्यभावात् कर्मत्वसम्बन्धेन तण्डुले पाकान्वयो न भवति। चैत्रः पच्यते इत्यत्र कर्तृत्वबोधकतृतीयाविभक्त्यभावेन तदर्थोपस्थित्यभावात् कर्तृत्वसम्बन्धेन चैत्रे पाकान्वयो न भवति। निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याऽव्युत्पन्नत्वात्। विभक्त्यर्थमन्तराकृत्य तयोर्भेदेनाऽन्वयबोधात्—साक्षादिति।

निपातातिरिक्तेतिविशेषणात् निपातस्थले-भूतले न घटः, घटो न पटः इत्यादौ घटादेर्नञर्थाऽभावेन, मुखं चन्द्र इवेत्यादौ मुखचन्द्रादीनामिवाऽर्थसादृश्यादिना, न कलञ्जं भक्षयेदित्यादौ नञुपस्थाप्येन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाऽभावेन धात्वर्थानुयोगितया, मीमांसकमते तत्र विध्यर्थाऽपूर्वांशे विशेषणतयाऽन्वितेन नञुपस्थाप्याऽभावेन धात्वर्थभक्षणादेः प्रतियोगितया, अन्वयो भेदसम्बन्धेन साक्षाद् भवति। क्रमशः नञर्थाऽभावेन घटस्य स्वप्रतियोगिकत्वसम्बन्धेन,–घटप्रतियोगिकाऽभावो भूतलवृत्तिः। पटप्रतियोगिभेदवान् घटः। इवाऽर्थसादृश्येन मुखचन्द्रयोः साक्षादन्वयः चन्द्रप्रतियोगिकसादृश्यानुयोगि मुखम्। कलञ्जकर्मकं भक्षणं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववत्, कलञ्जभक्षणप्रतियोगिकाऽभाववत् अपूर्वम् उत्पादयेत्। राजपुरुष इत्यत्र तु लाक्षणिकार्थः राजसम्बन्धी तदभिन्नः पुरुषः। मुखं चन्द्र इत्यत्र लाक्षणिकचन्द्रसदृशार्थस्याऽभेदान्वयो मुखे इति। यद्वा—रूपकस्थले न लक्षणा किन्तु चन्द्रस्याऽभेदभ्रमो मुखे, विशेषदर्शने सति तु मानस आहार्याऽभेदभ्रमः। यद्वा—तादात्म्याऽतिरिक्तसम्बन्धेन नामार्थयोर्नाऽन्वयः बोधः। तादात्म्यं तद्वृत्तिधर्मवत्त्वम्। स्ववृत्तिनीलत्वादिमत्त्वेन स्ववृत्त्याह्लादकत्वेन बोधः। तत्र समानविभक्तिकत्वं तन्त्रम्। नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यताप्रत्यासत्त्या प्रत्ययजन्योपस्थितिर्हेतुः। न नामार्थान्तरस्य भानं प्रत्ययजन्योपस्थितेरसत्त्वात्। राजा पुरुष इत्यत्र न राजभेदाऽन्वयबोधः, राजप्रकारकपुरुषविशेष्यकभेदान्वयबोधं प्रति तथाविधप्रकृतिप्रत्ययाऽनुपूर्वीविशेषरूपाऽऽकांक्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्याः नियामकत्वम्। राजा पुरुष इत्यत्र न भेदान्वयबोधः। नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन सम्बन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते। राज्ञः पुरुष इत्यत्र राजादिपदस्य राजसम्बन्ध्यादौ लक्षणाग्रहसत्त्वेऽभेदाऽन्वयबोधवारणाय राजपदाऽव्यवहितोत्तरपुरुषपदानुपूर्वीविशेषरूपाऽऽकांक्षाज्ञानस्य कारणत्वं स्वीकर्तव्यम्।

अथ षष्ठ्यादेः स्वत्ववाचकत्वमावश्यकम्। तेन पुरुषो न राज्ञ इत्यत्र राजस्वत्वाभावबोधः। षष्ठ्यर्थः स्वत्वम्। न तु स्वामित्वं, तस्य वृत्त्यनियामकतया नञा तत्सम्बन्धेनाऽभावस्याऽप्रत्ययात्। अथवृत्त्यनियामकसम्बन्धस्याऽभावप्रतियोगितावच्छेदकत्वेऽपि राज्ञ इति राजस्वत्वस्य प्रकारताऽभ्युपगम उचितः। तथापि राजस्वत्वाऽभाववान्पुरुष इति बाधाऽभावघटितसमभिव्याहारघटितसामग्र्याः सत्त्वेऽपि विशेष्यतावच्छेदकप्रकारकनिश्चयरूपकारणविरहादेव विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसंभवेन तादृशसामग्र्यास्तथात्र प्रतिबन्धकत्वाऽकल्पनात्। तण्डुलं पचतीत्यत्र तण्डुलादिपदस्य तण्डुलादिकर्मके लक्षणा, विभक्तिः साधुत्वार्था, राज्ञ इत्यत्र सम्बन्ध्यादौ लक्षणा विभक्तिः साधुत्वार्था॥ चैत्रो जानातीत्यत्र चैत्राद्यंशे ज्ञानादेराश्रयतासम्बन्धेनाऽन्वयबोधः। पचति चैत्रः—पाककृतिमाँश्चैत्र इत्यत्राऽऽख्यातजन्यकृत्युपस्थितिः कारणम्। धात्वर्थप्रकारकाऽन्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वम्। जानातीत्यत्राऽऽश्रयत्वस्य संसर्गतया भानं न तु प्रकारतया। यद्वा आख्यातस्याऽऽश्रयत्वे निरूढा लक्षणा, तत्र ज्ञानाश्रयत्वप्रकारकशाब्दबोधं प्रतिज्ञानाश्रयत्वप्रकारकयोग्यताज्ञानं कारणमिति। भूतले न घट इत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदुत्तरसुब्विभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र घटप्रतियोगिकाऽभावो भूतलवृत्तिरिति प्रतियोगिताप्रकारकशाब्दबोधोपगम उचितः। भूतले न घट इत्यादौ घटाद्यभावे भूतलाद्यन्विताऽऽधेयत्वस्य इव तात्पर्यवशात् घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाऽभावस्याऽन्वयबोधोऽनुभवसिद्धः। अभावस्य भेदान्वयोपगमेऽपि अभाववति लक्षणाऽनौचित्यात्। लाघवात् स्वरूपेण सम्बन्धेन ग्राह्याभावनिश्चयस्य विशिष्टबुद्धिविरोधित्वम्॥

अथ प्रत्यया विभक्तिकृत्तद्धितभेदेन नाना, विभक्तिः सुप्तिङ्भेदेन द्विविधा, सुब्विभक्तयः प्रथमाद्याः सप्त, प्रथमार्थः प्रकृत्यर्थे विशेषणविधयाऽन्वयिनी संख्या, यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्र्यभावात् असौ मुख्यविशेष्यतया भासते। संख्यावाचकानां चैकवचनद्विवचनबहुवचनानाम् एकत्वत्वद्वित्वत्वबहुत्वत्वाऽवच्छिन्नेषु शक्तिः शक्तता सुत्वौत्वजस्त्वादिना। पाणिनीयसंकेतस्तथा नद्यादिपदेऽपि संकेतः पारिभाषिकी संज्ञा, न त्वौपाधिकी जात्यवच्छिन्ना। तत्र आनुपूर्वीविशेष एव शक्ततावच्छेदकः। आकांक्षावैचित्र्यात् एकप्रकृत्युपस्थाप्ययोर्घटैकत्वयोर्मिथोऽन्वयः खण्डशक्त्यैवकाराद्युपस्थाप्ययोः अन्ययोगव्यवच्छेदाद्योः परस्परमन्वयबोधः। नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याऽव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्थान्वियाऽभावः। अनादितात्पर्यस्यैव स्वारसिकप्रयोगमूलत्वम्॥ विभक्त्याद्यानुपूर्वीणाम् एकत्वादिशक्ततावच्छेदकत्वम्। प्रातिपदिकत्वं पदत्वं वर्णत्वं न शक्ततावच्छेदकम्। संख्यायां न प्रातिपदिकस्य पदस्य वर्णस्य वा शक्तिः। विभक्तीनां न संख्यार्थकत्वम्। आनुपूर्वीणामपि न संख्यार्थकत्वम्।

प्रकृतिविभक्त्योरानुपूर्वीज्ञानं संख्याप्रकारकाऽन्वयबोधहेतुः। यद्वा—संख्यायां प्रकृतेर्लक्षणा। यद्वा—यादृशयादृशपदानां लक्षणया एकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तज्जन्योपस्थितीनामनन्तकारणताकल्पनं गुरुतरम्, अतः स्वादिविभक्तीनां संख्यायां शक्तिः स्वीकार्या विभक्तिजन्यसंख्योपस्थितीनां कारणत्वकल्पने लाघवम्। प्रणमतीत्यत्र प्रकर्षविशिष्टनतिधातूनामर्थः, प्रादयो द्योतकाः, न तु प्रकर्षवाचकाः। संख्यायाः प्रकृत्यर्थे पर्याप्त्या विशेषणत्वं न तु समवायेन। उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गता। वैशिष्ट्यं वैज्ञानिकम्। स्व(संख्या)व्यापकीभूतोद्देश्यतावच्छेदकवस्त्वरूपपरम्परायाः प्रकृत्यर्थे द्वित्वादेः सम्बन्धतास्वीकारात्। व्याप्तिः व्यापकसामानाधिकरण्यरूपा। द्वित्वादिपर्याप्तेः उभयादिवृत्तिधर्मेणैवाऽवच्छेदात्, तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्वद्भेदस्य तेन सम्बन्धेन द्वित्वादिमद्भेदस्य च तद्वति वृत्तौ बाधकाऽभावात्। वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तद-

वच्छिन्नाऽवच्छेदकत्वम् अव्याहतम् ॥ अथ पर्याप्तिर-प्रामाणिकसम्बन्धः । समवायस्तत्र तत्र बोध्यः । आकाशौ—इत्यादिवाक्यजन्यशाब्दबोधस्याऽप्रामाणिकत्वम् । द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितया स्वीकारः । पर्याप्तिश्च 'अयमेको घट इमौ द्वा'विति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः । समवायो नाना द्वित्वादिसमवाय एव तत्पर्याप्तिः, न तु स्वरूपम् अतिरिक्तपदार्थो वा । आकाशं न द्वे इति प्रमा, आकाशं न द्वित्ववत्,—इति त्वप्रभा । यत्रैकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तिः संसर्गः, यत्र यद्धर्मद्वयादेः द्वित्वाद्युद्देश्यतावच्छेदकता तत्र केवला पर्याप्तिः समवायो वा संसर्गः, विनैव साहित्यस्याऽन्वयिताऽवच्छेदकताम् एकैकतात्पर्येण धवखदिराविति यथार्थः प्रयोगः । यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकैव द्वित्वप्रकारता तत्र शुद्धायाः पर्याप्तेः समवायस्य वा संसर्गतया भानम्, धवखदिराविति समासोत्तरद्वित्वेन धवत्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानजननात् । खड्गी कुण्डली चैत्र इतिवत् । धवखदिरयोरेकस्मिन्नेव द्वित्वेऽन्वयः, एकवाक्यत्वात् समासः । एकवाक्यत्वाऽभावे समासाऽभावः । एकवाक्यतात्मकसामर्थ्याऽभावात् 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'त्यत्र न समासः । जलपृथिव्योः स्नेहगन्धावित्यत्र द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्वपृथिवीत्वाद्यवच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताऽऽधेयत्वप्रकारतानिरूपितं यद्धर्मतावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकं स्नेहत्वगन्धत्वावच्छिन्नविशेष्यताद्वयं तद्वानिति बोधः । चैत्रो मैत्रश्च गच्छत इत्यत्र समासविधेर्वैकल्पिकत्वान्न समासः । आख्यातोपस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्ने एवाऽन्वेतीति व्युत्पत्तिः । एकवचनान्तं क्रियापदम् एकवचनान्तविशेष्यवाचकपदप्रयोगे साधुः । व्यासज्ज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यव्यासज्ज्यवृत्तिद्वित्वधर्मवत्त्वम् विधेयसंसर्गतया भासते इति व्युत्पत्तिः, व्यतिरेकिविधेयस्थले व्याप्यत्वं तद्वदन्याऽवृत्तित्वम्, तादृशधर्मवत्त्वम् उद्देश्यतावच्छेदकताघटकसम्बन्धेन । अधिकरणस्य घटद्वयादिमत्त्वे घटत्वव्याप्यद्वित्वमेव विधेयव्याप्यं, द्वित्ववत्त्वं घटद्वये घटत्वव्याप्यपर्याप्तिसम्बन्धेन, इति 'अत्र घटौ स्तः' इति प्रामाणिकः प्रयोगः । घटौ प्रमेयौ—इत्यत्र स्व( प्रमेयत्व )निष्ठव्यापकतानिरूपकोद्देश्यतावच्छेदकद्वित्वाश्रयत्वसम्बन्धेन प्रमेयत्वस्याऽन्वयो भवति । घटौ आनयति चैत्र इत्यत्र चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसम्बन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नः । द्वित्वादिमत्त्वं तु प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसम्बन्धेन । बहुवचनकर्मके बहुत्वादिमत्त्वम् । यत्राऽनेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदकतया भासते तत्रोभयादिना समं पदार्थान्तरस्याऽन्वयः । यत्रैकमात्रवृत्तिस्तत्रैकेनाऽपि । घटावानयतीत्यत्राऽऽनयनकर्मता भिन्ना इति तु भ्रान्तिः । संख्याः प्रकृत्यर्थतावच्छेदकगताः क्वचित् प्रतीयन्ते, तत्र सम्पन्नौ व्रीहियवौ इति प्रमाप्रयोगः । क्वचित् प्रकृत्यर्थघटादिगता प्रतीयते । 'शतमेकम्' 'द्वे शते' 'त्रीणि शतानी'-त्यत्र शतत्वादौ एकत्वद्वित्वबहुत्वानाम् अन्वयः । विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवाऽन्वेति । त्रिशतं गाव इत्यत्र तु एकत्वविशिष्टशतत्वत्रिकावच्छिन्ना गाव इति बोधः । शतादिशब्दशक्तिः शतत्वादिसंख्यावच्छिन्ने संख्येये । एकत्वाद्या अपेक्षाधीविषयत्वरूपाः । एकत्वविशिष्टं शतत्वं द्वित्वविशिष्टं शतत्वं त्रित्वादिविशिष्टं शतत्वमिति बोधाः । शतानीत्यत्र परस्परसमानाधिकरणद्वयाऽवृत्तित्वविशेषरहितमेव बहुत्वं बहुवचनार्थं इत्यत्र बहुत्वस्य परस्परसमानाधिकरणद्वयाऽवृत्तिपर्याप्तिः आकांक्षितः सम्बन्धः, बहुशततात्पर्ये शतानीति प्रयोगः । गवां शतानि, गवां शतं दद्यात्, गवां शतं शुक्लम्, इति प्रयोगाः प्रामाणिकाः, अत्र दशादिशब्दा विंशतिशतसहस्रादिशब्दाः संख्यावच्छिन्नवाचकाः, न तु धर्मिविशेषणताऽनापन्नसंख्यावाचकाः । संख्याशब्दाः संख्येयसंख्यान्यतरविशेष्यकैकत्वादिरूपविभक्त्यर्थप्रकारकाऽन्वयबोधपराः, शतं गावः, गवां शतम्, इति प्रयोगाः प्रामाणिकाः ।

यद्वा—एकद्विबहुवचनौत्तरैकवचनद्विवचनबहुवचनानि न संख्याबोधकानि, उद्देश्यतावच्छेदकविधेययोरैक्ये आकांक्षाविरहात्, प्रथमा तु साधुत्वमात्रा। नित्यबहुवचनान्ताऽबादिशब्दपरं प्रथमाबहुवचनमपि क्वचिन्निरर्थकम्। अप्दारादीनां तु नित्यबहुवचनं साधु। घटोऽस्तीत्यत्र सुपदं संख्याबोधकम्। चैत्रेण घटो दृष्ट इत्यत्र सुबेकवचनम् एकत्वसंख्याबोधकम्। एकवचनत्वस्य निरूपयितुमशक्यत्वे तु आख्यातैकवचनं निरर्थकम्। यद्वा—एकवचनत्वेन आख्यातैकवचनस्यैकत्वे शक्तिः,न तु शाब्दबोधे उपयोगिता। अथ तिबादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलम्,चैत्रेण पच्यते तण्डुलः,—इत्यादौ तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाऽननुकूलत्वेऽपि कर्त्रादिविशेष्यकसंख्याऽन्वयबोधजनकलकारादिसमभिव्याहृतकर्त्रादिवाचकपदात् तृतीयादयो भवन्तीत्यनुशासनतात्पर्यात्। चैत्रेण पच्यते तण्डुल इत्यत्र चैत्रादिविशेष्यकसंख्याऽन्वयबोधकत्वं नाऽऽख्यातस्य,आख्यातार्थभावनाया यत्राऽन्वयस्तत्र तद्विशेष्यकसंख्यान्वयबोधस्य आख्यातेन जननात्,तत्र बोधे विशेष्यः प्रथमान्तपदोपस्थाप्यः। चैत्रः पचति तण्डुलमित्यत्र चैत्रादिः साक्षाद् भावनाविशेष्यः,चैत्रेण पच्यते तण्डुल इत्यत्र तु परम्परया स्वजन्यफलशालित्वसम्बन्धेन चैत्रनिष्ठभावनाजन्यफलशाली तण्डुल इति बोधः। तिबादिरपि संख्याबोधकः। कर्त्रादिविशेष्यकसंख्याऽन्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वाऽनिरूपकत्वमेव कर्तृविशेष्यकसंख्याप्रकारकशाब्दबोधाऽननुकूलत्वम्। कर्त्रादियत्पदाऽऽख्यातपदयोः समभिव्याहारः संख्याऽन्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वाऽनिरूपकस्तत्पदोत्तरं तृतीयानियमः। मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानं द्वितीयातृतीयानियामकम्। तथा च चैत्रः पचतीत्यत्र लकारेण कर्तृत्वाऽभिधानात्प्रथमा। चैत्रेण पच्यते इत्यत्र लकारेण कर्तृत्वाऽनभिधानात् तृतीया। तण्डुलः पच्यते इत्यत्र लकारेण कर्मत्वाभिधानात् न द्वितीया किन्तु प्रथमा। तण्डुलं पचतीत्यत्र लकारेण कर्मत्वाऽनभिधानात् कर्मणि द्वितीया। चैत्रः पचतीत्यत्र मुख्यं कर्तृत्वम्। जानातीत्यत्र भाक्तं गौणं कर्तृत्वम्, तण्डुलः पच्यते इत्यत्र मुख्यं कर्मत्वं,ज्ञायते घट इत्यत्र गौणं कर्मत्वम्। कर्तरि तङ् पचतीति,कर्मणि तिङ् पच्यते इति,कर्तरि कृत् कर्ता कटान् तृच्,कर्मणि कृत् लक्ष्म्या सेवितः इति क्तः,कर्तरि तद्धितं पक्षिणो हन्ति पाक्षिकः इति ठक्,कर्मणि तद्धितं शतेन क्रीतः इति यत्, कर्तरि समासः कृतविश्वो हरिः कृतं विश्वमनेनेति। कर्मणि समासः प्राप्त आनन्दो यं सः प्राप्तानन्दः। कर्तरि प्रत्ययस्थले कर्मत्वानभिधानं, कर्मणि प्रत्ययस्थले कर्तृत्वानभिधानम्। लादीनां कर्तृत्वकर्मत्वानभिधायकत्वं तु तच्छाब्दबोधौपयिकाऽऽकांक्षाशून्यत्वम्,यद्वा तत्तात्पर्यशून्यत्वम्,यद्वा तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृत्वकर्मत्वाद्यविवक्षया तदनभिधानपदार्थत्वम्,तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षायां द्वितीयादिविभक्तेः साधुत्वम्। आख्यातद्विवचनबहुवचनयोः संख्याबोधकत्वम्। आख्यातार्थसंख्याऽन्वयबोधे समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता,तस्याः संख्यान्वयबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुता। रूपरसावित्यत्र द्विवचनादेः कथं द्वित्वबोधकता,गुणे गुणाऽनंगीकारात्, तत्र तु अपेक्षाधीविषयत्वं द्विवचनबोध्यम्। घटे रूपे रूपाणीत्यत्र एकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकत्वस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वेति। रूपरसावित्यत्र तु शुद्धपर्याप्त्या प्रकृत्यर्थेऽन्वेति। घटावित्यत्र घटद्वये द्वित्वान्वयः,रूपे रसावित्यत्रापि तथा द्वित्वान्वयः, धवखदिरावित्यत्र द्वित्वान्वयवत् रूपरसावित्यत्रापि द्वित्वान्वयः॥४८५॥

**उपस्थाप्यो यादृशार्थः सविकरणधातुना।**
**तत्तिङः शक्यकर्तृत्वं कारकं बहुधापि तत्॥४८६॥**

सविकरणेन यद्धातुना उपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्ययादृशार्थेऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्तृत्वं कारकम्। पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकबुद्ध्यादेरन्वयः पचाद्युत्तरतिङा बोध्यते इति पाकस्य यत्नवत्त्वं ज्ञानस्याऽऽश्रयत्वम्, नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिबिम्बते इत्यत्र भ्रमात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्तृत्वम्।

कर्तृ कृत्याश्रये यौगिकम्,तृच् आश्रये निरूढलाक्षणिकः। घटस्य कर्तेत्यत्र षष्ठ्यर्थोऽनुकूलत्वम्। क्रियाश्रये कर्तृशब्दो रूढः,फलस्य प्रायशः कृत्युद्देश्यत्वम्। प्रायो घटभोक्ता न घटकर्तेति नियमः। अत्ति जुहोतीत्यत्र अदादेरुत्तरं लुप्तविकरणस्य प्रतिसन्धाने भोजनकर्तृत्वं होमकर्तृत्वादि। अप्रतिसन्धाने तु यगन्तभिन्नधातूपस्थाप्ययादृशार्थप्रकारकयदर्थधर्मिकाऽन्वयबोधं प्रति लटः सामर्थ्यं स एवाऽर्थो धातूपस्थाप्यस्तदर्थस्य कर्तृत्वम्। अथ धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वम्। तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वम्। दुहाद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनाऽनुभाव्यते। तेन गौः पयो दुह्यते दुग्धा वेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरिति बोधः। वह्निप्रभृतेर्गत्यवच्छिन्नव्यापारः, कृषेः गत्यवच्छिन्नविकर्षणं वाच्यम्,साक्षात्तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलम्, न तु तद्घटकं संयोगादि,तथा च—भारो भवनमुह्यते नीयते इत्यादौ,शाखा ग्रामं कृष्यते इत्यादौ च, यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यवच्छिन्नविकर्षणकर्मताश्रयः शाखेति बोधः चैत्रो ग्रामं गम्यते गमितो वेत्यादौ ग्रामकर्मकस्य व्यापारजन्यगमनस्य कर्ता चैत्रः, यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्मत्वं, यथा ओदनं पाच्यते खाद्यते वा भृत्येन भर्त्रा वेति, भर्तृकर्तृकव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयोदनादिर्बुध्यते। मैत्रेण पूगं खाद्यमानश्चैत्रो व्रजतीत्यत्र कर्मणि शानजादिप्रत्ययः॥

अथ भिद्यते अभेदि वा कुशूलः स्वयमित्यादौ भेदाद्यनुकूलव्यापारवत्त्वरूपस्य तत्कर्तृकत्वस्याऽन्वयार्थं तु कर्मताकांक्षा कर्मत्वाऽन्वयाऽनुकूला आत्मनेपदयगादिसमभिव्याहाररूपाकांक्षाऽपेक्षणीया। अथ स्वयं विकुरुते युवा,स्वयं चिकीर्षते कटः,स्वयं कटः कारयते,गौरुत्पुच्छयते चोरयते,स्वयमवकिरते करी, स्वयं श्रथ्नीते ग्रथ्नीते वा मालिका,स्वयं ब्रूते कथा, स्वयं दुग्धे गौः,इत्यादौ धात्वर्थकर्तृकर्मत्वयोर्युगपदन्वये कर्मत्वाद्यनुकूलस्य यको नाऽपेक्षा। स्वयं विकुरुते युवेत्यत्र आश्रयत्वं कर्मत्वं, तदनुकूलव्यापारश्च कर्तृत्वं,विकाराश्रयो विकारानुकूलव्यापारवान् युवेति बोधः। तथा स्वयं व्यकृत युवा,स्वयम् अचिकीर्षत कटः,इत्यादौ इचोऽपि धात्वर्थकर्तृत्वकर्मत्वयोर्युगपदन्वये इचोऽपि नाऽपेक्षा। स्वयम् अलावि,अलविष्ट वा केदार,इत्यादौ स्वरान्तस्य धातोः,तथा स्वयम् अदुग्ध अदोहि वा गौरित्यादौ,दुहेश्चार्थस्य दोहनादिरूपक्रियायाः कर्तृत्वकर्मत्वभानार्थम् इचो नाऽऽवश्यकत्वम्॥ स्वकर्मताकत्वविशिष्टैकधात्वर्थकर्तृकर्मकस्याऽपरस्य धातुनिपातयोरन्यतराऽर्थस्य कर्मत्वं यत्र धर्मिण्यन्वेति तदीयत्वेनाऽनुभाव्ये कर्मत्वे प्रथमाऽनुशिष्यते,न तु द्वितीयाद्यपेक्ष्यते,शाकः पचता पश्यता वा भुज्यते इत्यत्र शाकः स्वकर्मताकपाककर्तृकर्तृताकभोजनकर्मतावानिति बोधः। शक्तिः कारकमिति। कर्मतामात्रं शक्तिः। तेन हस्तेन पचता भुज्यते शाक इत्यत्र हस्तेनेत्यत्र न अभिहिताऽधिकारीयप्रथमाप्रसक्तिः॥ अथ यत्र गौणप्रधानतापन्नधात्वर्थद्वये प्रकारीभूयैकविधमनेकविधं वा यदीयत्वेन कारकं भासते तत्र प्रधानक्रियामपेक्ष्यैव स्थितिः कारकविभक्तेर्व्यवस्थितिः,न तु गौणक्रिया॥ पक्वान्नस्य भोक्तेत्यत्र अन्नकर्मताकपाकोत्तराऽन्नकर्मताकभोजनत्वादिना बोधने व्युत्पत्तिवैचित्र्यम्। पश्यन्नन्नस्य दाता, भोक्तुमन्नस्य पाचकः, पुरस्य गत्वा गन्ता, भुक्त्वा चैत्रस्य स्थितिः, पक्त्वा सूदस्य गमनम्,इत्यादावपि, तथा ब्राह्मणायाऽऽहूय ददाति, वृक्षादारुह्य पततीत्यादावपि ब्राह्मणकर्मताकाऽऽह्वानोत्तरब्राह्मणसम्प्रदानताकदानत्वादिना बोधने व्युत्पत्तिवैचित्र्यादेव पचनाऽऽह्वानादिगौणक्रियायाम् षष्ठीचतुर्थ्यादिना सामर्थ्यादेव कर्मत्वादेर्भानम्॥ एकस्मिन् धात्वर्थे यत्रैकनामार्थनिरूपितयोः कारकद्वयोर्युगपद्बोधस्तत्र लक्षितक्रमेण यत्परं कारकं तत्र तत्र विहिताऽनुशिष्टैव सुप् आकांक्षानिर्वाहिका,न तु पूर्वत्र। तथा च शत्रवे कुप्यतीत्यत्र शत्रोः प्रयुक्तत्वविषयित्वरूपाभ्याम् अपादानत्वसम्प्रदानाभ्यां कोपे, पुत्रेण ददातीत्यत्र पुत्रस्य सम्प्रदानत्वकरणत्वाभ्यां दाने,पात्र्यां भुङ्क्ते इत्यत्र पात्र्याः करणत्वाऽधिकरणत्वाभ्यां भोजने, ग्रामं गच्छतीत्यत्र ग्रामस्याऽधिकरणत्वकर्म-

त्वाभ्यां गमने, चैत्रस्य चलनमित्यादौ चैत्रादेरधिकरणत्वकर्तृत्वादिना चलनादौ युगपदन्वयधीः ॥

अथ धात्वर्थे कर्तृत्वस्याऽन्वयबुद्धौ नाम्नस्तृतीया, कर्मत्वस्य च द्वितीया उत्सर्गतो हेतुः, सत्ता अस्ति, ग्रहो गृह्यते,—इत्यादौ धात्वर्थे कर्तृत्वकर्मत्वाभ्यामन्वयो नामजन्यामुपस्थितिमपेक्षते। सामान्यविधिरुत्सर्गः, स च अपवादकं विशेषविधिं विना प्रवर्तते, ग्रामं गच्छतीत्यादित इव ग्रामाय गच्छतीत्यादितोऽपि गतौ ग्रामादिकर्मताकत्वस्याऽवगतेर्धात्वर्थगतौ कर्मत्वस्य बोधे द्वितीयावच्चतुर्थ्यपेक्षिता। दीनं दयते, इष्टे,—इत्यादित इव दीनस्य दयते ईष्टे संजानीते चिन्तयति स्मरतीत्यादितोऽपि दयादौ, पुत्रस्य नाथते इत्यादित आशंसायाम्, शतस्य पणायते, व्यवहरति, दीव्यतीत्यादितः पणतेरुपगमक्रयविक्रयादिव्यवहारेषु, स्वर्णस्योपकुरुते इत्यादितो गुणान्तराऽऽधानरूपप्रतियत्ने, चौरस्य हिनस्तीत्यादितो हिंसायां च कर्मत्वस्याऽन्वयबोधे षष्ठ्यपि। मैत्रम् अनुनाथतीत्यत्र नाथ्यर्थः प्रार्थना। नृपं पणायति, बन्धुं व्यवहरति, दिवं दीव्यतीत्यत्र पण्यादेः स्तुतितोषगत्याद्या अर्थाः। निष्ठादिभिन्नं कृन्मात्रम् अन्ते यस्य, न तु तदुत्तरप्रत्ययान्तरं तादृशधातोरर्थे कर्तृत्वस्य कर्मत्वस्य वाऽन्वये नाम्नः षष्ठी, चैत्रस्य गतिः, ग्रामस्य गमनमिति ॥ चैत्रेण दृष्टचरः, तण्डुलं पाचकतरः इत्यादौ धातोरुत्तरं न कृन्मात्रम्। अङ्गानि व्यात्युक्षी, धनानि सांग्राहिणम्, इत्यादौ कर्मतायां न षष्ठी। ग्रामस्य गन्तृमान् देशः, चैत्रस्य गतिमद् गृहम्,—इत्यादौ गतिश्छिन्ता, गन्त्रादौ षष्ठ्यर्थसम्बन्धः, न तु धात्वर्थे कर्मत्वादिः। चैत्रेण भुक्तः, मैत्रेण दत्तः,—इत्यादौ, सुकरः कटो मया, दुष्करः पटस्त्वया,—इत्यादौ, सुपानः सोमो मया, दुष्पान, सोमस्त्वया,—इत्यादौ च कर्तृत्वस्य। तेमनं पचन्, ग्रामं गतवान्, पारायणम् अधीयन्, उपनिषदं धारयन्,—इत्यादौ। घटं विद्वान्, तण्डुलं पेचिवान्,—इत्यादौ। भक्ष्यं भुञ्जानः इत्यादौ, सोमं पवमानः, कवचम् उद्वहन्,—इत्यादौ, कटं चक्राण इत्यादौ, दधि घटं, चक्रिः कटम्, इत्यादौ, शत्रुं जिष्णुरित्यादौ, स्त्रियम् अलंकरिष्णुः, कष्टं सहिष्णु,,—इत्यादौ, धनं गृध्नुः, शरं क्षिप्नुः,—इत्यादौ, कटं चिकीर्षुः, पुंयोगमाशंसुः, तण्डुलं भिक्षुः, इत्यादौ, शतं दायीत्यादौ, ग्रामं गमी ग्रामम् आगामीत्यादौ, कटं कारको व्रजतीत्यादौ, तण्डुलं पक्त्वा वर्तते—इत्यादौ, पयः पायं पायं व्रजतीत्यादौ, पटं कर्तुं गच्छतीत्यादौ, वदिता जनाऽपवादमित्यादौ, ग्रामं कामुकः, सुखम् अभिलाषुकः,—इत्यादौ च, कर्मत्वस्य धात्वर्थे विनैव षष्ठीम् अन्वयः ॥

वर्तमानत्वस्य आधारत्वस्य च प्रत्यायको यः क्तः तदन्तधात्वर्थैककर्तृत्वकर्मत्वयोरन्वये षष्ठ्येव प्रमाणम, यथा—भीतं मृगाणाम्, मतः साधूनाम्, इष्टः प्रजानाम्, पूजितो जनानामित्यादौ। सुप्तमरण्यं पथिकानां, गतं नभो नक्षत्राणां, पीतमागारं पयस इत्यादौ, भुक्ता पात्री करम्भस्य मित्राणामित्यादौ च षष्ठी प्रमाणम् ॥ स्त्र्यधिकारविहिता ये भावप्रत्ययाः, तदन्यकृदन्तस्य धातोरर्थे कर्तृत्वकर्मत्वयोर्युगपद्बोधने कर्मतायामेव षष्ठी, न तु कर्तृत्वे, यथा—ओदनस्य पाकश्चैत्रेण, दोहः क्षीरस्य गवां गोपेन,—इत्यादौ ॥ अथ—स्त्र्यधिकारोक्तभावान्तस्य धातोरर्थे कर्तृत्वकर्मत्वयोर्युगपदन्वये द्वयोरपि षष्ठी, यथा भिदा तमसाम् अर्कस्य, छिदा वृक्षाणां दात्रस्य,—इत्यादौ, चिकीर्षा पुण्यानां पुरुषस्य,—ईहा धनानां दीनस्येत्यादौ, मम, भोजिका सक्तूनां, तव शायिका स्त्रीणामित्यादौ, तीर्थानां गतिरास्तिकस्य, गुरूणां परिचर्या शिष्यस्य, पितॄणाम् उपासना सन्तानस्य, रजनीनां जागर्या चौरस्य,—पुण्यानाम् अकरणिर्जाल्मस्य, जन्तूनां हत्या व्याधस्य, हानिरर्थानां विरक्तस्य,—इत्यादौ च कर्मत्वकर्तृत्वयोर्द्वयोरपि षष्ठी ॥ कृत्यप्रत्ययान्तस्य धातोरर्थे कर्तृत्वमात्रस्य बोधने षष्ठीवत् तृतीयाऽपि। कर्तव्यः करणीयः, कृत्यः कार्यः, प्रदेयो वा पटश्चैत्रस्येति चैत्रेणेति च साकांक्षत्वात्। अथ कृत्यप्रत्ययान्तस्य धातोरर्थे कर्तृत्वकर्मत्वयोर्द्वयोर्बोधने तु न द्वयोरपि षष्ठी, यथा—नेतव्यः प्रापणीयो वा ग्रामं गौः गोपेन, गन्तव्यं ग्रामम् अनेनेत्यादौ च ॥ तव्यानीयौ क्यप् ध्यण् यौ कृत्यसंज्ञकाः पञ्च ॥ भावक्तान्तस्य धातोरर्थे कर्मत्वस्य कर्तृत्वस्य वाऽन्वये द्वितीयादिवत् षष्ठ्यपि। तत्तदुत्तरशाब्दे तत्तदानुपूर्वीज्ञानस्य हेतुत्वे न व्यभिचारः। स्थितं चैत्रस्य, गतं ग्रामस्य, गतं ग्रामस्य चैत्रस्येति कर्मत्वस्य कर्तृत्वस्य

उभयस्य च क्रियाणामन्वयः ।। शतेन शताय वा परिक्रीणीत—इत्यत्र चतुर्थ्याः, सर्पिषा सर्पिषो वा पूर्णः, फलेन फलस्य वा तृप्तः,—इत्यादौ षष्ठ्याः करणत्वस्य बोधनम् । दास्यै दास्या वा सम्प्रयच्छते मालाम् इत्यादौ तृतीयायां सम्प्रदानत्वस्य बोधनम् ।।

प्रथमादीनां सप्तानामपि विभक्तीनाम् एकत्वादयोऽर्था न धात्वर्थे प्रकारीभूय भासन्ते, किन्तु प्रकृत्यर्थे पाक इत्यादावपि, सुबर्थसंख्या च धात्वर्थे प्रकारः, पचनादिस्वरूपे नामार्थे, समासनिविष्टस्य धातोरर्थे वा । तथा च—यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकयादृशस्वार्थप्रकारकशाब्दजनकताऽनवच्छेदकं तादृशानुपूर्वीमत्सुप्त्वं तादृशार्थे कारकभिन्नार्थकसुप्त्वम् । प्रथमाद्याः सप्ताऽपि विभक्तयः प्रकृत्यर्थे पाकादौ प्रकारतया स्वार्थैकत्वाद्यर्थान् भासयन्ति न तु धात्वर्थे, सुबर्थसंख्या न धात्वर्थे प्रकारः, किन्तु नामार्थे, पचनादौ, ग्रामगत इति समासेऽपि सुबर्थः एकत्वादिधात्वर्थे न प्रकारः । एकया शलाकया द्यूतेऽन्यथापातनमित्यर्थेऽव्ययीभावे शलाकापरीत्यत्र समासनिविष्टनाम्नोऽर्थे प्रकारीभूतमेकत्वं न तु धात्वर्थे, एवं चैत्र ! व्रजेत्यत्र सम्बोध्यत्वं क्रियाकरणाय वक्त्रभिप्रेतत्वं वक्तृनिष्ठविलक्षणबोधविषयत्वं वा चैत्रनिष्ठं न तु धात्वर्थे तत्, तथा च वक्त्रभिप्रेतसम्बोध्यत्ववांश्चैत्रोऽनुमतव्रजनवान् इति बोधः । छत्रिन् तुष्टो वज्रेत्यत्र छत्रिणि तुष्टस्याऽभेदः, न तु तुष्टे छत्रिणः, एवंविधसामर्थ्यात् । अथ—सुमित्रामातः नैतत्ते विचित्रं चित्रयोधिनः—इत्यत्र सम्बोध्यत्वमिव प्रशंस्यत्वमपि सम्बुद्धिसुपामर्थः । धृतिः स्वाहेत्यत्र प्रथमायाश्चतुर्थ्याद्यनादेशे उद्देश्यत्वम् अर्थः । दक्षिणेन ग्रामम् उत्तरेण पन्थानमित्यत्र एनप्रत्ययान्तयोगे ग्रामस्याऽदूरदक्षिणादिशि—इति धीः । धनपतिगृहादुत्तरेण मद्गृहमित्यत्र विना बाधं दिगर्थयोगात् पञ्चम्यपीति । वृक्षमभि प्रति परि अनु वा द्योतते विद्युदित्यत्र अभ्यादेः कर्मप्रवचनीयस्य लक्ष्यीकृत्येत्यर्थः, वृक्षं लक्ष्यीकृत्याऽऽश्रित्य प्रकाशते विद्युदिति वाक्यार्थः, आश्रितत्वाऽन्वयिनिरूपितत्वं द्वितीयार्थोऽत्र । अभ्यादेर्लक्षणाद्यर्थे तु निरूपितत्वादिसम्बन्धेन आकांक्षितेन वृक्षादेरन्वयधियं प्रति द्वितीया तात्पर्यग्राहिका । प्राज्ञं प्रति भोज्यमर्थः, प्राज्ञं प्रतिभाय वर्तते,—इत्यादौ प्रतिभा अतित्वरितस्फुरणम् । प्रतिभातेर्योगे षष्ठ्येव, द्वितीयया षष्ठ्यर्थः सम्बन्धोऽनुभाव्यते, प्राज्ञस्य झटिति स्फूर्तेर्विषयोऽयमर्थः इति बोधः । वृक्षं वृक्षमभि प्रति परि अनु वा वायसा इत्यत्र वीप्सास्थलेऽपि प्रतिवृक्षवृत्तयो वायसा आधेयतासम्बन्धेन तत्तद्वृक्षत्वव्यापका वायसा इति तदर्थः पितरमभि प्रति परि अनु वा चैत्र इत्यत्र इत्थम्भूतार्थकैरभ्यादिभिः पितरीत्थम्भूतश्चैत्र इत्यन्वयबोधः । यन्मां प्रति परि वा तद् देहीत्यत्र प्रतिपरिभ्यामुपस्थिते भागे मत्सम्बन्धो द्वितीयया बोध्यते, यो मदीयो भागस्तं देहीति बोधः । कारीरीमनुवृष्टिरित्यत्र अनु हेतुतावाचि, तेन कारीरीनिष्ठहेतुताका वृष्टिरिति बोधः, कारीरी वृष्ट्यर्थो यज्ञः । शूरम् अनु युद्धयते, दरिद्रमनुयाचते,—इत्यादौ अनु सहार्थकः, शूरेण सह युद्धयते इत्यर्थः । उप अर्जुनं क्षत्रियाः, अनु देवं दानवाः, इत्यत्र उपोऽनुः हीनबलार्थकौ, क्षत्त्रिया अर्जुनाद्धीनबला इति बोधः।। लक्ष्यीकृत्यार्थकस्य अधिशब्दस्य योगे द्वितीया,—नरमपि गुणदोषयोश्चिन्तेति । समया निकषा सामीप्यार्थे, समया ग्राममिति ग्रामस्य समीपमित्यन्वये ग्रामाद्यवधिकत्वं ग्रामादिप्रतियोगिकत्वं वा द्वितीयार्थः । विद्यामृते, अन्तरेण अन्तरा विना नरः शोच्य इत्यत्राऽवयवानामत्यन्ताभावोऽर्थः, अभाववैशिष्ट्यं वाऽर्थः, विद्याऽत्यन्ताभाववान् नरः शोच्यः, अत्यन्ताभावेऽन्वितं प्रतियोगित्वं द्वितीयार्थः । गमनमृते द्रव्यं न शब्दवदित्यत्र तु भेदोऽप्यर्थः गगनभिन्नं द्रव्यं न शब्दवदिति बोधः । हा पुत्रमित्यत्र हाऽव्ययार्थे कष्टे द्वितीयान्तेन पुत्रसमवेतत्वमर्थोऽन्वीयते । धिक् पुत्रमित्यत्र गर्हायां पुत्रविषयित्वमन्वीयते । हा पितः काऽसि हे सुभ्रु इत्यत्र हापदेन विलापिनि गतं कष्टं बुद्धयते । पुत्रस्य धिक्कार इत्यत्र धिक्कार एव पुत्रेऽन्वेति न धिक् । पुत्रेण विनाकृत इत्यत्र न विना, किन्तु विनाकृत एवाऽन्वेति । वियायोगे द्वितीयातृतीयापञ्चम्यन्यतमम्, घटेन विना घटाद्विना घटं विनेति । उपर्युपरिगृहं पताकेत्यत्र द्विरुक्तस्योपरि निपातस्य सन्निकृष्टोर्ध्वभागार्थकत्वेन गृहस्य सन्निकृष्टोर्ध्वभागे पताकेत्यर्थः ।

अधोऽधो मेघमम्भः इत्यत्र, अध्यधि शिखरं घनः इत्यत्र च मेघस्य सन्निकृष्टाऽधोभागेऽम्भः, शिखरस्य सन्निकृष्टाऽधोभागे घन इति । सामीप्यवाचियोगे द्वितीया । उपर्युपरि अम्लानां मद्यम्, अधोऽधो दुर्गतेः शरणम्,—इत्यत्र अतिशयार्थः । अम्लानामतिशयाऽम्लं, मद्यम्, दुर्गतीनामतिशयदुर्गतिः शरणम्, सामीप्यार्थाऽभावान् षष्ठी । गृहम् अभितः पुरतरुणा— इत्यत्र अभितः इत्यस्य सर्वाऽवच्छेदेनाऽर्थः, तत्र खण्डशो वृत्तिः शक्तिः । गृहस्य सर्वावच्छेदेन पुरतरुणा व्याप्तिः । तदेकदेशे सर्वस्मिन् गृहावयवत्वं द्वितीययाऽनुभाव्यते । गृहं परितः सर्वत उभयतो वा खण्डशो वृत्त्या सर्वावयवावच्छेदेनेत्यर्थः । नदीं यावन्मम पुरम्, गृहं यावद्धनं तव, इत्यत्र यावदव्ययस्य क्रमेण मर्यादा अभिविधिश्चाऽर्थः, नदीपर्यन्तं मत्पुरं, गृहाभिव्याप्तं त्वद्धनमिति बोधः । तत्पर्यन्तत्वं च तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्निकृष्टत्वम्, तदभिव्याप्तत्वं च तदारम्भकयावदवयवाऽवच्छेदेन तत्संयुक्तत्वमिति । मासं सुप्यते, क्रोशं गम्यते,— इत्यादौ द्वितीययाऽभिव्याप्तिरुच्यते, मासाभिव्याप्तः स्वापः, क्रोशाभिव्याप्तं गतेः कर्मत्वमिति बोधः । व्याप्तिस्तु यथायोग्या कल्प्या । अक्ष्णा काण इत्यत्र विकृतगोलकवृत्तित्वविशिष्टं यच्चक्षुःशून्यत्वं तद्गोलकवान् सचक्षुष्क इतिबोधः । तत्र तृतीयार्थो विकृतत्वं वृत्तिमत्त्वं चाऽर्थः, चक्षुःशून्यगोलकवत्सचक्षुर्गोलकवति कर्णेऽर्थे विकृतत्वं विशेषणविधया तथा एकदेशे चक्षुःशून्यत्वे प्रकृत्यर्थनिरूपितं वृत्तित्वं चाऽन्वेति । गोलकरहितस्त्वन्धः, सगोलकोऽपि चक्षूरहितोऽन्धः, तदा तु स्वाधिष्ठानवृत्तित्वसम्बन्धेन चक्षुःशून्यो यश्चक्षुर्विनाशस्तद्वान् सचक्षुष्कस्तत्र विनाशेऽक्षिपदार्थगोलकस्य विकारप्रयुक्तत्वं तृतीयार्थः । तथा च गोलकविकारप्रयुक्तस्य स्वाधिष्ठानवृत्तित्वसम्बन्धेन चक्षुर्नाशस्याऽऽश्रयः सचक्षुष्क इति वा बोधः । विकारः कनीनिकाव्यपगमः ॥ अथ पादेन खञ्ज इति सहजसंस्थानशून्यचरणवान् खञ्जः, तथा च विकृतपादवृत्तित्वविशिष्टं यत्सहजसंस्थानशून्यत्वं तद्वच्चरणवान्, अथ वा चरणविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याऽऽश्रयीभूतचरणवानिति बोधः । श्रोत्रेण बधिरः, कायेन वामन इत्यादावपि, सहजसंस्थानशून्यकर्णवान् बधिरः, अजातसंस्थानशून्यदेहवान् वामनः, विकृतकर्णवृत्तित्वविशिष्टं यत् सहजसंस्थानशून्यत्वं तद्वत्कर्णवान् कर्णविकारप्रयुक्तस्य यथोचितसंस्थानवैधुर्यस्याऽऽश्रयीभूतकर्णवानिति वा बोधः । विकृतशरीरवृत्तित्वविशिष्टं यत् अजातसंस्थानशून्यत्वं तद्वच्छरीरवान् इति बोधः । मुखेन त्रिलोचनः, कायेन दशवक्त्रः, इत्यत्र अविकृतमुखवृत्ति यत् सहजसंस्थानशून्यत्वं तद्वन्मुखवाँस्त्रिलोचनः, विकृतकायवृत्ति यत् सहजसंस्थानशून्यत्वं तद्वत्कायवान् दशवक्त्र इति । यद्वा—मुखवृत्तित्रिलोचनवान्, कायवृत्तिदशवक्त्रवान् इति बोधः । तृतीयार्थो विकारो वा वैशिष्टचम् । जटाभिस्तापस इत्यत्र अतद्व्यावृत्तत्वं सम्बन्धितामात्रं वा तृतीयार्थः, अजटव्यावृत्तिमाँस्तापस इति बोधः । वर्तमाने विशेषणतया, अवर्तमाने तूपलक्षणतया प्रत्याय्यते, तदा तत्र शिखया परिव्राजको वर्तते, गुरुणा टीका, कुरुणा क्षेत्रमित्यादौ, गुरूपलक्षिता टीका, कुरूपलक्षितं क्षेत्रमित्यर्थः । अथ यादृशसमभिव्याहृतक्रियान्वयि यत्र यत्कारकं तत्र तत्कारकावच्छिन्नतादृशक्रियाकालीनत्वं सहार्थः, तदेकदेशे कर्तृत्वादिकारके स्वप्रकृत्यर्थस्याऽऽधेयत्वं तृतीयया बोध्यते, तेन— पुत्रेण सहाऽऽगतः, सूपेन सार्धं भुक्तः, चक्रेण सार्धं दण्डेन जनितः, पुत्रेण समं मित्राय दानमित्यादौ, पुत्रवृत्तिकर्तृताकगतिकालीनगतिकर्तृतावान्, रूपनिष्ठकर्मताकभोजनकालीनभोजनकर्मतावान्, चक्रनिष्ठकरणताकोत्पत्तिकालीनदण्डनिष्ठकरणताकोत्पत्तिमान्, पुत्रसम्प्रदानताकदानकालीनं मित्रसम्प्रदानताकं दानमिति बोधः । पुत्रेण सह मित्रं प्राप्त इत्यत्र तात्पर्यवशात् पुत्रकर्तृकमित्रप्राप्तिकालीनमित्रप्राप्तिकर्तृकत्वं चैत्रस्य बुध्यते । शाकस्य भोजनं न सुधया सहेत्यत्र समानकर्तृकसुधाकर्मकभोजनकालीनभिन्नकालीनशाकभोजनमिति बोधः । पटः पटत्वेन सह भासते इत्यत्र प्रतियोगित्वं कर्तृत्वं, समानप्रतियोगिताकज्ञानविशेष्यः पट इति बोधः । पुत्रेण सह गतिरित्यत्र सहस्य पुत्रकर्तृकगतिसमानकालीनत्वे निरूढा लक्षणा, तथा च पुत्रकर्तृकगतिसमानकालीनगतिमान्

पितेति बोधः। पुत्रेण सह स्थूल इत्यत्र पुत्रवृत्तिस्थौल्यसमानकालीनस्थौल्यवानिति बोधः। पत्न्या सहाऽग्निमादध्यादित्यत्र सामानाधिकरण्यं सहभावः सहार्थः,पत्नीसमानाधिकरणकपतिः अग्निसमाधानाऽऽज्ञागोचरः इत्यर्थः। घटेन सह पटवद्गृहमित्यत्र घटसामानाधिकरणपटाधारगृहम्। पुत्रेण सहाऽऽगत इत्यत्र पुत्रकर्तृकगतिकालीनगतिमानिति बोधः। धनेन कुलम्,दण्डेन घट इत्यत्र तृतीया हेतुत्वार्थे, धनहेतुककुलम्, दण्डहेतुकघट इत्यर्थः। कुले धनस्य हेतुत्वं,गवि द्विजस्य सम्प्रदानत्वं,पतने वृक्षरूपाऽपादानत्वं, वह्नौ धूमस्य ज्ञापकत्वं,धने चैत्रस्य स्वामित्वं,घटे भूतलस्याधिकरणत्वमित्यादि प्रतीत्या निरूपकत्वसम्बन्धस्य क्वचिद् वृत्तितानियामकत्वम्। पतनमिदं वृक्षान्न गृतादित्यत्र पञ्चम्या लक्षणया विभागाद्यनुकूलत्वाभावो बोध्यते, तत्र गृहविभागानुकूलत्वाऽभाववत्पतनं वृक्षनिरूपितविभागानुकूलम् पतनम् अधोदेशसंयोगानुकूला क्रिया धूमेन वह्निरित्यत्र ज्ञापकत्वं तृतीयार्थः,धूमज्ञानज्ञाप्यो वह्निः। वह्निज्ञापको धूमः। घटेन शून्यः, घटप्रतियोगिताकाऽभाववानिति बोधः। प्रकृत्या कृपणः,—स्वाश्रयाऽधिकरणयावत्कालवृत्तिकार्पण्यवानिति बोधः। सुरथो नाम राजा इत्यत्र संज्ञातादात्म्यवत्-सुरथशब्दवाच्यो राजेत्यर्थः। नाम्ना चन्द्रमुखीत्यत्र संज्ञातादात्म्यवच्चन्द्रमुखीशब्दवाच्येति। धान्येन धनं, घटत्वेन साजात्यं,वाजपेयेन यजनमित्यादावभेदस्तृतीयार्थः,धान्याऽभिन्नधनं,घटत्वाऽभिन्नसाजात्यं,वाजपेयाऽभिन्नयजनमिति बोधः। जात्या ब्राह्मण इत्यत्र अदृष्टविशेषप्रयोज्यधर्मवत्परं ब्राह्मणपदम्,धर्मे जात्यभेदान्वयः,अदृष्टविशेषप्रयोज्यजात्यभिन्नधर्मवानिति बोधः। घटत्वेन जन्यत्वं प्रकारत्वमित्यत्र अवच्छेदकत्वमवच्छेद्यत्वं वा तृतीयार्थः। घटत्वावच्छेदकताकजन्यता,घटत्वावच्छेद्यताकप्रकारतेत्यर्थः। चैत्रेण चैत्रस्य वा तुल्यः सदृश इत्यत्र, भिन्नत्वे सति तद्धर्मवत्वं तुल्यता,भेदे तृतीयार्थप्रतियोगित्वस्य,धर्मे चाऽऽधेयत्वस्याऽन्वयः;चैत्रत्वाद्यवच्छिन्नान्यत्वे सति चैत्रवृत्तिधर्मवानित्यर्थः। गजेन तुल्यगमनः,वृषस्य सदृशेक्षणः,अत्र गत्यादिस्तृतीयार्थः, गजगतितुल्यगतिमान् वृषेक्षणतुल्येक्षणवानित्यर्थः। भोगेषु प्रसित उत्सुक इत्यत्र सप्तम्याः, भोगैः प्रसित उत्सुक इत्यादौ तृतीयायाश्च विषयत्वमेवाधिकरणत्वमर्थः, तेन भोगेष्वनुरक्तः, भोगविषयकरागवानित्यर्थः। पुष्ये स्नायादित्यत्र तृतीयाया अधिकरणत्वमर्थः,पुष्याधिकरणकालीनस्नानभावनावानिति बोधः। पुष्ये रूपं पुष्यवृत्तिरूपमित्यर्थः। न त्वां तृणं तृणाय वा मन्ये इत्यत्र त्वां तृणादपकृष्टं मन्ये इत्यर्थः। द्रौणिः नैष ब्राह्मण इत्यत्र नञोऽपकृष्टत्वमर्थः,ब्राह्मणाऽपकृष्टोऽश्वत्थामेत्यर्थः। न त्वं कीटो मतो ममेत्यत्र कीटापकृष्टगोचरमन्मतिविषयत्वम्। जारजं न द्विजं मन्ये इत्यत्र जारजगोचरद्विजापकृष्टमतिमानहमिति बोधः। न नावं मन्यतेऽश्वं, नौकासादृश्याऽभाववदश्वमतिमानिति बोधः। न तृणाभ्यां युवां मन्ये इत्यत्र तृणाऽपकृष्टयुष्मन्मतिमानहमितिबोधः। तृणाय त्वां मन्यते इत्यत्र तृणसदृशत्वन्मतिमानिति बोधः। पुष्पमिदं विष्णवे नम इत्यत्र चतुर्थ्याः प्रीत्युद्देश्यकत्वं,नमःपदार्थे मन्त्रकरणकत्यागे बोध्यते, विष्णोः प्रीताविच्छायां वाऽन्वयः, 'इदं पुष्पं विष्णुस्वत्ववद् भवतु'इति नमःपदार्थोपायेच्छायां फलेच्छाविधया विष्णुं प्रति इच्छाहेतुत्वात्। तथा च विष्णुप्रीत्युद्देश्यकमन्त्रकरणत्यागस्य कर्मेदं पुष्पमित्यर्थः। ब्राह्मणेभ्यो नमो नित्यमित्यत्र नमो नतिः,विषयत्वं चतुर्थ्या बोध्यते,ब्राह्मणविषयनित्यनमोऽर्थः। पुष्पमिदं परमात्मने नम इत्यत्र परमात्मप्रीत्युद्देश्यकमन्त्रकरणत्यागस्य कर्मेदं पुष्पमिति बोधः। परमात्मनि प्रीतिः प्रसन्नता गुणोऽस्ति। स्वस्वकरणको हविस्त्यागः स्वधास्वाहाऽर्थः। इदं पित्रे स्वधा,अग्नये स्वाहा, इत्यत्र पित्रुद्देश्यकस्य स्वधापदकरणकस्य हविस्त्यागस्य कर्मेदमिति बोधः। अग्न्युद्देश्यकस्य स्वाहापदकरणकस्य हविस्त्यागस्य कर्मेदमिति बोधः। वषडिन्द्रायेत्यत्र इन्द्रोद्देश्यकस्य वषट्पदकरणकस्य हविस्त्यागस्य कर्मेदमिति बोधः। स्वस्ति प्रजाभ्यः इत्यत्र प्रजानिष्ठं कुशलमित्यर्थः। स्वस्त्यस्तु प्रजाभ्यः प्रजानां वा, प्रजानिष्ठं कुशलं प्रजासम्बन्धिकुशलमित्यर्थः। चैत्रस्य चैत्राय वा सुखं हितं वा इत्यत्र चतुर्थ्या आधेयत्वमर्थः,चैत्रनिष्ठं सुखं

हितं वाऽर्थः। सुखायाऽलं समर्थो योग्यं वा भोजनमित्यत्र अलमित्यादिपदार्थैकदेशे सामर्थ्ये सुखादिनिरूपितत्वं चतुर्थ्या बोध्यते। सुखादिनिरूपितसामर्थ्यवद्भोजनमित्यर्थः। अलम् अनेनेत्यत्र वैफल्यमलं पदार्थः,विफलमेतदित्यर्थः। यूपाय दारु,रन्धनाय स्थालीत्यादौ यूपानुकूलदारु,रन्धनानुकूला स्थालीत्यर्थः। पाकाय व्रजति पाकोद्देश्यकस्वेच्छाधीनव्रजनवानित्यर्थः, परपाकार्थं पक्तुं व्रजतीत्यत्र समानकर्तृकत्वविशेष्यीभूतक्रियाकर्तृत्वं तुमर्थः, तच्च विशेषणीभूतक्रियायामन्वीयते, 'समानकर्तृकपाकोद्देश्यकव्रजनवानिति बोधः। फलेभ्यो व्रजतीत्यत्र फलकर्मकाऽऽहरणेच्छाधीनव्रजनवानित्यर्थः। पूर्वो ग्रामादित्यत्र पञ्चम्या अवधित्वमर्थः,ग्रामाऽवधिकं यदुदयाऽचलसन्निकृष्टत्वं तद्वान्,एवम् उत्तरः कैलाससन्निकृष्टत्वं,दक्षिणं कैलासविप्रकृष्टत्वम्,यद्वा संयमनीसन्निकृष्टत्वम्,पश्चिमं वारुणीसन्निकृष्टत्वमित्याद्यर्थः। ग्रीष्मात् पूर्वो वसन्तः इत्यत्र कृष्णात्पूर्वो हलायुध इत्यत्र प्रागभावक्षणोत्पन्नत्वादिः पूर्वत्वार्थः, तत्र प्रागभावे ग्रीष्मादिनिष्ठप्रतियोगिताकत्वस्याऽन्वयः, ग्रीष्मकृष्णादिनिष्ठप्रतियोगिताकप्रागभावक्षणोत्पन्नत्ववान् वसन्तहलायुधादिरितिबोधः। घटात् अन्यो भिन्नः पृथग् इत्यादौ घटावधिकभेदवानिति बोधः। घटनिष्ठघटत्वावच्छिन्नावधिकताकभेदानुयोगितावानित्यर्थः। मम गृहाद् गंगा परेत्यत्र,गंगा काश्या अपरा, इत्यत्र च दैशिकपरत्वाऽपरत्वयोः विप्रकृष्टत्वसन्निकृष्टत्वयोः अन्वितं गृहकाश्यादिसापेक्षत्वं पञ्चम्यर्थः स्वरूपसम्बन्धरूपः पदार्थान्तरं वा, गृहापेक्षया मद्विप्रकर्षवती गंगा, काश्यपेक्षया मत्सन्निकर्षवती गंगेति बोधः। परिगृहाद् गतः, अपगृहाद् भुक्तः, इत्यादौ पर्यपयोः परित्यज्यार्थः धात्वर्थे साकांक्षः, गृहत्यागोत्तरगमनवान्, गृहत्यागोत्तरभोजनवानित्यर्थः। आदेहाद् वस्त्रम्, आगृहाद् उद्यानमित्यादौ अभिव्याप्तत्वं मर्यादा वाऽऽङोऽर्थः, देहव्याप्तं वासः गृहमर्यादाकोद्यानमित्यर्थः। वैश्येभ्यः क्षत्रियाः शूराः, इत्यत्र वैश्यशौर्याधिकशौर्यवन्तः क्षत्रिया इति बोधः। शूद्रेभ्यो धनिनो विश इत्यत्र शूद्रधनाऽधिकधनवन्तो वैश्या इत्यर्थः। चैत्रस्य धनं, वृक्षस्य शाखाः, स्फटिकस्य लौहित्यमित्यादौ समवेतत्वादिरूपं स्वत्वम्, चैत्र स्वत्ववद्धनं, वृक्षसमवायित्ववत्यः शाखाः, स्फटिकसमवेतं लौहित्यमित्यादिर्बोधः। नराणां क्षत्रियः शूरतम इत्यत्र क्षत्रियाऽन्यनरत्वावच्छिन्नवृत्तिकभेदप्रतियोगित्ववच्छूरतमाऽभिन्नक्षत्रिय इति बोधः। तत्र षष्ठयर्थः क्षत्रियाऽन्यत्वं, प्रकृत्यर्थो नरः, आधेयतया भेदेऽन्वीतः, भेदप्रतियोगित्वस्य शूरतमे, तादात्म्येन शूरतमस्य क्षत्रियेऽन्वयश्च। द्वन्द्वः सामासिकस्येत्यत्र समाससम्बन्ध्यभिन्नद्वन्द्वात्मक इत्यर्थः। पाथःपृथिव्योर्जलं स्नेहवदित्यत्र जलभिन्नो यः पाथःपृथिवीपर्याप्तिसंख्याश्रयस्तत्त्वाऽभिन्नवृत्तिकभेदप्रतियोगिस्नेहाऽभिन्नं पाथःपृथिवीपर्याप्तसंख्याश्रयो जलमित्यन्वयबोधः। घटपटमठानां घटः कम्बुग्रीवादिमानित्यत्र घटभिन्नो यो घटपटमठपर्याप्तसंख्याश्रयः तदवच्छिन्नवृत्तिकभेदस्य प्रतियोगिकम्बुग्रीवादिभेदभिन्नो घटपटमठपर्याप्त्याश्रयः कम्बुग्रीवादिमानिति बोधः शरदि पुष्पन्ति सप्तच्छदा इत्यत्र शरत्कालवृत्तिर्यः पुष्पोत्पादस्तद्वन्तः सप्तच्छदाः। शरदि सुन्दरश्चन्द्रमा इत्यत्र कालसप्तमी, शरत्कालीनचन्द्रः सुन्दर इत्यर्थः। गोषु दुह्यमानासु आगत इत्यत्र गवाभिन्नानां वर्तमानदोहनकर्मणां सम्बन्धिनि वर्तमानकाले आगत इत्यर्थः। गवाभिन्नानां वर्तमानध्वंसप्रतियोगिदोहनकर्मणां सम्बन्धिनि तत्तत्काले आगत इति बोधः। गोषु दोग्धव्यासु आगत इत्यत्र गवाभिन्नानां विद्यमानप्रागभावप्रतियोगिदोहनकर्मणां सम्बन्धिनि तादृशकाले आगत इति बोधः। नष्टेषु गोषु आगत इत्यत्र गोप्रतियोगिकनाशाऽधिकरणकालसम्बन्धिनि एतत्काले आगत इत्यर्थः। क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे—इत्यत्र वर्तमानध्वंसप्रतियोगिदर्शनविषयपरमात्मसम्बन्धिवर्तमानकालवृत्तिक्षयप्रतियोगीनि अस्य जीवस्य कर्माणीत्यर्थः। 'भुक्तवत्सु च विप्रेषु पिण्डान् दर्भेषु निर्वपेत्' इत्यत्र विप्रभिन्नवर्तमानध्वंसप्रतियोगिभोजनकर्तृसम्बन्धिवर्तमानकालवृत्तिपिण्डकर्मताकदर्भाऽधिकरणकनिर्वाप इष्टसाधनमित्यर्थः। भावे सप्तमी। वर्तमानकालो भवपदार्थः। भावसप्तम्यर्थो धात्वर्थेऽन्वेति। चर्मणि द्वीपिनं हन्तीत्यत्र चर्म प्राप्तुं द्वीपिनं हन्तीत्यर्थः। उपरागे स्नानमित्यत्र उपराग-

जन्येष्टजनकस्नानमित्यर्थः। उपरागनिमित्तकत्वं सप्तम्यर्थः। गोवधे प्रायश्चित्तमित्यत्र गोवधादिजन्यदुरितनाशकप्रायश्चित्तमित्यर्थः ॥ ४८६ ॥

**क्रियाजन्यफलशालि कर्म क्रिया तु धातवी।**
**फलं प्रत्ययलभ्यं चोपस्थित्युत्थं विशेषतः ॥४८७॥**

'कर्मणि द्वितीया' सूत्रम्। 'कर्मणि सप्तमी, गुणे शुक्लादयः पुंसी'-ति सप्तम्या कर्मणि सप्तम्या वाचकतार्थता। कर्मत्वं क्रियाजन्यफलशालित्वम्, क्रिया धातुलभ्या, जन्यजनकभावः संसर्गमर्यादालभ्यश्चेत् फलमात्रं कर्मप्रत्ययार्थः। यङन्तयद्धातूपस्थाप्यतिङ् यादृशस्वार्थधर्मिकतद्धातूपस्थाप्ययादृशार्थप्रकारकाऽन्वयबोधजनिका, कर्तृताभिन्नतादृशार्थः, तद्धातूपस्थाप्यतादृशक्रियायां कर्मत्वं, ग्रामं गच्छतीति ग्रामो गम्यते इति, ग्रामं त्यजतीत्यादौ, संयोगविभागादिरूपफलं न धातुलभ्यं, व्यापारमात्रं धातुलभ्यं फलं तु कर्मप्रत्ययलभ्यम्, फलसामान्यबोधे कर्मप्रत्ययः कारणम्, फलविशेषबोधे धातुविशेषजन्यव्यापारोपस्थितिः कारणम्, ग्रामकर्मकसंयोगरूपफलविषयकशाब्दबोधे गम्धातुजन्यस्पन्दात्मकव्यापारोपस्थितिर्हेतुः। ग्रामकर्मकत्यागरूपफलविषयकशाब्दबोधे त्यज्धातुजन्यस्पन्दरूपव्यापारोपस्थितिर्हेतुः ॥ एवं भिन्नप्रयोगेष्वपि। ग्रामं स्पन्दते, घटं यतते, चैत्रश्चैत्रं गच्छति, एकस्मिंश्चैत्रे चैत्रेण गम्यते चैत्रः, इत्यादयो न प्रयोगाः, आकांक्षाऽभावात्। ययोर्यादृशाऽन्वयबोधे आकांक्षा तदुपस्थापितयोरेव तादृशान्वयबोधः, आकांक्षा द्वितीयादेर्गम्यादिना कृञादिना च, न तु तत्समानार्थकस्पन्दियतिप्रभृतिनेनि। अन्वयबोधौपयिकसमभिव्याहारस्य आकांक्षात्वात्। फलान्वितव्यापारबोधकधातुत्वस्य तन्नियामकत्वात्। शक्त्या बोधाल्लक्षणया विलक्षणबोधः। चैत्रेण गम्यते ग्राम इत्यत्र चैत्रकर्तृकग्रामभिन्नसमवेतगमनजन्यसंयोगवान् ग्राम इति बोधः। यद्वा—फलमिव भेदोऽपि कर्मवाचिप्रत्ययार्थः, चैत्रकर्तृकगमनसंयोगी गमनसमानाधिकरणभेदप्रतियोगी ग्राम इति। अथ—कर्मप्रत्ययाऽसमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यवत्त्वं, यथा कौपीनशब्दस्य पापे शक्तत्वेऽपि अनादितात्पर्यं पुरुषेन्द्रियलिंगाच्छादकवस्त्रविशेषेऽस्ति तथैव प्रयोगात् तथा तादृशफलविशेषावच्छिन्नव्यापारतात्पर्येण तत्तद्धातुपदप्रयोगः, त्यजिगमिप्रभृतिसमभिव्याहृतकर्मप्रत्ययस्य फलविशेषे नियतं तात्पर्यम्। यद्वा—संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः, तद्धात्वर्थतावच्छेदकफलशालित्वं तद्धातुकर्मत्वम्, एवं च धातोरेव फलविशेषलाभात् फलान्वयिनी वृत्तिर्द्वितीयार्थः, 'कर्मणि द्वितीये'त्यस्य फलनिष्ठाधेयत्वान्वयिनि प्रकृतितात्पर्ये तदुत्तरं द्वितीयेत्यर्थः। अनादितात्पर्यग्राहकत्वपरम्परया शक्तिग्राहकत्वं सूत्रस्य, सूत्रघटककर्मपदस्य फलनिष्ठाधेयत्वाऽन्वयित्वेनाऽनादितात्पर्यमिति च शक्तिग्राहकत्वसंभवात्। एकदेशान्वयस्वीकारात् पदार्थैकदेशे फले द्वितीयार्थाऽऽधेयत्वाऽन्वयात्। गमनं न स्पन्द इति न प्रयोगः। तद्विशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्यव्यवहितोत्तरत्वनिवेशः, विशिष्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेरेकैकविधबोधे नानाहेतुत्वम्, अतो धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयबोधः। ग्राममध्यास्ते, ग्राममधिशेते, ग्रामं संयुनक्तीत्यादौ द्वितीयायाः संयोगे इवाऽऽधेयतायां पृथक् शक्तिः, यद्वा संयोगे शक्तिः आधेयत्वे लक्षणा, यद्वा संख्यायां शक्तिः आधेयत्वे लक्षणा, यद्वा संयोगेऽपि लक्षणाऽऽधेयत्वेऽपि लक्षणा, संख्यायामेव शक्तिः, एषा त्वव्यवस्थितिः कल्पनागौरवं च। 'भूमिं गच्छति न महीरुहम्' इत्यादौ जनकत्वसम्बन्धेन भूमिसंयोगविशिष्टो जनकत्वसम्बन्धावच्छिन्नप्रतिबन्धावच्छिन्नप्रतियोगिताकमहीरुहसंयोगाऽभावविशिष्टो यो व्यापारस्तदनुकूलकृतिमानिति बोधः। यद्वा—भूमिवृत्तिर्यो महीरुहवृत्तित्वाभाववान्संयोगस्तदनुकूलव्यापारानुकूलकृतिमानिति बोधः। 'द्रव्यं गच्छति न गुणम्' इत्यत्र गमनव्यापारो द्रव्यकर्मकः, चैत्रः कर्ता, तथा च आधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताको यो गुणाऽभावस्तद्वान् यो द्रव्यसंयोगस्तज्जनकगमनव्यापारवांश्चैत्र इति बोधः। गुणो न गुणं गच्छतीति न प्रयोगः, यद्वा तत्र गुणाऽभाववत्फलानुकूलस्पन्दाश्रयत्वाऽभाववान् गुण इत्यन्वयबोधः स्यात्। द्रव्यं गच्छति नाऽभावम्' इत्यत्र आधेयतामात्रं द्वितीयार्थः,

विभक्तेः संख्यामात्रमर्थः, फलावच्छिन्नो व्यापारो धात्वर्थः, अभावप्रतियोगिकभेदसमानाधिकरण-द्रव्याधेयताकसंयोगावच्छिन्नव्यापारानुकूलकृतिमांश्चैत्र इति बोधः। द्वितीयादेराधेयत्वमर्थः, धातोः फलावच्छिन्नव्यापारोऽर्थः कर्माख्यातस्य फलमर्थः, ग्रामो गम्यते इत्यत्र यादृशविशेष्यविशेषणभावापन्नयोः पदशक्यता तादृशविशेष्यविशेषणभावापन्नयोरेव शाब्दबोधे भानात् ग्रामकर्मकसंयोगावच्छिन्न-व्यापारानुकूलकृतिमांश्चैत्र इति बोधः। यद्वा—फल-व्यापारयोः खण्डशः धातोः शक्तिद्वयम्,आख्यातस्याऽऽश्रयत्वमर्थः। 'भूमिं पतति' इत्यत्र तु अधःसंयोगावच्छिन्नस्पन्दः पतधात्वर्थः, फलमाधेयसंयोगः, द्वितीयार्थः कर्मता, भूमिकर्मकसंयोगानुकूलाऽधः-संयोगावच्छिन्नस्पन्दवाँश्चैत्रः। पादसंयोगौ, शरीर-संयोगाश्च भिन्नाः। यद्वा-पतधातुना संयोगावच्छिन्न-गमनं लक्षणया, तत्र संयोगे द्वितीयार्थाऽऽधेयत्वा-न्वयः, भूम्याधेयसंयोगावच्छिन्नगमनात्मकपतनानु-कूलकृतिमाँश्चैत्र इति बोधः। घृतं जुहोतीत्यत्र वह्नि-संयोगावच्छिन्नपतनानुकूलमन्त्रकरणकक्रियाजुहोत्यर्थः, वह्निसंयोगजनकं यद्घृतस्य पतनं तदनुकूल-मन्त्रकरणकक्रियाविशेषवान्। यद्वा—वह्न्यधिकर-णकपतनावच्छिन्नमन्त्रकरणकक्रिया हुधातोरर्थः, अधोदेशसंयोगानुकूलस्पन्दः पतनम्, पतने घृतस्याऽऽधेयत्वेनाऽन्वयः, अग्न्यधिकरणकस्य घृतवृत्तिपतनस्याऽनुकूलमन्त्रकरणकक्रियावानिति बोधः। तादृशी क्रिया सघृतस्य करादेः प्रसारणन्युब्जीकरणादिः। अग्नौ घृतं जुहोतीत्यत्र सप्तम्यर्थस्याऽग्निवृत्तित्वस्य विधेयत्वम्, अग्निसंयोगस्योद्देश्यत्वं तत्र संयोगे आधेयतयाऽग्निरवच्छेदकः, अग्निनिरूपिताऽऽधेयत्वस्य विधेयत्वमिति न उद्देश्यतावच्छेदकविधेययोरैक्यम्। ब्राह्मणाय धनं ददातीत्यत्र स्वस्वत्वध्वंसविशिष्टपर-स्वत्वानुकूला इच्छा धात्वर्थः, परस्वत्वे फले द्वितीयार्थान्वयः, दानं स्वीकार एव, फलाश्रयस्य धनस्य कर्मता, तथा च धनवृत्ति यत् स्वस्वत्वध्वंस-विशिष्टपरस्वत्वं तज्जनिका ब्राह्मणोद्देश्यिका इच्छा तद्वान् इति बोधः। धनं प्रतिगृह्णातीत्यत्र स्वस्वत्व-जनकेच्छारूपस्वीकारो धातोरर्थः, तत्र स्वस्वत्वरूप-फले द्वितीयार्थाऽऽधेयत्वान्वयः, तथा च धनवृत्ति यत् स्वस्वत्वं तज्जनकेच्छारूपस्वीकारवानिति बोधः। तण्डुलं पचतीत्यत्र रूपपरावृत्तिजनकतेजः संयोगो धात्वर्थः, रूपादिपरावृत्तिफले तण्डुलवृत्तित्वाऽन्वयः, तथा च तण्डुलवृत्तिर्या रूपादिपरावृत्तिस्तज्जनक-तेजःसंयोगानुकूलकृतिमानिति बोधः। ओदनं पचतीत्यत्र ओदननिष्पादकतण्डुलो लक्ष्यार्थः। तण्डुलमिति तण्डुलपरमाणवो वा लक्ष्यार्थाः। ओदननिष्पादक-तण्डुलवृत्तिर्या रूपादिपरावृत्तिस्तज्जनकतेजः संयोगा-नुकूलकृतिमाँश्चैत्र इति बोधः। तण्डुलारम्भक-परमाणुवृत्तिर्या रूपादिपरावृत्तिस्तज्जनकतेजः संयोगा-कूलव्यापारवानिति बोधः। ओदनं भुंक्ते इत्यत्र गलाऽधो नयनं भुजधात्वर्थः, तत्र क्रियात्मके फले ओदनवृत्तित्वान्वयः, तथा च ओदनवृत्तिर्या गलाऽधः-संयोगाऽवच्छिन्ना क्रिया तदनुकूलव्यापारवानिति बोधः॥

'गां दोग्धि पयः' इति द्विकर्मकप्रयोगे क्षरणा-नुकूलव्यापारो दुहधात्वर्थः, प्रधानकर्मणः क्षीरादेः क्रियाजन्य (क्षरण) फलशालित्वं कर्मत्वम्, अप्रधान-कर्मणो गामित्यस्य तु क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं भवति,तथा च गोकर्मकदोहनक्रियाजन्यक्षरण-फलशालिपयःक्षरणानुकूलव्यापारवानिति बोधः। गां पयो दोग्धीत्यत्र गोनिष्ठविभागानुकूलपयोनिष्ठ-क्षरणानुकूलव्यापारकर्ता मैत्र इति बोधः। गवां पयो दोग्धीत्यत्र गोसम्बन्धिपयोनिष्ठक्षरणजन्य-विभागानुकूलव्यापारवानिति बोधः। यद्वा—गोवृत्ति-पयोविभागावच्छिन्नक्षरणानुकूलव्यापारवानिति बोधः। गोभ्यो दोग्धि पयः इत्यत्र तु गवाऽपादानक-विभागवत्पयोनिष्ठक्षरणानुकूलव्यापारवानिति बोधः। दुह्यते गौः क्षीरमित्यत्र क्षरणजन्यविभागा-श्रयत्वम् अप्रधानकर्मत्वम् आख्यातार्थः, क्षीरवृत्ति-त्वस्य धात्वर्थक्षरणेऽन्वयः, आख्यातार्थक्षरणे धात्वर्थ-व्यापाराऽन्वयः, तथा च विभागावच्छिन्नक्षीरनिष्ठ-क्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरिति बोधः। यद्वा तत्र विभागक्षरणव्यापारेषु धातोर्भिन्नं शक्तित्रयम्, विशिष्टलाभोऽन्वयबलात्, आश्रयत्वम् आख्यातार्थः। क्षीरनिष्ठविभागावच्छिन्न-क्षरणानुकूलव्यापाराश्रयो गौरिति बोधः। 'पौरवं गां याचते विप्रः' इत्यत्र स्वोद्देश्यकदानेच्छा

याचतेरर्थः, प्रधानकर्मगवान्वितद्वितीयार्थो विषयित्वं धात्वर्थतावच्छेदकदानेऽन्वेति, सविषयकज्ञानादिरूपविषयोपहितेच्छाबोधकधातुस्थले इच्छाविषयविषयत्वं प्रधानकर्मत्वम्। पौरवो मदुद्देश्यकं दानं करोत्वितीच्छैव याचत्यर्थः। गोपदार्थे दाननिष्ठविषयिता, विषयित्वं द्वितीयार्थः, निरूपकत्वसम्बन्धेन गवान्वितस्याऽऽश्रयत्वेन याचधात्वर्थीभूतेच्छावच्छेदके दानेऽन्वयः, प्रधानकर्मभूतगोपदार्थविषयकं दानम्। तथा च पौरववृत्ति यद् गोविषयकं दानं तदिच्छावान् विप्र इति बोधः। गगनं दिदृक्षते इत्यत्र गगनविषयकदर्शनेच्छावानिति बोधः। चैत्रेण पौरवो गां याच्यते इत्यत्र चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रयः पौरव इति बोधः। याचमानः शिवं सुरानित्यत्र व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः, इच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयितया अन्वयः, व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्याऽन्वयः, तत्र सुरवृत्तिव्यापारजन्यकल्याणं भवत्वितीच्छा, तथा च सुरवृत्तिव्यापारजन्यकल्याणेच्छाश्रयः इति बोधः। गां व्रजं रुणद्धीत्यत्र, देशान्तरसञ्चारविरोधिव्यापारो धात्वर्थः, सञ्चारविरोधित्वं सञ्चाराऽनुत्पादप्रयोजकत्वम्, अनुत्पादे प्रधानकर्मगोवृत्तित्वाऽन्वयः, देशविशेषणभेदे व्रजमिति द्वितीयार्थव्रजप्रतियोगित्वान्वयः। तथा च गोवृत्तिर्यो व्रजाऽन्यदेशसञ्चाराऽनुत्पादस्तत्प्रयोजकव्यापारानुकूलकृतिमानिति बोधः। चैत्रेण रुद्धयते गां व्रज इत्यत्र चैत्रवृत्तिव्यापारप्रयोज्यो यो गोवृत्तिसञ्चारानुत्पादस्तदधिकरणदेशभिन्नो व्रज इति बोधः। यद्वा—विभागाऽनुत्पादः कर्मानुत्पादो व्यापारश्च रुधेरर्थः, द्वितीययोराधेयत्वमर्थः, विभागाऽनुत्पादः कर्मानुत्पादेऽन्वेति, तथा च व्रजं गां रुणद्धि गोपाल इत्यत्र व्रजवृत्तिविभागानुत्पादप्रयोजको यो गोवृत्तिः कर्माऽनुत्पादस्तत्प्रयोजकव्यापारानुकूलकृतिमान् गोपाल इति बोधः। गुरुं धर्मं पृच्छतीत्यत्र जिज्ञासाबोधजनकव्यापारो धात्वर्थः, बोधे गुरुवृत्तित्वस्याऽन्वयः, जिज्ञासायां धर्मविषयकत्वस्याऽन्वयः, तथा च—धर्मविषयकजिज्ञासाविषयकगुरुवृत्तिबोधोत्पत्त्यनुकूलव्यापारवान् शिष्य इति वाक्यार्थः। शिष्यं धर्मं ब्रूते इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थः-ज्ञाने धर्मपदोत्तरद्वितीयार्थस्य विषयितया धर्मविषयकत्वस्याऽन्वयः, शिष्यपदोत्तरद्वितीयार्थस्य शिष्यवृत्तित्वस्याऽन्वयः, तथा च धर्मविषयकशिष्यवृत्तिज्ञानोत्पत्तिप्रयोकशब्दप्रयोगरूपव्यापारवान् गुरुरित्यन्वयबोधः। शिष्यो गुरुं धर्मं पृच्छति इत्यत्र जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः, ज्ञाने गुरुवृत्तित्वस्याऽन्वयः, शब्दे च धर्मविषयकत्वस्याऽन्वयः शब्दस्य च विषयता व्यापाराऽनुबन्धिनी, ज्ञानस्य परम्परया शब्दरूपधात्वर्थविशेषणत्वात् तदाश्रयीभूतगुरोर्गौणकर्मता, धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता,गुरुवृत्तिजिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकज्ञानजनकशब्दविषयकव्यापारवान् शिष्य इति बोधः। ब्रूञश्च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दोऽर्थः, ज्ञाने शिष्यवृत्तित्वस्य, शब्दे च धर्मविषयकत्वस्याऽन्वयः, तथा च शिष्यवृत्तिजिज्ञासाविषयकज्ञानोद्देश्यकप्रवृत्त्यधीनधर्मविषयकशब्दानुकूलव्यापारवान् गुरुः। गोपालः अजां ग्रामं नयतीत्यत्र उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारः प्रापणं धात्वर्थः, उत्तरदेशसंयोगे ग्रामस्य गौणकर्मणः, क्रियारूपे च फले अजादिप्रधानकर्मणोऽन्वयः, तथा च—ग्रामवृत्तिसंयोगजनकाऽजादिवृत्तिक्रियानुकूलव्यापारकृतिमान् गोपालः। ग्रामं भारं वहतीत्यत्राऽपि भारवृत्तिसंयोगजनकग्रामादिवृत्तिक्रियाऽनुकूलव्यापाराऽनुकूलकृतिमानिति बोधः। अजा ग्रामं नीयते, भारो ग्रामम् उह्यते, चैत्रेणत्यत्र उत्तरदेशसंयोगाऽवच्छिन्नक्रियारूपं फलं कर्माख्यातार्थः, तत्र च उत्तरदेशसंयोगानुकूलक्रियानुकूलव्यापारः प्रापणमिति धात्वर्थस्य जन्यतासम्बन्धेन, तस्य चाश्रयतासम्बन्धेन अजाभारादिरूपप्रधानकर्मण्यन्वयः, ग्रामादिवृत्तित्वान्वयः संयोगे, तथा च—चैत्रकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवान् अजादिरिति बोधः। तथाविधो भारादिश्चेति बोधः। यद्वा—अजा ग्रामं नीयते चैत्रेणेत्यत्र फले व्यापारे च धातोः पृथक् शक्तिः, आश्रयत्वम् आख्यातार्थः। संयोगावच्छिन्नक्रियारूपं फलं धात्वर्थः, धात्वर्थे व्यापारे क्रियात्मकं फलं धात्वर्थ एवाऽन्वेति, एकदेशे संयोगे ग्रामवृत्तित्वस्याऽ

न्वयः, तथा च—चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयोऽजादिरिति बोधः। द्रव्यं निरूपयतीत्यत्र ज्ञानानुकूलशब्दो धात्वर्थः, ज्ञानांशे विषयत्वेन आधेयत्वाऽन्वयः, तथा च द्रव्यविषयकज्ञानजनकवाक्यप्रयोगकृतिमानिति बोधः। अजां ग्रामं यापयति, शिष्यं शास्त्रं ज्ञापयति, ब्राह्मणमन्नं भोजयति, यजमानं मन्त्रं पाठयति, घटं जनयति, नाशयति, इत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाऽजादिपदोत्तरद्वितीयाया मुख्यभाक्तसाधारणं कर्तृत्वमर्थः। गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वं चाश्रयत्वमेव, गलाऽधःसंयोगानुकूलक्रियाऽनुकूलव्यापाररूपप्रयोजनकण्ठताल्वाद्यभिघातरूपपाठनिरूपितं च तदनुकूलकृतिमत्त्वम्, नाशनिरूपितं च प्रतियोगित्वं, तस्य निरूपकतासम्बन्धेन धात्वर्थेऽन्वयः। तत्र तत्र धात्वर्थानुकूलकृतिमत्त्वं मुख्यं कर्तृत्वं धात्वर्थाश्रयत्वं गौणं कर्तृत्वं, अजायां गत्यनुकूलकृतिमत्त्वं, शिष्ये ज्ञानाश्रयत्वं, ब्राह्मणे भोजनकर्तृत्वं, यजमाने पाठानुकूलकृतिमत्त्वं, घटे उत्पत्त्याश्रयत्वं नाशप्रतियोगित्वं, च मुख्यकर्तृत्वम्, उक्तकर्तृत्वानां निरूपकत्वसम्बन्धेन धात्वर्थेऽन्वयः। तथा च अजानिष्ठकर्तृत्वनिरूपको यो ग्रामवृत्तिसंयोगजनकव्यापारस्तदनुकूलव्यापारवाँश्चैत्र इति बोधः घटं नाशयतीत्यत्र घटनिष्ठकर्तृतानिरूपकनाशानुकूलव्यापारवानितिबोधः। नव्यमते—यत्राश्रयत्वं कर्तृत्वं तत्राऽऽधेयत्वं, द्वितीयार्थः। यत्र अनुकूलकृतिमत्त्वं कर्तृत्वं तत्र कृतिजन्यत्वं द्वितीयार्थः, यत्र प्रतियोगित्वं कर्तृत्वं तत्राऽनुयोगित्वं द्वितीयार्थः, तेषाम् आश्रयतासम्बन्धेन धात्वर्थेऽन्वयः, तथा च—अजादिवृत्तिर्यो ग्रामवृत्तिसंयोगजनको व्यापारस्तदनुकूलव्यापारवानिति बोधः। ब्राह्मणकृतिजन्यो यो गलाऽधःसंयोगानुकूलव्यापारानुकूलव्यापारस्तदनुकूलव्यापारवानिति बोधः। यदा सहायवृत्तिर्यः पाकानुकूलव्यापारस्तदनुकूलव्यापारवानिति बोधः। तदा पाचयत्योदनं सहायमिति प्रयोगः। यदा तु सहायकर्तृको यः पाकस्तदनुकूलो यो व्यापारस्तदनुकूलव्यापारबोधस्तदा पाचयत्योदनं सहायेनेति प्रयोगः। पाचयतीत्यस्य पाकानुकूलकृतिनिर्वाहकव्यापारवानिति बोधः। अजा ग्रामं याप्यते चैत्रेणेत्यत्र चैत्रकर्तृकव्यापारनिर्वाह्यं यद् ग्रामवृत्तिसंयोगाऽनुकूलक्रियाकर्तृत्वं तदाश्रयोऽजा इति बोधः। तत्र संयोगावच्छिन्ना क्रिया या धातुलभ्या, संयोगे च ग्रामवृत्तित्वबलात् ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते, तादृश्यां निर्वाहकत्वेन णिजर्थकर्तृत्वेऽन्वयः, अजानिष्ठकर्तृत्वे कृतौ जनकत्वसम्बन्धेनाऽन्वयः, प्रथमान्तकर्मपदार्थविशेष्यकबोधबलात् चैत्रनिष्ठकर्तृत्वविशिष्टश्चैत्रनिष्ठोऽपरणिजर्थः प्रापणरूपव्यापारस्तेन निर्वाह्यत्वसम्बन्धेन विशिष्टम् अजापदार्थे विशेषणी भवत् आश्रयत्वे विशेषणतया भासते, तथा च—चैत्रनिष्ठप्रापणव्यापारनिर्वाह्या या ग्रामवृत्तिसंयोगाऽनुकूला क्रिया तादृशक्रियाऽनुकूलकर्तृत्वाश्रयवती अजा इति शाब्दबोधः। अजा ग्रामं याप्यते इत्यत्र स्वनिर्वाह्यकर्तृतानिरूपकत्वसम्बन्धेन व्यापारविशेषितो धात्वर्थः कर्तृत्वेऽन्वेति, तच्च आश्रयत्वसम्बन्धेनाऽजादौ विशेषणतया भासते, तादृशव्यापारे तृतीयान्तार्थस्य चैत्रादिकर्तृत्वस्य धात्वर्थैकदेशे संयोगादिरूपफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य विशेषणतया भानम्, ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवाऽर्थः, तत्र तस्य वृत्तिः क्लृप्ता, तच्च उक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते, तथा च—चैत्रवृत्तिकर्तृत्वनिरूपको यो णिजर्थव्यापारस्तादृशव्यापारेण स्वनिर्वाह्यकर्तृतानिरूपकतासम्बन्धेन विशिष्टो यो ग्रामवृत्तिसंयोगानुकूलगमनव्यापारस्तदनुकूलकृतिमती अजेति बोधः। चैत्रवृत्तिकर्तृत्वनिरूपकप्रापणव्यापारविशिष्टग्रामसंयोगानुकूलगमनानुकूलकृतिमती अजेति यावत्। ग्रामो याप्यते इत्यत्र यानादिव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः। अर्थो बोध्यते इत्यत्र ण्यर्थव्यापारजन्यज्ञानजन्यविषयत्वाश्रयोऽर्थ इति बोधः। चैत्रोऽजां ग्रामं यापयतीत्यत्र अजावृत्तिव्यापारानुकूलव्यापारवाँश्चैत्र इति बोधः। तण्डुलः सहायेन पाच्यते चैत्रेणेत्यत्र चैत्रकर्तृकणिजर्थव्यापारप्रयोज्यो यः सहायकर्तृपाकात्मकव्यापारस्तादृशव्यापारजन्यविक्लित्त्याश्रयस्तण्डुल इति बोधः। ग्रामं गच्छति चैत्र इत्यत्र ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावाँश्चैत्र इति बोधः। मल्लो मल्लं गच्छतीत्यत्र क्रियान्वयिकर्तृभेदप्रतियोगिता-

वच्छेदकत्वस्य द्वितीयार्थस्य धात्वर्थक्रियायामन्वयः, भेदः कर्तृनिष्ठसंयोगजनकक्रियावान्नेति, तत्प्रतियोगितावच्छेदिका क्रिया भेदश्च कर्तृभूतमल्ले फलशालिनि वर्तते इति प्रकृत्यर्थस्य कर्मभूतमल्लस्याऽऽधेयतासम्बन्धेन भेदेऽन्वयः,स्वनिष्ठभेदप्रतियोगिताऽवच्छेदकक्रियाफलशालित्वं कर्मत्वम्,तथा च—कर्तृमल्ले कर्ममल्लनिष्ठसंयोगजनकक्रियावान्नेति भेदो नास्त्येवेति कर्तृमल्लस्य कर्ममल्लनिष्ठसंयोगजनकक्रियाश्रयत्वात्, किन्तु तादृशभेदः कर्ममल्ले वर्तते, कर्ममल्लस्य स्थिरस्थितस्य क्रियाश्रयत्वाऽभावात्, इति कर्ममल्लवृत्तितादृशभेदप्रतियोगी क्रियावान् कर्ता मल्ल एव,कर्तृमल्लनिष्ठाया भेदप्रतियोगितायाया अवच्छेदिका कर्तृमल्लनिष्ठा कर्तृमल्लवृत्तिसंयोगजनिका सा क्रियैव, तादृशक्रियानन्यसंयोगाश्रयत्वेन कर्ममल्लस्य कर्मत्वसंभवात् 'मल्लो मल्लं गच्छती'ति प्रयोग उपपन्नः,तथा च स्वनिष्ठो यः क्रियान्वयिभेदस्तत्प्रतियोगितावच्छेदकक्रियानुकूलव्यापारानुकूलकृतिमान् मल्ल इति बोधः। अथ भूमिर्विहगेन गम्यते इत्यत्र आश्रयत्वम् आख्यातार्थः, विहगकर्तृकव्यापारजन्यसंयोगाश्रयो भूमिरिति बोधः। घटं जानातीत्यत्र घटनिष्ठविषयतानिरूपकज्ञानाश्रयो मोहन इतिबोधः। चैत्रेण ज्ञायते घट इत्यत्र चैत्रवृत्तिज्ञानविषयो घट इति बोधः। घटं पश्यतीत्यत्र घटविषयकप्रत्यक्षाश्रयश्चैव इति बोधः। घटो दृश्यते इत्यत्र चाक्षुषप्रत्यक्षनिरूपितविषयताश्रयो घट इति बोधः। पुरुषं जिघ्रतीत्यत्र घ्राधातोर्गन्धलौकिकप्रत्यक्षत्वं शक्यतावच्छेदकं द्वितीयाया आधेयत्वं तस्य गन्धे धात्वर्थैकदेशेऽन्वयः,पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानिति बोधः। पुष्पम् आघ्रायते इत्यत्र गन्धविषयितानिरूपकप्रकारत्वं कर्माख्यातार्थः, तस्याऽऽश्रयत्वेन पुष्पेऽन्वयः,तथा धात्वर्थविशेषणीभूतगन्धविषयितायाया अपि तादृशप्रकारत्वेऽन्वयः, तथा च—गन्धप्रत्यक्षनिरूपितप्रकारताश्रयः पुष्पमिति बोधः। यद्वा—पुष्पं जिघ्रतीत्यत्र पुष्पवृत्तिगन्धनिरूपितविषयिताश्रयप्रत्यक्षवांश्चैत्र इति बोधः। पुष्पमाघ्रायते इत्यत्र प्रत्यक्षनिष्ठगन्धनिरूपितविषयितानिरूपितविषयताश्रयः पुष्पमिति बोधः। खगो वृक्षं त्यजतीत्यत्र विभागावच्छिन्नक्रिया त्यजेरर्थः, द्वितीयाया विभागः,तथा च—वृक्षावधिक विभागवती या विभागावच्छिन्ना क्रिया तद्वान् खग इति बोधः। तृणं छिनत्तीत्यत्र आरम्भकसंयोगविरोधिविभागावच्छिन्नक्रिया छिदेरर्थः,तन्निष्ठे संयोगे विभागे वा स्वावयववृत्तित्वसम्बन्धेन तृणादेरन्वयः। तथा च तृणावयववृत्तिर्य आरम्भकसंयोगविरोधी विभागस्तदवच्छिन्नक्रियावानिति बोधः। पुष्पेण विष्णुं यजते इत्यत्र प्रीत्यवच्छिन्नसमन्त्रकद्रव्यत्यागो यजेरर्थः,प्रीतौ विष्णोराधेयत्वेन,द्रव्ये पुष्पादेरभेदेनाऽन्वयः। तथा च विष्णुनिष्ठप्रीतिहेतुर्यो मन्त्रकरणकः पुष्पाऽभिन्नद्रव्यत्यागस्तद्वान् इति बोधः। पितरमाराधयति उपास्ते पूजयतीत्यादौ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रिया धात्वर्थः, तदिष्ट्योः गौरवप्रीत्योः क्रमेण विषयत्वाऽऽधेयत्वाभ्यां पित्रादेरन्वयः, तथा च—पितृगोचरगौरवप्रयुक्ता या पितृनिष्ठप्रीतिहेतुक्रिया,तद्वानिति बोधः। गौरवं तु आराध्यत्वावगाही ज्ञानप्रभेदो भक्तिः, परमात्मानमुपास्ते इत्यत्र गौरवप्रयुक्तक्रियायां धातोर्लक्षणा,तथा च परमात्मगोचरगौरवप्रयुक्तक्रियावानिति बोधः। घृतं जुहोतीत्यत्र वह्न्यधिकरणकपतनावच्छिन्नमन्त्रकरणकक्रिया धात्वर्थः, पतने घृतस्य आधेयतयाऽन्वयः, तथा च अग्न्यधिकरणकस्य घृतवृत्तिपतनस्याऽनुकूलमन्त्रकरणकक्रियावानिति बोधः। धनं प्रतिगृह्णातीत्यत्र धननिष्ठो यः पुण्यार्थकदानजन्यस्वत्वजनकस्वीकारस्तद्वानिति बोधः। ग्रामं क्रीणातीत्यत्र मूल्यदानजन्यस्वत्वजनकः स्वीकारः,क्रयः, स्वत्वे ग्रामस्याऽऽधेयत्वेनाऽन्वयः,तथा च ग्रामनिष्ठो मूल्यदानजन्यस्वत्वानुकूलस्वीकारस्तद्वानिति बोधः। ग्रामनिष्ठं यत्स्वत्वं तदनुकूलमूल्यदाता वेति बोधः। ग्रामं विक्रीणातीत्यत्र मूल्यग्रहणजन्यस्य परस्वत्वस्याऽनुकूलत्यागः,परस्वत्वजनकमूल्यग्रहणमेव वा विक्रयः,तथा च ग्रामनिष्ठस्य मूल्यग्रहणजन्यपरस्वत्वस्याऽनुकूलो यो ग्रामस्य त्यागस्तद्वानिति,यद्वा—ग्रामनिष्ठं यत् परस्वत्वं तदनुकूलमूल्यग्रहणवानिति बोधः। नरकं पततीत्यत्र भोगावच्छिन्नं पातित्यं पतेरर्थः, तथा च नरकभोगानुकूलपातित्यवानिति बोधः'धनं लभते प्राप्नोतीत्यत्र स्वत्वावच्छिन्नो व्यापारो धात्वर्थः,तन्निविष्टे स्वत्वे धनादेराधेयत्वेना-

ऽन्वयः,तथा च धनवृत्तिर्यत् स्वत्वं तदवच्छिन्नव्यापारवानिति बोधः ॥

यद्धातूपस्थाप्ययद्धर्मावच्छिन्नविशेष्यकयादृशार्थप्रकारकशाब्दबोधजनिका द्वितीया विभक्तिः, तद्धर्मवत्त्वं तादृशधात्वर्थनिरूपितकर्मत्वम्,गां पयो दोग्धि गोप इत्यत्र दुहेर्मोचनानुकूलव्यापारोऽर्थः,मोचने गोराधेयत्वेन, पयसः कर्मत्वेनाऽन्वयात्,पयःकर्मताकं यद्गोवृत्ति मोचनं तदनुकूलव्यापारवान् गोप इतिबोधः। बहिःक्षरणावच्छिन्नव्यापारो मोचनं, तदनुकूलव्यापारो देहत्रयम्,अथ शिष्यं धर्मं वदति, वक्ति, ब्रूते, उपदिशति, आचष्टे इत्यत्र प्रतिपत्त्यवच्छिन्नव्यापारो वद्प्रभृतिधात्वर्थः,तन्निविष्टायां प्रतिपत्तौ शिष्यस्याऽऽधेयत्वेन,धर्मस्य विषयत्वेनाऽन्वयात् धर्मविषयिणी या शिष्यनिष्ठा प्रतिपत्तिस्तदनुकूलव्यापारवानिति बोधः। तादृशव्यापारो धर्मः सेव्यतामित्यादिको गुर्वभिलापः। अथ शत्रुं शतानि जयति ह्यत्र ग्रहणावच्छिन्नपराभवो जयत्यर्थः,शतस्य ग्रहणानुकूलो यः शत्रुकर्मकः पराभवस्तत्कर्तेति बोधः। पराभवस्तिरस्कारः॥ अथ प्रजाः शतं दण्डयतीत्यत्र ग्रहणावच्छिन्नशासनं दण्ड्यर्थः,शतग्रहणानुकूलं यत् प्रजानां शासनं तत्कर्तेति बोधः। शासनं नियन्त्रणम् ॥ अथ सुधां समुद्रं मथ्नातीत्यत्र उत्थानावच्छिन्नोन्मथनं धात्वर्थः,सुधोत्थानानुकूलं यत्समुद्रस्योन्मथनं तत्कर्तेत्यर्थः। उन्मथनम् आलोडनम्। अथ पान्थं पन्थानं पृच्छतीत्यत्र अभिधानावच्छिन्नव्यापारः पृच्छा, तथा च पान्थनिष्ठं यत्पथोऽभिधानं तदनुकूलव्यापारवानिति बोधः। अभिधानमिह।ऽभिलाषस्तदनुकूलव्यापारश्च, केन पथा गन्तव्यमिति प्रश्नः॥ अथ नृपमर्थं प्रार्थयते याचते भिक्षते इत्यादौ दानाय प्रेरणं धात्वर्थः,तथा च नृपनिष्ठयदर्थस्य दानं तत्प्रेरणावानित्यर्थः। प्रेरणा प्रवर्तना दीयतामित्यभिलाषा॥ अथ ग्राममजां वहतीत्यत्र गत्यवच्छिन्नव्यापारो वह्याद्यर्थः, तथा च ग्रामकर्मकं यदजानिष्ठं गमनं तदनुकूलव्यापारवानिति बोधः। तादृशो व्यापारोऽत्र गलरज्ज्वाकर्षणादिः॥ अथ पुत्रं धर्ममनुशास्तीत्यत्राऽनुशासनं देशना प्रवर्तना,तथा च—पुत्रनिष्ठस्य देशनया प्रवर्तनस्याऽनुकूलव्यापारवानिति बोधः। तथाविधो व्यापारः—सन्ध्यां विधेहि समिधमाधेहीत्याद्युपदेशः॥ अथ—शाखां ग्राममाकर्षतीत्यत्र गतिहेतुविकर्षणं धात्वर्थः, तेन ग्रामकर्मकं यच्छाखागमनं तदनुकूलविकर्षणवानिति बोधः, विकर्षणं नम्रीकरणम्॥ अथ गां व्रजमवरुणद्धीत्यत्र गतिप्रतिरोधहेत्वावरणमवरुधेरर्थः, तेन गोगतिप्रतिरोधस्याऽनुकूलं यत् व्रजस्याऽऽवरणं तत्कृतिमानित्यन्वयः॥ वृक्षं फलानि अवचिनोतीत्यत्र छिदाहेतुर्विघट्टनं चिनोतेरर्थः,तथा च फलकर्मकच्छिदानुकूलं यद् वृक्षस्य विघट्टनं चालनं तद्वानित्येव बोधः। अथ गोपान् गमयति, द्विजान् भोजयति, गुरून् अनुज्ञापयति, शिष्यान् पाठयति,सुतान् स्नापयति इत्यादौ, मूलधात्वर्थस्य कर्तृत्वलक्षणं गौणमेव कर्मत्वं द्वितीयार्थः। तथा च—गोपकर्तृकमत्यनुकूलव्यापारवानिति बोधः। पुत्रान् प्रीतिं प्रापयतीत्यादौ प्राप्तिर्न गतिः, चैत्रो ग्रामं भावयते, ग्रामस्य भावकः, इत्यादौ प्राप्त्यर्थस्य भवतेः स्वार्थविहितण्यन्तस्य कर्तुः कर्मतानिरासाय णिचो हेतुविहितत्वम्। पुत्रकर्तृकप्रीतिभवनानुकूलव्यापारवान् पितेति बोधः। ग्रामनिष्ठभवनानुकूलव्यापारहेतुश्चैत्रः, चैत्रजन्यभवनव्यापाराश्रितो, ग्राम इत्यर्थः। भक्षयति मूषकान् मार्जारम्, भक्षयति लतां छागम्, इत्यादौ भक्षेः कर्तरि कर्मता, मार्जारकर्तृकमूषकभक्षणानुकूलव्यापारहेतुश्चैत्रः, चैत्रजन्यो मूषकभक्षणानुकूलो व्यापारस्तद्वान् मार्जारः। छागकर्तृकलताभक्षणानुकूलव्यापारहेतुर्गोपालः। भक्षयत्योदनं भृत्येन स्वामी, भक्षयति प्रजाः परिजनैः कुनृपः, इत्यादौ भृत्यकर्तृकौदनभक्षणानुकूलव्यापारजनकः स्वामी, परिजनकर्तृकप्रजाहिंसानुकूलव्यापारजनकः कुनृपः। वाहयति रथम् अश्वान् सारथिः, वाहयति गोणीं वृषभान् वाहिकः, इत्यादौ अश्वकर्तृकरथवहनव्यापारजनकः सारथिः वृषभकर्तृकगोणीवहनव्यापारजनको वाहिकः। वाहयति भारं भृत्येन घनिकः, इत्यत्र भृत्यकर्तृकभारवहनचेष्टाव्यापारजनको धनिकः। हारयति कारयति वा पटं कुविन्देन नृपः, इत्यत्र कुविन्दकर्तृकपटाऽऽहरणरचनाऽन्यतरचेष्टाव्यापारजनको राजा अभ्यवहारयत्योदनं तनयं तनयेन वा जननीत्यत्र तनयकर्तृकौदनाऽभ्यवहारानुकूल-

व्यापारजनिका माता। विकारयति चित्तं चित्तेन वा वसन्तः, इत्यत्र चित्तगतविकारप्रयोजको वसन्तः। गुरुम् अभिवादयते सुतं सुतेन वा गृहस्थः, इत्यत्र सुतकर्तृकगुरुविषयकाऽभिवादनकारको गृहस्थः। ध्रुवं दर्शयते भार्यां भार्यया वा पतिरित्यत्र दृशेः प्राप्तौ विधिः,भार्याकर्तृकध्रुवदर्शनानुकूलव्यापारजनकः पतिः। पन्थानं पथिकं दर्शयति,पुत्रेण मित्रम् अभिवादयति,इत्यादौ तु पथिककर्तृकपथदर्शनानुकूलव्यापारजनको जनः' पुत्रकर्तृकमित्रगोचराभिवादनाकूलव्यापारजनकः पिता। छात्रेणाऽर्थं निर्णाययति, चैत्रेण ओदनं खादयति, शंखेन शब्दाययति,दारैः क्रन्दयति,पुत्रेण मित्रमाह्वाययति,इत्यादौ नीप्रभृतीनां बुद्धयाद्यर्थकत्वेन प्रसक्तमपि कर्मत्वं कर्तुः निषिध्यते। छात्रकर्तृकार्थविषयकनिर्णयानुकूलव्यापारजनको गुरुः, इत्यादिरर्थः। चैत्रेणाऽर्थं निर्णायमाणस्तिष्ठति, मैत्रेण पूगं खाद्यमानो ब्रूते, इत्यादौ कर्मविहितस्य शानजादेरूपपत्तिः॥ अथ सुखं प्राप्नोतीत्यत्र प्राप्तिरुत्पत्तिः स्वाश्रयाश्रयत्वेन तदाश्रयत्वं तिङर्थः, सुखोत्पत्त्यनुकूलव्यापारवान्। घटं जानातीत्यत्र घटविषयकज्ञानाश्रयः। वह्निम् अनुमिनोमि आपादयामीत्यत्र विधेयता द्वितीयार्थः, घटं पश्यति शब्दं शृणोति विषयम् अनुभवतीत्यादौ विषयत्वं कर्मत्वम्, आकाशं न पश्यतीत्यत्र आकाशविषयकाऽदर्शनवान् आकाशभिन्नयोग्यदर्शनवान्। तण्डुलपाकं करोतीत्यत्र चिकीर्षाजन्यपाकक्रियोद्देश्यकविषयता द्वितीयार्थः कृतौ भासते। मासं जीवति, क्रोशं स्वपिति, गोदोहं तिष्ठति, कुरून् क्रीडति, इत्यादौ त्वधिकरणत्वरूपं गौणं करणत्वं सुपाऽनुभाव्यते। मासश्चैत्रेण जीव्यते जीवित इत्यादौ कर्मतार्थकतिङादयः। मासाधिकरणताकजीवनवांश्चैत्रः, चैत्रकर्तृकजीवनाधिकरणतावान् मासः। दिवसं सुप्यते सुन्दरीभिः, तत्सेनया क्रोशं स्थितम्, इत्यादौ द्वितीयया कालाध्वनोरभिव्याप्तिर्बोध्यते न त्वधिकरणत्वम्। जीवज्जनपदः शय्यामधिशेतेऽध्यास्तेऽधितिष्ठतीत्यादौ अधिकरणत्वमेव कर्मत्वं द्वितीयार्थः। काशीम् अनुवसति, काश्यनूष्यते,-इत्यादावधिकरणत्वं द्वितीयार्थः। शय्यामुपवसतीत्यत्र निवासाधारत्वमेव कर्मत्वम्। अथाऽऽकाशं न पश्यति चैत्र इत्यत्र चैत्रवृत्तित्वाकाशविषयकत्वोभयाभावविशिष्टत्वम् अलौकिकविषयताशून्यं चाक्षुषप्रत्यक्षमिति विलक्षणो बोधः। आकाशनिरूपितत्वाऽभाववल्लौकिकविषयताशालिचाक्षुषाश्रयत्वाभाववांश्चैत्र इत्यपि वा बोधः॥

अनुमित्याद्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा, उद्देश्यत्वम् उद्देश्यित्वं वा, द्वितीयार्थः। वह्निमत्त्वेन पर्वतम् अनुमिनोतीत्यत्रोद्देश्यत्वस्य तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वविशिष्टेऽन्वयः, यदा पर्वतनिष्ठोद्देश्यतानिरूपकवह्निविधेयकाऽनुमितिवानिति बोधः। यद्वा–पर्वतनिरूपितोद्देश्यित्वाश्रयानुमित्याश्रयश्चैत्र इति बोधः। पर्वते वह्निमनुमिनोति चैत्र इत्यत्र विधेयत्वं चेद् द्वितीयार्थः, यत्र प्रकृत्यर्थस्याऽऽधेयतयाऽन्वयः, तस्य प्रकृत्यर्थे निष्ठत्वेन आश्रयत्वेन अन्वयः, द्वितीयार्थविधेयत्वस्य धात्वर्थेऽनुमितौ च निरूपकत्वसम्बन्धेनाऽन्वयः, आख्यातस्याऽऽश्रयत्वम् अर्थः, तथा च–वह्निनिष्ठविधेयतानिरूपकानुमित्याश्रयश्चैत्र इति शाब्दबोधः। रजतत्वेन शुक्तिं जानातीत्यत्र तृतीयान्तार्थस्य रजतत्वप्रकारकत्वस्य द्वितीयान्तार्थे शुक्तिविशेष्यकत्वे अवच्छेद्याऽवच्छेदकभावेनाऽन्वयः, तथा च रजतत्वप्रकारकत्वावच्छिन्नं यत् शुक्तिविशेष्यकत्वं तद्विशिष्टज्ञानाश्रयश्चैत्र इति बोधः। रजतत्वेनेदं ज्ञायते इत्यत्र रजतत्वप्रकारकत्वस्य धात्वर्थज्ञानेऽन्वयः, तादृशविशिष्टज्ञाननिरूपितत्वम् आख्यातार्थविषयतायां भासते, तथा च–रजतत्वप्रकारकज्ञाननिरूपितविशेष्यतावदिदमिति बोधः। घटत्वेन वह्निर्नास्तीत्यत्र अनुयोगितासम्बन्धेन वह्निविशिष्टाऽभावे तृतीयान्तार्थस्य घटत्वाऽवच्छिन्नप्रतियोगिताकत्वस्य वैशिष्टचभानम्, तथा च घटत्वावच्छिन्नप्रतियोगिताकत्वविशिष्टो योऽनुयोगितासम्बन्धेन वह्निविशिष्टोऽभाव इत्यर्थः। रङ्गं रजतं जानातीत्यत्र तादात्म्यावच्छिन्नरजतप्रकारकं रङ्गविशेष्यकं यज्ज्ञानं तदाश्रय इति बोधः। रङ्गं रजतं जानातीत्यत्र रजतपदस्य रजताऽभेदज्ञानविषये लक्षणा, तथा च-रंगविशेष्यक–रजताऽभेदज्ञानविषयत्वप्रकारकज्ञानवानिति बोधः। लोहितवह्निं जानातीत्यत्र लोहितपदस्य लोहिताऽभेदज्ञानविषये लक्षणा, लोहिताऽभेदज्ञानविषयवह्निज्ञानवानिति बोधः। लोहितो वह्निर्ज्ञायते इत्यत्र प्रकारितासम्बन्धेन

लोहितविशिष्टज्ञानविषयताश्रयो वह्निरिति बोधः। वृक्षः पञ्च नौका भवतीत्यत्र नौकापदस्य वृक्षाऽऽरम्भकाऽवयवाऽऽरम्य नौकार्थे लक्षणा, वृक्षनौकोभयसाधारणधर्मः स्वारम्भकावयवाऽऽरम्यत्वं, तथा च–पञ्चनौकाश्रयाऽसाधारणधर्माश्रयो वृक्ष इति बोधः। एको द्वौ ज्ञायते इत्यत्र एकपदार्थस्य आरोपविषयस्य आख्यातार्थविशेष्यताऽन्वये विशेष्यत्वात्,आरोपविषयः उभयाऽभेदाऽऽरोपज्ञानीयविशेष्यतावानित्यर्थः। 'अमानि तत् तेन निजाऽयशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्' इत्यत्र अयशोयुगम् आरोपविषयम्, तत्र द्विफालवद्धचिकुरभागद्वयत्वम् आरोप्यते, निजाऽयशोद्वयं द्विफालवद्धचिकुराऽऽरोपज्ञानीयविशेष्यताकं शिरोवृत्तीति तद्भ्रमीयविषयिताकमतिमानिति बोधः। इच्छार्थकधातुस्थले मुख्यविशेष्यत्वं कर्मत्वं द्वितीयार्थः, वृष्टिसाध्यं सुखं भवत्वितीच्छामुख्यविशेष्यं सुखम्, अतो वृष्ट्या सुखमिच्छतीत्यत्र वृष्टिसाध्यसुखविशेष्यकेच्छाश्रय इति बोधः। अहं सुखी स्यामित्यत्र कादाचित्कस्ववृत्तिसुखविषयकेच्छावानहमिति बोधः। मम सुखं भवत्वित्यत्र कादाचित्कमन्निष्ठभवनस्वगोचरेच्छाविशेष्यं सुखमित्यर्थः॥

पाकं चिकीर्षतीत्यत्र विशेष्यतात्मकं कर्मत्वं द्वितीयार्थः, चिकीर्षा कृतिप्रकारकविशेष्यकेच्छा 'पाकं कृत्या साधयामी'-ति, विशेष्यताया पाकेऽन्वयः, सन्प्रकृतिभूतकरोत्यर्थकृतौ प्रकारता प्राप्ता, तथा च कृतिप्रकारकपाकविशेष्यकेच्छाश्रयश्चैत्र इत्यर्थबोधः। यद्वा—कर्तुमिच्छा चिकीर्षा, सन्नर्थेच्छाविशेष्यता धात्वर्थे कृतौ, करोत्यर्थकृतिविशेष्यकेच्छा चिकीर्षापदार्थः, पाककृतिर्भवत्विति चिकीर्षा, तथा च पाकं चिकीर्षतीत्यत्र पाककृतिविशेष्यकेच्छाश्रयश्चैत्र इति बोधः। सन्प्रत्ययो धात्वर्थविशेष्यकेच्छाबोधकः, न तु प्रकृतिभूतधात्वर्थप्रकारकपाकौदनादिविशेष्यकेच्छावाचकः। भोजनमुद्दिश्यौदनमिष्यते यत्र तत्र ओदनं बुभुक्षते इति प्रयोगः साधुः, भोजनं भवत्वितीच्छादशायां सर्वसिद्धः। पाकं चिकीर्षतीत्यत्र कर्तृप्रत्ययस्थले पाकादिकर्मककृत्यादिविषयकेच्छाश्रय इति बोधः। अत्र इच्छाविषयत्वं धात्वर्थकृत्यादिकर्मत्वं पाकादेः द्वितीयया प्रत्याय्यते। पाकश्चिकीर्ष्यते इत्यत्र कर्मप्रत्ययस्थले सन्नर्थेच्छायाः सन्प्रकृतिभूतधात्वर्थे विशेषणतया भानं, तथा च–इच्छाविषयीभूतकृतिविषयः पाकः इति बोधः॥ अथ कर्मप्रत्ययस्थलेऽपि सन्प्रत्ययेन धात्वर्थविशेष्यतया इच्छा प्रत्याय्यते, तत्कर्मत्वं कर्माऽऽख्यातार्थः तद्विषयत्वमर्थः, ओदनकर्मकभोजनं भवतु, पाकविषयककृतिर्भवतु,–इतीच्छा। अयमोदनो बुभुक्ष्यते, गगनं दिदृक्ष्यते, इत्यत्र भोजनकर्मत्वेनेच्छाविषय ओदनः, दर्शनकर्मत्वेनेच्छाविषयं गगनमिति बोधः। दर्शनकर्मत्वाऽसंभवेऽपि दर्शनेच्छाविषयत्वस्य संभवात्। विषं बुभुक्ष्यते इत्यत्रापि भक्षणकर्मत्वेनेच्छाविषयं विषमित्यर्थः। सर्वत्र सनः इच्छामात्रे शक्तिरस्त्येव॥

अथ सुबन्तोत्तरेच्छाविहितक्यच्काम्यजन्तस्य धातोरिच्छार्थकत्वे 'आत्मनः पुत्रमिच्छति पुत्रीयति पुत्रकाम्यतीत्यादौ क्यजादिप्रत्ययान्तस्य कर्माकांक्षाया अभावात् अन्तर्गतपुत्रादेः कर्माऽऽकांक्षत्वात् 'आत्मानं पुत्रीयती'-ति न प्रयोगः, किन्तु पुत्रीयतीत्यादिरेव। आत्मनः पाकमिच्छति पाकीयति, तण्डुलस्य पाकीयतीतिप्रयोगः साधुः, षष्ठी कर्मत्वार्था, तण्डुलस्य वृत्त्येकदेशेन पाकेन भेदाऽन्वयः। पितुः स्वर्गकाम इत्यत्र समासवृत्त्येकदेशे स्वर्गेऽकारकस्याऽपि पितृपदस्य भेदेनाऽन्वयः। पित्रुद्देश्यकस्वर्गकामनावानिति तदर्थः। भृत्यं पुत्रीयतीति पुत्रतुल्यं जानातीत्यत्र तुल्यत्वे सादृश्ये प्रतियोगितया पुत्रस्याऽन्वयः, उपमानवाचकपुत्रपदम्, आचारपदस्य व्यवहारकारणीभूतज्ञाने लक्षणा, क्यजर्थज्ञानस्य सकर्मकत्वेन क्यजन्तस्यापि सकर्मकत्वम्। यद्वा–पुत्रपदं गौण्या लक्षणया पुत्रतुल्यपरम्, क्यजर्थो ज्ञानमात्रं, तत्र स्वाऽभेदाऽवगाहित्वसम्बन्धेन पुत्रतुल्यस्याऽन्वयः। भृत्यकर्मकं पुत्रप्रतियोगिकं व्यवहारकारणीभूतं यत् सादृश्यज्ञानं तद्वानित्यर्थः। ,स्वाऽभेदाऽवगाहित्वसम्बन्धेन यत्पुत्रतुल्यकं भृत्यगोचरं ज्ञानं तद्वानित्यर्थः। वस्तुतः पुत्रमिवाऽऽचरतीत्यत्र पुत्रवद्व्यवहरतीत्यर्थः। व्यवहारो ज्ञानं पालनव्यापारो वा, तथा च–पुत्रकर्मकव्यवहारतुल्यव्यवहारकर्तेत्यर्थः। कुटचाम् प्रासादयतीत्यत्र प्रासादाधिकरणकाचारतुल्याचारः क्यजन्तार्थः अवस्थानम् अकर्मकः, कुटीशब्दोत्तराऽधिकरणार्थे सप्तमी, साम्यं तु अविशेषज्ञानविषयत्वेन एकजातीयसुखजनकत्वेन वा,कुटचधि-

करणको यः प्रासादाधिकरणकाचारतुल्य आचारस्तत्कर्तेति बोधः। हंस इव आचरतीति हंसायते इत्यत्र हंसकर्तृकगमनादिरूपाऽऽचारसदृशाचारकर्तेत्यर्थः। हंस इव शब्दं करोति हंसायते हंसति इत्यत्र शब्द एवाचारः, हंसकर्तृकशब्दाचारतुल्याचारगोचरशब्दकर्तेत्यर्थः। पण्डितज्ञानमिव ज्ञानं करोतीत्यर्थे पण्डितं इवाचरतीति पण्डितायते पण्डितति, विद्वायते विद्वस्यते, इत्यादौ पण्डितादिकर्तृकात्मादिविषयकज्ञानतुल्यज्ञानकर्तेत्यर्थः॥

कृत्यर्थकधातुयोगे इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयताविशेष एव कर्मत्वं द्वितीयार्थः, घटं करोत्यत्र घटनिष्ठा या इष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयता तन्निरूपककृतिमानिति बोधः। काशात् कटं करोतीत्यत्र काशोपादानकविषयताविशिष्टा या कटीयसाध्यताख्यविषयताविशिष्टा च कृतिस्तद्वानिति बोधः। काष्ठं भस्म करोति, दुग्धं दधि करोति, इत्यत्र काष्ठदुग्धनाशानन्तरं तदारम्भकपरमाणुभिः भस्मदधिजननादपि न कर्मत्वानुपपत्तिः, कर्म त्रेधा—प्राप्यं प्राकृति विकृति चेति, तत्र प्राप्यं क्रियाजन्यफलशालि कर्म ग्रामादि, क्रियानिष्पाद्यं प्रकृतिविकृतिरूपं द्वेधा पाकादेरोदनादि। कृतेर्माल्यादि च काष्ठं भस्म करोतीत्यत्र निर्वर्त्यं कर्म, भस्म, पूर्वम् असद्वा सूक्ष्मं पश्चात् सद्वा स्थूलं रूपान्तरं तन्निर्वर्त्यम्, काष्ठस्य भस्म विकार्यं कर्म ओदनवत्। सुवर्णकुण्डलादि विकार्यम्, कटमाल्यादि विकार्यम्, उद्देश्यतावच्छेदकतण्डुलाद्यपगम ओदनस्य उत्पत्तिप्रयोजकः, दुग्धस्य दधि विकार्यं कर्म, द्वयणुकपर्यन्तभंगे नवीनोत्पत्तिः, यद्वा स्थूलावयविन्यपि पाकात् रसादिविकार्यता विलक्षणतेजः संयोगात्। क्वचित् प्रकृतिविकृत्युभयसाधारणं पारिभाषिकं विकार्यं कर्म सुवर्णस्य कुण्डलादि। सुवर्णनिष्ठविषयताविशिष्टा या कुण्डलादिनिष्ठसाध्यविषयताविशिष्टा च कृतिः तद्वान् सुवर्णं कुण्डलं करोतीत्यस्यार्थः। काष्ठविषयत्वविशिष्टा या भस्मनिष्ठसाध्यविषयताविशिष्टा च कृतिस्तद्वान्, दुग्धविषयताविशिष्टा या दधिनिष्ठसाध्यविषयताविशिष्टा च कृतिस्तद्वान् इत्यर्थः। यद्वा—पूर्वप्रकृतिनाशकत्वं प्रकृतिद्वितीयार्थः, कृतावन्वेति, विकृतिकर्मोत्तरद्वितीयार्थो विषयत्वं वोत्पादकत्वं तदुभयं वा कृतौ बोध्यते। मौक्तिकानि स्रजं करोतीत्यत्र मौक्तिकनिष्ठविषयताविशिष्टा या स्रङ्निष्ठसाध्यविषयताविशिष्टा कृतिस्तद्वानित्यर्थः। पुष्पाणि एव सुक्लृप्ताकाराणि स्रक् न तु उपादानानि। कुसुमनिर्वाह्या विन्यासविशेषविशिष्टकुसुमनिर्वाहिका कृतिरिति बोधः। मृत्पिण्डं घटं करोतीत्यत्र तूपादानं पिण्डः, तद्विकार्योत्पाद्यो घटः इति। अग्निः श्यामं रक्तं करोतीत्यत्र श्यामविशिष्टोच्छेदकत्वं द्वितीयान्तार्थः, श्यामादिरूपविशिष्टाद्युच्छेदको यो रक्तजनको व्यापारस्तद्वानग्निरिति बोधः। काष्ठानि भस्मराशिः क्रियन्ते इत्यत्र कर्माख्यातेन प्रकृतेः कर्मत्वं प्रत्याय्यतेऽत आख्यातार्थविशेष्यता काष्ठेस्विति समानवचनत्वात्, काष्ठोच्छेदकत्वविशिष्टो यो भस्मराशिनिर्वर्तकत्वविशिष्टो यश्च व्यापारस्तद्वानिति बोधः। अर्घो नमः इत्यत्र नमःपदार्थे त्यागे प्रदाने कर्मतासम्बन्धेन अर्घपदार्थाऽन्वयः, अर्घकर्मकस्त्याग इति मन्त्रार्थः। भूतले न घट इत्यत्र नञर्थाऽभावे घटप्रतियोगिकत्वत्वात्मकसम्बन्धस्य संसर्गतया भूतलवृत्तिघटप्रतियोगिकसंसर्गावच्छिन्नाऽऽभाव इत्यर्थः। काष्ठं भस्म क्रियते इत्यत्र चैत्रादिवृत्तिव्यापारजन्यभस्मरूपविकाराश्रयः काष्ठमिति बोधः। काष्ठं भस्म भवतीत्यत्र भस्मानुकूलभवनव्यापाराश्रयः काष्ठमिति बोधः। काष्ठेन भस्मना भूयते इत्यत्र भस्मपदोत्तरतृतीयोपस्थाप्यं भस्माधेयत्वं प्रकारतया भासते, नाशप्रतियोगित्वे काष्ठाधेयत्वं तृतीयार्थः प्रकारतया भासते, धात्वर्थो भवनम् उत्पत्त्यनुकूलव्यापारः, नाशप्रतियोगि काष्ठं भस्मोत्पत्त्यनुकूलव्यापारवदित्यर्थः। स्थलीमधिशेते इत्यत्र भूपृष्ठसंयोगो धात्वर्थः, अधिकरणं द्वितीयार्थः। स्थलीवृत्तिविलक्षणाङ्गसंयोगरूपशयनानुकूलव्यापाराश्रय इति बोधः। मासमधीते, मासमास्ते, योजनं धावतीत्यादौ, त्रिंशद्दिनव्यापकाऽध्ययनकर्ता चैत्रः, त्रिंशद्दिनव्यापकोपवेशनकर्ता चैत्रः, योजनोपलक्षितप्रदेशव्याप्तधावनानुकूलव्यापारानुकूलकृतिमांश्चैत्रः, व्यापकत्वं सर्वत्र तत्तदाकांक्षितसम्बन्धावच्छिन्नतत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, व्याप्यत्वं तदभाववदवृत्तितानवच्छेदक-

धर्मवत्त्वं यथायथं सम्बन्धधर्मादिघटितम्। अवच्छेदकत्वम् अनतिरिक्तवृत्तित्वरूपम्, यद्वा—यथापेक्षं स्वरूपसम्बन्धरूपम्, यद्वा—मासमधीते इत्यत्राऽधिकरणता द्वितीयार्थः, तत्र तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतापन्नतत्तन्मासत्वादिव्यक्तीनां व्यापकतासम्बन्धेन स्वपारतन्त्र्येण विशेषणमुपेयते, व्यापकत्वं स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसम्बन्धेन स्वावच्छिन्नस्य यो भेदस्तदाश्रयधर्मवत्त्वं, तादृशधर्मोऽत्र चैत्रीयाऽध्ययनाद्याधारत्वं विशेष्यैव सम्बन्धकोटौ प्रवेशनीयः, तत्तन्मासत्वसमानाधिकरणाऽभावप्रतियोगितानवच्छेदके अध्ययनाऽधिकरणतात्वे स्वसमानाधिकरणेत्यादिप्रोक्तसम्बन्धे न तत्तन्मासत्वाद्यवच्छिन्नभेदाश्रयत्ववत्त्वं वर्तते, उक्तव्यापकत्वसम्बन्धेन तत्तन्मासत्वविशिष्टायाऽधिकरणता तन्निरूपकं यदध्ययनं तदनुकूलकृतिमाँश्चैत्र इति बोधः। प्रतिमासमधीते इति यद्वा विवक्षिताऽनेकमासेषु अध्ययनं तदा प्रयोगः साधुः। प्रत्यादेः मासोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिमन्निष्ठाऽभावप्रतियोगितावच्छेदकत्वसामान्याऽभावघटितव्यापकताबोधकत्वात्॥ उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुह्वतीत्यत्र मासव्यापकस्य मासाधिककालकृतहोमस्यैतद्विध्यर्थत्वाऽभावेन तद्वारणार्थमेकपदम्, आहुतिविशेषा उपसदः, अव्यवहितोत्तरत्वसम्बन्धेन विधेयता, सतिलव्रीहिचरुरूपद्रव्यम्, तत्तन्मन्त्रविशिष्टोपसच्चरुकरणकत्वविशिष्टहोमाऽव्यवहितोत्तरकालीनो यः तत्तन्मासत्वव्यापकतदितरमासत्वोऽव्यापको यः अग्निहोत्रकर्माऽनुष्ठानविषयकहोमस्तद्वानित्यर्थः। यावज्जीवमग्निहोत्रं जुहोतीति तु मासव्याप्ताग्निहोत्रकर्मभिन्नमेव कर्म, तथा च—यावज्जीवनव्यापकनित्यनियतकालीनाऽग्निहोत्रकर्मकहोमानुकूलव्यापारवानिति बोधः। मासमधीते इत्यत्र द्वितीयाऽर्थोऽध्ययनाधारत्वम्, तत्र मासत्वस्य व्यापकतासम्बन्धेनाऽन्वयः, व्यापकत्वं चाऽनुगतधर्मावच्छिन्नस्य व्यापकत्वं बोध्यम्, अनुगतधर्मश्च तत्तन्मासत्वादिव्यक्तिविशेषः, तस्य व्यापकतावच्छेदकधर्मः चैत्रादिकर्तृकाऽध्ययनाऽधिकरणतात्वधर्मः, तस्य अनुगतरूपेण विभिन्नपुरुषकर्तृकाऽध्ययनाऽधिकरणताद्वयाऽवृत्तित्वचैत्रकर्तृकाध्ययनाधिकरणतामात्रवृत्तित्वरूपेणाऽनुगतेनाऽनुगमः, तादृशाऽनुगतधर्मावच्छिन्नव्यापकत्वं संसर्गकोटौ प्रविष्टम्, तथा च मासत्वव्यापकाऽध्ययनकर्त्तेति बोधः। मासमधीयानो दृष्ट इत्यत्र भूतकालीनतन्मासत्वव्यापकाऽऽचर्यमाणाऽध्ययनव्यापारविशिष्टो दर्शनविषय इत्यर्थः। दण्डं विना न घट उत्पद्यते इत्यत्र विनापदार्थो भाववान्, प्रतियोगित्वम् अनुयोगित्वं वा द्वितीयार्थोऽभावान्वयि, अभाववत् अधारत्वेन उत्पत्तावन्वयः, तथा च दण्डाभाववद्वृत्त्युत्पत्तिकत्वाऽभाववान् घट इति बोधः। रासभं विनाऽपि घट उत्पद्यते इत्यत्र रासभाऽभाववद्वृत्त्युत्पत्तिको घट इति बोधः। विना वातं वृक्षः पतित इत्यत्र वातप्रतियोगिकाऽभावविशिष्टः वृक्षकर्तृकं पतनमित्यर्थः। चन्द्रं इव मुखमित्यत्र चन्द्रप्रतियोगिकसादृश्यवन्मुखमित्यर्थः। पुत्रं विना गत इत्यत्र पुत्रगमनाऽभावसमानकालीनत्वसम्बन्धेन पुत्रगमनाऽभावविशिष्टं पितृगमनमित्यर्थः। यद्वा विनाऽर्थः असाहित्यम्, पुत्रसाहित्याभावविशिष्टो गत इत्यर्थः। असाहित्यं च स्वकर्तृकसमभिव्याहृतगमनादिक्रियासमानकालीनतादृशक्रियाकर्तृत्वरूपसाहित्याऽभावः, क्रियान्वयिस्वकर्तृकतादृशक्रियाकालीनत्वाऽभावो वा, पुत्रस्य कर्तृत्वेऽन्वयः, विभक्तिः साधुत्वार्था पुत्राद्विना गत इत्यत्रापि पुत्रगमनाभावविशिष्टं पितृगमनमर्थः॥

मर्यादार्थकयावच्छब्दयोगेऽपि द्वितीया, आश्विनकृष्णनवम्यां पूजामारभ्याऽऽश्विनशुक्लदशमीं यावत् (दशमीं विना) शिवां प्रपूजयेदित्यर्थे, मर्यादा देशसीमा कालसीमा च, कालसीमात्वं समभिव्याहृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वं, यावत्पदेन पूजात्मकक्रियायां शुक्लदशमीनिष्ठसीमात्वं निरूपकत्वं प्रत्याय्यते, निरूपकत्वं च तदवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम्, तावता षोडशतिथ्यधिकरणकषोडशपूजात्मकैककर्मा विधेयतया लाभः, तिथिरखण्डकालरूपा। अत्र यावत्पदार्थः प्रागभावः, द्वितीयाऽर्थोऽनुयोगित्वं प्रतियोगित्वं वा, तत्र तत्प्रकृत्यर्थदशम्या अन्वयः, तावता दशमीप्रति-

योगिकप्रागभावलाभः, तस्य स्वप्रतियोग्यवृत्तित्व-विशिष्टव्यापकतासम्बन्धेन पूजारूपसमभिव्याहृत-क्रियायामन्वयः, व्यापकत्वं च स्वाधिकरणतिथि-निष्ठाऽभावप्रतियोगितानवच्छेदकपूजाविशेष्यत्ववत्त्वम्, स्वाधिकरणत्वं च स्वाधिकरणकृष्णनवमीप्रागभावा-वच्छिन्नभेदविशिष्टकालिकविशेषणतासम्बन्धेन। दशमी-प्रागभावाधिकरणत्वविशिष्टकृष्णनवमीप्रागभावाऽधि-करणत्वं चाभिप्रेतषोडशतिथिष्वेव, तत्र पूजायां तादृशतिथिकूटव्यापकत्वमिति। तिथौ पूजाधिकरण-माससम्बन्धिन्यौ। 'आरभ्य तस्यां दशमी तु यावत् प्रपूजयेत्पर्वतराजपुत्रीम्' इत्यत्र पर्वतराजपुत्र्युद्देश्य-कम् आश्विनकृष्णनवमीप्रागभावाऽनधिकरणत्व-विशिष्टशुक्लदशमीप्रागभावाधिकरणत्वविशिष्टसमय-व्यापकपूजात्मकक्रियाविधानवानिति शाब्दबोधः। 'कार्तिकमारभ्य चैत्रं यावच्छीतं भवती'-त्यत्र अभि-विध्यर्थो यावच्छब्दः, तद्योगे द्वितीया, कार्तिकशुक्ल-प्रतिपत्प्रागभावाऽसमानाधिकरणचैत्रप्रागभावविशिष्ट-समयव्यापकशीतभवनतावत् शीतमिति बोधः। 'काशीतः पाटलिपुत्रं यावद् वृष्टो देवः' इत्यत्र काशी-पश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशाऽवृत्तित्वसहितं वृष्टौ यावत्पदेन प्रत्याय्यते, तथा च काशीपश्चिमदेशपूर्वत्वविशिष्ट-पाटलिपुत्रपूर्वदेशाऽवृत्तित्वविशिष्टदेशव्यापकदेववर्षण-मित्यर्थः। यज्ञम् अनु प्रावर्षत् इत्यत्र अनुशब्दार्थः कारकत्वरूपं हेतुत्वम्, आधेयत्वं द्वितीयार्थः, यज्ञ-निष्ठा या वृष्टिहेतुता तन्निरूपिका वृष्टिरिति बोधः। यज्ञनिरूपितजन्यतावती वृष्टिरित्यर्थो वा। अन्वर्जुनं योद्धार इत्यत्र अपकर्षरूपं हीनत्वम् अनुशब्दार्थः, अर्जुनाऽवधिकत्वं द्वितीयान्तार्थस्तस्य चाऽपकर्षेऽन्वयः, तथा च अर्जुनाऽवधिकाऽपकर्षवन्तो योद्धार इत्यर्थः॥ अथ देशरूपा सीमा काशीतः कौशिकीं यावद यातीत्यादौ कौशिक्या गमनसीमात्वं प्रतीयते, तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्व-म्; यावत्पदेन च कौशिक्यनधिकरणत्वविशिष्ट-काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्या-य्यते, तत्र द्वितीयार्थोऽवधित्वम् अवधिमत्त्वं वा प्रती-त्याद्यन्वयि, कौशिक्यनधिकरणत्वविशिष्टकाशीपूर्व-कौशिकीपश्चिमदेशव्यापकगमनाऽनुकूलव्यापारवानिति बोधः। वृक्षं प्रति विद्योतते विद्युत् इत्यत्र प्रत्यादि-कर्मप्रवचनीयार्थः परिचायकत्वं वृक्षे वर्तते, वृत्तित्वं द्वितीयार्थः, वृक्षप्रकाशज्ञाप्या विद्युत्. किं वा प्रकाश-द्वारा वृक्षवृत्तिज्ञापकतानिरूपितज्ञाप्यताश्रयविद्योतन-व्यापारवती विद्युदिति शाब्दबोधः। यद्वा–परिचय-कर्मत्वरूपं लक्ष्यत्वं प्रतेरर्थः, निरूपितत्वं द्वितीयार्थः, वृक्षनिरूपितलक्ष्यत्ववती विद्युद् विद्योतते इत्यर्थः। मातरं प्रति साधुः इत्यत्र साधुत्वं प्रियकारित्वं तद्घटका अनुकूलाऽऽचरणरूपा क्रिया, तादृशक्रिया-निरूपितः सेवकत्वादिरूपः सम्बन्ध. प्रत्यादिकर्मप्रवच-नीयार्थः, तादृशसम्बन्धप्रतियोगित्वं मातरि, प्रति-योगित्वं द्वितीयार्थः, तथा च मातृप्रतियोगिकोक्त-सम्बन्धाश्रयः, मातृनिरूपितोक्तसम्बन्धवानित्यर्थोऽपि। यो मां प्रति स्यादित्यत्र स्वत्वाश्रयो भाग एव कर्म-प्रवचनीयप्रत्ययाद्यर्थः, भागान्वयी स्वत्वसम्बन्धो द्वितीयार्थः,दीयतामिति शेषः, तथा च–यदस्मत्स्वत्वा-श्रयभागः यदधिकरणकप्रदानव्यापाराश्रयः त्वत्कर्तृक इति। वृक्षं वृक्षं प्रति सिञ्चतीत्यत्र द्विरुक्तिर्व्यापकत्व-बोधिनी, प्रतिश्च निरर्थकः, कर्मणि द्वितीया कर्मत्वं द्वितीयार्थः, सकलवृक्षकर्मकं सेचनमित्यर्थः। गृहे गृहेऽश्वाः इत्यत्र गृहत्वव्यापकताकाऽधिकरणतानिरूपिताऽऽ-धेयतावन्तोऽश्वा इत्यर्थः॥ उपकुम्भे निधेहीत्यत्र कुम्भसमीपावरताकाधेयतावत्त्वविशिष्टनिधानव्यापा-रानुकूलप्रेरणावानित्यर्थः। त्वां च मां चान्तरा हरिरित्यत्र त्वन्मन्निरूपितमध्यत्वविशिष्टो हरिरिति शाब्दबोधः, अन्तरेण हरिस्मरणं न सुखमित्यत्र हरि-स्मरणाऽभावप्रयोज्यसुखाभाव इति शाब्दबोधः॥४८७॥

**आख्याते कर्मणि भावे कृतिस्तृतीययोच्यते।**
**कृदर्थः कर्म वाऽन्यत्र, करणत्वं क्रियान्वयि॥४८८॥**

कारकविभक्तितृतीयायाः क्रियान्वयि कर्तृत्वं करणत्वं चार्थः, कर्तृत्वं क्रियानुकूलकृतिरेव, सा कर्त्राख्यातसमभिव्याहारे चैत्रः पचतीत्यादावाख्यातेन क्रियाविशेष्यतया प्रतिपाद्यते, पचनानुकूलव्यापारानु-कूलकृतिमाँश्चैत्र इति बोधः। चैत्रेण पच्यते तण्डुल इत्यादिकर्माख्यातस्थले, तथा चैत्रेण शय्यते इत्यादि-भावाख्यातस्थले क्रियायां विशेषणतया तृतीयया सा कृतिः प्रत्याय्यते, चैत्रकृतिजन्यपाकजन्यविक्लित्त्या-

श्रयस्तण्डुलः। चैत्रकृतिजन्यशयनव्यापार इति बोधः। चैत्रेण पक्वमित्यत्र तृतीयाया एव कृतिवाच्यत्वं, क्तप्रत्ययस्तु कर्मवाचक एव, न कृतिवाचकः। अचेतनव्यापारे तु निरूढलक्षणा। चैत्रेण पच्यते इत्यत्र तृतीयार्थकृतेः जन्यत्वविषयत्वोभयसम्बन्धेन धात्वर्थपाकेऽन्वयः, कृतिजन्यत्वे कृतिविषयत्वे वा तृतीयार्थे तु जन्यत्वसम्बन्धमध्ये, तथा स्वनिरूपकजन्यत्वं विषयतायाः सम्बन्धमध्ये प्रवेशनीयम् अन्तर्भावनीयं च। चैत्रवृत्तिकृतिजन्यत्वविशिष्टपाकजन्यविक्लित्याश्रयः तण्डुलः, तथा चैत्रवृत्तिकृतिविशयत्वविशिष्टपाकजन्यविक्लित्याश्रयस्तण्डुल इति च बोधः। काष्ठेन पचतीत्यत्र तृतीयार्थः करणत्वं व्यापारवत्कारणत्वरूपं, व्यापारे कर्तृव्यापाराधीनत्वं निवेशनीयम्, अत्र काष्ठाग्निकरणकपचनानुकूलव्यापारवांश्चैत्र इत्यर्थः। अथ समभिव्याहृतकर्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च तृतीयायाः शक्तिद्वयं, कर्त्रसमभिव्याहृतस्थले व्यापारवत्कारणत्वमात्रं, कर्तृसमभिव्याहारस्थले व्यापारे तद्व्यापाराऽधीनत्वमपि। पर्वतो धूमेन वह्निमानित्यत्र हेतुतृतीया, ज्ञापकज्ञानविषयत्वं ज्ञानज्ञाप्यत्वं वा हेतुमत्त्वं, धूमज्ञानज्ञाप्यवह्निमान् पर्वत इत्यर्थः। धूमज्ञानप्रयोज्यं यद् वह्नित्वावच्छिन्नाधेयताकज्ञानं तद्विशेष्यताश्रयः पर्वतः, विशेष्यतासम्बन्धेन वह्निविधेयताकज्ञानवान् पर्वत इति बोधः। पुत्रेण सहाऽऽगत इत्यत्र सहशब्दार्थः तत्क्रियाकालः, क्वचित् तत्क्रियाऽन्वयिनि प्रथमान्तपदार्थेऽन्वेति, क्वचिच्च समभिव्याहृतक्रियायाम्, पुत्राऽऽगमनकालावच्छिन्नः पुरुष आगमनकर्ता इति बोधः। पुत्रेण सह नाऽऽगच्छतीत्यत्र पुत्राऽऽगमनकालिकाऽऽगमनकर्तृत्वाभाववान् पुरुष इति शाब्दबोधः। सपुत्रो नाऽऽगच्छतीत्यत्र पुत्राऽऽगमनकालिकाऽऽगमनकर्तृत्वाभाववान् पुरुष इति बोधः। 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी' इत्यत्र दशसंख्याकपुत्रवर्तनकालिकवर्तनक्रियावती गर्दभी इत्यर्थः। वर्तनं भारवहनरूपम्। इत्थम्भूतलक्षणे जटापदात् तृतीया जटाभिस्तापस इति, तत्र लक्षणत्वं व्यावर्तकत्वं, तच्च विशेष्यतावच्छेदकसमानाधिकरणाऽभावाऽप्रतियोगित्वम्, उक्तप्रतियोगित्वं वैशिष्ट्यं च तृतीयार्थः, उक्तप्रतियोगित्वस्य जटायामन्वयः तस्याश्च वैशिष्ट्ये, एवं च—तापसत्वसमानाधिकरणाऽभावप्रतियोगिजटाविशिष्टस्तापस इति बोधः। विशेषणं स्वरूपे धर्मः, उपलक्षणं तु तटस्थं भवति, घटत्वं नीलं चेति क्रमात्। मत्वर्थीयप्रत्ययेन विशेषणस्यैव सम्बन्धः प्रत्याय्यते, तृतीयया तु विशेषणोपलक्षणयोरुभयोः सम्बन्धः प्रत्याय्यते ॥ ४८८ ॥

**सम्प्रदानं कर्त्रभिप्रेतं क्रियाकर्मयोगतः।**
**चतुर्थी कारकं तत्र दानाद्यर्थफलाश्रये ॥ ४८९ ॥**

सम्प्रदाने चतुर्थी, क्रियाकर्मसम्बन्धितया कर्त्रभिप्रेतत्वं सम्प्रदानत्वम्। ब्राह्मणाय गां ददातीत्यत्र दाने सम्प्रदाने क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वं सम्प्रदानत्वम्। दानक्रियाकर्मवती या गौस्तन्निष्ठं फलभानं यत्स्वत्वं तादृशस्वत्वभागित्वं गवा ब्राह्मणस्य सम्बन्धः, ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्तेति बोधः। वृक्षायोदकं सिञ्चतीत्यत्र चतुर्थ्यर्थः स्वनिष्ठं कर्त्रभिप्रेतफलं प्रति जनकत्वम्, तच्च सेकादिक्रियान्वितं भवति, भाक्तं च सम्प्रदानत्वम्, तथा च वृक्षोद्देश्यकवृक्षनिष्ठकर्त्रभिप्रेतफलजनकजलसेकक्रियानुकूलव्यापारवानित्यर्थः। सेकः द्रवद्रव्यसंयोगानुकूलव्यापारः, स एव जलसेकः, । पत्ये शेते इत्यत्र स्वविषयप्रीतिजनकत्वस्वजन्यत्वोभयसम्बन्धावच्छिन्नेच्छाविशेष्यं शयनमित्यर्थः। एधेभ्यो व्रजतीत्यत्र एधाहरणोद्देश्यकव्रजनानुकूलकृतिमानित्यर्थः। युद्धाय सन्नह्यते इत्यत्र कर्तुमर्थे युद्धकरणोद्देश्यकसंनहनानुकूलकृतिमानर्थः। सोढुमित्यर्थे युद्धसन्नहनोद्देश्यकसन्नहनानुकूलकृतिमानिति बोधः। रजकस्य वस्त्रं ददातीत्यत्र रजककर्तृकवस्त्रकर्मकनिर्णेजनेच्छाप्रकाशकव्यापारानुकूलकृतिमानिति शाब्दबोधः। नारदाय रोचते कलह इत्यत्र नारदाश्रितप्रीतिजनकताश्रयः कलह इति शाब्दबोधः। पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पनिष्ठविषयतानिरूपितविषयिताविशिष्टेच्छाश्रयश्चैत्र इति शाब्दबोधः। पुत्राय क्रुद्ध्यतीत्यत्र पुत्रादिनिरूपितविषयिताविशिष्टक्रोधादिव्यापारवानिति शाब्दबोधः, विप्राय शतं धारयतीत्यत्र द्रव्यान्तरदानाऽभ्युपगमपूर्वकपरदत्तद्रव्याऽऽदानजन्याऽदृष्टविशेषवत्त्वमेव धारयतेरर्थः,

तद्घटकदानाऽन्वयि, कर्तृत्वं, तत्र चतुर्थ्यर्थः। यूपाय-दारु—इत्यत्र तादर्थ्ये चतुर्थी, यूपेच्छाऽधीनेच्छा-विषयतक्षणादिव्यापाराश्रयो दारु इति वाक्यार्थः। रन्धाय स्थलीत्यत्र रन्धनेच्छाऽधीनेच्छाविषयतण्डुल-धारणादिव्यापाराश्रया स्थालीति बोधः। एधेभ्यो व्रजतीत्यत्र एधकर्मकाऽऽहरणप्रयोजनकव्रजनक्रियाश्रय इत्यर्थः।

'एषोऽर्घ्यः शिवाय नम' इत्यत्र शिवोद्देश्यकाऽर्घ्यत्याग इति बोधः। नम एव त्यागः। 'नमो हरये' इत्यत्र हर्यवधिकचैत्राऽपकर्षबोधानुकूलश्चैत्रीयव्यापार इति बोधः। नमस्करोतीत्यत्र स्वाऽपकर्षाऽवधित्व-प्रकारकबोधविषयताप्रयोजकव्यापारानुकूलकृतिमा-निति समुदायाऽधीनो बोधः। नारायणो नमस्क्रियते इत्यत्र नमनानुकूलव्यापारजन्यस्वाऽपकर्षाऽवधित्व-प्रकारकबोधविषयताश्रयो नारायण इति बोधः। ज्यायान् पुरस्क्रियते इत्यत्र पुरस्कृतिरूपव्यापारजन्याऽग्राऽवस्थानाश्रयो ज्यायानिति बोधः घटो दण्डाज्जायते न पारिमाण्डल्यादित्यत्र पारिमाण्डल्यनिरूपितप्रयो-ज्यत्वाऽभाववान् घटो दण्डनिष्ठकारणतानिरूपित-जन्यताश्रय इति बोधः। स्वायम्भवे नमस्कृत्य स्वाप-कर्षाऽवधित्वप्रकारकबोधविषयताश्रयत्ववान् स्वाय-म्भुरित्यर्थः। हरिराविर्भवतीत्यत्र प्रकटीभवनाश्रयो हरिरिति बोधः। शुक्लीभवतीत्यत्र पूर्वकालानच्छिन्न-स्वाऽभावाऽधिकरणविशिष्टस्य सामानाधिकरण्य-सम्बन्धावच्छिन्नशुक्लत्वविशिष्टस्याऽऽधेयतासम्बन्धा-वच्छिन्नभवनानुकूलव्यापारस्य स्वनिरूपितत्वसम्ब-न्धावच्छिन्नाऽऽश्रयतावानित्यर्थः। पूर्वकालीनस्वाऽ-भावविशिष्टशुक्लत्वविशिष्टभवनानुकूलव्यापाराश्रय-तावानिति। स्वस्ति भवते इत्यत्र भवदीयहित-विषयिणी मदिच्छेत्यर्थः॥ ४८९॥

**विभागाद्याश्रये चाऽपादानता पञ्चमीसखी।**
**भिदाऽपि, चाऽपरेऽर्थाश्च प्रयोज्यत्वादयस्तथा ४९०**

वृक्षात्पर्णं पततीत्यत्र पञ्चम्याः प्रकृत्यर्थस्य वृक्षादेः पतनादिक्रियाऽपादानत्वं प्रत्याय्यते, स्वनिष्ठ-भेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रय-त्वम् अपादानत्वम्, भेदप्रतियोगितावच्छेदकत्वे विभागे च पञ्चम्याः शक्तिद्वयम्, भेदे विभागे चाऽऽधेयतया वृक्षस्याऽन्वयः, आश्रयत्वसम्बन्धेन प्रति-योगिताऽवच्छेदकत्वं, जनकतासम्बन्धेन विभागश्च क्रियायाम् अन्वेति। वृक्षनिष्ठभेदप्रतियोगितावच्छे-दकतन्निष्ठविभागजनकपतनाऽऽश्रयः पर्णमिति बोधः। वृक्षाद् विभजते इत्यत्र वृक्षाऽवधिकविभागनिरूपिता-श्रयतावान् पक्षीति बोधः। ग्रामो गम्यते इत्यत्र संयोगानुकूलव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः। व्याघ्राद् बिभेतीत्यत्र व्याघ्रप्रयोज्याऽनिष्ट-संभावनाश्रयः। दस्युभ्यो रक्षतीत्यत्र दस्युप्रयोज्याऽनिष्टनिवृत्त्यनुकूलव्यापाराश्रय इति बोधः। बालाद् घटं रक्षतीत्यत्र बालकर्तृकघटनाशानुकूलव्यापार-निरोधवानिति बोधः। यवेभ्यो गां वारयतीत्यत्र यवनिष्ठत्वेन गवादीच्छाविषयो यो गलाऽधःसंयोगा-दिर्गवादिनिष्ठतत्तत्फलकव्यापारविशेषकर्तृत्वाऽभावाऽनुकूलव्यापारानुकूलकृतिमानिति बोधः। कूपादन्धं वारयतीत्यत्र कूपादिनिष्ठत्वेन अन्धादीच्छाविषयो य उत्तरदेशसंयोगादिः अन्धादिनिष्ठतत्तत्फलक-व्यापारविशेषकर्तृत्वाऽभावाऽनुकूलव्यापारानुकूल-कृतिमानिति बोधः पण्डितात्पुराणं शृणोतीत्यत्र पण्डितकर्तृकपुराणोच्चारणाऽधीनश्रवणाश्रय इत्यर्थः। रामादधीतसन्देश इत्यत्र रामकर्तृकोच्चारणाऽधीन-सन्देशविषयकज्ञानाश्रय इति बोधः। हिमवतो गंगा प्रभवतीत्यत्र हिमवत्सम्बन्धाऽधीनप्रथमप्रकाशाश्रयो गंगेति बोधः। उपाध्यायादन्तर्दधे छात्र इत्यत्र उपा-ध्यायकर्तृकदर्शनविषयताया यः स्वनिष्ठोऽभावस्त-दुद्देश्यकव्यापारकर्ता छात्र इति बोधः। वृक्षात्पतति इत्यत्र वृक्षावधिकविभागजनकपतनव्यापारवानित्यर्थः। अस्मात्तार इत्यत्र तारपदम् उच्चशब्देऽपि शक्तं, तथा च तत्सजातीयत्वे सति तत्साक्षात्कारप्रतिबन्धकताव-च्छेदकजातिमत्त्वमर्थः, यद्वा—साजात्यसमानाधिकरण-साक्षात्कारप्रतिबन्धकताऽवच्छेदकजातित्वं तारत्वम्, अपादानत्वं चाऽत्र स्वाऽऽधारविषयप्रतियोगिकत्वम्। द्रव्यादन्यो गुण इत्यत्र द्रव्यभिन्नगुण इत्यर्थः। अन्योन्याऽभावप्रतियोगिता पञ्चम्यर्थः, द्रव्यान्योन्या-भावप्रतियोगितानिरूपितानुयोगितावान् गुण इत्यर्थः। घटात् पटः पृथगित्यत्र पृथगर्थः पृथक्त्वगुणः, भेदपरोऽपि, बोधस्तु घटवृत्तिपृथक्त्वभिन्नपृथक्त्ववान् पटः,

यद्वा—घटभेदविशिष्टपृथक्त्वसमानाधिकरणपटत्ववान्, यद्वा—घटाऽवृत्तिपृथक्त्वाश्रयः पट इति बोधः। पञ्चम्यर्थोऽपादानम्—तत्प्रतियोगिकभेदवत्त्वम्, अन्येतरपदे तु स्वरूपमात्रपरे इति। घटाद् भिद्यते इत्यत्र भिद्धातोरन्योन्याभावोऽर्थः। पृथिवी इतरेभ्यो भिद्यते इत्यत्र भिद्धातुर्ज्ञापनार्थः, धूमादित्यपि धूमज्ञानपरम्, पर्वतो वह्निमान् धूमादित्यत्र धूमज्ञानप्रयोज्या या वह्निविषयकज्ञानविषयता तदाश्रयः पर्वत इति शाब्दबोधः। पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्र गन्धवत्त्वज्ञानप्रयोज्या याऽन्यत्वप्रकारकज्ञानविषयता तदाश्रयः पृथिवीति बोधः। अर्जुनः कोशाल्लक्ष्यं विध्यति इत्यत्र स्वाऽधिष्ठितदेशानन्तरक्रोशात्मकाऽध्वभागानन्तरदेशस्थं लक्ष्यं विध्यत्यर्जुन इति बोध। अद्य भुक्त्वाऽयं द्व्यहाद् भोक्ता इत्यत्र भोजकृत्यधिकरणतद्दिवसानन्तरद्व्यहानन्तरदिनवृत्तिभोजनकृतिमानयमिति बोधः। पटत्वं घटात्पटं भिनत्ति इत्यत्र घटप्रतियोगिकाऽन्यत्वप्रकारकाऽनुमितिनिरूपितपटवृत्तिविषयताप्रयोजकव्याप्तिपक्षधर्मताश्रयः पटत्वमिति बोधः। पटत्वेन घटाद् भिद्यते पट इत्यत्र पटत्ववृत्तिव्याप्तिपक्षधर्मताप्रयोज्यघटाऽन्यत्वप्रकारकाऽनुमितिविषयतावान्पट इति बोधः॥ पृथिवी एतरेभ्यो भिद्यते इत्यत्र इतरभेदाऽनुमितिविषयतावती पृथिवी इति बोधः॥ ४९०॥

**अकारकं भवेत्षष्ठी सम्बन्धार्थे भिदान्विता।**
**क्लृप्ताऽन्वयाद्यभिन्नार्था यथायोग्यार्थबोधिनी ४९१**

स्वसम्बन्धविवक्षायां कर्मत्वबोधकत्वेन कारकविभक्त्यप्रसक्तिः यत्र, तत्र षष्ठी। चैत्रस्येदम्,—चैत्रप्रतियोगिकस्वत्ववदिदमित्यर्थः। घटस्य कारणमिति घटनिरूपितकारणमित्यर्थः। चैत्रस्य हस्तः—चैत्रस्वत्ववान् हस्त इत्यर्थः। चैत्रसमवाय्यवयवो हस्त इति त्वन्यदेतत्। कृष्णस्य कृतिरिति कृद्योगा षष्ठी कर्तृत्वं सम्बन्धं बोधयति, कृष्णसम्बन्धिकृतिरिति। आमं शूद्रस्य पक्वान्नमित्यत्र षष्ठ्यर्थः स्वत्वं, शूद्रनिरूपितस्वत्वाश्रयीभूतम् आमान्नं पक्वासन्नसदृशं विज्ञेयमित्यर्थः। 'पक्वमुच्छिष्टमुच्यते'—शूद्रकर्तृकपाकाश्रयीभतं तूच्छिष्टसदृशं विज्ञेयमित्यर्थः। शूद्रकर्तृकवृषोत्सर्गे ब्राह्मणपक्वचरुः होमार्हः, न तु शूद्रपक्वचरुः, उच्छिष्टत्वात्। घटस्य रूपं घटसमवेतरूपमित्यर्थः। निर्धारणे षष्ठीसप्तम्यौ,—नराणां क्षत्रियः शूरो नरेषु वा—इत्यत्र क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपविधेयसम्बन्धोऽभिमत इति नरादिपदात् षष्ठी, क्षत्रियप्रतियोगिकभेदविशिष्टो नरस्तद्व्यावृत्तं शूरतमत्वम्,—इति 'नराणां क्षत्रियः शूरतम इति बोधः। नरेषु क्षत्रियाणामेव शौर्यमित्यत्र क्षत्रियाऽन्यनरव्यावृत्तं शौर्यमित्यर्थः। द्रव्येषु कम्बुग्रीवादिमान् घट इत्यत्र कम्बुग्रीवादिमदन्यद्रव्यव्यावृत्तं घटत्वमित्यर्थः। नराणां क्षत्रियः शूर इत्यत्र वा क्षत्रियपदं क्षत्रिये शक्तं तदन्ये लाक्षणिकम्, शूरपदमपि शूरे शक्तं शूराऽन्ये लाक्षणिकम्, षष्ठ्यर्थोऽभेदः, नराऽभिन्नः क्षत्रियः शूरः, नराऽभिन्नक्षत्रियाऽन्यो न शूर इत्यर्थः। नराणां क्षत्रियेषु शौर्यमित्यत्रापि, तथा, शौर्यपदं तु तत्तदत्यन्ताभावार्थकम्, नराऽभिन्नक्षत्रिये शौर्यं नराऽभिन्नक्षत्रियाऽन्यस्मिँश्र शौर्याऽभाव इत्यर्थः॥ अथ निर्धारणविभक्तेर्व्यावृत्तत्वमर्थः, तच्च अभेदान्वयिस्थले अन्योन्याऽभावप्रतियोगित्वं, भेदाऽन्वयिस्थले अत्यन्ताभावप्रतियोगित्वं, तस्य विधेयतावच्छेदकाऽवच्छेदेनाऽन्वयः, नराणां क्षत्रियः शूर इत्यत्र क्षत्रियाऽभिन्नशूरभिन्ननरव्यावृत्तत्वं शूरत्वम्। नराणां क्षत्रिये शौर्यमित्यत्र भेदाऽन्वयः,—क्षत्रियभिन्ननरवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकं शौर्यत्वम्, द्रव्याणां क्षितिपाथसी रसवतीत्यत्र क्षितिजलोभयभिन्नद्रव्यव्यावृत्तत्वं रसवत्त्वम्॥ नराणां कर्णः प्रचुरं ददातीत्यत्र स्वभिन्ननरक्षत्रियव्यावृत्तप्रचुरदानव्यापारवान् कर्णः॥

अथ आधारसप्तम्या आधेयत्वमर्थः, तस्य क्रियायामन्वयः, आधाराधेयभावसम्बन्धस्तु पदार्थान्तरम्। कुण्डे बदरमिति कुण्डाधारबदरम्, संयोगः आधाराधेयभावः, बदरप्रतियोगिकसंयोगवत् कुण्डमित्यपि बोधः। पटे रूपमित्यत्र पटसमवेतरूपं, रूपसमवायि पटम् इति च बोधः। भूतले वर्तते घट इत्यत्र भूतलाऽधिकरणकवृत्तित्वाश्रयो घट इति बोधः। वृद्धातोराधार्थकत्वे तु भूतलनिष्ठाधारतानिरूपको घट इति बोधः। भुवि गच्छति चैत्र इत्यत्र स्वाश्रयाश्रयत्व-

सम्बन्धावच्छिन्नाधारता सप्तम्यर्थः, स्वं चैत्रीयं गमनम्, उक्तसम्बन्धेन भूमिनिष्ठम्, तथा च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नाधारतासम्बन्धावच्छिन्ना या भूमिस्था गमनक्रिया तदनुकूलकृतिमाँश्चैत्र इति बोधः। वीणायां शब्द इत्यत्र वीणावच्छेद्यशब्द इति बोधः। कर्णे शब्दो भवतीति कर्णावच्छेद्यभवनाश्रयः शब्दः इत्यर्थः। अकारकेऽपि सप्तमी, साध्यवद्भिन्ने वर्तते यः साध्याभावस्तद्वदवृत्तित्वं साध्ययद्भिन्नसाध्याभाववदवृत्तित्वमित्यत्रेति। चर्मणि द्वीपिनं हन्तीत्यत्र चर्मनिरूपितविषयिताश्रयेच्छाजन्यहननव्यापारवानिति शाब्दबोधः। गोषु दुह्यमानासु गत इत्यत्र दुह्यमानगोवृत्तिदोहनक्रियासमानकालिकं गमनमिति शाब्दबोधः। दोग्धव्यासु गोषु गत इत्यत्र दोग्धव्यगोवृत्तिदोहनक्रियाप्राक्कालिकं गमनमिति बोधः। गोषु दुग्धासु गत इत्यत्र दुग्धगोवृत्तिदोहनकर्मोत्तरकालिकं गमनमिति बोधः। पाथसि पीते तृषा शाम्यतीत्यत्र जलपानजन्यं जलपानोत्तरकालिकं च तृषाशमनमिति बोधः। गुणान्यत्वे सति सत्त्वादित्यत्र अस्धातोराधारतार्थः, गुणाऽन्यत्वाऽऽधारतायाः सत्ताधारतायां तद्वन्निष्ठत्वं सम्बन्धतया भासते, तेन सामानाधिकरण्यलाभः, तथा च सामानाधिकरण्यसम्बन्धेन गुणान्यताऽऽधारताऽविशिष्टाधारतावत्सत्ताज्ञाप्यमिति बोधः॥ ४९१॥

**सम्बोधनं भवेद्वक्तुरिच्छा तत्प्रथमा मता।**
**त्रिलिङ्गविषयं तच्च प्रत्ययास्त्रित्वभेदकाः॥४९२॥**

चैत्र त्वया भुज्यतामित्यत्र सम्बोधने प्रथमा, सम्बोधनं तु वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वप्रकारकेच्छा। तथा च त्वत्कर्तृकभोजनकर्मौदनविषयकः त्वया भुज्यतामितिवाक्याऽधीनो यो बोधस्तदाश्रयत्वप्रकारकवक्त्रिच्छाविषयश्चैत्र इति बोधः। ब्रह्मन् पालयेत्यत्र ब्रह्मसमवेतेष्टज्ञानविषय एकत्वत्कर्तृकम् आशंसाविषयपालनम्, यद्वा—ब्रह्मसमवेतेष्टज्ञानविषय आशंसाविषयपालनकर्ता एकस्त्वमिति बोधः। देव त्वं पुरुषोत्तमोऽसीत्यादौ पुंस्त्वैकत्वविशिष्टदेवत्वाऽवच्छेदेन सम्बोधनविषयः पुंस्त्वैकत्वविशिष्टदेवत्वविशिष्टसत्तावान् पुरुषोत्तम इति बोधः।

स्त्रीत्वं योनिमत्त्वम्, पुरुषत्वं लिंगवत्त्वम्। अजा नास्तीत्यत्र अजवत्यपि प्रदेशे प्रयोगेण स्त्रीत्वविशिष्टाऽजात्वावच्छिन्नप्रतियोगिताकाऽभाववानिति बोधः। स्त्रीप्रत्ययाः स्त्रीत्ववाचकाः। वैयाकरणास्तु प्रातिपदिकार्थः स्त्रीत्वं तस्य प्रातिपदिकार्थे जात्यादिमिति विशेषणता, स्त्रीप्रत्ययास्तु द्योतकाः। औपचारिको गवादिपदार्थः, लिङ्गं प्रातिपदिकार्थकम्, लिङ्गभानं तात्पर्ययोग्यताऽधीनम्, स्त्रीप्रत्ययः स्त्रीत्वं भार्यात्वेन बोधयति—आचार्याणी मानवी शूद्रीत्यादौ, भार्यात्वं सम्बन्धविशेषः। तत्र निरूपकत्वेन प्रकृत्यर्थाऽन्वयः। 'खट्वाखट्वीदेवतादिपदेषु स्त्रीप्रत्यया नाऽर्थबोधकाः, योनिमत्त्वाऽभावात्, स्वाश्रयशब्दवाच्यत्वसम्बन्धेनाऽर्थगततया शब्दगतं स्त्रीत्वादिरूपधर्मान्तरं भासते॥ ४९२॥

**नाम्नां हितं प्रकुर्वन्तस्तदन्तर्बोधयोजकाः।**
**तद्धितप्रत्ययाः प्रोक्ता नामप्रकृतिका यतः॥४९३॥**

तद्धितप्रत्यया अपि नामप्रकृतिकाः, प्रकृत्यर्थेन स्वार्थैकदेशस्य स्वार्थस्य च क्वचिदन्वयबोधजनकाः। गार्गिरिति तज्जन्यत्वं तदपत्यत्वमिति जन्यत्वं गर्गनिरूपितमिति गर्गनिरूपितजन्यताश्रयो गार्गिरिति बोधः। गार्ग्यः गर्गस्य पौत्रपरः, तद्धितप्रत्ययाऽर्थगोत्राऽपत्यैकदेशपुत्रत्वघटकजन्यत्वे निरूपकतयाऽन्वयात्, गर्गनिरूपितजन्यताश्रयपुत्राऽपत्यमिति बोधः। गर्गप्रपौत्रो गार्ग्यायणस्तत्र गर्गपौत्रभूतगार्ग्यनिरूपितजन्यता वर्तते, जीवनं च तत्र गर्गस्याऽपेक्षितमिति जीवने गर्गाऽन्वयः, तेन गर्गादिजीवनकालीनो गर्गगोत्राऽपत्यस्याऽपत्यमयमिति बोधः। माञ्जिष्ठं वास इत्यत्र तद्धितप्रत्ययार्थः 'तेन रक्तत्वमि'-ति, तच्च तत्सम्बन्धाऽधीनतदीयरूपाऽऽरोपविषयत्वं, तदेकदेशे सम्बन्धे प्रकृत्यर्थमञ्जिष्ठायाः प्रतियोगितयाऽन्वयः, तद्घटकरूपे चाऽऽश्रयतयाऽन्वयः। तथा च मञ्जिष्ठाप्रतियोगिसम्बन्धाऽधीनो यो मञ्जिष्ठाश्रितरूपस्याऽऽरोपस्तद्विषयः पट इति बोधः। शूल्यं—शूले संस्कृतं शूल्यं, तद्धितार्थसंस्कृतैकदेशे पाकात्मकसंस्कारे शूलस्य, उख्यमित्यत्र उखायां संस्कृतम्, उखायाश्च प्रकृत्यर्थाऽधिकरणत्वस्याऽन्वयः। शूलाऽधिकरणकसंस्कारवत्, उखाधिकरणसंस्कारवदिति च बोधः। पौषी रात्रिरित्यत्र अण्, नक्षत्रयुक्तकालार्थे

तद्धितः, नक्षत्रयुक्तत्वं तन्नक्षत्रशशिभोगाश्रयत्वं, शशिभोगे एकदेशे कर्मतया नक्षत्राऽन्वयः। तथा च तन्नक्षत्रकर्मकः शशिकर्तृको यो भोगस्तदाश्रयत्वं काले इति पुष्ययुक्ता रात्रिः पौषी। पौषो मासः, पौषो वर्ष, इत्यत्र पुष्येण युक्ता पौर्णमासी पौषी सा यस्मिन् मासे वर्षे वा स मासो वर्षो वा पौषः, पुष्यनक्षत्रयुक्त-पौर्णमासीघटितः कालो मासः पौषो वर्षश्चेति। पौषादिपदं योगरूढम्, रूढमपि च, रूढिनिरूपकताव-च्छेदकं तु मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमु-दायत्वम् , न तु धनुःस्थसूर्यविशिष्टत्वम्। चान्द्रमासे एव पौषादिपदशक्तिः, न सौरमासे, पुष्याद्ययुक्ताया-मपि पौषादिपूर्णिमायां पौष्यादिव्यवहारात् पौषादिपदं रूढं, न तु यौगिकम्। मतान्तरे तु धनुरादिराशिस्थ-सूर्यारब्धशुक्लप्रतिपदादिदर्शान्तेषु धनुरादिस्थसूर्यसमा-प्यमकरादिस्थसूर्यसंक्रान्तिमन्मासभिन्नधनुरादिराशि-स्थसूर्याऽधिकरणशुक्लप्रतिपदादिदर्शान्तेषु वा पौषा-दिपदस्य रूढत्वमिति। कार्तिकमारभ्य गणनया-ऽन्तिम आश्विनः उपान्त्यभाद्रपदः फाल्गुनश्चैते त्रयो मासा नक्षत्रत्रययुक्ताः, आश्विनस्य पूर्णिमा रेवत्या-ऽश्विन्या भरण्या च संयुक्ता भवति, भाद्रपदस्य शतभिषाभद्राभाद्रपदासंयुक्तता, फाल्गुनस्य पूर्वा-फाल्गुन्युत्तराफाल्गुनीहस्तसंयुक्तता, कार्तिकादीनां शेषाणां कृत्तिकादिद्वन्द्वं, मार्गशीर्षे मृगशिराद्वन्द्वं, पौषे पुष्यादिद्वन्द्वं, माघे मघादिद्वन्द्वं, चैत्रे चित्रादि-द्वन्द्वं, वैशाखे विशाखाऽनुराधाद्वन्द्वं, ज्येष्ठे ज्येष्ठादि-द्वन्द्वं, आषाढे पूर्वाषाढोत्तराषाढाद्वन्द्वं, श्रावणे श्रव-णादिद्वन्द्वम्, इत्येवं यदा यन्नक्षत्रयोगस्तत्पूर्णिमा तद्योगवती। क्वचिदनियतोऽपि नक्षत्रयोगो भवति, अतो मासनामानि रूढानि चापि। तत्तन्नामकं नक्षत्र-मस्त्यस्यामिति तन्मासीयपूर्णिमा, तद्युक्तमासा इत्येवं योगशक्तिरपि चाऽपेक्षिता॥

वैष्णवी ऋक्, ऐन्द्रं हविरित्यादौ देवतार्थविहित-तद्धितस्य तद्देवताकत्वमर्थः, विष्णुर्देवताऽस्येति वैष्णवी, मन्त्रेणैव हविरादित्यागः क्रियते इति मंत्रस्य करणत्वं, मन्त्रस्य तद्देवतोद्देश्यकत्यागकरणत्वेन वेदबोधितत्वम्, त्यागांगभूतोच्चारणकर्मत्वम्, वेद-बोधितद्रव्यस्वामित्वप्रकारकेच्छाविषयवेदमेयदेवतो-द्देश्यकत्यागकर्मत्वम्। पितृभ्यो दद्यादित्यत्र स्मृति-वाक्यजन्यत्वग्रहाऽपेक्षाऽस्तीति चतुर्थ्यपेक्षया देवता-पदस्य बलवत्त्वं ग्रहान्तराऽनपेक्षणात्। सामर्थ्यं सर्व-शब्दानां लिङ्गमिति चतुर्थीतः सम्प्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव मन्त्रवर्णात्तु न देवतात्वं प्रतीयते किन्त्वधिष्ठानमात्रमिति मन्त्रवर्णचतुर्थीतो दुर्बलः 'पितरो देवता' इत्यतो मन्त्रवर्णो दुर्बलः। 'आयन्तु नः पितरः' इति मन्त्रवर्णो दुर्बलः। कापोतं राजतं जनता, इत्यादौ समूहार्थविहिततद्धितस्य पर्याप्ति-समुदायत्वावच्छिन्नोऽर्थः, शतसंख्याककपोतानामपि समुदाये कापोतमिति व्यवहार उपपद्यते, कपोत-मात्रवृत्तिशतत्वादिपर्याप्त्यवच्छेदकत्वस्याऽन्यूनवृत्ति-त्वस्य संभवात्। तत्र तत्र पर्याप्त्यनवच्छेदकत्वेऽपि तादृशसंख्याकव्यक्तित्वस्य पर्याप्त्यवच्छेदकत्वं चिन्त-नीयम्॥ ४९३॥

**धातुप्रकृतिकास्तत्र तत्रोपकृतिशालिनः।**
**प्रत्यया नैकधास्ते चाऽधिकार्था उपकारकाः॥४९४॥**

धातुप्रकृतिका लकारकृत्सन्यङ्णिच्प्रभृतयः प्रत्ययाः केचिद्धात्वर्थान्वितमधिकमर्थं ब्रुवते, केचिदा-कांक्षादिनिर्वाहकाः प्रकृतिभिः स्वीयार्थबोधने उप-कुर्वते। लडादिदशलकाराणां कर्तृकर्मभावेष्वनु-शिष्टानां कर्तृत्वसामान्यमर्थः। चैत्रः पचतीत्यत्र लका-रेण कर्तृत्वे कृतावुपस्थितौ तस्याश्चैत्रे प्रकारत्वेना-ऽन्वयबोधः। 'लः कर्मणी'ति सप्तमीबोधकतार्था, न तु वाचकतार्था, गौरवात् विशिष्टधर्मिणि शक्तेर्बा-धात्। प्रथमान्तपदसामानाधिकरण्यं लकारबोध्य-कर्तृपदार्थमात्रमाश्रित्योक्तमिति। चैत्रेण पच्यते इत्यत्र तृतीयार्थककर्तृत्वस्य प्रकृत्यर्थचैत्रस्य विशेष्यतया भानात्, चैत्रवृत्तिकृतिजन्यविक्लित्त्यनुकूलव्यापार इति बोधः। यदि कर्तृत्वं तृतीयामात्रार्थस्तदनभि-धानं लकारेण, तदाऽपि चैत्रवृत्तिकृतिजन्यो व्यापार इति। यद्वा—चैत्रवृत्तिकृतिजन्यपाकजन्यविक्लित्त्या-श्रयस्तण्डुल इति बोधः, कृतेर्व्यापारे, चैत्रस्य कृतौ विशेषणत्वात्, व्यापारश्च विक्लित्तौ, विक्लित्तेश्च तण्डुले विशेषणत्वात्। आश्रयाऽतिरिक्ताऽविशेषणता-पन्नकर्तृत्वविशेषणताऽनापन्नक्रियायामेव विशेषणतया कर्तृत्वं तृतीयया बोध्यते, चैत्रेण पाचयति मैत्र इत्या-दावपि चैत्रवृत्तिकृतिजन्यो यः पाकस्तदनुकूलकृति-

मांश्चैत्र इति बोधः। चैत्रः पचतीत्यत्र क्रियानुकूला कृतिरेव कर्तृत्वम्, अनुकूलकृतित्वेन कृतित्वमात्रेण वाऽऽख्यातवाच्यता। अथ रथो गच्छतीत्यत्र क्रियाऽनुकूलव्यापाररूपे कर्तृत्वे निरूढा लक्षणा, गमनानुकूलव्यापारवान् रथ इति बोधः॥

मीमांसका व्यापारत्वेनैव शक्तिः, रथो गच्छतीत्यत्रापि गमनव्यापारो रथे, सविवादे नैकाऽऽग्रहः, बीजादिनाऽङ्कुरः कृत इत्यत्र विनाऽपि यत्नं कृञः प्रयोगः किं करोति? पचति, इत्यत्रापि व्यापारबोधजनकत्वं, लडादिजन्यवर्तमानत्वाऽन्वयबोधे तडादितत्समभिव्याहृतधात्वन्यतरजन्यविशेष्योपस्थितेः कारणत्वम्, शाब्दी हि भावना शब्देनैव पूर्यते इति शाब्दीभावना शब्दनिष्ठा न तु पुरुषस्येच्छारूपा कृतिरूपा वा, किन्तु नित्या तत्तदभिप्रेतगोचरव्यापाररूपैवेति। तात्पर्यलिङ्गेन व्यापारमुख्यार्थत्वाऽङ्गीकारात्॥ जडचेतनसाधारणव्यापारो विशेषतः कर्त्रनुगुणोऽनुसन्धातव्य इति॥

नैयायिकास्तु शब्दमात्रस्य व्यवहारप्रयोजकत्वम्, ज्ञानानुकूलशब्दानामिच्छयोच्चरितत्वेन सामानाधिकरण्येन यत्नवत्त्वस्याऽऽकांक्षादिबलादपि सतात्पर्यप्रयोगात् चेतनाऽधीनशब्दप्रयोगे कर्तृत्वं शक्तं कृतिरेवेत्यन्यत्र क्रियाव्यापारे लक्षणयाऽनुधावनमित्यप्युपपद्यते। रथो गच्छतीत्यादावाश्रयत्वमाख्यार्थः, व्यापारो धात्वर्थः, गमनव्यापाराश्रयो रथः। इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातिराख्यातपदप्रवृत्तिनिमित्तम्, ईश्वरकृतेः जन्यमात्रजनकत्वम्, कालः पचतीत्यत्र जीर्णताद्यनुकूलक्रियानिमित्तः काल इति बोधः। आत्मा पचतीत्यत्र शरीराऽवच्छिन्नात्मा पाकानुकूलकृतिमानिति बोधः। ईश्वरो वेदं वक्तीत्यत्र वेदोच्चारणानुकूलकृतिमानीश्वर इति बोधः, नित्यत्वे तु वेदानुपूर्वीसाजात्योच्चारणकृतिमानित्यर्थः। शरीरं पचतीत्यत्र पाकानुकूलकृतिमान् शारीरात्मेति बोधः, लक्षणया शरीरात्मार्थग्रहणात्। गौरः पचतीत्यत्र पाकानुकूलकृतिमान् गौरशारीरात्मेति बोधः। अनुकूलतासम्बन्धवत्त्वे तु ईश्वरः पचतीत्यत्र पाकानुकूलयत्नवत्त्वमीश्वरेऽस्त्येव। तद्यत्नस्य साधारणकारणत्वात्। ईश्वरकृतिसाधारणयत्नो वाऽऽख्यातार्थस्तत्राऽसाधारणानुकूलत्वमस्मद्यत्ने साधारणानुकूलत्वमीश्वरयत्ने इत्यपि सामान्येन विशेषलाभात् स्विष्टत्वम्॥

आख्यातकृञोः कृतिवाचकत्वे द्विधाभानं न, 'एकः' इत्यत्र प्रकृतिप्रत्यययोरेकत्वे एकत्वस्यैकधा भानं, 'द्वौ' इत्यत्र प्रकृतिप्रत्ययोरपि द्वेधा बोधकत्वेऽपि द्वित्वस्यैकधैव भानम्, करोतीत्यत्रापि प्रकृतिप्रत्यययोरुभयोरपि कृतिबोधकत्वेऽपि एकधैव कृतिभानं आख्यातस्य करोतीत्यत्र साधुत्वार्थकत्वम्। क्रियते चैत्रो मैत्रेणेति चैत्रस्य कर्मत्वविवक्षायां साधुः प्रयोगः। चैत्रो मैत्रेण सैन्यं निवारयतीत्यत्र 'करणं मैत्र' इत्यपि साधुप्रयोगः॥ गच्छति जानाति करोतीत्यादौ आख्यातस्याऽऽश्रयत्वे निरूढा लक्षणा, स्वरूपेणाश्रयत्वस्य रथे, ज्ञानस्याऽऽश्रयत्वस्याऽऽत्मनि चैत्रे, क्रियायां कृतेः आश्रयत्वस्य चैत्रेऽन्वयः। कृतेः क्रियायाश्च समवाये लाघवमपि आश्रयत्वस्वरूपसम्बन्धे गौरवमपि आकांक्षाभास्यत्वेन गौरवमकिञ्चित्करम्, शाब्दबोधे आकांक्षाभास्यानाम् अनिरोधात्॥

चैत्रेण ज्ञायते घट इत्यत्र चैत्रवृत्तिर्या ज्ञानाश्रयता तन्निरूपकं यज्ज्ञानं तद्विषयो घटः, कर्मप्रत्ययस्थले चैत्र आश्रयतायामाश्रयता ज्ञाने ज्ञानं घटे विशेषणम्। कर्तृप्रत्ययस्थले चैत्रो घटं जानातीत्यत्र घटविषयकज्ञानाश्रयतावांश्चैत्र इति, घटो ज्ञाने ज्ञानमाश्रयतायामाश्रयता चैत्रे विशेषणम्, कर्मप्रत्ययस्थले याऽऽश्रयता ज्ञाने विशेषणं सा कर्तृप्रत्ययस्थले ज्ञानविशेष्यमिति वैपरीत्यं, प्रकारत्वं तुल्यम्। नश्यतीत्यत्र प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थः, न नश्यतीत्यत्र प्रतियोगित्वरूपकर्तृत्वसम्बन्धावच्छिन्नप्रतियोगिताकनाशाऽभावस्य घटे नञा बोधनाऽसंभवात् प्रतियोगित्वरूपकर्तृत्वं न संसर्गः किन्तु प्रकार एव। आख्यातस्य कर्तृशक्ततावच्छेदकं तु न तिङ्त्वं न तिङ्पदवत्त्वं न लत्वादि, किन्तु तिबादेरेव तिप्त्वादि शक्ततावच्छेदकम्॥

आख्यातसामान्यस्य कर्तृत्वे शक्तिः। तद्विशेषात्मनेदस्याऽऽख्यातस्य कर्मत्वे शक्तिः, कुरुते इत्यादौ कर्तृत्वे शक्तिः, कर्मत्वे शक्तिः यक्समभिव्याहारस्य सहकारित्वे ज्ञेया। कर्मत्वत्वं शक्यतावच्छेदकमेकं, कर्मणि शक्तौ शक्यतावच्छेदकं कर्मत्वं संयोगविभागादिफलरूपं नानेति गौरवम्। उपस्थितकर्मत्वस्य

धर्मत्वेनाऽन्वयः क्वचिदवश्यं भवतीति कर्मताविशिष्टधर्मिलाभः। पच्यमानं तण्डुलमानयेत्यत्र शानच्प्रत्ययस्यात्मनेपदस्य तत्र तङ्शानच्साधारणस्यात्मनेपदत्वस्य शक्ततावच्छेदकत्वम्। तादीनां कर्मत्वे शक्तिः, तेत्वादिकं तु पृथगेव शक्ततावच्छेदकम्। त्यज्यते ग्रामः, गम्यते ग्रामः, इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगविभागादिः विशेष्यतया तङ्वाच्यः। चैत्रेण गम्यते ग्राम इत्यत्र तृतीयार्थस्तत्कर्तृत्वमाधेयत्वे तस्य धात्वर्थे संयोगात्मकफलावच्छिन्ने स्पन्दे व्यापारे तस्य जन्यतासम्बन्धेनाऽऽत्मनेपदार्थसंयोगरूपफले तस्य चाश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वयः। चैत्रवृत्तिर्यः संयोगावच्छिन्नस्पन्दस्तज्जन्यसंयोगवान् ग्राम इति बोधः। चैत्रेण त्यज्यते ग्राम इत्यत्र चैत्रवृत्तिर्यो विभागावच्छिन्नः स्पन्दस्तज्जन्यविभागवान् ग्राम इति बोधः॥ फलमिव क्रियान्वयि परसमवेतत्वमपि कर्माऽऽख्यातार्थः, परत्वे च भेदरूपे प्रतियोगितया फले आश्रयतयाऽन्वयिन. प्रथमान्तपदोपस्थाप्यस्याऽन्वयः। यद्वा—कर्माख्यातार्थो भेदः फलं च, स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन चैत्रादिनिष्ठक्रियाविशेषितभेदस्य स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसम्बन्धेन फलेऽन्वयः, विशिष्टफलस्य नञसमभिव्याहारे विशिष्टफलाऽभावस्य नञ्समभिव्याहारे च कर्मण्यन्वयः। चैत्रेण चैत्रो न गम्यते इति चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रवृत्तिक्रियावच्छिन्नभेदस्य चैत्रेऽसत्त्वेन विशिष्टफलाऽभावोऽक्षत इति नाऽनुपपत्तिः। चैत्रेण चैत्रो गम्यते इति प्रयोगस्याऽऽपत्तिरपि नास्ति। मल्लेन ग्रामो गम्यते न तु मल्लान्तरं तत्र मल्लनिष्ठग्रामसंयोगे मल्लान्तरनिष्ठक्रियावच्छिन्नभेदसामानाधिकरण्यस्य तन्मल्लान्तर्भावेन सत्त्वेऽपि तादृशभेदप्रतियोगितावच्छेदकमल्लान्तरनिष्ठक्रियाजन्यत्वस्याऽसत्त्वात् तद्घटितोभयसम्बन्धेन मल्लनिष्ठक्रियावच्छिन्नभेदविशिष्टस्य फलस्याऽभावो मल्लेऽक्षत एवेति न 'मल्लेन मल्लो न गम्यते' इत्यस्याऽनुपपत्तिः॥

कर्तृप्रत्ययस्थले आधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपाऽपरार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेनाऽन्वयः, तादृशभेदस्य च स्वप्रतियोगितावच्छेदकत्वसम्बन्धेन क्रियायाम्। चैत्रः चैत्रं न गच्छतीत्यत्र स्वप्रतियोगिताऽवच्छेदकत्वसम्बन्धेन तादृशभेदविशिष्टायाः क्रियायाः कर्तृत्वाऽभाव एव चैत्रे प्रतीयते॥ यद्वा—फलावच्छिन्नव्यापारबोधकधातूनां फले व्यापारे च शक्तिद्वयम्, कर्त्राख्यातस्थले फलं धात्वर्थव्यापारविशेषणतया भासने, तत्र द्वितीयाऽर्थाऽऽधेयत्वाऽन्वयः। कर्माख्यातस्थले फलं धात्वर्थव्यापारस्य विशेष्यतया भासते, तस्य विशेष्यतयाऽऽख्यातार्थं आश्रयत्वं, तद्विशेष्यतया कर्म भासते इति। यद्वा संयोगादिरूपफलावच्छिन्नव्यापारबोधकानां गमिप्रभृतीनां बहूनां फले शक्तिकल्पनाऽपेक्षया कर्मप्रत्ययानां फले शक्तिकल्पनमुचितम्, धातवो व्यापारमात्रवाचकाः। फलस्याऽऽश्रयत्वमात्रं सम्बन्धः॥ ज्ञायते इष्यते क्रियते घट इत्यादौ तु विषयत्वरूपं कर्मत्वं तङर्थः। काशाः कटाः क्रियन्ते इत्यादौ साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्मप्रत्ययेन व्यापार्थतारूपविषयताऽपि प्रत्याय्यते। कटाः साध्याः, काशा व्यापार्याः, व्यापार्यविषयतासमभिव्याहृतसाध्यविषयताविशिष्टक्रियाश्रयाः कटाः।

कर्तृकर्मवत् कालविशेषेऽनुशिष्टः लडादयः कालविशेषमपि बोधयन्ति, लट्प्रत्ययस्य कालविशेषे शक्तिः, पचतीत्यादौ कृत्यादिरूपव्यापारबोधकप्रत्ययोपस्थाप्यकालस्तादृशव्यापारे एवाऽन्वेति न तु क्रियायाम्, कृतौ फलाऽन्वय उचितः। वर्तमानकालः स्वप्रयोगाधिकरणकालः स्ववाच्यः। तत्पदस्य बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्ने शक्तिरिव शब्दप्रयोगाधिकरणत्वोपलक्षितधर्मावच्छिन्ने वर्तमानकाले लटः शक्तिरस्ति। शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनाऽनुगतीकृततत्तद्दिनमासवर्षत्वाद्यवच्छिन्ने एवं काले लटः शक्तिः। व्यापाराऽबोधकेन च लडादिप्रत्ययेन क्रियायां वर्तमानत्वाऽन्वयो बोध्यते, न तु लडर्थाश्रयत्वादौ। नाशत्वम् उत्पत्तिमदभावत्वम्, धातुप्रतिपाद्यतावच्छेदकोत्पत्तावेव कालाऽन्वयः कर्तव्यः। यद्वा—'नश्यती'-त्यत्र कालस्य धात्वर्थनाशे उत्पत्तिसम्बन्धेनाऽन्वयः॥

ऌट्प्रत्ययेन पक्ष्यतीत्यादौ प्रत्ययार्थकृतौ, ज्ञास्यतीत्यादौ ज्ञानक्रियायां भविष्यत्त्वं प्रत्याय्यते, भविष्यति उत्पत्स्यते इत्यादौ धातुना उत्पत्तिः प्रत्याय्यते, उत्पत्तावनागतत्वस्याऽन्वयः । अनागतोत्पत्तिमदित्यर्थः । नङ्क्ष्यतीत्यत्र ऌडर्थ उत्पत्तिः, सा धात्वर्थतावच्छेदिका वा, उत्पत्तौ ऌडर्थकालस्याऽन्वयः । वर्तमानो घटो भविष्यत्कालोत्पत्तिकध्वंसप्रतियोगीत्यर्थः । वर्तमानप्रागभावप्रतियोगित्वं, प्रतियोगितासम्बन्धेनाऽन्वयी वर्तमानप्रागभावो वा ऌट्प्रत्ययार्थः, यद्वा—वर्तमानकालध्वंसः ऌट्प्रत्ययार्थः, वर्तमानकालध्वंसस्य कालोपाधित्वेन स्वसमानकालिककृत्यादिपदार्थाऽऽधारत्वात् क्षणादिवत् तादृशाधेयतासम्बन्धेन वर्तमानकालध्वंसस्य तादृशकृत्यादावन्वयः, अथवा—तादृशाऽनागतकृतौ या वर्तमानकालध्वंसस्योत्पत्तिस्तत्सम्बन्धेन तादृशाऽनागतकृत्यादौ वर्तमानकालध्वंसस्याऽन्वयः ॥ पक्ता इत्यत्र लुटोऽनद्यतनभविष्यत्त्वमर्थः, अनद्यतनभविष्यत्त्वं च शब्दप्रयोगाधिकरणदिवसाऽवृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम्, शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा । यद्वा—लुटो भविष्यत्वमेवार्थः, क्रियायाः कृतेर्वा स्वरूपसदनद्यतनत्वमेव तत्साधुतानियामकम् । अथवा—अनद्यतनार्थकत्वम् आवश्यकम् । अथवा—लुट्ऌडाद्यर्थः प्रकृतशब्दप्रयोगाऽधिकरणदिनध्वंसः, तस्य अनद्यतनाऽनागतकालेनाऽवच्छेद्याऽवच्छेदकभावः सम्बन्धविधया भासते । अवाक्षीदित्यादौ लुङोऽतीतकालोऽर्थः, तस्याऽऽख्यातसामान्यार्थकृत्पादावन्वयः, तस्य सम्बन्ध आधेयत्वम्, अथवा—कालाऽविशेषणतयैवाऽतीतत्वं लुङोऽर्थः, आश्रयतासम्बन्धेन तस्य कृत्यादावन्वयः, अतीतत्वं वर्तमानध्वंसप्रतियोगित्वम्, वस्तुतः वर्तमानध्वंस एव लुङाद्यर्थः, तस्य प्रतियोगितासम्बन्धेन कृत्यादावन्वयः, वर्तमानाऽतीतकृतिध्वंसप्रतियोगित्वाश्रयकृतिमानिति तदर्थः ॥

लङ्प्रत्ययस्याऽतीतत्वम् अनद्यतनत्वमप्यर्थः, अनद्यतनत्वम् प्रकृतशब्दप्रयोगाधिकरणदिनाऽवृत्तित्वम्, अथवा लङर्थः—तादृशदिनाऽऽद्यक्षणवृत्तिध्वंसप्रतियोगित्वम् अनद्यतनाऽतीतत्वं विशिष्टमेव । अतीतानद्यतनत्वं लङर्थः ॥

अतीतत्वम् अनद्यतनत्वं परोक्षत्वं च लिटोऽर्थः । परोक्षत्वं वक्तुः साक्षात्काराऽविषयत्वम् । वक्तृभिन्नकर्तृकत्वम् वा परोक्षत्वम् ॥

लिङ्लोटोः विध्यर्थः, विधिः प्रवर्तकज्ञानविषयो धर्मः, स च कृतिसाध्यत्वं बलवदनिष्टाऽननुबन्धित्वसहितमिष्टसाधनत्वम्, इष्टत्वेन स्वर्गादीनामनुगमः, इष्टत्वं समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्, इष्टत्वज्ञानस्य शक्यफलानुगमार्थशक्यता, 'इष्टत्वोपलक्षितधर्मावच्छिन्नसाधनत्वं बोधयत्वि'ति संकेतः । वस्तुतस्तु—तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारः । स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम्, नियतपूर्ववर्तितावच्छेदकत्वं चाऽव्यवहितपूर्वकालावच्छिन्नवृत्तिकाऽभावघटितदैशिकव्यापकतायाः स्वाश्रयत्वस्वाश्रयनिष्ठव्यापारवत्त्वाऽन्यतरसम्बन्धेनाऽवच्छेदकत्वमेव। स्वर्गधर्मत्वादेरुपलक्षणतया भानात् । कारणताशरीरघटकाऽभावस्य प्रतियोगिताप्रकारेण भाननियमात् । इष्टतावच्छेदकधर्माणां सर्वसाधारणशक्तिग्रहे भानात्। स्वर्गनिष्ठवैजात्योपलक्षणस्याऽपि स्वर्गधर्मत्वस्य वैजात्यप्रकारतया भानात् । स्वर्गकामो यजेतेत्यत्र स्वर्गकामनावान् यागेनेष्टं भावयेदित्यर्थः ।

मीमांसकास्तु—अहरहः सन्ध्यामुपासीतेत्यत्र नित्यतया निष्फले सन्ध्योपासनादौ इष्टसाधनत्वस्याऽयोग्यत्वेनाऽन्वयाऽसंभवान्नेष्टसाधनत्वं लिङर्थः । सन्ध्यावन्दनाऽभावे नरकं भवतीति नरकसाधनताज्ञाने नरकगोचरद्वेष एवेति नरककारणसन्ध्यावन्दनाऽभावपरिवर्जनार्थं सन्ध्यावन्दनादौ प्रवृत्तिरिति नित्ये इष्टसाधनताबोधो निष्फल इति ॥

अथ नित्यस्थले शौचं फलकामना चेत्युभययोरधिकारत्वेऽपि प्रत्येकं तयोरधिकारता, शौचादिमतोऽधिकारितया नित्याऽकरणं प्रत्यवायजनकम् अतस्तन्नाशार्थं प्रवृत्तिः स्यादिति नेष्टसाधनत्वं विधिलिङर्थः॥

प्रवृत्तं प्रति चिकीर्षा, कृतिसाध्यताज्ञानम्, इष्टसाधनताज्ञानम्, उपादानाख्यकारणप्रत्यक्षं च कारणानि, स्वर्गाऽऽनयने कृतिसाध्यताज्ञानाऽभावात्, पर्वतात्पतने इष्टसाधनत्वज्ञानाऽभावात्, द्व्यणुको-

त्पादने द्वचणुकप्रत्यक्षाऽभावात् न प्रवृत्तिः। कारण-चतुष्टयसत्त्वे तु कुविन्दस्य वस्त्रोत्पादने प्रवृत्तिः। मिष्टगरलयुग्भोजने बलवदनिष्टाऽननुबन्धित्वज्ञानस्य कारणस्याऽभावान्न चिकीर्षा। तत्र बलवदनिष्टानुबन्धित्वज्ञानस्य प्रतिबन्धकत्वात्। कृतिसाध्यताज्ञान-मात्रं चिकीर्षाद्वारा प्रवर्तकमिति कृतिसाध्यताज्ञान-मेव विध्यर्थः,व्यापारश्चिकीर्षा, कृतिसाध्यत्वप्रकारक-ज्ञानं स्वप्रकारप्रकारकधीरूपं स्वस्याश्चिकीर्षायाः कारणम्, चिकीर्षया प्रवृत्तिः। अथ विषाक्तान्नभोजने चैत्यतरुवन्दने च न प्रवृत्तिः, स्वविशेषणवत्ताप्रति-सन्धानजन्यकृतिसाध्यताज्ञानाऽभावात्। स्वंपुरुषः। तत्र कामनाशौचादिमानहमिति प्रतिसन्धानं, यागे तादृशप्रतिसन्धानजन्यकृतिसाध्यताज्ञानात् चिकीर्षया प्रवृत्तिः, विषाक्तान्नभोजने बलवदनिष्टाननुबन्धीष्ट-साधनताज्ञानाऽभावान्न प्रवृत्तिः, चैत्यवन्दने इष्ट-साधनताज्ञानजन्यकृतिसाध्यत्वज्ञानाऽभावात् न प्रवृत्तिः, भोजने तृप्तस्य कामनाया अभावान्न प्रवृत्तिः, नित्ये सन्ध्यावन्दनादौ यदा शुचित्वविहितसमयजीवित्वा-श्रयत्वात्मकलिंगज्ञानाऽधीनेष्टसाधनताज्ञानजन्यकृति-साध्यताज्ञानसत्त्वे प्रवृत्तिः, तदभावे न प्रवृत्तिः, अशु-चित्वान्न प्रवृत्तिः, तथा च—बलवदनिष्टाननुबन्धित्व-विशिष्टतत्कालीनेष्टसाधनताज्ञानजन्यकृतिसाध्यता-ज्ञानत्वेन कारणत्वमिति, तत्र जन्यत्वज्ञानं तद्वचा-प्यत्वे सति तन्निष्ठान्यथासिद्धचनिरूपकत्वात्मकज्ञानं तथाऽन्यथासिद्धिपञ्चकाऽनिरूपकत्वज्ञानं प्रविष्टमिति महागौरवम्, तदपेक्षया तदनिवेशे सति बलवदनिष्टा-ऽननुबन्धीष्टसाधनताज्ञानविशिष्टकृतिसाध्यताज्ञानं कारणमिति लाघवम्, बलवदनिष्टाननुबन्धित्वं चेष्टोत्पत्तिनान्तरीयकदुःखाऽधिकदुःखाऽजनकत्वं बल-वद्द्वेषविषयदुःखाऽजनकत्वं वा मुक्तिकामस्य तीर्थे स्वर्गकामस्य ज्योतिष्टोमे कायशोषणादिबलवद्दुःख-साधने न प्रवृत्तिरोधकम्, अत्युष्णोदकस्नाने च न प्रवर्तकम्, किन्तु तत्र साधनत्वसाध्यत्वयोर्युगपद्धि-रुद्धयोर्निवेशात् कारणताभंग एव। तदपेक्षया तु कालभेदेन साधनत्वसाध्यत्वयोर्ज्ञाननिवेशेन विरोधा-ऽभावाल्लाघवेन बलवदनिष्टाऽननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वम्। अथ भवि-ष्यत्पाके ममेदं कृतिसाध्यमिति ज्ञानाऽभावात् अप्रवृत्तिः स्यात्। अतो यादृक्सामग्रीविशिष्टपुंसः कृतिसाध्यं यद्धर्मावच्छिन्नं दृष्टं प्रमितं तादृशसामग्री-मानहमितिनिर्णयादेव प्रवृत्तिमत्त्वं भवति। किन्तु स्वकल्पितलिप्यादौ यौवनाऽऽद्यकामभोगे प्रवृत्तौ प्रव-र्तकज्ञानाऽभावेन कार्यसत्त्वे व्यभिचारः, अतः इदानी-न्तनेच्छाविषयसाधनत्वेदानीन्तनकृतिसाध्यत्वेदानी-न्तनबलवद्द्वेषविषयाऽननुबन्धित्वैतत्त्रितयविषयक-ज्ञानं प्रवृत्तिजनकं बोध्यम्। यत्रोत्कटरागेण नरक-साधनताधीतिरोधानं बलवदनिष्टाननुबन्धित्वधी-तिरोधानं तत्र व्यभिचारमैथुने विषादनशत्रुवधे च प्रवृत्तिः। वृष्टचादौ कृतिसाध्यत्वज्ञानाऽभावान्न प्रवृत्तिः किन्त्विच्छामात्रम्। कृतिश्च प्रवृत्तिः, प्रवर्तक-त्वाऽनुरोधात् अग्निष्टोमेन यजेत स्वर्गकाम इत्यत्र विधेः बलवदनिष्टाऽननुबन्धीष्टसाधनत्वविशिष्टकृति-साध्यत्वमर्थः। विधिवाक्येन इष्टसाधनत्वे कृतिसाध्य-त्वे चाऽवगते किमिष्टमित्याकांक्षितस्वर्गस्य साधनं ज्ञानं मानसमुच्यते, अतो विधिज्ञानजन्यज्ञानं मानसं वाऽऽनुमानिकं प्रवर्तकमिति।

भट्टास्तत्र आचार्यप्रेरणया 'इदं करोमि'-त्यत्र प्रवर्तनाव्यापारश्चेतनस्याऽभिप्रायः, अचेतनस्य शब्द-वृत्तिरभिधा, अभिप्रायेणाऽभिधया वा प्रवृत्तिर्विधि-स्थले साऽभिधा लिङर्थः, शब्दभावना सा लिङ्त्वां-शेनोच्यते, अर्थभावना त्वाख्यातत्वांऽशेनेति। तत्र मण्डनमिश्रास्तु प्रवर्तनापदेन प्रवृत्त्यनुकूलत्वेनेष्टसाध-नत्वं गृह्णन्ति॥

वैदिकं वाक्यं विधिनिषेधाऽर्थवादभेदेन त्रेधा, इष्टसाधनत्वादिबोधकवाक्यात्वं विधित्वम्, यजेतेत्यत्र धात्वर्थे यागादौ स्वर्गसाधनत्वादिबोधकत्वाद्, विधित्वम्। स विधिः—उत्पत्तिविधिविनियोग-विध्यधिकारविधिप्रयोगविधिभेदाच्चतुर्विधः, तत्र कर्मस्वरूपमात्रप्रतिपादनविधिरुत्पत्तिविधिः, 'सोमेन यजेते'ति, तस्य सोमयागादिरूपकर्मविधायकत्वात्। क्रियाऽर्थतया किञ्चिद्वस्तुविधायको विधिर्विनियोग-विधिः, दध्ना जुहोतीति होमार्थतया दध्यादि-विधायकः, अयं विधिः अपूर्वविधिनियमविधिपरि-संख्याविधिभेदात् त्रेधा, तत्र प्रमाणान्तरेणाऽप्रापको विधिरपूर्वविधिः, व्रीहीन् प्रोक्षतीति लेटि स्वरूप-विधिं विना व्रीहिकर्मकप्रोक्षणाऽप्राप्तत्वात्। नियत-

प्रवृत्तिफलको विधिः नियमविधिः, व्रीहीनवहन्तीति पुरोडाशनिष्पादकव्रीहिवैतुष्यद्वारा यागोपकारकत्वेनाऽवहननप्रवृत्तेरिव नखविदलनेऽपि प्रवृत्तिप्रसक्त्या प्रवृत्तिनियमो न स्यादिति नखविदलनादिकरणकतुषादिमोचनप्रवृत्तिभञ्जनपूर्वकाऽवहननकरणकतुषादिमोचनप्रवृत्तिनियमननिर्वाहकत्वात् नियमविधिः। स्वसमभिव्याहृतधात्वर्थभिन्नार्थविषयकप्रवृत्तिभञ्जको विधिः परिसंख्याविधिः, यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमाधत्त' इत्यादि विधिः, तत्र मन्त्रस्य सामान्यतो रशनाग्रहणप्रतिपादकमन्त्रलिङ्गेन गर्दभरशनाऽऽदानेऽपि विनियोगलाभाद् अश्वरशनाऽऽदानकाले मन्त्रवाक्यब्राह्मणवाक्यघटकविधितः प्रथमम् अश्वरशनाग्रहणे एतन्मन्त्रनियोगलाभेन निराकांक्षतया न गर्दभरशनाग्रहणे तादृशमन्त्रविनियोगः। कर्तुः फलसम्बन्धबोधको विधिरधिकारविधिः। यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेति विधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः, सः अंगवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव, यथा प्रयाजाद्यंगजातवाक्यैकवाक्यतामापन्नो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते' तिप्रधानविधिरेव॥

विश्वजिता यजेतेत्यत्र फलश्रवणशून्यवाक्यस्थले स्वर्गस्येष्टत्वात् स्वर्गमनुमीयते, यजेतेतिपदघटकविधिप्रत्ययात् इष्टत्वरूपसामान्यरूपेणेष्टसाधनत्वविषयकशाब्दबोधानन्तरम् 'एतादृशेष्टं,—स्वर्गत्ववत्,—विशेषरूपेण शाब्दाऽविषयत्वे सति प्रवर्तकविधिवाक्यप्रतिपाद्यत्वात्,—यन्नैवं तन्नैवं यथा तृप्त्यादीति',—'सः स्वर्गः स्यात् सर्वान्प्रत्यविशिष्टत्वादि' ति (४।३।१३) सूत्रतर्कसत्त्वात्। विश्वजिदिति प्रवृत्त्यर्थं यागफलं स्वर्गं स्यादिष्टम्। रात्रिसत्रन्यायेन सन्ध्योपासनादेरपि अर्थवादचोदितफलं पापनाशपूर्वकब्रह्मलोकप्राप्तिः प्रत्यवायाऽनुत्पत्तिश्च फलं स्वीकार्यम्, नहि तत्र प्रशस्तत्वबोधमात्रं पुरुषे, किन्तु उपरागे श्राद्धं कुर्वीत उपरागे स्नायादितिविधिना नित्यनमित्तिकत्ववत् भरणीनिमित्तकश्राद्धस्य नित्यत्वनैमित्तिकत्ववच्चाऽविरोध इव 'अहरहः सन्ध्यामुपासीत', 'सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमि'तिबलात् नित्यत्वकाम्यत्वोभयात्मकत्वे बाधकाऽभावात्। 'पितृभ्यः प्रीतिमावहन्' इत्यत्र पितृप्रीतिः श्राद्धफलम्। यद्वा—नित्यकर्मस्थले पण्डापूर्वं नपुंसकफलं स्वर्गाऽजनकम् अपूर्वं नाममात्रं फलम्। रात्रिसत्रन्यायेन 'ज्योतिर्गौरायु'-रित्यादिवाक्योत्पादितानि सौत्यानि कर्माणि त्रयोदशरात्रसंज्ञकानि सत्रनामानि द्वादशरात्रादूर्ध्वभावितस्त्रयोदशरात्राद्याः सत्रविशेषाः 'प्रतितिष्ठन्ति' 'ब्रह्मवर्चस्विनोऽन्नादा भवन्ति ये एता उपयान्ति' इत्यादीनि वाक्यानि विषयः, तत्र फलविधिरुताऽर्थवाद इति संशये अर्थवाद इति पूर्वपक्षे प्रतिष्ठाफलं सिद्धान्तितम्। निष्फलत्वे प्रवृत्त्यनुपपत्तेः। अतः सन्ध्योपासनाया विधूतपापत्वं ब्रह्मलोकः फलम्। श्राद्धस्य पितृप्रीतिः फलम्। गयायां पिण्डदानं पितृप्रीतिकरम्। यः कर्ता स भोक्ता इति तूत्सर्गः, पितरः फलभाजः, अनुष्ठाता वा फलभाक्। प्रत्यवायप्रागभावः फलं सन्ध्यावन्दनादिमति तिष्ठति वा, प्रत्यवायप्रागभावयुक् दुःखप्रागभावः सहव्याप्तस्ततो भवति कारणतायोगः। प्रायश्चित्तेऽपि दुःखप्रागभावकारणता प्रत्यवायाऽभावाऽऽसहयोगक्षेमलग्ना॥

अथ—इष्टसाधनत्वं विध्यर्थः 'न कलञ्जं भक्षयेदि'ति तत्र कथं नञर्थाऽन्वयः। तत्र शूल्यं मांसं कलञ्जं, विशदग्धबाणहतमृगमांसं कलञ्जं, पलाण्डुः कलञ्जं, कालिगरफलं कलञ्जं, रक्तं लाशुनं कलञ्जं कलिंगर रक्तं खडबूचाख्यं कलञ्जं वा, तत्र इष्टसाधनत्वस्य कृतिसाध्यत्वस्य चाऽप्रतीतेः नञर्थाऽन्वयो बाधितः, अतस्तत्र बलवदनिष्टाननुबन्धित्वमात्रं विध्यर्थः तदभावो नञा बोध्यते। तत्र वा—इष्टसाधनत्वं कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वं चेति त्रयोंऽशा विध्यर्थस्य, तत्र यदर्थो यत्राऽपेक्षितस्तत्र नञर्थाऽन्वयः, न तु सर्वत्र, अथवा—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वस्याऽभावो विशिष्टाऽभावः, स च विशेषणाऽभावप्रयुक्तो विशेष्याऽभावात्मकः, बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वाऽभावो विशिष्टाऽभावस्तत्र तदभाववद्भक्षणवानित्यर्थः। 'श्येनेनाऽभिचरन् यजेते'त्यत्र श्येनाख्यकर्मणा वैरिमारणं कामयमानः श्येननामकं

यागं कुर्यादिति, तत्र बलवदनिष्टाननुबन्धित्वं न बाधितं, वेदविहितहिंसाया अहिंसात्वात्। यदि 'अभिचारमहिंसं च त्रिभिः कृच्छ्रैर्व्यपोहती'ति अभिचारकर्मणो हिंसात्वं, मरणोद्देश्यकमरणानुकूलव्यापारस्य हिंसात्वात्, अकामतो विप्रादिवधोऽपि हिंसा, तथा च श्येनयागीयविध्यर्थः—कृतिसाध्यत्वविशिष्टेष्टसाधनत्वमात्रम्,अतो न तद्बाधः। यद्वा—अदृष्टाऽद्वारकत्वे सति मरणोद्देश्यकत्वे सति मरणानुकूलव्यापारत्वं हिंसात्वं, श्येनस्य अदृष्टद्वारकत्वान्न हिंसात्वम्, अतो न विध्यर्थबाधः। साक्षात्परम्परासाधारणमरणजनकत्वं हिंसात्वम्। यद्वा—श्येनस्य फलं हिंसा खड्गधातादिरूपा,व्यापारफलं मरणम्, तदभिसन्धाय सतां तत्राऽप्रवर्तनम्, विध्यर्थस्य तु न बाधः। अथवा—यथार्थवक्त्रभिप्राय इच्छा तात्पर्यम् यत्रार्थे स विध्यर्थः, इच्छात्वेन विधिशक्तिः. विधिलिङ्मात्रस्येच्छावाचिकत्वम्, इच्छया पदज्ञानोत्तरं स्वर्गकामकृतिसाध्याऽऽप्तेष्टयागबोधोत्तरं मदीयकामितबलवदनिष्टाननुबन्धीष्टसाधनयागबोधोत्तरं प्रवृत्तिः, कलञ्जभक्षणादौ तथाबोधाऽभावान्न प्रवृत्तिः। वेदे परमेश्वरतात्पर्यम्। निरीश्वरवादेऽपि श्रुतिकुमार्याः तात्पर्यवत्त्वेन परमपुरुषयोगवत्त्वे मानम्, इति सेश्वरत्वमेव सिद्ध्यति। कर्तृस्मारकैः कपिलादिभिः परमेश्वरः कर्ता स्मर्यते। 'छन्दांसि जज्ञिरे तस्मादि'ति छन्दप्राकट्यभूमिः परमात्मा निरूपितः। ब्रह्मशिवादिभिः स्मृत्वा श्रुतिरन्याऽन्या विधीयते। नित्यसर्वज्ञे भ्रमाऽसंभवात् पौरुषेयस्याऽपि वेदस्य निर्दोषप्रमात्मकज्ञानगोचरार्थवत्त्वं प्रामाणिकत्वम्।

नित्यः शब्दो व्यापक इत्यपि सर्वत्रोपलब्धिमत्त्वेन सूक्ष्मस्थूलावस्थः सुवचः, तन्मात्रात्मकतया द्रव्यत्वं तु कापिलादिसम्मतम्। ज्ञानस्य द्रव्यत्वमपि रामानुजादिभिः सम्मतम्। द्रव्याऽविनाभूतं द्रव्यात्मकं द्रव्यमित्यपि सुवचः। विपरीतपदार्थाऽभावस्याऽधिकरणात्मके बाधकाऽभावे भावानां भावात्मकत्वे द्रव्याधिकरणत्वे द्रव्यात्मकत्वेऽपि न बाधकं किञ्चित्। व्यवहारो बाधितस्तु पार्थक्ययुक्तिभिर्नामरूपकर्मप्रयोजनादिभिरबाधितः क्रियते, मृदो घटपटदण्डादिवत्। शांकरैः सर्वमाविद्यकं द्रव्यमभिमतं न निरस्यते। योगैश्चित्तवृत्तिधर्माद्या अपि गुणा द्रव्यात्मका वर्ण्यन्ते॥

अथ चैत्यं न वन्देतेत्यत्र इष्टसाधनत्वमात्रं विध्यर्थः, इष्टसाधनत्वाभाववच्चैत्यवन्दनमित्यर्थः। पचेतेत्यत्र पाकानुकूलकृतिरित्यर्थः, कृतिरेवविध्यर्थः, कृतिसाध्यत्वं त्वर्थात्प्राप्यते। अस्तु वा क्रिया साध्या, साध्यत्वसम्बन्धेन कृतिविशिष्टा, चिकीर्षा प्रवर्तिकाऽपि साध्यत्वसम्बन्धेन कृतिप्रकारिका इच्छा भवतु, न तु ज्ञानं प्रवर्तकं, न कृतिसाध्यत्वं विध्यर्थः। बोधवैचित्र्येण पचेतेत्यत्र पचतीत्यत्र च आख्यातार्थः कृतिः साध्यतासम्बन्धेन क्रियाविशेषणं, क्रियाविशेष्यं चेति शक्तिर्न भिन्ना, बोधे भेदः, लडादिस्थले क्रियाविशेष्यं शक्तिः, तत्र कर्मप्रत्ययस्थलेऽपि पाकानुकूलकृतिजन्यपाकजन्यविक्लित्त्याश्रय इति बोधः, लिङादिस्थले क्रियाविशेषणं शक्तिः। अथवा—यागपाकादौ लौकिकप्रमाणादेव कृतिसाध्यताबोधो न तु कृतिसाध्यत्वं विध्यर्थः॥

सिद्धान्तस्तु प्रवर्तकमिव निवर्तकज्ञानमपि परम्परया जायते, तच्च द्विष्टसाधनत्वादिरूपं, तच्च श्रुतिवाक्यजन्यं यत् बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाऽभावज्ञानजन्यम्, 'मा हिंस्यादि'ति हिंसाया अनिष्टसाधनत्वमावेद्यते, न तु यागाऽसाधनत्वं, 'वायव्यं श्वेतं छागमालभेते'त्यत्र हिंसाया यागसाधनत्वमावेद्यते, न त्विष्टसाधनत्वम्, अतो न विरोधः, किन्त्वेकवाक्यत्वम्, यागजनिकाऽपि हिंसाऽनिष्टोत्पादिका इति तदैकार्थ्यान्। तथा च तत्र तत्र विध्यर्थो यथाऽपेक्षो भिन्नः॥

यजेतेत्यत्र इष्टसाधनत्वं, पचेतेत्यत्र कृतिः, न भक्षयेदित्यत्र बलवदनिष्टाननुबन्धित्वं, न भुञ्जीतेत्यत्र रोगाऽजनकत्वं, व्योम्नि न गच्छेदित्यत्र कृतिसाध्यत्वं, कुमुहूर्ते न गच्छेदित्यत्र तदनिष्टाऽसाधनत्वं, पुष्ये नोद्वहेदित्यत्र अविघ्नकारित्वं, नैकः पर्वतमारोहेदित्यत्र भयजनकत्वं, रात्रावेकाकी न यायादित्यादौ इष्टत्वाऽनिष्टत्वान्यतरम्, इत्यादौ शक्तिभिन्नत्वं विविधप्रत्ययार्थत्वं चेति सामान्यशक्त्यग्रहात् व्युत्पत्त्यनुपपत्तिश्चेति, विधिप्रत्ययस्यैकैव शक्तिः स्वीकार्या, तत्र च द्वेषविषयतावच्छेद-

कत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाऽभावकूटेऽभावत्वेनाऽनुगते विधिप्रत्ययस्यैकैव शक्तिः, द्वेषविषयतावच्छेदकत्वं नरकाद्यसाधनत्वं रोगाद्यसाधनत्वं यत्प्रतीयते तत्र तत्र तात्पर्यं नियामकम् ॥

लृङः भूतभविष्यकालयोः शक्तिः। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्' 'एधश्चेदप्राप्स्यत् ओदनमप्यपक्ष्यत्' लिङनिमित्ते लृङ् क्रियातिपत्तौ भूते चेति। लिङ् निमित्तं हेतुहेतुमद्भावः। क्रियाऽनिष्पत्तौ। या तिङ क्रियाविगमे भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट्, या तु अतीतकालावच्छेद्यत्वस्य बीधिका तादृशी लृङ्, 'तण्डुलं चेत्प्राप्स्यति ओदनमपि पक्ष्यति चैत्रः' इत्यादौ स्यतिप्रभृतयश्चैत्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्यभाववत्त्वम् अनुभावयन्ति, चैत्रो न तण्डुलं प्राप्स्यति न चौदनं पक्ष्यतीत्यर्थः। 'एधश्चेदप्राप्स्यत् ओदनमप्यपक्ष्यत्' इत्यादावतीतकालावच्छेद्यम् इन्धनप्राप्त्यभाववत्त्वं चैत्रेऽनुभावयन्ति स्यतिप्रभृतयः। भाव्यतीतकालाविव क्रियाप्रतियोगिकोऽभावोऽपि लृट्लृङोरर्थः, पाकाद्यभावबोधकौ लृट्लृङौ। भाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभावो लृङादिना चैत्रादावनुभाव्यः, तण्डुलप्राप्त्यभावप्रयुक्तस्य पाकाद्यभावस्य धात्वर्थाऽनिष्पत्तिपदार्थत्वात् ॥ सन्प्रत्ययो धात्वर्थविषयकेच्छावाची, णिजर्थो हेतुकर्तृकत्वम्, अनुकूलव्यापारो लकारसामान्यवृत्त्या कर्तृत्वविपक्षा शप्प्रत्ययार्थः ॥ ४६४ ॥

**नामार्थे स्वार्थसंख्यादिबोधे शक्ताः तिङः स्मृताः।**
**आख्याताः प्रत्ययास्तेऽपि लडाद्याः कालवाचिनः॥**

स्वभिन्नप्रथमान्तस्य नाम्नोऽर्थे स्वार्थसंख्याबोधं प्रति समर्थाः प्रत्ययाः तिङः उच्यन्ते। तिङः लड्लोड्लिङ्लङ्लुङ्लिड्लिङाशीर्लिङ्लृड्लृङ्भेदेन दशविधाः। आख्याताऽसमभिव्याहृतस्थले 'चैत्रः' इत्यस्य एकत्ववाँश्चैत्र इत्यर्थः। तथा च—आख्यातः संख्यावाचीति न, तत्राऽसंभवात्। अथ—चैत्रो मैत्रश्च गच्छत इत्यत्र द्वित्ववाचकसंख्याया अभावात् नाऽऽख्यातस्य संख्यावाचकत्वमिति, तत्र चकारेण द्वित्वस्याऽनुभवात्। न च तसोपस्थाप्यस्य धात्वर्थावच्छिन्नकृतेर्विशेष्यविधयाऽन्वयबोधं प्रति तसादिसमानवचनप्रथमान्तनामोपस्थाप्यस्य तन्त्रत्वेन न तिङर्थसंख्याया अन्वयधीः, भावनायामेव तिङः स्वार्थसंख्याबोधकत्वात्। अथवा—आख्यातस्य द्विवचनादेर्द्वित्वादिवाचकत्वेऽपि नैकवचनस्यैकत्ववाचित्वं, तदग्रहदशायामपि तद्भानात् स्वम्टादिसप्तान्यतमत्वं प्रत्येकं वाऽपेक्ष्य गुरुमततिबादिसप्तषष्ठचन्यतमत्वस्य एकत्वशक्तताऽनवच्छेदकत्वात् ॥

अथ केवलादपि पचतीत्यतः पक्तैकत्ववानिति बोधात् आख्यातैकवचनस्य संख्यावाचित्वं शक्त्या निरूढलक्षणया वा तिपा च पक्तरि एकत्वबोधने द्विविधैकत्वभानापत्तेः ॥ मत्स्यण्डी फाणितं खण्डविकारावित्यत्र सुपो द्वित्वादिबोधनात् ॥ अथ—तिबाद्याः साऽशीतिशतं पदार्थान्तरविशिष्टस्वार्थावच्छिन्नावगाहिताकं शाब्दं प्रति स्वरूपाऽयोग्या भवन्ति। चैत्रो न पचति, पचत्येव, पचतीव, इत्यादौ निपातार्थे निषेधादौ विधेयतावच्छेदकत्वेन तिङर्थस्य कृत्यादेर्बोधः, न तु सर्वत्र ॥ धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकाऽन्वयबोधसमर्थः शब्द आख्यातं तदेव तिङ् तिङाख्यातयोः पर्यायत्वम्। अयं पक्तुंकाल इत्यत्र तुमर्थो धात्वर्थावच्छिन्नोऽनुकूलत्वादिः, इयं चिकीर्षेत्यत्र सनर्थं इच्छादिर्विधेयः। जीवनयोन्यादिनिखिलयत्नगतं यत्नत्वं तिङ्शक्यतावच्छेदकम्। साध्यत्वाख्यविशेष्यत्वं तु साध्यत्वविशिष्टं फलोपधायकत्वम् अनुकूलत्वं वा संसर्गमर्यादया भासते। निःश्वसितीत्यत्र निःश्वासाश्रयत्वं भासते न तु तदनुकूला कृतिरपीति, अतोऽत्र प्रयत्नत्वमेव तिङः शक्यतावच्छेदकं, न तु प्रवृत्तित्वमात्रम्, पचतीत्यत्र पाककृतिमानिति कृतिसामान्यभानात्। न हि प्रवृत्तित्वमेव कृतित्वम्, प्रवृत्तोऽस्मि निवृत्तोऽस्मि श्वसिमीत्यादौ त्रिविधप्रयत्नपृथग्भानात्। ईश्वरस्य प्रयत्नवत्त्वेन ईश्वरः करोत्येतदितिसाधुप्रयोगः। यद्वा—चैत्रो जानातीत्यत्र अवच्छेदकत्वं तिङर्थः, ईश्वरो जानातीत्यत्र समवायित्वं तिङर्थः, ज्ञानादिमत्त्वमात्रप्रतीतिः। रथो गच्छतीत्यत्र व्यापारानुकूलत्वमात्रप्रतीतिः। घटो भासते इत्यादौ दैशिकाऽऽश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे, तिङो निरूढा लक्षणा, साऽनादितात्पर्यवती लक्षणा। कृतित्ववदाश्रयत्वत्वाः

द्यखण्डत्वे आश्रयत्वेऽपि तिङः शक्तिः। पयः स्पन्दते इत्यत्र स्पन्दसहकारितिङः समवायित्वे शक्तिः ॥

अथ—आख्यातस्य काले संख्यायां च शक्तिः। अथवा—धात्वर्थान्वयिस्वार्थकर्तृतायां लडादेः स्वोपस्थाप्यवर्तमानत्वे शक्तिः, तिङः कृतौ शक्तिः। अथवा—कालो न तिङर्थः संसर्गविधया भानात्। अथवा फलं धात्वर्थः, तदनुकूलक्रिया आख्यातार्थः, तिङर्था न कृतिः। भावप्रत्ययाः स्वरूपार्थकाः, क्तिप्रत्ययः क्रिया। यद्वा—स्वार्थकर्तृत्वे लडादिर्वर्तते। कर्तृविहितलटो धात्वर्थविशेष्यं कर्तृत्वम्। कर्मविहितलटो धात्वर्थविशेषणं कर्तृत्वम्। गमनकृतिमान् रामः, रामकर्तृकगमनमिति विशेषः। चैत्रेण पच्यते इत्यत्र तृतीयया कर्तृत्वं न त्वाख्यातेन, तिङर्थकृतिः। धात्वर्थविशेष्या भवति। शाब्दिकमते कृतिरिव कर्ताऽपि तिङर्थः ॥

यादृशतिङः स्मशब्दोपसन्धानाऽभावप्रयुक्तः स्वार्थाऽतीतत्वबोधकत्वाऽभावस्तादृशी तिङ् लट् उच्यते, इयं परस्मैपदाऽऽत्मनेपदभेदेन द्विविधा, अन्या लोडाद्या अपि तिङः ईदृशो द्विविधाः। तिबादीनामष्टादशानामपि तथात्वमस्ति। आख्यातसामान्यस्य वर्तमानत्वमर्थः, तच्च अनन्तम्, लटस्तत्र शक्तिमत्त्वात्। तत्तत्कालवृत्तितया ज्ञानं नियामकम्। क्वचिद्वर्तमानसामीप्यमपि लटोऽर्थः, तच्च वर्तमानक्षणाऽव्यवहितोत्तरकालावच्छेद्यत्वं तादृशक्षणाऽव्यवहितप्राक्कालाऽवच्छेद्यत्वं चेति। चैत्रः कदा गमिष्यतीति जिज्ञासायां एव गच्छतीत्यत्र वर्तमानक्षणोत्तरकालावच्छेद्यगतिमांश्चैत्र इति बोधः। चैत्रः कदा समागत इति जिज्ञासायाम् एष आगच्छतीत्यत्र वर्तमानक्षणाऽव्यवहितप्राक्कालाऽवच्छेद्याऽऽगमनवानिति बोधः ॥

क्यजन्तस्य धातोरर्थस्य स्वार्थे कर्तृत्वेऽन्वयबोधनक्षमं यादृशमाख्यातं तत्परस्मैपदम्। पुत्रीयतीत्यत्र पुत्रादीच्छाकर्तृत्वम् आश्रयत्वलक्षणं बोध्यते, न तु पुत्रीयते इत्यादौ, तत्रेच्छार्थस्य क्यचो निवेशात् ॥ यङन्तस्य धातोरर्थस्य स्वार्थकर्तृत्वबोधनक्षमम् आत्मने पदम्। चैत्रः पापच्यते इत्यादिकमेव पौनःपुन्यविशिष्टस्य पाकादेः कर्तृत्वं बोधयति, न तु पापच्यतीत्यादिकम् ॥ उभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्राऽऽत्मनेपदम्, यत्र कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु, दाने स्वगते फले ददे, परगते फले ददानीति प्रयोगः। स्वर्गकामो यजेतेत्यत्र श्रुतं फलं शास्त्रदेशितं कर्तृनिष्ठम्। यद्वा—यत्र क्रियाफले कर्तुरभिप्राय इच्छा तत्रैवाऽऽत्मने पदम्, यजन्ति याजकाः पठन्ति पाठका इति परस्मैपदम्। परगतस्य यागादिफलस्येच्छाया तत्करणे यजन्ते याजका इत्यादिः साधुप्रयोगः। पितृस्वर्गकामः पुष्करिण्या यजेत, धनकामो गणपतिं, मोक्षकामोऽर्चयेद्धरिम् इत्यादौ परस्मैपदम् ॥

करोतु कुरुतां कुर्वन्तु—इत्यादौ ताम्प्रभृतयश्चैत्राद्युक्तत्वधीः—सहकृताः कृतादौ प्रकृत्यर्थे चैत्राद्यनुमतत्वं बोधयन्ति, न तु तिबाद्याः। पत्नी पचत्वित्यादौ अनुज्ञैव लोटोऽर्थः, सा च कर्तरिष्टत्वे सति वक्त्रनुमतत्वं, तेन चैत्रवक्तृकतादृशवाक्यात् चैत्रानुमतस्वेष्टस्य पाकस्य कर्त्री पत्नीति बोधः। शूलं विश, विषं भुंक्ष्वेति राजवाक्यादौ आज्ञा प्रत्ययार्थः, सा च वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वम्, तथा च राजानुमतत्वाऽनिष्टहेतुशूलप्रवेशकर्तृतावाँस्त्वमिति बोधः। पर्वतमुत्पाटयानि, समुद्रं शोषयाणीत्यादौ लोटः समर्थना अर्थः। सा च पराऽशक्यधर्मिकस्वशक्यत्वाऽध्यवसायः, स्वेतराऽशक्यं यत्पर्वतोत्पाटनं तद्धर्मिकस्वशक्यत्वाऽध्यवसायवानहमिति बोधः। अपेः निपातस्य वा पराशक्यत्वमर्थः, तिङः स्वशक्यताऽध्यवसायोऽर्थः, अध्यवसायोऽवधारणम्। क्वचित् वक्त्राशंसनं लोडर्थः, चैत्रोक्तात् 'जीवतु भवानि'-त्यस्य चैत्राऽऽशंसाविषयवर्तमानजीवनवांस्त्वमिति बोधः। घटो नीलो भवतु, भवान् सुखी भवतु,—इत्यत्र लक्षणया धात्वर्थो नीलाद्युत्पत्तिः, तत्र तिङा आशंसनीयत्वं प्रतीयते। आशंसाविषयवर्तमाननीलोत्पत्तिमान् नीलो घट इति बोधः। अथवा नीलपदं तात्पर्यग्राहकं, धात्वर्थः स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धः उत्पत्तिरेव। उत्पत्तावाशंसनीयत्वाऽन्वयः। बोधः पूर्ववत् ॥ एवमाशंसाविषयवर्तमानसुखोत्पत्तिमान् भवानिति बोधः ॥ विध्यन्वयबोधं प्रति समर्था लटो लोटश्च भिन्ना तिङ् लिङ् उच्यते। प्रवर्तकचिकीर्षायां यत्प्रकारकज्ञानं

हेतुः सः विधिः। प्रवर्तकचिकीर्षाजनकतावच्छेदकप्रकारताविशेषाश्रयत्वं विधित्वम्, तच्च न व्यासज्ज्यवृत्ति, किन्तु प्रत्येकं कृतिसाध्यत्वम् , इष्टसाधनत्वं, बलवदनिष्टाननुबन्धित्वं च। यागपाकादिधर्मिकविधिनिश्चयात् तच्चिकीर्षोत्पत्त्या प्रवृत्तेः। यजेत पचेतेत्यादौ यागः पाकः कृतिसाध्यः इष्टसाधनं बलवदनिष्टाननुबन्धि चेति बोधः। पङ्गुः महानदीं न तरेदित्यत्र नञादिना महानदीतरणादेः कृतिसाध्यत्वनिषेधात् कृतिसाध्यत्वं लिङर्थः। पानकामो जलं नोत्क्षिपेदित्यत्र पानकामेष्टसाधनत्वस्य, न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणस्य बलवदनिष्टाऽजनकत्वस्य निषेधाऽनुपपत्त्या इष्टसाधनत्वं बलवदनिष्टाऽननुबन्धित्वं चापि लिङर्थः। त्रिषु यत्र योऽबाधितः स लिङर्थः। विशेषफलाऽभावे इष्टसाधनत्वे सामान्ये विधिशक्तिः, स्वर्गः सामान्यं फलं, क्वचित् स्वर्गवृत्तियत्किञ्चिद्विशेषधर्मावच्छिन्नं प्रति यत् साधनमिति तादृशेष्टसाधनत्वं विध्यर्थो लिङर्थः। विशेषधर्माश्च अश्वमेधत्वप्रभृतयः, शुद्धमनस्त्वमपि विशेषधर्म इष्टसाधनं, क्वचित् तत्तद्वैजात्यावच्छिन्नः स्वर्गः एव साधनं विधिशक्यम्। यागादौ शक्यग्रहोऽपि लिङाद्यैः स एवेति। स्वर्गप्रतियोगिकाऽभावप्रयोजकाऽभावप्रतियोगित्वं वा स्वर्गसाधनत्वं, तदिष्टसाधनत्वं विध्यर्थः, साधनत्वं पदार्थान्तरं चेत्, तन्न विध्यर्थः, किन्तु इष्टसाधनत्वं विध्यर्थः। अथवा—पाकादिकृतित्वावच्छिन्नोद्देश्यकताकेच्छैव चिकीर्षा प्रवर्तिका, चिकीर्षायां पाककृतिधर्मिकेष्टसाधनताज्ञानं हेतुः, कृतिगतमिष्टसाधनत्वंलिङर्थः। कृतिसाध्यत्वम् इष्टसाधनत्वं च न विध्यर्थः। पाको मत्कृत्या साध्यतामितीच्छा प्रवर्तिकाऽपि तत्र न तस्यां पाकधर्मिककृति साध्यताज्ञानं हेतुः, किन्तु मत्कृतिसाध्यपाकधर्मिकेष्टसाधनताज्ञानं हेतुः, क्लृप्तत्वात्। स्वर्गकामो यजेतेत्यत्र इष्टसाधनीभूतयागकृतिमान् स्वर्गकाम इति बोधः, भावनाविशेष्य एव स्वर्गकामादौ लिङादिना स्वार्थः संख्याऽनुभाव्यते, स्वार्थभावनाविशेष्य एव लिङ् संख्याभिधायिनी। लिङर्थो बलवदनिष्टाऽजनकत्वम् , स्वार्थकृताविव धात्वर्थेऽपि विशेषणतयाऽन्वीयते, पङ्गुर्महानदीं न तरेदित्यत्र इष्टसाधनीभूताया महानदीतरणकृतेरभाववान् पङ्गुरिति बोधः, पानकामो जलं नोत्क्षिपेदित्यत्र इष्टसाधनत्वशून्याया जलताडनकृतेराश्रयः पानकर्ता इति बोधः। परदारान्न गच्छेदास्तिक इत्यत्र बलवदनिष्टाऽजनकत्वशून्यायाः परदारगमनकृतेराश्रय आस्तिक इति बोधः॥

अथ बलवदनिष्टाऽजनकत्वमत्र नरकाऽजनकत्वं पापाऽजनकत्वं वा, तद्विरहः कलञ्जभक्षणादौ नञा बोध्यते। ज्वरार्त्तो नाऽम्लाऽन्नमश्नीयादित्यत्र ज्वरादिप्रयोज्यतत्तद्विजातीयदुःखाऽजनकत्वे लिङो लक्षणा, अष्टमचन्द्रे न गच्छेदित्यत्र धातोर्गतिहेतुदुरिते लक्षणा, अष्टमत्वचन्द्रकालीनगतिहेतुदुरितं तत्तदनिष्टाऽजनकं नेति बोधः। सपापस्तुलां नाऽऽरोहेदित्यत्र धातोरारोहणहेत्वदृष्टे लक्षणा, तुलाऽऽरोहणहेत्वदृष्टं नेष्टसाधनमित्यर्थः॥

अथवा-साध्यताविशिष्टं विध्यर्थः, नियतोत्तरवर्तिधर्मिसाध्यताघटकप्रत्येकवस्तुनि लिङादेः शक्तिः विशिष्टं तु वाक्यार्थमर्यादया लभ्यम्, स्वर्गकामो यागानुकूलकृतिमान् यागसाध्येष्टवांश्चेति 'स्वर्गकामो यजेते'-त्यत्र बोधः। भावनायाः प्रथमान्तार्थाऽन्वयित्वनियमः, शास्त्रदेशितं फलमनुष्ठातरीत्यपिशास्त्रसमन्वयः, विश्वजिता यजेत राजन्य इत्यत्र विश्वजिद्यागसाध्यवान् क्षत्रिय इत्यन्वयबोधः, तत्र स्वर्गो यागसाध्यः कल्पनीयः॥

अथवा—स्वर्गकामो यजेतेत्यत्र लिङः कार्ये शक्तिः, यागस्य कार्यं स्वर्गकामनियोज्यताकं, स्वर्गकामकृतिसाध्यं वेति प्रथमं बोधः, ततो यागकार्यं स्वर्गकामकृतिसाध्यं स्वर्गनियोज्यताकं वेति, यागं विनाऽनुपपद्यमानं यागं स्वर्गकामकृतिसाध्यं बोधयति, स्वर्गकामनियोज्यताकं यागं कृतिसाध्यं वा बोधयति, कार्यत्वविशिष्टे लक्षणास्वीकारे अपूर्वाऽलाभात्। श्राद्धे भुञ्जीत भवान्, इह भुञ्जीथास्त्वमित्यादौ श्राद्धे भोजनाय निमन्त्रितो भवानित्यनुभवात्। निमन्त्रितत्वं तत्र लिङर्थः, तच्च स्वकर्तव्यत्वप्रकारकधीजनकवाक्यप्रतिपाद्यं, तदेकदेशे एव कर्तव्यत्वबोधे धात्वर्थो विशेषणत्वेनाऽन्वेति, तथा च श्राद्धभोजनधार्मिकस्वकर्तव्यत्वप्रकारकधीजनकवाक्यप्रतिपाद्यो भवानिति बोधः॥

यस्य यत्प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम्, एवं च पुत्रोत्सवे भवान् भुञ्जीतेत्यत्र न निमन्त्रितत्वं लिङर्थः, तत्प्रत्याख्याने प्रत्यवायाऽश्रुतेः। किन्तु आमन्त्रितत्वमेव। बालं युद्धात् तारयेस्त्वं, जलाद्विप्रं समुद्धरेः, इत्यत्र युद्धाद् बालकतारणधर्मिकजलाद्विप्रोद्धारणधर्मिकस्वकर्तव्यत्वप्रकारकधीजनकप्रत्यवायाऽनर्हवाक्यप्रतिपाद्यो भवानिति बोधः। धेनुं दद्यास्त्वमस्मभ्यः इत्यत्र प्रार्थना लिङर्थः, सा च स्वसम्प्रदानकदानधर्मिकसम्बोध्यकर्तव्यत्वप्रकारकवक्त्रिच्छाविषयत्वम्, धेनुकर्मकचैत्रसम्प्रदानकदानत्वावच्छिन्नधर्मिका या युष्मत्कर्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेष्यीभूतस्य दानस्याऽनुकूलकृतिमाँस्त्वमिति बोधः॥

भिक्षां देहि त्वमर्थिभ्यः इत्यत्र लोटोऽपि प्रार्थनार्थः, भिक्षा भिक्षणीयपदार्थः, तथा च चैत्रवक्तृकस्थले भिक्षणीयकार्यसम्प्रदानकदानत्वावच्छिन्नधर्मिका या युष्मत्कर्तव्यत्वप्रकारिका चैत्रेच्छा तद्विशेष्यीभूतस्य दानस्याऽनुकूलकृतिमाँस्त्वमिति बोधः। ह्रदो यदि वह्निमान् स्यादित्यत्र धातोर्निरूढलक्षणया भेदोऽर्थः, तदुत्तरलिङ्गश्चाश्रयत्वम्, 'यदि'-शब्दो लक्षणाया निरूढत्वसम्पत्तिकृत्। धूमवद्भेदाश्रयतावान् ह्रद इत्यर्थः। 'यदि' निपातः भेदार्थकः, ह्रदो यदि धूमवान् स्याद् वह्निमान् स्यात् इत्यत्र धूमवद्भिन्नो ह्रदो धूमव्यापकवह्निमद्भेदवानित्याकारको बोधः। गुणत्वं यदि घटे स्याद् द्रव्ये स्यादित्यत्र धातोरत्यन्ताभावोऽर्थः, तदुत्तरलिङस्तु आश्रयत्वम्, घटवृत्तित्वाभाववद्गुणत्वं, घटवृत्तित्वव्यापकीभूतस्य द्रव्यवृत्तित्वस्याऽभाववदिति बोधः। ह्रदो यदि धूमवान् स्याद् वह्निमान् स्यादित्यत्र प्रथमः स्याच्छब्दः आपादकार्थः, द्वितीयः आपत्त्यर्थः, धूमवत्तापादकताकतादृशवह्निमत्तापत्तिविशेष्यो ह्रद इति बोधः। यदि शब्दस्तात्पर्यग्राहकः। यो ब्राह्मणाय अवगुरेत् तं शतेन यातयात् इत्यत्र हेतुहेतुमतोलिङ्, यः शतयातनाहेतुब्राह्मणाऽवगोरणवान् तदीयशतयातनं ब्राह्मणाऽवगोरणजन्यमिति बोधः। ब्राह्मणायाऽवगोरणं हन्तुमुद्यत इत्यत्र पौर्वापर्यमात्रं लिङर्थः। ऋतौ स्वदारानुपेयादित्यत्र अयोगव्यवच्छेदपर्यवसितो नियमः प्रत्यवायजनकीभूताऽभावप्रतियोगित्वरूपः, तदेकदेशेऽभावे ऋत्वादिकालस्याऽवच्छेदकत्वेनाऽन्वयः, ऋतुकालाऽवच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताऽभावस्य प्रतियोगिस्वदारगमनमिति बोधः। यद्वा—प्रत्यवायहेतुत्वम् अभावश्च द्वयं लिङर्थः, प्रतियोगिधात्वर्थः, अवच्छेदकः कालः, लिङा प्रत्यवायहेतुत्वं तत्र बोध्यते, ऋतुकालाऽवच्छेद्यः स्वदारगमनाऽभावः प्रत्यवायहेतुरिति बोधः। श्राद्धदिने पितृशेषं भुञ्जीतेति नियमविधिस्थले श्राद्धदिनाऽवच्छेद्यत्वविशिष्टस्य प्रत्यवायजनकीभूताऽभावस्य प्रतियोगिपितृशेषभोजनम्। अथवा—श्राद्धदिनाऽवच्छेद्यः पितृशेषभोजनाऽभावः प्रत्यवायहेतुरिति बोधः। पञ्च पञ्चनखान् भुञ्जीतेत्यत्र लिङः अन्ययोगव्यवच्छेद्यायां परिसंख्यायां तात्पर्यम्, पञ्चैव पञ्चनखान् भुञ्जीतेत्याकारा सा, तेन शशादिपञ्चभिन्नानां पञ्चनखानां भोजनं प्रत्यवायहेतुरिति बोधः। लिङर्थः प्रत्यवायहेतुत्वम्। पञ्चपदं लक्षणया शशादिपञ्चभिन्नार्थकम्, याजनाऽध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदित्यत्र लिङः परिसंख्यार्थः, याजनादिभिन्नैर्ब्राह्मणस्य धनाऽर्जनं प्रत्यवायहेतुरित्यर्थः। न कृष्याद्यैरनापन्नो ब्राह्मणो धनमर्जयेदित्यत्र उपायान्तरैर्ब्राह्मणस्य धनार्जनं प्रत्यवायहेतुरित्यर्थः। याजनादिना धनाऽनर्जनं तु प्रत्यवायहेतुरिति नियमाऽभावान्न नियमविधिस्तत्र, किन्तु परिसंख्याविधिरेव॥

स्मशब्दस्य योगं विना शबन्तस्य धातोरर्थेऽतीतत्वस्याऽन्वयधीहेतुर्यादृशी तिङ्, तादृशी तिङ् लङ् उच्यते, तिबाद्याः स्मं विना धातोरर्थे नाऽतीतत्वं बोधयन्ति, पपाचेतिलिङादिरतीतत्वं बोधयन्नपि न शबन्तस्य, अपचदिति विनाऽपि स्मं लङन्तस्याऽतीतत्वबोधकत्वम्, अदीव्यदिति शबन्तस्य धातोरर्थे स्वार्थमवबोधयन्नपि दिवादिस्तत्सजातीय एव, तण्डुलमपचदित्यादौ अमो निरुक्तत्सजातीयत्वेऽपि न तिङ्त्वम्। अपचदित्यत्र लङोऽतीतः काल इव तन्निष्ठं ह्यस्तनत्वं पूर्वदिनवृत्तित्वरूपमर्थः, लङो ह्यस्तनत्वं नाऽर्थः, किन्तु अद्यतनभिन्नत्वम्। वर्तमानध्वंसप्रतियोगिपूर्वदिनवृत्तिपाककृतिमान्, वर्तमानध्वंसप्रतियोग्यनद्यतनकालवृत्तिपाककृतिमानिति वा बोधः। ह्यस्तनत्वादिशून्येऽपि काले क्वचित् लङादेः प्रयोगाः, ह्योऽपचदिति। ह्यःपदाऽऽख्याताभ्यामेकं ह्यस्तनत्वं बोध्यते, एकार्थपदद्वयप्रयोगेऽपि

नाऽन्यतरवैयर्थ्यम् , अभेदस्याऽऽकांक्षावत्त्वात् ॥

कृतवध्यादेशस्य हन्तेरर्थे, किं वा सिजन्तस्य धातोरर्थे याऽतीतत्वस्य बोधिका, तादृशी तिङ् लुङ् लुङ्शब्देनोच्यते, जघान हन्ति स्मेति लिङ्-लङादिको हन्तेरर्थेऽतीतत्वस्य बोधकोऽपि न कृतवध्यादेशस्य, न वा सिजन्तस्य । अवधीत् अवधिष्टाम् अवधिषुरित्यत्र लुङ्मात्रम् । वध्यात् वध्यस्तां वध्यासुरित्यत्र कृतवध्यादेशस्य तस्यार्थे स्वार्थाऽनुभाविकाऽपि आशीर्नाऽतीतत्वस्य बोधिका । अपाक्षीदिति अतीतकाल इव तन्निष्ठम् अद्यतनत्वमपि लुङामर्थः । वर्तमानध्वंसप्रतियोग्यद्यतनपाककृतिमानिति बोधः ॥

आशिश्रियत् , अदुद्रुवत् , इत्यादौ द्विरुक्तस्यैव, अप्राक्षीदित्यादौ तदन्यस्याऽपि धातोरर्थे लुङादयः स्वार्थान्वयबोधं जनयन्ति । लिटस्तु जघान जघ्नतुरित्यादौ, द्विरुक्तस्यैव धातोः स्वार्थे । पिपक्षति पापच्यते इत्यादौ सनादयस्तादृशा अपि न तिङः । जुहोतीत्यादौ द्विरुक्तस्य धातोः स्वार्थबोधकोऽपि लडादिर्न यजेरर्थे । चकास्तीति चकासधातोरर्थे स्वार्थबोधकोऽपि न अमन्तस्य तस्य । मनश्चचालेति धात्वर्थनिष्ठं परोक्षत्वमपि लिटोऽर्थः, अतीतकालवृत्त्यतीन्द्रियचलनवन्मन इति बोधः । काशाञ्चक्रे लोलूयामास ईक्षाम्बभूव इत्यादौ आम इव कृञादेरपि पदसाधुतामात्रत्वम् ।

यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकश्वस्तनत्वप्रकारकाऽन्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं श्वस्तनत्वं लुट्त्वम् । यादृशानुपूर्वीप्रकारकज्ञानत्वं धात्वर्थधर्मिकस्याऽऽशंसनप्रकारकस्य भावित्वप्रकारकस्य च बोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वम् आशीर्लिङ्त्वम् । श्वः पक्ष्यतीत्यत्र धात्वर्थे श्वस्तनत्वस्य बोधकमपि श्वःपदं न तिङ् । लृडादयस्तु धात्वर्थे भावित्वमेव बोधयन्ति न श्वस्तनत्वमपि । जीवतु भवानित्यत्र तुबादिकम् आशंसनीयत्वस्य बोधकमपि न भावित्वस्य, भावित्वस्य बोधकोऽपि लृडादिर्नाऽऽशंसनीयत्वस्य । भूयात् भूयास्तामित्यादौ अष्टादशैवाऽऽशीर्लिङः प्रकृत्यर्थस्याऽऽशंसां भावित्वं चाऽनुभावयन्ति । यत्र पाकादिकृतित्वाऽवच्छेदेनाऽतीतत्वं तत्रैवाऽतीतत्वबोधिका तिङ् , यत्र तथाविधभविष्यत्वं तत्रैव भावित्वबोधिका तिङ् । चुल्लीस्थाल्यारोपणाऽग्निवेशनतुषप्रक्षेपाद्यनुप्रस्फोटनादिः क्रियाकलापो बोध्यः, तावत्क्रियाकलापस्य 'सूपपाकं निष्पाद्य तण्डुलं पचतीति–अयं पपाचे'त्यत्र सूपकर्मकनिष्पन्नपाकगोचरकृतित्वावच्छेदेनाऽततीतत्वमुपादाय सूपम् अपाक्षीदिति प्रयोगः साधुः ॥

या तिङ् क्रियाया धात्वर्थस्य विगमे भाविकालावच्छेद्यत्वस्य बोधिका तादृशी लृट् , या तु तिङ् अतीतकालाऽवच्छेद्यत्वस्य बोधिका तादृशी लृङ् , तण्डुलं चेत् प्राप्स्यति ओदनमपि पक्ष्यति चैत्रः,– इत्यत्र स्यतिप्रभृतयश्चैत्रादेर्भाविकालावच्छेदेन तण्डुलप्राप्त्याद्यभाववत्त्वम् , अनुभावयन्ति, तण्डूलश्चेदित्यत्र तण्डुले कर्मत्वाऽप्राप्तेर्भाविकालावच्छेदेनाऽभाववान् ओदनकर्मकपाकस्य तादृशकालावच्छेदेनाऽभाववाँश्चैत्र इति बोधः । एधाँश्चेदप्राप्स्यत् ओदनमप्यपक्ष्यत्–इत्यत्र अतीतकालाऽवच्छेद्यम् इन्धनप्राप्त्यभाववत्त्वं, चानुभावयन्ति । भाव्यतीतकालाविव क्रियाप्रतियोगिकोऽभावोऽपि लृङ्लृङोरर्थः । भाव्यादिकालावच्छेदेन तण्डुलप्राप्त्यभावप्रयुक्त ओदनपाकाद्यभाव एव लृडादिना चैत्रादौ अनुभाव्यः, क्रियाविरहप्रयुक्तस्य क्रियान्तरविरहस्यैव क्रियातिपातत्वात् ॥

सुबर्थाऽनन्वितयादृशस्वार्थको यस्तिङन्यः प्रत्ययः, सः तादृशार्थे धात्वंशप्रत्ययः, पुत्रीयतीत्यत्र क्यजाद्यर्थस्य इच्छादेर्न सुबर्थेऽन्वयः, किन्तु तिङर्थे, तस्य धात्वंशत्वम्, पिपक्षया कुरुते इत्यत्र सान्वयसंज्ञानुरोधेन धात्वन्ताऽवयवरूप एव प्रत्ययो धात्वंशप्रत्ययः, पिपक्षादिधात्वन्तभागत्वात् सनादिप्रत्ययस्य । सनन्तार्थः पाकेच्छा । सनर्थः इच्छामात्रम् । भावकृल्लभ्यम् इच्छास्वरूपम् ।

धात्वंशप्रत्ययो नामप्रकृतिको धातुप्रकृतिकश्च, नामप्रकृतिकः क्यच्क्यङादि, धातुप्रकृतिकः सन्यङादिः । चैत्रः पुत्रीयतीत्यत्र क्यजर्थेच्छायां तत्प्रकृत्यर्थतावच्छेदकीभूतपुत्रत्वाद्यवच्छिन्नविषयतया प्रकृत्यर्थस्य पुत्रादेस्तस्याश्च तिङर्थे आश्रयत्वे निरूपकत्वे-

नाऽन्वये साकांक्षत्वम्, तथा च पुत्रत्वेन पुत्रगोचरेच्छाया आश्रयत्ववाँश्चैत्र इत्यन्वयबोधः। मनुष्यत्वादिप्रकारेण पुत्रेच्छायां मानुषीयतीति प्रयोगः। आत्मनः पुत्रीयतीति न प्रयोगः, आत्मनः पुत्रत्वेनेच्छाया अभावात्। आत्मपुत्रीयतीतिप्रयोगस्तु आत्मपुत्रत्वस्य प्रकृत्यर्थतावच्छेदकतया स्यात्, पुत्रं काम्यतीति तु प्रयोगः साधुः। पुत्रीयति माणवकमित्यत्र आचारसदृशाचारः क्यजर्थः, तद्विशेषणीभूताचारे प्रकृत्यर्थस्य, विशेष्यीभूते च माणवकादेः कर्मत्वेनाऽन्वयः, तेन पुत्रकर्मकाऽऽचारसदृशं यन्माणवककर्माऽऽचरणं तदनुकूलकृतिमानिति बोधः। आचरणं पोषणादि। शत्रुं सर्पीयतीत्यत्र सर्पकर्मकाचरणतुल्यं यच्छत्रुकर्मकाचरणं तदनुकूलकृतिमानिति बोधः। आचरणमत्र ताडनमारणादि विपादि च। प्रासादे कुटीयतीत्यत्र कुटयधिकरणकाचारसदृशो यः प्रासादाधिकरणकाचारः तदनुकूलकृतिमानित्यर्थः। आचारश्चात्र शयनादिः। इदमिवाऽऽचरतीत्यादौ सादृश्यार्थे न क्यच्। नमस्तपोवरिवसामित्यर्थे कर्तृत्वे क्यच्, श्येनायते काक इत्यत्र क्यङोऽपि आचारसदृशाचारोऽर्थः, प्रकृत्यर्थश्येनादेः कर्तृत्वेन साकांक्षकत्वात्, श्येनसदृणाचारसदृशाचारवान् काक इत्यर्थः। अत्राचारो मांसहरणादिः। श्येनी इवाऽऽचरति—श्येनायते काकीति क्यङि भाषितपुंस्कत्वेन पुंवद्भावः। गार्ग्यमिच्छतीति गार्गीयति, अत्र क्यचीव गार्ग्य इवाऽऽचरतीत्यर्थे गार्गायते इत्यत्र क्यङि अपि अपत्यप्रत्ययस्य लोपः। राजीयतीत्यादौ नस्य लोपः। ओजायते अप्सरायते पयायते पयस्यते गर्दभति अश्वतीत्यादौ सकारलोपः। ओजःपदम् औजस्विपरम्। गव्यते नाव्यते इति गौरिवाऽऽचरतीत्यर्थः, नौरिवाऽऽचरतीत्यर्थः। अवादेशः। पूर्वम् अनुन्मना उन्मनावदाचरतीति उन्मनायते दुर्मनायते। अवेहत् वेहदिवाचरतीति वेहायते इत्यत्र तस्य लुक, गौः गर्भोपघातिनी वेहत्। अलोहितो लोहितो भवतीति लोहितायति लोहितायते स्वरित्त्वादुभयपदम्। सुखम् अनुभावयतीत्यर्थे सुखायते एवं दुःखायते अलीकायते इत्याद्याः। शब्दं करोतीति शब्दायते, वैरायते कलहायते इत्याद्याः। गिलितस्य पुनश्चर्वणं रोमन्थः, रोमन्थं करोतीत्यर्थे रोमन्थायते गौः। नरं मुण्डयतीत्यत्र नरनिष्ठमुण्डनं, जलं मिश्रयतीत्यत्र जलनिष्ठमिश्रणं, वासः शिथिलयतीत्यत्र वासोनिष्ठं शैथिल्यम्, अन्नं मधुरयतीत्यत्र अन्ननिष्ठं माधुर्यं, चैत्रं मित्रयतीत्यत्र चैत्रनिष्ठमित्रत्वं, करोतीत्यादिको नामप्रकृतिकस्य णेः अर्थः। मुण्डनानुकूलकृतेर्धात्वर्थतया तज्जन्यमुण्डनफलस्य नरादौ सत्त्वात् कर्मत्वम्। वासः पृथु मृदु भृशं वा करोतीत्यर्थे वासः प्रथयति म्रदयति भ्रशयति इत्यादौ ऋतो रेफादेशः। चैत्रं परिव्रढयतीत्यत्रापि रेफादेशः। कण्डादिभ्यस्तत्करोत्यर्थे यञ्, न तु णिः, गात्रं कण्डूयति कण्डूयते वा, गात्रस्य कण्डुं करोतीत्यर्थः, ञित्वात् उभयपदम्। स्वर्गे महीं वसतिस्थानं करोतीत्यर्थे स्वर्गे महीयते, ङानुबन्धेषु पाठादात्मनेपदम्। कृतयति वर्णयतीत्यत्र कृतं वर्णं गृह्णातीत्याद्यर्थः। सत्यं वक्ति अर्थं वक्ति प्रापयति स्थापयति, प्रियस्थिरादेः प्रस्थाद्यादेशः। अश्वतरं वदति अश्वयति, तरप्रत्ययलोपः। गोमन्तम् आचष्टे गवयति, गुणवन्तम् आचष्टे गुणयति, स्रग्विणम् आचष्टे स्रजयति, मन्तुवन्तुविनां लुगपि। कर्तारमाचष्टे कारयति, तृचः। अन्तिकम् आचष्टे नेदयति, वाढम् आचष्टे साधयतीत्यत्र अन्तिकवाढयोर्नेदसाधौ भवतः। युवानमल्पं वा वदतीति कनयति, युवाऽल्पयोः कन् वा, पक्षे यवयति, कल्पयतीत्यपि, स्थूलमाचष्टे दूरमाचष्टे इत्याद्यर्थे—'स्थल-दूर-युव-क्षिप्र-क्षुद्राणां'—अन्तस्थादिलोपो गुणश्च, क्रमेण स्थवयति दवयति यवयति क्षपयति क्षोदयति। बहून् आचष्टे भूययति, बहोर्भूयादेशः। हस्ताद्यंगेभ्यस्तन्निरस्यतीत्यर्थेऽपि णिः, हस्तं पादं निरस्यति हस्तयते पादयते, आत्मनेपदम्। तूस्तं विनिहन्तीति वितूस्तयति, तूस्तं केशजटा। वस्त्रं संछादयतीति संवस्त्रयति, पुच्छमुत्क्षिपतीति उत्पुच्छयते गौः। भाण्डानि सञ्चिनोतीति संभाण्डयते भिक्षुः। चीवरं सम्मार्जयतीति सञ्चीवरयते। तत्तदर्थप्रतीत्यर्थम् अव्ययपूर्वकत्वम्। वीणया उपगायतीति उपवीणयति यशः, हस्तिनऽतिक्रामतीति अतिहस्तयति गृहम्, सेनयाऽभिमुखं यातीति अभिसेनयति समरं, श्लोकैरुपस्तौतीति उपश्लोकयति शिवम्। कर्मप्रत्यये तूपवीण्यते

यशः, करणार्थे विधिः। अशनधनाभ्याम् आयः, उदकात् न्यः, कलोपश्च, तदिच्छतीत्यर्थे अशनायति धनायति उदन्यति। एते नामप्रकृतिकाः प्रयोगाः॥

अथ धातुप्रकृतिकाः प्रयोगाः—चैत्रं भावयति आत्मानं गमयति, णेः अनुकूलव्यापारो व्यापारमात्रं वाऽर्थः, चैत्रोत्पत्त्यनुकूलव्यापारवानित्यर्थः। आत्मगत्यनुकूलव्यापारवानित्यर्थः। क्वचित् ज्ञानानुकूलव्यापारो णेः अर्थः, कंसं घातयतीति कथकः, कंसहननज्ञानानुकूलव्यापारवानित्यर्थः। व्यापारोऽभिनयादिः। चुरादिभ्यस्तु स्वार्थिकस्य णेः स्वरूपम् अर्थः, चोरयति चिन्तयतीत्यादौ स्तेयादिस्वरूपस्याऽनुकूलकृतिमानित्याद्यर्थः।

रक्षणस्वरूपं करोतीत गोपायति, सन्तापस्वरूपं करोतीति धूपायति, गतिस्वरूपं करोतीति विच्छायति, व्यवहारस्वरूपं करोतीति पणायते, स्तुत्यादिस्वरूपं वा करोति पणायते, गोपाया रक्षा, धूपाया तापः, विच्छाया गतिः, पणाया व्यवहारः, पनाया स्तुतिः, आयः। स्वर्गं कामयते स्वर्गगोचरेच्छास्वरूपवानित्यर्थः। णिङ्, ङानुबन्धत्वात् आत्मनेपदम्। घृणास्वरूपं करोतीति ऋतीयते, गोप्ता गोपायिता, कमिता कामयिता, अर्त्तिता ऋतीयिता, इति-द्विविधः प्रयोगः॥

जुगुप्सते बीभत्सते इत्यत्र निन्दास्वरूपस्य कर्ता इत्यर्थः। तपस्तितिक्षते इत्यस्य तपःकर्मकसहनस्वरूपस्य कर्तेत्यर्थः। चिकित्सति आतुरमित्यस्य आतुरकर्मकप्रतीकारस्वरूपं करोतीत्यर्थः। रिपुं विचिकित्सतीत्यस्य रिपुकर्मकनिग्रहस्वरूपं करोतीत्यर्थः। मन्मनो विचिकित्सति मन्मनःसन्देहस्वरूपवदित्यर्थः। मानं विचारस्वरूपं करोति पूजास्वरूपं वा करोतीति मीमांसते। दानं खण्डनस्वरूपं करोतीति दीदांसते, शानं तेजनस्वरूपं करोतीति शीशांसते, पाकं चिकीर्षतीति, ओदनं बुभुक्षते इति, सनोऽर्थः इच्छा, तपस्या द्वितीयान्तेन लभ्यस्य पाकादिविशेष्यताकत्वस्य स्वरूपसम्बन्धेन, धात्वर्थस्य तु कृत्यादेः स्वसाध्यत्वादिप्रकारिनिष्ठस्वसमानकर्तृकत्वसम्बन्धेनाऽन्वयात्, पाकधर्मिका निरुक्तसम्बन्धेन कृतिमती या इच्छा तद्वानिति बोधः। यद्वा—पाकं चिकीर्षतीत्यादौ द्वितीयार्थस्य विषयत्वस्य मूलधात्वर्थेऽन्वयः, तदर्थस्य तु समानकर्तृकत्वविषयत्वाभ्यां सनर्थेच्छायाम्, तथा च पाकविषयताककृतिसमानकर्तृकतद्गोचरेच्छावानित्याद्यर्थः। सन्नन्तात् न सन्, अतः चिकीर्षिषति इति न प्रयोगः। प्रापच्यते इत्यादौ यङः पौनःपुन्यमर्थः, तच्च प्रकृतधात्वर्थजातीयक्रियोत्तरतादृशक्रियाऽनन्तर्यरूपम्, प्रकृत्यर्थे विशेषणत्वेनाऽन्वेति, पाकोत्तरपाकानन्तर्यवत्पाककर्तेति वाक्यार्थः। पुनः पुनः पक्तृत्वं न, अतः पापच्यते इति प्रयोगो न। तण्डुलं पापच्यते इत्यत्र तु यङन्तधातूपस्थाप्ये सर्वत्र पाकादौ तण्डुलकर्मत्वस्याऽन्वयः। 'माषं पक्त्वा मुद्गं पक्त्वा तण्डुलं पापच्यते' इति न प्रयोगः। काष्ठेन पाकः, करीषेण पाकः, तुषेण पापच्यते, इति न प्रयोगः। जंगम्यते चंक्रम्यते इत्यत्र धात्वर्थगतं पौनःपुन्यमिव कौटिल्यमपि यङोऽर्थः, पुनःपुनःकुटिलगतिमानिति बोधः। कुटिलं जंगम्यते कौटिल्यं भासते इत्येकमेवेति तदन्यतरवैयर्थ्यम्। लोलुप्यते चञ्चूर्यते जेजप्यते दंदश्यते निजेगिल्यते इत्यादौ निन्दितत्वमपि, तेन पुनःपुनर्गर्हितं लुम्पतीति चरतीति तत्राऽर्थः। पुनःपुनः कथयति जागर्ति दरिद्रातीत्याद्यर्थे न यङ्॥

विभक्तिधात्वंशकृद्भ्योऽन्यः प्रत्ययस्तद्धितं, वृक्षक इति ह्रस्वार्थकः कः तद्धितम्। मरीचेरपत्यं मारीचः, अण्। अदन्तादिण् दक्षस्याऽपत्यं दाक्षिः। अस्याऽपत्यम् इः। निषादादेरपत्यबोधने, अचः अंगादेशः, इण्, नैषादकिः वैयासकिः चाण्डालकिरिति च। शिवादिभ्यः अण्, वाशिष्ठः वासुदेवः साहदेवः नाकुलः। प्रथमाऽपत्यं तु शतानीकः नाकुलिः, इण्। गर्गस्याऽपत्यं गार्ग्यः काठ्यः वात्स्यः पाराशर्यः कार्तवीर्यः जामदग्न्यः, ण्यः। अन्यगर्गस्याऽपत्यं गार्गिः। कुञ्जादेर्गणात् अपत्यसामान्ये आयनण् ततो ण्यश्च अस्त्रियाम्, कौञ्जायन्यः ब्राघ्नायन्यः। स्त्रियांकौञ्जायनी, न ण्यः। सुमंगलादित्वात् ङीष्। अथ कौञ्जायनाः पुमांस इत्यपि, न ण्यः। गार्गिः कौञ्जिरित्यत्र नाऽपत्यत्वेन बोधः। किन्तु प्रथमाऽपत्यत्वेनेति॥

तान्त्रवाय्यः, तान्त्रवायिः, कौम्भकार्य कौम्भकारिः, शिल्पिवाचकाः। महासैन्यो महासैनिः, सेनान्तवाचकाः। लाक्षण्यो लाक्षणिः विभाषया इण् ण्यश्च। नडादेः णायनः नाडायनः चारायणः।

कुञ्जगणीयनडादिः । बाह्वादेरिण् बाहोरपत्यं बाहविः, सुमित्राऽपत्यं सौमित्रिः । विनतायाः सौपर्ण्याः कमण्डल्या युवत्या वाऽपत्यं वैनतेयः सौपर्णेयः कामण्डलेयः यौवतेयः इत्यादौ स्त्रीप्रत्ययान्तात् एयण्, न तु अण् । अत्रेरपत्यम् आत्रेयः, शौचेयः हारेयः आग्नेयः इति प्रयोगाः । वैधो मारीचः, नदीभानुषीनाम्नो नैयण्, यामुनः सैप्रः सारस्वतः सौभद्रः कौशल्यः। एयण् जाह्नवेयः द्रौपदेयः कौशलेयः । सुभगाप्रभृतेः एयण् मिनादेयः, सौभगाया अपत्यं सौभागिनेयः, दौर्भागिनेयः, पारस्त्रैणेयः, सौहार्दवत् उभयपदस्य वृद्धिः, कौलटिनेयः सतीपुत्रः, असतीपुत्रस्तु कौलटेयः । शीलहीनांऽगहीनानां स्त्रीप्रत्ययान्तानाम् ह्रण् वा, दास्या अपत्यं दासेयः दासेरः, काणानामपत्यं काणेयः काणेरः, कौलटेरः, चटकाऽपत्ये नित्यमेरण् न त्वेयण्, चाटकेरः, स्त्र्यपत्ये तु चटका । तिकस्याऽपत्यार्थे नित्यमायनिण्, तैकायनिः कौशल्यानिः, तस्याऽपत्यं तादायनिः, तादः तादेयः, यादायनिः यादः यादेयः, स्वसुरपत्यं स्वस्रीयः, भ्रातुरपत्यं भ्रात्रीयः, भ्रातृव्यः, द्वेष्टरि तु भ्रातृव्यो रूढः, श्वशुरस्याऽपत्यं श्वशुर्यः । कुलस्याऽपत्यार्थे यः एयकण् च, कुल्यः कौलेयकः, सपूर्वात् केवलाच्च कुलात् ईनः, आढ्यकुलीनः कुलीनः । महाकुलात् अण् ईनण् च । महाकुलो महाकुलीनः । दुष्कुलात् एयण् दौष्कुलेयः दुष्कुलीनः । देशे क्षत्रिये अण्, पञ्चालानां राजा अपत्यं वा पाञ्चालः वैदेहः ऐक्ष्वाकः, क्वचिदुवर्णलोपः । नकारादेः कुरुतः कौशलात् ण्यः, नैषध्यः कौरव्यः कौशल्यः । अण्—नैषधः । इदन्तात् ण्यः कौन्त्यः । स्त्रीप्रत्ययान्तकुन्तिशब्दात् एयण्—कौन्तेयः । कुन्त्यवन्तिकुरुभ्यः स्त्रियाम् ण्यस्य लुक्, कुन्तीनां स्त्र्यपत्यं कुन्ती अवन्ती कुरूः । कम्बोजादेः अपत्ये राजनि च अणो लुक्, कम्बोजानाम् अपत्यं राजा वा काम्बोजः चौलः केरलः। द्वयोर्मात्रोरपत्यं द्वैमातुरः त्रैमातुरः षाण्मातुरः भाद्रमातुरः । स्त्रियां तदन्तात् ङीप् द्वैकातुरी । गोरपत्यार्थे यः—गव्यो वत्सः, ण्यः यमस्याऽपत्यं याम्यः । आदित्यस्याऽपत्यम् आदित्यः, अदितेरपत्यम् आदित्यः, दितेरपत्यं दैत्यः । अदितिदितिभ्याम् एयण्—आदितेयः दैतेयः ॥ उपगोरपत्यस्य औपगवस्याऽपत्यमित्यर्थे औपगविः गार्ग्यायिणः, पुनरपत्यप्रत्ययः । गुर्वायत्तम् अपत्यं युवा, युवराजः । ण्याऽन्तात् इणन्ताच्च गुर्वायत्रापत्यार्थे आयनण् गार्ग्यस्य गुर्वायत्तापत्यम्—गार्ग्यायणः दाक्षायणः । कौञ्जायन्यः इत्यत्र न आयनण् । द्रोणात् अपत्यार्थे आयनण् द्रोणायनः अश्वत्थामा, पक्षे द्रौणिः । गर्गस्य प्रथमाऽपत्यं गार्गिः वात्सिः इण् । कुञ्जस्य प्रथमाऽपत्यं कौञ्जिः मौञ्जिः, न आयनण् । पुष्येण सहेन्दुमदर्थे पौषं दिनं पौषी रात्रिः, आश्विनं श्रावणं कार्तिकम् । नक्षत्रद्वन्द्वात् ईयः; पुष्यपुनर्वसुभ्यां सहेन्दुमद्दिनं पुष्यपुनर्वसवीयम्, अश्विनीभरणीया रात्रिः । हरिद्राया रागयुक्तमित्यर्थे अण्—हारिद्रं कौसुम्भं वा वासः, लाक्षया रोचनया रक्तार्थे इकण्—लाक्षिकं रौचनिकम् । शकलकर्दमाभ्यां तेन रक्तमित्यर्थे वा इकण्—शाकलिकः शाकलः, कार्दमिकः कार्दमः । नीलेन नील्या वा रक्तमित्यर्थे अः नीलः पटः । पीतेन पीतया वा रक्तमित्यर्थे कः—पीतकः पटः । रक्तसदृशे तद्धितं तेन रक्तम्,—हारिद्रः कुक्कुटपादः, लाक्षिकम् अधरम्, पीतकं स्वर्णम् । समूहार्थे अण्—काकानां समूहः काकम्, शुकानां समूहः शौकम्, भिक्षाणां समूहो भैक्षम्, युवतीनां समूहो यौवतम्, तद्धिताऽनपत्यस्वरे पुंवद्भावः यौवनम् । पाशानां समूहार्थे यः, तदन्तः स्त्रीलिङ्गे—पाश्या धूल्या वात्या वन्या खल्या रथ्या । गर्गादिगोत्रेभ्यः समूहे अकण् गार्गकं दाक्षकम्, उक्षाणां समूहः औक्षकम् औष्ट्रकम् । अश्वानां समूहे ईयः विभाषा, अश्वीयः आश्वम् । कण्—धेनूनां समूहो धैनुकम्, अधेनोस्तु अण्—आधेनवम् । कण्—सुन्दरगर्गाणां समूहः सौन्दरगर्गकम् । यण्—केदाराणां समूहः कैदार्यम्, इकण्—कैदारिकम्, अकण्—कैदारकम् । पिष्टार्थकात् कवचितो हस्तिश्च इकण्—पूपानां समूहः पौपिकं, शाष्कुलिकं. कवचिनां समूहः कावचिकम्, हस्तिनां हस्तिनीनां समूहो हास्तिकम् । केशानां समूहे त्विकण्,—यण् च—कौशिकं कैश्यम् । खलोलूकपद्मेभ्यो निःसमूहे इतिः—खलिनी उलूकिनी पद्मिनी । रथात् कड्यः रथकड्या स्त्रियामेव ।

गणिकादिभ्यः समूहे यण् गाणिक्यं ब्राह्मण्यं माणव्यं वाडव्यमिति । तल् ता समूहार्थे गजता बन्धुता जनता सहायता स्त्रीलिंगोऽयं प्रत्ययः । पृष्ठात् समूहे यत्—पृष्ठ्यं । चरणेभ्यस्तु समूहे धर्म इव प्रत्ययाः स्युः, कठानां धर्मः काठकम् , समूहार्थोऽपि काठकम् छान्दोग्यम् आर्थर्वणं–समूहार्थः । अण् वा निमित्तं वेत्ति नैमित्तः, औत्पात्तः, मौहूर्तः, छन्दो वेत्ति अधीते वा छान्दसः, वैयाकरणः, यज्ञवाचिभ्य इकण् अग्निष्टोमं वेत्ति अधीते वा आग्निष्टोमिकः । सूत्रादितः इकण्–सौत्रिकः वार्तिकः सांख्यसूत्रिकः । अण्—काल्पसूत्रम् । उक्थं वेत्त्यधीते वा औक्थिकः, नैयायिकः, पातञ्जलिकः । लोकायतं बौद्धशास्त्रं वेत्त्यधीते वा लौकायतिकः । वायसविद्यां वेत्त्यधीते वा वायसविद्यिकः, सर्पविद्यिकः, चारविद्यिकः । अण्–आङ्गविद्यः ज्योतिर्विद्यः गान्धर्वविद्यः धार्मविद्यः क्षात्रविद्यः । त्र्यवयवां विद्यां त्रिविधां वेत्त्यधीते वा त्रैविद्यः–अण् । तिस्रो विद्या वेत्तीति त्रिविद्यः, तद्धितस्य लुक् । टिकः–शतपथं षष्टिपथं वेत्ति शतपथिकः षष्टिपथिकः । स्त्रियां शतपथिकी । कः–क्रमं वेत्ति क्रमकः सामकः शिक्षकः मीमांसकः । पदात्तु कः–इकश्च,–पदकः पदिकः । तद्धितस्य अण्प्रभृतेः लुक्–सर्वं वेदं वेत्ति सर्ववेदः सर्वतन्त्रः सादिवार्तिकः । अष्टावध्याया यस्य तदष्टाध्यायं सूत्रं तद्वेत्त्यधीते वा इत्यर्थे कः–अध्यायपदस्य लुक्, अष्टकाः पाणिनीयाः, पञ्चकाः गौतमीयाः, दशकाः व्याघ्रपदीयाः, द्वादशका जैमिनीयाः । तत्सम्बन्धिनि तस्येदम्–अण्–वृक्षस्येदं वार्क्षम् दार्शम् । स्वस्येदमित्यर्थे स्वराजादिभ्यः कादिः ईयः स्वकीयं राजकीयं परकीयं देवकीयं जनकीयमिति । कः–स्वकम् , ईयः–स्वीयम् , कादिः ईयः स्वकीयम् । तस्येदमर्थे त्यदादिगणात् ईयः–त्वदीयं तदीयं मदीयम् इदमीयम् । तस्येदमित्यर्थे भवत पदात् ईये, तस्य दाऽऽदेशे भवदीयम् । शत्रन्तस्य भवत इदमर्थे भावतम् अण् । यत् परार्धस्येदम् परार्ध्यम् अवरार्ध्यम् आर्ध्यम् उत्तरार्ध्यम् अधमार्ध्यम् । इकण्–पौर्वार्धिकम् दाक्षिणार्धिकम् । वा यत्–पौर्वार्ध्यं दक्षिणार्ध्यम् । युवयोर्यूष्माकं वा इदम्–आवयोरस्माकं वेदम्-इत्यर्थे युष्मदस्मदोर्युष्मा-काऽस्माक–भावोत्तरम् अण् ईनण् च वा–यौष्माकं यौष्माकीणम् , आस्माकम् आस्माकीनम् । पक्षे ईयः,–युष्मदीयम् अस्मदीयम् । तवेदं ममेदमित्यर्थे तवममेत्यनयोः अण् ईनण् कादिकः स्यात्,—तावकं तावकीनं, त्यदादित्वात् ईयः–त्वदीयं मदीयम् । अरण्यस्य हस्त्यर्थे कण्–आरण्यकः करी, पन्थाः, मानुषः, अध्यायः, अरण्यगीतत्वात् आरण्यकः । गोमये अरण्यस्येदम् आरण्यकम् आरण्यं वा गोमयम् । नित्यं णः—अरण्यस्येदम् आरण्या लता, आरण्यः पशुः–तस्येदम् । तत्र भवार्थे अण्–भूमौ भवं भौमम् , ग्रीवात्र. अण् एयण् वा ग्रैवं ग्रैवेयम् । मः–ऊधसः सस्य लुक् ,–आदौ भवः आदिमः, भवो वर्तमानः, अधो भवः अधमः । अग्रे भवार्थे डिमः–अग्रिमः पश्चिमः अन्तिमः । कालवाचिभ्यः इकण्,–मासे भवः मासिकम्, सांवत्सरिकं मौहूर्तिकं पौर्वाह्णिकम् आपराह्णिकम् । शरच्छब्दात् श्राद्धे इकण्–शारदिकं श्राद्धम् । अण्–शारदश्चन्द्रमाः । इकण्–विकल्पे,–शारदः शारदिको वा ज्वरः आतपो वा । निशायां भवः नैशिकं नैशं वा प्रादोषिकं प्रादोषं वा तमः । श्वसः श्वपदात् तादिः इकण् विकल्पेन, श्वोभवं शौवस्तिक धनम् , पक्षे श्वस्त्यं श्वस्तनं, त्यतनौ । सन्ध्यादिगणात्तत्र भवमित्यर्थे अण्–साध्यं सान्धिवेलम् आमावस्यं त्रायोदशं चातुर्दशं पाञ्चदशं पौर्णमासं प्रातिपदं वा तमः, ग्रीष्मे भवं ग्रैष्मं शैशिरं, तदन्तविधिना पूर्वग्रैष्मम् , उत्तरवृद्धिः । पुष्ये भवं पौषम् औषधम् , तिष्ये भवं तैषम् , रोहिण्यां भवं रौहिणम् , अण् साम्वत्सरं फलं पर्व वा । इकण्–साम्वत्सरिकं कर्म । एण्यः–प्रावृषेण्यं तृणम् । वर्षासु भवं वार्षिकं तृणम् । इकण् अण् च, अणि तस्य वा लुक्—हैमन्तिकं हैमनं हैमन्तमिति च । तदन्तविधिना—पूर्वहैमनम् । सायंप्रभृतिभ्यः सायन्तनं चिरन्तनं प्रगेतनं प्राह्णेतनं दिवातनं दोषातनं भवार्थे तनट् । टाऽनुवन्धेन सायन्तनी तिथिः । त्नः नो वा—तनट्,—परुत्नं परारित्नं चिरत्नं, पक्षे परुत्तनं परारितनं चिरतनं, पुराशब्दात् भवार्थे नः–पुराणं पुरातनम् । तत्काले भवम्–इकण् , तात्कालिको बोधः—आपत्कालिकः । तदन्तस्य स्त्रिया वा ङीप्, तात्कालिकी

तात्कालिका मतिः। इयण्–पर्वते भवो मनुष्यः पार्वतीयः। अन्यत्तु अण् पार्वतीयं पार्वतं फलम्। दिशि भवं यत् दिश्यम् आद्यम् अन्त्यं रहस्यं दिव्यम् उदर्यं यूथ्यं वश्यं दण्डयम। दन्ते भवं दन्त्यं कण्ठ्यम् औष्ठ्यं मूर्धन्यं मुख्यम् उरव्यम्। एयण्–दृतौ भवं दार्तेयं वास्तेयम् अस्थेयं कौक्षेयं कालसेयम् आहेयम्। यण्–चतुर्मासेषु भवं चातुर्मास्यं व्रतम्, चतुःपदम् आषाढादिचतुर्मासलक्षकम्। अण्–चातुर्मासो यागः। इकण्–आन्तर्दैहिकम् आन्तर्गणिकम् अव्ययीभावः। अण्–अन्तःकरणे भवम् आन्तःकरणं दुःखम्। समाने भवं सामानिकं समानदैशिकम्। ईयः–कवर्गे भवः कवर्गीयो वर्णः, चवर्गीयः टवर्गीयः, जिह्वामूलीयः अङ्गुलीयः। यत् ईन ईयः–मित्रवर्गे भवो मित्रवर्ग्यः मित्रवर्गीणः मित्रवर्गीयः। नण् स्नण् यत्–स्त्रियां भवः स्त्रैणः, पंसि भवः पौंस्नः, स्त्रियाः पुंसश्च भावेऽर्थे नण्–स्नणौ विकल्पेन, स्त्रिया भावः स्त्रैणं स्त्रीत्वं च, पुंसो भावः पौंस्नं पुंस्त्वं च। यत्–गोरपत्यं, गौर्देवता यस्य, गवा चरति, गोः समूहः, इत्याद्यर्थे गव्यम्। मथुरायां भव इत्यर्थे इव मथुरायां जात इत्यर्थे अण्–माथुरः, स्त्रैणः पौंस्नः ग्राम्यः ग्रामीणः इक्–प्रावृषि जातं प्रावृषिकं पत्रं प्रावृषिका वृष्टिः, शरदि जातम् इकण् शारदिकम् अन्नम्, पूर्वाह्णे जातं पौर्वाह्णिकम् अपराह्णिकम् माध्याह्निकम् आर्द्रायां जातम् आर्द्रकं मूलायां जातं मूलकम्। ह्रस्वः। अमावास्यायां जात इत्यर्थे अण् अकश्च अमावास्यः अमावास्यकः बालकश्च, आमावास्याकः। तद्धितस्य लुक् गोस्थाने जातं गोस्थानं पत्रम्, अश्वस्थानं शशस्थानम्, गोशालं खरशालं, नित्यं क्लीब्। वत्सशालायां जातो वत्सशालः वात्सशालो वृक्षः। अभिजित् आभिजितो वा बालकः। अनुराधायां जातः अनुराधः, स्त्रीप्रत्ययस्य लुक्, तिष्यः पुष्यः हस्त स्वातिः पुनर्वसुः विशाखः बहुलः। एयण्–बहुला कृत्तिका तत्र जातो बाहुलेयः श्राविष्ठेयः आषाढेयः। शतभिषजि जातः शातभिषः शातभिषजः शतभिषक्। रूप्यः—रूपात् आगतं समरूप्यं विषमरूप्यम्। शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः। अञ् क्षुद्राभिः कृतं क्षौद्रम्। अण्–हस्तिपदस्याऽपत्यं हस्तिपदः तस्याऽपत्यं हास्तिपदः। मयट्–विकारे पिष्टमयं भस्म, कन्–संज्ञायां पिष्टकोऽपूपः। गोपयसोर्यत् विकारे गव्यम् द्रोर्विकारो द्रव्यम्। माशब्दः कारि इति य आह सः माशब्दिकः। ठक् ऐच् वा–श्वापदस्येदं श्वापदं शौवापदं वा। ठक्–पन्थानम् आवृत्य तिष्ठति पारिपन्थिकश्चौरः। ण्यः ठक् च सेनां समवयन्ति सैन्याः, सैनिकाः। इकक् शाक्तीको याष्टीकः। णः गुरुदोषावरणं छत्रं तच्छीलमस्य, छात्रः। टिठन्–ओदनं नियुक्तं दीयतेऽस्मै ओदनिकः। ठन्–देवागारे नियुक्तो दैवागारिकः। ष्ठल्–आवसथे वसति–आवसथिकः। यत्–रथं युगं वहति रथ्यः युग्यः। ठक्–हलं वहति हालिकः। यत्–धनं लब्ध्वा धन्यः। ञ्यः–गृहपतिना संयुक्तः गार्हपत्यः। खञ्–सार्वजनीनः सर्वजनेषु साधुः। यः–समाने तीर्थे गुरौ वसति सतीर्थ्यः। सोदर्यः–समाने उदरे शयितो भ्राता। ठञ् खञ्च सार्वजनिकः सर्वजनीनः। अण् अञ् सर्वभूमेर्निमित्तं संयोग सार्वभौमः ईश्वरः। डण्–त्रैंशानि चात्वारिंशानि ब्राह्मणानि। ठञ्–पारायणं वर्तयति पारायणिकः। ष्कन्–पन्थानं गच्छति पथिकः, ङीप् पथिकी। णः नित्यं पन्थानं गच्छति पान्थः। उकञ् कर्मणे प्रभवति कार्मुकम्। इकट्–एकम् अगारं यस्य ऐकागारिकश्चौरः। वत्–ब्राह्मणेन तुल्यं ब्राह्मणवत्। ष्यञ् कवेः कर्म काव्यम्। त्वतलौ–ब्रह्मत्वं ब्रह्मता। खञ्–कूपपतनम् अर्हति कौपीनं पापं प्रावरणवस्त्रखण्डं लिंगं चेति। सप्तपदैरवाप्यते साप्तपदीनं सख्यम्। विकारार्थे खञ्–ह्योगोदोहस्य विकारो हैयंगवीनम्। कटच्–संकटम्, प्रकटम् उत्कटं विकटम्। पटच्–अविपटः, अविविस्तारः। स्नेहे तैलच्–शर्षपतैलम्। टीटञ्–नासिकाया नतम् अवटीटम्। नासिकाया नते इनच्पिटचौ प्रत्ययौ चिक् चि प्रकृतेरादेशौ च–चिकिनं चिपिटं चिक्कम्। क्लिन्ने चक्षुषी चिल्लः पिल्लः चुल्लः। त्यकन्–पर्वतस्याऽऽसन्नम् उपत्यका, पर्वतस्य आरुढम् अधित्यका। कर्मणि घटो ठच्-कर्मणि घटते कर्मठः। द्वयसज्ऊरुद्वयसम्, दघ्नञ्–ऊरुदघ्नम् मात्रच्–उरुमात्रम्। वतुप्–यत्परिमाणमस्य यावान् तावान् एतावान्। वतुप्–वस्य घः कियान् इयान्, डति–का संख्या येषां ते कति कियन्तः। तयप्–पञ्चतयम्।

मट्–पञ्चमः पूरणार्थः। पुरणे थक् षष्ठः डट्। कतिथः चतुर्थः। छः यत् चलोपः तुर्यः चतुर्थः तुरीयः। डट् तिथुक् बहुतिथः। तम् अट्–एकविंशतितमः एकविंशः। मत्वर्थे छः अच्छावाकशब्दोऽस्मिन् अच्छावाकीयं साम। वारवन्तीयं साम। रोगे कन्–द्वितीयकोऽज्वरः। वलच्–रजस्वला, इलच्–तुन्दिलः, यप्–रूपमस्याऽस्ति रूप्यः, विनिः–आमयावी, आमीनच् स्वात् स्वामी। इनिः सुखी। युस् शुभयुः। अतसुच्–दक्षिणतः। धा–चतुर्धा। तीयात् ईकक्–द्वैतीयीकः तार्तीयीकः, तीयात् अन् तृतीयः। देशीयर्–विद्वद्देशीयः। तदधीने देये त्रा सात्, विप्रत्राकरोति विप्रसात्करोति। डाच्–पटपटाकरोति। नित्यविप्सा पचतिपचति, भुक्त्वाभुक्त्वा, वृक्षंवृक्षं सिञ्चति, परिपरि, उपर्युपरि, अधोऽधो लोकम्, चोरचोर, इकैकम् अक्षरम्, गतगतः, मूलेमूले स्थूलः, अन्योन्यम्, इतरेतरम्, अन्योन्याश्रयः, प्रियप्रियेण, सुखसुखेन ददाति, द्वन्द्वं चेति। मिथुनं चेति। साहचर्यं चेति। समुच्चयश्चेति ॥ ४९५ ॥

**समासाः सप्त शब्दस्थाऽनैक्यसंक्षेपकारिणः।**
**एकशब्दत्वपर्याप्ताः पदवृत्त्यर्थसञ्चराः ॥४९६॥**

समासः सप्तधा,–कर्मधारयः, द्विगुः, तत्पुरुषः, अव्ययीभावः, बहुव्रीहिः, द्वन्द्वः, उपपदसंज्ञकश्च। तत्र तत्पुरुष पूर्वपदप्रधानः जायां प्राप्तः प्राप्तजायः। मध्यमपदप्रधानः पटानधिकरणम्, प्रतियोगिताऽनवच्छेदकः। अन्त्यपदप्रधानः–राजपुरुषः, राजसम्बन्धिनि लक्षणा॥ कर्मधारयः–नीलोत्पलम्, स नित्यः कृष्णसर्पः, मध्यविभक्तिकः निर्मक्षिकम्, मक्षिकायाः निः। यल्लभ्योऽबोध्योऽसुरः, न सुरः इत्यादिः। अनित्यः राजपुरुषः, पूर्वकायं, लिंगसंख्याऽवगमः स्फुरद्वाणी, प्रियतिसा, चलच्चैत्रः॥ द्विगुः पञ्चमूलीति। समाहारे लक्षणा अथ अव्ययीभावः–गृहे निर्मक्षिकम्; अक्षपरि, शलाकापरि, उपगङ्गम्। बहुव्रीहिः–लाक्षणिकः आरूढवानरो वृक्षः। तद्गुणसंविज्ञानो बहुव्रीहिः–लम्बकर्णः हारग्रीवः। अतद्गुणसंविज्ञानो बहुव्रीहिः, दृष्टसागरः। चित्रगुः, जरतीचित्रा॥ द्वन्द्वः–पाणिपादं धवखदिरौ। उपपदसमासः–कुम्भकारः, क्षीरपायी, पार्श्वशयः, कुरुचर इत्यादिः॥

यादृशमहावाक्योत्तरः त्वतलादिः, स्वार्थस्य यादृशार्थावच्छिन्नविषयताशालिबोधे हेतुः, तादृशं तद्वाक्यं, तथाविधार्थे समासः। नीलोत्पलत्वं त्वप्रत्ययार्थविशेष्यकनीलोत्पलप्रकारकाऽन्वयबोधे नीलोत्पलादिशब्दोत्तरत्वप्रत्ययनिश्चयत्वेन हेतुत्वात् नीलोत्पलादिभागस्य नीलाऽभिन्नोत्पलाद्यर्थे समासत्वम्। पाककर्त्रर्थकं पाचकादिवाक्यमपि न महावाक्यम्, यादृशानुपूर्वीविशेषः स्वघटकाऽनेकनामलभ्ययादृशविशिष्टार्थबोधजनकतावच्छेदकः तादृशानुपूर्वीमच्छब्दत्वं तथाविधार्थे महावाक्यत्वम्। प्रकृत्यर्थमात्रावच्छिन्नप्रत्ययार्थस्याऽन्वयबोधाऽयोग्यत्वं महत्त्वमत्र। घटः पाचकः—इत्यादौ अयोग्यताऽभावान्न महावाक्यता। उपकुम्भं नीलघटत्वमित्यत्र महावाक्यत्वं समासत्वं चाऽस्ति। क्षीरपायीति न प्रकृत्यर्थपानशीलमात्रे समर्थः। राज्ञः पुरुषत्वमिति तु राजनि पुरषभावः प्रतीयते स न समासः। पायं पायं व्रजतीति पौनःपुन्यार्थक–णमाद्यर्थावच्छिन्नस्य अभीक्षणपानकृतिसमानकालीनत्वस्य व्रजनादौ बोधनान्न क्षतिः। प्रस्थाय इति तु समासव्यपदेशो भाक्तो न तु शाक्तः॥

यदर्थगतेन–सुबर्थेन विशिष्टस्य यदर्थस्याऽन्वयबोधं प्रति यः समासः स्वरूपयोग्यः सः तदर्थस्य तदर्थे तत्पुरुषः। कृष्णं श्रितः कृष्णश्रितः। ग्रामं गमी ग्रामगमी। अन्नं बुभुक्षुः अन्नबुभुक्षुः। मासं प्रमितः मासप्रमितः। मुहूर्तं सुखं मुहूर्तसुखम्। शंकुलया खण्डः शंकुलाखण्डः। धान्येनाऽर्थो धान्यार्थः। अक्ष्णा काणः अक्षिकाणः। मासेन पूर्वो मासपूर्वः। हरिणा त्रातः हरित्रातः। दध्ना ओदनः दध्योदनः। गुडेन धानाः गुडधानाः। यूपाय दारु यूपदारु। द्विजाय अयं द्विजार्थः। भूतेभ्यो बलिः भूतबलिः। चौराद् भयं चौरभयम्। सुखात् अपेतः सुखाऽपेतः। चक्रान्मुक्तः चक्रमुक्तः। स्वर्गात्पतितः स्वर्गपतितः। अल्पान्मुक्तोऽल्पमुक्तः। दूरादागतः दूरागतः। कृच्छ्रादागतः कृच्छ्रागतः। राज्ञः पुरुषः राजपुरुषः। देवानां पूजकः देवपूजकः। सर्वेषां श्वेतः सर्वश्वेतः। श्वेतायनो व्यासः। स्वस्य कर्तव्यं स्वकर्तव्यम्। दन्तानां लेखको दन्तलेखकः। पूर्वं कायस्य पूर्वकायः। अह्नः सायं

सायाह्नः। पिप्पल्या अर्धम् अर्धपिप्पली। द्वितीयं भिक्षाया द्वितीयभिक्षा। अक्षेषु शौण्डः अक्षशौण्डः। तीर्थे ध्वांक्ष इव तीर्थध्वांक्षः। वर्षसुखी, लोष्टकाणः, कुण्डलहिरण्यं, घटान्यः, कुबेरबलिः, कर्मकुशलः द्वितीयादितत्पुरुषः ॥

नित्यसमासः—अरण्येतिलकाः। अपरराात्रकृतं, तत्र युक्तम्। पितरि शूरः। गेहे दृप्तः। गोष्ठे पण्डितः। कर्णे चुरुचुरा। पूर्वं स्नातः पश्चाद् अनुलिप्तः स्नातानुलिप्तः। घन इव श्यामः घनश्यामः। अश्रेणयः श्रेणयः कृताः श्रेणीकृताः। कृतं च तदकृतं च कृताऽकृतम्। कुत्सितो राजा किंराजा। समानाधिकरण्ये युवा खलतिः युवखलतिः। मयूरो व्यंसको मयूरव्यंसकः, व्यंसको धूर्तः। अश्नीत पिबत सतन्त्रं यत्र तत्र अश्नीतपिबता। खाद मोदता। उद्धरोत्सृजा। जहिस्तम्बः। अकुतोभयः। अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्। ईषद् रक्तम्। न ब्राह्मणः अब्राह्मणः। न असत्याः नासत्याः। न खम् अस्य नखम्। न क्षरति नक्षत्रम्। कुत्सितः पुरुषः कुपुरुषः। क्रियायोगे उरीकृत्य उररीकृत्य, सत्कृत्य, अन्तर्हत्य, पुरस्कृत्य, अदःकृत्य, तिरस्कृत्य, अन्वाजेकृत्य, लवणंकृत्य, उरसिकृत्य, मनसिकृत्य, अभ्युपगम्य, निश्चित्य, पदेकृत्य, पाणौकृत्य, जीविकाकृत्य, अतिक्रान्तो मालाम् अतिमालः, कुम्भं करोति कुम्भकारः, मूलकेन उपदंशं भुंक्ते मूलकोपदंशम्, उच्चैःकृत्य, द्वयोरह्नोर्भवो द्वयह्नः, अहश्च रात्रिश्च अहोरात्रम्, उत्तमपुरुषः, पक्वयज्ञोजनम्, परमसः परमता, अघटः, पटः अन्यस्य, असुरो दैत्यः विरोधिनः, अनिक्षुः शरः सदृशस्य, अब्राह्मणो वार्द्धुषिकः अपकृष्टस्य, अनुदरम् उदरं तरुण्याः,—स्वल्पस्य बोधः। निषादानां स्थपतिः निषादस्थपतिः, पूर्वकायः, अर्धपिप्पली, स्तोकपक्वा, स्तोकनम्रा, ग्रामगतः, चैत्रनीतः ब्राह्मणदत्तः, वृक्षपतितः, चैत्रधनम्, गृहस्थितः, शुक्लीकृत्य, पटपटाकृत्य, खाट्कृत्य निरष्ठीवत्, अस्तंगत्य, तिरोभूय, साक्षात्कृत्य, हस्तेकृत्य, प्राध्वंकृत्य, उपनिषत्कृत्य, मालामतिक्रान्तोऽतिमालाः, कोकिलयाऽवक्रुष्टोऽवकोकिलः, परिग्लानोऽध्ययनाय पर्यध्ययनः, निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः ॥

संख्यावच्छिन्नशक्त्यत्पदोत्तरत्वविशिष्टं यन्नाम, स्वार्थधर्मिकं तादात्म्येन तदलक्ष्यार्थस्याऽन्वयबोधं प्रति समर्थं, तन्नामोत्तरतापन्नं तन्नामैव तदलक्ष्यार्थाऽभिन्नस्वार्थे द्विगुः। पञ्चानां मूलानां समाहारः पञ्चमूली, सप्तशती तद्धितार्थोत्तरपदसमाहारभेदात् त्रेधा द्विगुः। यः स्वोत्तरतद्धितार्थान्वितस्वार्थकः स तद्धितार्थद्विगुः। द्विमुद्रो वृषः, द्वाभ्यां मुद्राभ्यां क्रीतस्य, द्विवर्षा गौः—द्वाभ्यां वर्षाभ्याम् अभिन्नवयस्कस्य, द्विदलं पवित्रं—द्वाभ्यां दलाभ्यां निर्मितस्य, द्विगुञ्जं स्वर्णं—द्वाभ्यां गुञ्जाभ्यां तुलितस्य, त्रिकाण्डः पुरुषः—त्रिभिः काण्डैः परिमितस्य, पञ्चकपालश्चरुः—पञ्चभिः कपालैः संस्कृतस्य, बोधने लुप्तस्यैव ठगादितद्धितस्य क्रीताद्यभिधायकत्वात्, अन्तिमनाम्ना क्रीताद्यर्थप्रत्ययात् लुप्तठगाद्यनपेक्षणात् अयं तद्धितार्थलाक्षणिकस्वान्त्यनामको द्विगुः। पाञ्चपुरुषिः—पञ्चानां पुरुषाणाम् अपत्यस्य बोधनं, पञ्चगर्गरूप्यो गौः—पञ्चानां गर्गाणां भूतपूर्वस्य बोधनं, तद्धितेनोपस्थाप्यते ॥ यः स्वघटकनामभ्यां सह साकांक्षनामान्तरेण समासस्याऽन्तर्गतः, स उत्तरपदद्विगुः, पञ्चगावो धनमस्य पञ्चगवधनः, बहुव्रीह्यादिनिविष्टः पञ्चगवादिः। समाहारद्विगुः—स्वोपस्थाप्याऽर्थस्य समाहारलक्ष्यको यदीयाऽन्त्यशब्दः सः समाहारद्विगुः,—पञ्चानां पुलानां समाहारः पञ्चपुली। पञ्चपाचकी ॥

पूर्वाह्णः द्वयहः पराह्णः, द्वयोरह्नोः समाहारो द्वयहः। पुण्याहम्, अश्मान।मुर इव अश्मोरसम्, कालायसम्, महानसम्, वानरः श्वेव वानरश्वा, उत्तरसक्थम्, पञ्चनावप्रियः, पञ्चनौः, द्विनावम्, नावोऽर्धम्–अर्धनावम्, द्विखारम्, द्वयञ्जलम्, सुराष्टब्रह्मः, महादेवः, महत्सेवा, अष्टाकपालः, अष्टगवम्, द्वौ च दश च द्वादश, त्र्यशीतिः, द्विचत्वारिंशत्, द्वाचत्वारिंशत्, अष्टचत्वारिंशत्, अष्टाचत्वारिंशत्, त्रिचत्वारिंशत्, त्रयश्चत्वारिंशत्, एकेन न विंशतिः एकान्नविंशतिः, एकोनविंशतिः षोडश, षोढा, कुक्कुटमयूर्यौ, मयूरीकुक्कुटौ, पञ्चकपालः, पुरोडाशः, प्राप्तजीविकः, अलंकुमारिः, अश्ववाडवौ, अहोरात्रः, द्विरात्रम्, अर्धर्चम्, तिष्यपुनर्वसू, विशाखा-

ऽनुराधाः, दन्तौष्ठम् , पञ्चमूली, पञ्चखट्वी, पञ्चपात्रम् , चतुर्युगम् , पुण्याहम्, सुदिनाहम् , त्रिपथम्, पाणिन्युपज्ञं ग्रन्थः, इक्षुच्छायम् , ईश्वरसभम्, रक्षःसभम् , स्त्रीसभम् , ब्राह्मणसेनम् , ब्राह्मणसेना, गोशालं गोशाला ।।

यः समासः स्वोत्तरपदोपस्थाप्येन पदार्थेन अन्वितस्य यदर्थस्य बोधकाऽव्ययपूर्वभागकः सः तद्विशिष्टस्य तदर्थस्य बोधनेऽव्ययीभावः ।।

जीमूतस्येव, विभक्त्यलोपः, दिशयोर्मध्ये अपदिशम् , हरौ इति अधिहरि, गाः, पाति गोपाः, तस्मिन् अधिगोपम्, कृष्णस्य समीपम् उपकृष्णम्, मक्षिकाणाम् अभावो निर्मक्षिकम्, अतिनिद्रम्, इतिहरि, अनुविष्णु, अनुरूपम्, प्रत्यर्थम् , यथाशक्ति, हरेः सादृश्यं सहरि, सदृशः सख्या ससखि, यावच्छ्लोकम्, शाकस्य लेशः शाकप्रति, वहिर्वनं बहिर्वनात्, आबालम् अभ्यगि, अनुवनम् , अनुगंगम्, पारेगंगात्, मध्येगंगात् , द्वौ मुनी वंश्यौ द्विमुनि त्रिमुनि, व्याकरणम्, एकविंशति भारद्वाजम्, सप्तगंगम् , द्वियमुनम्, उन्मत्तगंगं नाम देशः पाञ्चालः, उपशरदम् , उपजरसम् , प्रत्यक्षम्, परोक्षम्, समक्षम्, उपराजम्, अध्यात्मम् , उपनदम्, उपनदि, उपसमिधम् , उपगिरम्, उपगिरि, उपपौर्णमासम्, उपपौर्णमासि ।।

निर्मक्षिकम्, उपकुम्भम्, द्विगार्ग्यम्, द्विदण्डि, त्रियमुनं, लोहितगंगम्, दण्डादण्डि, केशाकेशि, खलेयवं, संहृतयवं, तिष्ठद्गु ।। अमादेशं विना श्रूयमाणषष्ठी स्वार्थे यत्समासार्थस्याऽन्वयबोधं प्रति असमर्था स वाऽव्ययीभावः ।। इत्यपि ।।

स्वांशस्य निरूढलक्षणया ज्ञापकेन शब्देन घटितः स्वगर्भस्य यादृशार्थस्य सम्बन्धित्वप्रकारेण अन्वयबोधं प्रति समर्थः समासः स्वगर्भतादृशसम्बन्धिबोधने बहुव्रीहिः ।।

आरूढवानरो वृक्षः-स्वकर्मकारोहणकर्तृवानरसम्बन्धित्वेन वृक्षम्, पीतपयस्कं पात्रं-स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रम् , पक्वतण्डुलश्चैत्रः-स्वकर्तृकपाककर्मतण्डुलसम्बन्धित्वेन चैत्रं, दत्तदक्षिणो द्विजःस्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजं, पतितपत्रस्तरुः-स्वापादानकपतनाश्रयत्वसम्बन्धित्वेन तरुम् । चित्रगुश्चैत्रः चित्राऽभिन्नस्वगोसम्बन्धित्वेन चैत्रं, रक्तपटः, कायः रक्ताऽभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम् , बाणच्छिन्नकरो नरः-बाणकरणकरचकर्तृकच्छिदाकर्म-करसम्बन्धित्वादिना नरम्, इत्येवं बहुव्रीहिः स्वगर्भतत्तदर्थसम्बन्धित्वेन धर्मिणोऽवगमयति । दक्षिणपूर्वा-स्वपार्श्वस्थदक्षिणसहितपूर्वसम्बन्धित्वादिना आग्नेयीप्रभृतीनां बोधः । अस्तिक्षीरा गौः-अस्तित्ववत्स्वक्षीरसम्बन्धित्वादिप्रकारेण गवादेरवगतिः । उपदशाः शकुनयः स्वसमीपगणितदशसम्बन्धित्वेन नवानामेकादशानां च पक्षिणामवगमः । अधिकदशाः पुरुषाः-स्वपर्याप्तसंख्याऽधिकदशवृत्तिसंख्यापर्याप्त्यधिकरणदशसम्बन्धित्वेन नवादिपुंसां प्रत्ययः । द्वित्राः पवित्राःद्वित्र्यन्यतरपर्याप्तस्वपर्याप्तिसंख्यासम्बन्धित्वेन द्वयोस्त्रयाणां वा पवित्राणां बोधः । द्वित्र्यन्यतरशब्दस्य निरूढलक्षणया द्वित्र्यन्यतरपर्याप्तस्वसंख्यासम्बन्धिन एव बोधात् वाकारस्य निरूढलक्षणायां गतार्थत्वात् समासेऽश्रुतत्वम्, द्वौ त्रयो वा येषां पवित्रा इति । पञ्च षड् वा येषां पञ्चषाः पुरुषाः-पञ्चषडन्यतरपर्याप्तस्वसंख्यासम्बन्धित्वेन पञ्चानां षण्णां वा बोधः । द्वौ वा त्रयो वा येषामिति विग्रहे तु वाशब्दार्थः संशयः, स्वधर्मिकसंशयकोटितापन्नद्वित्रिसम्बन्धित्वेन द्विप्रभृतिबोधकत्वम् । कृतपाकश्चैत्रः स्वकृतिविषयपाकसम्बन्धित्वेन चैत्राऽवगमः । चित्रगुः-गोपदं स्वगोसम्बन्धिलक्षकं तदेकदेशे गवि तादात्म्येन चित्रपदस्याऽन्वयः । अघटो देशः-न घटो यत्र । सपुत्रः-सह पुत्रो येन । सहार्थः वैशिष्ट्यम् । जीवत्पितृकः-जीवन् पिता यस्य जीवदभिन्नः, पिता यदीयः । गन्तव्यो ग्रामो यस्येति गन्तव्यग्रामकश्चैत्रः-स्वकर्तृकगतिकर्मग्रामसम्बन्धित्वेन चैत्रः । धनी दासो यस्य धनिदासकः-धनवत्स्वदाससम्बन्धिनोऽवगमः । चन्द्रश्चूडायां यस्य चन्द्रचूडः शिवः-स्वचूडावृत्तिचन्द्रसम्बन्धित्वेन शिवस्याऽवगमः । पुत्रकृतोत्कर्षश्चैत्र-स्वपुत्रकृतोत्कर्षवांश्चैत्रः ।।

विग्रहवाक्यस्य विशेष्यविधया प्रत्याय्यो योऽर्थस्तद्विशेष्यकबोधकृद् बहुव्रीहिः, तद्गुणसंविज्ञानः,-

तस्य स्वार्थगुणीभूतस्य सम्यग् विशेष्यविधया विज्ञानं यस्मात् सान्वयसंज्ञाकत्वात् सः। तद्भिन्नश्च अतद्गुणसंविज्ञानः। घटस्वरूपः पदार्थः,–घटः स्वरूपं यस्य,–स्वस्वरूपाऽभिन्नघटसम्बन्धित्वेन घटाऽभिन्नस्वरूपसम्बन्धित्वेन वा विग्रहविशेष्यं कलशमेव विशेष्यविधया बोध्यते। घटस्य स्वरूपं यस्मात् घटस्वरूपः–विग्रहस्य यद्विशेष्यं ततोऽन्यदेव स्वजन्यस्वरूपाऽभिन्नघटसम्बन्धित्वेन बोध्यते। कुटादिर्गणः कुट आदिर्यस्य, कूटाऽभिन्नस्य स्वधर्मिकव्यवस्थाधर्मिणः सम्बन्धित्वेन कुटं बोधयँस्तद्गुणसंविज्ञानः। लम्बकर्णमानयेत्यत्र, हारग्रीवं पश्येत्यत्र, लम्बस्वकर्णसम्बन्धिनः, स्वग्रीवावृत्तिहारसम्बन्धिनश्च स्वार्थस्याऽन्वयिनि कर्मत्वादौ स्वार्थघटकीभूतस्य तादृशकर्णहारादेरपि अन्वयबोधने समर्थः तद्गुणसंविज्ञानः। द्विपदत्रिपदचतुष्पदादिको यथा—चित्रगुः, जरतीचित्रगुः, महन्नीलोत्पला सरिदिति ॥

ऊढरथोऽनड्वान्, उद्धृतौदना स्थाली, पीताम्बरो हरिः, वीरपुरुषको ग्रामः, प्रपतितपर्णः प्रपर्णः, अविद्यमानपुत्रः अपुत्रः, अस्तिक्षीरा गौः, रूपवद्भार्यः, दीर्घातन्वीजङ्घः, तन्वीदीर्घातङ्घः, कल्याणी पञ्चमी यासां रात्रीणां कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स्त्रीप्रमाणः। कल्याणपञ्चमीकः पक्षः। बहुकर्तृकः। दृढभक्तिर्दृढाभक्तिः। समानः पतिर्यस्याः सपत्नी। सापत्यः। सर्विका भार्या यस्य सः सर्वकभार्यः। पाचिकाभार्यः काषायी कन्था यस्य सः काषायकन्थः। सुकेशीभार्यः। बाहूबाहवि। निस्त्रिंशः खड्गः। दीर्घे सक्थिनी यस्य दीर्घसक्थः। खर-णसः स्थूलनासिकः। शोभनं प्रातर्यस्य सुप्रातः, सुश्वः, सुदिवः, एणीपदः, अशक्तिः, अशक्तः, सुमेधाः, दुर्मेधाः। निवृत्तधर्मा। जम्भो भक्ष्यं दन्ताश्च, शोभनो जम्भो यस्य सुजम्भा। पतितजम्भः। द्विदण्डि त्रिदण्डि। ऊर्ध्वजानुः ऊर्ध्वज्ञुः। शतधन्वा। युपतिर्जाया यस्य युवजानिः। षट् दन्ता अस्य षोडन् सुदन् सुदती अयोदती समदन्ती, श्यावदन् श्यावदन्तः। अजातककुत् पूर्णककुत् त्रिककुत्। काकुत् तालु उत्काकुत्। दुर्हृदमित्रः। व्यूढोरस्कः। प्रियसर्पिष्कः। विश्वे देवा अस्य विश्वेदेवः। बह्वृचः श्रेयस्यो यस्य बहुश्रेयसी। प्रशस्तभ्राता। बहुनाडिः कायः। कृतकृत्यः। आहिताऽग्निः ॥

यद्यदर्थोपस्थापकस्य क्रमिकयादृशनामस्तोमस्य निश्चयः तत्तदर्थकारकान्वयबोधं प्रति तत्त्वेन समर्थः तादृशनामनिवहस्तावदर्थको द्वन्द्वसमासः। पाणिपादं वादय, धवखदिरौ छिन्धि, हस्त्यश्वं धनम्। विद्यतिविन्दतिविनत्तयः। युवा च युवतिश्च युवानौ। ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ। एकश्च एका च एकौ। द्वौ द्वे, उभौ उभे, त्रयश्च तिस्रश्च त्रयः। मेष्यश्च मेषाश्च मेष्यः। महिषाश्च महिष्यश्च महिष्यः। मृगाश्च मृग्यश्च मृगाः। गर्दभाश्च गर्दभ्यश्च गर्दभाः। बर्कराश्च बर्कर्यश्च बर्कराः। स्वसा च भ्राता च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। स च त्वं च युवाम्। कश्च त्वं च कौ। श्वश्रूश्च श्वशुरश्च श्वशुरौ। श्वश्रुश्वशुरौ ॥

समाहारद्वन्द्वः,–इतरेतरद्वन्द्वश्च। एकवचनाऽन्यसुबाकांक्षाविहीनः समाहारः, तथविधसुबाकांक्षश्चेतरेतरः। पाणिपादं हस्त्यश्वम् एकवचनम्। धवखदिरौ द्विवचनम् ॥

चाऽर्था बहवः–समुच्चयोऽन्वाचय इतरेतरयोगः समाहारश्च। परस्परनिरपेक्षस्य एकस्मिन्नन्वयः समुच्चयः, अन्यतरस्य आनुषंगिकत्वेऽन्वाचयः, मिलितानामन्वयः इतरेतरयोगः, समूहः समाहारः। ईश्वरगुरू भजस्व। भिक्षामट गां च चारयेत्यत्राऽन्वाचये न समासः। धवखदिरौ संज्ञापरिभाषम्। अनेके होतृपोतृनेष्टोद्गातारः। द्वयोर्द्वन्द्वे पुनर्द्वन्द्वे होतापोतानेष्टोद्गातारः। दन्तानां राजा राजदन्तः। दम्पती, जायापतीः। हरिहरगुरवः। ईशकृष्णौ, इन्द्राऽश्वरथाः, इन्द्राग्नी, शिवकेशवौ, हेमन्तशिशिरवसन्ताः। कृत्तिकारोहिण्यौ। ग्रीष्मवसन्तौ। ब्राह्मणक्षत्रियविट्शूद्राः। युधिष्ठिरार्ज्जुनौ। पाणिपादम्। मार्दंगिकपाणविकम्। कण्ठकाऽऽलापम्। अर्काऽश्वमेधम्। धानाशष्कुलि। उद्धचेरावति। गंगाशोणम्। कुरुकुरुक्षेत्रम्। यूकालिक्षम्। अहिनकुलम्। काकोलूकम्। तक्षाऽयस्कारम्। गवाश्वम्। दासीदासम्। प्लक्षन्यग्रोधम्। कुशकाशम्। व्रीहियवम्। दधिघृतम्। गोमहिषम्। शुकबकम्। अश्ववडवम्।

अधरोत्तरम् । बदराऽऽमलकम् । शीतोष्णम् । दश दन्तोष्ठाः । होतापोतारौ । मातापितरौ । पितापुत्रौ । मित्रावरुणौ । अग्नीषोमौ । अग्निमारुतम् । अग्निवारुणम् । द्यावाभूमी । वाक्त्वचम् । छत्रोपानहम् ॥

अथोपपदसमासः—धातुकृद्भ्यां निष्पन्नं यस्योत्तरपदं, शब्दान्तराऽनुत्तरं सत् यादृशार्थस्य बोधं प्रति असमर्थं तादृशार्थकान्त्यपदकः समासः उपपदसंज्ञकः । कुम्भकारः, क्षीरपायी, उत्तानशयः पूर्वशयः, उत्तानादिः कर्ता । कुम्भकारः सौवीरपायी कर्म । कच्छपः पार्श्वशयः करणम् । उखाभ्रत्, वाहभ्रद्, उपादानम् । स्वशयः, कुरुचरः, अधिकरणम् ब्रह्मभूयं कारकभिन्नेन उपपदेन समासः ॥

एकशेषः—सरूपाः रामौ रामाः, विरूपाः वक्रदण्डः कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डौ । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । गार्गी च गार्ग्यायणी च गर्गाः । दाक्षी च दाक्षायणश्च दाक्षी । हंसी च हंसश्च हंसौ । भ्राता च स्वसा च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । शुक्लः शुक्ला शुक्लमिति शुक्लानि । माता च पिता च पितरौ, मातापितरौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ, श्वश्रूश्वशुरौ, । स च देवदत्तश्च यौ । स च यश्च यौ । स च यश्च तौ सा च देवदत्तश्च तौ । तच्च यज्ञदत्तश्च देवदत्ता च तानि । तच्च देवदत्तश्च ते । तच्च सा च अर्धपिप्पल्यौ ते । गाव इमाः संघाः । अश्वा इमे ॥

कृत्-तद्धित-समास-एकशेष-सनाद्यन्तधातवः पञ्चवृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थबोधकवाक्यं विग्रहः लौकिकोऽलौकिकश्च, साधुः लौकिकः, असाधुः अलौकिकः, राज्ञः पुरुषः लौकिकः । राजन् अस् पुरुष सु अलौकिकः प्रयोगानर्हः । अविग्रहो नित्यसमासः । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानः तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । तत्पुरुषविशेषः कर्मधारयः, कर्मधारयविशेषो द्विगुः ॥

यद्वा—सुपां सुपा, सुपां तिङा, सुपां नाम्ना, सुपां धातुना, तिङां तिङा तिङा, सुबन्तेनेति षड्धा । राजपुरुषः, पर्यभूषयत्, कुम्भकारः, कटप्रूः, अजस्रम् । पिबतखादता । खादतमोदता । कृन्तविचक्षणेऽपि यस्यां क्रियायां सा कृन्तविचक्षणा । एहीडा । भवतिरूपं कर्तरीत्यादि ॥

अर्धर्चः, विष्णोः पूः विष्णुपुरम्, विमलापं सरः, द्विर्गता आपो यस्मिन् द्वीपम्, प्रतीपम् समीपम्, सखिपथः, रम्यपथो देशः, अनुलोमं प्रतिलोमम्, कृष्णभूमः, उदग्भूमः, द्विभूमः,–प्रासादः । पञ्चनदं, सप्तगोदावरं, पद्मनाभः गवामक्षीव गवाक्षः । अविद्यमानानि चत्वारि यस्य–अचतुरः, चतुर्णां समीपे ये सन्तीति ते उपचतुराः । स्त्रीपुंसौ, धेन्वनडुहौ, ऋक्सामे, वाङ्मनसे, अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम् पदष्ठीवम् । नक्तन्दिवम् । रात्रिन्दिवम् । अहनि च दिवा च अहर्दिवम् ॥ द्वन्द्वो निपात्यते वीप्सायाम् अहन्यहनि । निश्चितं श्रेयो निःश्रेयसम् । पुरुषस्याऽऽयुः पुरुषायुषम् । ऋग्यजुषम् । जातोक्षः, शुनः समीपम् उपशुनम्, गोष्ठे श्वा गोष्ठश्वः ब्रह्मवर्चसम्, राजवर्चसम्, सन्तमसम्, अन्धं तमः अन्धतमसम्, श्वःश्रेयसम्, अनुरहसम्, प्रत्युरसम्, अनुगवं यानम्, द्विस्तावा त्रिस्तावा वेदिः । प्रगतोऽध्वानं प्राध्वोरथः । किंराजा किंसखा असखा । अपथम् अपन्थाः ।

अलुक्समासाः—स्तोकान्मुक्तः, ब्राह्मणाच्छंशी ऋत्विग्विशेषः ब्राह्मणशस्त्रशंसी, शस्त्रं स्तोत्रम् । ओजसाकृतम्, अञ्जसाकृतम्, पुंसाऽनुजः, जनुषाऽन्धः, मनसागुप्ता, मनसाज्ञायी, आत्मनापञ्चमः, आत्मनेपदम्, आत्मनेभाषा, परस्मैपदम् परस्मैभाषा, त्वचिसारः, गविष्ठिरः, युधिष्ठिरः, अरण्येतिलकाः । हृदिस्पृक् दिवस्पृक् । मुकुटेकार्षापणम्, हृपदिमापकः, मध्येगुरुः, अन्तेगुरुः, कण्ठेकालः, उरसिलोमा, हस्तेबन्धः, स्तम्बेरमः, कर्णेजपः, प्रावृषिजः, शरदिजः, कालेजः, दिविजः, वर्षेजः, क्षरेजः, शरेजः, वरेजः, पूर्वाह्णेतरे, पूर्वाह्णेतमे, पूर्वाह्णेकाले, पूर्वाह्णेतने, खेशयः, ग्रामेवासः, ग्रामेवासी, अप्सुयोनिः, अप्सुभवः अप्सव्यः, अप्सुमन्तौ आज्यभागौ, वाचोयुक्तिः, दिशोदण्डः, पश्यतोहरः, अमुष्याऽपत्यम् अमुष्यायणः, अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका, आमुष्यकुलिका, देवानाम्प्रियः, शुनःशेपः शुनःपुच्छः शुनोलाङ्गुलः दिवोदासः, दास्याः पुत्रः, होतुरन्तेवासी, होतुः पुत्रः, पितुरन्तेवासी, पितुः पुत्रः, मातुः

स्वसा, मातुःष्वसा, पितुःस्वसा, पितुःष्वसा, मातृष्वसा पितृष्वसा ॥

समासाश्रयविधयः = अनेकाचो ह्रस्वः—ब्राह्मणितरा, ब्राह्मणितमा, ब्राह्मणिकल्पा, ब्राह्मणिचेली, ब्राह्मणीब्रुवा, ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा, स्त्रितरा, स्त्रीतरा, विदुषितरा, विद्वत्तरा, हृदयस्य प्रियं हृद्यम्, सौहार्द्यं सौहृदय्यम्, पदातिः पदगः, पद्याः शर्कराः, पदाभ्यां चरति पदिकः, पद्धतिः, क्षीरोदः, उदवासः, उदकुम्भः, उदमन्थः, उदौदनः, ग्रामणिपुत्रः, भ्रुकुंसः, भ्रूकुंसः नर्तकः। एकस्या आगतम् एकरूप्यम्, रेवतिपुत्रः, अजक्षीरम्, रोहिणीत्वम्, रोहिणित्वम्, कौमुदगन्धायाः पुत्रः कौमुदगन्धीपुत्रः, पक्वेष्टकचितम्, मुञ्जेषीकतूलम्, सत्यङ्कारः, अगदङ्कारः, अस्तुङ्कारः, धेनुम्भव्या, लोकम्पृणः, भ्राष्ट्रमिन्धः, अग्निमिन्धः, तिमिङ्गिलः, उष्णङ्करणम्, भद्रङ्करणम् रात्रिश्चरः, रात्रिम्मन्यः, सराक्षसीका निशा, अनुभ्राता सगर्भ्यः, अनुसखा सयूथ्यः, साधर्म्य सजातीयं सपक्षः, सोदर्यः, सदृक्षः, ईदृक्, ईदृशः ईदृक्षः, कीदृक् कीदृशः कीदृक्षः, तादृक् तादृशः तादृक्षः, अमूदृक् अमूदृशः, अमूदृक्षः, अङ्गुलिषङ्गः, भीरुष्ठानम्, ज्योतिष्टोमः, हरिषेणः, विश्वसेनः, रोहिणीषेणः, रोहिणीसेनः, अन्यदीयः, अन्यत्कारः, अन्यदर्थः, अन्यार्थः, कदश्वः, कदन्नम्, कुत्सितास्त्रयः, कत्त्रयः, कद्रथः, कद्वदः, कापथकम्, काऽक्षः, ईषज्जलं, काजलम्, कापुरुषः कुपुरुषः, कवोष्णं कोष्णम्, कदुष्णम्, पृषोदरम्, बलाहकः, गूढोत्मा, ब्रुवन्तोऽस्यां सीदन्तीति बृसी, अष्टकर्णः, छिन्नकर्णः, दुःखेन नाश्यते दूणशः, उपानत्, नीवृत्, प्रावृट्, नीरुक्, सारिकावणम्, कोटरावणम्, अग्रवणम्, कृषीबल, अमरावती, ऋषीवहम्, कपीवहम् परीपाकः, परिपाकः, नीकाशः वीकाशः, अष्टापदम्, एकचित्तीकः, विश्वानरः, विश्वामित्रः, श्वादन्तः, दूर्वावणम्, शिरीषवनम्, रम्ययूना गोष्पदः देशः, गोष्पदमात्रं क्षेत्रम्, आस्पदम् आश्चर्यम्, अवस्करः कुत्सितं वर्चः, वर्चस्कम्, अवकीर्यते अवस्करः, कातीरम्, तस्करः, पारस्करः, बृहस्पतिः, प्रायश्चित्तिः, प्रायश्चित्तम्, वनस्पतिः, सदसस्पतिः, अश्वपतेरपत्यादि आश्वपतम्, गणपतेरपत्यादि गाणपतम्, ण्यः दितेरपत्यं दैत्यः, आदित्यः, प्राजापत्यः, याम्यः, अग्नेरपत्यादि आग्नेयम्, पृथिव्याः पतयः पार्थिवाः, यमानां पतिः याम्यः ॥ ४९६ ॥

**लक्षणा नैकधा शक्यसम्बन्धत्वेन बोधिका।**
**सम्बन्धो नैकधा भेदोऽभेदोऽन्यः कल्पकांक्षितः॥४९७॥**

यत्र वाक्यार्थेऽन्वयाऽनुपपत्तिः तात्पर्यानुपपत्तिर्वा समीपार्थजिज्ञासा वा तत्र शक्यसम्बन्धं लक्षणां कृत्वा तयाऽर्थोऽनुसन्धातव्यः। यादृशानुपूर्व्यवच्छिन्नं नाम यद्धर्मविशिष्टयन्निरूपितशक्तिशून्यत्वे सति यद्धर्मविशिष्टयन्निरूपितसम्बन्धवन्निरूपितशक्तिनिरूपकं तद्धर्मप्रकारकतद्विशेष्यकबोधे तादृशानुपूर्व्यवच्छिन्नं नाम लक्षकम्। शक्यपरम्परासम्बन्धो लक्षणा, सम्बद्धार्थो लाक्षणिकार्थः। गंगायां घोषः—तीरवृत्तिर्घोषः। यष्टीर्गृहं प्रवेशयेत्यत्र यष्टिषु भोजनतात्पर्याऽनुपपत्त्या जिज्ञासितयष्टिधरेषु लक्षणा अजहत्स्वार्था, संयोगजनकव्यापारकर्तृत्वनिर्वाहकव्यापारः ण्यन्तधात्वर्थः, तद्घटकसंयोगे द्वितीयान्तगृहवृत्तित्वस्याऽन्वयः, तादृशधात्वर्थघटककर्तृत्वे द्वितीयान्तयष्टिपदार्थवृत्तित्वस्याऽन्वयः, लोट्पदार्थः कृतिः, तथा च—गृहवृत्तिसंयोगजनकव्यापाराऽनुकूलयष्टिपदार्थवृत्तिकर्तृत्वनिर्वाहानुकूलव्यापारानुकूलकृतिमाँस्त्वमिति बोधः। काकेभ्यो दधि रक्ष्यतामित्यत्राऽपि काकतदितरदध्युपघातकेषु काकपदलक्षणा, सर्वतो दधिरक्षायास्तात्पर्यविषयत्वम्, दध्युपघातकजन्यनाशोत्पत्तिप्रतियोगिकत्वरकर्तृकव्यापारप्रयोज्याऽभावाऽधिकरणं दधीति बोधः। छत्रिणो यान्तीत्यत्र अच्छत्रिषु यानकर्तृत्वाऽनुपपत्त्या छत्रिपदस्य छत्र्यछत्रिसाधारणे सार्थवाहे शक्यलक्षणोभयार्थबोधिका लक्षणाऽङ्गीक्रियते। तथा च—यानानुकूलकृतिमन्त एकसार्थवाहा इति बोधः।

वैयाकरणैः राजपुरुषादिसमासस्य राजस्वत्ववत्पुरुषे, पाचकछत्र्यादिपदस्य पाककर्तृच्छात्रसम्बन्ध्यादौ शक्तेरंगीकारात् तत्र वाक्ये लक्षणावत्त्वे बाधकाऽभावात्॥ यद्वा—वाक्यस्य लक्षणाविरहेऽपि स्वबोध्यसम्बन्धरूपलक्षणामतमाश्रित्य छत्रिपदस्य

लक्षणा। यद्वा—छत्रपदस्य एकसार्थवाहित्वे लक्षणा, मतुबः सम्बन्धो अर्थः, एकसार्थवन्तो यान्तीत्यर्थः। यद्वा—मत्त्वर्थेनुप्रत्ययस्य छत्र्यादिघटितसमूहे लक्षणा, छत्रपदं तात्पर्यग्राहकम्। यद्वा—छत्रिपदं छत्रिविशिष्टे यौगिकं राजनि रूढं योगरूढमिति। अथ गंगा जलप्रवाहः, तदा घोषो मत्स्यः लक्ष्यार्थः, अथ घोषोऽल्पवसतिः तदा गंगा तीरार्थकम्, तत्र लक्षणा। तत्र तत्र अन्वयाऽनुपपत्तिर्नास्ति लक्षणा चाऽस्ति, अतो लक्षणाया अन्यदपि कारणं तात्पर्यानुपपत्तिः स्कार्थम्, ततो न व्यभिचारः, तीरबोधे जहत्स्वार्था, गंगातीरबोधे त्वजहत्स्वार्था॥

अथ-यथा जात्याकृतिव्यक्तयः पदार्थः शक्यः, तद्वत् शक्यसम्बन्धिनः जात्याकृतिव्यक्तयः संसृष्टपदार्थो न लक्ष्यः, व्यक्तिमात्रं लक्ष्यम्, क्वचित् तीरत्वेन क्वचित् गंगातीरत्वेन लक्ष्यार्थस्य ग्रहणात्, लक्ष्यतावच्छेदकस्य नियततयाऽग्रहणात् तीरसमीपसमवायात्मिकाया लक्षणायास्तीरत्वेऽनावश्यकत्वात्, लक्ष्यार्थनिश्चये सति तद्धर्मभानात्, अन्वयाऽनुपपत्तेस्तात्पर्यानुपपत्तेस्तत्राऽसत्त्वात्, शक्यतावच्छेदकस्य तु पूर्वं प्रकारतया नियतत्वेन भानाऽवश्यकत्वात् अन्यूनानतिरिक्तधर्मस्य शक्यतावच्छेदकत्वात्, लक्ष्यतावच्छेदके तन्नियमाऽभावात्। किञ्च—लक्ष्यतावच्छेदकेऽपि लक्षणा, तदा स्वातन्त्र्येणाऽपि क्वचिद्धर्मो लक्ष्यः, क्वचिद् व्यक्तिर्लक्ष्या क्वचिदाकृतिर्लक्ष्या, इति सम्बन्धितात्पर्यविषयपदार्थ एव लक्ष्य इति वास्तववृत्तभंगान्नियतलाक्षणिकबोधभंगपातापत्तिरेव स्यात्। किञ्चगंगायां सेतुरित्यत्र उभयतीरसंयुक्तमध्यस्तम्भाधारजलाऽसंयुक्ताऽविच्छिन्नपार्थिवव्योममार्गः सेतुः, अत्र गंगाशक्यजलप्रवाहस्याऽनेके सम्बन्धा अनेके सम्बद्धार्था लाक्षणिका लक्ष्यतावच्छेदकानि यथायथं ग्राह्याणि तात्पर्यविषयत्वेनाऽप्यननुगमात् लक्ष्यताऽवच्छेदकाऽननुगमात् लक्ष्यतावच्छेदके न लक्षणा॥ याज्ञिकः सोऽयं भृत्यो देवदत्त इत्यत्र तत्कालविशिष्टस्य एतत्कालविशिष्टस्य देवदत्तस्याऽभेदेन बोधात् तत्कालावच्छिन्नस्मरणीयाऽभिन्नैतत्कालावच्छिन्नव्यक्तिविशेषो ज्ञानविषय इति बोधे प्रत्यभिज्ञात्मके जातेऽपि तदुत्तरव्यक्तिमात्रभानाऽवसरेषु केचन धर्मा निवर्तन्ते केचन चानुवर्तन्ते इति तथास्थले जहदजहल्लक्षणा घटते॥

अथ न्यायार्थं चन्द्रंमानयेति प्रयोगेऽन्यथानुपपत्त्या चन्द्रकुमारे चन्द्रस्य लक्षणा, चन्द्रकुमारस्य बुधे बुधस्य धीमति लक्षणा, न्यायफलकधीमन्तमानयेति तदर्थः। तत्र लक्षितलक्षणा। द्विरेफपदात् रेफद्वयसम्बद्धनाम भ्रमरपदं लक्ष्यते, भ्रमरेषु गुञ्जारवोपलक्षितकृष्णभ्रमर उपलक्ष्यते, सा लक्षितलक्षणा। लक्षितपदवाच्यत्वं वा लक्षितपदलक्ष्यत्वं लक्षितलक्षणात्वम्। अथ—गौणी लक्षणा—सादृश्यविशिष्टे लक्षणा, इदमादिपदविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा 'सिंहोऽयमि'त्यत्र सिंहसादृश्यबोधिका, सेयं साध्यवसानिका, साध्यस्य गुणक्रियाशक्त्यादेः वासात्मिका, एवम्—इदमादिपदभिन्नविशेष्यवाचकपदसमानविभक्तिकपदनिष्ठा, 'अग्निर्माणवक' इत्यत्र शुचित्वादिगुणसदृशगुणवत्त्वबोधिका स्थायिगुणवत्त्वबोधिका॥

निरूढा लक्षणा—लक्ष्यतावच्छेदकानि प्रगृह्य तत्तद्रूपेण प्रत्ययजनिका शक्यसम्बन्धात्मिका सा निरूढालक्षणा, 'अरुणया गवा सोमं क्रीणाती'त्यत्र आरुण्यादिप्रकारेण तदाश्रयानुभाविका, 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र श्वेतगुणिपश्वात्मकद्रव्यप्रत्ययजनिका॥ व्यञ्जना लक्षणा—गंगायां घोष इत्यत्राऽनन्वितप्रयोगे शैत्यपावनत्वादिरूपोऽर्थो व्यञ्जनया व्यज्यते, शब्दस्य गंगापदस्य प्रवाहे या शक्तिस्तन्मूला सा। किञ्च—'दूरस्था भूधरा रम्या' इत्यत्र भूधराः पर्वताः शक्यार्थाः, तन्मूला भूधराः भूमिस्वामिनः प्रजारक्षकाः शासकाश्चेति राजानो व्यञ्जनया प्रतीयन्ते॥

अथ 'गच्छ गच्छसिं चेत् कान्त ! पन्थानः सन्तु ते शिवाः' ममाऽपि जन्म तत्रैव भूयाद् यत्र गतो भवानि'त्यत्र भवद्गमनोत्तरं मम प्राणवियोगो भविष्यत्यतो न गन्तव्यमित्यर्थो व्यज्यन्ते, जन्मपदस्य जन्मपदशक्यव्याप्तिसम्बद्धमरणमादाय तेन गमनाऽभावे लक्षणा। अथ अर्थशक्तिमूला व्यञ्जना—'गच्छ गच्छसि चेत् कान्त मा विशंकस्व मत्कृते। त्वयाऽर्जितानि भोग्यानि भोक्ष्येऽहं भाग्यशालिनी'-त्यत्र गमनं मरणव्यञ्जकं, मरणोत्तरभोगार्थक-

भाग्यादिमत्तया विज्ञापनेन मच्छ्लोकत्यागं कुर्वित्यपि व्यज्यते। मरणम् अशोकः सुस्थिरजीवनवृत्तिरुच्छृंखलता चेत्यर्था व्यज्यन्ते, तेऽर्थशक्तिमूला व्यंग्यार्थाः ॥ शक्तिवत् लक्षणाऽपि अनेकविधा पदपदार्थानामानन्त्यात् ॥

शाब्दबोधे पदज्ञानं करणम्, पदज्ञानम् आनुपूर्वीज्ञानम्, पदज्ञानं शक्तपदज्ञानं पदनिष्ठशक्तिज्ञानम्, लक्षकपदज्ञानं वा उभयपदज्ञानं, तत्र तच्छक्तपदज्ञानं तच्छाब्दबोधे कारणम्। लक्षकपदज्ञानं तु न कारणं, किन्तु समभिव्याहृतशक्तपदज्ञानमेव कारणम्, तल्लाक्षणिकपदसमभिव्याहृतशक्तपदज्ञानं तत्स्मारितलक्ष्यार्थविषयकशाब्दबोधजनकम्, गंगायां घोष इत्यत्र आभीरपल्लीशक्तघोषपदज्ञानं लाक्षणिकगंगापदज्ञानस्मारिततीरात्मकार्थबोधजनकम्। 'कुमतिः पशुः' पशुसदृशत्वे पशुपदं लाक्षणिकम्, कुमतिरिति कुत्सितज्ञानवति लाक्षणिकम्, तत्रैकं तात्पर्यग्राहकं व्यर्थम्, अन्यदपि तथा, एवं च शक्तेरभावात् लक्षणैव न स्यात्, किन्तु—आनुभाविकी शक्तिरुभयपदेऽङ्गीकरणीयेति तद्बलाच्छाब्दबोधबलाल्लक्षणाऽपि भवेत्। शक्तेरिव भक्तेरपि ज्ञानम् आनुभावकं भवति। शक्तान्वयबोधं प्रति शक्तत्वेन लक्षकान्वयबोधं प्रति लक्षकत्वेन पदज्ञानं कारणम् ॥

मीमांसकमते वाक्यमपि लक्षकम्, चित्रगुसमुदायस्य लक्षणया चित्रगोस्वामिनां बोधः, गभीरायां नद्यां घोष इत्यत्र गभीरनदीतीरस्य बोधः। समस्तवाक्ये वैयाकरणैरपि शक्तेरंगीकारात् तत्सम्बन्धस्य लक्षणाया अंगीकारः। असमस्ते पदे तु नदीपदस्य नदीतीरेऽजहत्स्वार्था लक्षणा, एकदेशेन नद्या सह गभीरपदार्थस्याऽभेदेनाऽन्वयः, तथा च—'गभीराऽभिन्नप्रवाहसमीपतीरवृत्त्याभीरपल्ली'ति बोधः। चैत्रस्य गुरुकुलम् इत्यत्र गुरुकुलपदार्थैकदेशे गुरुत्वे चैत्रनिरूपितत्वस्याऽन्वयस्य सर्वानुमतत्वात्, तथाविधाऽऽकांक्षासत्त्वात् ॥ अथवा—नदीपदस्य गभीरनदीतीरेऽजहत्स्वार्था लक्षणा, गभीरपदं तात्पर्यग्राहकम् 'नदीपदं गभीरनदीतीरविषयकबोधजनकं भवत्वि'ति वक्त्रिच्छात्मकतात्पर्यग्राहकम्—इत्येवं पदलक्षणया निर्वाहः। विशेषणविभक्तेर्निरर्थकत्वेन घोषपदेन गभीरायामित्यस्याऽनासन्नत्वेन गभीरनद्यां घोष इति समासे लाक्षणिकगभीरपदार्थे सप्तम्यर्थाऽन्वयाऽभावेन सर्वत्र उत्तरपदस्य नदीपदस्य लक्षणाया एव युक्तत्वात् गभीरपदस्य लक्षणाया अयुक्तत्वात् ॥

अथ—स्वबोध्यसम्बन्धत्वं लक्षणात्वं न तु शक्यसम्बन्धत्वं, तथा च गंगायां घोष इत्यत्र गंगापदस्य स्वबोध्यप्रवाहसम्बन्धस्तीरे लक्षणा। गभीरायां नद्यां घोष इत्यत्र तु पदद्वयसमुदायबोध्या या गभीराऽभिन्ननद्याः सामीप्यादिसम्बन्धस्तीरे लक्षणा, चित्रगुरित्येतद्वाक्यस्यापि तद्बोध्यचित्राऽभिन्नगोसम्बन्धस्य चित्रगोस्वामिनि लक्षणा, इत्येवं वाक्ये लक्षणा, तेन एकदेशान्वयस्य पदान्तरस्य तात्पर्यपरकस्याऽकल्पनमिति ॥ परन्त्वेवं मौनिश्लोकादौ पदाऽभावेन स्वबोध्यत्वविरहात्, गंगायामित्यत्र सप्तम्यन्तज्ञानेनाऽपि प्रवाहोपस्थित्या तत्सम्बन्धितीरे लाक्षणिकत्वापातात्, अपभ्रंशशब्दज्ञानस्यापि शक्तिभ्रमेणाऽर्थस्मारकतया तादृशार्थसम्बन्धिनि लाक्षणिकत्वापातात् साधुत्वप्रसक्तेः, वाक्ये शक्त्यभावे प्राप्ते वाक्यज्ञानजन्यबोधाऽप्रसिद्धेः, लक्षणाया अप्रसिद्धेः तत्र तत्र तत्तद्दोषदुर्वारत्वम्। अतः पदे शक्यसम्बन्धो लक्षणा, न तु वाक्ये स्वबोध्यसम्बन्धो लक्षणा ॥

नियमतः समासप्रयुक्तलाक्षणिकोत्तरपदकसमासत्वं बहुव्रीहित्वम्। बहवो व्रीहयो यस्मिन् खले बहुव्रीहिरिति, व्रीहिपदं व्रीहिराशौ लाक्षणिकं, तदंगदेशे बहुत्वाऽन्वयः, बहुत्वसंख्याकव्रीहिराश्युपलक्षितखलमिति। यस्येति प्रधानेऽर्थे तु—इयत्ताग्रहविषयसंख्यातिरिक्तसंख्यात्वदभिन्नो यः त्रित्वाऽन्यूनसंख्याकत्वविशिष्टपुञ्जात्मकराश्याश्रयो व्रीहिः तन्निष्ठस्वत्वनिरूपितस्वामित्ववानित्यर्थः। एवं चित्रगुर्गोपः—चित्रा गावो यस्येति गोपदस्य चित्रागोस्वामिनि अजहत्स्वार्था लक्षणा, तदर्थैकदेशे गवि चित्रपदार्थस्याऽभेदेनाऽन्वयः, चित्राऽभिन्नगोस्वामिगोप इति बोधः। एकदेशाऽन्वयाऽनङ्गीकारे गोपदस्य चित्रगोस्वामिनि अजहल्लक्षणा, चित्रपदं 'गोपदं चित्रगोस्वामिविषयकबोधजनकं भवत्वि'ति

तात्पर्यग्राहकम्, चित्राऽभिन्नगोस्वामिगोपः। आरूढो वानरो यं वृक्षमिति वानरपदस्य वानरारोहणकर्मणि अजहत्स्वार्थलक्षणा, आरूढपदं 'वानरपदं वानरारोहणविषयकबोधजनकं भवत्वि'तितात्पर्यग्राहकम्, स्वकर्मकारोहणकर्तृवानरसम्बन्धी वृक्ष इति बोधः। बहुव्रीहौ उत्तरपदे लक्षणा पूर्वप्रदं तात्पर्यग्राहकम्। पीतपयस्कं पात्रमित्यत्र पीतं पयो येनेति स्वकरणकपानकर्मजलसम्बन्धित्वेन पात्रम्। पक्वतण्डुलश्चैत्रः पक्वः तण्डुलो येन, स्वकर्तृकपाककर्मतण्डुलसम्बन्धित्वेन चैत्रम्, दत्ता दक्षिणा यस्मै दत्तदक्षिणो द्विजः स्वसम्प्रदानकदानकर्मदक्षिणासम्बन्धित्वेन द्विजम्, पतितं पत्रं यस्मादिति पतितपत्रस्तरुरित्यत्र—स्वाऽपादानकपतनाश्रयपत्रसम्बन्धित्वेन तरुम्, रक्तः पटो यत्रेति रक्तपटः कायः रक्ताऽभिन्नस्ववृत्तिपटसम्बन्धित्वेन कायम्, बाणेन छिन्नः करो येनेति यस्येति वा, बाणकरणकस्वकर्तृकच्छिदाकर्मकरसम्बन्धित्वादिना नरं, बहुव्रीहिर्बोधयति ॥

तत्पुरुषः—तस्य पुरुषः तत्सम्बन्धिपुरुषः राज्ञः पुरुषः राजपुरुषः, तत्पुरुषे पूर्वपदे लक्षणा, राज्ञा सह पुरुषस्याऽर्थस्य विभक्त्यर्थं सम्बन्धादिकम् अद्वारीकृत्य भेदसम्बन्धेनाऽन्वयबोधो न भवति, अनिपातितनामार्थयोर्भेदेन नाऽन्वयबोधः। भेदसम्बन्धास्तादात्म्यातिरिक्ताः संयोगसमवायस्वरूपकालिकप्रतियोगित्वाद्याः, इवार्थः सादृश्यम्, चन्द्र इव मुखम्—चन्द्रमुखम्, चन्द्रप्रतियोगिताकसादृश्यानुयोगितावन्मुखम्। सादृश्यं वर्तुलतौज्ज्वल्यादिधर्मविशेषा वा अतिरिक्तपदार्थः। निपातनाम्नोर्भेदेनाऽन्वयबोधः, घटो न पट इत्यत्र निपातनाम्नोर्भेदेनाऽन्वयः, पटप्रतियोगिकभेदवान् घटः। नीलो घट इत्यत्राऽभेदेन नाम्नामर्थयोः नीलाऽभिन्नघट इति बोधः। राजपुरुष इत्यत्राऽस्मृतषष्ठिकर्मकस्यापि राजसम्बन्धिपुरुषबोधो भवत्येवेति राजपदं तत्र लाक्षणिकम्, सर्वत्र तत्पुरुषे पूर्वपदे निरूढा लक्षणा, उत्तरपदं तात्पर्यग्राहकम्, उत्तरपदार्थेऽभेदेनाऽन्वयः। ग्रामं गतो ग्रामगत इत्यत्र ग्रामकर्मकत्वे, चैत्रेण नीतः चैत्रनीत इत्यत्र चैत्रकर्तृकत्वे, ब्राह्मणाय दत्तं ब्राह्मणदत्तमित्यत्र ब्राह्मणसम्प्रदानकत्वे, वृक्षात्पतितो वृक्षपतित इत्यत्र वृक्षाऽवधित्वे, चैत्रस्य धनं चैत्रधनमित्यत्र चैत्रस्वत्वे, गृहे स्थितो गृहस्थित इत्यत्र गृहाऽऽधेयत्वे, पूर्वपदलक्षणा, उत्तरपदार्थे लाक्षणिकार्थाऽन्वयः ॥

धवश्च खदिरश्च धवखदिरौ द्वन्द्वसमासे सहवृत्तित्वामके मुख्ये साहित्ये, एकक्रियान्वयित्वात्मके गौणे साहित्ये, वा लक्षणेति मीमांसकाः। इतरेतरद्वन्द्वः—एकवचनाऽन्यसुबाकांक्षसमासः। समाहारद्वन्द्वः—एकवचनान्यसुबाकांक्षाशून्यसमासः। धवखदिराविति इतरेतरद्वन्द्वे धवत्वं खदिरत्वं च प्रत्येकं न उद्देश्यतावच्छेदकम्, न द्विवचनार्थद्वित्वविशेष्यतावच्छेदकम्, सुपाम् उद्देश्यतावच्छेदकव्याप्यसंख्याबोधकत्वनियमात्। धवद्वयनिष्ठद्वित्वखदिरद्वयनिष्ठद्वित्वयोः प्रत्येकं धवत्वखदिरत्वव्याप्यत्वेन धवद्वयखदिरद्वयबोधापत्तिवारणाय खदिरपदस्य सहवृत्तिधवखदिरे अजहत्स्वार्थलक्षणा, 'धवपदं तु खदिरपदं सहवृत्तिधवखदिरं बोधयत्वि'तितात्पर्यग्राहकम्, उद्देश्यतावच्छेदकं सहवृत्तित्वरूपसाहित्यं, तद्व्याप्यत्वं न धवद्वयवृत्तिद्वित्वस्य न वा खदिरद्वयवृत्तिद्वित्वस्य, किन्तु धवखदिरोभयवृत्तिद्वित्वस्यैवेति न धवद्वयबोधापत्तिर्न खदिरद्वयबोधापत्तिः, न वा धवखदिरोभयबोधाऽनुपपत्तिः, सहवृत्तिधवखदिरद्वयकर्मकच्छेदनानुकूलव्यापारानुकूलकृतिमाँस्त्वमिति बोधः ॥

अथवा साहित्यं सहवृत्तित्वरूपम् एकक्रियान्वयित्वरूपं वा, असमानाधिकरणधवखदिरयोरपि द्वन्द्वात्, घटत्वपटत्वयोरपि द्वन्द्वात्, धवदर्शनखदिरच्छेदनतात्पर्येण प्रयुक्ते—'धवखदिरौ पश्य छिन्धी'त्यत्र द्वन्द्वे नैकक्रियान्वयित्वरूप साहित्यम्। एकशाब्दबोधीयक्रियान्वयित्वरूपं तु शाब्द बोधे न विषयम्,—एकशाब्दबोधीयक्रियान्वितधवविषयकदर्शनाऽऽश्रयः एकशाब्दबोधीयक्रियान्वितखदिरकर्मकच्छेदनाऽनुकूलकृतिमाँश्चेतिशाब्दबोधस्याऽऽजायमानत्वात्। एकक्रियाविषयतानिरूपितसंसर्गतानिरूपितशाब्दबोधविषयत्वरूपं साहित्यमपि स्वस्मिन् स्वविषयकं नाऽनुभूयते। यदि त्वेककालवृत्तित्वं, तदपि शाब्दबोधाऽविषयम्। यदि अपेक्षाबुद्धिविषयत्वं, तदपि बोधे प्रकारतया नाऽनुभूयते। इतरेतरे द्वन्द्वे साहित्यस्याऽभावात्। साहित्यं न द्वन्द्वलक्ष्यता-

वच्छेदकपदार्थः, शाब्दबोधोत्तरकालीनमानसप्रत्यक्षविषयं यदर्थसाहित्यं तत्र द्वन्द्वः, ययोरर्थभेदे पदयोः प्रयोगस्तयोर्द्वन्द्वः, द्वन्द्वे चकारार्थो भेदव्याप्यः, वास्तवभेदो यत्र आर्थस्तत्र द्वन्द्वः, 'राजपुरोहितौ सायुज्यकामौ यजेयातामि'त्यत्र राज्ञः पुरोहितस्य च द्वन्द्वः, 'राजा च पुरोहितश्चे'ति अङ्गीकृतो जैमिनीये शास्त्रे, यत्र पदार्थयोर्भेदस्तत्रैव चकारप्रयोगः, अहिश्च नकुलश्च अहिनकुलौ, नीलघटयोरभेदः—इतिप्रयोगे तु प्रागसमस्ते नीलस्य नीलत्वे नीलरूपे घटस्य घटत्वे लक्षणामाश्रित्य ततो लाक्षणिकार्थयोर्भेदोत्तरं तदर्थकपदयोर्द्वन्द्वः नीलश्च घटश्च नीलघटौ,—नीलत्वघटत्वार्थौ, तयोराश्रयाऽभेदः, घट आश्रयोऽभिन्नः, एवं—'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानामि'ति न्यायसूत्रे प्रमाणत्वप्रमेयत्वादौ पदार्थत्वे च लक्षणाः, ततो द्वन्द्वः, तत्राऽप्याश्रयस्य प्रमेयादेः पदार्थस्याऽभेदेनाऽन्वयः । घटश्च घटश्च घटश्च घटा इति पदार्थवास्तवभेदाद् द्वन्द्वः, सरूपैकशेषे हरीत्यादिपदे तु सूर्यत्वसिहत्ववानरत्वस्य विष्णुत्वादिभेदेऽपि 'सकृदुच्चरितः शब्द एकवृत्त्या एकबोधं जनयती'तिनियमेन पुनरन्यार्थबोधार्थं पुनरुच्चारणमपेक्षते, एवं च सति धर्मलक्षणोत्तरं पदद्वन्द्वे एकशेषो निर्वाह्यते ॥

अथ—समाहारद्वन्द्वे समाहारे लक्षणेति मतान्तरम्, अन्ये तु न समाहारे लक्षणेति । अहिनकुलं, हस्त्यश्वं, पाणिपादमित्यादौ—अहिश्च नकुलश्चैतयोः समाहारः अहिनकुलम् समाहारः—अपेक्षाबुद्धिविशेषविषयता, साऽनुभवगोचरा, तत्र उत्तरपदे नकुलादौ अजहत्स्वार्था लक्षणा, 'नकुलपदम् अहिनकुलसमाहारं बोधयत्वि'-त्यादिरूपवक्तृतात्पर्यग्राहकं पूर्वपदम् अहिप्रभृति, तत्र च 'अपेक्षाबुद्धिविशेषविषयत्वात्मकमहिनकुलवृत्तिद्वित्वमिति बोधः ॥

अथ—'भेरीमृदंगं वादये'-त्यत्र भेरी च मृदंगश्चैतयोः समाहारः भेरीमृदंगम्, मृदंगपदस्य भेरीमृदङ्गसमाहारेऽजहत्स्वार्थलक्षणा, भेरीपदं तु 'मृदंगपदं भेरीमृदंगसमाहरं बोधयत्वि'तितात्पर्यग्राहकम्, समाहारोऽत्र द्वित्वम् अपेक्षाबुद्धिविशेषविषयत्वं द्रव्यगुणकर्मादिसाधारणम्, वादनं चाऽभिघातसंयोगजनकक्रिया, विषयत्वे क्रियाऽन्वयाऽसंभवः, अतस्तत्र स्वाश्रयवृत्तितासम्बन्धेन वादनक्रियाश्रयभेरीमृदंगवृत्तिद्वित्वत्वसम्बन्धेन क्रियाया विषयत्वेऽन्वयः कर्तव्यः, तथा च—प्रयोगप्रामाण्यम् । भेरीमृदङ्गनिष्ठाऽपेक्षाबुद्धिविशेषविषयत्ववृत्ति यत् स्वाश्रयवृत्तित्वसम्बन्धावच्छिन्नकर्मत्वं तन्निरूपकसंयोगावच्छिन्नक्रियानुकूलकृतिमाँस्त्वमिति बोधः ॥

द्विगुसमासे पञ्चानां मूलानां समाहारः पञ्चमूलीत्यत्र संख्यापूर्वद्विगौ पञ्चमूलसमाहारे मूलपदस्याऽजहत्स्वार्थलक्षणा, पञ्चपदं 'मूलपदं पञ्चमूलसमाहारं बोधयत्वि'ति तात्पर्यग्राहकम्, पञ्चमूलसमाहार इति बोधः ॥ केचन—'अहिश्च नकुलश्चे'-ति चकारो भेदार्थकः, एकत्ववान् अहिर्नकुलभिन्नः, एकत्ववान्नकुलोऽहिभिन्न इति प्रत्येको बोधविषयः, अतो न लक्षणा, समाहारसंज्ञा तु नदीवृद्ध्यादिसंज्ञावत् पारिभाषिकी न तु यौगिकी सार्थका, अत्र एकत्वस्य नपुंसकत्वस्य तान्त्रिकी सूत्रकृत्सिद्धिः, तत्प्रयुक्ता समाहारसंज्ञा पारिभाषिकी ॥ अन्ये तु—एकवचनान्तत्वनपुंसकलिङ्गत्वयोः साधुत्वरक्षार्थं समाहारसंज्ञाकरणम्, संज्ञाऽन्वर्था यौगिकी, न तु पारिभाषिकी, तथा च व्याकरणाऽसिद्धसमाहारस्थले एकवचनं नपुंसकत्वं च न साधु, बोधोऽप्यसाधुः, तत्र द्वन्द्वोऽपि न कार्यः इति ॥

अथ—एकशेषे 'माता च पिता च पितरौ, श्वश्रूश्च श्वशुरश्च श्वशुरौ, चैत्रस्य पितरौ चैत्रस्य श्वशुरौ चे'-त्यत्र पितृद्वयस्य संभवेन पितृपदस्य उत्पादकमातापित्रोः अजहत्स्वार्था लक्षणा, चैत्रनिष्ठजन्यतानिरूपितजनकतावद्द्वित्वाश्रयदम्पतीत्यर्थबोधः । श्वशुराविति विरूपैकशेषे श्वशुरपदस्य पत्नीजनकसम्पत्योरजहत्स्वार्थलक्षणा, चैत्रनिष्ठपतित्वनिरूपितपत्नीत्ववत्स्त्रीनिष्ठजन्यतानिरूपितजनकतावद्द्वित्वाश्रयदम्पतीति बोधः । भ्रातरावित्यत्र स्वसृभ्रात्रोरजहल्लक्षणा, पुत्रावित्यत्र दुहितृपुत्रयोरजहल्लक्षणा, ब्राह्मणावानयेत्यत्र ब्राह्मणीब्राह्मणोभयबोधतात्पर्येणोच्चरितब्राह्मणाविति ब्राह्मणपदे, शिवाशिवोभयबोधतात्पर्येणोच्चरितशिवाविति शिवपदे, अजहल्लक्षणा ॥

अत्राऽन्ये तु—लुप्तमातृपदस्मरणान्मात्राद्यवगमः, अस्मरणे तु पितृपदे जनकशरीरार्थे लक्षणा, तया मातापित्रर्थभानम् ॥ अपरे तु—मात्रा पितुर्द्वन्द्वे मातापितरौ मातरपितराविति प्रयोगद्वयीदर्शनात् नैकशेषः, किन्तु मातृत्वपितृत्वाभ्यामेकशक्तिमत् पितृपदं प्रकृत्यन्तरमेव। न तत्र लक्षणा। श्वश्रूत्व-श्वशुरत्वाभ्यामेकशक्तिमत् सूर्यचन्द्रयोः पुष्पवन्तादिवत् श्वश्रूश्वशुरौ मातापितराविव्येव द्वन्द्वे प्रयोगाः। यद्वा—घटश्च घटश्च घटश्च घटा इति सरूपैकशेषे लक्षणां विनाऽपि बोधः। अनेकघटबोधतात्पर्यज्ञानसहितेन शक्तिज्ञानसहितेन लक्षणां विनाऽपि बोधः। अनेकघटबोधतात्पर्यज्ञानसहितेन शक्तिज्ञानसहितेन घटपदज्ञानेन घटत्वेन धर्मेणाऽनेकघटोपस्थितिजननात्, अनेकत्वविशिष्टघटत्वावच्छिन्नघटा इति बोधः, द्वित्वविशिष्टमातापितृत्वावच्छिन्नमातापितराविति बोधः, द्वित्वविशिष्टस्त्रीजनकदम्पतीत्वावच्छिन्नश्वश्रूश्वशुराविति बोधः, न तत्र लक्षणा ॥

कर्मधारये—नीलोत्पलमिति नीलपदं गुणवाचकं, नीलं च तदुत्पलं चेति अभिन्ननीलपदार्थस्तादात्म्येन उत्पलपदार्थे प्रकारः, अभेदसम्बन्धावच्छिन्ननील निष्ठप्रकारतानिरूपितविशेष्यतावदुत्पलमिति बोधः। तत्र द्वयोरपि पदयोर्न निरूढा लक्षणा ।।

अन्ये तु—असमस्तनीलपदस्य नीलत्वविशिष्टे लक्षणा, ततः कर्मधारयः, अभेदेनाऽन्वयः, अतः कर्मधारयप्रयुक्ता न लक्षणा, नीलत्वविशिष्टाऽभिन्नोत्पलमिति बोधः। वास्तुसमये—'निषादानां स्थपतिं याजयेदि'त्यर्थे संकरजातीयविशेषो निषादो यागकर्ता आचार्योपदेशेन प्राप्तस्वविद्यया यागं निष्पादयेदिति तत्र न पूर्वपदे लक्षणा न वा बहुव्रीहिरुत्तरपदनिरूढलक्षणाश्रयः किन्तु लक्षणारहितस्तत्पुरुषनिषादेशस्य तद्विद्याधिकारेण यागकर्तृत्वप्राप्तिमत्वात्, मुख्यार्थाऽन्वयो हि बलवान्, निषादस्थपतिः याजनं विद्याध्ययनं यागकर्तृत्वं चेति गौरवमपि न याथार्थ्यविघटकमिति निर्दोषं गौरवम्। तत्र लाघवम् अकिञ्चित्करम्, प्रकृताऽपेक्षयाथार्थ्याऽननुगुणत्वेन निष्फलत्वात् ॥

अथ—उपकुम्भमिति, नित्यसमासः, नित्यत्वम् अविग्रहत्वं, स्वाऽघटकपदघटितविग्रहकत्वं वा, 'कुम्भस्य समीपमिति अस्वपदविग्रहः, कुम्भपदे कुम्भसम्बन्धिनि निरूढा लक्षणा, उपपदार्थे समीपे प्रधाने विशेष्येऽभेदेन कुम्भसम्बन्धिनोऽन्वयः, कुम्भसम्बन्ध्यभिन्नसमीपमिति बोधः ॥

अत्र केचित्—उपपदार्थः सामीप्यं न तु समीपम्, कुम्भस्य निरूपितत्वेन उपपदार्थे सामीप्येऽन्वयः, तथा च—निरूपितत्वसम्बन्धावच्छिन्नकुम्भविशिष्टसामीप्यमिति बोधः ॥ यद्वा—कुम्भपदस्य कुम्भनिरूपितत्वे लक्षणा, कुम्भनिरूपितत्वविशिष्टसामीप्यमिति बोधः। अत्र मते समीपविशेष्यकबोधविलयः ॥ यद्वा—उपपदार्थैकदेशे सामीप्ये कुम्भपदार्थस्य कुम्भसम्बन्धिनोऽभेदेनाऽन्वयात् कुम्भसम्बन्ध्यभिन्नसामीप्यवदिति बोधः। अत्र उपपदस्य ससम्बन्धिकत्वार्थे न प्रमाणता, कुम्भनिरूपिताऽभिन्नसामीप्यनिष्ठप्रकारतानिरूपितविशेष्यताया निरवच्छिन्नत्वेन निर्धर्मितावच्छेदकशाब्दबोधस्याऽलीकत्वमिति ॥ यद्वा—कुम्भपदस्य कुम्भसमीपे लक्षणा, उपपदं तु 'कुम्भपदं कुम्भसमीपं बोधयत्वि'ति तात्पर्यग्राहकम्, कुम्भसमीपमित्येव बोधः। अत्र एकवचनाऽनुपस्थितिकाले द्वितीयपदार्थाऽनन्वितपदार्थमात्रशाब्दबोधाऽपलापाऽऽपत्तिरिति ॥

अथ—पिप्पल्याः अर्धम् अर्धपिप्पलीति तत्पुरुषे पिप्पलीसम्बन्धिनि निरूढा लक्षणा, अर्धपदार्थविशेष्यकः शाब्दबोधः 'पिप्पलीसम्बन्ध्यभिन्नमर्धम्'। अर्धशरीरम्—शरीरसम्बन्ध्यभिन्नमर्धम्। राजपुरुष—इत्युत्तरपदप्रधाने प्रयोगे पूर्वपदे लक्षणा, अर्धपिप्पलीत्यत्र पूर्वपदप्रधाने तत्पुरुषे उत्तरपदे लक्षणा ॥

समासे न लक्षणेति वैयाकरणाः, समस्ते वाक्ये न शक्तिरतो न लक्षणाऽपीति नैयायिकाः, क्लृप्तसमासघटकपदानां समासे चोभयत्र शक्तेर्लक्षणायाः क्लृप्ततया उभयमते पदे शक्त्या लक्षणया शाब्दबोधनिर्वाहः, अतो वाक्ये न शक्तिर्न वा लक्षणेति ॥ ४४७ ॥

**तात्पर्यं च तथाऽऽसत्तिर्योग्यता शाब्दबोधेन ।**
**आकांक्षः हेतवश्चाऽर्थे पदे वाक्ये यथायथम् ॥४४८॥**

शाब्दसामान्यं प्रति वृत्तिज्ञानसहकृतपदज्ञानजन्य-

पदार्थोपस्थितिद्वारा पदज्ञानं कारणम्। तत्र आसत्तिज्ञानं योग्यताज्ञानम् आकांक्षाज्ञानं तात्पर्यज्ञानं च यथायथं सहकारिकारणम्। स्वरूपसतीप्रभृतीनां न कारणत्वम्॥ आसत्तिः—अव्यवधानेन पदसन्निधिः-पदसमूहनिष्ठा, शाब्दबोधानुकूलपदविशिष्टपदत्वात्मकानुपूर्वीरूपाऽऽसत्तिः, तज्ज्ञानं कारणम्, वैशिष्टचं स्वाऽव्यवहितपूर्वत्वस्वाऽव्यवहितोत्तरत्वाऽन्यतरसम्बन्धेन॥ योग्यता—अर्थनिष्ठा 'एकपदार्थेऽपरपदार्थवत्त्वरूपा' तज्ज्ञानं शाब्दबोधे कारणम्॥ आकांक्षा पदनिष्ठा, 'पदस्य यत्पदविरहप्रयोज्यशाब्दबोधजनकत्वाऽभाववत्त्वं तत्पदस्य तत्पदवत्त्वरूपा, प्रकृतिप्रत्ययोः साकांक्षत्वात्। पदवत्ता च अव्यवहितोत्तरत्वाऽव्यवहितपूर्वत्वाऽन्यतरसम्बन्धेन, तज्ज्ञानं शाब्दबोधे कारणम्। तात्पर्यं शब्दनिष्ठं, तदर्थप्रतीतीच्छयोच्चरितत्वरूपं, तज्ज्ञानं शाब्दबोधे कारणम्,।

परस्पराऽन्वयबोधजनकतात्पर्यशालिपदाऽव्यवधानम् आसत्तिः, गो—अम्—पदार्थयोः गोकर्मकत्वयोर्योऽन्वयो निष्ठत्वं तद्बोधो 'गोनिष्ठकर्मते'ति तज्जनकं तात्पर्यं 'गोपदे अम्पदं निष्ठत्वसम्बन्धेन बोधं जनयत्वि'ति, तच्छालि तद्विषयं पदं गोपदम् अम्पदं च, तयोरव्यवधानेन आकांक्षाभास्यसम्बन्धेतराऽव्यवधानेन स्थितिः, अव्यवधानं—तादृशव्यवधानऽभावः आसत्तिः। गाम् आनयेत्यत्र निरूपकत्वं संसर्गः, गोकर्मतानिरूपकाऽऽनयनवान्, आनयनाऽनुकूलकृतिमान् त्वमिति बोधः। अव्यवधानम् आसत्तिः। 'गांपदम् आनयनपदाऽव्यवहितपूर्वम्' 'आनयनपदं गांपदाऽव्यवहितोत्तरमि'ति प्रमाभ्रमसाधारणं, तज्ज्ञानं शाब्दबोधे सहकारि कारणम्। भ्रमस्थले 'नीलं कपालं द्रव्यं वस्त्रमि'त्यत्र 'कपालं द्रव्यं नीलं च वस्त्रमि'ति तात्पर्येऽपि 'नीले द्रव्ये' अव्यवधानभ्रमवतः 'नीलाऽभिन्नद्रव्यं कपालं वस्त्रं चे'ति प्रमात्मकबोधो जायते, क्वचित्काव्यादौ पदाऽव्यवधानाऽभावेऽपि अर्थबोधजननात् पदार्थद्वयोपस्थितेरव्यवधानमावश्यकम्, इयं स्वरूपसती कारणम्॥

यत्पदार्थेन सह यत्पदार्थस्याऽन्वयः शाब्दबोधविषयतयाऽभिमतः, तादृशपदद्वयादिजन्योपस्थितिद्वयाऽव्यवधानं हेतुः। अथवा—पदज्ञानजन्यपदार्थोपस्थितिः स्मरणात्मिका आसत्तिः। अथवा—सापेक्षार्थनिरूपकपदनिष्ठाऽऽनुपूर्वीत्वम् अव्यवहितपूर्वत्वाऽव्यवहितोत्तरत्वाऽन्यतरत्वम् आसत्तिः, तत्स्मृतिः कारणम्। श्लोकेभ्यो योजनावाक्यादभिमताऽन्वयबोधः। मौनिश्लोकादौ तत्पदाऽव्यवधानाच्छाब्दबोधः। श्लोकघटकपदेष्वपि यस्याऽऽसत्तेरभानं तस्य न बोधः। चतुःपञ्चविशेषणविशिष्टे विशेष्ये 'छत्री कुण्डली वासस्वी दण्डी देवदत्त' इत्यत्र पञ्चमे चतुर्थे वा क्षणे प्रथमपदस्मरणनाशात् छत्रिपदस्य देवदत्तपदाऽव्यवधानस्मरणाऽभावात् 'छत्रवदाद्यभिन्नदेवदत्त' इति बोधो न स्यात् कारणाऽभावात्। तत्र तु—तत्तच्छत्रिकुण्डलीतिप्रत्येकपदश्रवणाऽनुभवजन्यसंस्कारैः, स्थायिभिः विशेष्यपदश्रवणोत्तरकालीनयावद्विशेषणविशेष्यपदसमुदायविषयकयुगपदेकस्मरणस्याऽभेदेन जननात्। अथवा—प्रत्येकपदश्रवणजन्यो विशिष्टसंस्कारः, पृथगेव विशेष्येण सह सम्पन्नः, चरमक्षणे सहभावाऽऽपन्नैरेकसंस्कारैणैकबोधजननम्। बहुसंस्कारैरनुकूलैरेकमहासंस्कारजननेऽविरोधात्, वेदान्तश्रवणेन—आत्माऽहमिति चरमः ब्रह्मेति च संस्कारो बहूनामभिमतः। बहुभिः संस्कारैर्वा समूहालम्बनैकस्मरणस्यैकक्षणे जननात्। अन्तिमपदसंस्कारः सर्वपूर्वसंस्कारान् स्वाऽन्वयिन एवोद्बोधयन् सानुदयिकमेकज्ञानं जनयतीति अन्तिमपदानुभवो वा उद्बोधकः। नानासन्निकर्षैर्घटपटसंयोगैर्नीलादौ संयुक्तसमवायैर्नीलत्वादौ संयुक्तसमवेतसमवायैरेकप्रत्यक्षं नीलघटपटाविति सामूहिकं प्रत्यक्षमिव ना—रा—य—णादिप्रत्येकवर्णैः स्वसंस्कारैश्चरमवर्णश्रावणे उद्बोधके जाते पदार्थोपस्थितिः समूहालम्बनात्मिका जायमाना पदार्थज्ञाने बोधे कारणं भवति॥ खले कपोता युगपत्पतन्तीतिवत् पूर्वपदार्था अन्तिमपदार्थे स्मृतिविषयतावैशिष्ट्येन युगपत्पतन्तीत्यपि क्रियाकारकसमूहालम्बनभावेनाऽन्वयगोचरः शाब्दबोधो भवति। दण्डान्वयवत् क्रियया खण्डान्वये जातेऽपि ततो दण्डान्वयो महावाक्यबोधश्च जायते इत्यपि योग्यम्। आकांक्षायोग्यतासन्निधिप्राप्तिबलादेव विरलपदार्थानां स्वानुकूलान्वयेन महावाक्यार्थबोधः सम्पद्यते॥

अथ—पदेऽक्षरे वाक्ये महावाक्ये स्फोटब्रह्मवादिमते एकस्मिन् पदे यावन्तो वर्णास्तावद्वर्णेऽ प्रकाश्य ऊहनीयः पदस्फोटो वाचकोऽर्थबोधजनकः। पदे एकेन वर्णेन बोधे सति अन्यवर्णनिरर्थकता, सर्ववर्णानां सम्भूय वाचकत्वे युगपदुत्पत्त्यभावादेव युगपत्समुदायाऽनुपपत्तिः, क्रमाभिव्यक्त्यनुभवाच्च समुदायाऽनुपपत्तिः, अतः चरमवर्णानुभवे सति वर्णव्यतिरिक्तः यावद्वर्णाभिव्यङ्ग्यः स्फोटः वर्णेषु पदेषु वाक्येषु च वाचकः। स्फुटति अभिव्यक्तीभवति अस्मादर्थ इत्यर्थवाचकत्वं यावदर्थप्रकाशकत्वं तत्तदर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं स्फोटत्वं, वर्णस्फोटत्वं, पदस्फोटत्वं, वाक्यस्फोटत्वम्, अखण्डपदवाक्योभयस्फोटत्वं, वर्णपदवाक्यत्रिकजातिस्फोटत्वं च वाचकत्वम्। 'पचति', 'रामः' इतिप्रयोगे तिब्विसर्गादिवर्णानामपि वाचकत्वं वर्णसमभिव्याहाररूपपदानामपि वाचकत्वं,—स्फोटवत्त्वं, ततः पदैः पदार्थबोधवत् वाक्येन वाक्यार्थबोध इति पदेषु पदार्थशक्तिरिव वाक्येषु वाक्यार्थशक्तिरपि, तत्तदीयस्फोटेष्वस्ति, तत्तच्छक्तिमत्त्वं पदस्फोटत्वं वाक्यस्फोटत्वं, पदस्य वाक्यस्य चाऽखण्डत्वम्, तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्याऽखण्डस्फोटसिद्धिः, अखण्डितपदानां शास्त्रं तु पञ्चकोशादिवत् प्रकृतिप्रत्ययाभ्यां व्युत्पादनमात्रोपायरूपं, कारणे सत्कार्यवादिनां कारणव्यापारमात्रं प्राविर्भावोपायरूपमितिवत्, वर्णानां शक्तिमत्तया तद्गतस्फोटानां वाचकत्वेऽपि लाघवेन जातेरपि स्फोटवत्त्वेन जातेरपि वाचकत्वं जातावपि स्फोटः, गुणेऽपि स्फोटः, कर्मस्वपि स्फोटः, व्यापक एव स ब्रह्मेति, ब्रह्मपदार्थः स्फोटः, तत्तद्वर्णाऽभिव्यक्तिस्त तदर्थोपस्थापिकेति व्यवस्थया न घटोच्चारणदशायां पटाद्युपस्थितिः। वर्णपदवाक्यजातिगुणस्फोटा ब्रह्मैवेति तत्र भेदव्यवहारस्तु पदाभिव्यक्तिवाक्याभिव्यक्तिभेदनिबन्धनः, न तु वास्तविकपदार्थभेदः, ब्रह्मणस्तस्यैकत्वात्,। मीमांसकानां स्फोटो ब्रह्मैव भावनात्मकः विधिप्रत्ययादिगतः, शाब्दीभावना आर्थीभावनैव ब्रह्म। नैयायिकानां तात्पर्यवत् ब्रह्म, आत्मा जीवाद्या अपि। विशिष्टाद्वैतिनां विशिष्टं ब्रह्म तत् ज्ञानेच्छाक्रियाशक्तिसम्पन्नं स्फोटस्वरूपमपि नियामकपरमपुरुषरूपम्। अन्येषां त्वन्तर्यामि फलदं ब्रह्म, केषाञ्चित्तु प्रमाबोधफलकं पौरुषेयवृत्तिरूपं स्फोटात्मकं ब्रह्म। शैवानां शिवाशक्तिरूपं वाङ्मयं ब्रह्म। वैदिकानां वेद एव सशक्तः समर्थ स्फुटार्थपरो ब्रह्म। सर्वेषां ब्रह्मव्यापकं परावाणी व्यापिका शब्दो व्यापकः शाश्वतश्चेति तिरोभावप्राविर्भावाऽवस्थायां सहकार्यपेक्षः स्फोटाऽस्फोटव्यवहार्यः। स्फुटोऽस्फुट इति नादध्वनिगो योऽन्यत्र पश्यन्तीमध्यमावैखरीगो भवति संस्कृतप्राकृतभाषः ब्रह्मैव व्यापकं तद्रूपमिति चाभिप्रायज्ञत्वशक्तिर्ब्रह्मरूपैवेति। यो हि पदकुशलवैयाकरणानां स्फोटः शाब्दबोधे हेतुरुपपद्यते, सः नैयायिकानां संस्कारः शाब्दबोधे हेतुरुपपद्यते, तन्नामभेदः, अधिकं तु स्वमताऽऽग्रहौत्पातिकम्। साक्षात्परम्परासम्बन्धास्तु यथापेक्षाः सर्वेषां सुलभाः। आत्मवादिनां गुणसंस्कारज्ञानादिलाघवनिर्वाहेऽधिकपदार्थान्तरकल्पना त्वायासमात्रम्॥

अथ प्राभाकराः—वाक्यप्रमाणकुशलाः 'यत्किञ्चित्पदजन्यपदार्थोपस्थितिसत्त्वेऽर्थस्मरणसमूहाच्छाब्दबोधं मन्यन्ते, अवान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणं कारणम्, न तु समूहालम्बनस्मरणम्, न वा पदजन्यपदार्थस्मरणम्, किन्तु लाघवेन पदार्थस्मरणं कारणम्, द्वारमित्यत्र पिधानाद्यर्थाध्याहारः, न तु पदाध्याहारः, एकपदश्रवणे श्रावणे ज्ञाने द्रागेव जाते तत्कोटिकाऽध्याहारमाकांक्षति, ज्ञानस्योर्ध्वमतिकत्वात्, पश्चात्तद्वाचकशब्दक्लृप्त्यभिगतिरितिलेखनपद्धतिपरायणानामाचारः। पाणिनिप्रभृतीनां सर्वार्थसाक्षाज्ज्ञानवतां तदनन्तरं सूत्रादिरचनाप्रवृत्तेः शब्दक्लृप्तिप्रवृत्तेः वार्तिकादिप्रवृत्तेश्च दर्शनात्, कवीनामप्यर्थानुसन्धानानुयायितत्तच्छब्दच्छन्दानुरचनावत्त्वस्य दर्शनात्, अर्थबोधोत्तरमेव भाषाप्रयोगात् आन्तरार्थबोधोत्तरं वाचः शब्दविषयत्वात्, खण्डनमण्डनादौ प्राङ्निर्धारिताऽर्थानुसारशब्दवाक्यदोषादिप्रवृत्त्यनुधावनात्, जन्ममूकबधिराणां ज्ञानार्थमात्रानुकूलचेष्टावत्त्वात्, शब्दस्य तेषामसाधनत्वात्॥

नैयायिकास्तु—सर्वव्यवहारस्य ध्वनिनादघोष-

वर्णस्वरादिहेतुत्वेन शक्तिलक्षणामत्तया बोधे जननीये शाब्दबोधे पृथक्प्रामाणिके शब्दस्य सवृत्तिकस्य करणतयाऽङ्गीकुर्वन्ति। अन्येऽपि सर्वे शाब्दिका एनां रीतिमनुयान्ति, अन्यथा विषयवाक्यं शक्तिपार्थक्यं पूर्वपक्षत्वमुत्तरपक्षत्वं निरसनं सिद्धान्तस्तत्त्वनिर्णयश्चेत्यादिर्विलुप्येतेति विदुषां शाब्दानुसरणिरविदुषामप्यनुकरणीयाऽऽवश्यकीति शब्दप्रयोगेऽर्थे सति पूरणप्रयोगेऽध्याहारविषयेऽगत्योपयाते पदे ज्ञाते पदार्थज्ञानमितिपदज्ञानादेव पूर्णबोधः, न तु तत्र पदार्थज्ञानाद् अध्याहृतात्, अर्थज्ञानेऽपि वाचकपदाऽशिक्षया पदाऽज्ञानेऽप्रयोगेऽपि पदस्थानापन्नेन पदत्वारोपितेन येन केनाऽपि करणेन पूर्णबोधस्य साधितत्वात्, तत्तच्छाब्दबोधे तत्तत्पदजन्यपदार्थोपस्थितेः हेतुत्वमावश्यकमिति। संस्कारैः समूहालम्बनस्मरणेन शाब्दबोधोत्पत्तेः तत्राऽध्याहृतपदज्ञानादर्थस्मृतिसत्त्वे बोधात्, न केवलाऽर्थस्य स्मृतिमात्रात्, वृत्तिज्ञानसहकृततत्तत्पदज्ञानजन्यतत्तत्पदार्थस्मृतित्वेनैव तत्तदर्थशाब्दबोधकारणत्वं सिद्धान्तयन्ति॥

यद्यपि—वक्तुस्तात्पर्येणाऽर्थाध्याहार एवोचित., किन्तु तात्पर्यस्याऽर्थबोधेच्छयोच्चरितत्वरूपस्य शब्दे वर्तमानस्य शब्दाऽनध्याहारेऽनाश्रयहतत्वेन बोधव्याघातकत्वापत्तिः स्यात्, अतस्तात्पर्यजीवनार्थं शब्दाध्याहार आवश्यकः। आकांक्षायाः क्रियाकर्मपदानामाश्रितया 'पदस्य यत्पदविरहप्रयोज्यशाब्दबोधजनकत्वाऽभाववत्त्वं तत्पदे तत्पदवत्त्वमि'त्यात्मिकायाः पदनिष्ठायाः शाब्दबोधे कारणत्वेन पदाध्याहार आवश्यकः, कारकनियमितविभक्तीनाम् उत्तरपदोपस्थितावेव सिद्धेः, उत्तरपदाध्याहार आवश्यकः, शत्रवे क्रुद्धचति वञ्चकाय द्रुह्यतीत्यादौ धातुयोगे चतुर्थी विहिता धातुपदाध्याहारं विना न स्यात्, अतः पदजन्यपदार्थोपस्थितिः शाब्दबोधे हेतुः, न तु केवला अर्थोपस्थितिरिति। मानसे बोधे त्वर्थोपस्थितिमात्रं न दुःसहम्॥

अथ पदार्थयोः परस्परवत्ता योग्यता, अर्थाऽबाधो योग्यता, पूर्वस्मिन् परस्मिन् पदार्थे मिथस्तद्वत्ता, एकपदार्थानुयोगिकाऽपरपदार्थप्रतियोगिकसम्बन्धो योग्यता, अव्यवहितोत्तरत्वं सम्बन्धः, अन्ये तु पदार्थाः, जलेन सिञ्चतीत्यत्र जलकरणकत्वार्थवत्ताऽव्यवहितोत्तरत्वसम्बन्धेन सेचनपदार्थे, सेचनपदार्थपूर्वत्वसम्बद्धकरणतावज्जलमिति च जलार्थे जलकरणकत्वाऽर्थेऽपि वा वर्तते। अतो जलकरणकसेचनानुकूलव्यापारानुकूलकृतिमानिति बोधः। एकपदार्थेऽपरपदार्थसम्बन्धा यथा–योग्यं भिन्ना योग्यतापदवाच्याः। योग्यताज्ञानाऽभावे शाब्दबोधाऽभावः। प्रयोक्तृतात्पर्यविषयसम्बन्धो योग्यता, तज्ज्ञानं संशयनिश्चयसाधारणं संशयनिश्चयसाधारणशाब्दबोधे कारणम्। अर्थाऽबाधः–अर्थबाधाऽभावस्तु स्वरूपसन्नेव कारणम्। पाषाणं भक्षतीति पाषाणकर्मकभक्षणार्थः अयोग्यः, वह्निं चर्वयतीति वह्निकर्मकचर्वणार्थोऽयोग्यः। योग्यताऽभावान् वाक्यार्थो वाक्यं च न प्रमाणम्॥

योग्यताविषये मीमांसकास्तु–अगृहीतार्थगन्तृत्वं प्रमाणत्वं, पदार्थाऽन्वयबोध एव शाब्दबोधः, पूर्वमनधिगतसंसर्गाऽधिगन्तृत्वमेव पदज्ञाने करणत्वम्, संसर्गज्ञानस्यैव योग्यताज्ञानरूपत्वेन करणत्वे सिद्धे पदज्ञानत्वेन करणत्वाऽभावः, प्रमाऽनुपपत्तिश्च॥

अथ—किन्तु पदार्थसम्बन्धज्ञानात्मकयोग्यताज्ञानस्य सर्वत्र नियततया कारणत्वे पदज्ञानस्य गृहीतार्थगन्तृत्वात् अप्रामाण्यमापद्येत, ततः शाब्दबोधस्याऽप्रमात्वं स्यात्, अतो योग्यताज्ञानं मा कारणमस्तु, पदज्ञानमेव करणं मन्तव्यम्। वाक्यघटकपदार्थाऽन्वयस्याऽपूर्वत्वेनाऽन्वयज्ञानस्य योग्यताज्ञानात्मकस्याऽप्यपूर्वत्वेनाऽकारणत्वात्॥

अथ नैयायिकाः–तत्तत्पदार्थस्मरणे जायमाने सत्यपि 'नीलो घटो द्रव्यं पट' इत्यत्र पदार्थानां विशेषाऽन्वयाऽदर्शने पदार्थकोटिद्वयोपस्थित्या 'प्रथमान्तघटपदार्थे प्रथमान्तनीलपदार्थान्वयो न वेति' योग्यतासंशयस्य संभवेन, 'घटमानये'-त्यत्र लोडन्तानयनेऽर्थे द्वितीयान्तघटार्थान्वयस्य निरूपितत्वाख्यस्य योग्यतानिश्चयस्य संभवेन, संशयनिश्चयसाधारणयोग्यताज्ञानं कारणम्, अनधिगतगन्तृत्वं तु न प्रमाणत्वम्, किन्तु प्रमासाधारणकारणत्वं प्रमाणत्वं, तद्वति तत्प्रकारकत्वं च प्रमात्वम्॥

यद्वा–पाषाणं भक्षतीत्यत्र अयोग्यतानिश्चयः

प्रतिबन्धकः, अयोग्यतानिश्चयाऽभावः शाब्दबोधे कारणम्, अयोग्यतानिश्चयो बाधनिश्चयः प्रतिबन्धकः, तदभावः कारणम्, बाधनिश्चयेन पाषाणं भक्षतीत्यत्र न बोधः, योग्यताज्ञानं त्वकिञ्चित्करम्। तद्धर्मिकतद्वत्ताज्ञानमात्रं प्रति तद्धर्मिकतदभाववत्तानिश्चयः प्रतिबन्धकः, अयोग्यतानिश्चयो बाधनिश्चयविधया प्रतिबन्धकः, अयोग्यतानिश्चयाऽभावः प्रतिबन्धकाऽभावविधया कारणम्। यत्र प्रतिबन्धकाऽभावस्तत्र योग्यताज्ञानं वर्तते, तन् पृथङ्‌ न कारणं गौरवात् अन्यथासिद्धत्वाच्च। तथा च योग्यताज्ञानाऽभावस्य शाब्दबोधाऽभावप्रयोजकत्वमप्यसंभवि। योग्यताज्ञानविलम्बः शाब्दबोधविलम्बकृदित्यप्यसंभवि। किन्तु यत्र यथार्थबाधनिश्चयस्तत्र शाब्दबोधाऽभावः, यत्र बाधनिश्चयभ्रमस्तत्र यावत्कालं भ्रमस्तावत्कालं शाब्दबोधो विलम्बते॥

अथ–सर्वथा योग्यताज्ञानं न कारणमिति न, तदतिरिक्तनिश्चितकारणसत्त्वेऽपि तदज्ञाने, तत्र च प्रयोगे द्रागेवाऽर्थनिष्ठयोग्यताज्ञाने जायमाने सति 'नर्तकी गायती'-त्यत्र नर्तनसमानकालीनसमानाधिकरणकगायनानुकूलक्रियानुकूलकृतिमती स्त्री–इतिबोधस्य सामानाधिकरण्यसमानकालीनत्वसम्बन्धात्मकयोग्यताज्ञानेन जायमानत्वात् तत्कारणत्वाऽनिरासात्। केवलशाब्दबोधे योग्यताज्ञानत्वेन हेतुत्वात्, अयोग्यताज्ञानाऽभावं बाधनिश्चयाऽभावत्वेन कवलीकृत्य कारणत्वाऽनुधावनाऽपेक्षया यत्र बाधनिश्चयादिप्रसंगाऽभावस्तत्र सर्वथा योग्यतानिश्चयस्य कारणत्वं सर्वानुभवसिद्धमिति॥

अथ आकांक्षाज्ञानं शाब्दबोधे कारणम्, सार्थकपदयोर्मिथः स्ववत्त्वं, एकपदार्थज्ञाने तदर्थाऽन्वययोग्याऽपरपदार्थस्य यज्ज्ञानं तद्विषयिणीच्छाऽऽकांक्षा, यत्पदाऽभावप्रयुक्तं यत्पदस्याऽन्वयबोधाऽजनकत्वं तत्पदसमभिव्याहृततत्पदवत्त्वम् आकांक्षा, प्रयुक्तत्वं–कारणाऽभावात्कार्याभावप्रतीतिबोधकस्वरूपसम्बन्धविशेषः, अननुभावकत्वं तादृशसम्बन्धाऽद्योतकत्वम्। तात्पर्यविषयशाब्दबोधविषयतत्तत्तदर्थविषयकस्मृतिनिरूपितज्ञाननिष्ठकारणतानिरूपितविषयित्वसम्बन्धावच्छिन्नाऽवच्छेदकताऽऽश्रयपदद्वयाऽन्यतरनिरूपितादृशपदद्वयान्यतरनिष्ठनियतानुपूर्व्याश्रयत्वं तादृशशाब्दबोधौपयिकाऽऽकांक्षा। 'घटं नये'-त्यत्र घटकर्मकाऽऽनयनानुकूलकृतिमानितितात्पर्यविषयशाब्दबोधविषयपदार्थस्मरणनिरूपितकारणताश्रयपदज्ञानीयविषयतावच्छेदकताश्रयं यद् द्वितीयान्तघटपदतिङन्तनीङ्धातुपदद्वयं तयोर्मध्ये तिङन्तनीङ्धातोः द्वितीयान्तघटपदोच्चारणोत्तरकालीनोच्चरितत्वरूपनियताऽनुपूर्व्याश्रयत्वाद् द्वितीयान्तघटपदस्य च तिङन्तनीङ्धातुपदोच्चारणपूर्वकालीनोच्चरितत्वात्मकनियतानुपूर्व्याश्रयत्वात् परस्परं तयोः साकांक्षत्वम्। घटमित्यत्र अम्पदं विना घटपदस्य घटपदं विना अम्पदस्य च स्वान्वयबोधाऽजनकत्वं, सहैव बोधजनकत्वं, अम्पदे घटपदवत्त्वम् आकांक्षा। घटपदे अम्पदवत्त्वम् आकांक्षा। यत्पदाऽभावप्रयुक्तो यत्पदनिष्ठशाब्दबोधजनकत्वाऽभावस्तत्पदाऽभावाऽभावः आकांक्षा, इत्येवम् अभावरूपाया आकांक्षाया उत्थितोत्थाप्याऽऽकांक्षयोः उत्कर्षाऽपकर्षौ न स्याताम्, अभावे उत्कर्षाऽपकर्षाऽभावात्। अतो घटपदभिव्याहृताऽम्पदत्वमाकांक्षेत्यादि बोध्यम्। घट नये-त्यत्र घटकर्मतानिरूपकनयनानुकूलकृतिमाँस्त्वमिति बोधः। घटमित्यत्र घटनिष्ठकर्मत्वम्, नयेत्यस्य नयनाऽनुकूलकृतिमत्त्वम्। पदयोरव्यवधानम् आसत्त्या लभ्यते। पदाऽव्यवधानमासत्तिः। क्रियाकारकपदानाम् अव्यवहितोत्तरत्वपूर्वत्वान्यतरत्वं तु आसत्त्या लभ्यते, 'घटम्' इत्यत्र आधेयतासम्बन्धेन घटप्रकारककर्मताविशेष्यक-घटनिष्ठकर्मत्वमिति बोधं प्रति घटपदोत्तरद्वितीयारूपाऽऽकांक्षाज्ञानं कारणम्। 'नये'-त्यत्र नयनप्रकारककृतिविशेष्यकनयनानुकूलकृतिमानिति शाब्दबोधं प्रति अव्यवहितोत्तरसम्बन्धेन लोट्पदे नीङ्पदवत्त्वं नीङ्पदेऽव्यवहितपूर्वत्वसम्बन्धेन लोट्पदवत्त्वं वाऽऽकांक्षा तत्स्मरणं कारणम्। तथा च घटकर्मकनयनानुकूलकृतिमानिति–शाब्दत्वव्यापकं यद्घटनिष्ठकर्मताविशेष्यकशाब्दत्वं नयनानुकूलकृतिविशेष्यकशाब्दत्वं च तदवच्छिन्नं प्रति आकांक्षाज्ञानस्य कारणत्वेन, आकांक्षाज्ञानशून्यकाले तु तादृशव्यापकधर्मावच्छिन्नबोधाऽनुत्पत्त्या विशिष्टशाब्दत्वात्मकव्याप्यधर्मावच्छिन्नस्याऽप्यनुदयात् आकांक्षाज्ञानस्य व्यापकधर्मावच्छिन्नोत्पादकसामग्रीरूपस्य व्याप्यधर्मावच्छिन्नं प्रति नियतपूर्ववृत्तित्वस्य निराबाधात्,

न आसत्त्या चरितार्थत्वम् । प्रयोजनाऽभावात् व्याप्य-धर्मावच्छिन्नं प्रति आकांक्षाज्ञानस्य कारणत्वं पृथक्त्वेन नांगीक्रियते । तथापि न निरर्थकत्वम् । घटमानयेति-वाक्यस्थाने प्रयुक्तात् 'घटः कर्मत्वम् आनयनं कृति' रितिवाक्यात् 'आधेयतासम्बन्धेन घटप्रकारककर्मता-विशेष्यकः, अनुकूलतासम्बन्धेन च आनयनप्रकारक-कृतिविशेष्यकः शाब्दबोधो न जायते, व्यापकशाब्द-बोधद्वयाऽभावात्, तयोः विशिष्टात्मकव्याप्यशाब्द-बोधोऽपि घटकर्मतानिरूपकाऽऽनयनानुकूलकृतिमानि-ति न ज्ञायते, 'घटम्' इतिस्थाने प्रयुक्ते 'घटः कर्मत्वम्' इत्यत्र, 'कर्मत्वं घट' इत्यपि वक्तुं शक्यत्वात् तत्र अविपरीते विपरीते वा प्रयोगे आसत्तियोग्यता-सत्त्वेऽपि अविपरीतो विपरीतो वा शाब्दबोधो न भवति, आकांक्षाऽभावात्, यतस्तत्र 'कर्मत्वं घट' इत्यत्र आकांक्षा नास्त्येव, अम्पदे घटपदोत्तरत्वस्यै-वाऽऽकांक्षात्वात् । अन्यथा 'अम् घट' इत्यपि साधुः प्रयोग आपद्येत, अतो व्यापकधर्मावच्छिन्ने खण्डबोधे आकांक्षाज्ञानस्य कारणत्वं सार्थकम् ॥

'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामि'-तिवाक्ये 'अयं राज्ञः पुत्र एति', 'पुरुषोऽपसार्यतामि'-त्यन्वय-बोधतात्पर्येण प्रयुक्ते राजपदस्य पुरुषेणाऽऽसत्तेस्ता-त्पर्यस्य च सत्त्वात् 'अयं पुत्र एति' 'राज्ञः पुरुषोऽ-पसार्यतामि' ति बोधापत्तिः । तद्वारणाय विशेषतया येन सह यस्य तात्पर्यज्ञानं तेन सह तस्याऽन्वयबोधः' इतिवक्तव्यत्वात्, पुत्रेण सह राजपदस्य तात्पर्यग्रहात्, पुरुषेण सह राजपदस्य तात्पर्यग्रहात् वा, तथा तथा बोधः, राजसम्बन्धाश्रयपुत्रः, राजसम्बन्धाश्रयपुरुषः, इति वा यथायथं बोधः । 'अयं राज्ञः पुत्र एति, राज्ञः पुरुषोऽपसार्यतामि'-त्युभयत्र तात्पर्यं राजसम्बन्ध-प्रकारकपुत्रविशेष्यकप्रतीतीच्छयोच्चरितत्वम्, राज-सम्बन्धप्रकारकपुरुषविशेष्यकप्रतीतीच्छयोच्चरितत्वं, तदा तु उभयबोधो भवति । तथा च-तच्छाब्द-विषयाऽर्थस्मृतिकारणज्ञानविषयपदद्वयाऽन्यतरनिष्ठ-तादृशपदद्वयाऽन्यतरनिरूपितनियतानुपूर्वी तच्छाब्द-बोधप्रयोजकाऽऽकांक्षा, तज्ज्ञानं च तच्छाब्दबोधे कारणम् ॥ तत्पदस्य तत्पदवत्त्वम् आकांक्षा ॥ यद्वा-अनाकांक्षत्वज्ञानं प्रतिबन्धकं तदभावः कारणम् ॥ लक्षणे तत्पदं तत्पदज्ञानपरमेव, मौनिश्लोकानुरोधात् । अध्याहृतपदे नाऽऽकांक्षानिर्वाहः । अध्याहारः-अश्रुत-पदानुसन्धानम्, एतत् जघन्यम् । स्वस्थानस्थितस्य पुनरनुसन्धानमावृत्तिः । नेदीयस्थानान्तरस्थितस्याऽ-नुसन्धानम्-अनुषङ्गः, दवीयस्थानान्तरस्थितस्याऽ-नुसन्धानम् अनुवृत्तिः, अनुवृत्तिस्त्रिधा-सिंहाऽवलो-किता, मण्डुकप्लुतिता, गंगाप्रवाहायिता च । उत्तर-वाक्ये पूर्वतनपदान्वयः सिंहावलोकिता । उत्तर-स्मिन् क्वचिदन्वयः क्वचिन्नेति वाक्यान्तरेऽन्वयश्चेति मण्डुकप्लुतिता । उत्तरस्मिन् क्रमेण सर्वत्राऽन्वयः गंगाप्रवाहायिता ॥

अथ तात्पर्यं-वक्तुरिच्छा, 'एतत्पदादेतदर्थो भव-त्वि'ति-इच्छा, प्रयोक्तृसमवेता सा विषयतासम्बन्धेन पदार्थयोः, उच्चरितत्वसम्बन्धेन इच्छाप्रकारकं तादृशेच्छयोच्चरितत्वप्रकारकं वा पदविशेष्यकं श्रोतृनिष्ठज्ञानं शाब्दबोधकारणम् । तात्पर्यं लक्षणया वक्तुरिच्छा, श्रोत्रिच्छापरमपि । हरिं पश्येत्यत्र श्रीहरि-सिंह-ऋक्षराजे-त्याद्यर्थे यदर्थेच्छयोच्चारणं तदर्थबोधो भवति । प्रकरणाऽवसरवनप्रदेशमहाद्रुमा-द्यास्तात्पर्यग्राहकाः. विशेषणसंयोगविभागसाहचर्याऽऽ-भिमुख्यचेष्टाद्या भोजनाद्यास्तात्पर्यग्राहकाः, प्रक-रणाद्यपेक्षयाऽनुगततात्पर्यज्ञानत्वेन कारणत्वमुचितम्। वेदेषु सर्वार्थदर्शी परमात्मा तात्पर्यवान् भवति। सृष्ट्यारम्भे परमेश्वरेतराऽध्यापकाद्यभावात् । सर्व-भावकार्यानधिकरणकालो महाप्रलयः, जन्यद्रव्या-नधिकरणकालः खण्डप्रलयः । सर्वप्राणिभाषासु 'एतद्भाषितवाक्येभ्य एतेऽर्था बुद्धा भवन्त्वि'ति तद्भाषाप्रवर्तकेश्वरतात्पर्यज्ञानं कारणम् । विफल-वाक्येषु श्रावणानन्दे तात्पर्यं जडवादित्रोत्थस्वरादि-वत् । निरीश्वरवादिनां नित्यशब्दब्रह्मोपासकानां शाब्दे व्यवहारे शाश्वतशब्दगताः अर्थाः स्फोटब्रह्मा-द्यभिव्यङ्ग्या व्यञ्जनावृत्तिबोध्या भावनाबोध्याः तर्कलाघवविपक्षाऽबाधकग्रहादिशोधिताः प्रतीयन्ते ॥ वस्तुतस्तु मानुषदेवपशुपक्ष्यादिभाषाः स्पष्टाक्षरपद-वाक्यात्मिक्यः अर्थबोधेच्छयोच्चारिताः तात्पर्यवत्यो भवन्ति, तथा दिव्याः सरस्वत्यो दिव्यपुरुषतात्पर्य-वत्यः, पश्वादीनां पक्ष्यादीनां च समानानुपूर्वी-व्याप्यशब्दध्वनिनादादीनां भिन्न-भिन्नार्थकत्वं, तेन

तज्ज्ञानेन बहुविधविभिन्नप्रवृत्तिमत्त्वं चेति सर्वत्र प्रवर्तना सतात्पर्यकबोधजन्या विलोक्यते। निवर्तनाऽपि निषिद्धबोधजन्या विलोक्यते । तस्माज्जगति इव जगज्जन्मादिहेतावपि सर्वज्ञे प्रतीतिसागरे तात्पर्यार्थे प्रतीतीच्छावत्त्वं निराबाधम् ॥ ४९८ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्य-न्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्य-कुशलवैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्ण-वल्लभाचार्यस्वामिनारायणविरचितायां तत्त्व-प्रभावल्यां प्रमाणाख्ये द्वितीयखण्डे शब्द-निरूपणमेकादशः परिच्छेदः ॥११॥

## तत्त्वप्रभावल्याः प्रमितिखण्डस्तृतीयः

**बुद्धिर्बुद्धिमतामस्मि जगाद भगवान् स्वयम् ।**
**धर्मधर्मिस्वरूपं तं समुपासे प्रकारतः ॥४९९॥**

**बुद्धिरिति।** परमात्मनो नित्यप्रत्यक्षं सदा प्रमा सर्वविषयकं, प्रकारमात्रमपि प्रमात्वे न व्यभिचरति, साक्षिचित्त्वमपि न व्यभिचरति, ब्रह्मचित्त्वस्य परब्रह्म-चित्त्वाऽपृथक्सिद्धतादात्म्यात्, परब्रह्मतेजसि पर-ब्रह्मणस्तथाविवतादात्म्यात्, ब्रह्मणः परब्रह्म-तेजस्त्वात्, तत्तेजसश्चैतन्यात्, तेजोघनत्वेन तु स्वरूपलक्ष्यत्व मात्रम्, आनन्दघनत्वमपि नाऽव्याप्तं तत्र, सच्चिदानन्दस्वरूपत्वात्, शरीरे शरीरिणोऽपि सच्चिदानन्दत्वेन व्याप्तत्वात्, सर्वत्र सत्त्वं त्वेकविध-मेव,आनन्दघनस्य तेजोघने व्याप्तिरपृथक्सिद्धा, मुख्य-विशेष्यताऽऽनन्दघने स्थिताऽपि आनन्दघनीयसृष्टीच्छा-विषयतायास्तेजोघने विशेष्यतया प्राप्तत्वात्, कर्मफल-प्रदातृतया साक्षित्वेनाऽवच्छेद्यत्वात् नित्यैव प्रमात्व-विषयता स्वतोग्राह्या, नित्यमुक्तस्य प्रकृत्यधिष्ठातुः साध्यदेवस्य मूलमायास्वामिनो महापुरुषस्यैश्वर्य-घनस्याऽपि सा प्रत्यक्षविषयता नित्याऽनादिमुक्त-प्रमीयत्वात्, नित्यं ज्ञानैश्वर्यं नित्यं प्रमात्वं निर्व-हते, अन्येऽपि नित्यमुक्ता नित्यप्रमात्वभाक् सार्वज्ञ्य-धर्मिणः परब्रह्मप्रमात्वब्रह्मप्रमात्वाऽपृथक्सिद्धतदा-त्मकप्रामाण्यशालिप्रज्ञाभाजो यथार्थप्रमाग्रहिण एवेति तदीयप्रकारताख्यविषयतायां नैहिकधीविचारसमा-रोहः, अवतारधियोऽवतारिधीस्वरूपिण्योऽत्र तत्र सर्वत्रेति तत्तद्भिन्नधियां प्रकारतांऽशे प्रामाण्याऽऽरोहः प्राकृतिकवैकृतिकसत्त्वप्रकाशसंकरितः मिश्रकरणमिश्र-विषयसापेक्षः स्वरूपतः सन्नपि स्वरूपव्यभिचरित-विषयान् गृह्णानः तद्विषयित्वेन क्वचित् स्वप्रामाण्यं निघ्नानोऽपि वर्तेत, तत्रेयं प्रामाण्यग्राहिकोपास्ति-र्ब्रह्ममयी लब्धावकाशा सम्पद्यते ॥ ४९९ ॥

**धर्मभूता स्वयंप्रज्ञा स्वतःसिद्धा प्रवेश्रितः ।**
**स्ववेद्या सर्वतोवेद्या स्वभाताऽऽत्मसभा स्वयम् ॥**

**धर्मभूतेति।** अहं वेद्मीति–कर्मकर्तृक्रियादिभानं सर्वेषाम्, इतिहेतोः, बुद्धिः स्वयं स्वप्रकाशा सिद्धा स्वविषया स्वेतरविषया च। न तु साऽस्माकं सर्व-विषया, कदाचित्कस्यचित् अप्रकाशमानत्वात्, यथाऽऽत्मा ग्राहको ग्राह्यश्च प्रत्यक्षविषयः स्वय-म्बोध्यः स्वविषयकबोधजनकः स्वप्रकाशस्तथा धर्म-भूतं ज्ञानं स्वप्रकाशं स्वग्राहकग्राह्यं स्वग्राह्यं स्व-प्रकाश्यं च, न जडवत्स्वेतरप्रकाश्यं, किन्तु स्वात्मक-स्वान्वितस्वाधारप्रकाश्यं स्वस्वरूपप्रकाश्यं प्रदीपवत् स्वप्रकाशं चाक्षुषतेजसा ग्राह्यमिवाऽऽत्मचिता प्रकाश्यं स्वप्रकाशं ग्राह्यं च, अतो न जडत्वं न परप्रकाश्य-त्वं च ॥

आत्मा ज्ञाता ज्ञानस्वरूपश्च ब्रह्मवेद्यो ब्रह्म-प्रकाश्यश्च, ज्ञानं ज्ञानस्वरूपं ज्ञानज्ञातृप्रकाश्यं ब्रह्म-प्रकाश्यं स्वप्रकाश्यं स्वप्रकाशं च, परब्रह्म चिच्चेतन-चैतन्यम्, ब्रह्माऽपि चिच्चेतनचैतन्यम्, ज्ञानमपि चिच्चेतनचैतन्यम्, अतद्व्यावृत्तं समुदितं तत्त्वम्, अतत् न स्वप्रकाशम्, किन्तु परप्रकाशसापेक्षम्, दीपाद्या अपि ब्रह्मप्रकाशसापेक्षाः 'यस्य भासा सर्व-मिदं विभाती'-तिश्रुतेः, तथापि जडसापेक्षजड-प्रदर्शनमात्रे निदर्शनं घटते, न त्वात्मचिच्चैतन्ये सजातीयं निदर्शनम्।,

पदार्थत्वादनुमेयाऽपि ज्ञप्तिः स्वप्रकाशत्वे न व्यभिचरति, सर्वोऽपि व्यवहारः प्रमाणमवलम्ब्य प्रवर्त्यमानो येन येन तत्र तत्र साध्यो वा साधनात्मको वा सः स्वप्रकाशतयैव स्वरूपत उपतिष्ठते, व्या-प्त्याद्या व्यापारास्तु स्वप्रकाशत्वातिरिक्तावलम्बनाः, स्वप्रकाशत्वान्यादृगप्रत्युपसर्गविघटका विज्ञैः प्रयो-ज्यन्ते ॥ ते तु प्रमितिभिरुत्क्षिप्यन्ते स्वमतिभिः स्व-

प्रकाशिताभिरुत्क्षिप्यन्ते न तु परप्रकाशिताभिः, तत एव स्वप्रकाशत्वमपीति ॥ स्वात्मकहेत्वादिस्वरूपिण्थस्ता ज्ञप्तयो न परतःप्रकाशाः परप्रकाशमवलम्ब्याऽन्यज्ञप्तिनिरासिका भवन्ति, किन्तु स्वप्रकाशतयैव न्यूनताऽऽधिक्यादिपरपुरुषीयशाखाहारिण्यः संस्कृतिकारिण्य एव भवन्तीति ॥

विद्युत्प्रवाहा यान्त्रिका उद्भूतभास्वरशुक्लरूपवन्तः क्रियन्ते साधनैस्तदैव प्रकाशप्रभावन्तोऽन्यथा तु अनुद्भूतद्रूपा एव ताम्रादिमहासन्तानगता अपि न प्रकाशयन्तीति ते स्वप्रकाशा अपि साधनाऽनवरुद्धाः साधनोत्तेजिता वा सप्रकाशा भवन्ति, नैतादृशं ज्ञानम्, तत्तु नित्यज्ञानं साक्षिज्ञानं चिदात्मज्ञानं धर्मिज्ञानमिव धर्मज्ञानमपि सदेव सप्रकाशं स्वयंप्रकाशमिति विद्युत्प्रदीपादिदृष्टान्तमपि विषमम् ।, ५०० ॥

**आत्मबुद्धिः स्वयं नित्या ज्ञातुर्ज्ञप्तेर्न लुप्तता ।**
**सुप्तौ स्वरूपनित्या सा स्वप्रकाशात्मचिन्मयी ॥**

**आत्मेति** । धर्मभूतमप्यात्मज्ञानं जाग्रति सबाह्यविषयमपि स्वात्मविषयत्वं न विजहाति 'अहं पश्यामी'ति विषयगोचरसाक्षात्कारविश्रान्तिविशेष्यतयाऽऽत्मभानात्, चितां स्वात्मावलम्बनत्वं सत्त्वं नित्यस्वरूपाऽऽपूरकात्मकत्वम्, क्वचिद्बाह्यविषयाऽनालम्बने मानसप्रकाशमयत्वं संस्कारविषयालम्बनकत्वं, ततोऽप्यूर्ध्वं गाढसुषुप्त्यवस्थायां चिन्मात्राऽवलम्बनं तु शाश्वतमनुवर्तमानं स्वरूपलोपप्रतिद्वन्द्वि प्रकाशते एव, बाह्यादिविषयाऽप्रकाशनाऽवस्थायां ज्ञप्तेः सत्याः अन्याऽधीनाऽप्रकाशाया अज्ञातारस्तु अनन्याऽधीनाऽप्रकाशतामपि अर्थात् स्वरूपतो लुप्तामिति चिन्तयन्ति, किन्तु स्थूलयोग्यत्वविरहात् योग्यानुपलब्धेरप्यप्रसक्तेरसत्त्वसिद्धेरप्यसिद्धेः स्वरूपसत्त्वस्य निराबाधत्वेन चेतनीयचिच्चैतन्यस्य तदानीन्तनधीत्वेन चिदंशीयस्वप्रकाशत्वस्य शाश्वतस्य धर्म्यपृथक्सिद्धस्वरूपस्य स्थूलधर्मानवस्थस्य सूक्ष्मधर्मावस्थस्य द्रव्यगुणस्य चैतन्यस्य स्वप्रकाशात्मचिन्मयत्वं चाऽव्याहतमिति ज्ञातृभूताऽऽत्मीयस्वप्रकाशप्रज्ञास्वरूपशाश्वतत्वं निष्प्रत्यूहम् ॥ ५०१ ॥

**अस्त्येका धीश्चित्स्वरूपाऽनेकाऽनेकार्थभासिनी ।**
**विषय्यादर्शवद् दृश्या वेषाऽवस्थाभिदाऽन्विता ॥**

**अस्त्येकेति** । आत्मचिच्चैतन्यस्वरूपाधीः प्रत्यात्मं चिदभिन्नचैतन्यात्मिका शाश्वतसत्स्वरूपा सा एकैवाऽपि, अनेकेषाम् अर्थानां देशक्षणादितत्तदुपाधिकाकारभानस्वरूपा सा धर्मभूतज्ञानस्वरूपाऽऽत्मनो दृश्या विभिन्नविषयगर्भदृश्यवेषा विभिन्नाऽवस्थावेषाकारानुकारिणी अनेकपदार्थगर्भकपुदृश्याऽवभासक आदर्श एक इव विषयी विशेषणभेदादन्य इव पूर्वोऽप्यपूर्व इव सविषयवेषावस्थाभेदैरन्विता भिन्नस्वरूपा व्यवहारास्पदा सम्पद्यते, स्वयं स्वप्रकाशा विषयवेषप्रकाशनपरा विषयाकारा विषयाऽनुरूपा जागरूका स्वाप्निका सुसुप्तिका चित्तदात्मिका चेति प्रभासते, सा भिन्नावस्था धर्मरूपेण द्रव्यगुणत्वेन व्यपदिश्यते । तत्रापि सर्वेषामात्मनां नियतधीसहभेदो मिथः, व्यवस्थाभेदान्नात्मभेदः, अवस्थाभेदानां कालभेदैनैकाधिकरणकत्वे निर्वाहात्, स्वरूपाऽभेदकत्वात् । विभिन्नः प्रागभावो ध्वंसो वा स्वप्रतियोगिस्वरूपभेदसम्पादकः, अवयवह्रासादिर्वाऽपि अवयविह्रासादिनियामकः । द्रव्यगुणात्मकस्याऽस्य धीतत्त्वस्य ततो वैलक्षण्यान्न तथाविधप्रसंगः । आत्मधर्मतया नाऽस्या धियः सत्या अपि धर्मधर्मिभावशून्यतत्त्वान्तरत्वम्, अपारमार्थिकेतरद्वृहत्त्वं चेति ॥ ५०२ ॥

**अथाऽपि विषयान् प्राप्ता संवित् प्रचारधर्मिणी ।**
**प्रसृता सा यतो यत्र गता विषयसंभृता ॥५०३॥**
**तन्मूला तत्प्रविश्राम्या तन्मयी तत्प्रभोगिनी ।**
**तद्विश्रान्ता ततो भाव्या तत्सत्त्वा स्वप्रकाशिनी ॥**

**अथाऽपीति** । यदा यदा विषयसान्निध्यं यत्र यत्र तत्र तत्र तूर्णं प्रसरत्स्वभावा स्वशाश्वतसत्त्वमावेदयमाना स्वयं स्वरूपतोऽलुप्ता विषयाकारात् संगृह्य स्वस्वामिनि चाऽर्पयमाणा नित्यमूला नित्यगृहा नित्यसधर्मा नित्यभोगभोक्तृत्वभागिनी निश्चलविश्रान्ता स्वगृहसत्ताका स्वभवनप्रकाशतन्मयी शाश्वतस्वरूपा सूक्ष्मावस्था संकोचविकासविलासमयी प्राविर्भावाऽनाविर्भाववेषवती चेतननेत्राख्या विलक्षणा शक्तिः विषयविषयिभावाऽव्यापनाऽशीला प्रकाशनव्यापन-

शीला ईश्वरीयप्रज्ञावत् सर्वाधिकारवती स्वाऽऽपूरकचिदभ्यासवैशाल्याऽऽवहा विशिष्टचित्तत्वसम्बन्धवती साक्षिब्रह्मप्रकाशप्रभासमृद्धा ज्ञानशक्तिपरिचया वेदाभिधानशक्त्या यथावस्थितव्यवहारानुवेषा ख्याता दिव्याऽदिव्यपुंमेधामेधरूपा सृष्ट्यसृष्टिप्रातिस्विकयावदर्थाऽऽक्रमणपराक्रमा सर्वाधिकारिणी शाश्वतस्वप्रकाशाऽवस्थाऽवस्थिता बहुधागतिकैर्बहुधा वर्णिता सुस्वसधर्मा स्वीयधर्मा स्वकीयधर्मिणी पराऽऽस्कन्दनाकर्षणवती द्रव्यज्ञानप्रभाभासुरा स्वधर्मिगौणी स्वांगनेयाऽऽत्माऽङ्गना करकृतयावत्स्वस्वामिभवनव्यापारा स्वामिनी सर्वत्र विमतिवर्जितप्रमाणा स्वस्वामिप्रमाणीकृता स्वप्रमाणा सर्वार्थप्रमाणा सती ग्रहिणी गृहिणीव स्वामिसमजीवना बाह्याऽव्यापारे स्वामिशयनगा बाह्यव्यापारे स्वामिसत्तावती भवनाऽभवनप्रसारणपरायणा वर्तते यस्य पतिव्रता तत्प्रतिलोमैव तत्कर्मचारिणी तदीयोपार्जनसहायिनी तेन परिणता तेनाऽऽनीता तेनाऽऽज्ञप्ता तेन नियुक्ता च तन्मुख्या तदीयताऽवच्छेद्या तदर्थफलशालिनी प्रबुद्धा तत्समृद्धा तत्स्थाना तदीयराज्यनिर्वाहयित्री विभिन्नदास्यशालिनो स्वाम्यर्थद्रवभावा द्रवितद्रव्यार्थार्पयित्री प्रकाशितप्रभौज्ज्वल्यनिधाना स्वज्ञप्तिप्रकाशा व्यवह्रियते ॥ ५०३–५०४ ॥

**प्रत्यात्मलग्नसंज्ञप्तिः प्रमा याथार्थ्यसन्ततिः ।**
**अथापि यत्र न व्याप्ता सत्यप्येषाऽतथाविधा ॥**

**प्रत्यात्मेति ।** प्रत्यात्मभिन्ना बुद्धिः सदा चित्तादात्म्या मूलैकस्वरूपा निमित्तनैमित्तिकप्रयोज्यविभिन्नविषयित्वाऽवस्था अवान्तरविषमासुषमाद्यवस्थाऽपि धर्मत्वेनाऽपि यथावद्विषया प्रमा सान्तानिक्यपि स्वानुस्यूतनिर्दोषविषयिणी यथावस्थितव्यवहारा बहुकालाभिगामिनी साजात्यमवलम्बमाना न विपरीता भवतीति प्रमैव स्वप्रकाशा सा स्वाधिष्ठानमवलम्ब्य प्रसृता स्वाऽऽश्रयेतरव्याप्ता सर्वथा प्रमा, यत्र तथाविधतया सा न व्याप्नोति विषयेष्वंशतोऽपि तदनंशपतिता भवति सादृश्येन संस्कारबलेनाऽनवगतभावेन दोषाद्याहितप्रतिभाससंकरेण सामग्रीव्यापारांशक्षत्याऽनुद्भूतप्रभाकृतरिक्तभावेन अवस्त्वभ्यासाऽऽभासेन वा करणवैकल्पेनापि च न व्याप्नोति अकल्पेव अल्पकल्पेवाऽशं स्पृष्ट्वाऽप्यस्पृष्टेव निवर्तते या सा धीसन्ततिस्तत्र सत्यपि सत्स्वरूपाऽपि स्वयम् अतथाविधाऽप्रमाविधा ह्युपचर्यते । अन्याभिमतप्रमात्वविधुरेति प्रतिपक्षिणाऽभिधानीक्रियते, सुवाटस्याऽन्यस्योद्घाटतावत् तदिष्टार्थाऽननुसाधयित्र्याऽनिष्टसाधकत्वात्मकमप्रमात्वं तत्रोपयुज्यते । विरुद्धेष्टविषयकत्वेऽन्यतरस्याऽप्रमात्वं मतं स्यात् । एतत्सृत्याऽप्रमात्वमावेद्यते, एकस्य प्रमाया अन्याभिमताऽप्रमात्वेऽविरोधात् । स्वस्याऽपि सामग्र्याद्यंशविरहेऽतथात्वव्यवहारात् , अतो नैकान्ततः परमेशज्ञप्तिप्रमावत् अप्रतिभटप्रमात्वं जीवज्ञप्तीनाम् । शुक्तिशकलो रजततया यत्र गृह्यते तत्र रजताऽवयवाऽविधर्मिविरलतत्तदवयवांऽशिरजतग्राहत्वेन गृह्यते स्वरूपसताऽपि ज्ञानेन विरलविषयाकारसद्धानेन तेन इष्टकरग्राह्यसान्द्रावस्थस्थूलरजताऽलाभेन तथाविधाकाराऽविषयिणा सामान्यविषयिणाऽपि विशेषाऽविषयिणा निवृत्तिजनकेन प्रवृत्तिजनकेनाऽपि तेन निवर्तनाविश्रामिणा प्रवर्तनांऽशे स्वप्रकाशमपीष्टाऽप्रकाशमिति तदंशमात्रेऽप्रमाव्यवहारभाक् स्वस्याऽपि भवति, पूर्वमिष्टविषये प्रमात्वमावहत् तदेवोत्तरमनिष्टविषये व्याप्तं तदनिष्टविषये तु निवर्तनाक्षणे तु प्रमैवाऽनिष्टविषयकत्वेन जीवतीति तथाविधस्वप्रकाशं जीवति, ततः सदेव जीवति, क्षणभेदेन विषयभेदेन भिन्नवेषत्वेऽविरोधात् । सर्वथा स्वप्रकाशता तु न व्यभिचरति, पूर्वमुत्तरं च विभिन्नयथावस्थितव्यवहारानुगुणज्ञप्तित्वात् ॥ ५०५ ॥

**तत्त्वांऽशव्याप्तसद्बुद्धिः स्थौल्याऽनाश्रयधर्मिणी ।**
**नैवाऽधर्मवती स्माद्वै स्वभास्त्वं न जहात्यतः ॥**

**तत्त्वांऽशेति ।** धीः सर्वार्थसत्या स्वरूपसती, भिन्नार्थसत्या धर्मसती, निपुणतमैः स्वस्वतन्त्रे व्यापृतसत्यसंविदभिधानं संशयविपर्ययतर्कविकल्पनिद्रास्मरणाऽज्ञानमिथ्याज्ञानमतिभासभ्रमाऽप्रमाऽसम्यग्ज्ञानचिदाभासाऽविद्याभ्रान्तिनिश्रयाऽऽभासाऽध्यासाऽन्यथाज्ञानाऽयथार्थज्ञानविवर्ताद्यन्यतमं यत्किञ्चिदपि विशेषणविषयकम् अन्वयविषयकं विशेष्यविषयकं तव एकतमं तु तत्रैव सत्स्वरूपाकारं सत् स्वप्रकाशमेव, तदितरदप्यन्यतमं किञ्चित्तत्र तत्समष्टचनाकारम-

प्यन्यत्र व्यष्टिरूपं तु सदाकारविषयकं यत्र क्वापि वर्तमानमाकारं विषयीकृत्य प्रकृते प्रयोगमापन्नं कथं नाम निराकारं निर्विषयमलीकविषयं वा स्यात्, निरूप्यनिरूपकभावाऽनापन्नं तत्तत्प्रत्येकं तु सद्विषयं स्वप्रकाशमस्त्येव, अनन्वितं तदुभयं व्यष्टिरूपं चाप्यनन्वितत्वसंसर्गापन्नम् अयोग्याऽघटितसंसर्गमवगाहमानं वा निराकांक्षविषयकं प्रमाभिन्नं व्यवह्रियते। नहि घट-अम्-ज्ञान-ति-पदज्ञानानि अन्यथाविषयकाणि, अन्वितान्यपि नाऽप्रमाणानि, आकांक्षानैर्बल्येऽप्रमाभिधानभाञ्जि भवन्ति, आकांक्षकाणामगोचराणां तत्राऽगोचरा गोचरीभावेन उपक्षिप्ता पदार्थान्वया एव अप्रमात्वव्यवहारकाः, नैतावता व्यष्टिस्वरूपज्ञानान्यप्रमाणानि, तस्मात्सर्वाण्यपि ज्ञानानि न स्वप्रकाशसत्त्वविधुराणि, विषयं विनाऽजीवनात्। स्वाकारसाकारजीवने स्वप्रकाशत्वात्। अतस्तादृशस्थलेष्वपि शुक्तिलीनं रजतं मरीचिकास्थं जलं जागरदृष्टसरूपस्वाप्नधनपित्रादि बाह्यतो लीनं रज्जुलीनं सर्पं कमलरोगलीनं पीतत्वं मन्त्रदृग्लीनं मानुषपारावतादिकं योगिसंकल्पलीनं पदार्थादि इन्द्रजाललीनं नाटचादि नारीवेषलीनं किशोरादि सिद्धचैश्वर्यलीनं वस्त्वादि विद्युत्प्रवाहप्रकाश्यं पट्टकचित्रादि गर्भलीनमर्भकादि सदपि तज्ज्ञानं च स्वप्रकाशमपि वस्तूनां चाऽङ्गुलीयकसेकाद्यनर्हतया विशेषफलाऽनाधायकं सत् 'न तथे'ति व्यवहृतं भवति। भवतु नाम तथा, तथाविधोत्पत्त्यादिमत्त्वात्। नैतावता स्वरूपाऽसत्त्वं चाऽन्यप्रकाश्यत्वं चेति। इष्टदर्शनादितः प्रवृत्तिर्भवति, इष्टत्वं कियद्विधमस्तीति तत्राऽपरीक्ष्य प्रवर्तते, सत्यां च परीक्षायां निवर्तते, नहि विद्युत्पटे दृश्यनाटके दृष्टिविषयां कामुकीमपि कश्चित् प्रेक्षकस्तां छायां जानन् दृष्ट्वा प्रवर्तते स्पर्शफलां वा मनुते। तत्र परीक्ष्य ज्ञानवान् तावन्मात्रे ज्ञप्तिसत्यत्वस्वप्रकाशत्ववेत्ता भवतीति। अतोऽप्रमालक्षणानि भावयोरप्यभावदूषितानि निरूप्यन्ते, सत्येवं भावोऽभावस्तत्प्रतियोगीति विषयत्रयं तज्ज्ञाने न व्यभिचरति। अयोग्ययोर्योग्यता व्यभिचरति, अयोग्यता बहुविधा, सैवाऽप्रमात्वव्यवहारोत्पादिका, इष्टयोग्यता ज्ञप्त्या प्रवर्तयति, विपरीता सा निवर्तयतीति, न हि ज्ञानं दूषयति सा। किन्तु ज्ञानं स्वप्रकाशमिति तत्प्रति अधिकारच्युता भवति सा, अतोऽर्थान्निवर्तना सिद्धचति ॥ ५०६ ॥

**सत्त्वं प्रवर्तकं नैजं तत्राऽन्येषां गतार्थता।**
**तज्ज्ञानं चेष्टताव्याप्यं नाऽग्रहादि प्रवर्तकम् ॥**

सत्त्वमिति। साध्यं लभ्यं ग्राह्यमपीष्टं चेत् फलार्था प्रवृत्तिस्तनुभृताम्, यत्र न प्रवृत्तिर्गुणस्तत्र जलतेजोवायूनां क्रिया विविधाः स्वभावतः प्रवर्तनानिवर्तने चेतनेषु विशेष्येते, तत्रेष्टत्वम् 'इदं मे भवत्वि'तीच्छा वा, 'मे मा भवत्विदमि'तीच्छा वा यथापेक्षं स्वविषयज्ञानीययथार्थसत्तां निवेदयति, तत् सत्त्वम् आत्मस्मृतिगतं वाऽधिष्ठानीयतादात्म्यगतं वा विशेष्यत्वाऽनिरूपितप्रकारताकधर्मगतं वा विरोध्याभासगतं वा यत् किमपि वैयधिकरण्यविधुरमेवेष्टगतं प्रवर्तयति, भवति च तदिष्टतावच्छेदकं रजतत्वादि, अन्येषामनवच्छेदकत्वात्, तथा च सन् धर्मो यमिष्टतयाऽवच्छेदयति तत्तदानीन्तनग्रहविषयधर्मावच्छिन्नं सदेवाऽधिकफलत्वेन निश्चितमिति यथार्थं सदेव सर्वं प्रवर्तकम्, स्वरूपसदेव शक्यं दृश्यं बोध्यं ग्राह्यं मेयं नियमत उपस्थितं विद्यमानतां भजते। रजतोल्लेखादि सत्यां शुक्त्यां न तु दृश्यसजातीयाऽन्यकृष्णपाषाणे, ततो लीनाऽवस्थायिरजते रजतत्वोल्लेखिसंविदात्मक-तज्ज्ञानगोचरत्वेन। रजतत्वावगाहियथावस्थितव्यवहारानुगुणज्ञानस्य यादृशाकारगोचरप्रमात्वमव्याहतम् रजतत्वं हि शुक्तिलीनराजतांशजन्यरजतवर्तितयैव गृह्यमाणं सत्तया भासते, न त्वसत्तया स्वाभाववत्तया वेति, तत्राऽऽद्यक्षणे चाक्षुषे जातेऽन्वयितया सम्बद्धे जातिव्यक्तिद्वये सत्स्वरूपतया ख्यायेते ते नाऽन्यथाभूते सान्वयत्वात्, नासती भावत्वेन गोचरत्वात्, नाऽन्तरे ख्यायेते बाह्यत्वात्, न मिथ्याऽऽभासेते विशिष्टद्रव्याधारात्, विरले विरलात्मका अविरलेऽविरलात्मका व्यक्त्यभिन्ना व्यक्तिभानगोचरा तत्तद्व्यावर्तका धर्मा व्यक्त्यवच्छेदकतया ज्ञानगोचरा व्यक्त्यात्मकाः सद्व्यक्तिस्वरूपा व्यक्त्यंशा गृह्यमाणाः स्वावच्छिन्नस्वाऽवच्छेद्यस्वसत्स्वरूपा एव प्रत्याय्यन्ते, अतो नहि व्यक्तिविच्छिन्ना व्यक्त्यगोचरेऽन्यत्र ज्ञाने प्रकारतया आरूढा भवन्ति, येन विशेष-

णानि भूत्वा सत्ख्यापनभिन्नभानमापादयेयुः ॥५०७॥

**अस्त्येकस्मिन्पुरोवर्तिन्येव सादृश्यनिश्चिते ।**
**अन्यस्माद्व्यावृत्तरूपे भाववत्तादिकल्पनम् ॥५०८॥**
**तत्साक्षात्काररूपं सत्स्वरूपार्थप्रकाशकम् ।**
**ज्ञानं सत्यं परं तत्र धर्मान्तरविधं तथा ॥५०९॥**

अस्तीति । यत्र चाक्षुषे 'स्थाणुर्वेति' भाति, तत्र निश्चितमेव स्थाणुत्वविशिष्टव्यक्तिस्वरूपम्, अन्यथा तन्निर्देशाऽयोगात् तत्र वा नहि विसदृशम् अभ्रं वा शिखरं वा खनिर्वचेति कल्प्यते, किन्तु समधर्मा पुरुषो वा स्तम्भो वा पुलाको वेति चिन्त्यते, तत्तद्धर्मनिश्चयादेव चिन्त्यते, तदपि समुच्चयेन चिन्तनं साक्षाद्रूपं वा नाऽभावगोचरं विरोधितयोपस्थितं भाति, तस्याऽप्राप्तेः, भावज्ञप्त्या तदितरज्ञप्तिप्रतिरोधात्, ततः संशय इत्येव न स्यात्, निश्चितधर्मिकत्वात्, उभयं तु समूहालम्बनं वा, एकं स्मरणं चाक्षुषादिसादृश्याधारं वाऽविरुद्धम् । उभयसामग्रीसत्त्वात् । भिन्नं ज्ञानं स्थाणुत्वावच्छिन्नगोचरं पुरुषत्वावच्छिन्नगोचरं स्तम्भत्वावच्छिन्नगोचरं च वा,वाकारेणोन्नतपदार्थः स्थाणुत्वपुरुषत्वस्तम्भत्वाद्यैर्विभज्याऽभिव्यज्यते, पुरोवर्ती अविभागेन दृश्यतेऽपि स्मर्यतेऽपि च ॥

अक्रमिकं युगपज्जायमानं त्रिकसामान्यसाक्षात्काररूपं वा संस्कारत्रयसहसम्भूतं युगपदुल्लेखाऽऽस्पदं स्वप्रकाशसत्स्वरूपं साधारणाकारं विरोधिभेदकधर्माऽनुल्लेखितं प्रागेव प्राविर्भूतं, तदन्यैः संशयाऽभिधमुच्यतेऽपि न संशयस्वरूपं, किन्तु साधारणख्यातिपरामर्शात्मकं समुच्चयितं सत्स्वरूपं स्वप्रकाशं तत् यथार्थमेव ॥ '

अथाऽपि बृहद्वाच्येऽबृहदपि वाच्यं भवतीति स्यादुभयं यथार्थं शक्तिलभ्यं पारमार्थिकं च सदर्थपरम्, अवाच्यमिथ्यात्वेन बृहत्त्वादिना यदि सत्यमुच्यते वाच्यं तर्हि तथाविधेनैव च वाचकेन सत्योऽर्थः सर्वोऽपि स्याद् अवाच्यं नाऽवशिष्यते भाववाच्यप्रतिद्वन्द्विनाऽभाववाच्यत्ववत् । श्रुतिवाक्यानां सत्परमार्थपरत्वेनैव सर्वस्य श्रुतिवाक्यगोचरस्य सत्परमार्थत्वेन स्वरूपसत्स्वप्रकाशत्वं चेतने साक्षात्कृतं तद्यत्र साक्षात्कृतं न भवति तत्र न स्वप्रकाशत्वमिति ब्रह्मणः स्वप्रकाशत्वेन भाविमुक्तिसमापन्नस्वप्रकाशत्वयोग्यतावत्तयाऽपीदानीं फलपूर्वभावित्वेन तादात्म्यापन्नज्ञानात्मकात्मनः स्वप्रकाशत्वं शाश्वतं सूपपद्यते एव, ब्रह्मेतराऽभावानां ब्रह्मात्मकत्वेन सत्यत्वे सत्यप्रतियोगिवस्तूनां चापि ब्रह्मेतरब्रह्मात्मकत्वाऽविशेषेण ब्रह्मात्माऽविद्याऽऽविद्यकतत्त्वानामपि ब्रह्मेतरब्रह्मात्मकतया सत्स्वरूपत्वं तत्तदभावसत्यत्वप्रयुक्तत्वं स्यादेव, नह्यन्धतमसा तमो विविच्यते निरूप्यते च, प्रकाशेन तु विविच्यते प्रकाशचक्षुषा निरूप्यते च, बाधितचक्षुषाऽपि यथाशक्यं निरूप्यतेऽनिर्वाच्यचक्षुषा प्रकाशेन निरूप्यतेऽनिर्वाच्यत्वमपि तन्नैसर्गतः प्राप्तं स्वप्रकाशत्वं संविदां सत्स्वरूपत्वं च, अभावेन भावग्रसनाऽसुशकत्वं भावेन त्वभावग्रसनं सुशकं भावोद्भाव्यत्वेन भावे विश्रान्तिस्वारस्यात् । तर्ह्येव स्वरूपेणाऽसता निरूपाख्येन भावसत्त्वं ज्ञापितं सत्स्वरूपमिति । तादात्म्यस्यैव बाधे तद्वदात्मनोरबाधे सत्स्वरूपतोपपन्ना । बुद्धेरपि तादात्म्यतदात्मनां बाधाऽबाधनिर्णायकप्रकाशात्मकतया स्वप्रकाशत्वं सम्पन्नमेव । व्यापकधर्मावच्छिन्ने एव व्याप्यधर्मावच्छिन्नत्वधीजननात् व्यापकसत्यत्वे व्याप्यसत्यत्वं निर्बाधम्, व्यापकस्याऽनादिशाश्वतत्वे व्याप्यस्य तत्त्वं सुस्थिरम्, तत एव सत्स्वरूपत्वं कारणानुपङ्क्त्रेण सम्पन्नमित्यत्र चाऽन्धंतमो न निर्णायकमन्यवस्तूनामिति न प्रकाशवाच्यं तद्भिन्नं निर्णायकं यदात्मसमवेतं तत्तादात्म्यं च तदेव निर्णायकमिति स्वप्रकाशत्वं सत्स्वरूपत्वं च नैसर्गिकमेव ब्रह्मवत् प्रतिपन्नम् । कारणसामग्र्या कार्यलाभेन ऐकान्तिकी सामग्री सती सत्पदार्थाऽभिव्यञ्जिका भवति, सर्वत्र सर्वाऽभावात्, तत एव सत्स्वरूपकारणत्वं सत्स्वरूपतादात्म्यत्वं सत्स्वरूपकार्यत्वं चाऽवस्थाभेदापन्नं विभिन्नव्यवहारयोग्यं 'इदं सर्वमसृजत, सत्यं चाऽनृतं चे' त्यादिना स्वरूपसतएवाऽवस्थाऽऽविर्भावस्य सर्जनार्थत्वात् विकृतार्थेऽनृतपदप्रयोगाच्च, सत्सामग्रीतः क्वचिच्छिथिलं विरलं निहारवत् क्वचित् मध्यसान्द्रं वर्षर्तुवलाहकवत् क्वचित्स्थूलं वृष्टिवत् क्वचिन् चिरायनं समुद्रवदिति तथाविधेऽवस्थापरिणामशालिन्यनृतपदप्रयोगात् । नह्यनृतेन सत्त्वं स्वरूपसत्त्वं बाध्यते, नहि च स्वप्रकाशज्ञप्तिं विना तन्निर्णीयते, तत एव

यथायथं सत्स्वरूपत्वं स्वप्रकाशत्वं पदार्थेषु तत्राऽन्यत्र नैसर्गिकमेव, एकत्राऽप्युभयं यथातत्त्वं नैसर्गिकमेव, नैशसृष्टौ सृष्टिनान्तरीयकेन्द्रियसाहाय्यं तद्दोषसाहाय्यं तथाविधधीसाहाय्यं वा, पूर्वत्वाऽभावात्, समत्वाऽनुत्थानात्, उत्तरस्य तथात्वेऽन्योन्याश्रयादनवस्थानाच्च। कार्ये कारणत्वापत्त्याऽकार्येऽकारणत्वलब्ध्याऽनादेरकारणत्वेन सर्वथाऽजन्यत्वापत्तिर्महाप्रलयस्थितिः पक्षान्तरे वा सर्वशाश्वति हत्वापत्तिः, उभयानंगीकारे तृतीया विधा सत्स्वरूपकारणता सत्स्वरूपकार्यता चेति स्थिरतां लभते विशिष्टकारणात् विशिष्टकार्यलाभ इति। नहि सर्वसाक्षिरूपं ब्रह्मचैतन्यं स्वप्रकाशं विप्रकाशं रजतादिरूपं संभवेत्, अनादिसाक्षिसंविदि केवलायां जन्यत्वाऽसंभवात्, विशिष्टायां तत्त्वे श्रुतिबलेन परब्रह्मविशिष्टत्वेन प्रामाणिकत्वात्, अप्रामाणिकविशिष्टत्वेन तु नैरपेक्ष्यात्, नान्तरीयकाणां तदानीं तत्राऽभावात्, सृष्ट्याादावभावत्वेनाऽकारणत्वे पश्चादपि कारणत्वाऽप्राप्तेरेव सत्त्वात्, समर्थस्य तन्निष्ठप्राप्तेरनावश्यकत्वात्॥ ५०८–५०९॥

**असत्ये क्षणिके सत्त्वे सर्वस्मिन् समयेऽपि च।**
**हेतौ समक्षणेऽसिद्धे ततोऽन्या स्थिरसत्त्वता॥**

**असत्ये इति।** सर्वमपि प्रतिक्षणं क्षणेन सह हेतुना सह सत्त्वेन सह चापि स्वरूपेण धर्मेण गुणेनाऽन्वयेन संवृत्त्या च सह क्षणस्थायि क्षणान्तराऽस्थायि क्षणं सत् क्षणान्तरे तदसत् क्षणं प्रकाशं क्षणान्तरेऽप्रकाशं प्रसुप्तप्रदीपवत् निमिलितनेत्रवत्, सर्वप्रकारसत्त्वे सत इवाऽसतोऽपि सत्त्वे सर्वत्र व्यापकेऽसत्त्वेऽसत्स्वभावस्याऽसत्त्वे सत्स्वभावत्वमर्थात् तदव्याप्यं सिद्ध्येत् सर्वथाऽसत्त्वं स्वाऽव्यापकं निवारयेत्, शशशृङ्गं सदाऽसदिति चेत्, तत् शशत्वस्य शृङ्गत्वस्य सत्त्वं चापि निवारयेत्। अथ सम्बन्धस्याऽसत्त्वं चेत्, अव्यभिचारिसम्बन्धवत्। व्यभिचारिसम्बन्धस्यापि सत्त्वेन त्रिकस्य सत्त्वादेव नाऽसत्त्वं तत्र सिद्ध्येत्। स्थिरस्वभावाऽनवधारणस्यापि सर्वान्तिर्गतत्वेनाऽसत्त्वात् स्वक्षणिकसत्त्वमपि न साधयेत्, विरोधेनाऽसाधकत्वात्। सर्वत्र भंगत्वसाधकाः सप्तभंगाः स्वव्यूहेऽपि भञ्जकाः सन्तो व्यूहांगभञ्जका एवेति स्वभञ्जकाः स्वेतरभञ्जनेऽशक्ताः स्वयं भग्नाः स्वेतराऽभग्नत्वं चिरत्वं क्षयन्ते एवेति तुच्छार्थभंगानाम् अतुच्छार्थेऽशक्यप्रवृत्तिस्वभावानां परत्राऽप्रवृत्तानामपि स्वस्वत्वे प्रवृत्तानां सत्त्वं सम्पादयन्तः परत्र पुष्टिदाः स्वत्वाऽव्याघातका एव व्याहन्यन्ते, यद्वा सत्त्वानुप्रविष्टाः सत्त्वं स्वं शाश्वतीकुर्वन्तः परस्वत्वे सत्त्वे चापि शाश्वतायन्तेऽव्याघातायन्ते भिन्नसापेक्षाः वस्तुसत्त्वेऽबाधकायन्ते इति सत्त्वनिषेधात्पलायन्तेऽतः सत्त्वनिषेधाऽनिषेधो लभ्यते विव्यलीको निषेधाऽलीको वाऽलीकत्वेन सत्यस्तर्हि विधित्वेनापि सत्य इति विधिसत्यत्वं पदार्थसत्त्वं लब्धमेव॥

अथ निषेधसत्यत्वेऽस्याऽपि निषेधसत्यत्वमिति निषेधसत्यत्वस्याऽसत्यत्वं चापादयेदुत्तरनिषेधस्तथा च तन्निषेधनिषेधस्य सत्त्वं सत्स्वरूपत्वं पदार्थे प्रयुक्तम् अर्थात् सत्त्वं चिरसत्त्वं व्याघाताऽभावात् विरोध्यभावात् साधयेदेवेति तवाऽभिप्रेतं शाश्वतमिव ममाऽभिप्रेतं सत्त्वशाश्वतं तवापि सत्त्वशाश्वते समाकर्षन् तवाऽभिप्रेतं व्यलीकमेवाऽसत्यर्थेऽपिशब्दः ज्ञानं करोति हीतिवत् व्यलीकतैवाऽवशिष्येत शब्देऽर्थे ज्ञाने साधने तत्त्वे त्वयि चापि तथेति वन्ध्यासुतादिवत् संवृतिसत्यत्वं व्यावहारिकसत्यत्वं चापि न विशिष्यते, संवृतेर्व्यवहारस्य मिथ्यानिरूपाख्याऽनृताऽलीकत्वे तत्प्रयुक्तत्वाऽप्रसिद्धेरेव सत्यत्वाऽप्रसिद्धेस्तन्मते प्रसह्याऽऽपातात् नहि असत्यं सत्याभासम् असत्यसंवृत्त्याऽसत्यमावेद्यते इति युक्तम्, संवृतेरेवाऽऽभासत्वाऽविशेषेण विपरीतग्रहाऽसमर्थया सत्यम् अवभासीकृत्य तदाभासत्वाऽशक्त्या स्वस्याऽप्याभासत्वाऽरक्षिकया परस्य स्वस्याश्च सत्यत्वमेव समगाहेत, ततो भवदभिमताऽलीकप्रकाशा संवृत्तिरनलीकप्रकाशतां भजते, साधिष्ठानप्रकाशकत्वात्। नह्यनाकारा सा स्वयम् अधिष्ठानं भवेत्, अधिष्ठेयस्य सत्याकारत्वात्, अनाकाराऽपि चेदधिष्ठानरूपा तर्हि तदर्थमन्याऽधिष्ठानेत्येवमेवमनवस्थया मूलहानिः, तथा च भवन्मूलवैपरीत्यसिद्धिः॥

संवृतिः सतीति, सा हि त्रिगुणा सत्स्वरूपा माया, तत्र सप्रकाशता तु सत्त्वधर्मवत्त्वात्। नहि

ज्ञानप्रकाशवनी, अचेतनत्वात्। असतां सन्ततिर्न, सतां चाऽसन्ततिर्न, सन्तानश्च स्वरूपैक्यम्, तेन सत्स्वरूपैक्यं सिद्धयत्येव। नहि सत्स्वरूपस्याऽसदधिष्ठानयोगः, अयोग्यत्वात्। अलीकमिथ्यादिप्रकाशकत्वं यदि संवृत्यविद्याऽर्थक्रियाकारित्वं, स्वस्य प्रकाशाऽभावेन परप्रकाशाधानेन तथाविधत्वे परस्य स्वप्रकाशसत्स्वरूपत्वम् अर्थात् ज्ञापितमिति तेनैव संवृत्यविद्यादीनामप्रकाशत्वमसत्त्वमलीकत्वं चाऽऽवेदितं भवतीति कृतं तादृशफल्गुकल्पनया। साक्षात्सिद्धस्य विकल्पाद्यविषयत्वात् चिरतिरोभावस्वभावस्य वस्तुजातस्य तथाविधतायाः कल्पनया भंग्याध्यासादिमित्या वा सत्स्वरूपताया अनपह्नवात्, तत्प्रकाशयित्र्याः स्वप्रकाशत्वादेश्च शाश्वतसिद्धत्वात् स्वाभाविकतत्त्वापह्नवाऽसंभवात्॥

किञ्च प्रमाणानां सांवृतिकत्वे प्रमाणानां स्वोद्भावकेऽप्रवृत्तेरप्रामाणिकत्वमेव संवृतेः स्यात्, प्रामाणिकत्वे वा प्रमाणसत्यत्वेऽसांवृतिकत्वं स्यात्, सर्वपदार्थेष्वविशेषात् असांवृतिकत्वे सत्यत्वमेवाऽवशिष्येत, प्रमेयं प्रमाणं प्रमाता प्रमितिश्चेति चैतन्यकुटुम्बम् अचेतनक्षेत्रचेतनक्षेत्र्यवलम्बि स्वयं स्वप्रकाशं सत् परान् प्रकाशयति, स्वयं स्वामिस्वरूपं सत् गोचरान् स्वागतीकरोति, इति स्वामित्वं स्वत्वं सत्त्वं सद्रूपत्वं सप्रकाशत्वं स्वप्रकाशत्वं च चैतन्यांशे न त्यजति, अचेतनांशे चैतन्यमाधापयति प्रकाशं प्रसारयति चेति। तत एव विशिष्टं तु सदिति सूपपद्यते॥५१०॥

**आत्मा सन् स्वप्रकाशश्च वृत्तिर्ज्योतिस्तथा प्रभा।**
**परप्रकाशिता नाऽत्र स्वप्रकाशप्रदायिनि॥५११॥**

आत्मेति। अस्ति हि चितेश्चैतन्यस्य च तत्साक्षिकृतसहोपलम्भता, तत एव साक्षिप्रकाशस्याऽपि स्वप्रकाशत्वं चितेश्चैतन्यस्य च तादात्म्येन सम्पन्नमेव। अथ वित्तेः स्वप्रकाशत्वे वेद्यस्य वित्त्यात्मकत्वेन वित्त्याकारत्वेन तादात्म्यादेव स्वप्रकाशत्वं स्यादेव। अथ न स्यात्। मृत्तिकापिण्डकपालघटादिपरम्परायाश्चिरकालीनाऽवस्थितिकवेद्यस्य भिन्नत्वाकारसम्पादिकायास्तादात्म्यविघटिकायाः महत्तत्त्वात्मकबुद्धिपरम्परासन्तानजनितपृथिव्या महत्तत्त्वेन साक्षाज्जन्यत्वाऽभावेन तादात्म्याऽभावादिव सविषयकत्वाऽभावादिव ज्ञानगुणवत्त्वाऽभावादिव सप्रकाशत्वाऽभावात् युगीयभूतकालीनानामिदानीन्तनपौरुषेयवित्तिवेद्यत्वेऽपि वित्त्यैक्याऽसहोपलम्भात्, वित्तिः प्रभा वृत्तिः स्वप्रकाशा प्रमितिः घटादिप्रकाशिका ख्याताऽपि घटात्मकस्वेतरजडप्रकाशिका भवन्त्यपि परस्मिँस्तत्र घटादौ स्वप्रकाशदात्र्यां न घटप्रकाशिता, न वा घटे पटप्रकाशिता, न वा भूतभौतिकानां मिथः प्रकाशिता, तथा च स्वप्रकाशितायां वेद्यानां व्यभिचरितत्वेन तादात्म्याऽभावात् वृत्तेरपि वेद्यतादात्म्याऽभावेन सहोपलम्भाऽभावात्, सहोपलम्भाऽभावाऽभावे तु द्वयोरत्यन्तस्वप्रकाशत्वम् अत्यन्ताऽस्वप्रकाशत्वं वा तादात्म्यप्रयुक्तमापद्येत॥

अथ भवति प्रदीपप्रकाश्यत्वं घटादौ सूर्यप्रकाशत्वं लोकेष्विति प्रदीपासूर्ययोर्नह्यैक्यं न वा तादात्म्यम्, एवं जलाऽऽदर्शमणिप्रभृतीनामपि परप्रतिबिम्बप्रकाशित्वम् अतादात्म्यं च लोकसिद्धं विद्यते इति तद्वत् वृत्त्या पारम्परिकभिन्नानामपि प्रकाश्यत्वं प्रकाशकत्वं चाऽविरुद्धमिति कथंचिदपि वेद्यवित्त्यैक्यं सहोपलम्भनियमितं न व्यभिचरति सृष्ट्यादौ नियमेन तद्विधेः सत्त्वात्, इदानीमपि महाव्यापकसंवृतेरेव सर्वपदार्थानां जननात् सहोपलम्भनियमो न व्यभिचरति॥

अथापि सहोपलम्भे सहभावो भेदाऽपेक्ष एव नाऽतस्तादात्म्यं तयोः। चन्द्रद्वयदर्शने संवृत्याऽस्त्यभेदेऽपि भेदोपलम्भः पुनस्तादात्म्यं चेति स्यात्सहोपलम्भः। अथ तर्ह्येकस्याऽऽभासत्वमलीकत्वं प्राप्तं, तथा सति तदन्यस्याऽप्यलीकत्वमेवं च सहोपलम्भः सदा विलीनः स्यात्। अथाऽस्ति ज्ञानानां स्वग्रहणत्वेन तादात्म्यमिति चेन्, यत्र न तादात्म्यं तत्र सहोपलम्भाऽभावः स्वग्रहणाऽभावनिबन्धन इति भेदसिद्धिः, व्यतिरेकसिद्धौ संविदन्तरस्य संविदन्तरग्राहकत्वेऽपि व्यभिचाराद् अस्वप्रकाशत्वमापद्येत घटपटादिवत्। किञ्च—संविदः स्वविषयवत् समकालीनग्राहकत्वे क्रमिकसम्विदां ग्राह्यग्राहकभावेन क्षणभेदेन तादात्म्याऽयोगेऽपि तत्र सहोपलम्भाऽभावेऽपि वर्तमानतायाः कल्पने कल्पितमसत्सम्बद्धम् अस्वप्रकाशतामापद्येत, लक्ष्यलक्षणतादात्म्यवत् ग्राह्यग्राहकज्ञप्तितादात्म्ये व्यावृत्तिर्विलुप्येतैकाकारमेककालीनं सर्वं स्यात् येन प्रकाशाऽप्रकाशवेद्यत्व-

व्यवहारो विलुप्येत, एकस्य मिथ्याभूतेन तादात्म्ये मिथ्यात्वं संविदः स्यात्, स्वप्रकाशेन तादात्म्येऽलीकशशशृंगादेरपि वा तमःस्वरूपाणां वा स्वप्रकाशताऽपद्येत, ग्राह्यग्राहकगृहीतिग्रहणानां तादात्म्ये न किमप्यगृहीतमवशिष्येताऽत्यन्तस्वप्रकाशत्वं स्यात् ॥

अप्रकाशमानस्याऽसम्बन्धत्वे व्यवस्था चेत्, सम्बन्धोऽस्वप्रकाशतयाऽसम्बद्ध एव सम्बन्धान्तरमपेक्ष्यते तदा स चान्यमित्यव्यवस्थानं न विरमेत्, सहोपलम्भनियमः सार्वदिको भज्येत, दृग्दृश्यस्वभावश्चेत् संसर्गो यदि, तत्र किं दृश्यत्वं वा दृक्त्वं वा तदतिरिक्ततेति सर्वथा द्वयोस्तादात्म्याऽभावात् सहोपलम्भो भज्येत। आत्मा दृश्यतया तादात्म्येन बहिः ख्यायते इति सर्वथाऽसंभवि, अतीन्द्रियस्य सेन्द्रियत्वं नैव स्यात्, मानसज्ञप्तिविषये वा स्वप्रकाशत्वं क्षतं स्यात्, अन्याकारत्वेऽस्वप्रकाशत्वं चापन्नमिति स्थौल्यं तत्र नूतनमाविर्भूतं चेत् दृश्यं तदिति त्ववस्थान्तरं द्रव्ये मूलीयस्वप्रकाशताविरोधि तत् परप्रकाशतामासादयन् तादात्म्यं भञ्जयन् सहोपलम्भभञ्जकं स्वयमेव स्यात्, अन्योन्यप्रकाशकत्वाऽभावे च सति सहोपलम्भे मूलहानिरेवाऽऽपद्येतेति स्वप्रकाशता शब्दमात्रेणोच्येत न स्वरूपस्थिग स्यात् ॥

अथ बाह्याऽनपेक्षणे आन्तराऽपि संविन्मात्रं स्वात्मकसर्वार्थप्रकाशिनी प्रतिपक्षिपभृतिबाह्यधीविषयिताम् अनुल्लेखिनी कथं कौटुम्बिकार्हबाह्यव्यवहारानुपाददीत, अत आत्माकारस्य बाह्याकारत्वाऽनुपपत्तिः। अथापि सूक्ष्माकारा निराकारा ग्राह्यग्राहकप्रकाशाऽनपेक्षा सैव स्वतादात्म्यमात्रस्थिरा ताग्रत्साहाय्येन संस्कारोद्भाव्या सविषया साकारा सन्ततिरेव विषयार्थं सप्रकाशतां भजते बहिर्भावा भवतीत्यपि स्वात्मभोगविधुरत्वमासञ्जयेत्, बाह्याया एव सप्रकाशत्वात् आन्तराया आकारानपेक्षणात्, निरालम्बनायास्तर्हि विलय आपद्येतेति चेत् अविलयार्थमेव संस्कारमात्रसान्तानिकाऽवलम्बनं स्वरूपं जीवयेदिति संस्काराधीनजीवनमेतत् अनुभवाऽधीनाऽसर्वज्ञसंस्कारसाक्षिकं व्यवर्तेत संस्कारराहित्ये प्रवाहनाश एव स्यादतश्च स्वरूपनाशो मोक्ष इत्यापद्येत, स्वेतरसंस्काराऽऽलम्बनत्वे परम्परया बाह्यालम्बनत्वं स्वप्रकाशत्वघातकमापतेच्च। किञ्च-स्वाप्नप्रत्ययः बाह्यालम्बनरहितोऽपि स्वप्रकाशः प्रकाशयत्यर्थान् स्वाप्नान् महीमहीधरजलाधरादीन्, तत्रापि स्वाकारसंस्काराकारावलम्बनं वर्तते स्वप्रकाशत्वम्, चितां संस्कारजीव्यत्वात्, संविद्ग्राहिणि स्वाप्ने संस्कारग्राहकत्वं संविद्ग्राहकत्वं स्वेतरग्राहकत्वं भवत्येवेति न निरालम्बनात्माकारस्वप्रकाशतासिद्धिः ॥

अथ स्मृतिस्त्रिकालवर्त्याकारगोचरैव स्वप्रकाशेव संस्कारवर्तिसर्वाकारगोचरा चित्संविदपि सर्वाकारगोचरा स्वप्रकाशा स्यादेवेति 'अहमस्मी'तिसंविदपि अहमाकारान्विता स्वप्रकाशा वर्तेततैवेति निरालम्बनताया अपि प्रलापमात्रत्वं, अतश्च संविदधिकरणात्मावलम्बनत्वं संस्कारसंहितात्मावलम्बनत्वम् अलीकभिन्नचितिसमालम्बनत्वं च समारोपणं समासादितवती संवित् साक्षिचैतन्यप्रकाशप्रकाशिता सदा चितिसालम्बना सत्स्वरूपा स्वप्रकाशा चेति ॥ ५११ ॥

**ज्ञानेऽर्पणं न बाह्यस्याऽऽकाराऽयुताद्यसंभवात्।**
**स्वहेत्वर्थार्पिताकारबुद्ध्यात्मा गोचरोऽपि न ॥**

**ज्ञाने इति।** अथापि क्षणिकं विज्ञानमात्मा बाह्याकारार्पित एव प्रत्यक्षव्यवहार्यः स्वप्रकाशभावापन्नश्चेति बाह्य एव प्रत्यक्षात्माऽऽन्तराऽप्रत्यक्ष इति। बाह्याकारयोगा एव बाह्यसंविद्धेतवः समक्षणाः समक्षणविषयाः समाकारान्वयमयाश्चेति बाह्यप्रत्यक्षत्वं स्वप्रकाशत्वम् ॥

एतदपि बाह्याकाराऽनवस्थानेन व्याहतं, रंगे हि नर्तक्येका नृत्यव्यापाराऽयुताऽयुत रंगजनैरालोक्यते बाह्याकारा, सा प्रत्यक्षसिद्धैकक्षणे एका, दर्शकानामयुताऽयुतानां सम्विदाम् पृथगयुताऽयुताऽऽकाराऽर्पणं विना स्वस्वाकारस्वप्रकाशत्वं प्रत्यक्षप्रकाशत्वं नोपपद्येत, आकारश्चैकक्षणे एकः, एकस्यार्पणमयुताऽयुतसम्वित्सु त्वसम्भवि, तत एव तत्र व्याहतिः, अगणितसंविदां तु बाह्यगतिवृत्तिकतया तदाकारानुकारित्वं तदाकारप्रकाशकत्वं तु साक्षादेव सिद्ध्यति,

अतः संविदुद्भवहेतुरूपसमक्षणिकपदार्थनर्तकी एकात्वसमर्पिताकारास्त एव चाऽयुताऽयुतबुद्धयात्मानः बाह्यगोचराः प्रत्यक्षा अपि असंभविनः स्युः। तस्मात् स्वरूपसत्त्वप्रकाशता संविदां साऽक्षिप्रकाशवत्तेति निराबाधं, साक्षिणः सर्वत्र सत्त्वात्, एकस्यापि सर्वत्र सर्वसंविदि ग्राहकताशक्तिमत्त्वात्, सम्विदामेव बाह्याकारानुकारित्वात्, अन्यथा तु नर्तक्या इवाऽयुताऽयुतदर्शकसम्विदामपि मिथः साक्षात्त्वं स्यात् बाह्याकारस्वरूपात्मत्वात् स्वप्रकाशत्वाच्चेति। अतो नार्थाऽऽकारार्पणं संविदि, किन्तु अर्थेष्वर्पणं सम्विदाम्, साक्षिप्रकाशप्रकाशवत्त्वं च। न वा घटसंस्कारार्पितसम्वित् बाह्यघटाकारा भवति, अयुताऽयुतप्रेक्षकसंविदां बाह्यनर्तकीरूपाऽयुताऽयुताकारत्वे नर्तक्ययुताऽयुतत्वं चापद्येत। न त्वेवं क्वापि भवति। ततो न ससंस्कारसंविदां घटाद्याकारत्वम्॥

अथ निराकारावेव बुद्धयर्थौ पृथग्भूतौ, सहभूतौ तु साकारावेव भवतः, चूर्णहरिद्रायोगेन कुंकुमादिवत्। नैवम्। समदेशयोगे तन्निदर्शनं, न तु ध्रुवाऽवलोकिनः संविद् ध्रुवाकारा बाह्याकारा साकारा स्यात् विप्रकृष्टदेहात्, योगाऽभावात्, भवति च तत्रापि स्वप्रकाशा, कालान्तरवर्ति रामलक्ष्मणादिगोचरापि स्वप्रकाशा दृश्यते सा न रामलक्ष्मणाकारा भवति। संसर्गाऽभावात् समक्षणाऽभावात्। किञ्च—सांऽशयोराभिमुख्यादियोगः, भिन्नकालयोर्निरंशयोस्तु तथायोगाऽसंभवात्। पूर्वं निराधाराऽऽकारासंभवात्, ग्रहणोत्तरमाकारान्तराऽनपेक्षणात्, संसर्गापेक्षणे तु क्षणविगमात्। अतोऽर्थनैरपेक्ष्यमेव सम्विदः स्वप्रकाशसत्स्वरूपत्वं साक्षिप्रकाशप्रकाशवत्त्वं निराबाधम्॥

अथ सर्वा हि संवृत्तिः संवित् निरधिष्ठानाऽऽत्मा, सा स्वोत्पन्नमधिष्ठानमपेक्ष्य साकारा सप्रकाशा भवतीति। तदपि न। निरधिष्ठानायां अधिष्ठानोत्पादनाऽसामर्थ्यात्, साधिष्ठानायास्तु स्वपृथक्चेतनाधिष्ठानत्वसिद्धिः। अलीकं व्यलीकं साभासं शून्यं वा किमपि लक्ष्यीकृत्योद्दिश्यैव सम्वित् प्रवर्तते, तदाकारापन्ना च शून्याऽभावाद्याकारा वा अंकनभावाद्याकारा वा प्रवर्तते, गन्धर्वनगरादावपि मेघाधिष्ठानतापेक्षा भवति, अभावप्रत्ययाऽऽलम्बना वृत्तिर्निद्रेति पतञ्जलिरप्याह, तस्मान्निरधिष्ठानसम्वित्ख्यापनं स्वरूपत एव हतम्॥

अथाऽऽत्मैव ज्ञानम् आत्मा च द्रव्यं न विषयापेक्षः, चितिश्च चिदेव चैतन्यं, तदेव निर्विषयः स्वप्रकाशः ख्यायते इति। सत्यम्। साक्षिप्रकाश्यात्मनां स्वप्रकाशत्वं न विरुद्धम्, श्रुतिभिस्तथानिरूपणात्। परं धर्मभूतज्ञानद्रव्यस्य क्वचिद्विषयराहित्ये प्रसरणाऽवस्थायां स्वप्रकाशख्यातिकत्वं कथं स्यात्, निर्विषयप्रवाहे धूम्रवत् अनुद्भूतरूपिविद्युत्प्रवाहवद्वा स्वप्रकाशत्वाऽननुभवात्। तत्र तदानीं ततो निजात्मप्रकाशप्रकाश्यत्वं भवत्येव, सूक्ष्मदर्शिनां सप्रकाशत्वाऽवगमात्, योगिनां सुषुम्णादौ ब्रह्मरन्ध्रे हृदयचक्रेण ज्ञानधाराणामपि सप्रकाशत्वेन दर्शनात्। अतो न निर्विषयख्यापनं सिद्धयति॥ ५१२॥

**सर्वं ज्ञानं यथार्थं स्वज्ञानिसाक्षिचिदन्वितम्।**
**अन्तर्यामिपरब्रह्मज्ञानशक्तिप्रयोजितम् ॥५१३॥**

**सर्वमिति।** प्रकारज्ञानं केवलविषयमिति पृथक्सामग्रीजन्यमपि नहि तत्तथा, संस्कारनिरपेक्षेन्द्रियजन्याऽऽधीः प्रथमेन्द्रियसंप्रयोगजन्या 'अहमि'-त्यात्मगोचरविशिष्टप्रत्ययवत् विशिष्टविषयैव स्वपूर्वकल्पाऽनवलम्बनाऽत एव निर्विकल्पनात्मिका, धियां पदार्थग्रहणस्वभावात् स्वविषययावद्ग्रहणाऽग्रहणपक्षपातित्वाऽभावात्, सामग्र्यभावेऽपि विशिष्टाऽजननात्, अविशिष्टाया अजननात्, आधेयान्विताधारवत् आधारान्विताऽऽधेयवत्तयाऽपि ग्रहणात्, आधाराऽऽधेययोरन्योन्यतादात्म्यादिना समक्षणीयसापेक्षत्वात्, घटं विना घटत्वाभानात् घटत्वं विना घटाऽभानात्, भावे त्वव्यवहारात् धर्म्यन्वितधर्मस्य धर्मिघटितधर्मस्य स्वरूपभानात्, संसर्गोऽपि तद्धीभास्य एव, आकांक्षायास्तु शब्दप्रयोगे स्थानात्, धीक्षणेऽविशिष्टविषयस्यैवाऽभानात्। प्रत्यभिज्ञाऽपि सविकल्पैव, तदादिविशिष्टज्ञप्त्यादिजन्या सा। एकजातीयेषु प्रथमपिण्डग्रहणं विशिष्टमेव अविकल्पनं, तदुत्तरं द्वितीयादितत्पिण्डग्रहणं' सविकल्पनं पूर्वकल्पितग्रहणत्वात्। आत्मा हि ससाक्षी स्वप्रत्ययिविषयग्राहकः सर्वथाग्राहकः साक्षिरूपग्राहकचिद्बलात्, तत्रापि परब्रह्मणो नित्यप्रत्यक्षविशिष्टधी-

व्यक्तिवैशिष्ट्येन विशिष्टतैव प्रसृताऽनित्यज्ञप्त्यादावपि न व्यभिचरति, प्रत्येकपदार्थस्वरूपभाने तत्तद्विवेचनेऽपि संकलितस्वेतरसापेक्षगोचरत्वात् संसारस्यैव विशिष्टत्वात् तन्नित्यप्रत्यक्षद्रष्टुरपि विशिष्टस्वरूपत्वात्, व्यावर्त्यत्वेनाऽविशिष्टं यद्ध्रियते तदपि स्वतादात्म्यपदार्थान्तरविशिष्टमेवेति व्यवस्थितम्। नहि स्वक्षणीयाऽविकल्पनात् स्वक्षणीयसविकल्पनं बाधितं तदुत्तरस्थानमेव भजते, न तु प्रथमक्षणमिति वक्तुं शक्यम्, नहि स्वरूपप्रयुक्तं नामकरणम्, किन्तु क्षणप्रयुक्तम्, नैतावता क्षणविरोधस्तदाधेयविरोधजनकः, नित्येऽनैकान्त्यात्, चिरस्थायिनि तदभावात्। संस्कारादावपि तदयोगात्। अर्थजम् अर्थविषयमेव प्रत्यक्षम् अन्यदप्रत्यक्षमिति सविकल्पकम् अर्थजाऽर्थगोचरक्षणोत्तरं जायमानं ज्ञानगोचरमिति न तत्प्रत्यक्षं किन्तु प्रत्यक्षेतरदित्यपि तदर्थाऽभानयोजितम्॥

अर्थो हि विषयो यदाधारज्ञानाऽस्तिता, ज्ञानं वा घटो वाऽभावो वा संस्कारो वाऽऽत्माऽपि च सर्वोऽपि ज्ञानार्थः स्वज्ञानं प्रति, तत एवाऽर्थजार्थविषयकत्वेनोत्तरज्ञानस्याऽप्रत्यक्षत्वं बाधितमेवेति सविकल्पके नहि प्रत्यक्षत्ववैधुर्यसिद्धिः। समानविषयकधारायां अर्थार्थिव्यवहारास्पदत्वात्। प्रथमभाने ये विषयास्त एवोत्तरज्ञाने विषयास्ततो भवत्याद्यत एव विशिष्टज्ञप्तिस्वरूपं सर्वोत्तरक्षणानुस्यूतम्, तादृशधारायां यदि पूर्वक्षणीयज्ञानमर्थः सन्नधिरोहति तदा त्वधिकार्थविषयकं तज्ज्ञानविषयकमपि सम्पन्नमिति तत्तदानीम् अनुव्यवसायख्यापनां लभते, नैतावताविशिष्टत्वं सविकल्पकत्वं वा तत्र विपरीतायते॥

चितिसम्वित् सदा विशिष्टा चितिस्वरूपा धर्मभूताऽपि प्रसरत्स्वभावा साक्षिवेद्याऽऽत्मवेद्या वृत्तित्वं भजमानाऽऽत्मसाधनमानसवेद्याऽन्तःकरणवेद्या सा ततोऽपि वहिःप्रसरत्स्वभावेन्द्रियवेद्या व्यापारकरणनिमित्तादिसाहाय्यानुविद्धस्वरूपा सुशाखिताऽवस्थापन्ना विषयाविक्यमाप्ता सती विभिन्नपरिचायकाऽभिलाप्या भवतीति शिष्टप्रेक्षावत्प्रामाणिकप्रवाहपरिचेया सती यथेष्टं यथाभानं व्यवह्रियते। तद्विपुलता हि प्रमाणादितनुमयता, विशिष्टारम्भा विशिष्टमध्या विशिष्टान्ता विशिष्टविश्रान्ता च भवतीति॥

योगिनां दिव्यदृष्टीनामपि प्रत्येकाऽन्वितैव सा प्राविर्भवति परब्रह्मब्रह्मेश्वरमायाजीवादीनां तद्गुणधर्मादीनां विशिष्टतयैव लोकपरलोकब्रह्मलोकादौ व्यवस्थितेः। नित्यानामपि स्वव्याप्यसापेक्षस्थितिकत्वेनैव व्यवस्थानात्। यत्र प्रत्यक्षं न व्याप्नोति तत्र परम्परया तद्धेतुकभानव्यापनात् यथापात्रं यथाशक्ति तद्व्यवस्थानात् भानवैशिष्ट्ये क्षत्यंशलेशस्याऽप्यगन्धात्। विशिष्टभानानि सहायस्वरूपाणि विशिष्टफलानि च स्वस्वधीविकासानुसारेणेष्टत्वमभिमत्य व्यवह्रियन्ते तज्ज्ञैः॥ ५१३॥

**विषयाणां व्यवस्थानं त्र्यवस्थं नो मतेऽभितः।**
**शुक्तिरूप्ये घटे बीजं पीठरं फलमैक्यतः॥५१४॥**

**विषयाणामिति**। सत्या घटाद्या विषया बीजपीठरफलात्मकाः, सत्याश्च शुक्तिरूप्याद्या बीजपीठरफलात्मकाः, सत्यास्तथाविधाः स्वाप्ना बीजपीठरफलात्मकाः, सत्कारणसत्कार्यसत्सम्बन्धगुणधर्माद्या अपृथक्सिद्धतादात्म्या अपि विशेषाकाराद्यैः शक्त्यादिभिर्नामव्यापारैश्च विशिष्टविधानैः पृथक्तयाऽपि व्यवहार्याः, कपालसंयोगघटघटत्वगुणाऽवस्थाविरलफलादिव्यवहारगोचराः॥

बीजपीठरफलानि समुच्चितानि सूक्ष्मतीक्ष्णप्रज्ञयाऽवगन्तव्यानि, तथाहि—सर्वजन्येषु मध्यशिथिला परिपक्वा चेत्यवस्थात्रयम्, घटे पिण्डकपालादिसमारम्भे सन्नपि घटस्तत्र सूक्ष्मः शिथिलसूक्ष्मः, सति व्यापारप्रयोगे मध्यस्थूलोऽपि शिथिलावस्थः संभवति तिष्ठति च, टिप्पकघट्टकसंक्रतभावे वाय्वग्नियोगे च सति चिरसुदृढा अपरिवर्त्याऽवस्थः संभवति, तत्र सर्वत्र शैथिल्यं त्वनुस्यूतं वर्तते, अन्ते सर्वजन्यानां शैथिल्येन तिरोभावात्, सृष्टेरपि मायिकधिषमाऽवस्था बीजशैथिल्यम्, मध्येऽपि परिवर्तमानत्वं शैथिल्यप्रयुक्तम्, अन्तेऽपि शैथिल्यं तिरोभावकम्, तदिदं सुदृढाऽवस्थाऽननुयोगिप्राक्शैथिल्यं यदुत्पत्त्युत्तरं स्थितं तत् क्वचित् उत्तरसामग्रचन्तरविरहात् चिरायतनं वाऽचिरायतनं सर्वत्र पूर्णफलाऽनाधायकमपि प्रवर्तकं भ्रान्तास्पदं प्रेक्षावद्भिर्व्याहृतम्,

तदेतत् मध्यं फलमत्र सत्कार्यसदवस्थाऽऽविर्भावतिरोभावादिसम्मतम् ॥ अतः सांख्येऽपि घटो ग्राह्याकारो वृत्तिधार्याकार आत्मयुग्बुद्धौ भोग्याकारश्चेति त्रेधाऽङ्गीकृतः । अन्यथा बिम्बात्मचेतनस्य विषयाकाराऽयोगेऽसंसारापत्तेरेव प्रसञ्जनं स्यात् । अतः कारणत्वेनाऽभिमतेषु कार्यत्वेनाऽभिमतस्याऽऽविर्भावनाऽनुवर्तनतिरोभावनसत्कारणसत्कार्यसिद्धान्तः सत्ख्यापनप्रयुक्तः । अत एव—आदानयोग्ये केवलनामयोग्ये केवलग्रहयोग्ये वृत्त्यादानयोग्ये मानसाऽऽदानयोग्ये बुद्धिमात्राऽऽदानयोग्ये आत्ममात्राऽऽदानयोग्येऽपि सर्वत्र सति एव पदार्थे तथा तथाऽनुगुणाकारे तत्र सर्वत्र सत्तया ग्राह्ये साक्षिग्राह्यत्वव्याप्ये साक्षिग्रहणविषये साक्ष्यन्विताऽऽत्मग्रहणविषये सर्वथा सत्ख्यातिरेव । पञ्चीकरणवत् सर्वं विशिष्टमितिसिद्धान्तेऽष्टाविंशतिविशिष्टीकरणस्य ध्रौव्यात्, मायाजीवेश्वरब्रह्मपरब्रह्मणां विशिष्टस्थितीनां शाश्वतिकसार्वदिकत्वात्, मायादिपञ्चानां सूक्ष्मस्थूलान्यतरपञ्चीकरणस्य नित्यसिद्धपञ्चाऽवस्थानत्वात् ॥

शुक्तिरूप्ये पराभिमताऽप्रमास्थलेऽस्माकं सत्समुच्चयख्यातिः, समुच्चयस्त्रेधा—बीजस्तम्बफलात्मकतया बीजम्, अधिष्ठानं शुक्तिः, पीठरः, स्तम्बो रजतम् विरलावयवि, फलं यथाऽधिष्ठेयं विविधम्, राजती विरलाऽवस्था, इष्टव्यापाराऽऽधायिकाऽवस्था, उत्पत्त्यनुषक्ताऽनुत्तमविरलाऽवस्था, जिघृक्षादिदृक्षादिगोचरीभूतमध्यावस्था, क्वचिदचिरायमाणा क्षणिका, क्वचिच्चिरायमाणाऽपि सा, बीजतादात्म्योत्पत्तिकेष्टस्थितिः, विचित्राश्चर्यकृदिष्टताजनिका विकृतिः, दिदृक्षाजनकशिथिलधर्म्युपस्थितिः, जिघृक्षोद्भावकतदीयसारूप्यम्, बीजतादात्म्यकसदृक्षक्लृप्तिः, पूर्णफलाऽनापादकतन्मयी रचना, बीजपीठरैक्यपदार्थाकारता, रजतप्रतिगमनार्थक्रियाव्यापारोत्तेजिका प्रापणविलक्षणाऽर्हाऽऽकर्षणशक्तिर्वा फलाभिवेद्या । सा च घटादौ प्रापणफला, शुक्तिरजतादौ दृष्टिफला । अवयवाऽधिष्ठानान्वयाऽर्थक्रियाद्येकज्ञानस्य व्यापनात् समुच्चयितपदार्थज्ञापनम्, इष्टस्थूलफले ध्यातेऽप्यलाभात् पूर्वंनिश्चयस्वरूपो भ्रमव्यवहृतः समुच्चयख्यातिः ॥

यथावस्थितव्यवहाराऽनुगुणज्ञानत्वं प्रमाज्ञानत्वं, तत्र यथाऽवस्थितव्यवहारानुगुणत्वं प्रमात्वम्, अनुगुणत्वं च प्रकारताविशेष्यताशालित्वम्, व्यवहारः आदानप्रतिदानादिसापेक्षमानव्यापारः, व्यापाराऽवलम्बनवत्योऽवस्था विषयाभिमतनिष्ठाः, तथाविधा येन प्रकारेण विशेषणेन गुणीभावेन धर्मधर्मिसंसर्गसमुच्चयितभावेन विशिष्टस्वरूपेण देशकालाद्यवच्छिन्नत्वेन रूपेण गुणेन धर्मेण संसृष्टत्वेन भावेनाऽभावेन पदार्थत्वेन सामान्येन विशेषेण सूक्ष्मेण स्थूलेनाऽऽकारेण वाऽवच्छेद्या तादात्म्येनाऽपृथक्सिद्धभावेन यत्र वर्तन्ते तथाऽवस्थिततथाविधतदीयविषयिताशालित्वं प्रमात्वम्, स्वर्णस्वस्तिके स्वर्णस्वस्तिकमितिज्ञानं प्रमितिः प्रमा, उक्तविधयावद्विषयित्वात् । घटे घटज्ञानं तथाविधयावद्विषयित्वात् प्रमा, शरीरधारिणां तत्तद्गुणसामग्रीप्रयोज्यत्वं तु विषयित्वेनाऽर्थादेव सिद्ध्यति, द्वाराणामावश्यकत्वं नहि करणानामन्यथासिद्धित्वापादकत्वम्, परमात्मीयज्ञानशक्तेर्ब्रह्मसाक्षित्वजीवन्याः शाश्वतवर्तिन्या आत्मगताया ब्राह्मीचिच्चैतन्याऽपृथक्स्वरूपायाः सत्यायाः स्वीयद्रव्यगुणात्मकभावेन प्रसरणशीलाया धर्मत्वमाभजमानाया यथावद्विषयग्राहिकायाः समुच्चयितपदार्थप्रकाशिकाया बीजस्तम्बफलात्मकोपादानोपादेयाऽऽस्थात्रिकगोचरीविधायिन्या ज्ञप्तेः प्रकाशस्वरूपायाः प्रमितेः स्वतःप्रकाशिन्या स्वया स्वगतप्रामाण्यस्य स्वत एव विषयीकरणात्, तयैव स्वयैव प्रवर्तनादिजननात्, अपृथक्सिद्धकपालसंसर्गघटगुणादिगता ज्ञप्तिरेवाऽऽस्थेयाऽऽस्थामयी फलाऽभिव्याप्ता विषयाकारमादधाना फलिनी द्रागेव सम्पद्यमाना फलाहितविषयविषयिणी स्वयं स्वेन गृह्यमाणा विफलताऽननुगुणा स्वयं प्रकाशते, विफलाऽवस्थामापन्ना तु तथाविधतया तथावस्थितव्यवहारानुगुणा प्रकाशते, धारयाऽपि प्रकाशते, पुनर्विभिन्नसमुच्चयिताकारा प्रागितरसमुच्चयिताकारा चेत् सा तथाविधा द्वितीयैव सम्पद्यमाना प्रकाशते । अन्याभिमतसंशयस्थलेऽपि द्वयोर्विषययोः स्वस्वरूपयथावस्थितत्वेन संशयाऽभावादेव तदनुपपत्तिप्रयुक्ताऽस्वतोग्राह्यत्वाऽनवकाशात् ॥ ५१४ ॥

**प्रमात्वं स्वप्रकाशत्वं ज्ञानत्वं तत्त्वगोचरम् ।**
**साक्षिग्राह्यं स्वतोग्राह्यं चिच्चैतन्यं हि तन्मतम् ५१५**

**प्रमात्वमिति** । ज्ञानानि सर्वाणि स्वप्रकाशानि स्वतःप्रमाणानि, तत्र तत्र विरोध्युपाधिकृता प्रामाण्यभिन्नशंकाया निराकरणिका वादिप्रतिवाद्यादिमीमांसा भवति । नेत्रं घटग्रहणे आलोकमपेक्षते तमोनिरासार्थम्, प्रामाण्ये मीमांसाऽपेक्ष्यतेऽप्रामाण्यादिशंकानिरासार्थम् । प्रमाज्ञप्तिः प्रमितिः स्वतःप्रमाणा, ज्ञानस्य प्रामाण्यं स्वतो गृह्यते साक्षिणा गृह्यते च, साक्ष्यात्मना गृह्यते, साक्ष्यात्मचैतन्येन गृह्यते, एतत्सर्वं स्वत एव ग्रहणम् ॥

चैतन्यपर्यन्तं स्वत्वं स्वीयत्वं ज्ञाने परब्रह्मणोऽस्त्येव, परब्रह्मज्ञानं स्वगतप्रामाण्यग्राहि भवति, सर्वसद्विषयकत्वात्, अन्यथा वैपरीत्यापातात् । अस्मदीयं ज्ञानं प्रमितिरपि स्वकीयप्रमितित्वं गृह्णाति । घटोऽस्तीति सद्भावविशिष्टघटग्रहणात् सत्प्रामाण्यं ग्रहणेन गृह्यते । स्वतःप्रतिपन्नार्थसत्प्रामाणिकतत्त्वं तदितरशंकानिरासकैः सम्वादकारणगुणाऽर्थक्रियाज्ञानाद्यैः प्रामाण्यं पुनः पुनर्गृह्यते प्रतिष्ठाप्यतेऽभ्यस्यते स्मर्यते सतताऽऽत्मब्रह्मप्रामाण्यवत् । ज्ञानगतम् अर्थाऽन्यथात्वं बाधकैरितरैरपि गृह्यते, अतोऽप्रामाण्यं परतोऽपि अवबुध्यते, अप्रामाण्यं परतोग्राह्यम् ध्यानवृत्त्याऽप्रामाण्यं गृह्यते, ध्यानवृत्तिर्हि सर्वविषयिणी, प्रमाऽप्रमासाधारणी द्रागेव सहोपलम्भनियमिता प्रामाण्याऽप्रामाण्यग्रहणे क्षणान्तरं न सहते, कर्मसाक्षिब्रह्म यथा स्वसार्वज्ञ्यस्य जीवात्मकृतकर्मग्रहविषयकत्वे क्षणान्तरं न सहते, कर्मोत्पत्त्यादिविषयकसार्वज्ञ्यात्,तथा ध्यानवृत्तिरियं सर्वत्राऽनुस्यूता समकालमेव प्रामाण्यमप्रामाण्यं चाऽऽवर्तयति, जीवात्मनि सार्वदिकत्वात्, ध्यानवृत्तौ प्रामाण्यमेव, तच्चाऽऽत्मग्राह्यम्, आत्मादीनां ब्रह्मसाक्षिग्राह्यम्, ब्रह्मसाक्षि परब्रह्मैवाऽन्तर्यामी, तस्य नित्यप्रत्यक्षदर्शित्वात्, एतत्प्रमात्वं स्वग्राह्यमेव, परमात्मनि सर्वविद्यानां विरामात्, नानवस्थाद्यूहनम् । ध्यानं चात्मनः स्वयंप्रकाशतात्मकम् । परमेशस्य नित्यप्रत्यक्षात्मिका नित्यप्रमा नित्या प्रमितिः ॥

लोके तु ज्ञानेन घटादि प्रकाशते, ज्ञानान्तरं विनाऽपि स्वयं ज्ञानं प्रकाशते तत् स्वप्रकाशम्, आत्मा च ब्रह्म च स्वयम् अहमुल्लेखित्वात् स्वस्मै स्वयं प्रकाशते, प्रदीपो घटादिकं प्रकाशयन् स्वः प्रकाशते, ज्ञानं घटादि प्रकाशयन् स्वयं प्रकाशते ॥

अहमर्थस्याऽऽत्मत्वेन स्वयम्प्रकाशस्याऽऽत्मनः स्वविषयवेदनस्यैव स्वात्मवेदनवचनात् । 'तमात्मानमवेदि'तिस्ववेदित्यात् । स्वं जानामि चैत्रोऽहं स्वात्मानं जानामि आत्मानमात्मना वेद्मि चेत्यादौ अहमर्थ आत्मा तज्ज्ञानं चेति द्वयमपि स्वप्रकाशम् । 'आत्मैवाऽस्य ज्योतिः स्वयंज्योति'रित्यात्मा स्ववेद्यः, अस्य जीवात्मनः आत्मैव स्वस्वरूपं ज्योतिःप्रकाशम्, धर्मश्च ज्ञानं स्वप्रकाशम् । 'आत्मैवाऽस्य ज्योतिर्भवति, अत्राऽयं पुरुषः स्वयंज्योतिर्भवति'—इति स्वाप्नविषयमपि स्वप्रकाशम् । आत्मनः–'अहमि'ति प्रकाशः स्वेन, अन्यः प्रकाशो धर्मभूतज्ञानेन च । वित्त्यर्थाः सर्वेऽपि वित्त्यात्मसाक्षिवेद्या अन्तरात्मदृश्याः सत्यार्थज्ञानं सत्यम् । विशिष्टब्रह्माद्वैतेऽत्र साक्षिवेद्यं ज्ञानात्मस्वप्रामाण्यं तादात्म्यकविशिष्टत्वात् समुच्चितत्रिकस्य ॥

यदि त्वर्थोऽसन् तज्ज्ञानमप्यसत्, तदर्थाकाराऽत्यन्तविरहात् अभावाकाराऽविरहात् तद्गोचरत्वेन सत्यमपि साक्षिवेद्यमपि भावाकाराऽगोचरत्वेन तावदप्रामाण्यमपि साक्षिवेद्यमेव । विरोधकज्ञानं विरोध्यं ज्ञानं निवारयति । एकं ज्ञानमेकविषयं समुच्चयितविषयं सन्, अनेकविषयं यदसमुच्चयितविषयं तदनेकं समहालम्बनतामाप्तमपि यदर्थांशे विषयोऽसन् तदंशे तदप्यसत् अप्रमा व्यवह्रियते,भावो वाऽभावो भवत्येव विषयस्तदंशे सत् तदन्यांशेऽसदिति व्यवहारः, न तु स्वरूपमसत् भावत्वात्, सति स्वरूपे स्वप्रकाशेऽपि विषयाऽलाभे तत्र भ्रम इत्यसद्व्यवहारः, असदुपचार इति ।

आत्मनि साक्षिणि परब्रह्मणि च विशिष्टे परब्रह्मदृष्ट्या परब्रह्मानुभवः स्वप्रकाशः, ज्ञानात्मकः सः स्वप्रकाशः, अहंकारो जडो न ज्ञाता, आत्मसाक्षिकं स्वप्रकाशज्ञानं ज्ञेयविशेषसिद्धिरूपं ज्ञातृगतमेव स्वप्रमात्मकम् । प्रकाशस्य पुरुषनिष्ठार्थविशेषविषयकसिद्धिरूपत्वात् स्वतस्त्वं स्वप्रकाशत्वम् ।

भवति तु विभिन्नविशेषकचिशिष्टब्रह्म विहाय स्वतन्त्रत्वन्मदादिज्ञातृत्वं भ्रान्त्युपचारकत्वम्, विशिष्टब्रह्मातिरिक्तदृष्टिमत्त्वम् अज्ञानित्वम् परमसत्त्वैक्याऽवित्त्वं भ्रान्तत्वमिति। विषयविशिष्टतासत्यत्वनिवन्धनमपि ज्ञानस्य सत्यत्वमावश्यकम्। भ्रान्तमप्यनुभासयत् साक्षि तु स्वप्रकाशत्वं न जहाति तज्ज्ञप्तिरपि तथा। 'अहं ब्रह्माऽस्मि' इत्यहंग्राह्यविशिष्टात्मा शरीर्यक्षरब्रह्मपरब्रह्मविशिष्टोऽस्मीतित्रिकुटिज्ञानं विवेकात्मब्रह्मरूपोपासनं स्वप्रकाशं प्रमा परमपदप्रदाऽऽरादुपकारकं सत्यमेव। धर्मभूतज्ञानं त्रिकुटिगतधर्मिचिच्चेतनज्ञप्तिरूपम् आत्मप्रकाशः। ज्ञप्तिश्च तत्र त्रिकुटिव्यापकपरब्रह्मबोधरूपा, सुवर्णेतिशब्देन रूपत्वपिशंगतादात्म्यपिण्डधर्मादिज्ञप्तिरिव अहमिति ब्रह्मेतिशब्देन जडतत्त्वप्रकृतिचेतनाऽक्षरब्रह्मपरब्रह्मपर्यन्तज्ञप्तिः, सा विशिष्टमाना स्वयम्प्रकाशा प्रमितिः प्रमा। नित्यचेतनाऽऽश्रिताया ज्ञप्तेः यावद्यथाशक्त्याऽवभासकत्वं स्वप्रकाशत्वम् प्रमात्वं चेति ॥ ५१५ ॥

**ध्यानवृत्तय एवास्तु ब्रह्मदृष्ट्यन्विताः प्रमाः।**
**विशिष्टविषयाः सर्वाः प्रामाण्यं ख्यापयन्ति हि ॥**

**ध्यानेति**। प्रमात्वं तत्सम्बन्धिनिष्ठत्व—तत्सम्बन्धितावच्छेदकतानवच्छेदकाऽवच्छिन्नाऽवच्छेदकत्वाऽनिरूपितत्वज्ञानीयतन्निष्ठसमुच्चयितप्रकारतानिरूपितत्वैतन्त्रितयसम्बन्धावच्छिन्नधर्मधर्मिविशिष्टविशेष्यताशालित्वकत्वं तत्प्रमात्वं स्वतःप्रमात्वम् ॥

ध्यानवृत्तौ तु प्रामाण्यमात्मग्राह्यम्; आत्मप्रामाण्यं ब्रह्मसाक्षिग्राह्यम्, ब्रह्मसाक्षी च परब्रह्मैवाऽऽन्तर्यामी, स नित्यप्रत्यक्षदर्शी, तथापि विशिष्टतया प्रमात्वग्राहकः। परमात्मनि सर्वविद्यानां विरामात् सार्वज्ञ्यप्रमात्वं तत्र। अनित्यज्ञानानां तु विषयाकाराऽधीनाऽऽत्मलाभात् नित्यज्ञानतो वैलक्षण्यमिदं विषयाऽधीनलाभकत्वं धर्मभूतगुणद्रव्यज्ञानस्य। अथ विषये भ्रान्त्यधिष्ठाने तु तथाविधे यथावस्थितव्यवहारानुगुणज्ञानत्वस्य सत्त्वेन तत्रापि तथाविधत्वे प्रामाण्यत्वाऽव्यभिचारः ॥

स्वतःप्रामाण्यं च स्वाधीनज्ञाप्यवैशिष्ट्याऽऽकारकस्वविषयत्वम्। यद्वा—स्वाश्रयाऽऽकर्षिचिदंशाऽऽकृष्टग्रहविषयत्वं स्वतःप्रमात्वम् ॥ वस्तुतस्तु—यावदनुस्यूतसमष्टिव्यष्टिचराऽर्थज्ञानत्वम्—ज्ञानगतप्रमात्वम्, यावत्योऽनुस्यूता विशेषणविशेष्यसंसर्गभावाऽऽपन्ना याः समष्टयः साजात्यानि व्यष्टयो वैजात्यानि चराश्च संसर्गाः अर्था वस्तूनि, तेषां यज्ज्ञानत्वं प्रमाज्ञानत्वम् ॥

अथ ज्ञानत्वं विशिष्टज्ञानत्वम्, तद्वति तत्प्रकारकज्ञानत्वम्, तद्वति तद्वैशिष्ट्यज्ञानत्वं वा, तदेव च तत्प्रामाण्यम्, विषयनिरूप्यं हि ज्ञानं, विषयो विशिष्टः, ज्ञानं विशिष्टम्, विशिष्टविषयो ज्ञानवित्तिवेद्यः, व्यवसाये भासमाने धर्मधर्मिवत्तद्वैशिष्ट्यमपि विषयः। सत्यरजतस्थले रजतत्वविशिष्टपुरोवर्तिरजतविषयता व्यवसायनिरूपिता, प्राकृतिकं हि ज्ञाननिरूपणं वैशिष्ट्यं विषयीकृत्य स्वगोचरज्ञानान्तरं स्वानुव्यवसायं जनयति, यावद्व्यवसायोल्लिखितप्रकारादिविशिष्टधर्मी अनुव्यवसाये भासते, तत्र 'इदम् इदन्त्वेन रजतत्वेन च जानामीति'—प्रकारत्वेन ते सत्यरजते भासेते, तत्प्रकारकतद्विशेष्यकज्ञानं चात्मनि भासते, रजते रजतत्वप्रकारकं भासते ज्ञाने, सः प्रामाण्यग्रहः, यत्राऽप्रामाण्यशंका नास्ति करतलाऽऽमलकज्ञाने सत्यरजतादिज्ञाने, च तत्र व्यवसाय एवाऽर्थनिश्चयः, निष्कम्पा तत्र प्रवृत्तिः, अभ्यासदशायां तु झटिति निष्कम्पप्रचुरतरप्रवृत्तिः झटिति प्रवृत्तिः, साऽनुव्यवसायेन ग्रहेण, अप्रामाण्यशंकाशून्येन व्यवसायेनैवाऽपि, झटिति समवधानमपि स्वकारणाऽधीनम्, प्रामाण्यज्ञानं त्वप्रमाण्यशंकाप्रतिवन्धद्वारा स्वार्थनिश्चयरूपं ज्ञानं वा निष्कम्पप्रवृत्तावुपयुज्यते, तत्साफल्यम् ॥ अनभ्यासदशायां तु प्रामाण्यसंशयेन अर्थनिश्चयपराभवः, अर्थसंशयनिष्कम्पप्रवृत्तिः, इदं रजतं न वा, अयं साध्यवान्न वा, अयम् अन्वयवान्न वा,—इत्याद्याः संशयाः प्रवर्तन्ते। अत एवाऽगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययति, प्रामाण्यज्ञानेऽपि अप्रामाण्यशंकया प्रामाण्यसंशयः, प्रामाण्यज्ञाने प्रामाण्यनिश्चयात् प्रामाण्यनिश्चयः। अर्थनिश्चये च निष्कम्पव्यवहारः, तत्र 'इदं रजतज्ञानं,—प्रमा,—संवादिप्रवृत्तिजनकत्वात्,—यन्नैवं तन्नैवं यथा शुक्तौ रजतज्ञानम्'—इत्येवं प्रामाण्यं परेणाऽनुमानादिना गृह्यते। 'इदं शुक्तौ रजतज्ञानम्,—अप्रमा,—विसम्वादिप्रवृत्तिजनकत्वात्,—यन्नैवं तन्नैवं यथा सत्यरजतज्ञानम्'। 'इदं पृथिवि-

त्वप्रकारकं ज्ञानं,—प्रमा,—उपनीतभाननिश्चितगन्धवति पृथिवीत्वप्रकारकज्ञानत्वात्' । इत्येवं प्रामाण्यवत् असत्पदार्थस्थलेऽप्रामाण्यमपि परतोऽनुमानादिना ग्राह्यमिति । विशेष्यनिष्ठाऽत्यन्ताऽभावप्रतियोगिप्रकाराऽनवच्छिन्नत्वादिकं प्रामाण्यं स्वतोगृहीतुमशक्यमिति परत एव गृह्यते, झटिति प्रवृत्तिर्व्यवसायादेव, न तु प्रामाण्यग्रहात्, इति रजतादिभ्रमवादिनामभिप्रायः । तान्प्रति विप्रतिपत्तिः—

ज्ञानप्रामाण्यं,—स्वाश्रयधर्म्यवच्छिन्नसाक्षाद्द्रष्टृदृष्टिचिच्चैतन्यजन्यसाक्षात्कारातिरिक्तज्ञानविषयं न वा ? ।

विधिर्नैयायिकानां, विध्यभावो निषेधोऽपि भावरूपः साक्षात्कारात्मको विशिष्टब्रह्माऽद्वैतवादिनाम् ।

सत्यरजते 'रजतमिति ज्ञानं,—प्रमा,—सम्वादिप्रवृत्तिजनकत्वादि'-तिज्ञानगोचरप्रामाण्यानुमितिग्राह्यं प्रामाण्यं परतोग्राह्यम् । अप्रामाण्यमपि परतोग्राह्यम्—'शुक्तिरजतज्ञानम्,—अप्रमा,—विसम्वादिप्रवृत्तिजनकत्वात्' । ज्ञानानां सामान्यत आत्ममनःसंयोगजन्यत्वेन, विशेषतस्तु मनइन्द्रिययोगविषयेन्द्रिययोगादिजन्यत्वेन करणव्यापारादिजन्यत्वेन ज्ञानहीनजडतामुक्तिस्वीकारेण प्रकाशस्य परतो जन्यत्वेन सामग्रीजन्यप्रकाशस्य साक्षिचिच्चैतन्यातिरिक्तप्रकाशस्यैव प्रकाशत्वस्वीकारेण सच्चिदानन्दस्वरूपतायां द्रव्यत्वमात्रनिर्वाहकताऽनावश्यकत्वेन चिच्चैतन्यात्मकज्ञानघनताया अप्यनावश्यकत्वेन सामान्यमात्रजन्यज्ञानस्य ततश्च तद्विषयप्रकारप्रकारताकविशेष्यताकाऽनुजायमानसविकल्पकप्रसक्तिक्रमबाहुल्येनाऽनुव्यसायविशिष्टाऽनुव्यवसायादिप्रकाशानां द्वित्रक्षणाऽवस्थायिस्वभावानां नियताऽवश्यम्भावसध्रीचीनत्वेन पूर्वसंविद्गतप्रामाण्याऽप्रामाण्ये प्रवर्तकत्वाऽविशेषेऽपि निवर्तत्वानुरोधेनोत्तरसाफल्याऽसाफल्यसम्पादितज्ञानग्राह्यत्वानुरोधानुसरणम् । तर्कमात्रानुसारिपदार्थक्लृप्त्यनुकूलसिद्धान्तपथिकस्य तथाविधत्वयोग्यत्वेऽपि, पटे घटद्रव्यत्वव्यभिचारात् व्यधिकरणधर्मस्य सुतरां तदनधिकरणाऽनधिकरणकत्वस्य प्रमात्वेन व्यधिकरणधर्मावच्छिन्नत्वस्य वैशिष्ट्यवैधुर्यात् रजतत्वेन शुक्त्यवगाहिज्ञानस्यापि विषयवितथत्वेन वितथत्वादेव पक्षाभावेन अप्रामाण्यस्याऽपि शून्यत्वादेव परतोग्राह्यत्वकथाया भंगेन स्वभावत एव प्राग्विशेषणज्ञानं स्वतःप्रमा ततश्च विशेष्यज्ञानं संसर्गज्ञानं च स्वतःप्रमा, संसर्गस्य पूर्वं निश्चितत्वात् विशेष्यस्य चक्षुरादिभिर्निर्णयात् विशकलितया स्वतःप्रामाण्यादेव भ्रान्तिज्ञानस्य तदुक्तसंकलनया स्वरूपाऽभावात् तथाविधत्वव्याहतत्वात् ।।

नैयायिकानाम् अवैशिष्ट्येऽपि प्रसह्य विशिष्टस्वीकृतिरापतति, जातीनां व्यापकत्वं व्यक्तिषु वाऽन्यत्राऽपि, समवायेन व्यक्तिषु, कालादौ स्वरूपेण, नित्यानामनाशात् मध्ये चाऽखण्डात् महाप्रलये वा सत्त्वात् । अत्र स्वभावतो वैशिष्ट्यं वा ज्ञानकल्पितं, तत्र निराश्रयत्वाऽभावात् धर्माणामविशिष्टत्वाभावाच्च निजानाश्रितव्यक्तावपि वैशिष्ट्यमापतति, एतत् तर्ककृतम्, अन्यथा पदार्थव्याहतिः, तथा च व्यभिचरितधर्माणामपि अस्वाश्रये आश्रितत्वोपगमेन घटत्वस्य समवायस्य च नित्यव्यापकस्य वैशिष्ट्यस्वीकृत्यभ्यासेन व्यधिकरणवैशिष्ट्यस्वीकृतिसारल्येन राजतत्वविशिष्टा शुक्तिरपि भवेत् व्यभिचारिसम्बन्धेन सम्बन्ध्यपि भवेत् सुख्यातमप्यन्यथाख्यातं भवेत्, विशेषपदार्थस्वरूपतैव नास्तीति तथापि स्वीकृतिर्भवेत्, मायायाः स्वीकृतिः सर्वसिद्धाऽपि नैयायिकमात्राऽसिद्धाऽसत्तर्कव्याहता भवेत् । तथा च अवैशिष्ट्यस्य तर्केण वैशिष्ट्यस्वीकृत्या विना भ्रान्तिं विना च परतःप्रामाण्यम् अन्या गतिरेव नास्तीति स्वतःप्रामाण्याऽभावस्य परं किं प्रामाण्यं करिष्यतीति न तर्कितं व्याघाते पर्यवसितम्, प्रकाशोऽपि प्रकाशान्तरेण ग्राह्यः स्याच्चेत् दोषोऽपि सूर्योऽपि दीपान्तरेण सूर्यान्तरेण ग्राह्यः स्यात् । ततो न वैशिष्ट्यं व्यधिकरणमिति सर्वथा परतोग्राह्यताप्रयोजकसंशयाऽनवस्थानम् । जातिर्न व्यक्तिभिन्ना, भावे जातिबोधात्, भावस्य व्यक्तिधर्मसदृशधर्माणां प्रत्यायकत्वात् । सास्नादिमत्त्वमेव गवेतराऽसमवेतगोसमवेतधर्मत्वम् । श्रुत्यनुपबृंहिततर्कानुमानादीनामपि परतःप्रमात्वे श्रुतेरेव प्रमात्वं स्वतःसिद्धचेत्, एवं च परतो व्याहन्यात्, शाब्दस्यापि परतस्त्वेऽनाप्तत्वप्राप्तिः, आप्तत्वमसर्वज्ञताबाधितम्, सार्वज्ञ्यावश्यकत्वे स्वतस्त्वं ध्रुवमिति परतस्त्वं व्याहतम् ।।

नित्यज्ञानस्य स्वतस्त्वे किं विषययाथार्थ्यं वा स्वयाथार्थ्यं तदितरद्वा प्रयोजकम्, ? । सर्वथा स्वतस्त्वं स्यात्, प्रथमे पारतन्त्र्यव्याहतेः, तृतीयस्याऽप्रयोजकत्वात्, मध्यस्य स्थैर्यात् । अथ किमपराद्धं तर्हि प्रकारसंसर्गविशेष्यादिगोचरेण क्षणादिस्थायिना प्रथमत एव विशिष्टवेदनेन । पदार्थाः सन्ति, भावस्तर्क्यते, घटे यत्किमपि रूपादिवैशिष्ट्यं वर्तत एव पटत्वेन वैशिष्ट्यं कल्प्यते, तत्र तदसत्त्वेऽपि भावो ज्ञाने विद्यते भावविषयकं ज्ञानं ज्ञानद्रूवप्रमात्वविशिष्टं त्वस्त्येवेति न विपरीतविषयकं कदापि भवति, अतः स्वतोग्राह्यं प्रामाण्यम् । व्यधिकरणानामवच्छेद्याऽवच्छेदकभावो व्यावर्तकता च नैव विद्यते, अनतिरिक्तवृत्तित्वरूपम अवच्छेदकमपि न सुघटं तत्र । एकज्ञानव्यक्तिर्व्यवसायो निरूप्यनिरूपकभावापन्न इत्यप्यसुवचः । स्वयं निरूपकश्चेत्, कस्य ?, स्वयं निरूप्यश्चेत् ? केन ? । भेदाऽभावान्नाऽनेकमपि । एकत्वे वा भिन्नवाचकवाच्यत्वविरहात्, भिन्नवाच्यत्वे वा नैकत्वम्, तस्माद् विना विषयम् अनवस्थितिस्वभावस्य भानस्य स्वस्वरूपप्रकाशत्वं स्वतःप्रकाशत्वम्, अन्यथा शून्यत्वाऽऽपात एव ।। ५१६ ।।

**ज्ञाने तु सत्यविषये याथार्थ्यात् संशयाऽस्पृशेः ।**
**अपरग्राह्यमेवाऽस्ति नाऽन्यथाख्यापनं यतः ।।५१७।।**

**ज्ञाने त्विति** । अथ न शून्यत्वापातो न वा स्वतःप्रकाशत्वम्, परतःप्रकाशत्वस्य साधितत्वात्, तथाहि–'पण्डितधीविषयं प्रमाणम्,–प्रामाण्यसाधकम्, तदितराऽसाधकत्वेसति तत्र तदानीं साफल्यात्' । 'अनभ्यासदशापन्नैतज्ज्ञानप्रामाण्यम्,–एतत्प्रामाण्यसंशयपूर्वकालीनैतज्ज्ञाननिश्चयाऽविषयम्, एतज्ज्ञाननिश्चयाऽनन्तरं सन्दिह्यमानत्वात्, अप्रामाण्यवत्' । 'अयं व्यवसायो न तत्र प्रामाण्यग्राहकः, तत्र प्रामाण्यसन्देहाऽविरोधित्वात्, निश्चयत्वे सति तत्र प्रामाण्यसन्देहाऽविरोधित्वाद्वा, यन्नैवं तन्नैवं यथा विरोधिनिश्चयः ।। 'अयं रजतत्वेन रजते रजतत्वेनाऽनुभवो,–रजतत्वाऽभाववति रजतत्वप्रकारको न,–अरजतवृत्तिप्रकारको न,–विशेष्याऽवृत्तिप्रकारको न,–रजतत्वप्रकारकत्वे सति रजताऽविशेष्यको न,–रजतत्वव्यधिकरणप्रकारावच्छिन्नो न,–रजताऽवृत्तिप्रकारको न,–भूषणसमर्थविषयकप्रयत्नवत्त्वे सति रजतत्वप्रकारकनिश्चयत्वात्,–भूषणसमर्थविशेष्यकरजतत्वप्रकारकनिश्चयत्वाद् वा,–यन्नैवं तन्नैवं यथा रजताऽप्रमा' । 'इदं रजतत्वप्रकारकं ज्ञानं,–रजतत्ववद्विषयकम्,–'इदं विभूषणसमर्थमात्रविशेष्यकं रजतत्वप्रकारकं ज्ञानं,–रजतविशेष्यकम्,–रजतत्वाऽभाववदविषयकत्वे सति सविषयकत्वात्, यन्नैवं तन्नैवं यथा रजताऽप्रमा' ।।

प्रमायामिव भ्रमेऽपि विशेषणसिद्धिर्यथा–'इदं ज्ञानं,–न रजतभिन्नविशेष्यकम्,–भूषाऽसमर्थविशेष्यकत्वात्, यथा रजतभ्रमः' । 'इदं रजतत्वप्रकारकत्वं,–रजतविशेष्यकत्वावच्छिन्नं,–भूषणसमर्थे रजतत्वप्रकारकत्ववत्वात्, यन्नैवं तन्नैवं यथा रजतत्वभ्रमस्य रजतत्वप्रकारकत्वम्' ।

अतिरिक्तविषयतापक्षे तु–'अयं रजतत्वेनाऽनुभवोऽरजतवृत्तिरजतत्वप्रकारकविषयताको न,–रजतत्वाऽसमानाधिकरणरजतत्वप्रकारकविषयताको न,–विषयताश्रयाऽवृत्तिप्रकारको न,–इति वा साध्यम् । रजतवृत्तिरजतत्वप्रकारकविषयताकत्वं विषयताश्रयवृत्तिप्रकारकत्वं वा अर्थात् सिद्ध्यति । विषयताविरहेऽपि वा ज्ञाने न तादृशविषयताकत्वस्य विरहः । विशेषणे विशिष्टज्ञानविषयत्वव्यवहारादेः समानाकारधारावहनबुद्ध्यादेश्चाऽनुपपत्तिरेव तत्र विषयताऽभ्युपगमे बीजम् । इति चेत् ।

अत्र–पूर्वीयसमुच्चयितविषयताऽनभ्युपगमेऽनुव्यवसाययाथार्थ्याऽनुपपत्तिः, विषयतानामसमानाकारविषयत्वे प्रमोषे वा तद्नुव्यवसायत्वाऽनुपपत्तिश्च; ज्ञानीयविषयतायां समुच्चयितज्ञाननिष्ठविषयताऽनतिरिक्तत्वेन नाऽसमानाकारकविषयकत्वापत्तिः, व्यवसायद्वारकाऽऽकारग्रहणादेव विषयविषयताया ज्ञाने ज्ञानगतविषयतात्मकतयैव संस्थानात्, अन्यथा निर्विषयत्वाऽऽपाते विनाशापत्तेः, समानाकारधारोच्छेदापत्तेश्च ।।

अथापि च तत्र तत्र विशेष्यत्वप्रकारकत्वाद्या विषयताकारा एव । पदार्थानां सर्जनस्यैव वैशिष्ट्यतया सिद्धत्वात् व्याप्यवृत्तिसहाऽऽविर्भवशीलानां प्रथमक्षणे करणप्रयोगे एव विशिष्टतया विषयत्वेन

ज्ञानवृत्तेर्विशिष्टतयाऽऽविर्भावात् विशिष्टतयैव साकारत्वात्, निष्प्रकारकत्वस्यैवाऽसंभवात्, अवस्थागुणादिपरिवर्तनेऽपि क्षणमात्रमपि अवैशिष्ट्याऽनवस्थानात् शब्दविशिष्टस्यैव गगनस्य सशब्दाविर्भावात्, एवं वाय्वादीनां तदीयतादात्म्यगुणधर्माद्यपृथक्सिद्धविशिष्टाऽऽविर्भावादेवाऽऽद्यक्षणत एव विशिष्टज्ञानात् स्वप्रकाशज्ञानं विशिष्टार्थविषयकं धारावाहिकमपि समविषयताकमेव तत्र विषयतज्ज्ञानविषयतैक्यात् परप्रकाशाकारत्वाऽभावात् स्वप्रकाशत्वमेव ॥

अथ तर्हि पूर्वप्रकाशकत्वमुत्तरज्ञानानां परप्रकाशकत्वं स्यादिति चेन्न । परत्वस्यैवाऽसिद्धेः, स्वेतरविषयत्वाऽभावेन धारावाहिकं ज्ञानद्रव्यमेकमेवैकविषयताकमिति परतस्त्वापत्त्यभावात् । अद्रव्यवादिनामेव बह्वापत्तिनिधानत्वम्, क्षणिकत्वादिभयव्याप्तत्वम्, अधिकांशाऽऽवापे तु प्रकारताया विशेष्यताया वा समुच्चयाऽतिरेकभावेन ज्ञानेन भासमानत्वे तज्ज्ञानं धारावाहिकजन्यम् अपरमेव स्वव्यूहस्वप्रकाशकम्, एवं त्वनेका ज्ञानधारा व्यूहान्तरात्मिक्य आविर्जायन्ते नैतावता स्वप्रकाशत्वं व्यभिचरति । गुणद्रव्यात्मकज्ञानेन कारणेन गुणद्रव्यात्मकज्ञानान्तरोत्पादनात्, द्रव्यत्वेन गुणे ज्ञानेऽप्यंशानाम् अविरोधात् । प्रतिपक्षिविषयकत्वेनैकविषयतायामपि तावन्मात्रांशस्वप्रकाशत्वेऽविरोधात्, तथैव द्व्यंशत्र्यंशादिव्यूहितज्ञानानां करणव्यापारफलादिस्वरूपाणां न्यूनाधिकविषयताकानां विषयित्वाऽवच्छिन्नानां स्वस्वव्यूहे स्वप्रकाशत्वमेव स्वेनैव स्वस्वरूपवेदनात् पराऽपेक्षाऽभावात् स्वप्रकाशत्वशक्तिमत्त्वेनाऽऽविर्भावात् कदाऽपि क्वापि ज्ञानानां कुत्रापि स्वभासकत्वाऽव्यभिचारात् । निश्चयमूलकसाधनशब्दादीनामपि स्वप्रकाशत्वे सत्येवाऽन्यत्र प्रकाशकत्वव्यातन्वानत्वं प्रामाण्यग्राहकत्वं च व्याप्ताऽपृथक्सिद्धशीलत्वमिति स्वप्रकाशत्वं सध्रीचीनम्, सत्ख्यापनाऽनवमन्तॄणामेव परेषामसतां च वाऽऽधारताकजीवनवज्ज्ञानव्यक्तिरक्षार्थकत्वयत्नारण्यप्रवेशाऽनिष्पारात् ॥

समुच्चयितविशिष्टविषयताकृतसामञ्जस्येऽविशिष्टव्यधिकरणविषयतानां ज्ञानेऽस्थानात् तत्पादाऽवलम्बिततत्तदनुमानादिज्ञानानां स्वस्वरूपाऽप्रकाशकानां सुतरां परतः प्रकाशकत्वस्य तत्र तत्राऽसिद्धत्वात् । नहि ययोः सम्बन्धो न भासते तद्विषयतयोर्निरूपकभावः, पदार्थानामाकांक्षाभास्यसम्बन्धाऽधीनसापेक्षत्वेनाऽन्वयबोधजनकत्वात्, पदार्थाऽन्वयाऽभावे आधाराधेयताविरहे तज्ज्ञानानां नाऽऽधाराऽऽधेयताप्रकारताविशेष्यताविषयकत्वमिति सुतरां व्यधिकरणानामवृत्तिवस्त्वर्थानां च निरूप्यनिरूपकभावानर्हत्वम्, क्लृप्तानामेव वैशिष्ट्यस्वरूपयोग्यतावत्त्वेन यथार्थव्यवहारत्वात् । अन्यथा—"कटचा गच्छति रामात् तिः विसर्गात : सुः पदपूर्वं-प्रत्ययाः चुरयोर्मध्ये तिः सनन्तोत्तरं धातवः" इत्यपि साध्यार्थाः स्युः ॥

अथ रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकं ज्ञानम्,—शुक्तिविषयकं,—शुक्तिविषयकप्रवृत्तिहेतुत्वात्,—शुक्त्यर्थिसमवेतशुक्तिज्ञानवत्' । 'रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकमिदंविशेष्यकं ज्ञानम्,—रजतविषयकम्, रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात्, रजते इदंज्ञानवत्' । 'विवादपदानि पदानि,—स्वस्मारिताऽर्थाऽन्वयप्रतिपादकानि,—आकांक्षासन्निधिमत्पदकदम्बत्वात्,-गामानयेतिपदकदम्बवत्' । 'ज्ञानत्वं,—विशेष्याऽवृत्तिप्रकारवृत्ति, प्रवृत्तिहेतुप्रत्यक्षविशेषगुणवृत्तिधर्मत्वात्, इच्छावत्' । इच्छायाः प्रवृत्तिहेतुत्वम्, व्यधिकरणप्रकारकत्वमपि सम्मतम्, संस्कारसचिवमिन्द्रियं व्यधिकरणप्रकारकं ज्ञानं जनयत्यपि । व्यधिकरणप्रकाराऽवच्छिन्ना या विषयता तन्निरूपकत्वं भ्रमत्वम् । स्वाऽधिकरणाऽवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वं भ्रमत्वम् । अनन्विताऽन्वितज्ञानत्वं भ्रमत्वम् । व्यत्यस्तार्थाऽव्यत्यस्तधीस्त्वं भ्रमत्वम् । स्वभावितार्थनिष्फलकत्वं भ्रमत्वम्' आकारवैपरीत्याऽवगाहिज्ञानत्वं भ्रमत्वम्, गृहीतेष्टाऽर्थाऽनापादकज्ञानत्वं भ्रमत्वम् । आर्थिकशाब्दिकाऽन्यतराऽनुपूर्व्यशाऽलीकाकारज्ञानत्वं भ्रमत्वमिति ॥

अत्राऽवच्छेदकस्याऽन्तवृत्तिधर्मस्य सर्वथाऽन्यत्राऽवच्छेदकत्वाभावात्, अन्यथा सर्वत्राऽवृत्तेरप्यवच्छेदकत्वेऽनतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वस्य स्वरूपाऽवच्छेदकत्वस्य तन्मते एवाऽसंभवात्, एकत्राऽसतो-

रवच्छेदकावच्छेद्ययोरभिमतत्वे शून्यत्वापाते तार्किकत्वमेव विफलं स्यात्, अनिर्वाच्यत्वे वा प्रवेशः स्यात्, विषयाऽसत्त्वे तदवलम्बितधियामसत्त्वे धीविशेषविषयत्वात्मकाऽवच्छेद्यत्वस्याऽप्यसत्त्वमेव स्यात् ॥

अथ स्वाधिकरणाऽवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यताऽनिरूपकत्वं प्रमात्वम् । विशेष्यताविशिष्टप्रकारताशून्यज्ञानत्वं प्रमात्वम् । विशेष्यता वैशिष्ट्यं च-स्वनिरूपिता-स्वाश्रयनिष्ठाऽधिकरणतानिरूपकता-विशिष्टाऽन्यत्वोभयसम्बन्धेन, निरूपकतावैशिष्टचं च-स्वाच्छेदकसम्बन्धावच्छिन्नत्व-स्वाऽसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेनेति चेत् । व्यधिकरणानां ज्ञानेऽप्यसमानाधिकरणानां तत्र निरूपितत्वाद्यलीकत्वेन विना पादस्तम्भात् स्वर्गसेतुमाबद्धं प्रवृत्तानामिवैतेषामनास्थाखण्डितत्वात् । अन्यत्र सत्त्वस्य पुरोवर्त्यादावसत्त्वस्यैव विपरीतवैशिष्ट्याद्यबोधकत्वात् । इदमानुभवेऽनुपकारात् । नहि ज्ञानलक्षणायाऽलीकक्लृप्ततया तत्रोपकारोऽप्यलीक एव । घ्राणनयनाभ्यां समनोभ्याम् वृत्त्या सुरभिचन्दनेत्येकज्ञानाऽनुत्पादकत्वात्, मिथो निरपेक्षकरणानामेकज्ञानजननाऽयोग्यत्वात् । अलौकिकत्वसन्निकर्षत्वैन्द्रियकत्वधर्मजत्वादीनामनवच्छेदकत्वेन तदवच्छेद्यस्य करणत्वाऽभावादेव धूलिपटले धूमप्रमात्वाद्यनुपपत्तेः ॥ ५१७ ॥

**कुक्षीकृत्य विमतानि भिन्ना विप्रतिपत्तयः ।**
**विधौ निषेधे ग्राह्यत्वेऽर्थतो वादोऽत्र दर्शितः ॥५१८॥**

**कुक्षीकृत्येति** अथ "अयं घट" इत्यनुभवः,—घटत्वाऽभाववति घटत्वप्रकारको न,—अघटवृत्ति, प्रकारको न, विशेष्याऽवृत्तिप्रकारको न,—घटत्वप्रकारकत्वे सति घटाऽविशेष्यको न,—घटत्वव्यधिकरणप्रकारावच्छिन्नो न,—घटाऽवृत्तिप्रकारको न वा,—कम्बुग्रीवादिमद्विशेष्यकघटत्वप्रकारकंनिश्चयत्वात्,पटानुभववत्" । 'अयं पृथिवीत्यनुभवः,—पृथिवीत्वाऽभाववति पृथिवीत्वप्रकारको न,—अपृथिवीवृत्तिप्रकारको न,—विशेष्याऽवृत्तिप्रकारको न,—पृथिवीत्वप्रकारकत्वे सति पृथिव्यविशेष्यको न,—पृथिवीत्वव्यधिकरणप्रकारावच्छिन्नो न,—पृथिव्यवृत्तिप्रकारको न वा,—गन्धवद्विशेष्यकपृथिवीत्वप्रकारकनिश्चयत्वादिति व्यतिरेकेण सिद्धिः । पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादिकम् अर्थात् सिद्धयति ॥

सविषयतापक्षेऽपि—

'अयं पृथिवीत्वेनाऽनुभवः,-अपृथिवीवृत्तिपृथिवीत्वप्रकारकविषयताको न,-पृथिव्यवृत्तिपृथिवीत्वप्रकारकविषयताको न,-पृथिवीत्वाऽसमानाधिकरणपृथिवीत्वप्रकारकविषयताको न,-विषयताश्रयाऽवृत्तिप्रकारको न वा,-इति साध्यम्, पृथिवीत्वसमानाधिकरणपृथिवीत्वप्रकारकविषयताकत्वादिकम् अर्थात् सिद्धयति ॥ एवम्—पृथिवीत्वाऽसमानाधिकरणप्रकारावच्छिन्नविषयताकत्वाऽभावः साध्यः,-गन्धाऽसमानाधिकरणाऽप्रकारकगन्धसमानाधिकरणप्रकारकविषयताप्रतियोगिज्ञानत्वात्' । प्रकारकत्वविवक्षणेन संशयव्यवच्छेदः, निश्चयत्वं वा विवक्षितम् ॥ 'शीता पृथिवीत्यनुभवः,-पृथिवीत्वांऽशे पृथिव्यंशे वा प्रमा ॥ भ्रमरूपे तु-'पाथःपृथिव्योरिमे पृथिव्यौ' इतिप्रमाभ्रमरूपे समूहालम्बनेंऽशे प्रमात्वम्, विशेष्यभेदेन विषयताभेदाद् विशेष्यस्येव विशेषणस्याऽपि भेदेन विषयताभेदात् निर्वाहेऽपि, न प्रकारभेदेन विषयताभेदनिर्वाहः, मानाऽभावात् । 'इयं पृथिवीत्यनुभवः,-पृथिवीत्वसमानाधिकरणधर्मावच्छिन्नपृथिवीविशेष्यकविषयताकः, पृथिवीत्वव्यधिकरणधर्मानवच्छिन्नपृथिवीविशेष्यकविषयताकः, पृथिव्यवृत्तिधर्मानवच्छिन्नपृथिवीविशेष्यकविषयताको वा, गन्धाऽसमानाधिकरणधर्माऽप्रकारकविषयताप्रतियोगिज्ञानत्वात्, अगन्धवदवृत्तिपृथिवीत्वप्रकारकविषयताकत्वात्, गन्धसमानाधिकरणविषयताप्रतियोगिज्ञानत्वात् वा, तत्र साध्याऽप्रसिद्धेः, अर्थादेव तत् सिद्धयति ॥ यत्प्रकारव्याप्यतया यद्गन्धस्नेहसमर्थप्रवृत्तिजनकत्वकरचरणादिकमवगतं तद्धि तत्पकारकज्ञानत्वमेव प्रामाण्ये लिङ्गम् । वह्नित्वप्रकारकज्ञानाऽनुव्यवसाये सति तत्र विषये दाहसामर्थ्यज्ञानानन्तरं स्मृत्युपनीते वह्निव्यवसाये वह्न्युपनीतदाहसमर्थविषयकत्वम् ॥ एवं जलपृथिव्योः स्मृत्युपनीतयोः ज्ञानोपनीतस्नेहगन्धवद्विषयकत्वं मनसा परिच्छिद्यते ।

गन्धादिमत्त्वपरिच्छेदानन्तरं गन्धादिमति पृथिवीत्वानुभवो भवति। स्मृत्युपनीते धूमादौ व्याप्तिपरिच्छेदवत् चक्षुषा चन्दने सौरभज्ञानवच्च ॥

अथ तर्हि चक्षुषा गन्धवति पृथिवीत्वोपनयानन्तरम् उपनीते तत्र पृथिवीत्ववति पृथिवीत्वप्रकारकत्वं, पृथिव्यवृत्तिप्रकाराऽभाववत्त्वं, विशेष्याऽवृत्तिप्रकाराऽभाववत्त्वं,-प्रामाण्यं मनसैव परिच्छिद्यते, स्वत एव स प्रामाण्यग्रहः। इति चेन्न। ज्ञानान्तरोपस्थापितज्ञानवृत्तिप्रामाण्यग्रहे परतस्त्वाऽनपायात् ॥ तद्ग्रहमन्तरा तद्घटितप्रामाण्यग्रहाऽयोगात्, तत्तत्प्रामाण्यधाराघटितप्रामाण्यप्रवाहग्राहित्वे व्यवसायस्य विषयाऽपर्यवसानमेव स्यात्। तथा चाऽवश्यं कस्यचित्प्रामाण्यस्य परतस्त्वं स्यात् ॥

ननु नाऽन्यगृहीतप्रामाण्यं ज्ञानं परप्रामाण्यनिश्चयरूपम्, अनवस्थानात्, नापि स्वज्ञायमानप्रामाण्यं, स्वतःप्रामाण्यग्रहापत्तेः। अतोऽगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यनिश्चयरूपम्, आस्थेयम्, तथा च व्यवसायोऽप्यगृहीतप्रामाण्य एव स्वविषयं निश्चाययेत्, किंविषयनिश्चयार्थं तत्प्रामाण्यनिश्चयेनेति चेन्न। व्यवसायस्याऽप्रामाण्यदर्शनात् न तन्मात्राद् अर्थनिश्चयः, तर्हि प्रामाण्यानुमितेरपि अप्रामाण्यदर्शनान्न ततोऽपि प्रामाण्यनिश्चय इति चेन्न। यत्राऽप्रामाण्यशंका नास्ति तत्र करतलामलकज्ञाने व्यवसाय एवाऽर्थनिश्चयः, निष्कम्पा तत्र प्रवृत्तिः। अनभ्यासदशायां तु प्रामाण्यसंशयोऽर्थनिश्चयं परिभूयाऽर्थसंशयः प्रामाण्यनिश्चयाऽधीनज्ञानात् अर्थं निश्चित्य निष्कम्पं प्रवर्तेत। अत एव-अगृहीतप्रामाण्यमेव ज्ञानं परप्रामाण्यं निश्चाययेत् यत्र प्रामाण्यज्ञानेऽप्रामाण्यशंकया प्रामाण्यसंशयस्तत्र प्रामाण्यज्ञाने प्रामाण्यनिश्चयादेव प्रामाण्यनिश्चयः ॥

अथ—प्रामाण्यज्ञानम् अप्रामाण्यशंकाप्रतिबन्धद्वारा स्वार्थनिश्चयरूपं वा ज्ञानं निष्कम्पप्रवृत्तावुपयुज्यते, अतो न निष्फलम्। धूमवति वह्निज्ञानम् अनुमितिज्ञानं प्रामाण्यनियतम्, अनुव्यवसाये तूपनीतं, विशेषदर्शनान्न तत्राऽप्रामाण्यशंका। प्रामाण्यनिश्चयादेवाऽप्रामाण्यशंकाविरहात् अर्थं निश्चित्य निष्कम्पव्यवहारः। परतः पक्षे न क्वचिदपि प्रामाण्यग्रहः प्रवर्तकः। न ह्यजानन् जानामीति प्रत्येति, न वा घटज्ञाने पटं संवेद्मीति च। भ्रमेऽप्यनुव्यवसायेन रजतत्वादिकं व्यवसायप्रकारत्वेनोल्लिख्यते तथैव ॥ अभ्यासदशायां झटितिनिष्कम्पप्रचुरतरप्रवृत्तिदर्शनात् प्रामाण्यं स्वतोगृह्यते, अन्यत्र तु परत इति चेन्नैवम्। विशेष्यनिष्ठात्यन्ताभावप्रतियोगिप्रकाराऽनवच्छिन्नत्वादिकं प्रामाण्यं स्वतोगृहीतुमशक्यमितिपरत एव गृह्यते, झटितिप्रवृत्तिस्तु करचरणादिमति शरीरज्ञानत्वादेर्विशेषस्याऽनुव्यवसायेन ग्रहात् अप्रामाण्यशंकाशून्यात् व्यवसायादेव, न तु प्रामाण्यं प्रवर्तकम्। झटितिसमवधानं तु स्वकारणाधीनम्, नहि पिपासूनां झटिति प्रचुरतरा समर्था च प्रवृत्तिरम्भस्येव। पिपासोपशमनशक्तिर्जलस्येति सा प्रत्यक्षा। प्रवृत्तिस्तु यावदिष्टसमाप्तिस्तावती, अन्यथासातत्यप्रसंगात् ॥

अथ ज्ञानत्वं विशेष्याऽवृत्त्यप्रकारकवृत्तिर्न वा, विधिः सर्वयथार्थवादिनाम्। निषेधः क्वचिदप्ययथार्थवादिनाम् ॥ इष्टार्थिप्रवर्तकशुक्तिरजतज्ञानं तदन्यतराऽविषयकं न वा, विधिर्विशिष्टयथार्थवादिनाम्, निषेधोऽयथार्थविशिष्टवादिनाम् ॥ इष्टार्थिप्रवर्तकपुरोवर्तिविशेष्यकज्ञानं केवलरजतत्वाऽप्रकारकं न वा, विधिर्विशिष्टवादिनाम्, निषेधोऽयथार्थवादिनाम् ॥

समुच्चयितज्ञानानां समूहालम्बनानाम् अपृथक्सिद्धतादात्म्याऽवयविस्वरूपणां मिश्रितावयविज्ञानानां च तत्तद्धर्मान्वितधर्मिगोचरत्वेन सर्वथा याथार्थ्येन प्रमात्वमव्याहतम्। तत्तन्निषेधवत्त्वमात्रं सर्वत्र तल्लक्ष्येऽप्यव्याप्तमिति भवत्यसिद्धम् ॥ द्विस्वभावत्वादिप्रसंगेनाऽनवस्थाध्रौव्यात् परतस्त्वं कथञ्चिदप्यनास्थसंभवम् ॥

अथ नित्यचिदतिरिक्तस्य सर्वस्यापि अनिर्वाच्यताविश्रान्तस्य ब्रह्मभिन्नज्ञानानामप्यनिर्वाच्यत्वाऽवाप्तस्य विषयतदज्ञानानामप्यनिर्वाच्यत्वपर्यवसन्नस्य व्यावहारिकाऽवलम्बनवतः आभासेऽप्याभासमात्रजिघृक्षुः प्रतिभासप्रतिप्रतिभासपर्यवसन्नस्याऽद्वैतिनः अनिर्वचनीयख्यापनमात्रचिन्तकस्य सदोषचिन्तकस्यापि सदोषतयाऽपि किम्विधत्वाकांक्षाप्रशमनार्थं निर्दोषमिवाऽनुसरणमासाद्य ख्यातिस्वरूपं दर्शनीयं भवति—

प्रामाण्यं त्रिसदन्यथानुपपत्त्यगोचर (सर्वसत्) ज्ञानविषयं न वा ?, विधिर्विशिष्टवादिनाम्।

निषेधोऽनिर्वचनीयवादिनाम् , शुक्तिरजते प्रसिद्धिः । स्वस्वप्रक्रियया तथात्वेन परनिरासपूर्वकस्वस्थापनायां विशेषे स्वाप्ने शुक्तिरजते साध्यभावमादाय न सिद्धसाधनाद्यापत्तिः, श्रुतिसिद्धस्वाप्नपदार्थगता नाऽसिद्ध्यादयश्च, नान्तरीयकविरोधबाधसत्प्रतिपक्षाद्यास्तु व्यापकनिवृत्त्या निवर्तन्ते, विप्रतिपत्तेर्भावाऽभावार्थस्वरूपतया पृथक्कृत्यैवाऽनैकान्तिकत्वाद्या निवारयितव्याः, पञ्चावयवलक्षणांऽगांऽगभूतसंशयाद्यास्तु साधकव्यापाराद्युपसृष्टा न स्वरूपघातकाः ।

शुक्तिरजतज्ञानं मुख्यविशेष्यातिरिक्तांऽशे त्रिनिरुक्तिविषयतावद्विषयकं न वा ?, विधिर्विशिष्टवादिनाम्, निषेधोऽद्वैतिनाम्, समुच्चयितज्ञानवादिनामस्ति हि त्रिविधनिरुक्तिविषयकत्वम्, अद्वैतिनां तु अनिर्वाच्यत्वाख्यचतुर्थीविषयताकत्वं पूर्वभावाऽनवच्छिन्नविषयताकत्वमिति । त्रिप्रकारकनिरुक्तिविषयतावत्त्वाभावेनाऽज्ञाने तद्विषयकत्वाऽभावत्वं साध्यमनिर्वाच्यत्वं भवत्यभीष्टमद्वैतिनाम् , विशेष्यांऽशेदमादेरप्यनिर्वाच्यत्वांगीकारात् ॥

सांसारिकव्यक्त्यज्ञानविषयतावच्छेदकत्वं सांसारिकव्यक्तिविसम्वादिप्रवृत्तिजनकज्ञानीयविषयिताकमुख्यविशेष्यत्वाऽनिरूपितप्रकारताश्रयाऽवृत्त्यत्यन्ताऽभावप्रतियोगि न वेति । शुक्त्यवयवमिश्रितराजताऽवयवजन्यविरलरजतं ज्ञानात्पूर्वमति तत्र वर्ततेऽतो रजतत्वं समुच्चयितप्रवर्तकज्ञानीयरजतविशेष्यताऽनिरूपितप्रकारताश्रये रजतेऽवृत्तिरजतत्वात्यन्ताभावस्तत्प्रतियोगित्वस्य सत्त्वे न विधिर्विशिष्टवादिनाम् , प्रतीतिमात्रभासमानरजतं नास्ति ज्ञानात्प्रागिति तदवच्छेदकत्वं तत्राऽवृत्त्यभावप्रतियोगित्वाऽभाववन्मिथ्येति निषेधकोटिरद्वैतिनामिति । अत्र ख्यायमानानां चिदाभासेश्वराभासजीवाभासानामध्यासानां भूतानां भविष्याणां चापि पक्षीकरणत्वेन विषयतानामेवाऽलाभेन सर्वथाऽसिद्धेः, सर्वेषां ख्यापनानां स्वरूपभेदेन भिन्नानामेकावच्छेदकत्वाऽभावेन विमतसम्विदां विमतत्वेनैव स्वरूपहानेर्विकल्पवृत्तिगोचरत्वापातेन यथाकथञ्चित्स्वहठेन स्वीकृतावपि सिद्ध्यसिद्धिभ्यां व्याहत्या स्वरूपाऽनवस्थानादेव तत्राऽऽनुमानिकप्रकाराऽप्रवृत्तेः, प्रत्यक्षादिना वा निष्प्रयोजनत्वात् , विरुद्धस्मृतिरूपाणां वा तत्तदंशे विरोधादेव प्रतिबध्यत्वप्राप्त्या पक्षसाध्यादिलाभस्यैव व्याहतेः सामान्यस्थापनानां विशेषतायां प्रविष्टत्वादेव मिथोऽङ्गविघटनातः एव स्वरूपनिरासात् । भ्रान्त्याभासादिमूलाया सद्भिन्नत्वेऽसत्त्वमसद्भिन्नत्वे सत्त्वमुभभिन्नत्वेऽर्थोपाख्याविधुरत्वमिति वा नान्तरीयकतत्त्वे सांकर्यं विरुद्धवाच्यत्वं निषेधवाच्यत्वं वाऽभाववत् अनिर्वचनीयत्वमिति मायाऽविद्यादिपदानां सत्पदार्थवाचकत्वं सर्वथा समायातं भवति, अन्यथा तन्मते शुद्धसद्ब्रह्मविषयत्वं कार्यावच्छिन्नब्रह्मविषयत्वमेवाऽनुपपन्नं स्यात्, संसारपूर्वमप्यस्तित्वेन द्वयोराद्यक्षणसम्बन्धविरहेण तत्तद्वस्त्वन्तरपूर्वकत्वस्याऽनादिनिवर्तकत्वस्याऽनादिप्रध्वंसादेश्च तत्स्वरूपकुठारधातात्मकत्वेनाऽऽलम्वनमात्रशेषत्वं गगननृत्यायते, साक्षिणोऽज्ञानाऽविरोधित्वे सत्तया स्वीकृतिरर्थादायातीति तत्र प्रकाशकत्वं विशिष्टवादिनामेव सत्सु सत्समुच्चयख्यापनं साध्यतेऽतोऽर्थान्तरत्वं मिथ्यात्ववादिनां सम्पद्यते ॥

प्रमाणप्रामाण्यं साक्षिचैतन्यविषयतावन्न वा ?, विधिः अशून्यत्ववादिनाम्, निषेधः शून्यत्ववादिनाम्, मनोवृत्तिस्तु मिथ्यावादिनां चिन्निष्ठाऽऽवृत्तिभञ्जिका न भवति, आवृतिरूपत्वात्, शुक्तिरजतस्थलेऽपि विरलरजतस्य शुक्तिसमकालीनत्वेन पूर्वत एव वर्तमानतया चिन्निष्ठतदज्ञानाऽभावान्न प्रीतीतिकज्ञानसत्ताकाऽनावृत्तत्वादिव्यवहारभाक्त्वम्, तथा चाऽज्ञानविषयतावच्छेदकत्वाद्यभावात् तत्र च यथार्थया मानसवृत्तेर्व्याप्ततया निवर्तकत्वाऽनुपपत्तिः, सत्यस्याऽनिवर्त्यत्वात् , निवर्त्यत्वेऽपि स्वतःप्रकाशत्वाऽहानेः, स्वतःप्रामाण्येऽबाधात्, शुक्तिरजतस्य प्रतीतिपरिणामविवर्त्तादिरूपत्वाऽभावात्, चिरन्तनशुक्तौ येषां केषाञ्चिदपि व्यवस्थितरजतप्रतीतेर्जायमानत्वेन स्वर्णखनिरजताऽणुखन्यादौ सर्वदा स्वर्णरजतलब्धिप्रवृत्तिर्भूपतिसत्ताधीशानां स्वायत्तीकृतनियमनपूर्विका निरीक्षणसातत्यान्विता रक्षणार्थंदूताऽधीनीकृता एव प्रातीतिकत्वं निरासयति विरलस्वर्णरूप्यादि साधयति, अव्यवहार्यमपि व्यापारीकृतं संस्कृतं निष्पादितं निर्मलं तदुत्पन्नं स्वर्णं रूप्यं

भूषार्हं भवति, तत एवाऽवस्था भेद एव द्रव्ये तत्र भवति, न तु प्रातीतिकत्वादिस्वरूपम्, एवं च भूषाऽन्यथाऽनुपपत्त्या प्राक्सत्त्वं द्रव्यमयं केनाऽन्यथाकारितं भवेत्, ततः सत एवाऽक्षग्राह्यत्वं साक्षिग्राह्यत्वं चाऽनावृत्तप्रकाशकत्वं साक्षिप्रकाशवत्त्वमिति स्वप्रकाशत्वं तज्ज्ञाने ज्ञानिज्ञानैक्यप्रयुक्तं सर्वथा विद्यमानं तदानीं नाऽन्यथयितुं केनापि शक्यम्, शुक्तिरजताऽधीनप्रतीतेर्जायमानत्वात्, न तु प्रतीत्यधीनरजतजातत्वमिति, एवं च बाह्यानां पञ्चीकरणादियर्थानां मिश्रीकरणादियथार्थानामेव ज्ञानेन तद्विषयिणा प्रकाश्यत्वात् साक्षिज्ञानं ज्ञातृज्ञानतादात्म्यमेव स्वप्रकाशं स्वयं सिद्धयति, अयोगिनां वृत्तयो विषयाकारेण परिणमन्ते, योगिनां तु वृत्त्याकारेण संकल्पाकारेण विषया विपरिवर्तन्ते इति योगभाष्ये व्यासमुनिना प्रतिपादितत्वात्, तथा च सत्यः पदार्थः सत्या वृत्तिः सत्याऽवस्था सत्यं सूक्ष्मं सत्यं कारणावस्थं सत्यं कार्यावस्थं ग्राहकमपि विषयसत्यत्वेन स्वप्रकाशं सत्यं चेति सर्वज्ञानानि स्वग्राह्याणि सत्यानि स्वप्रकाशत्वात्, नाऽऽत्माश्रयादिः अशून्यत्वात्, सततपदार्थतया प्रत्यक्षात् प्रमाणगोचरत्वाच्च ॥

साक्षी परमात्मा नित्यप्रत्यक्षदर्शी सर्वमप्यद्वारीकृत्यैव पश्यति, अतोऽन्याऽपेक्षाऽनवस्थाद्या न सन्ति, दिव्याऽदिव्ययावद्वस्तुगोचरकृत्तसाक्षिणः सर्वदा साक्षात्कारस्वभावादेव सार्वज्ञ्यं श्रुतिर्वदति 'यः सर्वज्ञः सर्वविदि'ति । विशिष्टसाक्षिवृत्तिम् अनवलम्ब्य जीवात्मा शरीरी स्वकरणापेक्षमात्रव्यापारवान् अविशिष्टगृहीता भ्रान्त इति गण्यते, शुक्तिविशिष्टरजतग्राही शुद्धसमुच्चितरजतग्राही स्याच्चेत् अभ्रान्तः सः, सान्वयग्राहकस्य प्रामाणिकग्राहकतया सर्वसम्मतत्वात्, निरन्वयगृहीतुरेव प्रामाण्यांशे भ्रान्ततयाख्यापनात्, शुक्तिरजतस्य खनिरजोरजतस्य सार्वदिकत्वादेव युगपदविद्या-तद्रजतोत्पत्तेरनवकाशात् संस्कारजन्यस्मृतेरप्यबाह्यतया तदस्तित्वाऽऽस्थापकत्वात् अधिष्ठानावच्छेदकताया अपि अनिरिक्तवृत्तितया स्वीकाराऽनर्हत्वात् तत्सम्प्रयोगस्योपेक्षणीयत्वात्, भ्रमस्यैवाऽदृष्टचरत्वेन निहारतुषाराऽभ्रमेघवर्षादिविविधाऽवस्थजलवत् सिद्धत्वेन तत्तत्संस्काराणां तत्तत्स्मरणदर्शनार्थाऽर्थकानां प्रत्यभिज्ञानकारणानां वा भ्रान्त्याधायकतयाऽनङ्गीकारात्, तदर्थं दोषकल्पनाया अपि कल्पकस्याऽदुष्टत्वघातनात्, ईश्वरयोगिभगवदवतारज्ञानानां याथार्थ्यात् प्रामाण्यात् सुसंकलितार्थज्ञानानां विशकलितार्थज्ञानानामपि योग्यताऽयोग्यताऽन्वयगोचराणामपि ऐकान्तिकत्वाऽनैकान्तिकत्वसंसर्गसहितानां नास्ति क्वचिदपि भावसंसर्गेण वाऽभावसंसर्गेण निरन्वितत्वं, येन भ्रान्तिरुद्भवेत्, सर्वार्थसत्यत्वप्रमोषिणां व्यावहारिकसत्यत्वभेदंजुषत्वे जनिमृतिशालिनां संसारप्रवाहस्याऽनाद्यनन्ततया सत्यत्वमात्रस्वीकारेऽपि नहि अदिव्यसृष्टिं विहाय दिव्यतत्स्थितिजिगमिषूणां गन्तॄणां गतत्वे वा प्रतिबन्धकतां भजते व्यावहारिकत्वम्, येन तत् सत्यत्वे औपाधिकमिवाऽऽसज्जेत, अदिव्यकर्मभोक्त्रवस्थोत्तीर्णस्य दिव्याऽऽनन्दाऽवस्थाऽन्वितस्य किंनाम स्याद्वेदान्तोपासकस्य ब्रह्मशरण्यकस्य विशिष्टमुक्त्यवस्थस्य व्यवहाराऽव्यवहारभेदपाटच्चरेण ॥

अध्यासाः विशिष्टचित्साक्षिचैतन्यसाक्षात्कृताऽऽकाराऽवलम्बना न वा ?, विधिर्विशिष्टवादिनाम्, निषेधोऽविशिष्टवादिनाम् । ज्ञानाऽध्यासानामर्थाऽध्यासानां प्रकारविशेष्यसंसर्गाध्यासानाम् आगन्तुकव्यधिकरणधर्मधर्म्यध्यासानां ज्ञानाऽज्ञानतदुभयाऽध्यासानां चिदचित्तदुभयाध्यासानां मायाऽविद्याऽन्तःकरणाऽध्यासानां व्यापारकरणविषयाऽध्यासानां चापि . फलव्यापारकरणतयाऽनध्यासरूपतयाऽङ्गीकारेण व्यवहाराऽन्यथाऽनुपपत्त्या तदध्यस्तब्रह्मविवर्तादिगलपाशवदानेन अज्ञानविशिष्टतया नित्येऽप्यध्यासाऽऽधायकत्वेन विशिष्टवादिमतीयनित्यप्रत्यक्षदर्शिसाक्षिदृष्टसर्वयथावदाकाराऽवलम्बनत्वाभावदत्तयाऽध्यासानां सर्वथैव व्यावहारिकप्रामाण्यस्याऽपि व्याघातात् । सदा सद्धानवादिनां तदालम्बने सत्समुच्चितख्यापने च सत्तयाऽनाद्यनन्तत्वे विशिष्टशाश्वतत्वेऽक्षतेः, विशिष्टाऽऽकारेणाऽनाद्यज्ञानोत्पत्त्यनुधावनं त्वविशिष्टवादिनां फल्गुभानायते ॥

शुक्तिरजतेऽपि सत्यविरलरजतत्वेन तत्र नूतनरजततत्तादात्म्यतदुभयविषयत्वाद्युत्पत्तिवादिनां कोऽर्थसारो विरलरजतातिरेकेण मतवैभवं विना च । कल्पितं तु कल्पितमेव न वस्तुस्थितिमनुरुन्ध्यात्, अपरोक्षानुभवस्याऽपि तस्य मिथ्यात्वेन तदनुनर्त-

नमपि नर्तनवर्तनमेव ॥ शुक्तौ विरलावयवराजतद्रव्यसत्त्वेन चाक्षुषराजतोत्पत्तेरभावादेव तत्र बाधाऽभावनिष्ठकारणताकल्पनायाः फल्गुत्वात् । साक्षिभास्यस्य निर्णयादेव चक्षुरादिद्वारा तृतीयक्षणवृत्तिचाक्षुषादिविषयताकल्पनं कुकल्पनमेवेति अधिष्ठानतदात्मकाऽवस्थविग्रहणेन भ्रान्तेरेवाऽभावात् नूतनचाक्षुषरजतादेरभावात् । शंखे नास्ति पीतिमा, वृत्तौ गोलकमिश्रा पीतिमा यथार्था, न तया श्वेतः शंखः पिशंगीक्रियते, विभिन्नकाचोपनेत्ररूपैर्वस्तूनां तथारूपवत्त्वं नास्त्येव विषयभेदादेव ज्ञातयाथार्थ्यान्न शंखः पीत इत्येकं ज्ञानं, पीतश्चाक्षुषगोलकः, शंखः श्वेत एवेति तत्र भानेऽविरोधात्, पदार्थज्ञप्त्यभावे याथार्थ्यं न हीयतेऽयाथार्थ्यं नोत्पद्यते येन यथार्थगोचरज्ञप्तीनां तथाविधसांकर्याऽवकाशः स्यात् । नहि पुमान् स्वस्वप्ने स्वं प्रमदां पश्यति, नहि शुक्तौ उष्ट्रं पश्यति, नहि मरुमरीचिषु विद्युतः पश्यति, नहि शिलायां सूर्यं विन्दते, विषयानुसारिप्रतीतिमतां नहि प्रतीत्यनुसारविषयवत्तानियमः प्रातीतिकसृष्टिनियमोऽपि स्वस्य सृष्ट्यकारणत्वात् । भवति वा स्वल्पगांगजलेन द्रोणीजलमपि गांगं, भवति च स्वल्पमदिरया गांगं वार्यपि मादिरकम् , अयं शुद्धिविवेको दृश्यविवेकाद्भिन्नः ॥

मीमांसकानाम् अपूर्वं वेदान्तिनामध्यासो नैयायिकानां वैयधिकरण्यावच्छिन्नत्वं सांख्यानां प्राक्सत्त्वं सांवृतिकानां शून्यत्वमित्येते प्रमाणभावमुपगतां अपि तदितरसिद्धान्तिनामप्रामाणिका न प्रामाण्यपक्षस्पर्शगन्धास्तथापि तत्र तत्र कुक्षीक्रियन्ते, नैतावताऽधिष्ठानं निह्नवीकृत्याऽऽध्यासिकं प्रातिभासिकं प्रतीतिकं वोपादानं तत्र सर्वसम्मतम् , साक्षिसम्मतावन्यसम्मतीनां प्रमाणाऽनवरोहात्, साक्षी च प्रत्यक्षवेत्ता विशिष्टमेव विषयीकरोति ॥ माया नित्या ब्रह्माश्रयत्वात्, मायिकानि सन्ति सद्विशिष्टत्वात्, सर्वं विशिष्टमेकम् एकमेवाऽद्वितीयमिति श्रुतेः । इति प्रतिप्रयोगाणां संभवात्,नित्यानामप्येकत्वे विशिष्टैक्ये पर्यवसानात्, नानाप्रकारशरीराणामेकस्मिन् ब्रह्मणि वैशिष्यसंसर्गेण विशिष्टब्रह्माऽद्वैतत्वात् ॥

अथ—तद्विज्ञानप्रामाण्यं—साम्वृतिकक्षणिकसहोपलम्भिताऽऽकारतादात्म्यकेतराऽग्राह्यं न वा ?, विधिरसन्निरूपाख्यवादिनाम् , निषेधः स्थिरतावादिनाम् । तादात्म्यकं सांवृतं सत्त्वम् , असत्यप्यर्थेऽर्थक्रियाकारित्वात्,असतामभावानां संवृत्या कृतभावानां कर्मसंवृत्या निर्मितसंसाराणां सर्वथाऽऽदौ मध्येऽन्ते चैकस्मिन्नेव शून्यत्वमापन्नानां निरूपाख्यनिबन्धनानां क्षणिकमात्रभावाऽभावादिसम्पत्तिस्वरूपाणां सहोपलब्धज्ञानज्ञेयज्ञातृविषयत्वादिसमूहितपिण्डानां तत्र क्षणे तत्प्राप्यं तत्प्रामाण्यं स्वग्राह्यं क्षणान्तरेनाशात्परतोऽग्राह्यं पूर्वाऽनवस्थितेरविषयत्वेन गतेऽसत्प्रामाण्यं वर्तमान्ने सत्प्रामाण्यमपि अभावात्मकज्ञानप्रामाण्यं स्वग्राह्यं भावात्मकं केवलं प्रामाण्यं तु प्रतियोगिप्रामाण्यं भावाऽभावाद्यात्मकं भंगभरं प्रामाण्यम् अभंगभरं त्वप्रामाण्यमिति स्वत एव स्वतादात्म्यकस्वग्रहसमर्थं निरालम्बनमपि साऽऽलम्बनतयाऽनूभूयतेऽभावाऽऽलम्बनं वा, सान्वितसहोत्पन्नसज्ज्ञानसुतादात्म्यं प्रमाणं स्वग्रहगृह्यम् , अनन्वितं तु सहोत्पन्नं सज्ञानं सप्रचयं चाऽप्यप्रमाणं स्वाऽन्वयवैधुर्यं सन्निरूपाख्यं निर्णीयते, सोयं सर्वाऽसत्ख्यातिरसत्संसर्गख्यातिरभावाऽऽलम्बना प्रागभावध्वंसमध्यैकक्षणमात्रप्रकाशा भवति, एतन्निश्चयः सांवृतिकः एव स्वक्षणग्रहणाऽऽत्मकः स्वात्मकः स्वोत्तरधाराऽऽहितः क्षणीयक्षणान्तरीयस्वात्मकः कर्मठसंस्कारतन्मात्राऽवलम्बनस्तत्तत्प्रामाण्याऽप्रामाण्यप्रसोता व्यवहारविश्वासभूमिरिति ॥

अत्र क्षणिकविज्ञानप्रामाण्यं तत्क्षणिकसंवृतिज्ञानीयक्षणोपलम्भिताऽऽकृतिकक्षणिकरजतक्षणिकशुक्तिरजततदात्मकं तेन सान्वयेन ग्राह्यम् , तदितरत् सान्वयज्ञानेतरत् यत् तत्क्षणीयाऽनन्वितं निरालम्बनम् अन्यविषयं वा सालम्बनं स्मरणं वा सहोपलम्भगोचरं तत्तदंशमुक्तमपि स्वमतीयं तेन अग्राह्यम् , विशिष्टमते द्वित्रक्षणस्थायिविशिष्टसमुच्चयितसाक्षिज्ञानतदात्मकात्मीयसत्स्वरूपज्ञानं स्वप्रकाशम् इतरत्, तत्तन्मते तदग्राह्यत्वाऽभाववत्, अर्थात् स्वप्रकाशतज्ज्ञानग्राह्यमिति सिद्ध्यति ॥

भवतु नाम तथा, किन्तु यद्यभावः स्यात् प्रलय एव स्यात्, भावश्चेत्प्रलयः, अभावो न व्यवहृतः स्यात्, प्रलये वा निरालम्बनेऽप्रामाण्यं स्यात्,

प्रामाण्येऽप्यप्रामाण्यं स्याद्, विचारसरणिं नाऽधिरोहेत् । अथ क्षणिकोपाधयो न क्रियाविभागाद्याः, ज्ञानान्तरजननशक्तयस्ताः, तत्तद्विलक्षणक्षणिकसंवृत्तयस्तज्ज्ञानव्यक्तयस्तद्ग्राहिकाः, उत्पन्नध्वस्तव्यवहार्योऽभावः, निरूपाख्योऽपि व्यक्त्यन्वयस्वरूपस्तथा च तत्तद्ग्राह्यत्वं तत्र स्वग्राह्यत्वं सूपपद्यते, तद्ग्राहोत्तरमेवाऽन्यग्रहोपसम्पत्तौ तद्ग्राह्यत्वं तेनेति ग्राह्यत्वं सुघटं निरूपाख्या तु भावसन्धिस्वरूपेति । सान्वया सापि ग्रहगोचरा, तत्रापि स्वग्राह्यत्वं सूपपद्यते । तदितराऽग्राह्यत्वं च सूपपद्यते । सर्वस्य पारिभाषिकक्षणिकज्ञानाकारत्वेऽपि प्रकाशाऽभिभावकसांवृतिकविवृतिकजाड्याकारसम्पत्त्यात्मकतादात्म्यलाभेन घटादेरस्वयम्प्रकाशत्वं तदाकारतन्मयतत्तदात्मकाऽनभिभूतज्ञप्तिप्रकाशस्वप्रकाशत्वं त्वव्याहतं भवति सुषुप्तस्वमात्रप्रकाशतावत्, सर्वमपि सुषुप्तं जाड्यमापन्नम् अप्रकाशमपि तदीयज्ञानाकारोऽसुषुप्तः स्वप्रकाश एव स्वतोग्राह्यप्रामाण्यक इति स्वेतराऽग्राह्यत्वाभाववत्प्रामाण्यक इति कुकल्पितोऽपि सुकल्पितः पन्था इति चेत् । न ।

तवैव भङ्गीभिः स्वरूपाकारव्याघातात् द्रव्याऽद्रव्यजीवाऽजीवादितत्त्वानां व्याहतस्वरूपत्वात् तदाश्रितसंवृतिज्ञप्तिनिर्जरबन्धादिव्याहतेरेवाऽऽसञ्जनात् शून्यमात्रे पर्यवसाने भावप्रकाशस्यैवाऽवस्तुत्वे स्वप्रकाशस्य वार्तायां अप्यलब्धस्वरूपत्वे किं ख्यापनादिफल्गुविधिना । सर्वथा प्रत्यक्षगोचराणामपलापाऽशक्यविधानात्, अलीकविषयकाणां शशशृंगान्वयगोचराणाम् अलीकान्वयगोचरत्वमेवाऽलीकमिति तदलीकत्वे प्रामाण्यं चेद् गृहीत्वा तोषंजुषस्तर्हि तोषोऽप्यलीकोऽशास्त्रीयोऽप्रमातृज्ञप्तेरप्यगोचरः सुतरां प्रमातृपथविधुर इति तत एवाऽपरोक्षाऽसंभवः स्वाऽसन्प्रमार्गतोऽच्युतोऽपि च्युत एव स्वरूपतः ।।

असत्तादात्म्यविषयकम् इदं रजतमिति क्षणिकं भंगीगोचरं ज्ञानं,-स्वातिरेकिप्रमित्याकाराऽऽलम्बनताकं न वा ?, असत्संसर्गिणां विधिः । तदन्यस्य निषेधः । असदेव यदि तादात्म्यं तर्हि तदतादात्म्यं सत् स्यात्, हट्टस्थं चेत् सत्, निरूपाख्यता हतैव, अहता चेत्, उपाख्यताविधुरं प्रामाण्यविधुरं स्यात्, यत्प्रामाण्यविधुरं तद् भंगीविधुरम्, भंगीविधुरे तव सर्वान्तर्गते कस्मिँश्चिद् भंग्या अप्रामाण्यं स्यात्, एकैव सप्तभङ्गी स्वरूपेऽप्रामाणिकी असती च नाऽन्यत् स्वस्वभावानुरूपं साधयितुं शक्ता, एवं च सती तदगोचरं सर्वम् अभंगं चाऽक्षणिकं च सत्स्वरूपं सोपाख्यमिति तत्र तज्ज्ञानमपि विषयसंवेदनपरं स्वाकारविशिष्टाकारात्मकसिद्धिः प्राप्नुवत् विशिष्टगोचरं सत्स्वप्रकाशमिति विशिष्टवादिस्वरसं स्यात्, तथा सति तव ख्यापनेनाऽपि किंप्रयोजनम् , सर्वमभावमितिख्यापनस्य सर्वं क्षणिकमिति ख्यापनस्याऽपि क्षणिकान्तर्गतत्वेन साध्याऽविशेषतया निरूपाख्यख्यापनस्य वैतण्डिकतया तत्त्वनिर्णयन्यायबहिर्भावात् ख्यात्यनुसरणस्यापि तुषायमाणत्वात् ।।

अथापि परपद्धतिमनुसरतां शून्यवादिनां ख्यातिप्रकारः-'केवलान्वय्यत्यन्ताऽभावप्रतियोगित्वविशिष्टोत्पत्त्यादिशून्यतादात्म्यविषयताकमिदं रजतमितिज्ञानं व्यासज्ज्यवृत्तिधर्माऽनवच्छिन्नस्वप्रतियोगिताकभेदविशिष्टप्रमेयविषयताकं न वा ?, । विधिरसत्संसर्गवादिनः । निषेधः सत्संसर्गवादिनः ।। किञ्च—इदं रजतमितिज्ञानम् असन्मात्रविषयकं न वा ? । शशशृंगादिज्ञप्तौ विधिः । घटादिज्ञाने निषेधः । अत्र सर्वांऽशेऽसत्त्वमिति सर्वाऽसत्ख्यातिविप्रतिपत्तिः ।। यद्वा—असत्त्वं ज्ञानविषयतासमनियतं न वा ? । अभिधेयत्वादौ विधिः । घटत्वादौ निषेधप्रसिद्धिः । निषेधो निरूपाख्येतरवादिनाम् । विधिर्निरूपाख्यवादिनाम् ।। असद्विषयकभ्रमस्याप्यसत्त्वेनार्थाद् अभ्रमसिद्धौ सद्विज्ञानग्राह्यत्वं प्रामाण्येऽभिपतत् क्षणानुरोधेन स्वविशिष्टस्वप्रामाण्यग्राहकत्वं सिद्ध्यतीति विशिष्टवादितात्पर्यसिद्धिः ।।

अथाऽसत्संसर्गख्यातौ वाचस्पतिः—तद्भाववति तत्प्रकारकत्वं संसर्गांऽशेऽयाथार्थ्याद् अन्यथाख्यातिं स्वीकरोति ।। कुमारिलभट्टस्तु—निरालम्बनं रजतशून्यं भ्रमं स्वीकरोति विकल्पवृत्तिरूपम् ।। आर्हतास्तु—भावाऽभावाद्यात्मकं सदप्यसत् असंसर्गकं भंगायितं बहुधर्माऽधर्मिकभ्रमं भावेऽभावात्मकं स्वीकुर्वन्ति, सत्त्वाच्च क्षणिकत्वाच्चाऽशक्तत्वाच्च शून्यज्ञानं भ्रमः, सति असत्त्वम्, असति सत्त्वम्,

असति वक्तव्यत्वं, सति चाऽवक्तव्यत्वम, वक्तव्येऽवक्तव्यत्वम्, अवक्तव्ये वक्तव्यत्वमित्याद्यान् भ्रमान् भंगन्यायान् स्वीकुर्वन्ति ।। सांख्याः—प्रकृतिपुरुषयोः संयोगं जनकमप्यजनकं बुद्धिस्थं ज्ञानमात्मगतमप्यगतं ज्ञाने विषयाः सन्तोऽपि लीना असन्तः पौरुषेयबोधस्य प्रमात्वेऽपि सन्दिग्धविपरीतचित्तवृत्तेरप्रमात्वेऽसत्संसर्गख्यातिम् अहम्ममतामयीं सदसत्स्वरूपिणीं वा सर्वथा सत्कार्यमयीं सत्ख्यातिं स्वीकुर्वन्ति, कारणकार्योभयाऽवस्थसत्त्वेन ज्ञानस्य सत्त्वादेव प्रामाण्यसत्यत्वं ज्ञानग्राह्यं संसर्गाऽसत्त्वं ज्ञाने विषयनिरूपितम् अप्रामाण्यं भ्रमवृत्तीति स्वीकुर्वन्ति ।। योगाः—योगजधर्मलभ्ये सूक्ष्मव्यवहितादिसाक्षात्कारे सर्वं प्रमा, तत्प्रमात्वं सर्वविषयकज्ञानग्राह्यं,तदितराणामप्रमात्वं जडचेतनयोः अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति स्वीकुर्वन्ति ।। कुमारिलभट्टस्त्वत्र—सदसदात्मकं तत्त्वं विविच्य साकाराऽसत्संसर्गख्यातिं वर्णयति ।। वर्धमानोपाध्यायस्तु—तादात्म्यं जायमानं संसर्गं शुक्तिरजतयोरसन्तं मत्वाऽसत्संसर्गख्यातिं विवृणोति ।। उदयनाचार्यस्तु—अवृत्तिधर्मवत्त्वेन पदार्थयोरनन्वयं विषयीकृत्य विपरीतभानं साऽन्वयं भ्रमं स्वीकरोति ।। विज्ञानभिक्षुस्तु—आत्मैक्यवादेन भिन्नव्यक्त्यान्तरोपाधिकानां भिन्नार्थगोचराणामेकस्मिन् अप्यात्मनि विशेषणसंसर्गविशेष्याणामुपाधिकृतभिन्ननिरूपणानामभेदे भिन्नताख्यातिं भिन्नेऽभिन्नताख्यातिं मत्वा तत उभयात्मिकां सदसत्ख्यातिं निर्णयति ।। मञ्जुषाकारस्तु—सदसन्मिश्रं ज्ञानं तथैव सविषयं भासते, इति सदसत्ख्यातिमातनोति ।।

अथ योगाचारो—विज्ञानतत्तत्सर्वाकारेण प्रथते, यदि ज्ञानं न प्रथते यावत् तावत् पदार्थप्रथा न भवति, व्यापकं विज्ञानं पादार्थिकं व्याप्यविज्ञानग्राह्यं विशेषधीविषयं विशेषधीजनकं च वैज्ञानिकरजतादिविषयकं पादार्थिकगोचरं च कृत्वा धृत्वोद्बोध्य संस्कारं स्मारयित्वा चाऽऽकारं स्मार्तमाकारं रजतं गृह्णाति शुक्तिरजतभानस्थले,इत्येवं यावदभ्यासस्तावत्संस्कृतपादार्थिकस्मार्ताकारान् गृह्णाति सेन्द्रियप्रभासाहाय्यकं भवत् । स्मार्ते रजते स्मार्तं रजतत्वं शुक्तिगतत्वेन भासमानं रजतत्वं ज्ञानवृत्ति न वेति विप्रतिपत्तिः । ज्ञानविषयत्वं ज्ञानत्वे, वृत्तित्वाऽभावो बाह्यत्वे, विधिकोटिः । स्मार्ताऽऽत्मख्यातिः ।।—तत्पुरुषीयतद्भ्रमीयशुक्तिनिष्ठपुरोवर्तित्वावच्छिन्नविशेष्यतानिरूपितप्रकारताश्रयो रजतत्वादिः तत्पुरुषीयतज्ज्ञानतादात्म्यापन्नो न वेति विप्रतिपत्तिः ।।

प्राभाकरस्तु—तत्पुरुषीयशुक्तिविशेष्यकप्रवृत्तिजनकज्ञानविषयरजतत्वं तादृशज्ञानात्मकं न वेति सन्दिहानो धर्मितादात्म्यभ्रमं मनुते । धर्मांशे वा संसर्गांशे वा धर्म्यंशे ज्ञानतादात्म्यं स्मार्तस्याऽऽत्मख्यातिं प्रथयति ।।

अत्र बाह्यशुक्त्यादौ स्मार्तरजतत्वाद्यनुधावनमेव त्वन्येषां बहिर्वृत्त्योपदेशनार्थं न तु वास्तवम् । किं तर्हि ?, आन्तरमेव सर्वमिति । कुतः ?, बाह्यानां ज्ञानाकारत्वेऽपि विकृतस्थितिषु विजातीतेषु पार्थिवतैजसादिषु दृश्येषु जडेषु अदृश्यज्ञानात्मकस्मृत्यादिवर्तमानचैतन्यधारात्मकेषु चाऽत्यन्तविजातीयेषु विसदृशेषु केनाऽप्यंशेनाऽवयवैर्वा जातिधर्मार्वा समानतायाः समभिव्याहारस्याऽभावात्, अभेदतादात्म्याद्यध्यासानुपपत्तिः । किन्तु—बाह्यशक्तिदर्शनं संस्कारोद्बोधकं शुक्तिस्मारकं, शुक्तिस्मृतेः सादृश्येन रजतस्मृतेर्भेदाऽग्रहसहकारित्वेन जायमानायाः शुक्तिस्मृतौ रजतस्मृतेः साजात्वेन सामानाधिकरण्येन समनाभिहारेण शुक्त्यवलम्बनेन शुक्तिभिन्नाऽनवलम्बनेन वृत्तिप्रवाहाऽनवच्छिन्नत्वेन दर्शनस्मृत्यैक्यात्मक एको भ्रमः, संसर्गाऽग्रहेऽपि संसर्गेतरग्रहो द्वितीयो भ्रमः, धर्मधर्म्यादिस्मरणयो—र्भिन्नयोरपि अभेदात्मकग्रहस्तृतीयो भ्रमः इत्येवं सर्वथा आन्तरविषयक एवान्तरभ्रम आत्मख्यातिः ज्ञानाकारसाकारख्यातिः, स्मृतिसांकर्यख्यातिरात्मख्यातिरिति प्रत्येकांऽशेऽसत्त्वम् ।। अए एव—तत्पुरुषीयतत्प्रवृत्तिजनकतज्ज्ञानविषयाणां शुक्तिरजतानां शुक्त्यन्वयरजतान्वयानां शुक्त्यवयवरजताऽवयवानां शुक्तित्वरजतत्वानां शुक्तिस्मृतिरजतस्मृतीनां तत्तत्प्रकारताविशेष्यतानां तत्तदाधाराऽऽधेयाऽनुपरीतविपरीतानां तत्तदभावानां मिथः सांकर्यं न वा ? इतिख्यातिरूपं परिकृष्यते नूतनम् । तत्र स्मृतिसांकर्ये न केषाञ्चिद्वै-

मत्यं, बहिःसांकर्ये तु वैमत्यम्, प्रत्यक्षे तु न्यूनाऽधिकग्रहणे भ्रमः, स्मृतौ न्यूनाधिकग्रहणेऽप्रामाण्यम्। भ्रमप्रयोज्यम् अप्रामाण्यं स्वाश्रयग्राहकसामग्रीग्राह्यम्, स्मार्तम् अप्रामाण्यं तु स्वग्राह्यम्। प्रामाण्यसामान्यं तु सर्वथा प्रमाणज्ञानग्राह्यम्। प्रामाण्यात् प्रमाणमिति न, किन्तु प्रमाणात्प्रामाण्यमिति। अत एवाऽप्रमाणात् अप्रामाण्यम्, तद्ग्रहस्तु विमलज्ञानेन, न त्वाविलज्ञानेन, आविलज्ञानस्याऽज्ञानत्वात् अप्रामाण्यगोचरत्वात्। एतेषां संक्षिपदार्थाऽनङ्गीकारादेव ज्ञानेतरग्राह्यत्वाऽनुपपत्तिः॥ भावानामभावत्वानुधावनम्, आविद्यकमिथ्यात्वानुधावनम्, सर्वक्षणिकाऽनित्यत्वानुधावनम्, सतामप्यसन्निरूपाख्याऽनिर्वाच्यत्वाद्यनुधावनम्, नित्यैकस्य तदितरस्वरूपाद्यनुधावनम्, सगुणसविशेषस्य निर्गुणनिर्विशेषत्वाद्यनुधावनं, चेत्याद्यानि धावनानि तु व्यापकभ्रमरूपाणि कथं तन्नान्तरीयकाऽभ्रमतापादकानि भवेयुः सदा भ्रान्तानां तु भ्रान्तिरेव स्फीतालोका रात्रिरेव दिवा॥

अथ—सदसत्ख्यातिः—वेदान्तिमिथोभेदाः धीखेलनात्मकाः। तत्र—सद्भेदाऽसद्भेदौ किञ्चिन्निष्ठव्यासज्ज्यवृत्तिधर्मानवच्छिन्नात्यन्ताभावप्रतियोगिनौ न वा?, विधौ नागेशाद्याः, निषेधे तदन्ये वेदान्त्याद्याः॥ भेदो हि नित्यप्रतियोगिताको नित्यः एकनित्यब्रह्मपदार्थवादेऽनुपपन्न एव, क्षणिकज्ञानवादे त्रिपदार्थवादेऽनेकनित्यवादे तु सूपपन्नः, भेदो नित्यप्रतियोगिको नित्योऽनित्यप्रतियोगिकोऽनित्यः, भावयोर्विभिन्नजातिगुणव्यापारफलादिमतोर्नैक्यसंभव इति नैक्यभ्रमः, अभावस्य भेदस्य तु भावादिविलक्षणस्य समानस्याऽविपथगस्य सहस्राऽयुतानामभावानामप्येकत्र समावेशार्हस्य सद्भेदस्याऽसद्भेदस्य, तत्रापि बुद्ध्या कल्पितस्य सतोऽसतश्च वैपरीत्येन कल्पितस्यापि च निरुपमशून्यस्य आधेयतात्मकाऽभावस्याऽधिकरणसापेक्षेतरस्य सर्वथा सांकर्ये बाधकाऽभावात् स्याद्भ्रमः रज्जौ सर्पभेदो दण्डभेदः शृंखलाभेदो मूत्ररेखाभेदो वारिरेखाभेदो रंगभेदो वल्लीभेदो वक्रस्तम्बस्थाण्वादिभेदो वेति सन्देहः। भेदा एकाश्रिता न पृथग्ग्राह्याश्च, यावदनुभूतसंस्कारस्मरणानि तावत्कल्पनीया भवन्ति, तत एव सत्त्वाऽसत्त्वाऽनिर्णये तद्भेदाऽनिर्णयादेव सद्भेदाऽसद्भेदानां पक्षत्वादिकं संभवति। तद्वत्—शुक्तिरजतभेदेऽपि तदभेदं विषयीकृत्य गौणीकृत्य च गर्भगतीकृत्य धर्मधर्मिका विप्रतिपत्तिरपि सम्पद्यते रजतत्वविशिष्टं, तादात्म्येन रजतत्वविशिष्टसम्बन्धितया ज्ञायमानसर्वनिष्ठत्रैकालिकसंसर्गाऽभावीयतादात्म्यसम्बन्धावच्छिन्नरजतत्वावच्छिन्नप्रतियोगिताविशिष्टं न वा?, विधिर्वेदान्तिनो रजतत्वेन घटाभावे प्रसिद्धिः॥ रजतत्वं स्वावच्छिन्नत्वेन प्रतीयमानयावन्निष्ठाऽभावीयत्व—स्वावच्छिन्नत्वेत्युभयसम्बन्धेन स्वविशिष्टप्रतियोगितासमानाधिकरणं न वा?॥ शुक्तिरजतभेदज्ञानप्रामाण्यं स्वाश्रयसाकारज्ञानीयप्रतियोगितानिरूपितानुयोगिताविषयकज्ञानग्राह्यं न वा?॥ शुक्तिरजताऽभेदज्ञानाऽप्रामाण्यं स्वाश्रयभानगोचरनत्रर्थप्रतियोगितादात्म्यभेदाऽभावधीगोचरं न वा?। विधिः सदसत्ख्यातिवादिनः। तदितरेषां निषेधः प्रसिद्धिः सत्यभेदज्ञाने॥

मीमांसकाः—साकाराम् आत्मख्यापनाम् अख्यापनामप्याहुः,—रजतं न बाह्यं शुक्तौ, तत्र दर्शनं शुक्तेः, ख्यापनं स्मरणमात्रम्, तदान्तरम्, न बाह्यमतोऽख्यातिरिति। बाह्यं रजतं न ख्यायते॥ इति।

अथ सर्वासां प्रतीतीनां याथार्थ्यमेव, धर्म्यंशे तु नियतं याथार्थ्यम्,पदार्थानुरोधेनाऽवच्छेद्याऽवच्छेदकभावे कारणतानां नियतत्वबलेन धर्मांशे तत्र तत्र याथार्थ्यमेव, अपि तु स्मरणेऽनालम्बिते दर्शनमात्रेऽवलम्बिते शुक्त्यालम्बने भेदाऽग्रहात् रजतालम्बनं रजतत्वेनापि समापतत् धर्मिणि रजतत्वं ग्राहयत् प्रमात्वम् आदेशीकरोति, तदपि भ्रान्तभानम्, अन्यत्तु पश्चात्, आत्मनि ख्यापनं स्मार्तरजतभावादेः, शुक्तौ ख्यापनं भेदाऽग्रहनिबन्धनम् असद्रजतादेः, आन्तरोऽपि भ्रान्तव्यवहारो बहिरान्तरयोरैक्येन कृतोऽपि भ्रान्तभानम् पराचीनमेतत्। व्यधिकरणं दार्शनिकं सत्यं स्मार्तमपि सत्यं, समानाधिकरण्यं भ्रान्तभानम्। तत्राऽन्यान्प्रति प्रयोगः - ज्ञानत्वं, विशिष्टज्ञानत्वं,—तद्वति तत्प्रकारकज्ञानत्वम्, तद्वति तद्वैशिष्ट्यज्ञानत्वं, वा प्रामाण्यं, स्वतोग्राह्यं न वा?।

विषयनिरूप्यं हि ज्ञानम्, अतो ज्ञानवित्तिवेद्यो विषयः, व्यवसाये भासमाने धर्मधर्मिवत्तत्तद्वैशिष्ट्यमपि विषयः, सत्यस्थले पुरोवर्ति रजतविषयता, शुक्तिरजतस्थले रजतत्वविशिष्टपुरोवर्तिविषयता, प्राकृतिकं हि ज्ञाननिरूपणं स्वप्रकाशमर्यादया तद्विषयम् अविषयीकृत्य असम्भवद्विषयान्तरवद् अविशेषाद् वैशिष्ट्यं विषयीकरोति, अप्रमाऽपि प्रमेत्येव गृह्यते, स्वप्रकाशेऽपि स्वमात्रसाक्षिणः स्वधर्मग्रहेऽसामर्थ्यात्। प्रामाण्यज्ञानेऽपि स्वतःप्रामाण्यग्रहे तत्संशयाऽनुपपत्तेः, तद्वति तत्प्रकारकत्वं प्रामाण्यं ज्ञानग्राहकेण सामग्रीविशेषेण गृहीतमिति न तत्संशयः, उभयोरैक्येन ख्यापनात् ॥ ज्ञानत्वं विशेष्याऽवृत्तिप्रकारकवृत्ति न, ज्ञानत्वावच्छिन्ननिरूपितवृत्तिताश्रयत्वात्, प्रमात्ववत्। ज्ञानत्वं विशेष्याऽवृत्तिप्रकारकवृत्तित्वाऽत्यन्ताभावाऽधिकरणम्, ज्ञानत्वावच्छिन्ननिरूवितवृत्तित्वाऽऽश्रयत्वात्, प्रमात्ववत्। भ्रान्ताऽभ्रान्तोभयमते वृत्तितायाः प्रसिद्धिः ॥

रजतेच्छाजन्यशुक्तिविशेष्यकप्रवृत्तिजनकं रजतज्ञानं शुक्तिगोचरेतिशब्दाभिलाप्यं न भवति, शुक्त्यप्रत्याय्यकत्वात्, यज्ज्ञानं यदप्रत्यययाय्यकं तत् तद्गोचरपदाऽनभिलाप्यं भवति, सम्प्रतिपन्नवत् ॥ पुरोवर्तिगोचरभानं रजतत्वप्रकारकेतिशब्दवाच्यं न भवति, रजतत्वाऽभासकत्वात्, मेरुत्वाऽभासकरैवताचलज्ञानवत् ॥ अत्र सर्वत्र अभावाऽप्रतियोगित्वेनोपस्थितस्येष्टस्याऽनिष्टस्य च प्रवर्तनानिवर्तनाकारणत्वम्। अन्याऽन्यविषयकत्वे सर्वविषयकत्वाऽऽपत्तौ सार्वज्ञ्यापत्तिः स्यात्, ततः स्वविषयकत्वं सर्वत्राऽऽत्मविषयकत्वं, स्वाप्नेऽपि न भ्रमः, स्मृतयाथार्थ्यात्। बाह्ये न भ्रमो दृश्ययाथार्थ्यात्। भिन्नज्ञानयोर्दर्शनस्मरणयोरसांकर्येण यथार्थविषयकत्वे स्वरूपतो विषयतश्चाऽगृहीतसंसर्गकज्ञानद्वयात्प्रवृत्त्युपपत्तेः ॥

अथाऽत्र सफलप्रवर्तने विशिष्टज्ञानं विफलप्रवर्तने संसर्गाऽग्रहः कारणम्, निवर्तने त्विष्टाऽलाभः कारणं चेति गौरवम्। अथ—किञ्चिद्धर्मावच्छिन्नविशेष्यताककिञ्चिद्धर्मावच्छिन्नप्रकारताकज्ञानत्वं विशिष्टज्ञानत्वम्, तदवच्छिन्नं सत्याऽसत्योभयस्थले प्रमात्मकं वा तद्भिन्नं भवत्येव ज्ञानं, सर्वत्राऽभ्यस्ते साऽन्वितस्यैवग्रहणात्, आगन्तुकदोषेण वैपरीत्यमात्रत्वात्। तथा च विशिष्टज्ञानत्वेन कारणत्वे स्वप्रकाशत्वबलेनैव प्रमात्वस्य स्वतोग्राह्यत्वं भवति, अप्रमात्वभयनिवारणार्थमान्तरस्मार्तादेरतिरिक्तत्वांऽमीकारः, एवं च सति तदपेक्षयाऽपि सर्वासां बाह्यान्तरज्ञप्तीनामान्तरसाक्षिग्राह्यं स्वज्ञप्तिप्रामाण्यं स्वग्राह्यं स्वप्राकाश्यं च सत्समुच्चयितख्यापनपरं लाघवेन सर्वथा सुलभं सुसहं च भवति विशिष्टवादिसम्मतम् ॥

अथ सत्ख्यातिविदां सर्वज्ञानानां सत्यत्वादेव विषयसत्यत्वेन विषयिसत्यत्वादेव स्वभोग्याकारविषतसत्यत्वं वृत्तिग्राह्याकारविषयसत्यत्वं करणसंसर्ग्याकारविषयसत्यत्वं प्रागवस्थस्य सत्त्वेन विषयसत्यत्वमेव तज्ज्ञानस्य स्वयम्प्रकाशत्वं च। अतः प्रामाण्यं स्वतोग्राह्यम् ॥

भवति हि स्वरूपयोग्येभ्यः स्वरूपयोग्यसदृशेभ्योऽपि स्थूलविरलप्रचयितादिकार्यनिष्पत्तिर्न त्वस्वरूपयोग्येभ्यः पाषाणकंकरेभ्यस्तैलाऽऽप्तिः, अतो यत्स्वरूपयोग्यसदृशं तत्र यथाकथञ्चित्प्रवर्तनायाः असाफल्यमिष्टाऽसाफल्यं न तु सर्वथाऽसाफल्यं स्वाप्नयुवतिसम्प्रयोगदेवदर्शनादिसाफल्यवत्, तथा च साक्ष्यप्रकाश्यख्यापनपरान् सन्मात्रानुव्यवसायप्राकट्याऽभ्यस्तज्ञानवित्त्यादिग्राह्यप्रामाण्यपरायणान् प्रति सत्समुच्चयितख्यापनप्रयुक्तविप्रतिपत्तिः—

तद्धर्मप्रकारकज्ञानप्रमात्वं,—तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यं न वा ?। गुरुमते व्यवसायः समूहालम्बनात्मकस्तद्धर्मघटितज्ञानग्राह्यत्वं स्वप्रामाण्ये, भट्टमतेऽतीन्द्रियघटज्ञानप्रामाण्यम् 'इयं ज्ञातता घटत्ववति घटत्वप्रकारिके'त्यनुमितिग्राह्यत्वम् अतीन्द्रियज्ञानप्रामाण्ये, मिश्रमते—मानसज्ञानात्मकाऽनुव्यवसायग्राह्यत्वं व्यवसायप्रामाण्ये—स्वीक्रियते। विशेषत एव स्थापनायां स्वतोग्राह्यत्वसिद्धिः। त्रिपुटिप्रत्यक्षे ज्ञातृज्ञानज्ञेयानां भानम्। तत्र घटत्ववन्निष्ठघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वविशिष्टज्ञानवानहमिति भानम्। अत्र तज्ज्ञानांऽशांऽशितदात्मकज्ञानमात्रग्राह्यत्वं युक्तम्, सामग्रचनावश्यकम्। तार्किकाऽनुमानस्याऽपि स्वत्वेन परतस्त्वाऽसंगतं स्यात्। स्वरूपेतरत्सर्वमपि स्वान्यमावर्जितं भवति। यथाकथञ्चिदुत्तरज्ञानानां स्वानु-

गुणत्वेन स्वकीयत्वमेव स्यात्, यत्र स्वविषयप्रवेशस्तस्य स्वकीयत्वेऽविरोधात्, तथा च केषाञ्चिदपि परकीयत्वं न सुलभम्, विरोधबाधादेरपि प्रतियोगिविषयकत्वेन ज्ञानस्य परकीयत्वव्याघातात्। इच्छाग्राह्यत्वे कृतिग्राह्यत्वे वा परकीयत्वं स्यात्, यत्तु असंभवीति स्वतादात्म्यज्ञप्तिग्राह्यत्वं सर्वथोचितम्, आत्मसाक्षिज्ञप्तिग्राह्यत्वं निर्विवादम्। येन केनापि प्रकारेण सर्वेषामात्मज्ञप्तेरंगीकरणात्। यदि सामग्रीजन्यग्रहविषयत्वं सुरक्ष्यते तदाऽऽत्मसाक्षिज्ञप्तेर्जन्यत्वाऽभावेन तादृशसामग्रीजन्यग्रहविषयत्वाऽभावादेव ग्राह्यत्वाऽभावो निषेधरूपो विशिष्टब्रह्मवादिनां सम्मतः। अवस्थाभेदेन द्रव्याणां योग्याऽयोग्यत्वव्यवस्थानात् प्रामाण्याऽप्रामाण्यव्यवहारः प्रवृत्तिनिवृत्तिव्यवहारः, सामान्यधर्मभानेऽपि विशेषेष्टधर्मादिस्वरूपाऽलाभेऽनिच्छतया वाऽप्रयोजनेन वा निवृत्तेर्जायमानत्वात् नियमेऽनैकान्त्यात्। मिश्रमते–अनुव्यवसायप्रामाण्यस्याऽनुव्यवसायान्तरग्राह्यत्वेऽनवस्था। प्रामाण्यस्य स्वग्राह्यत्वं स्वविषयत्वं स्वस्य ज्ञानस्य प्रामाण्यविषयकत्वमिति यावत्। मीमांसकानां–यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं यावत्स्वाश्रयग्राहकग्राह्यत्वं, तज्ज्ञानविषयकजन्यज्ञानाऽजन्यजन्यज्ञानग्राह्यत्वं, वा स्वतस्त्वम्' तदन्यथाग्राह्यत्वं तु परतस्त्वम्। मनसा प्रामाण्यग्रहाऽभ्युपगमे तज्ज्ञानविषयक–जन्यज्ञानजन्य–ज्ञानग्राह्यत्वान्न परतस्त्वहानिरपि। इदं शरीरज्ञानं प्रमा करचरणवति शरीरज्ञानत्वात्, स्वशरीरज्ञानवत्, इति शरीरांशे प्रमात्वम्। यत्र सत्ख्यातिस्तत्र भ्रमः सन्मात्रविषयकः, तत्र भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं न वा?, भावो घटत्वे, अभावो गगनादौ, प्रसिद्धः। अवृत्तित्वेन व्याप्त्यभावः, शशशृंगे वाऽभावप्रसिद्धिः॥

वस्तुतस्तु–यावदनुस्यूतसमष्टिव्यष्टिचराऽर्थज्ञानत्वं प्रमात्वम्, यावत्योऽनुस्यूताः विशेषणविशेष्यसंसर्गभावापन्ना याः समष्टयः साजात्यानि व्यष्टयो वैजात्यानि चराश्च संसर्गा अर्था वस्तूनि तेषां ज्ञानत्वं प्रमात्वम्॥

निर्वाचितज्ञानानि गुणत्वनियामकसंसर्गावच्छिन्नगुणत्वावच्छिन्नाऽप्रतिद्वन्द्विताकस्वीयविषयितावच्छेदकतावन्ति न वा?, अत्र विशिष्टज्ञानानि शुक्तिरजतज्ञानानि च तत्तद्यथार्थांशे गुणीयसंसर्गवन्ति गुणत्ववन्ति च तदितरस्याऽप्रसिद्धस्य प्रतिद्वन्द्विनोऽसत्त्वादेव यथार्थविषयितावच्छेदकतावन्ति भवन्ति, व्याप्ये विरुद्धे प्रतिद्वन्द्विप्रसिद्धिः, निर्वाचनशून्यानां सुतरां तादृशाऽभाववत्त्वम् अलीकम्। निर्वाचनवतां तत्तदवच्छेदकताव्याप्यप्रामाण्यं गृह्यते एव॥

प्रामाण्यं स्वाश्रयधर्म्यवच्छिन्नसाक्षिदृश्यसद्विषयगोचरं न वा?॥ ज्ञानं सद्विषययाथार्थ्यप्रयुक्तविषयितावन्न वा?॥ ज्ञानत्वं विषययाथार्थ्यप्रयुक्तसमुच्चयितविषयतानिरूपितविषयितावच्छेदकं न वा?॥ प्रामाण्यं यथावत्समुच्चयिततत्त्वविषयितावच्छेदकव्याप्यं न वा? दार्शनिकानां यावत्यो ज्ञानप्रामाण्यविप्रतिपत्तयः स्वस्वीययाथार्थ्याऽवच्छिन्नविध्याद्याश्रयाः, विपरीतगर्भितभावकोटिकत्वात्, स्वाश्रयत्व–स्वविपरीताश्रयत्वोभयसम्बन्धेन विधेयवत्त्वात्, उभयथा भिन्नलक्ष्यकसिद्धिफलकत्वात्, चित्साक्षिचैतन्यगोचरत्वात्, इत्येवं यथायोग्यं स्थापना।

अथ सर्वेषां स्वबौद्धिकेष्टसिद्धिकौशल्यं वादादौ तत्त्वनिर्णयव्याप्यं विकासमाप्नोति, न्यायानुयापनवती रीतिर्न्याय्या युक्तिसिद्धाऽपि न्याय्या। लक्ष्यं तु समानशब्दबोध्यमपि स्वस्वशेमुष्या पारिभाषिकतामनुप्रविश्य समाऽसमविषमतादिभिर्निर्दिश्यते। तत्र हि—मतभेदेन विदुषां कल्पनाभेदेन—

नैयायिकाः–प्रामाण्याऽप्रामाण्ये परतोग्राह्येऽनुमानग्राह्ये। सांख्ययोगाः–प्रामाण्यप्रामाण्ये स्वतोग्राह्ये। बौद्धाः–प्रामाण्यं परतः, अप्रामाण्यं स्वतः। मीमांसकाः–प्रामाण्यं स्वतः, अप्रामाण्यं परतः। जैनाः–प्रामाण्यं परतः, अप्रामाण्यं स्वतः। वेदान्तिनः–प्रामाण्यं स्वतः, अप्रामाण्यं परतः। रामानुजाद्याः–प्रामाण्यं स्वतः, अप्रामाण्यं परतः। स्वामिनारायणीयाः–प्रामाण्याऽप्रामाण्ये साक्षिभास्ये साक्षिवेद्ये। शैवाद्या अपि प्रामाण्याऽप्रामाण्ये साक्षिभास्ये। आगमिकाः शाब्दाश्च–प्रामाण्याऽप्रामाण्ये स्वतः परतश्चोभयाऽग्राह्ये। आर्थवादिकैतिह्यकाद्याश्च–प्रामाण्याऽप्रामाण्ये परतो ग्राह्याऽग्राह्ये, न स्वतः। योगिनः–प्रामाण्यं स्वतः, नेतरत्। बार्हस्पत्याः–प्रामाण्याऽप्रामाण्यं स्वत एवेति॥

ख्यातिविभागाश्च—नैयायिकानामन्यथाख्यातिः। मीमांसकानां सत्ख्यातिः। स्वामिनारायणीयानां सत्समुच्चयितख्यातिः। रामानुजानां सत्ख्यातिः। आयुर्वेदस्य सत्ख्यातिः। प्राभाकराणाम् अख्यातिः। कुमारिलभट्टानां सत्ख्यातिः। मुरारिमिश्राणां सत्ख्यातिः। सांख्ययोगानाम् अख्यातिः, सत्कार्यख्यातिश्च। केवलयोगस्य अख्यातिः सत्ख्यातिः असत्ख्यातिरपि च। योगाचाराणाम् आत्मख्यातिः। सौत्रान्तिकवैभाषिकाणाम् आत्मख्यातिः। माध्यमिकानाम् असत्ख्यातिः। जैनानाम् अनैकान्तिकताख्यातिः। लोकायतिकानां साक्षात्ख्यातिः। माध्वानां विकल्पनाख्यातिः, सदुपरक्ताऽलीकत्वख्यातिः, क्रमानैक्यख्यातिः, सारूप्यख्यातिः। वाल्लभानाम् अन्यथारूपख्यातिः, आभाससुख्यातिः, लीलाख्यातिः, ब्रह्मपरिणतिसत्ख्यातिः। निम्बार्काणां भेदाऽभेदख्यातिः, ज्ञानाऽज्ञानख्यातिः, सत्याऽसत्यख्यातिः, उभयैक्याऽन्यथाख्यातिः, दृश्यादृश्यख्यातिः, दृष्टिसृष्टिख्यातिः, साकृतिरधिष्ठेयाऽभिन्नभिन्ना ख्यातिः। अद्वैतिशांकराणाम् अनिर्वचनीयख्यातिः। शाब्दिकानां शक्तिवैवर्तिकख्यातिः। प्रत्यभिज्ञावादिनां प्रत्यभिज्ञानख्यातिः। पाशुपतशैवानां स्वायत्तेष्टत्वविषया विषयताख्यातिः। सिद्धान्तिशैवानाम् अधिष्ठानवैरूप्यख्यातिः। लाकुलीशशैवानां भिन्नाऽभिन्नचाकचक्यख्यातिः। विशिष्टाद्वैतशैवानां संसर्गताख्यातिः। वीरशैवानां स्फूर्तिवैवर्त्यख्यातिः। नन्दिकेशशैवानाम्—आभासवृत्त्यात्मख्यातिः। रसेश्वरशैवानां सिद्धयसिद्धिख्यातिः, असिद्धिसिद्धिख्यातिः। कालीक्रमशैवानां क्रमवैकल्पिकी ख्यातिः। कौलशैवानां लीलाख्यातिः। ऐन्द्रजालिकानां यान्त्रिकशक्तिख्यातिः। परमसर्वज्ञस्य सत्यतादात्म्यख्यातिः। गंगेशोपाध्यायानाम्—अभिनवधर्माऽन्यथाख्यातिः॥

एते वादाः प्रमायामप्रमायां स्वप्रकाशायां परप्रकाशायां च प्रवृत्तास्तत्र विश्रान्ताः। धियस्तु ब्रह्मतादात्म्यापन्नानां व्यापिन्यः। अविद्यातादात्म्यापन्नानां भागाऽसिद्धिः, अनुभवेषां तु विप्रमाथिन्योऽन्ततोऽफलिन्यः। ब्रह्मदर्शिनां तु सत्य एव। दर्शनानां सत्यदर्शयितृत्वहार्यात्॥

अवस्थाभेदेन पदार्थानां परिणामोऽवस्थागुणादिपरिणामः, नामरूपाऽऽपन्नपरिणामिपदार्थमुद्दिश्य-विधिनिषेधाऽदृष्टाद्याः शास्त्रदर्शिताः, न तु तत्तद्विधिनिषेधाऽनर्हाऽवस्था अपि, ते तु तत्तदर्हावस्थत्वेनोद्दिश्य नियमिताः। अतो नाऽनर्हावस्थासु द्रव्यादिषु पापपुण्यादिकल्पनाऽपि। अन्यथाऽध्यस्तजीवादीनामपि ब्रह्मदशा मिथ्याविधिविषया स्यात्। दुग्धं दुग्धावस्थं पेयं पुण्यं पूजार्हं च, सुरावस्थं तदेव पूतिकावस्थं त्वपेयम् अपुण्यम् अपूजार्हं च भवतीति सर्वोऽपि संसारो मायिकतत्त्वपरिणतावस्थाधारः उपादेयोऽनुपादेयश्च भवति, रजतं स्थूलावस्थं भूषणाऽर्हमुपादेयम्, विरलावस्थं कारणावस्थं वा त्वभूषणार्हम् अनुपादेयम्, वाग्बद्धाऽपि युवतिः अविवाहितसंस्काराऽनुपादेया, विवाहिताऽवस्था तूपादेया। एतां व्यवस्थामजानानो हि क्षीरसुराप्रत्यवायप्रलापपरः सन् प्रमाणख्यातिकृतवेषोऽपि प्रान्ते नैजम् अप्रामाणिकत्वं कुतर्कधिया प्रकटीकुर्वन् अनवधेयवचनताऽऽवृतः। तदेव द्रव्यं भोजनावस्थं ग्रस्यते मलावस्थं त्यज्यते सर्वप्राणिभिरित्यवस्थाभेदो नियामको विधौ निषेधे च। दृश्येऽपि तथैव॥ ५१८॥

**प्रमाऽप्रमात्वाऽऽलम्बित्वे ख्यातयश्चान्तरस्थिताः।**
**सत्समुच्चायिकाख्यातिः स्वतन्त्रा त्रिकयोगतः॥५१९॥**

**प्रमेति**। अत्र विशिष्टवादिनां चिन्तनानि—स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्वरूपरूपगुणविभवादिकं सर्वं साक्षात्करोति। स्वयम्प्रकाशत्वं ज्ञानत्वम्। अहमर्थात् ज्ञातुर्विलक्षणः साक्षी प्रत्यगात्मा। सर्वप्रमाणानां सविशेषवस्तुविषयत्वम्, आत्मसाक्षिकसविशेषाऽनुभवो भवति। गन्ध इत्यपि कालावच्छिन्नादिप्रतीतिः। इदमहमिति सकर्मकाद्यनुभवः। अदर्शमित्यपरोक्षत्वविशेषान्वयः। कैश्चिद्विशेषैर्विशिष्टस्य वस्तुनोऽन्येऽपि विशेषा निरस्यन्तेऽतः किञ्चिद्विशेषविशिष्टं सिद्धमेव। धियो धीत्वं स्वप्रकाशत्वं च ज्ञातुः, स्वापमूर्छास्वपि सविशेष एवाऽनुभवः आत्मस्फुरणम्, तदानीं न धर्मभूतज्ञानस्फुरणम्। प्रामाणिकविशेषैर्विशिष्टं वस्त्वेव गृह्यते। शब्दस्याऽपि सविशेषवस्तुनि अभिधानसामर्थ्यम्, पदादीनां विशिष्टार्थप्रवृत्तिनिमित्तत्वम्। प्रकृति-

प्रत्ययोगिपदस्य विशिष्टार्थकत्वम् । अर्थभेदादपि पदभेदो भवति । अन्वयबोधाद् वाक्यं विशिष्टार्थे प्रमाणम् । प्रथमं ज्ञानं नाम्ना निर्विकल्पकमपि एकजातीयद्रव्येषु प्रथमपिण्डग्रहणरूपं तत् । द्वितीयादिपिण्डग्रहणं तत् सविकल्पकम् । निर्विकल्पके प्रथमपिण्डग्रहणे गोत्वादेरनुवृत्ताकारताप्रतीतिः, द्वितीयपिण्डग्रहणे तदनुवृत्ताकारताप्रतीतिः, प्रथमपिण्डग्रहणे ससंस्थानं वस्तु 'इत्थ' मितिगृह्यते, इत्थम्भावः, सास्नादिसंस्थानविशेषः, इतरव्यावृत्तप्रतीतिः प्रथमा गोत्वादिसंस्थानविशेषविशिष्टगोचरा, गोत्वसास्नाद्याः संस्थानाः, संस्थानम् असाधारणरूपम् । अनेकव्यक्त्यन्वयरूपाऽनुवृत्तिः, सा वस्तुनो वस्तुनिष्ठपरामर्शेनैव द्वितीयादिषु गृह्यते, प्रथमेऽगृहीतं संस्थानं तु द्वितीयादावप्यगृहीतमापद्येत, स्वाऽसाधारणरूपं संस्थानम्, संस्थाताऽतिरिक्ता नजातिः । विशिष्टग्रहस्य पृथग्ग्रहणपूर्वकत्वे भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यात्, पक्षव्यच्छेद्यत्वसिद्धेरुपाधित्वं तर्कबलात् स्यात्, अतो न विशिष्टग्रहस्य पृथग्ग्रहणपूर्वकत्वम् । भेदग्रहणेनैव भेदग्रहणनिवृत्तिः । विशिष्टस्य वस्तुनः स्वरूपमेव विशिष्टम्, व्यावृत्तिः,- विशेषणाऽपेक्षया विशेष्यस्य स्वरूपमेव भेदः, विशेष्याऽपेक्षया विशेषणस्य स्वरूपमेव भेदः, तदुभयाऽपेक्षया च सम्बन्धस्य स्वरूपमेव भेदः, विशिष्टस्य विशिष्टान्तराऽपेक्षया स्वरूपमेव भेदः, तत्तदसाधारणशब्दवाच्यं स्वरूपम्, प्रतियोगितयाऽभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपम् । निर्धर्मकं स्वरूपमेव भवितुं नाऽर्हति, अतो न सन्मात्रमेव वस्तु । अनुभूतिसद्विशेषयोश्च विषयविषयिभावेन भेदः प्रत्यक्षसिद्धः । अहमित्यात्माऽनुभवः प्रत्यक्त्वानुविशिष्टः । प्रतिविषयं प्रतिप्रमातृ ज्ञानभेदोऽपरोक्षः, प्रत्यक्षबाधितोऽभेदः। स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं संवेदनम्, स्वयम्प्रकाशता तु स्वाश्रयाय प्रकाशमानता, प्रकाशोऽपि सर्वपदार्थव्यवहारानुगुणत्वार्थकः । व्यवहारप्रतिसम्बन्धित्वं भासमानत्वम् । प्रत्यक्त्वानुकूलत्वैकलक्षणस्वव्यवहारप्रतिसम्बन्धित्वं ज्ञातृस्वरूपभूतं ज्ञानस्यैव, स्वस्वरूपस्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारस्वाश्रयतत्सम्बन्धिस्वविषयतत्सम्बन्धानां व्यवहारप्रतिसम्बन्धित्वे हेतुत्वरूपं व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव, अतः स्वपरव्यवहारानुगुण्यं ज्ञानस्याऽसाधारणं प्रकाशलक्षणम् । सम्विदः कालातिरिक्तत्वं कृत्स्नकालसम्बन्धत्वव्याप्तमिति धर्मवत्त्वम् । प्रत्यक्त्वं ज्ञानाश्रयस्य । ममेदानीं ज्ञानं नष्टमिति सम्विदुत्पत्याद्याः प्रत्यक्षसिद्धाः । प्रत्यगर्थ आत्मा परागर्थाद् भिद्यते । स्वस्मै भासमानत्वं प्रत्यक्त्वम्, परस्मै प्रकाशमानत्वं पराक्त्वम ।

अहं-प्रत्ययसिद्धः स्वतःसिद्धः । औज्ज्वल्यं प्रकाशो दीपे । स्फुरण प्रकाशो ज्ञाने, ज्ञानधर्मकत्वात् स्वयम्प्रकाशत्वम् । आत्मा चिद्रूपश्चैतन्यगुणः, चिद्रूपता स्वयंप्रकाशता, आत्मा ज्ञाता, सम्विदनुभूतिज्ञानादिशब्दाः सम्बन्धिशब्दाः । कर्मात्मकाऽविद्यया ज्ञानस्वरूपाऽवस्थासंकोचविकासौ । आत्मा त्वविक्रियस्वरूपः । कर्माऽभावे न संकोचाद्याः । जडाऽहंकारो मायिको न ज्ञाता । स्वापे अहमित्यात्मा प्रकाशते । सुषुप्तावात्माऽहमिति स्फुरति स्वस्मै प्रकाशमानत्वात् अविशदावभासस्य सर्वाभ्युपगतत्वात् श्रुतिस्वारस्यात् परामर्शस्वारस्यात् साक्षित्वोपपत्तेः प्रत्यक्त्वसिद्धेश्च । मुक्तावप्यात्मा अहमित्येव प्रकाशते स्वस्मै प्रकाशमानत्वात्, अहमिति स्वप्रकाशः, न तु स्वेतरीयः । अहंकारो जडो मायिकस्तु अनात्मन्यहंभावकरणो गर्वो हेयोऽविद्यात्मकोऽनात्मन्यात्माभिमानलक्षणस्तु पृथक् । स्वाप्नं ज्ञानं सत्यम्, स्वाप्नो विषयो धर्मविमर्शाद्युपादानकः, बाह्यविषयबाधः, मन्त्रौषधादिमायामयं ज्ञानं तु सत्यं भयादिहेतुः । रज्जुसर्पज्ञानं सत्यं भयहेतुः । सत्या सन्दष्टधीः मरणहेतुधीरपि सत्या । वस्तुभूत एव जले मुखप्रतिभासः । अर्थक्रियाकारित्वेन सालम्बनत्वेन च सत्यत्वम् । अबाधिता धीः सत्या । रेखासत्यत्वेन वर्णप्रतिपत्तिः सत्या । रेखाभिः संकेतवशात् वर्णधीः, रेखया गोधीः सादृश्यं सत्यम् । शब्दात्सत्यात्सत्योऽर्थो भासते । व्यावृत्तज्ञानम् अनुमापकम्, व्यावृत्तिः स्वालम्बना । अन्यथाख्यातावपि विशेषणविशेष्यसंसर्गान्यतमं सत्यम् । सत्यहस्त्याद्यालम्बनं स्वप्नेऽपि निराबाधम् । प्रतिबिम्बेऽपि दर्पणहतरश्मिग्राह्यबिम्ब एव सत्यं लिङ्गम् । सत्यात्सत्यप्रतीतिर्यथार्थख्यातिः । ज्ञानानां सत्यसंस्कारसामग्रीकत्वं स्पष्टं सत्यत्वम् ॥

प्रामाण्यादौ चत्वारः पक्षाः—१ प्रामाण्याऽप्रामाण्ये द्वे परतः, २—द्वे स्वतः, ३—प्रामाण्यं परतोऽप्रामाण्यं स्वतः, ४—प्रामाण्यं स्वतोऽन्यदप्रामाण्यं परतः। तत्र १ अनुपपन्नं द्विस्वभावत्वादिप्रसंगात् अनवस्थाप्रसंगाच्च। २—द्वितीयमनुपपन्नं विरोधेन व्याघातात्। ३—अप्रामाण्यस्य स्वतस्त्वमनुपपन्नं प्रामाण्यस्य भूयस्त्वात्। अप्रामाण्यस्याऽभूयस्त्वात्, व्यक्तिभेदेऽविरोधेऽपि नियामकाऽभावात्। ४—भूयसां स्वतस्त्वम्, अल्पीयसाम् औपाधिकत्वं च युक्तं, घटपटादिज्ञानेषु, शुक्तिरजतज्ञाने इदमंशे प्रामाण्यं भूयस्त्वात्, अतः स्वतःप्रामाण्यम्। परतोऽप्रामाण्यमिति तु क्वचिदात्मस्थतयाऽभिव्यञ्जकमभ्युपेत्य। खत्वगत्वादिनादक्ृतोऽभिव्यक्तिविशेषः सत्यः। तद्विशिष्टः सत्यशब्दोऽर्थप्रतिपत्तिहेतुः शब्दः सत्यो ज्ञानं सत्यं सत्यालम्बनम्, समुदिता वर्णा वाचकाः पदं वाक्यं प्रत्ययो वर्णसमुदायविषयः सत्यः, पञ्चीकृतं सूक्ष्मं स्थूलं विरलं च सत्यम्। स्फोटाऽभिव्यञ्जिका सामग्री एवाऽर्थव्यञ्जिका, स्फोटोऽसम्भवी स्फोटः शक्तिर्मामान्तरम्, सुप्तिङन्तं पदम्, समुदायस्य पदत्वम्, वर्णसमुदायः पदम्, पदसमुदायो वाक्यम्, अर्थः सत्यशक्तिलभ्यः। ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं च, सर्वज्ञता सर्वशक्तियोगः सत्यसंकल्पत्वं सर्वान्तरत्वं सर्वाधारता सर्वनियमनमिति गुणविशिष्टता नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाऽव्ययत्वभूतयोनित्वसर्वज्ञतादिविशिष्टता च। शरीरवाचिपदस्य शरीरिपर्यन्तत्वस्य मुख्यतयोपपन्नत्वम्। ज्ञातुर्ज्ञानस्वरूपत्वात् ज्ञानाश्रयत्वाच्च सामानाधिकरण्यम्। एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावः। यः सर्वज्ञः सर्वविदितिज्ञानस्य स्वरूपतः प्रकारतश्च विषयित्वम्, समष्टिव्यष्टिसृष्ट्युपयोगित्वम्। ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः, कार्यकारणभावनिबन्धनमैक्यम् अवस्थाद्वयाऽऽपन्नचिदचिद्विशिष्टवस्त्वैक्यम्, धर्मविशिष्टधर्मैक्यम्, प्रकारैक्यं स्वरूपैक्यं च। दृढसम्बन्धः प्रतिष्ठा। रूपं शरीरं सामान्यम्, स्वरूपं तु स्वाऽसाधरणतत्त्वमूर्तिः, उपबृंहणं न्यायप्राप्तिः। विरोधपरिहारपूर्वं तत्त्वस्थितिनिश्चयः। विसदृशाऽवस्थाप्रहाणकारणत्वधर्मिणा द्रव्येण विभागस्य अपादानभूतेन संश्लेषो लयः। आश्रयाऽनुपपत्ति—तिरोधानाऽनुपपत्ति-स्वरूपाऽनुपपत्त्य-निर्वचनीयत्वाऽनुपपत्ति—प्रमाणाऽनुपपत्ति—निवर्तकाऽनुपपत्ति—निवृत्त्यनुपपत्तिभिर्विशिष्टं तत्त्वमुपबृंह्यते। बहुलत्वसान्द्रत्वविरलत्वाद्यवस्थायोगेन रूपिद्रव्यं तमः, ज्ञानं गुणद्रव्यं प्रसरणात्। इष्टरूपरूपिनिरन्तरभानात् प्रवृत्तिः, द्विष्टरूपरूपिनिरन्तरभानान्निवृत्तिः। धर्मान्तराऽभानं निरन्तरभानम्। ज्ञानं सत्यं, ज्ञानफलभूतप्रवृत्तेर्बाध्यत्वम्, बाध्यत्वं प्रतिबद्धोत्पत्तिकत्वम् अतीष्टविफलत्वं वा, मन्त्रार्थवादयोः प्रतीयमानेऽर्थे प्रामाण्याऽभ्युपगमः। त्रिवृत्करणं पञ्चीकरणं चेति परमेश्वरकर्तृकं, भूतानान्तरभ्रमस्त्रिवृत्करणत्वेन, सदृशे सदृशान्तरभ्रमः प्रतिनिधिन्यायेन, विजातीयसदृशेऽपि भ्रमे त्रिवृत्करणन्यायः, क्वचित् प्रतिनिधिन्यायो भेदाऽग्रहः कारणीकृत्य निर्वाह्यते। त्रिवृत्करणेन शुक्तिगतशुक्लभास्वरपरिणमत्तेजोंऽशानां रजतसौसादृश्यात् केषाञ्चित् राजताऽवयवत्वात् विरलस्फीतरजताकारो निरीक्ष्यते रजतावयवसद्भावश्चोपपद्यते। पूतीकायाः विरलसोमलतावयवसद्भावः सौसादृश्यात्, प्रचुरक्षीरेऽल्पजलावयवसद्भावः प्रचुरस्वर्णस्वस्तिकेऽल्पराजतादिसद्भाव इव। शुक्तौ शुक्त्यवयवप्राचुर्यात् अर्थक्रियाव्यवस्था शब्दव्यवस्था च। शुक्तौ रजताऽवयवेषु अल्पत्वाऽग्रहणेन प्राचुर्ये च प्रतियोग्यपेक्षणात् प्रचुरशक्त्यग्रहणेन रजतग्रहणात् शुक्त्यपेक्षया रजतांऽशानां प्राचुर्याऽग्रहणान्न सदितरख्यातिः। अल्पत्वाऽग्रहणं नाम अल्पत्वगोचरज्ञानसंकोचः। नेदं रंजतमिति नञर्थः शुक्तित्वात्मक आकारो निवर्तकः, स च नेदं रजतपदेन शुक्तिपदेन वा प्रतीयते, निरुपद्रवप्रत्यक्षेण वा। भूते भूतान्तरस्य सदृशे सदृशान्तरस्य सद्भावात् शुक्तिरूप्यधीयाथार्थ्यम्। जीवस्य स्वाप्नेऽपि सत्यसंकल्पत्वाद्याविर्भावः, न तु जीवस्य स्वरूपाऽऽविर्भावः परमात्मना जीवपुण्यादिसापेक्षसृष्टिसर्जनात्। शिरश्छेदादिर्भेदाऽगृहक्कृतः, न त्वन्यभ्रमकृतः। तत्तदेकजनभाव्यत्वतन्मात्रकालावसायित्वादिभेदाऽग्रहात् प्रवृत्तिः। सदोषचक्षुषा पित्तद्रव्यं शंखे गृह्यते सुवर्णानुलिप्तशंखवत्। जपाकुसुमस्फटिकमरीचिकाजलाऽलातचक्रदिङ्मोहेषु द्रव्याऽन्तरसम्बन्धनाद् यथार्था

प्रतीतिः । क्रमाऽग्रहणात् सम्यक्चक्रप्रतीतिः । स्वाभिमुखतया सव्यदक्षिणभावो दर्पणकृतः । दिग्व्यवहारोऽपि प्रतियोग्यपेक्षया, निरन्तरभानं यथार्थविषयम्, अगृहीनक्रमाऽगृहीतभेदेन अंगुल्यवष्टम्भकृतद्विवृत्तिकृतचन्द्रद्विरूपदर्शनं, वृत्तिकृतदर्शनं यथार्थम् । माया-आश्चर्यत्वं प्रवृत्तिनिमित्तम्, जातिव्यक्त्योर्नियमेन सहप्रतीतिः । तत्त्वम् अचित् भोग्यत्वेन चित् भोक्तृत्वेन ईशस्येशितृत्वेन ब्रह्मणो धामत्वेन परब्रह्मणो नियामकत्वेन स्वरूपविवेकः । नीलं नभः प्रमा, नीरूपत्वे तु सन्दिग्धप्रामाण्याः, सन्निकर्षे नीरूपत्वग्रहणात् । 'अहमिहैवाऽस्मि सदने जाननः' इति जीवाऽणुत्वे प्रमैव, धर्मभूतज्ञानं शरीरव्याप्तम् । मम शरीरं गौरोऽहमिति नाऽभेदप्रत्ययः । जपासंसर्गिस्फटिकाऽरुणिमावत् गौरोऽहमिति गौरत्वमिति निश्चयः प्रत्यक्षान्तरमूलः । ज्वालैक्यप्रत्यक्षे आश्रयनाशस्याऽऽश्रयनाशकत्वं ततः स्वनाशो दृढप्रत्यक्षगृहीतः वर्तिनाशस्नेहक्षयप्रत्यक्षोत्तरं ज्वालानाशप्रत्यक्षम् । दूरत्वदोषेणाऽल्पत्वभानं चन्द्रे प्राक्प्रत्यक्षस्य स्वगृहीतपरिमाणनिश्चायकत्वाऽभावात् । तत्र प्रत्यक्षमेव दुष्टकरणत्वनिश्चायकम्, पर्वततरुषु दूरस्थदोषत्वनिश्चयो गत्वा प्रत्यक्षाऽधीनः, प्रत्यक्षसिद्धः सन्नर्थो नाऽनुमानेन निर्बलेनाऽसत्कर्तुं शक्यः । प्रवृत्ता हि श्रुतिरनपेक्षतया स्वतःप्रमाणा । प्रपञ्चः परमार्थसन् । बिम्ब एव प्रतिबिम्बः सन्नेव । चन्द्रः सन् द्वित्वम् असत्, नेत्रवृत्तिद्वैविध्यं शाखाद्यैर्जायमानं पार्श्वद्वयतश्चन्द्रग्रहणं द्वेधा ग्रहणं भवति प्रत्येकवृत्त्यापूर्णचन्द्रग्रहणात्, उभयग्रहः, उभयत्वम् असत् । रेखानुमितवर्णः सन् पठनं सत् । जागरे पिण्डः सुखभयादिहेतुः, स्वप्ने बाह्यसंस्कारोपसम्पन्नज्ञानं सुखभयादिकारणम् । स्थूलसर्पेऽसत्त्वेऽपि ज्ञानं सत् सर्पविषयकत्वात्, सर्पस्य विषयितया ज्ञाने सत्त्वात् । भूयिष्ठप्रकाशेन नेत्ररश्मिमन्दीकरणं मान्द्यं, वस्त्वग्रहणं तमोभ्रमं च जनयति ॥

वेदान्तार्था वित्त्यर्थाश्च साक्षिवेद्या अन्तरात्मदृश्याश्च भवन्ति । सत्यज्ञानम् असत्यं पराकृत्य भक्तौ मुक्तौ स्वात्मपरमात्मदर्शनाऽभिस्यूतं सत् स्थितिस्थापकं भवति । आत्मा ब्रह्मभावनां वर्धयन् परब्रह्मोपासनां कुर्यात्, अन्येषां ज्ञानप्रकाशदाता परमात्मा स्वयंज्योतिः सर्वज्ञः । 'आदित्यज्योतिश्चन्द्रज्योतिरग्निज्योतिर्वागादिज्योतिरात्मज्योतिर्हृद्यन्तर्ज्योतिर्विज्ञानात्मा' । 'तदस्य रूपं प्रतिचक्षणाय' । 'रूपं रूपं प्रतिरूपो बभूव' । 'एष हि द्रष्टा स्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मापुरुषः' । 'तदेतदक्षरं गार्गि द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' । 'न ततोऽन्यत् यद्विभक्तं पश्येन् जिघ्रेद् रसयेद्वदेच्छृणुयान्मन्वीत स्पृशेद्विजानीयात्'।'अन्यदिव स्यात्, अन्योऽन्यत्पश्येन्' । इति विशिष्टस्यैव द्रष्टृत्वात् । साक्षिणि ब्रह्मणि ब्रह्माऽनुभवः साक्षीश्वरे परब्रह्मणि परब्रह्मदृष्ट्या परब्रह्मानुभवः सम्पद्यते भक्तस्य ॥

स्थूलादिशरीरसहितस्याऽऽत्मनः 'अहं ब्रह्माऽस्मी' ति—अहंग्राह्यतत्त्वावच्छिन्नाऽऽत्माऽहं स्वशरीर्यक्षरब्रह्मरूपः परब्रह्मविशिष्टोऽस्मीति त्रिकुटिज्ञानं विवेकगर्भं ब्रह्मरूपाऽऽपन्नोपासनं मोक्षसाधनं भवति ॥

ज्ञानं त्रिकुटिगतकर्मभोक्तृज्ञप्तिरूपमात्मप्रकाशः, ज्ञप्तिश्च त्रिकुटिव्यापकपरब्रह्मबोधरूपा, भानं ज्ञप्तौ संभवति । सुवर्णेतिशब्देन रूपत्वपिशंगरूपतादात्म्यपिण्डधर्मादिज्ञप्तिवत् अहमिति ब्रह्मेतिशब्देन जडतत्त्वप्रकृतिचेतनाऽक्षरब्रह्मपरब्रह्मपर्यन्तज्ञप्तिजननात् , श्रुतिवाक्यजन्याऽऽत्मबोधाऽवगमे विशिष्टब्रह्माऽद्वैतभानस्याऽऽवश्यकत्वेन जायमानत्वात् तथाविधोपासनया ब्रह्मस्थित्या परब्रह्मज्ञप्तिर्जायते । ब्रह्मज्ञानहीनस्य तु स्वतन्त्रत्वन्मदादिज्ञातुर्भ्रान्तित्वव्यवहारः, विशिष्टब्रह्मातिरिक्तदृष्टिमत्त्वादज्ञानित्वव्यवहारः, परसत्तैक्याऽवित्त्वम् अज्ञानित्वम् । अज्ञानिनं भ्रान्तं त्वज्ञानवत्तयाऽनुभास्यति साक्षी । अभ्यासिनस्तु साक्षिणि परब्रह्मणि परब्रह्मदृष्ट्या परब्रह्माऽनुभवः आत्मसाक्षिकं स्वप्रकाशं ज्ञानं ज्ञेयविशिष्टसिद्धिरूपं ज्ञातृगतमपि साक्षिचैतन्यैक्यभावव्यवस्थितं पुरुषनिष्ठमपि ब्रह्मपरब्रह्मसाक्षात्कारं दिव्यं भवति सार्वज्ञ्यकल्पं सिद्धिरूपं भवति । तथा च तथाविधपात्रस्य कृते 'एकविज्ञानेन सर्वविज्ञानोपदेशात् सर्वं ज्ञानं सत्यमुक्तं भवति । आत्मनाऽनुप्रविश्य नामरूपव्याकरणकथनात् अनुप्रविष्टभगवज्ज्ञानैक्यभानं तत्कृतं सर्वं यथार्थम् । एतस्माज्जीवघनात्परात्परपुरुषोपास्तिकथनात् जीवघनत्वं ज्ञानघनत्वं यथार्थमेव । एतस्य महतो

भूतस्य निःश्वासात्मकऋग्वेदादिकथनात् वेद-ज्ञानस्य सर्वस्य यथार्थ्यमेव। येन रूपं रसं गन्धं स्पर्शमेतेनैव विजानीयादितिकथनात् विशिष्टज्ञानं सर्वमपि यथार्थमेव। परा यया तदक्षमरमधिगम्यत इति कथनात् परा-ज्ञानं यथार्थमेव। सौम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं विज्ञातं भवतीति कथनात् सर्वविज्ञानस्य यथार्थत्वमेव। स्वान्तर्यामिप्रेरितशास्त्रन्यायादिसहकृतपरिस्कृतप्रज्ञाविषयाऽर्थतात्पर्याऽनुसरणेन श्रुतिवैमत्यदोषाऽप्रसक्तिः। जडविशिष्टचेतनविशिष्टब्रह्मविशिष्टं परब्रह्मेति विशिष्टब्रह्माऽद्वैतं कार्यकारणात्मकं सुनिष्पन्नं वर्तते ॥

सर्वेषां साकारत्वेन प्रकाशकिरणज्ञानस्य पिण्डीभूतस्य द्रव्यगुणात्मकस्य किरणमित्यभिधानम्, किरणत्वं दीप्तिमत्तनुत्वम्। मनोबुद्ध्यहंकारचित्तश्रावणाद्यास्त्रिगुणधर्मा इच्छाद्याश्च चेतनंचैतन्या ज्ञानात्मकाः। सर्वमपि परमात्मकिरणात्मकं चेतनचैतन्यं सर्वं विशिष्टब्रह्माऽद्वैतम्। अप्रकाशं गुप्तप्रकाशम् अनाविर्भूतप्रभाकं रश्मिरूपं छायारूपं मायात्मकं तत्त्वमपि जडचेतनात्मकं ब्रह्मविशिष्टमिति ब्रह्मतः प्राप्तं चैतन्य चाक्षुषादिवृत्तिरूपं तत्तद्विशिष्टं विज्ञानं सत्स्वरूपमेव। नित्यचेतनज्ञानपरिणतवृत्तीनां विषयाऽवभासकत्वं ब्रह्मप्रतापादिति कापिलाद्युक्तबुद्धिधर्मज्ञानादीति विशिष्टब्रह्मसम्बन्धादेवेति तात्पर्यम्। अतः-'प्रमात्वं तत्सम्बन्धिनिष्ठत्व-तत्सम्बन्धितावच्छेदकताऽनवच्छेदकाऽवच्छिन्नाऽवच्छेदकत्वाऽनिरूपितत्व-ज्ञानीयतन्निष्ठप्रकारतानिरूपितत्वैतत्त्रितयसम्बन्धेन तद्धर्मविशिष्टविशेष्यताशालित्वं तत्प्रमात्वं प्रामाण्यम् ॥

ध्यानवृत्तौ प्रामाण्यमेव आत्मग्राह्यम्, आत्मादीनां च ब्रह्मसाक्षिग्राह्यं, ब्रह्मसाक्षी परब्रह्मैवाऽन्तर्यामी, स नित्यप्रत्यक्षदर्शी, एतत्प्रमात्वं स्वग्राह्यम्, परमात्मनि सर्वविद्यानां विरामात् नाऽनवस्था, विशिष्टब्रह्मणः आत्मनि स्थितत्वात् ॥

अथ-अप्रामाण्यं तु अविशिष्टभानादिकृतं यद्वाऽविद्याकृतम् अतोऽविद्यात्वम् अप्रमात्वमिति, तच्चापि ध्यानवृत्त्या ग्राह्यम्, तदत्र प्रमाऽप्रमा चाऽधिकं न्यूनम् ॥

अप्रमात्वं केन ग्रह्यते ?, ध्यानवृत्त्येति ब्रूमः, ध्यानवृत्तिर्हि सर्वविषयिणी प्रागेव सहोपलम्भनियमिता प्रामाण्याऽप्रामाण्यग्रहणे क्षणान्तरं न सहते, कर्मसाक्षिब्रह्म यथा स्वसार्वज्ञ्यस्य जीवात्मकृतकर्मग्रहविषयकत्वेक्षणान्तरं न सहते, कर्मोत्पत्त्यादिविषयकसार्वज्ञ्यात्, तथा ध्यानवृत्तिरियं सर्वत्राऽनुस्यूता समकालमेव प्रामाण्यमप्रामाण्यं चाऽऽवर्तयति, जीवात्मनि सर्वादिकत्वात्। ध्यानवृत्तिस्तु सदा प्रमा, धर्मभूतज्ञानस्वरूपत्वव्यवस्थापिकेति ॥

अनित्यज्ञानानां विषयाऽधीनात्मलाभात् विषयेष्वात्मलाभत्वं नित्यज्ञानतो वैलक्षण्यं धर्मभूतज्ञानस्य, भ्रान्तौ भ्रान्तित्वं चापि यथावस्थितव्यवहाराऽनुगुणज्ञानत्वेन प्रामाण्याऽव्यभिचारात्। अतः स्वतः प्रमात्वं च स्वाधीनज्ञाप्यवैशिष्ट्याऽऽकारकस्वविषयत्वम्। यद्वा-स्वाश्रयाऽऽकर्षिचिदंशाऽऽकृष्टग्रहविषयत्वं स्वतःप्रमात्वम्। अथ योगिनामीश्वराणामवताराणां मुक्तानां च ज्ञानं सदा प्रमाणं, विषया अपि तज्ज्ञानाधीनाः प्रमाणम्, सृष्टेर्विजातीयतत्त्वान्तराणां तज्ज्ञानप्रतापाऽधीनत्वात्। अहल्यायाः पाषाणत्वं पुनः स्त्रीत्वं, नहुषस्याऽजगरत्वं, सुघुम्नस्य स्त्रीत्वं, विष्णोर्मोहिनीत्वं, नारायणस्य हंसत्वं, वटपत्रशायित्वं गोपबालकवत्सगवादिबहुरूपधर्तृत्वं, एते व्यूहा विज्ञानमनुसरन्तीति विज्ञान प्रमा। तेषां प्रामाण्यं स्वग्राह्यं स्वाश्रयग्राह्यम्, स्वतस्त्वे प्रामाण्यवत एव ज्ञानस्य ग्रहात्। योगिप्रत्यक्षं तु अयोगिज्ञानभिन्नमात्ममननादिजन्यं ध्यानं निखिलज्ञानविषयकतया सकलप्रामाण्याश्रयविषयकम्। योगजधर्मस्य निर्विकल्पकज्ञानजनकत्वं सार्वज्ञ्यसम्पादकम् अनुगुणमेव। यस्य तु साक्ष्येव नास्ति मतस्तस्य तु स्वतःसामग्रीजन्यस्वस्वकीयग्राह्यत्वे विश्रान्तिं विनाऽन्या गतिर्नास्ति। साक्षिभास्ये सत्ख्यातिसत्प्रामाण्यं चाऽव्यभिचरत्यपि नित्यप्राप्त्याद्या विपक्षबाधाद्यास्त्वनादरणीयाः। उपक्रमितादिसिद्धान्तार्थप्रमात्वात्। अत एव गौतमेन चतुर्विधसिद्धान्ताः स्वस्वकुक्षौ प्रामाणिकाः स्वसूत्रेण प्रोद्दिष्टाः ॥ ५१९ ॥

**सर्वज्ञानां व्यभिचारः प्रामाण्ये नोद्भवेत् क्वचित्।**
**अन्येषां द्रावितः सोऽपि प्रसद्यस्तूषितो भवेत्॥५२०॥**

अतीन्द्रियपदार्थेषु कल्पना नहि शाश्वती ।
प्रबला कल्पना पूर्वां नश्छिन्नां प्रकरोति हि ॥५२१॥
तथापि ब्रह्मणोऽभ्यासे दार्ढ्यार्थे सूपयोगिनी ।
साक्ष्यर्पिता सुसुखदा सम्पद्यतेऽतिसत्फला ॥५२२॥
परं पुमर्थमुद्दिश्य यतन्ते यत्र पण्डिताः ।
तस्मिन्नारायणे स्वामिन्यर्पितेऽयं प्रमात्मधीः ॥५२३॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्य-न्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्य-कुशलवैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्ण-वल्लभाचार्यस्वामिनारायणविरचितायां तत्त्व-प्रभावल्यां प्रमिताख्ये तृतीयखण्डे प्रमा-प्रामाण्यख्यात्यादिनिरूपणनामा द्वादशः परिच्छेदः ॥१२॥

## अथ चतुर्थः प्रमातृखण्डः

नारायणोज्ज्वलवराऽसुविचित्र्यवस्था-
स्तद्व्यञ्जकाऽधिनिहिताऽर्थसमव्यवस्थाः ।
स्वात्मीयलब्धिधृतवेद्यसमन्विताऽर्था
नैजप्रमातृगणमर्थितमार्पयन्ति ॥ ५२४ ॥

नारायण इति । कल्याणकृच्चिन्तनीयम्, विशिष्टतया चिन्तितं सर्वमपि कल्याणकृत्, चिन्तनं ज्ञानं विज्ञानं सुचिन्तितं विशदीकृतं त्रिखण्डैरपि सविषयं स्वयं च । एतत्स्वरूपस्य सम्पादक आपूरकोऽन्वितो द्रष्टा चैतन्यत्वाऽऽपादकनिधानरूपश्चिन्तितोऽपि क्वचित्, अत्राऽऽवश्यकविधया पुनश्चिन्त्यते कल्याणायाऽभ्यस्यते । द्रष्टृत्वं साक्षित्वमधिष्ठातृत्वं व्यापृतत्वं च विहाय चिन्तनं कल्याणकृन्न भवति, नारायणेन–परब्रह्मणा, उज्ज्वलवरेण ब्रह्मधाम्ना, असुविचित्तिभिः–ईश्वरैः, अवस्थितैः–अन्तेवासिभिश्च जीवात्मभिः, समन्वितमेव चिन्तनं सत् कल्याणकृद्भवति । तच्चिन्तनार्थं जडतत्त्वैः प्रेर्यन्ते तत्त्विनः परस्मिँस्तत्त्वे, द्वारं मध्यमं, तद्विना परत्वमनुपपन्नं सत् जडनियामकं परनियाम्यं च मध्यमं द्वारं सूपपन्नं सिद्धयति, द्वारं स्वल्पज्ञं बहुज्ञं सर्वज्ञं चेति त्रेधा सृष्ट्यर्थमपेक्षितम् , कर्मसहितम् अल्पज्ञम् , ईशनसत्तासहितं बहुज्ञं, सर्वविशिष्टसत्ताऽध्यक्षं प्रकाशिसर्वज्ञं सर्वाऽन्वयि बृहच्चेति द्वारं यथायथम् उच्चावचं च त्रयमेव, द्वारि तु सर्वाऽविनाभावावस्थितं परमं द्रष्टृ एकमेवाऽद्वितीयम्, तदन्वितं द्वारं द्वाराश्रयं च चिन्तितं सन् कल्याणकृदिति भवति, कल्याणमिष्टमतश्चिन्तनं प्रेर्यते, साधनायां प्रवर्तनायां सामानाधिकरण्येन चैतन्यं प्रथमज्ञातृत्वं तद्व्यवस्थानविधायकं तद्ग्राह्यताद्वारभूतं गौणमपि स्वसजातीयतत्त्वजालं, तत्स्वरूपव्यूहनफलाऽभिमन्तृ स्वयं साध्यते, एवं च सति स्ववेद्यत्वं सिद्धयन् पुनरपि निर्णयगोचरतया प्रमातृगणं वेत्तृगणं यथापार्थक्यं साधयत् आर्पयन्ति–'सन्ति चेतनाः' इति । जडसार्थक्यम् आवेदयति–'अस्ति चेतन' इति ॥

किञ्च–प्रत्यक्षं हेतुभूतम् उपपादकं वा सत् परोक्षमपि साधयति । नाराः–जलानि, अयनानि–भूमयः, उज्ज्वलानि तेजांसि, वराः विवराः आकाशः, असवः–प्राणाः पवनाः, एतेषां विचित्तित्वं–ज्ञप्तिशक्तिरहितत्वम् , एतद्विधं यदवस्थानम् , विविधा तदवस्थाः, अर्थितः–अर्थात् जाड्यसार्थक्यार्थम् अजाड्यमार्पयन्ति, अजडान् चेतनान् तत्तदवस्था-साक्षाद्द्रष्टॄन् सद्रूपानाक्षिपन्ति । जडं जलादि परार्थम् , स्वार्थाऽभावात् , अन्यथा स्वरूपाऽभावात्, भावे वाऽन्यश्चेतयिता सिद्धयेदिति, स च यथासंभवं चतुर्विधो वाऽन्यतम इति सिद्धयति । वारिप्रभृतिपदार्थानामिव तद्गता ये वार्यादिव्यञ्जका रूपादयो वारिप्रभृतिद्रव्येष्वधिनिहिता आधेयतया आश्रितीकृता गुणकर्मशक्तिधर्मसंसर्गाद्या अर्थाः पदार्थाः, तेषां द्रव्यसमाः जडचेतनाऽपेक्षावत्यः समाना व्यवस्थाः स्थितयः, ता अपि स्वस्वपरिणतिकारणकार्यफलविनिमयादिसंभृतदृश्यतासार्थक्यार्थम्, अर्थितम् अपेक्षितम् अर्थतः आक्षेपादेव, नैजानां ये यथापेक्षं यथानुरूपम् प्रमातृगणं वा प्रमात्र्यन्यतमम् आर्पयन्ति स्वस्वामिरूपं प्रतिपाद्य च समर्पयन्ति सजातीयभोग्यवर्गाय क्षेत्रादि सस्यवर्गायेवेति । सस्यानि पराधिष्ठितानि दृश्यत्वात् क्षेत्रवत्, आत्मलब्धिः–क्षेत्राद्यात्मस्वरूपलाभः, महाभूतब्रह्माण्डादिस्वरूपलाभः, वेद्यत्वाऽन्वित एव सप्रयोजनः, अवका-

शाऽभावाद्या अपि आत्मलाभेन वेद्यत्ववन्तस्तत्कारण-गोचरज्ञप्तिमद्द्रष्टृवन्त एव स्वानावेदयन्ति। अर्थितम्-अर्थम् अर्थतः प्रामाणिकतया प्रसाध्य सप्रयोजनानि स्वान् कुर्वन्ति ॥

घटं जानामि, ज्ञानं वेद्मि, आत्मानं चिन्तयामि, ब्रह्माण्डानि चालयामि, सृष्टिं करोमि, सर्वं प्रकाशयामि, कृत्स्नं नियमयामि,-इत्यादिभिर्बाह्यज्ञातृत्वेन ज्ञानवेदितृत्वेनाऽऽत्मचिन्तयितृत्वेन जीवात्मनां,ब्रह्माण्डचालयितृत्वेन सृष्टिकर्तृत्वेन चेश्वराणां सर्वप्रकाशयितृत्वेन ब्रह्मणः कृत्स्ननियमनेन परब्रह्मणः सगुणस्य चेतनवर्गस्य प्रमातृतयाऽस्तित्वं निर्णीयते। विषयतासम्बन्धेन ज्ञानं शक्तिसम्बन्धेन धारणं ज्ञातव्यत्वसम्बन्धेन ज्ञातृत्वं विशिष्टत्वसम्बन्धेन नैजम् अनुभूतिसम्बन्धेन प्रमातृत्वं सम्प्राप्यत्वचैतन्यवत्त्वसम्बन्धेन चेतनीयत्वं यत्र यत्र तत्र तत्र अपृथक्सिद्धसत्तावत्त्वसम्बन्धेन तद्वत्त्वमिति यथायोग्यं तत्तदधिष्ठातारमावेदयति तत्त्वजालं, न्यूनाधिकं सर्वम् अधिष्ठातृविशिष्टमेव सूक्ष्मं स्थूलं वा कारणात्मकं कार्यात्मकं वा दृश्यद्रष्टृमिश्रितं संसारिजगत् मिथः सापेक्षतयाऽऽवेदयति यत्किमप्यवस्थास्थितम् ॥ ५२४ ॥

**नहि मायैकमिश्रत्वं कालमिश्रत्वमित्यपि ।**
**ज्ञानमात्राऽधिमिश्रत्वं ब्रह्ममिश्रत्वमित्यपि ॥५२५॥**

**नहीति**। अथ मा भवतु पृथक्चेतनः। चैतन्यधर्मिणी मायाऽजा नित्या सत्त्वादिमयी त्रिगुणा धर्माऽधर्मादिमती सामानाधिकरण्येन सुखदुःखयत्नेच्छाज्ञप्तिधर्मिणी कारणकार्यरूपैकैव स्वस्वरूपविकासिनी स्वविकसितचैतन्येन स्वज्ञप्त्या स्वस्वरूपाऽवधारिणी नित्यसर्वज्ञा स्वार्था स्वीयोत्पन्नचैतन्यशक्त्यात्मकभोक्तृपदार्था स्वार्थैवाऽस्तु ज्ञात्री भोक्त्री कर्त्री पोष्ट्री संहर्त्री चेति सैव सूक्ष्मं व्यापकं बृहद्ब्रह्म कारणं सैव चेतयित्री स्थूला कार्यं संसारस्वरूपिणी भोगतृप्त्या ज्ञानेन मुक्तिस्वरूपिणी च स्वलीलैव सर्वं सर्वतत्त्वात्मकं, तत्त्वानि च स्वयं स्वापेक्षस्वरूपेण भुंक्ते स्वां च स्वतन्त्रा, तथा च कृतं पृथक्चेतनतत्त्वेन, मरणोत्तराऽनुपलम्भात् कारणे लयात् कारणऽधिस्थितत्वात् कारणाज्जायमानत्वात् कारणस्वभाववत्त्वात् कारणाऽविनाभावात् कारणाऽभिव्यज्यस्फूर्तिमत्त्वात् कारणिकसंस्कारवत्त्वात् कारणिकान्तरबाह्यकरणादिप्रवृत्तिमत्त्वात् कारणिकबाह्यवायुप्राणात् कारणिकतेजःप्रकाशवत्त्वात् कारणिकाऽऽभिरूप्यप्रभावत्त्वात् रूपस्वरूपबिम्बप्रतिबिम्बादिसामर्थ्यवत्वात् जलीयकारणिकतृप्तिचैतन्यादिप्रवाहितत्वात् कारणिकयावदशनपानादिप्रदत्वात् कारणिकधातुचैतन्यवंशादिमत्त्वात् कारणिकशारीरकीयतत्त्वान्वितभानसंभृतत्वात् कारणिकयावद्बीजस्वरूपत्वाच्चेति सैव जडाऽपि उद्भूतचैतन्या सैव चेतना मिश्रिता श्रीहरिणा कृष्णा रामाऽऽत्मप्रमा पुंरूपा पुंस्त्रीरूपा नपुंसकी चेति कृतं तदतिरिक्तनारायणतत्त्वेनेति ॥ तन्न ॥

भोग्यप्रधानस्वभावस्य स्वीयभोक्तृत्वेऽपि शाश्वतभोग्यत्वाऽनपायात्, भोग्यत्वाऽविगमे चैतन्ये तु कादाचित्के मोक्षप्रस्तावविलयात्, शास्त्रप्रयोजनस्य फलगुत्वे प्राप्ते शास्त्राधारयत्नेच्छाज्ञानानां निर्विषयकत्वे विलयादेव शास्त्रीयवृद्धानां नैष्फल्ये तदवलम्बिताऽऽज्ञाप्यवृद्धानां सुतरां वैफल्ये प्रवाहहानौ अप्रवाहिताहतायाः शाश्वततायाः विलये मिश्रहान्या स्वरूपहानिमहापत्तौ प्रकृतिस्वरूपप्रस्तावः शून्यतां व्रजेदिति सर्वहान्यापत्तेः ॥

अत एव च क्षणिकसंवृतेर्वा मिथ्यासंवृतेस्तु सुतरां निजनैसर्गिककारणत्वं व्याहतमेवोक्तरीत्या सर्वथा विचाराऽसहताऽवशिष्यते। शून्ये फले प्रामाणानां शून्यत्वे पर्यवसानात् ॥

**कालेति**। अथाऽपि स्यात् कालपुंमिश्रिता कालतत्त्वपरिपाकमयी स्वविकृतिरूपेयं जडचेतनमिश्रा तदाकारोत्पन्नसशक्तिककालमात्रकारणिका सृष्टिः, कालः पुरुषो ब्रह्म भोक्ता काली शक्तिश्च भोग्या भोक्त्रभिन्ना तामसी ज्ञानाऽज्ञानादिमयी सृष्टिरिति। काले निवेशो मोक्षः कालाद् विकासः सृष्टिरिति कालो ब्रह्म भोग्यभोक्तृमिश्रतत्त्वमिति ॥ तन्न ॥

कालस्य क्रमिकह्रासधर्मप्राधान्येन ह्रासधर्मिण्यह्रासधर्मस्य विरोधेन सर्वसंहृतिक्रमधर्मे कदाचित्समापन्ने स्वस्यापि कारणिकस्वह्रासे शून्यत्वमापद्येत, अशून्यत्वे वा ह्रासधर्मिणि चेतनाशक्तीनां समानाभिहारे जडतयाऽवशिष्टस्य तस्य तात्त्विकभावफल्गुत्वे

निरपेक्षशाश्वततया नैष्फल्येऽपि प्रसह्य शून्यत्वाऽऽपत्तेः, ह्रासधर्मिणि पुंसि मोक्षेऽपि ह्रासाबाधे नैजाऽबाधवत् चेतनांऽशाऽऽरूढह्रासाऽबाधेन मोक्षार्थकशास्त्रनैष्फल्ये यत्नेच्छाज्ञप्तीनां निर्विषयकत्वेऽनवलम्बने च ज्ञातृत्वहानौ स्वरूपहान्यापत्तेरनिवार्यत्वात् ॥

**ज्ञानमात्रेति** । अथाऽस्तु ज्ञानमिश्रितमज्ञानं शाश्वतं कारणं तच्चैतन्यमात्मवर्गस्तदचैतन्यं जडवर्गस्तन्मिश्रा सृष्टिः सफला साधिकारा ब्राह्मी मायात्मिका स्वभोग्या स्वभोक्त्री स्वधर्मिणी स्वान्वयिना स्वज्ञात्री स्वानन्दयित्री स्वतामसादिविशेषमयी स्वशक्तिकचैतन्यचिन्मयी शाश्वती सृष्टिः शाश्वत्यसृष्टिश्चेत्युभयमयी चिरन्तनव्यवस्थान्वयिनी भागे बन्धमयी भागे मोक्षमयी सूक्ष्मा निराकृतिः स्थूला साकृतिर्मायाऽविद्यामयी स्वप्रतिभास्या स्वप्रतिभासिका स्वाऽविद्यामिश्रा स्वविद्याऽमिश्रा स्वबृहत्स्वरूपेऽपराभववती अबृहत्स्वरूपे पराभववती निम्नोन्नताऽवस्थानुषक्ता शाश्वती कस्या अप्यनुपपत्तेरगोचरा स्यादनाद्येकतत्त्वमप्यपि नान्तरीयकतत्त्वद्वयाऽवलम्बिनी अनुकूलप्रतिकूलफलिनी स्वरमणवती स्वान्तश्चरसमाहारवती च निर्गुणा निराकारा निष्क्रिया निर्गताऽञ्जनाऽन्ततोऽनिर्वाच्यतामापन्नाऽप्रतिपक्षप्रयोगार्हेति ॥ तन्न ॥

अल्पत्वसापेक्षबृहत्त्वधर्मिणी चापि स्वल्पत्वशाश्वती बृहत्त्वज्ञप्तिनाश्याऽपि स्वल्पत्वधर्मिणी व्याप्यान्विता व्यापिका व्याप्यविगमे व्यापकत्वविगमा सापेक्षविगमे निरपेक्षस्वरूपा निरपेक्षत्वऽपेक्षितस्वरूपशून्या बृहत्स्वरूपमात्राऽन्ततो बृहद्धर्मिण्यवशिष्येत कारणस्वरूपहानेरन्ते इव भाविसृष्टेः पूर्वस्मिन्क्रमेऽनुपस्थिताऽऽत्मलाभे इव गतेऽपि प्रवाहेऽन्ते रूपहानेः तदुत्तराऽऽरम्भक्रमे कारणिकानुपलब्धेरिदानीन्तनीयसर्वविलयाऽऽपातात् तत्रापि शून्यत्वाऽवर्जनीयात् आत्महानिरापद्येत सत्त्वे वा बृहत्त्वमात्रहानिरापद्येत अबृहत्त्वहानौ वा मोक्षप्रस्तावहान्यापत्तेरमोक्षप्रस्तावहानौ वा शास्त्रविफलत्वापत्तेः यत्नेच्छाज्ञप्तीनां निर्विषयकत्वप्रयुक्तलये तद्वत्त्वे शून्यस्वरूपे स्वरूपेऽपि शून्ये सर्वहान्यापत्तिदोषतादवस्थ्यात् ॥

**ब्रह्मेति** । अथापि स्याद् ब्रह्ममुख्या चेतनप्रधाना शक्तिर्गौणा सकारणिका चेतनजडमिश्रा सृष्टिरिति, भोगे शक्तिर्भोग्या, भोक्ता चेतनः स्वोद्भावकः स एव शक्तिविशिष्टः संसारः, शक्तिलीनोऽसंसारीति सूपपद्येत मोक्षप्रस्ताविशास्त्रव्रातम् ॥ वृक्षबीजांकुरशाखादिवत् सृष्टिप्रवाहः सबीजः, निर्बीजत्वे मोक्षः, स्वयं शक्तिशाली स्वयं च शक्त्यशालीतिव्यवस्थानात् ॥ तदपि न ॥

यदि शक्तिर्नित्या यत्र कुत्रापि समर्था स्वसामर्थ्यं न व्यभिचरति स शक्यः शक्तिसमनियतोऽर्थोऽवश्यमभ्युपेतव्यः, अन्यथा शक्तित्वं व्याहन्येत, शक्तिमत्त्वमपि व्याहन्येत, अशक्तस्य कारणत्वं न स्यात्, तथा सत्यसंसारप्रसक्तिः । अथ विलीना शक्तिरंशरूपा गुणस्वरूपा स्वीयसूक्ष्मशक्त्याऽन्विता न स्वीशक्यविधुरा, शक्यार्थवृक्षविधुराऽपि न शक्यबीजविधुरा, शक्तस्वामिविधुरा तु सुतरां न, तदाधारत्वात्, तच्चैतन्यात्मकत्वात्, शिवेच्छया तच्छिवाकृतशिवचैतन्यानामानन्त्येन शक्यः संसारो वर्तमानाऽवस्थः, अशिवाकृतस्तु पुनः शिवस्वरूपापन्नो मोक्षावस्थ इति व्यवस्थानमिति चेत् ? न, शिवस्य शक्त्यधीनस्य स्वभोगे नित्यस्य भोग्यमिश्रे भोक्तृभोग्योभयधर्मिणि तदुभयसातत्येन सततसंसारित्वापत्तिः, तदन्यतराऽसातत्ये ऐक्येऽसंसारापत्तिः, कदाऽप्यसंसार इति । तथासति दृश्यविरोधः, यथा बन्धनं तथैव निर्बन्धनमित्यपि तदाशामात्रम्, फलाऽभावात् शास्त्रनैरर्थ्यम् । शक्त्यधीनभोक्तृत्वे प्राधान्येंऽशभंगिता, द्वयोरप्राधान्ये च सति नियामकाऽभावेऽव्यवस्थाऽनवस्थाद्यापत्तिः । अथ—शक्तौ संसारित्वं शिवे नेति तु तव विशिष्टसंसारिमिश्रितकारणतासिद्धान्तहानिः, प्रत्युत विलक्षणविशिष्टकारणविशिष्टकार्यत्वविजयः । तत्र हि कर्मकृतधर्मा अकर्मिणि शरीरिणि न, किन्तु कर्मिणि अदृष्टवति नियामकभिन्ने मायाशरीरिणि चेतनवर्गे एवेति नोक्ता विरक्तयः ॥

अथ स्वयंब्रह्मैकमपि स्वांशद्वयं मायां च चेतनाँश्चोद्भाव्य संसारं विरच्य स्वयं तत्र लीलया रमते स्वयं च चिरेण कदाचित्संहरते, तस्याऽहम्ममते संसारस्वरूपे, अंशद्वयलये मुक्तिः स्वस्यैव स्वांऽशात्मकस्वस्येति अमिश्रमपि स्वयं मिश्रीभवत् भोक्तृ रन्तृ

बोद्धृ ज्ञातृ नेतृ चेति शुद्धं ब्रह्म शाश्वतं शास्त्रोदित-साधनलभ्यमिति लब्धा अंशो लभ्योंऽशी स्वयमिति न मिश्रीकरणव्याप्यादोषा अमिश्रे ब्रह्मणीति चेत् ?, ॥ तदपि न ॥

किं नामाऽत्रांऽशत्वम् ?, न तत्सत्तातिरिक्त-सत्ताकत्वाऽभाववत्त्वम् , नित्यस्वरूपे नित्यगुणादौ व्यभिचारात्, भावाऽभावस्य भावसत्तातिरिक्ताऽभावसत्तावत्त्वेनाऽनैकान्त्यात् । न तदतिरिक्त-निरूपिताऽऽधेयतानधिकरणत्वम् , अविद्यानिरूपिताऽऽधेयताऽनधिकरणत्वेनाऽऽत्मसु तदंशत्वाऽभावेन व्यभिचारात्, बाधाच्च । नापि तदवयवत्वम् , असिद्धेः, न वा तद्गुणवत्त्वम् , असंभवात्, अन्यत्राऽन्यगुणाऽभावात्, अन्यथा सांकर्यात् न तदपृथक्सिद्ध-सजातीयज्ञप्तिधर्मकत्वम् , स्वस्मिन्नंशिनि तदंशत्वापत्तेः । नापि नियाम्यत्वेन विशेषणीयम् , व्यधिकरणत्वेनापि असिद्धेः, सामानाधिकरण्ये वा व्यर्थांऽशत्वम्, नियाम्यत्वस्यैव सुवचत्वात् । न वा तदीयाऽनेकरूपत्वम् , अन्यतरव्याहतेः, क्रमेण सर्वव्याहत्यापत्तेः । एकत्वे तु अंशत्वाऽसंभवात्, तद्भिनांऽशित्वाऽनिरूपणात्, तत्त्ववैपरीत्ये वा मोक्षव्याहत्या मूलव्याहतिप्रसंगात्, अप्रसंगे वा निरन्वयत्वे तदभावे वा सिद्धान्तस्य शुद्धैक्यस्य शून्यता स्यात्, तथासति निष्प्रयोजनं शास्त्रमापद्येत । किं तर्हि ?, उच्यते—

तद्गुणसजातीयविशेषगुणान्यतमवत्त्वं तदंशत्वं, तत्तु नित्यानामपि तन्नियम्यचेतनानां शरीरविधानां विशेषणानामपि स्यात्, तव तु मतं व्याहन्येतेति । विद्याऽविद्यांशवत्त्वात्तु सुतरां विरम्यं शुक्ले कज्जलान्वयविचारादिव ॥ वस्तुतस्तु—

ब्रह्मत्वविशिष्टत्वमंशत्वम् , वैशिष्टं च—स्वाधिकरणवृत्तितानिरूपितशक्तित्वाऽसमानाधिकरणचित्त्ववत्त्वसंसर्गेण, विद्याशक्तौ विद्यात्वात्मकचित्त्वसत्त्वेऽपि शक्तित्वसामानाधिकरण्यवत्त्वेन तत्र नातिप्रसक्तिः, सार्वज्ञ्ये शक्तित्वसत्त्वेन नाऽतिप्रसंगः । तत्तु चिन्त्यम् । शुद्धाऽद्वैतात्मकत्वाऽसिद्धेः, भेदसंसर्गानंगीकारात् ॥ स्वव्यभिचारित्वसम्बन्धेन यद्यत् ब्रह्मत्वविशिष्टं तत्तदन्यचेतनत्वं स्वावच्छिन्नांऽशत्वमिति तु साधु ॥५२५॥

**ब्रह्म द्वेधाऽभवन्नैजं वामदक्षं स्वरूपयत् ।**
**तन्न,वामस्वरूपस्य त्याज्यत्वोक्तेर्विघाततः॥५२६॥**

**ब्रह्मेति** । अथैकमेवाऽद्वितीयमिति स्वयं ब्रह्म स्वं द्वेधा न्यरूपयत्, एकं दक्षं पुंरूपं द्वितीयं वाम नारीरूपं, नारी सा माया नरः स आत्मा, माया सत्त्वमयी आत्मा चित्त्वमयोऽपि, सत्त्वं चित्त्वं ब्रह्मात्मकम् आनन्दब्रह्मात्मकं, तस्मात् सच्चिदानन्दब्रह्मैव सच्चिदानन्दजगन्मयं सत् स्वयमेव चित्त्वेन भोक्तृ सत्त्वेन भोग्यं सम्पन्नमिति स्वानन्दघनस्योभयात्मकत्वादेवैकमपि द्वेधा भवत् द्वेधैक्यं निराबाधमिति प्रमाता स्वयं ब्रह्मैवेति ॥ तन्न ॥ माया त्यक्तव्या ब्रह्म प्राप्तव्यमिति चिदंशो मायां विसृज्याऽऽनन्दांशमाप्नुयादिति परिशोधितार्थस्य व्याघातः स्यात्, ब्रह्मस्वरूपस्यैव त्याज्यत्वमत्याज्यत्वं चेति एकत्राऽसंभवात् शास्त्रोपदेशव्यर्थत्वेनाऽप्रवृत्तेस्तदिच्छाज्ञानाद्यनवकाशात् मोक्षाशायाः शून्यत्वे पर्यवसानात् । अत्र सर्वेऽपि एतद्विधब्रह्मवादा विघातान्निरस्ता एव ॥ ५२६ ॥

**अथाऽऽत्मा चेश्वरात्माऽपि ब्रह्मात्मा तन्नियामकः ।**
**परमात्मेति श्रुत्युक्ताः प्रमातारः स्वगोचरे ॥५२७॥**

**अथेति** । विषयस्वरूपादियथार्थमितिवत्त्वं प्रमातृत्वम्, तत्तत्प्रमाणितगोचरफलवत्त्वं प्रमातृत्वं, तत्तत्साक्षात्कारवत्त्वं तत्प्रमातृत्वं, तत्तत्करणव्यापाराऽन्वितविषयिसत्तावत्त्वं तत्प्रमातृत्वम्, तत्तदनुभवाऽऽहितसंस्कारोत्तेजितयथार्थस्फूर्त्याश्रयत्वं तत्तत्प्रमातृत्वम्, अकरणिका अव्यापारिकाश्च या या ज्ञप्तयस्तदन्ययथार्थज्ञप्तिमत्त्वं प्रमातृत्वम्, तेनाऽऽलयविज्ञानिवारणम्, नित्यविज्ञानिसंग्रहणं च । यद्वा—'अहं प्रमाते'तिप्रतीतिविषयविशेष्यत्वं प्रमातृत्वम्, यथार्थज्ञप्तिमत्त्वं, वा पौरुषेयबोधवत्त्वं, वा वृत्तिव्याप्तिगोचरज्ञातृत्वं, वा सम्यग्दर्शित्वं, वा उदितविमलविज्ञानित्वं, वा असंसृष्टज्ञप्तिभिन्नज्ञप्तिमत्त्वं, वा दोषजन्याऽन्यप्रमितिमत्त्वं वा गुणविशिष्टज्ञानवत्त्वं, वैशिष्ट्यं च तदन्याऽजन्यत्वसम्बन्धेन, वा सर्वज्ञानानां यथार्थस्वरूपवेतृत्वं, वा साक्षिचैतन्याऽनुसृतचैतन्यवत्त्वं, वा चिच्चैतन्यात्मकभानवत्त्वं, वा प्रातिभज्ञानवत्त्वं, वा तत्त्वदर्शित्वं, वा निदिध्यासनप्रवाहि-

वित्तिमत्त्वं, वा ज्ञाततागामिधीमत्त्वं, वा प्रामाण्यग्राहकत्वं, वा ख्यातिस्वरूपवेतृत्वं, वा तदप्रामाण्याऽग्राहकयावज्ज्ञानग्राहकसामग्रीजन्यग्रहवत्त्वं, वा तादृशग्रहत्वव्यापकोपाधिमज्ज्ञप्तिमत्त्वं प्रमातृत्वं, व्यापकत्वं समनियतत्वम्, तदतिरिक्तवृत्तिभिन्नत्वं वा, तेन न्यूनज्ञप्तिसंग्रहः, वा प्रातिस्विकतत्तदंशविषयिमात्रवित्तिमत्त्वं, वा चित्त्वमेव प्रमातृत्वं, स्वज्ञातृत्वस्य कदाप्यनपायात् ॥

नित्यसर्वतत्त्वप्रत्यक्षदर्शित्वं परब्रह्मणि ब्रह्मणि मुक्तेष्वपि च प्रमातृत्वम् । एकविज्ञानेन सर्वविज्ञानित्वं विशिष्टब्रह्माऽद्वैतवेदितृत्वं प्रमातृत्वम् औपनिषदीयोपास्तिफलवत्सु दिव्यसाक्षाद्दृष्टिमत्सु विशिष्टाक्तदर्शिपुरुषेषु । स्वगोचरसामान्यवृत्तिमत्तासम्बन्धेन परमेश्वरीयप्रमावत्त्वं प्रमातृत्वं सर्वचेतनसाधारणमपि न तत्साक्षात्कारिस्वीयसत्ताकप्रमावत्त्वम् । तद्योग्यतावत्त्वं तु यथाकथञ्चित् स्यात्, मुक्तौ तथात्वलाभात् । विशिष्टैकत्वमनुपश्यतस्तु सर्वथा प्रमातृत्वमिति तु श्रुतिसिद्धम् । प्रमावत्त्वं प्रमातृत्वमिति तु सर्वतन्त्रसिद्धम्, प्रमेयप्रमाणप्रमितिज्ञातृत्वं प्रमातृत्वमिति तु प्रतितन्त्रसिद्धम्, तादृक्षं प्रमातृत्वं सर्वेषां स्वत्वव्याप्यमिति, चेष्टाप्रधानानामपि देहिनां निजीयप्रमावत्त्वं भवत्येव, तृणस्तम्बकणबीजाद्या अपि सप्राणाः स्वयोग्यविषयज्ञत्वेन प्रमातारो भवन्ति, चेतनाः सर्वे प्रमातारः, ग्राह्यवर्ज्यविषयेषु प्रमातारो भवन्ति, यमलार्जुनवत् वृन्दावनीयोद्यानीयपुष्पफलवल्लीवृक्षादिवत् तुलस्यादिवत्, तथा च चेतनाः प्रमातारः, अचेतना अप्रमातारः, नहि त्रिगुणितत्त्वानि ज्ञातॄणि, ज्ञानाऽभावात्, जडे बुद्धितत्त्वे ज्ञानं पुण्यमिति तु प्रक्रियाप्रलापः, नहि चेतनं विना चैतन्यं भवितुमर्हति, नहि चिच्छक्तिं विना चित्त्वं ज्ञप्तिमत्त्वं सप्रकाशत्वं भवितुमर्हति, सत्त्वगुणस्य सप्रकाशत्ववर्णनं तु आत्मप्रकाशानुकूलस्वच्छतायोगित्वात् चन्द्रवत् प्रकाशित्वे तात्पर्यात्, चन्द्रमसि सूर्यदत्त एव प्रकाशः, स्वच्छद्रव्यं विशेषतः प्रकाशाऽऽधानं भवतीति आदर्शवत् उपचर्यते, बुद्धिप्रकाशवादिनां पौरुषेयप्रकाशवत्तया बुद्धित्वं प्रकाशत्वं प्रकाशित्वं च, चाऽन्यथा, चेतनं विना बुद्धिः क्वाऽस्तीति ?, तेषामेव पाषाणादिव्यूहेषु ब्रह्माण्डगोलकेषु च जडेषु सर्वत्र मार्गणनैष्फल्यं विना नाऽन्यत् फलम्, चेतनसत्त्वे धीश्चेतनशून्येऽधीरिति, अन्यथा पाषाणोऽपि सृष्टिसञ्चालनं कुर्यात्, तस्यापि त्रैगुण्यात्, किन्तु न तथा, अतश्चेतनानां सप्रकाशत्वं, जडानां तु चेतनप्रकाशवत्तया प्रकाशित्वम्, यस्य ब्रह्मणो भासा सर्वमिदं सूर्यग्रहविद्युदग्न्याद्या अनुभान्ति, अतोऽन्ततः परतः प्रकाशितास्ते न स्वप्रकाशाः, वैराजेश्वरोऽपि पूर्णदेहो जले सम्भूतोऽपि नोदतिष्ठत्ततो विराट्, किन्तु ब्रह्मप्रवेशात् प्रकाशाधानात्मकनिवेशादेवोदतिष्ठत्ततो विराट्, तद्वदीश्वरा ब्रह्माण्डज्ञाः बहुज्ञास्तथाप्रमाणप्रमातारो भवन्ति, मुक्ताः सार्वज्ञ्यप्रमाणप्रमातारो भवन्ति, ब्रह्म प्रकाशरूपं स्वरूपं स्वयं प्रमातृ भवति, ज्ञानं प्रमातृ स्वयंप्रकाशत्वात् ज्ञाता प्रमाता प्रमाप्रकाशवत्त्वादित्यनुमितम्, परब्रह्म नित्याऽलुप्तदृष्टिः, तया प्रकाशो ब्रह्मापि नित्याऽलुप्तदृष्टिः, तद्वतया मुक्ता अपि सर्वप्रकाशा नित्याऽलुप्तदृष्टयः, तदैश्वर्ययोगादीश्वरा अपि प्रधानपुरुषादपि समारभ्य विश्वसृड्वेधऽपर्यन्ता ईशाः स्वयोग्यबहुप्रकाशाः स्वस्वविषयप्रमातारः, योगाभ्यासियतिमुनिसंयमिदिव्यदृक्पुरुषा अपि स्वस्वयोग्यविषयप्रमातारः, देवर्षिपितरोऽपि स्वस्वयोग्यविषयप्रमातारः, मानवाद्यास्तु स्वस्वयोग्यस्वल्पविषयप्रमातारः. एते अतिदूरत्वातिसामीप्येन्द्रियघातमनोऽनवस्थानसौक्ष्म्यव्यवधानसमानाभिहाराऽनन्वयाऽशक्तिद्वारवियोगाऽभावादिप्रतिबन्धकदोषपराभवाऽधिक्षिप्ता यत्र यत्र तत्र तत्र त्वप्रमातारो भवन्ति, तथापि पाषाणे इव सर्वथा प्रमातृत्वं न व्यभिचरति बाध्यते वा, स्वस्वरूपप्रमातृत्वस्याऽबाधितत्वात् । तस्मात्संक्षेपाच्चतुर्धा प्रमाता— १.परमात्मा, २.ब्रह्मात्मा, ३.ईश्वरात्मा, ४.जीवात्मा चेति ॥

जीवात्मानो विविधप्रक्रियाभिर्निर्णीता अपि निर्णेतॄणां स्वभावादेव प्रभासकत्वं सार्वदिकं सर्वाऽवस्थानिकं चिच्चैतन्यस्वरूपित्वं ज्ञानाऽब्धित्वं स्वरूप एवेति कर्मफलभोक्तृत्वसमानाधिकरणप्रमातृत्वं प्रमागुणवत्त्वं सर्वेषां निरपवादम् ॥. आगन्तुकज्ञानवत्त्वमिति तर्कितं तु कुतर्कितमेव, चित्स्वरूपस्य नैसर्गिकचित्त्वचैतन्यवत्त्वेनाऽऽगन्तुकज्ञप्तिमत्त्वस्य तु स्वप्रक्रियावाटपतितग्रावोत्सारणवत् यत्नायितत्वं

बोध्यम्, न त्ववस्तुकरणत्वम्, सत्यस्य श्रुतिनिर्णीतस्याऽन्यथाकर्तुमास्तिकानामसामर्थ्यात्, चतुर्विधाः सिद्धान्ता गौतममुनिना स्वीकृताः सूत्रेण, प्रतितन्त्रसिद्धान्तिवेदान्तसिद्धान्तेन सिद्धस्य ज्ञप्तिस्वरूपज्ञात्रात्मनः स्वप्रकाशस्याऽपवर्गदशायामप्रकाशतास्वीकारे आगन्तुकप्रकाशतामात्रस्वीकारे वा सूत्रमप्रामाणिकसिद्धान्तप्रतिपादकमप्रामाणिकं स्याद्वा प्रामाणिकत्वे प्रतितन्त्रसिद्धान्तप्रमात्वप्रतिपादनेन स्वप्रकाशता स्वीकृतैव स्यादित्यतस्तन्मतं चिन्त्यम् ॥

**आत्मेति** । जीवात्मानो-ज्ञानघनाश्चेतनाः सच्चिदानन्दद्रव्यस्वरूपाः ईश्वरात्मनः—ऐश्वर्यघनस्वरूपाः सच्चिदानन्दाः सृष्टिनेतारो द्रव्यस्वरूपाः । ब्रह्मात्मा—ब्रह्ममुक्ताः, ब्रह्मधामाऽक्षरपुरुषोऽक्षरलोकश्च, प्रकाशघनः पुरुषविधो ब्रह्मात्मा । एतेषां सर्वेषां स्थानादीनि, च, चकारेण चञ्चला माया च त्रिगुणा, तेषां सर्वेषां नियामकः, नियन्ता नियमनशीलः, तदनुवृत्तिशीलतानिर्वाहकस्वतन्त्रव्यापकसत्तावान् परमात्मा परब्रह्मेति, एते चेतना अमायाः स्वस्वगोचरे सर्वतत्त्वेषु धामतत्त्वयुक्ततत्त्वेषु प्रकृतिप्रधानपुरुषादीश्वरतत्त्वेषु च जडेषु विषयेष्वपि स्वस्वयोग्येषु विषयेषु ज्ञप्तिमन्तो यथार्थज्ञातारः प्रमातारः श्रुतिभिरुच्यन्ते, तानि श्रुतिवाक्यानि,—यथा **जीवात्मानः**—

'तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि' । 'प्रतिबोधविदितं मतममृतत्वं हि विन्दते' । 'इह चेदवेदोदथ सत्यमस्ती'ति । 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' । 'बुद्धेरात्मा महान्परः' । 'अव्यक्तात्पुरुषः परः' । 'स्वप्नान्तं चोभौ येनानुपश्यन्ति' । 'वेद आत्मानं जीवमन्तिकात्' । 'एवं मुनेर्विजानतः आत्मा भवति' । 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' । 'तमात्मस्थं येऽनुपश्यन्ति धीराः' । 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्' । 'इन्द्रियाणां पृथग्भावमुदयाऽस्तमयौ च यत्,पृथगुत्पद्यमानानां मत्वा धीरो न शोचति' । 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' । 'तदक्षरं वेदयते यस्तु सौम्य स सर्वज्ञः सर्वमेवाऽऽविवेशे'ति । 'एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते' । 'न कम्पते सः' । 'शान्ता विद्वांसो भैक्षचर्यां चरन्तः' । 'तद् यद् आत्मविदो विदुः' । 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते, तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति' । 'यदा पश्यः पश्यते रुक्मवर्णम्' । 'सत्येन लभ्यस्तपसा ह्येष आत्मा' । 'अन्तः शरीरे ज्योतिर्मयो हि शुभ्रः' । 'यं पश्यन्ति यतयः क्षीणदोषाः' । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्फलं ध्यायमानः' । 'सम्प्राप्यैनमृषयो ज्ञानतृप्ताः' । 'वेदान्तविज्ञानसुनिश्चितार्थाः' । 'विज्ञानमयश्चात्मा' । 'अयमात्मा चतुष्पात्' । 'वैश्वानरः—तैजसः···प्राज्ञः···आत्मा' । 'मितेरपीतेर्वा मिनोति' । 'श्रोत्रपतिर्विज्ञानपतिः' । तस्यैष एव शारीर आत्मा' । 'अन्योऽन्तर आत्मा विज्ञानमयः' । 'कोऽयमात्मेति' । 'यदेतत् हृदयम्' । 'संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि' । 'प्रज्ञानेत्रं प्रज्ञानेत्रो लोकः' । 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्पः' । 'रमणीयचरणाः रमणीयां योनिमापद्येरन्' । 'आत्मानमुपास्से' । 'जीवाऽपेतं वाव किलेदं म्रियते न जीवो म्रियते' । 'विज्ञानेनैव विजानाति विज्ञानमुपास्स्व' । विज्ञानं त्वेव विजिज्ञासितव्यम्' 'मतिं भगवो विजिज्ञासे' । 'नाऽस्य जरयैतज्जीर्यति' । 'न वधेनाऽस्य हन्यते' । अथ ये चाऽस्येह जीवा ये च प्रेता' । 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्मात् हृदयमि'-ति । अथ य एषः सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते एष आत्मा' । 'यो ज्ञाता तं विन्दते' । 'एष आत्मा न नश्यति' । देवा वा सुरा वा पराभविष्यन्ति' । 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेद जिघ्राणीति स आत्मा घ्राणाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वाग् अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम्, अथ यो वेदेदं

मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः, स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते'। देवा आत्मानमुपासते'। 'एष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः'। 'विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते'। 'स यत्रैतत्स्वप्नायाऽऽचरति'। 'यदा सुषुप्तो भवति'। 'पुरीतति शेते'। 'आत्मनस्तु कामाय सर्वं प्रियं भवति'। 'स ब्रह्मवित् स लोकवित् स वेदवित् स भूतवित् स आत्मवित् स सर्ववित्'। 'अत्राऽयं पुरुषः स्वयंज्योतिर्भवति'। 'अयं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तः'। 'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्'। 'अयं शारीर आत्मा प्राज्ञेनाऽऽत्मनाऽन्वारूढमुत्सर्जन् याति'। 'साधुकारी साधुर्भवति'। 'आत्मनस्तु कामाय सर्वं प्रियं भवति'। 'ज्ञाज्ञौ द्वावजावीशाऽनीशावजा ह्येका भोक्तृभोगार्थयुक्ता'। 'भोक्ता भोग्यं प्रेरितारं च मत्वा'। 'समाने वृक्षे पुरुषो निमग्नः'। 'आराग्रमात्रोऽप्यपरोऽपि दृष्टः'। 'वालाग्रशतभागस्य शतधा कल्पितस्य च, भागो जीवः स विज्ञेयः स चाऽऽनन्त्याय कल्पते'। 'एषोऽणुरात्मा चेतसा वेदितव्यः'। इत्याद्याः श्रुतयो जीवात्मनां ज्ञातृत्वप्रमातृत्वोपासितृत्वसगुणत्वनित्यज्ञानस्वरूपत्वचैतन्यवत्त्वचित्त्वनित्याऽणुत्वद्रव्यत्वसर्वशक्तिमत्त्वादिधर्माणां स्वरूपसच्चेतनत्वं चानन्दित्वादि वर्णयन्ति ॥ ५२७ ॥

**जीवो नित्यः शाश्वतश्च प्रकाशात्माऽणुरन्वितः।**
**ब्रह्मणा परमेशेन शरीरं चेतनः सुवित् ॥५२८॥**
**ज्ञाता भोक्ता कर्मकर्तोपासको ज्ञानवान् स्वयम्।**
**ज्ञानी प्रमाता यत्नार्थी मोक्षार्थी च प्रकाशवान् ॥**
**सच्चिदानन्दरूपो वै द्रव्यं शक्तिगुणादिमान् ।**
**अधिष्ठातेन्द्रियादीनां ज्ञानचैतन्यसत्प्रभः ॥५३०॥**
**वेत्ता वेद्यं विजानाति स्वं व्यवस्थासु चेतरत् ।**
**ज्ञानक्रियादिपक्षित्वात् संसृतिं याति भक्तितः ॥**
**ईशसंकल्पशक्तिभ्यां नियाम्यो याति मोक्षणम् ।**
**मुक्तो ज्ञानघनात्माऽयं प्रकाशघनतां गतः ॥५३२॥**
**ऐश्वर्याणां निधानं स ब्रह्ममुक्तस्थितिंश्रितः ।**
**यथेष्टदिव्यमूर्तः सः सर्वान्कामान्समश्नुते ॥५३३॥**

जीव इति। जीवात्मानोऽपरिमिता ध्रुवा ज्ञानशक्त्या देहनियामका अजा नित्याः शाश्वता निरंशाः स्वप्रकाशा जडप्रकाशकाः सनातनस्वरूपाः सच्चिदानन्दा भोक्तारः कर्तारः प्रमातारः शक्ता देहेन्द्रियाऽन्तःकरणादिभिन्नाश्रितस्वरूपा ज्ञानघना ज्ञानशक्तिभ्यां सुपर्णाः परमेशभक्त्या मोक्षभाजो भाविब्रह्ममुक्ता दिव्या भगवत्सारूप्यसुमूर्ता सदाऽन्तःस्थशरीर्यन्तर्यामिसुमूर्तभगवन्मूर्त्यनुमूर्ता एकधा बहुधाऽनन्तधास्वरूपशक्तिमन्तः प्रकाशैश्वर्यसार्वज्ञ्याप्ताः सहब्रह्मणा सर्वाप्तकामाः सर्वानन्दाशनतृप्ता इत्यैहिकपारलौकिकोभयस्थितिस्वरूपाः प्रतिपादिता उपनिषत्सु ॥ नाऽत्राऽन्यथात्वं श्रुतीनां सदर्थत्वात् ॥५२८–५३३॥

**अथेश्वराः परमेशाऽधीना ऐश्वर्यशालिनः ।**
**सच्चिदानन्दरूपास्ते शुद्धसत्त्वप्रयोगिणः ॥५३४॥**
**मायातत्त्वाद्यधिष्ठातारस्ते सृष्टिनियामकाः ।**
**तत्त्वाभिमानिनश्चैते स्वस्वरूपसुमूर्तयः ॥५३५॥**
**अपि प्रधानपुरुषा वैराजान्तास्तथाविधाः ।**
**हिरण्यगर्भा भूमाद्या अनिरुद्धादयस्तथा ॥५३६॥**

अथेश्वरा इति। एते ईशाः श्रुत्युक्ता वेदान्तसृष्टिक्रमप्रक्रियायां समुद्दिष्टाः पुराणेषु प्रवर्णिताश्च, ते स्वस्वसृष्ट्यधिष्ठातारः स्वस्वक्षेत्रप्रमातारो नित्याश्चेतनाः स्वप्रकाशा नियामका असंख्याः सच्चिदानन्दाः सर्वज्ञकल्पा बहुज्ञा ब्रह्मेशविष्णुस्थित्यन्ताः प्रधानपुरुषाद्या अनिरुद्धाद्याश्च यथापेक्षं व्यवस्थिता वर्णिताः। तत्र श्रुत्यादिवचनानि—

'स्तनयत्येषाऽस्य तनूर्याम् ओमिति स्त्रीपुंनपुंसकमिति लिङ्गवत्येषा, अथाऽग्निर्वायुरादित्य इति भास्वत्येषा, अथ रुद्रो विष्णुरित्यधिपतिरेषा, अथ गार्हपत्यो दक्षिणाऽग्निराहवनीय इति मुखवती एषा, अथ ऋग्यजुःसामेति विज्ञानाति एषा, अथ भूर्भुवः स्वरिति लोकवती एषा, अथ भूतं भव्यं भविष्यदिति कालावती एषा, अथ प्राणोऽग्निः सूर्य इति प्रतापवती एषा, अथ अन्नमापश्चन्द्रमा इति आप्यायनवती एषा, अथ बुद्धिर्मनोऽहंकार इति चेतनवती एषा, अथ प्राणोऽपानो व्यान इति प्राणवती एषा,'—इत्येतदभिमानिन ईश्वरा ईशकोटयः, देवास्तन्नामानो

जीवास्तु पृथग्वोध्याः ॥ 'एष लोकपालः एष लोकाधिपतिरेष सर्वेश्वरः'। 'एष विद्युति पुरुषः'। 'तेजस्यात्मा भवति'। स्तनयित्नौ पुरुषः'। 'शब्दस्याऽऽत्मा'। 'ह्येष आकाशे पुरुषः'। एष वायौ पुरुषः'। 'एषाऽग्नौ पुरुषः'। 'छायायां पुरुषः…मृत्युरिति' 'यमो राजा इति'। 'ज्योतिष्ट आत्मेति'। 'भगवान् कालाऽग्निरुद्रः'। 'प्रजापतिरब्रवीन् यथैवेश्वरस्य माहात्म्यम्'। ईशानःसर्वविद्यानामीश्वरः सर्वभूतानाम्'। विश्वसृज एतेन वै विश्वमिदमसृजन्त तस्माद्विश्वसृजः'। 'सर्वैश्वर्यं ददाति'। 'प्रजापतिर्य एवं वेद'। 'महाविष्णुर्भवति महाविष्णुर्भवति'। 'महाविष्णुं तृतीयं स्थानम्'। 'वीरं द्वितीयं स्थानम्'। 'उग्रं प्रथमं स्थानम्'। 'मृत्युं नवमं स्थानम्'। 'प्रजापतिर्यस्मात्स्वमहिम्ना सर्वांल्लोकान् सर्वान्देवान् सर्वानात्मनः सर्वाणि भूतान्युपगृह्णाति अजस्रं सृजति विसृजति वासयति उद्गृह्यते'। 'आविवेश भुवनानि विश्वाः प्रजापतिः प्रजया संविदानः त्रीणि ज्योतींषि सचते सषोडशीं तस्मादुच्यते महाविष्णुरिति'। 'यश्च कालः, यश्च मृत्युः, यश्च यमः, यश्चाऽन्तकः, यश्च विराट्पुरुषः'। 'सुदर्शनं नाम चक्रं सार्वकामिकम्'। 'ब्रह्मविष्णुमहेश्वरा नाम्याम्'। 'स विज्ञेय ईश्वरग्रासः'। 'स स्वराट् स्वयमीश्वरः सप्रकाशः चतुरात्मा उताऽनुज्ञात्रनुज्ञाविकल्पैरोतो ह्ययमात्मा'। नियन्तेश्वरः सर्वाऽहम्मानी हिरण्यगर्भः'। 'ईश्वरवद्वयक्तचैतन्यः सर्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा'। 'स वा एष भूतानि इन्द्रियाणि विराजं देवताः कोशाश्च सृष्ट्वा प्रविश्याऽमूढो मूढ इव व्यवहरन्नास्ते'। 'भूमिमुपरिष्ठादाकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सहस्रबाहुरिति सोऽग्रे भूतानां मृत्युः'। 'ब्रह्मविष्ण्वीशानेन्द्रादीनामैश्वर्यकामनया… तपः'। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्', 'ततो विराडजायत विराजोऽधिपूरुषः'। 'तस्य प्रकृतिलीनस्य यः परः स महेश्वरः'। 'प्रकृतिलीना ईश्वराः' 'अहं भूमा सदाशिवः'। 'ईश्वरत्वमवाप्नोति सदाभ्यासरतः पुमान्' एवं दिने दिने कुर्यादणिमादिविभूतये'। 'महाविष्णुं ब्रह्मा परिपृच्छति'। 'अविद्याशबलम्'। महाविष्णोः परमं पदम्'। 'सुदर्शनपुरुषः' 'आदिनारायणः'। 'वैकुण्ठः साकारो नारायणः साकारश्च'। 'सर्वकारणमूलं विराट्स्वरूपो भवति'। नारायणादखिललोकस्रष्टृ प्रजापतयो जायन्ते'। 'अण्डविराट्पुरुषः स्वांशं हिरण्यगर्भमभ्येति'। 'हिरण्यगर्भस्य कारणम्—अण्डपरिपालकनारायणमभ्येति'। 'मायोपाधिक आदिनारायणः स्वस्वरूपं भजति'। 'कारणोपाधिरीश्वरः'। 'सहस्रावधिमुखान्तैः…एकैकसृष्टिकर्तृभिरधिष्ठितान्यनन्तकोटिब्रह्माण्डानि'। 'तमःसागरम् उत्तीर्य मूलाविद्यापुरम्'। 'महाविराट्स्वरूपम्'—विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्यात् सम्बाहुभ्यां नमति सम्पतत्रैर्द्यावापृथिवी जनयन् देव एकः'। 'विद्याविद्ययोः सन्धौ विश्वक्सेनवैकुण्ठपुरम्'। विश्वक्सेनं ध्यात्वा'। 'अनन्तवैकुण्ठान्परितोऽवस्थितान्': 'ब्रह्मविद्यावैकुण्ठम्…अनन्तवैकुण्ठान्'। 'श्रीतुलसीवैकुण्ठपुरम्'। 'शुद्धबोधानन्दमयानन्तवैकुण्ठान्'। 'चिद्रूपैः पुराणपुरुषैः'। 'आदिनारायणं ध्यात्वा'। 'मूर्तिमद्भिः सर्वैः स्वचिह्नैरलंकृत्य'। 'गरुडमारुह्य'। 'ब्रह्मानन्दमयाननन्तवैकुण्ठान्'। 'सुदर्शनवैकुण्ठपुरम्'। 'अनन्तैरानन्दपुरुषैश्चिद्रूपैरधिष्ठितम्'। 'सुदर्शनं महाचक्रम्'। 'महाविष्णोरर्गलमहाप्रतापविग्रहम्'। 'तदभ्यन्तरसंस्थाने सुदर्शनपुरुषो विराजते'। 'परमानन्दमयाऽनन्तवैकुण्ठान्'। 'मूर्तिमद्भिः…अनन्तभूषणैः…अनेकायुधैः…सेवितम्'। 'एकस्मिन्नविद्यापादेऽनन्तकोटिब्रह्माण्डानि सावरणानि, तस्मिन्नेकस्मिन्नण्डे बहवो लोकाश्च बहवो वैकुण्ठाश्च, सर्वाण्डेषु अनन्तलोका अनन्तवैकुण्ठाश्च सन्तीति सर्वेषां खल्वभिमतम्'। 'महाश्रेयांसि च सेवन्ते'। 'सकलजगत्परिपालको भवति'। 'जीवेश्वरौ मायिकौ विज्ञाय'। 'इदं रहस्यं परममीश्वरेणापि दुर्गमम्'। 'श्रीराममीश्वरं पप्रच्छ'। 'त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम्'। 'तस्माद्विराडित्यनया पादनारायणाद्धरेः, प्रकृतेः पुरुषस्याऽपि समुत्पत्तिः प्रदर्शिता'। 'महापुरुषः आत्मानं चतुर्धा कृत्वा'। 'चतुर्थेनाऽनिरुद्धनारायणेन विश्वानि आसन्'। 'अविद्या…मूलप्रकृतिर्माया…लोहितशुक्लकृष्णा तया सहायवान् देवः कृष्णपिंगलो मम ईश्वरः ईष्टे'। 'महत ईशते महेश्वरः'। 'मूलप्रकृतिः सत्त्वो-

द्रिक्ता, तत्प्रतिबिम्बितम् ईश्वरचैतन्यमासीत् जगदाविर्भावयति'। 'ईशाधिष्ठिताऽऽवरणशक्तितो रजोद्रिक्ता महदाख्या विक्षेपशक्तिः, तत्प्रतिबिम्बितं हिरण्यगर्भचैतन्यमासीत्, महत्तत्त्वाभिमानी स्पष्टाऽस्पष्टवपुर्भवति'। 'हिरण्यगर्भाऽधिष्ठितविक्षेपशक्तितस्तमोद्रिक्ताऽहंकाराभिधाना स्थूलशक्तिः, तत्प्रतिबिम्बितं विराट्चैतन्यमासीत्, तदभिमानी स्पष्टवपुः सर्वस्थूलपालको विष्णुः प्रधानपुरुषो भवति'। 'सृष्टिकामो जगद्योनिः'। 'तदाज्ञया विराट् स्थूलान्यरक्षत्, 'हिरण्यगर्भः, सूक्ष्माण्यपालयत्'। 'सृष्टिस्थित्यन्तकृद्विभुरीशः'। 'ईशः पञ्चीकृतमहाभूतलेशानादाय व्यष्टिसमष्टयात्मकस्थूलशरीराणि यथाक्रममकरोत्'। 'विराड्ढिरण्यगर्भेश्वरा उपाधिविलयात् परमात्मनि लीयन्ते'। 'स्वात्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियः। प्रभूता सिद्धयो यास्ताः कल्पनारहिताः स्मृताः'। 'जीवेश्वरौ भिन्नरूपौ'। 'ईश्वरो योगवादिनाम्'। 'प्राक्कर्मनिर्मितं सर्वमीश्वराऽधीनमेव वा'। 'नाऽहं कर्तेश्वरः कर्ता'। 'पुरुषोऽहमीशः'। 'अथाऽङ्गिरास्त्रिविधः पुरुषोऽजायत—आत्मा, अन्तरात्मा, परमात्मा चे'ति। 'मत्तः प्रकृतिपुरुषात्मकं जगत्'। 'शुद्धमीश्वरचैतन्यं जीवचैतन्यमेव च। प्रमाता च प्रमाणं च फलं तथा'। 'तत्र प्राच्यामैश्वर्यस्थानम्'। 'प्रकृतेः पुरुषात्परम्'। 'ओं नमो नारायणाय'—ओमिति ब्रह्मा, नकारो विष्णुः, मकारो रुद्रः, नकार ईश्वरः, रकारो विराट्, यकारः पुरुषः, णकारो भगवान्, यकारः परमात्मा भवतीति'। 'ईशानो भूतभव्यस्य'। 'ईशानं परमं विद्यात्'। 'सर्वं तदीशानोऽभयं कृणोतु'। 'इतरो भोक्ता, अन्यो हि साक्षी भवती'ति। 'ईश्वरो जीवकलया प्रविष्टो भगवानि'ति। 'जगज्जीवेश्वरादयः'। 'एवं मयि चिदाकाशे जीवेशौ परिकल्पितौ'। 'जीवेश्वरादिरूपेण चेतनाऽचेतनात्मकम्'। 'कोटयो ब्रह्मणां याताः'। 'ब्रह्मविद्यां लब्ध्वा ऐश्वर्यवान् भवति'। 'सर्वैश्वर्यवान् भवति'। 'ईश्वरी'। 'ईश्वरिणी'। 'ईशिता'। 'भूमानं प्रकृतिं ध्यात्वा'। 'वागीश्वरी'। 'देवानां सम्यगीश्वरी'। 'यः स ईश्वर इत्युक्तः'। 'मयि जीवत्वमीशत्वम्'। 'विजानीहि किमेतद् यक्षमिति'। 'मृत्यवे त्वां ददामीति'। 'स ऐक्षत··· लोकपालान्नु सृजा इति'। 'तमिदन्द्रम्···इत्याचक्षते'। 'रुद्राणामेतावदाधिपत्यं स्वाराज्यं पर्येता'। 'मरुतामाधिपत्यं स्वाराज्यम्'। 'ज्यायाँश्च पुरुषः'। 'पञ्च ब्रह्मपुरुषाः सर्वस्य लोकस्य द्वारपाः'। 'क्रतुमयः पुरुषः'। 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति'। 'आतिवाहिकाः'। 'मृत्युरस्याऽऽत्मा'। 'ईश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत'। 'नाऽभूत्या ईशते'। 'एकः पुरुषो देवान् युजक्ति'। 'अस्य महतो भूतस्य निःश्वसितम्'। 'इन्द्रो मायाभिः पुरुरूप ईयते, युक्ता हि अस्य हरयः, दश सहस्राणि बहूनि चानन्तानि च···सर्वानुभूः'। 'कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु' कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च'। 'ये शतं प्रजापतिलोके आनन्दाः'। 'कल्याणतरं रूपं कुरुते, प्राजापत्यं वा ब्राह्मं वा, अन्येषां वा भूतानाम्' (ईश्वराणाम्)। 'स एको जालवानीशते ईशनीभिः'। 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः'। 'ईशं तं ज्ञात्वा'। 'महान्प्रभुर्वै पुरुषः सत्त्वस्यैवः प्रवर्तकः'। 'सहस्रशीर्षा पुरुषः···विश्वतश्चक्षुरुतः विश्वतस्पात्, यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रः'। 'विश्वस्यैकं परिवेष्टितारमीशम्'। 'प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्तकः'। 'ईशानो ज्योतिरव्ययः'। 'सर्वस्य प्रभुमीशानम्'। 'पश्यत्यन्यमीशम्'। 'मायी सृजते विश्वमेतत्'। 'मायिनं तु महेश्वरम्'। 'हिरण्यगर्भं पश्यति जायमानम्'। 'य ईशेऽस्य द्विपदः'। 'विश्वस्य स्रष्टारम्, विश्वस्यैकं परिवेष्टारम्'। 'काले भुवनस्य गोप्ता विश्वाधिपः' 'विश्वकर्मा महात्मा'। 'तथेशः सर्वाधिपत्यं कुरुते महात्मा'। 'सर्वमेतद्विश्वमधितिष्ठत्येकः, गुणाँश्च सर्वान् विनियोजयेद् यः'। 'स विश्वरूपः, सञ्चरति स्वकर्मभिः'। 'कलासर्गकरं देवम्'। 'स्वभावमेके कवयो वदन्ति कालम्'। 'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्'। 'पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्'। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः'। ईशसंस्थो ज्ञः सर्वगो भुवनस्याऽस्य गोप्ता'। 'य ईशतेऽस्य जगतो नित्यम्'। 'यो ब्रह्माणं विदधाति पूर्वम्'। 'नारायणं कारणपुरुषम्'। 'प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसंबभूव'।

'अद्भ्यः संभूतो हिरण्यगर्भः'। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'। 'हिरण्यगर्भं पश्यति जायमानम्'। 'ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्'। ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'। 'प्रधानपुरुषेश्वराः'। 'इत्यभिष्टूय भूमानम् भूमाख्येश्वरप्रेषितदूतोऽवतारान् लीलासमाप्त्यर्थं सूचयतीति। एवं ज्ञानशक्तिबलैश्वर्य-वीर्यतेजांसि भगानि मूर्तिमन्ति भवन्ति ईश्वराः। अपरवासुदेवात् अनिरुद्धः प्रद्युम्नः संकर्षणश्च प्राविर्भवन्ति ॥ अथ चित्रगुप्तश्रावणाद्या अपि ऐश्वर्य-शालिनस्तथागण्यन्ते स्म ॥ ५३४-५३५-५३६ ॥

**मिथ्यात्वं नेश्वराणां वै जीवानां नाऽप्यनित्यता।**
**श्रुतिभिर्नित्यता प्रोक्ता सत्तत्त्वान्तरता ततः ॥५३७॥**

**मिथ्यात्वमिति।** ननु जीवा मिथ्याभूता अनित्या इति चेन्न। 'नित्यो नित्यानामि' त्यादिश्रुतिभिर्नित्य-त्वप्रतिपादनात् ॥ अथेश्वरास्तु शुद्धसत्त्वमायाऽ-वच्छिन्ना अनित्या मिथ्या च स्युः, सृष्टिलये तेषां लयप्रतिपादनात्। इति चेन्न। ज्ञानशक्त्याद्यैश्वर्याणां नित्यत्वेन प्रतिपादनात् तदवताराणामीश्वराणां नाऽ-नित्यत्वम्, स्वरूपसच्चेतनानां नित्यत्वात्, वैराजाद्या-ख्यचेतनात्मकेश्वराणां स्वरूपसन्नित्यत्वात्, तेषां च तत्त्वान्तरत्वम् ऐश्वर्यघनत्वम्। विराडीश्वरहिरण्य-गर्भाणां स्वरूपसच्चेतनानां परमते ब्रह्मात्मकत्वेनाऽपि नित्यत्वमेव, ब्रह्मविष्णुशिवादीनां नित्यचेतनेश्वरत्वेन प्रतिपादनात्। अतो लोकपालप्रजापत्याद्यास्तत्त्वाभि-मानिनश्च चेतना नित्या एवेति तेषामीश्वरत्वेन सृष्ट्यादौ सृष्टौ च स्थानात् प्रधानापुरुषाणामपि प्रधानेन सह मायायां प्रकृतौ लीनत्वादेवेश्वरचेतन-त्वं नित्येश्वरचेतनसत्स्वरूपतत्त्वात्मकं तत्त्वान्तर-त्वेन सध्रीचीनमेवेति। ते चेश्वराः स्वस्वसृष्टिप्रमा-तारः, स्वस्वकार्यकर्तारः स्वस्वसृष्टयधिष्ठातारश्च ॥ शरीरग्रहणात्मकजननं तु नित्यानामुपचारमात्रम्। सृष्टिसमुत्पादकैकस्य ततश्चाऽनेकेषामीश्वराणां सृष्टि-व्याप्यस्थितिकानां सार्वदिकेश्वरत्वेन निश्चितानां कदाचिदपि जीवत्वमनापन्नानां स्वतन्त्रतत्त्वतया श्रुतिप्रामाण्येनाऽङ्गीकारात् तत्र ब्रह्मात्मदर्शिनामैक-मत्येन ईश्वरतत्त्वस्य स्वातन्त्र्येण भिन्नचेतनपदार्थ-तयाङ्गीकारेऽविरोधात् ॥ ५३७ ॥

**अथ प्रमाता चाऽन्तःस्थः साक्षी ब्रह्माऽक्षरं विभुः।**
**जीवेशकर्मणां द्रष्टा फलयोक्ता स्वशक्तितः ॥५३८॥**

**अथ प्रमातेति।** जीवेश्वराऽन्तर्वर्तितया स्थितं ब्रह्म स्वयं सर्वथा ज्ञातृ चतुर्थं तत्त्वं सच्चिदानन्दरूपं प्रकाशघनं जीवेश्वरतदाविर्भावप्रवर्तनभावनिरसन-भावकृतिव्यापारादिसर्वद्रष्टृ तत्तदन्वयिविविधफल-योजयितृ विविधशक्तिशालि द्रव्यं मूर्तम् अमूर्तं चोप-निषद्विद्यागोचरं सर्वविज्ञातृचिन्तितं शाश्वतं भवति, ब्रह्माऽक्षराऽन्तर्यामिसाक्षिद्रष्टृसर्वज्ञादिपदपरिचेयमिति श्रुतिभिर्ज्ञायते।

श्रुतयश्च—'तदेव, ब्रह्म त्वं विद्धि नेदं यदिद-मुपासते'। 'एतद्ध्येवाऽक्षरं ब्रह्म ह्येतदेवाऽक्षरं परम्। ह्येतदेवाऽक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्'। 'एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते'। 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति'। 'गुह्यं ब्रह्म सनातनम्'। 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद्ब्रह्म'। 'सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बभूव'। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्त-मनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'। 'शुभ्रम् अक्षरं वेदयते'। 'परमेवाऽक्षरं प्रतिपद्यते'। 'परं चाऽपरं च ब्रह्म'। 'परा यया तदक्षरमधिगम्यते'। 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'। 'तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते'। 'एष वा पुण्यः सुकृतो ब्रह्मलोकः'। 'येनाऽक्षरं पुरुषं वेद सत्यम्'। 'तथाऽक्षराद्विविधा भावाःप्रजायन्ते तत्र चैवापियन्ति'। 'येनैष भूतैस्तिष्ठते ह्यन्तरात्मा'। 'यदर्चिमद् यदणुभ्योऽणु च यस्मिल्लोका निहिता लोकिनश्च, तदेतदक्षरं ब्रह्म'। 'तदेवाऽक्षरं सौम्य विद्धि'। 'तमसः परस्तात्'। 'हिरण्मये परे कोशे विरजं ब्रह्म निष्फलम्, यच्छुभ्रं ज्योतिषां ज्योतिः, न तत्र सूर्यो भाति न चन्द्रतारकम्, नेमा विद्युतो भान्ति कुतोऽयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'। 'ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण, अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्'। 'अन्तःशरीरे

ज्योतिर्मयो हि शुभ्रः'। 'बृहच्च तद्दिव्यमचिन्त्यरूपम्'। 'स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्'। 'तस्यैष आत्मा विशते ब्रह्मधाम'। 'स यो ह वै परमं ब्रह्म वेद ब्रह्मैव भवति'। 'सर्वं ह्येतद् ब्रह्माऽयमात्मा, ब्रह्म सोऽयमात्मा'। सह ब्रह्मणा विपश्चिता'। 'आनन्दं ब्रह्मणो विद्वान्'। 'स एतमेव पुरुषं ब्रह्म ततमपश्यत्'। 'पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि'। 'सर्वं खल्विदं ब्रह्म'। 'स एतान् ब्रह्म गमयति'। 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः'। 'एतत्सत्यं ब्रह्मपुरम्'। 'अमृतमभयमेतद्ब्रह्म'। 'अपहतपाप्मा ह्येष ब्रह्मलोकः'। 'ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते'। 'ब्रह्म वा इदमग्र आसीत्'। 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च'। 'ब्रह्मेदं सर्वम्'। 'यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरः'। 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'। 'एतदक्षरं गार्गि द्रष्टृ श्रोतृ मन्तृ विज्ञातृ, अस्मिन् खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च'। 'परम आनन्द एव ब्रह्मलोकः'। 'अत्र ब्रह्म समश्नुते'। 'ऋचोऽक्षरे परमे व्योमन्'। 'द्वेऽक्षरे ब्रह्मपरे त्वनन्ते'। 'सोऽक्षरः परमः स्वराट्'। 'अवयन्ति यदक्षरे परमे प्रजाः'। 'यस्मिन्देवा अधिविश्वे निषेदुः'। 'ततो यदुत्तरतरम्'। 'तद्विष्णोः परमं पदम्'। 'इदं ब्रह्म परंब्रह्म'। 'ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमव्ययम्'। 'परमात्मपदं नित्यम्'। 'यदिदं ब्रह्मपुरम्'। 'तदेव सच्चिदानन्दं ब्रह्म भवति'। 'परात्परतरं ब्रह्म यत्परात्परतो हरिः'। 'पादत्रयात्मकं ब्रह्म कैवल्यं शाश्वतं परम्'। 'अक्षरमनिर्देश्यं कूटस्थमचलम्'। 'तदेव सद्घनं चिद्घनमानन्दघनं, ब्रह्मचैतन्याधिदेवतांस्वरूपम् सर्वाधिष्ठानं परब्रह्मविहारमण्डलं, निरतिशयानन्दतेजोमण्डलं, परब्रह्मणः परमाधिष्ठानमण्डलं, परमानन्दपरममूर्तिविशेषमण्डलम्, परब्रह्मणः परममूर्तिपरमतत्त्वविलासमण्डलम्, अखण्डशुद्धचैतन्यनिजमूर्तिविशेषविग्रहं, परब्रह्मणः परममूर्तिपरमतेजःपुञ्जपिण्डविशेषम्'। 'सच्चिदानन्दतेजःकूटरूपम्'। 'परंब्रह्माऽवलोकयंस्तद्रूपो भवति' 'शुक्लतेजोमयं ब्रह्मेति'। 'सच्चिदानन्दरूपं ब्रह्म'। 'अन्तर्दृष्ट्या वेद्यम्'। 'बृंहति बृंहयति च सर्वं तस्मादुच्यते परंब्रह्मेति'। 'अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम्'। 'देहान्ते तमसः परं धाम प्राप्नुयात्'। यस्याऽक्षरं शरीरं योऽक्षरमन्तरे सञ्चरन् यमक्षरं न वेद'। अथ परमात्मा नाम यथाऽक्षर उपासनीयः'। 'ब्रह्मविदोऽप्यस्य ब्रह्माऽहमिति वेदनम्'। दिव्ये ब्रह्मपुरे'। 'परब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं विरजं विभाति'। त्रिपादं ब्रह्म'। 'वैष्णवं धाम भित्त्वा परंब्रह्म प्राप्नोति'। 'द्वे ब्रह्मणी मन्तव्ये शब्दब्रह्म परं च यत्'। 'निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते'। 'नित्यं विभुं सर्वगतं सुसूक्ष्मम्'। 'आत्मानमक्षरं ब्रह्म विद्धि ज्ञानात्तु वेदनात्'। 'आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति'। 'आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति'। 'सदा साक्षिस्वरूपत्वात्'। 'सर्वसाक्षिणम्, स्वयम्प्रभम्'। 'अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते'। 'एकान्तकेवलचिदेकरसस्वभावे ब्रह्मैव केवलम्'। 'गुहायां निहितं साक्षादक्षरम्'। 'यदक्षरं वेदविदो वदन्ति'। 'विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः' 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्'। 'यस्मिँल्लोका निहिता लोकिनश्च, तदेतदक्षरं ब्रह्म'। 'तां वा वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः, अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि'। 'ब्रह्मज्योतिः सनातनम्'। 'लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः। तदाहुरक्षरं ब्रह्म'। 'विरजो ह्येष ब्रह्मलोकः'। 'यद्विपश्यन्ति मुनयो गुणाऽपाये समाहिताः'। 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'। 'सुकेशा भारद्वाजादयो ह एते ब्रह्मपरा ब्रह्मनिष्ठाः परब्रह्मान्वेषमाणाः' इत्यनेन ब्रह्मतः परब्रह्मणोऽतिरिक्तता निवेदिता'। एवं तत्र तत्र धामरूपमक्षरममूर्तं, परब्रह्मसेवास्थं तदेव मूर्तमक्षरं प्रतिपादितम्, तथा तत्र तत्र देवतानां बलाधायकमप्यक्षरमुक्तं, तथा तत्र तत्र ब्रह्मज्ञानोत्तरमक्षरामृतपदप्राप्तिरभिहिता, तथाऽक्षरस्य प्रकाशरूपता, परब्रह्मतोऽतिरिक्तता, जीवादीनामक्षरब्रह्मणि प्रतिष्ठितता, अक्षरस्याऽपरब्रह्मता परमात्मनः परब्रह्मता, अक्षरब्रह्मणो मायादिभ्यः परता सृष्ट्याधारता, पर ब्रह्माऽवस्थितिमत्ता, विश्वशरीरकता, स्वप्रकाशता, साक्षिता, जीवानामु-

पासनयाऽक्षरसाम्यता, श्रीपुरुषोत्तमप्रापकता, श्रीपुरुषोत्तमप्रेर्यव्यापकता, कारणताऽऽनन्दात्मकता, धामरूपता, मूर्तिरूपता, जीवमायेश्वरादीनां निलयनात्मकसमर्पणाऽऽधारपात्रता, सर्वलोकौतप्रोतता, वाग्विषयता, स्वाश्रिततत्त्वव्यापकता, परब्रह्मव्यतिरेकिता, पुरुषोत्तमानन्दानन्दिता, बहुविधान्वयिता, सर्वकामाश्रयता च प्रतिपादिता ॥ ५३८ ॥

**अपि मुक्ता ब्रह्मरूपा ब्रह्मधामसमाश्रिताः ।**
**नित्या आदिगताश्चैते श्रुतिभिर्ब्रह्मरूपिताः ॥५३९॥**

अपीति । ब्रह्मलोकस्थाः सच्चिदानन्दसाकारमूर्तयः परब्रह्मसरूपा नित्या अगन्तार एव शाश्वता मुक्ता ब्रह्मसंज्ञाः, अन्ये तु ईश्वरा जीवा वा भजित्वा गतास्ते सादिमुक्ताः, तेऽपि परब्रह्मसरूपाः परब्रह्म सेवन्ते । तत्र तत्र श्रुतयः—

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्, तेह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः' । अत्र पूर्वसाध्यदेवेति–नित्या मुक्ता उक्ताः । 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येव देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्तन्ते' । अत्राऽमानवस्तत्पुरुषोऽनादिमुक्तः, इमं गन्तारं मुक्तं ब्रह्मधाम गमयतीति । तथा 'स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति' । अत्रापि गमको नित्यमुक्तः, गम्य आदिगन्ता मुक्त इति प्रोक्तम् । 'ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः' । अत्र अक्षरे धामनि अधिविश्वे देवा नित्यमुक्तास्तिष्ठन्ति स्मेत्युक्तम् । 'एवं संख्याविहीनोऽस्मि नित्यमुक्तस्वरूपवान्' । इत्यत्र नित्यमुक्तस्वरूपमुक्तम् । 'नित्यसाकारो मुक्तसाकारश्चेति' । 'नित्यसाकारः आद्यन्तशून्यः शाश्वतः' । 'उपासनया ये मुक्तिं गतास्तेषां साकारो मुक्तसाकारः, तस्याऽखण्डज्ञानेनाऽऽविर्भावो भवति, सोऽपि शाश्वतः, मुक्तसाकारस्तु ऐच्छिकः इति, 'अद्वैताऽखण्डपरिपूर्णनिरतिशयपरमानन्दशुद्धबुद्धमुक्तसत्यात्मकब्रह्म चैतन्यसाकारत्वात् निरूपाधिकसाकारस्य नित्यत्वं निरवयवनित्यत्वं सुमूर्तैकरसचिद्रसमूर्तिकनित्यत्वं ब्रह्मचेतनमिति सर्वोपनिषत्सिद्धम्, विद्यासार्वज्ञ्यादिप्रधानतया सर्वज्ञसाकार आनन्दप्रधानतया आनन्दघनसदेकरससुमूर्तसाकारः, चिदानन्दोभयप्राधान्येन तूभयात्मकसाकारः, प्राधान्येनाऽत्र भेद एव, भेदोऽपि वस्तुतो विशिष्टाऽद्वैतोऽभेदः, विविधविचित्रानन्तशक्तेः परब्रह्मणो विशिष्टस्वरूपज्ञानेन सर्वं विज्ञातं भवति, रामकृष्णवाराहाद्यवतारेषु विशिष्टाऽद्वैतपरमानन्दलक्षणपरब्रह्मणः परमतत्त्वपरमविभवाद्यनुसन्धानं स्वीयत्वेन सर्वत्र, सर्वपूर्णस्य ब्रह्मणः सर्वपरिपूर्णस्य परब्रह्मणः परमार्थतः साकारतां विना गगनस्येव सधर्मतया जडत्वमापद्येत तस्माद् ब्रह्मपरब्रह्मणोर्मुक्तानां च साकारत्वं नैसर्गिकं स्वरूपसदिति सर्वाः स्थितयः सृष्टयश्च विशिष्टैव साकारैवेति त्रिपाद्विभूतिमहानारायणोपनिषदादिषु वर्णितम् । नित्यसाकारो भगवान्, नित्यसाकारोऽक्षरपुमान्, नित्यसाकारा मुक्ताः, उपासनया ये मुक्तिं गतास्तेषां साकारता, तेषामखण्डज्ञानेनाऽऽविर्भावो भवति सुमूर्तः, सोऽपि शाश्वतः, मुक्ताः साकारस्त्वैच्छिकाः चैतन्यैकरससाकाराः' । 'स एकधा भवति द्वेधा···शतधा···सहस्रधा···अनन्तधा भवतीति' मुक्तानामैच्छिकाऽसंख्यस्वरूपधारित्वमुक्तम् । 'ब्रह्मतेजोविशेषाकारैरनन्तदिव्यनित्यमुक्तैरभिव्याप्तो ब्रह्मलोको विभाति' । 'भगवद्ध्यानपूर्वकं विद्यानन्दचिद्रसमयाऽमृतदिव्यशरीरा नारायणस्वारूप्यमाप्ता ब्रह्मधामवासिभिश्चिद्रूपैः सर्वैरनन्तनित्यमुक्तैः सुपूजिता आनन्दरसनिर्भरा आदिमुक्ता अपि तत्र ब्रह्मलोके निवसन्ति, परमानन्दव्यूहैर्नित्यमुक्तैः सह ब्रह्मणा च सहाऽश्नुवते सर्वान् कामान्, 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' । 'अखण्डप्रकाशानन्दब्रह्मस्वरूपं धामाऽतिनिर्मलाऽनन्तकोटिरविप्रकाशैकस्फुलिङ्गमादिमध्यान्तशून्यं शान्तम् अनन्तानन्दशैत्यसुखप्रदमक्षरं धाम कूटस्थमचलं ध्रुवम् अदिग्देशकालं परिपूर्णं परिच्छेदरहितम् अखण्डानन्दामृतवर्षि स्वयम्प्रकाशं शाश्वतं परमं पदम् अनन्तपरमज्योतिःशाश्वतं शश्वद्विभाति' । 'निरतिशयानन्दपारावाराकारं निरुपमं नित्यनिरवद्यनिरतिशयनिरवधिकतेजोराशिविशेषं सुमूर्तं मूर्तिविशेषविग्रहं परब्रह्म सेवास्थितमक्षरधाम ब्रह्मपुमान् विराजते । एतादृशेऽक्षरे धाम्नि ब्रह्मरूपा मुक्ता विराजन्ते परमात्मानं सेवन्ते । सृष्टयोऽनन्तकोटि-

ब्रह्माण्डानि सावरणानि अनन्ता लोका अनन्तविभूतयश्च ब्रह्मणः एकपादे (भागे) तिष्ठन्ति, त्रिपात्ततविततऽक्षरब्रह्मलोके 'त्रिपादूर्ध्वमुदैत्पुरुषः' इतिपुरुषोत्तमोऽनन्तमुक्तमण्डलसेवितो विराजते'। 'मदुपासको निरतिशयपरब्रह्मसारूप्यमाप्तो भवति'। 'तत् सच्चिदानन्दस्वरूपं ब्रह्म, शुक्लतेजोमयं ब्रह्म तद्ब्रह्म मनःसहकारिचक्षुषाऽन्तर्दृष्ट्या वेद्यं भवति, मनोयुक्तान्तर्दृष्टिस्तारकप्रकाशा भवति, एदद्दृष्टिमन्युक्तसत्संगी मुक्तो भवति, समुक्तः दशपूर्वान् दशोत्तरान् पुनाति पंक्तिपावनो महान् भवति'। 'ब्रह्मविन्मात्रेण कुलमेकोत्तरशतं तारयति'। 'स वैष्णवं धाम भित्त्वा परंब्रह्म प्राप्नोति'। 'यज्जगद्भासकं भानं नित्यं भाति स्वतः स्फुरत्, स एव जगतः साक्षी सर्वात्मा विमलाकृतिः, प्रतिष्ठा सर्वभूतानां प्रज्ञानघनलक्षणः, ब्रह्मवेदनमात्रेण ब्रह्माऽऽप्नोत्येव मानवः'। 'निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते, सोऽश्नुते सकलान् कामान् क्रमेणैव द्विजोत्तमः'। 'पत्यगात्मानमज्ञानमायाशक्तेश्च साक्षिणम्, एकं ब्रह्माऽहमस्मीति ब्रह्मैव भवति स्वयम्'। 'आत्मानमक्षरं ब्रह्म विद्धि ज्ञानात्तु वेदनात्'। 'एकान्तकेवलचिदेकरसस्वभावे ब्रह्मैव केवलमहं परिपूर्णमस्मि'। 'अयं हृदि स्थितः साक्षी सर्वेषामविशेषतः'। 'मुक्तोऽहमस्मि, अक्षरोऽहमस्मि'। इत्येवं मुक्तानामनादीनामादीनां च स्थितिर्वर्णिता ते मुक्ता ब्रह्ममुक्ता इति। ततो ब्रह्म धामरूपम्, साकाराऽक्षरं सुमूर्तं रूपम्, अनादिमुक्तब्रह्म, आदिमुक्तब्रह्मेति, व्यवस्थया ब्रह्मत्वेन तत्त्वं परिगणनीयं भवतीति॥ परब्रह्मणो मुकुटकटककुण्डलाऽऽभूषाऽलंकारादिपरिकरोऽपि चेतनब्रह्मात्मकामुक्ता इति॥ ५३९॥

**अथ प्रमाता सर्वेषां परमात्मा नियामकः।**
**विशिष्टः स परब्रह्म स्वराट् च व्यतिरिच्यते॥५४०॥**
**सच्चिदानन्द एवाऽयमानन्दघनमूर्तिकः।**
**यस्य प्रकाशो ब्रह्माऽस्ति सिद्धान्तः स्वामिवर्णितः॥**

**अथ प्रमातेति**। ब्रह्ममुक्तमायेश्वरजीवतत्त्वादिप्रत्यक्षदर्शी परमात्मा श्रीहरिः सर्वप्रमाता ब्रह्मपर्यन्तानां नियमनकर्ता स्वयं सुमूर्त आनन्दघनमूर्तिरानन्दमात्रकरपादमुखोदरादिरानन्दैकरसघनसर्वज्ञमूर्तिः स्वराड् व्यतिरेकस्वरूपः स्वधाम्नि विराजमानोऽक्षरादिब्रह्मभिः संसेवितः; स एवाऽक्षरब्रह्मणि ब्रह्ममुक्तेषु उपकरणेषु मायायां तत्तत्त्वेषु ईश्वरेषु जीवेषु गुणक्रियाशक्तिधर्मान्वियादिसर्वपदार्थेषु अन्तः प्रविष्टो 'रूपं रूपं प्रतिरूपो बभूवे'ति स्वेतरसमष्टिव्यष्टिशरीरी प्रत्येकरूपाऽनुरूपो बहुरूपोऽनन्तस्वरूपो यावत्स्वेतरस्वामीति साक्षीति अन्तर्यामीति अवतारीति जगज्जन्मस्थितिलयलीलोऽवताराऽवतारीरीति चोपास्यः प्रापणीयश्च विशिष्टब्रह्माऽद्वैतो यावत्तत्त्वान्वयी वर्ण्यते श्रुतिभिः॥ तथाहि—

'एतत्परंब्रह्म वेद नातः परमस्ति'। 'यत्राऽमृतः स पुरुषो ह्यव्ययात्मा'। 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याराभ्यन्तरो ह्यजः, अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः'। 'यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि, दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः'। 'तस्मिन् दृष्टे परावरे'। 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्'। 'यमेवैष वृणुते तेन लभ्यः, तस्यैष आत्मा विवृणुते तनूं स्वाम्'। 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते'। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्'। 'परात्परं पुरुषमुपैति दिव्यम्'। 'एष सर्वेश्वरः एष सर्वज्ञः'। 'सत्यं ज्ञानमनन्तं ब्रह्म'। 'स वा एष पुरुषविध एव'। 'ब्रह्मज्येष्ठमुपासते'। 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन'। 'स ईक्षत लोकान्नुसृजा इति'। 'ततो ज्यायाँश्च पूरुषः'। 'सदेव सौम्येदमग्र आसीदेकमेवाऽद्वितीयम्'। 'स ऐक्षत बहु स्यां प्रजायेये'ति। 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः'।'आत्मैवेदमग्र आसीत्पुरुषविधः'। 'स द्वितीयमैच्छत्'। 'तस्य हैतस्य पुरुषस्य रूपम्'। 'आत्मनस्तु कामाय सर्वं प्रियं भवति'। 'अमृतमयः पुरुषोऽयम्'। 'एष त आत्माऽन्तर्याम्यमृतः'। 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति'। 'तं पुरुषं विद्यात् सर्वस्याऽऽत्मनः परायणं स वै वेदिता स्यात्'। 'औपनिषदं पुरुषं पृच्छामि'। 'सर्वस्य वशी, सर्वस्याऽधिपतिः'।

'यत्ते रूपं कल्याणतमं तत्ते पश्यामि'। 'ज्ञाज्ञौ द्वावजावीशानीशौ'। 'आदित्यवर्णं तमसः परस्तात्'। 'तेनेदं पूर्णं पुरुषेण सर्वम्'। 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः'। 'अणोरणीयान् महतो महीयान्'। 'न सन्दृशे तिष्ठति रूपमस्य'। 'तेनेदं पूर्णं पुरुषेण सर्वम्'। 'आनन्दो ब्रह्मयोनिः'। 'स वा एषः पुरुषः'। 'एषोऽन्तरादित्ये हिरण्मयः पुरुषः, हिरण्यश्मश्रुर्हिरण्यकेशः, आप्रणखात्सर्व एव सुवर्णः'। 'तस्य कप्यासं पुण्डरीकमिवेक्षिणी'। 'इदं ब्रह्म परंब्रह्म सत्यं ब्रह्म प्रभुर्हि सः'। 'कविं पुराणं पुरुषोत्तमोत्तमम्'। 'परात्परतरं ब्रह्म यत्परात्परतो हरिः'। 'चित्स्वरूपं निरञ्जनं परब्रह्मस्वरूपम्'। 'सर्वपरिपूर्णाऽद्वैतपरमानन्दलक्षणे परब्रह्मणि नारायणे'। 'बृंहति बृंहयति'। 'तस्मादुच्यते परंब्रह्मेति'। 'तत्र तत्र परंब्रह्म सर्वत्र समवस्थितम्'। 'यस्याऽक्षरं शरीरं योऽक्षरमन्तरे सञ्चरन् यमक्षरं न वेद'। 'अथ परमात्मा नाम यथाऽक्षर उपासनीयः'। 'शब्दब्रह्मणि निष्णातः परंब्रह्माऽधिगच्छति'। 'निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते'। 'सर्वं सत्यं परंब्रह्म न चाऽन्यत्'। 'परमात्माऽसि सच्चिदानन्दविग्रहः'। 'उपासकोऽपि स्वयं 'ब्रह्माऽहमस्मीति' विशिष्टस्वाऽपरोक्षदर्शी भूत्वा ब्रह्मधाम्नि परब्रह्म प्राप्नोति सेवते च सालोक्यसार्ष्टिसायुज्यसारूप्यमुक्त्यभिसम्पन्नः सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति सर्वेषां स्वामी नारायणः स्वयमाह। 'अथाऽतो ब्रह्मजिज्ञासे'तिव्यासभगवता परब्रह्म प्रस्तुतम्। 'आनन्दमयोऽभ्यासादि'त्यनेनाऽऽनन्दश्रुत्यन्वितं परब्रह्माऽऽनन्दघनं वर्णितम्। 'यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः' इत्यनेन सर्वप्रत्यक्षदर्शित्वमुक्तम्। 'स त आत्माऽन्तर्यामी'ति परब्रह्माऽन्तरात्माऽभिहितः। 'ज्ञः कालकालो गुणी'ति सगुणः कालशक्तिमानभिहितः। 'प्रधानक्षेत्रज्ञपतिर्गुणेशः' 'सर्वस्य वशी'त्यनेन जडचेतनादिसर्वतत्त्वाधिपत्यं दर्शितम् 'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दः सर्वकारणकारणे'। इति सर्वभगान्विते परब्रह्मणि सर्वविधमुख्यकारणताऽनुदर्शिता। 'परमात्मा सः सर्वेषामाधारः' 'आत्मात्मा चाऽक्षरात्मा च' 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' 'अतो ज्यायांश्च पूरुषः'। 'ये ब्रह्मलोके तमात्मानमुपासते'। इति सर्वोपास्यदिव्यमूर्तिः परमात्माऽभिहितः। 'भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि। रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्चे'ति मुक्तानामीश्वराणां च स्वभक्तरक्षाकरत्वमुक्तम्। 'अंशतो ये प्रकाशन्ते ममैते केशसंज्ञिताः' इति केशांऽशा ईशा उक्ताः॥ अत्र सर्वत्र जीवेश्वरमायात्मकसृष्टिव्यापकं चाक्षरं ब्रह्म केवलान्वयि धाम, तच्च मुक्तव्यापकमपि, समनियततया स्वव्यापकं स्वमपि च। ब्रह्मव्यापकः परब्रह्मेति परमेश्वरः। इत्येवं स्थूलसूक्ष्मावस्थजीवेश्वरमायाविशिष्टं ब्रह्म, तत्राऽद्वैतं परब्रह्म, इति विशिष्टब्रह्माऽद्वैतम्, तथा च जडाऽन्तःप्रविष्टचेतनाऽन्तःप्रविष्टब्रह्माऽन्तःप्रविष्टपरब्रह्म विशिष्टब्रह्माऽद्वैतं कार्यकारणात्मकं सर्वं ब्रह्मेति वर्ण्यते॥ एतादृशविशिष्टब्रह्माऽद्वैतविज्ञानेन सर्वं विज्ञातं भवतीति सर्वविज्ञातं भक्त्यंगं चाऽगिभक्तिर्मुक्तिदेति॥ ५४०–५४१॥

**तत् प्रमेयं प्रमाणं च प्रमितिश्च प्रमातृकः।**
**परमात्मा परब्रह्म वर्गश्चेतन इत्यपि॥ ५४२॥**

तदिति। विशिष्टब्रह्माऽद्वैततया श्रीस्वामिमते सिद्धान्तित्वेन विशिष्टब्रह्माऽद्वैतं प्रमेयं सर्वपदार्थात्मकं, तदेव च प्रमाणं सर्वसाधकं, तदेव च प्रमितिः सर्वयथार्थज्ञप्तिरूपम् तदेव च प्रमातृ सर्वयावद्यथावज्ज्ञातृ चेति॥

एवमक्षरब्रह्माऽपि यथायथं सर्वज्ञं सर्वान्तर्वर्ति चतुर्विधमपि तथा, एवमीश्वरा अपि प्रत्येकं यथायथं चतुर्विधास्तथा, एवं जीवात्मानोऽपि देवर्षिपितृयोगिप्रभृतयः प्रत्येकं स्वस्वीयक्षेत्रेषु यथायथं चतुर्विधास्तथा बोध्याः। उक्तं च कण्ठरुद्रोपनिषदि—'प्रमाता च प्रमाणं च प्रमेयं च फलं तथा'॥ ३७॥ इति॥ फलं प्रमितिरुक्तम्॥ ५४२॥

**सदैश्वर्याऽन्विताश्चेशा जीवाः कर्मान्वितास्तथा।**
**माया जाड्युता ब्रह्मधाम सर्वाश्रयं मतम्॥५४३॥**
**परमात्मा यथा तद्वत् साक्षी तद्धाम इत्यपि।**
**मित्यन्वयात्प्रमातारः प्रमाणानि तु हेतवः॥५४४॥**

वृत्तयोऽपि प्रमाणानि फलं विशिष्टवेदनम् ॥
एतद् यो वेद तत्त्वेन ब्रह्मभूयाय कल्पते ॥५४५॥

**सदैश्वर्येति**। ज्ञानशक्तिबलैश्वर्यवीर्याऽन्यतममहैश्वर्यघनत्वम् ईश्वरत्वम्, लक्षणे ऐश्वर्यं चमत्कारः कामावसायित्वादिरूपम् । शुक्लादित्रिविधकर्मान्यतमवज्ज्ञानघनत्वं जीवत्वम् । ऐश्वर्यात्मकं ज्ञानं तु सार्वज्ञ्यादिनित्यज्ञप्त्यात्मकम्, जीवात्मनि चिच्चैतन्यस्वरूपं ज्ञानं स्वाऽदृष्टसापेक्षं कर्मसमानाधिकरणं विलक्षणम्, ईश्वरात्मकं तत्तु सार्वज्ञ्यप्रातिभात्मकमित्ति विशेषः; तत्त्वसौक्ष्म्यदर्शित्वमिति यावत् । माया तु त्रिगुणा जाड्यात्मकसात्त्विकांशप्राधान्यव्याप्ता ईशशरीराणि, राजसतामसान्यतमप्राधान्यव्याप्ता सा जीवशरीराणि, कारणमात्रभूतानि ईश्वरशरीराणि कार्यमात्रभूतानि जीवशरीराणीति । अशरीराण्यपि विषयाणि यथायथं ब्रह्माण्डरूपाणि क्षेत्रात्मकानि भोग्यानि, जडेषु यथायथं चेतनानां वासः, सञ्चालकः परमेश्वरो ब्रह्म वा ईशा जीवा वा सर्वम् असर्वं वा किञ्चिन्महद्वा स्वल्पं विशालं वा जीवनं जीवनशक्तिसम्पन्नं तत्त्वं भोग्यं भवतीति । तत्राऽक्षरं ब्रह्म आधाररूपम्, अक्षरे ब्रह्मणि सर्वेषामाश्रयता, तदितरत्सर्वम् आधेयम्. परतात्मा स्वमहिम्नि स्वयमाधारोऽप्याधेयः सर्वाधारोऽपि स्वाधेयाधारः सर्वशरीरित्वात्' ब्रह्मणोऽपि द्रष्टा ब्रह्मणोऽपि शरीरी साक्षी चापि ब्रह्मदृष्टिनियामकोऽत एव च ब्रह्मधामाऽपि जिवेश्वरादिसाक्षि भवति, परमात्मनोऽलौकिकदिव्यं विलक्षणमैश्वर्यं ब्रह्मणि स्वस्थित्या स्थितमेव कर्मफलप्रदातृत्वं स्वस्वसृष्टिसञ्चालनशक्तिसामर्थ्यादियथाकृतिसात्त्विकसिद्धयादिफलप्रदातृत्वं च निर्वहति ॥

**मित्यन्वयादिति**। प्रमितिर्ज्ञप्तिः फलं यथार्थभानं साक्षात्कारात्मकं दिव्यं वा सार्वज्ञ्यं तद्वत्त्वात्प्रमातारश्चत्वारोऽपि जीवेशब्रह्मपरमात्मानः, प्रमितिवत्त्वात्प्रमातृत्वम्, करणात्मकसाधनत्वेन प्रमाणत्वम्, एतत्तु यथायोग्यमपेक्षितं ग्राह्यम्, ज्ञानवृत्तयः प्रमाणान्युच्यन्ते, अलौकिकप्रमाणान्यपि युक्तानि भवन्ति, अथ सर्वमपि प्रातिस्विकं पृथगपृथग्वा सान्वितं फलं विशिष्टज्ञानं विशिष्टब्रह्माऽद्वैतज्ञानं ब्रह्मसाक्षात्काररूपं स्वान्वितान्वितान्वितान्वितसाक्षात्कारपर्यन्तं मोक्षेऽपि वर्तमानं तत् फलम्, जीवविशिष्टेश्वरविशिष्टब्रह्मविशिष्टपरमात्मप्रतीतिः फलम् एकविज्ञानेन सर्वविज्ञानात्मकम् अदिव्यं दिव्यं शाश्वतमपि चाविर्भावावस्थमिति । तत् तथाविधत्वेन ज्ञानं ज्ञप्तिं ज्ञेयं ज्ञानिनं च यो वेद सः ब्रह्ममुक्तो भवति ब्रह्म भवति । ब्रह्मभवनपूर्वक्षणपर्यन्तमयं शास्त्रव्यापारः । शास्त्रव्यापारफलोत्तरं ब्रह्म समश्नुते,—इति ॥ ५४३-५४४-५४५ ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डित-श्रीकृष्णवल्लभाचार्यस्वामिनारायणविरचितायां तत्त्वप्रभावल्यां चतुर्थे प्रमातृखण्डे श्रुत्यादिप्रोक्तप्रमातृस्वरूपादिनिरूपणनामा त्रयोदशः परिच्छेदः ॥१३॥

## अथ चतुर्थः प्रमातृखण्डः

सुधासिन्धौ स्वामिनारायणेन परमात्मना ।
परब्रह्म-ब्रह्म-माये-श्वर-जीवा हि शाश्वताः ॥५४६॥
तत्त्वार्था ईरिता भिन्ना नित्यसिद्धा अनादयः ।
श्रुतिभिः परमात्मोक्त आनन्दतत्त्वमेव सः ॥५४७॥
ब्रह्मतत्त्वं प्रकाशो वै मायातत्त्वं तमो जडम् ।
ईश्वर ओजस्तत्त्वं वै पृथगैश्वर्यसद्भुतम् ॥५४८॥
जीवात्मा ज्ञानतत्त्वं यत्तानि द्रव्याणि वस्तुतः ।
परमात्मा शरीर्यस्त्यन्येषां सद्धर्मणां सदा ॥५४९॥
परमेशेतरत् सर्वं शरीरं परमात्मनः ।
व्याप्याऽधीनाऽसमर्थं च तस्य सत्तान्वितं हि तत् ॥
यत्संकल्पाधीनमस्याऽवस्थापरिणमादिकम् ।
यस्य तत्तस्य वर्ष्मोऽत्र तद्भिन्नं वर्ष्म कीर्तितम् ५५१
शरीरी त्वेक एवाऽस्ति सर्वेषां श्रीहरिः स्वयम् ।
द्रव्यं सर्वाधारतया गुणवत्त्वाच्च सर्वथा ॥५५२॥
अवस्थाऽन्वितभावाच्चाऽऽनन्दो द्रव्यं हरिः स्वयम् ।
आनन्दः श्रीहरिर्नित्यज्ञाता ज्ञानगुणाश्रयः ॥५५३॥

प्रसारणस्वभावत्वादानन्दो द्रव्यमुत्तमम् ।
आनन्दे श्रीहरौ नित्यज्ञानादेर्गुणरूपता ॥५५४॥
आश्रितत्वाद्गुणत्वं वै नित्ये नित्यस्य चेरितम् ।
अयं नित्यपरेशस्य प्रकाशो नित्य एव तु ॥५५५॥
अप्रकाशाऽनवस्थानाज्ज्ञानत्वनित्यताऽत्र च ।
नित्यप्रकाश एवाऽयमानन्दे श्रीहरौ स्थितः ॥५५६
आश्रितत्वाद्गुणश्चाऽयं प्रसृतत्वात्पृथक्स्थितः ।
द्रव्यात्मकोऽक्षरश्चाऽयं बृहत्त्वाद्ब्रह्मतत्त्वकम् ॥५५७
एकस्यैव गुणत्वे च द्रव्यत्वे न विरोधिता ।
आश्रितत्वात्प्रसारत्वाद्व्यवस्थायाः पृथक्स्थितेः ॥
व्यापकं चाऽक्षरं ब्रह्म भूम द्रव्यं प्रकाशते ।
सर्वात्मकं धाम चैतत् केवलान्वयि वर्तते ॥५५९॥
अवृत्ति वृत्तिमत्त्वेऽपि चान्तर्यामि च साक्षि च ।
आनन्दतत्त्वतश्चैतत् तत्त्वान्तरमितीरितम् ॥५६०
ज्ञातृ ज्ञानगुणकं तत् सर्वशक्त्यादिसंभृतम् ।
ज्ञप्तिसाधर्म्येऽपि भेदः सदानन्दप्रकाशयोः ॥५६१॥
स्वरूपेण तथा तत्त्वान्तरता धामधामिनोः ।
प्रेर्यप्रेरकभावेन लोकलोकाधिपत्वतः ॥५६२॥
स्वाम्यस्वामित्वभावेनोभयाऽनुभपृथक्त्वतः ।
मूर्ताऽमूर्तोभयसेवकत्वात् सेव्यत्वभेदतः ॥५६३॥
धर्मभेदाद्गुणभेदाद्रूपभेदाच्च भिन्नता ।
परिच्छिन्नाऽपरिच्छिन्नसत्ताभेदाच्च भिन्नता ॥५६४॥
मूर्ताऽमूर्तस्वरूपे द्वे श्रुत्या सम्प्रतिपादिते ।
ब्रह्मणः श्रीहरिणा द्वे स्वैश्वर्ये कथिते ततः ॥५६५॥
सगुणं निर्गुणं रूपं द्वयं श्रीपरमात्मनः ।
स्वेनैव कथितं तस्माद् ब्रह्म भिन्नं हरेर्मतम् ॥५६६॥
परत्वेन विशेषित्वाद् ब्रह्मतो भिन्नता परे ।
ब्रह्मणि परता सा वै सर्वनियामकत्वता ॥५६७॥
परत्वाख्या चाऽशरीरस्वरूपाऽन्यं प्रतीति या ।
स्वस्वेतरशरीरित्वस्वरूपा तन्निरूपणा ॥५६८॥

शरीरस्य व्यापकत्वे शरीरिणोऽपि तत्कथा ।
घटतेऽन्वितभावेन व्यतिरेके तु शङ्कितः ॥५६९॥
सत्तया घटते यद्वा ज्ञातृत्वविषयत्वतः ।
प्रकाशो मूर्तिरूपेण मूर्ततां भजते सदा ॥५७०॥
मूर्तं रूपं चाऽक्षराख्यं प्रकाशाख्यं त्वमूर्तकम् ।
मूर्ताऽमूर्तकृतो भेदस्तत्त्वैक्येऽप्युपचारतः ॥५७१॥
प्रकाशप्रभयोर्भेदो यथैक्येऽपि समुच्यते ।
सूर्यातपप्रभेदोऽपि यद्वद् ब्रह्मणि तद्विधः ॥५७२॥
प्रकाशपिण्डस्तस्माद् वै ब्रह्माक्षरं सुमूर्तकम् ।
अपिण्डव्यापकं धामाऽक्षरं प्रकाशरूपि तत् ॥५७३
घनप्रकाशो मूर्तं वै समोऽमूर्तं पदं मतम् ।
एकतत्त्वं परब्रह्मभिन्नं सर्वगतं त्वधः ॥ ५७४ ॥
ननु तत्त्वं भवेद् द्वेधा मूर्ताऽमूर्तविरोधतः ।
नित्यस्थितेर्व्यापकत्वाऽव्यापकत्वाच्च नित्यतः ॥
ब्राह्मणश्च महाब्राह्मणश्च सुखं परं सुखम् ।
इतिवत् ब्रह्म च परब्रह्म तत्त्वं न चेतरत् ॥५७६॥
इति चेन्न यतस्तत्त्वावच्छेदकं पृथङ्मतम् ।
सर्वज्ञत्वं परेशस्य ब्रह्मणोऽन्तर्नियामिता ॥५७७॥
धामत्वं चाऽक्षरत्वं वा नित्यप्रकाशता च वा ।
नित्यानन्दत्वमेवाऽस्ते परब्रह्मण इत्यपि ॥५७८॥
नन्वस्त्वेकः परमात्मा धाम धामी तथाऽन्तरः ।
सर्वाधारः स्वयं चाऽस्तु विफला धामकल्पना ॥५७९॥
इति चेन्नाऽप्रकाशे स्यादन्धकारविपत्तिका ।
मूर्त्यात्मके प्रकाशे स्यान्निराकारत्वमाच्युतम् ॥५८०॥
मूर्तिगुणात्मके प्रकाशेऽस्य नित्यत्वमेव यत् ।
तस्य प्रसारशीलत्वाद् धामत्वे मूर्तिभिन्नता ॥५८१
सिद्ध्यत्येव च मुक्तानामाधारत्वे निवासभूः ।
परमात्माऽन्वितत्वेन धामाख्यं तद्धि विद्यते ॥५८२॥
स्वेनैव स्वीयतत्त्वस्य धामता सत्तयाऽन्विता ।
विद्यते स्वशरीरस्य गुणद्रव्यस्य शाश्वती ॥५८३॥

सेवार्था भूमिका नित्यधामरूपा हरिश्रिता ।
सर्वप्रकाशदा मूलाऽऽपूरिका भूमिका स्थिता ॥५८४
नित्या नित्यस्य नित्यानां मुक्तानामाश्रयात्मिका ।
सृष्टीनां सर्वजीवानां सालोक्यादिसमर्पिका ॥५८५।
द्वाररूपा हरेः सर्वाधारताऽऽधायिका मता ।
सर्वसम्पत्स्वरूपा सा सर्वेष्टाकारसत्फला ॥५८६॥
भोग्यभोगोपकरणाद्यात्मवस्तुस्वरूपिणी ।
प्रकाशभूमिका सेयं धामरूपा हि शाश्वती ॥५८७॥
मूर्तिप्रकाशरूपा सा सर्वभोग्यार्थसारिका ।
अवश्यभावसम्पन्ना मूर्तेः सेवार्थसङ्गिनी ॥५८८॥
मूर्तेः सेवापराणां तु मुक्तानां सेवनार्थिका ।
मूर्तिभिन्ना वस्तुरूपा हर्यर्पणाऽर्थरूपिणी ॥५८९॥
मूर्त्यर्थं वर्तते नित्या सेवाऽऽवश्यकतार्थिका ।
मूर्तेर्मूर्तिपदार्थानां सेवार्थत्वे स्वभोग्यता ॥५९०॥
स्वस्यैव भोक्तृता स्यात्तत्स्वस्य स्वाश्रयता भवेत् ।
स्वभोग्यत्वे परार्पित्वं नैव घटेत कुत्रचित् ॥५९१॥
भोग्यभूमिर्यदि स्वामी भोग्यत्वे स्वामिताहतिः ।
मूर्तिवृत्तिगुणैश्वर्यादीनां मुक्तसुभोग्यता ॥५९२॥
आनन्दस्याऽऽनन्दप्रवाहाणां मुक्तादिभोग्यता ।
घटते वै तथा सर्वप्रकाशात्मकभोग्यता ॥५९३॥
सालोक्यसंगता नित्या रक्षिता परमात्मना ।
सेवाधर्मप्ररक्षार्थं धाम्नः साकारता सदा ॥५९४॥
प्रकाशस्थलतापन्नं सामर्थ्याऽन्तरमित्यपि ।
अप्रकाशं धामरूपं स्वीकार्यं तदपेक्षया ॥५९५॥
प्रकाशरूपं धामैव योग्यं सर्वप्रकाशम् ।
अनन्यचरितार्थं तद्धामात्म चरितार्थकम् ॥५९६॥
मूर्तरूपा च मुक्तानां मूर्तता तत्सुयोगिनी ।
हरेर्विशिष्टसेवार्थाऽक्षरस्याऽस्ति हि शाश्वती ।५९७॥
परब्रह्माकृतयश्च मुक्ता ब्रह्मस्वरूपिणः ।
वर्तन्ते ब्रह्मभावाश्च नित्या ब्रह्मविधा हि ते ॥५९८॥

तेषां ब्रह्मत्वसाजात्याद् ब्रह्मता मुक्तताऽन्विता ।
ब्रह्मभेदे प्रविष्टास्ते ब्रह्मत्वेन सदा स्थिताः ॥५९९॥
आगन्तुका ईश्वराश्च जीवा मुक्ता भवन्ति ये ।
तेषामीशत्वजीवत्वे धर्म्यात्मकत्वमागते ॥६००॥
विलीने कारणे भावे पराभूते समस्ततः ।
विशुद्धे सुप्रकाशे च ब्रह्मसाजात्यमागते ॥६०१॥
परेशकृपयोपास्त्या ब्रह्मप्रकाशकाशिते ।
ब्रह्मता मुक्तता तत्र वर्तते त्वनिवर्तिनी ॥६०२॥
धर्माऽवस्थालक्षणानां परिणामो मतः खलु ।
सौक्ष्म्यं स्थौल्यं भवेत्तत्तु तत्तद्व्याहतिकारकम् ।६०३
सुखं दुःखं भवेत्क्वापि दुःखं सुखायते क्वचित् ।
तथैवौजस्तथा ज्ञानं सम्प्रकाशायतेऽक्षरे ॥६०४॥
धाम्नि ज्ञानं प्रकाशात्मा ब्रह्मतां लभते तदा ।
ओज ईशः प्रकाशात्मा ब्रह्मत्वं लभतेऽक्षरे ॥६०५॥
ब्रह्मभेदे प्रमुक्तानां समावेशस्ततो मतः ।
ईश्वरत्वेन सांकर्यात् जीवत्वेनाऽपि संकरात्॥६०६॥
मुक्तत्वं नित्यमुक्तेषु संकरं चादिमुक्तगम् ।
अतो ब्रह्मत्वमेवैषु व्यवहारप्रवर्तकम् ॥६०७॥
ततश्चतुर्थभेदोऽयं ब्रह्मात्मा गणितोऽखिलः ।
मूलाऽक्षरं ब्रह्म चैकं मुक्ता अनन्तशोऽपरे ॥६०८॥
ब्रह्मरूपा ब्रह्मबोध्या ब्रह्मव्याहृतिगोचराः ।
प्रकाशतत्त्वसम्पन्ना बोध्या हरीच्छया तथा ॥६०९॥
अथ माया रञ्जनाऽऽत्मा रागरूपा प्रवर्तिनी ।
छाया माया विचित्रार्थवैभवा त्रिगुणात्मिका ६१०
तमोऽज्ञानं चाऽन्धकारश्चाऽऽश्चर्यं जडबन्धना ।
जडत्वं तत्र चाऽन्यव्यावर्तकं गण्यते यतः ॥६११॥
अज्ञानत्वं च वा तादृक् तथाऽऽवरकता च वा ।
मायात्वं चापि वै तत्राऽवच्छेदकं तु वा मतम् ।६१२॥
जडतत्त्वाऽधिहेतुत्वं ज्ञानशून्यार्थऽरूपता ।
अवभासाऽवरोधित्वं लक्षणान्यपि सन्ति हि॥६१३॥

तमस्त्वं सर्वथा मायाऽवच्छेदकं तु युज्यते ।
आवरकस्वभावस्य सर्वत्र घटनाद्यतः ॥६१४॥
चेतनस्याऽवरोधित्वं मायायां मुख्यलक्षणम् ।
जडत्वेन गतार्थत्वात् पृथक् तन्न मतं च वा ॥६१५
सत्त्वं भवेत्प्रकाशात्म ब्रह्म कस्मान्न तद्भवेत् ।
रञ्जनं चेद्रजोभागे कथमात्मा भवेन्न सः ॥६१६॥
नैकान्ततो द्वयं तत्स्यात् स्यात् त्वावरकमेकलम् ।
ज्ञाने प्रकाशे चाऽन्धं वै तमो माया ततो हि तत् ॥
सांख्यवत् सा न वै मान्या प्रकाशे संकरागमात् ।
ततो माया तमोरूपा तन्मात्रोत्पादिका जडा ॥६१८
पञ्चभूतात्मिका स्थूला तत्त्वैकादशरूपिणी ।
इन्द्रियाणीन्द्ररूपस्याऽऽत्मनः शक्तय ईरिताः ६१९
मनो मननविज्ञानमहं चाऽप्यहमामतिः ।
बुद्धिरेव महत्तत्त्वं मायांऽशा नहि ते ततः ॥६२०॥
प्राणनं जीवनं शक्तिरात्मस्था प्राणसञ्चरा ।
वायुरोधे विलयं सा याति त्वात्मनि मृत्यवे ॥६२१॥
सच्चिदानन्दरूपात्मस्वरूपे तद्विरोधि यत् ।
मायातत्त्वं कथं सच्चिदानन्दसुखभाग्भवेत् ॥६२२॥
प्रकाशाऽनात्मकं सत्त्वं सत्पदार्थस्वरूपकम् ।
स्वीकार्यं नित्यतायोगादसन्नेति तदर्थतः ॥६२३॥
रागश्चात्मसमिच्छाऽस्ति तीव्रा सा मायिकी कथम् ।
ततो रजःकल्पना वै सांख्यगा न तु चान्यगा ॥
आत्मनः साक्षिमात्रत्वे कल्पना सांख्यगा शुभा ।
आत्मनो ज्ञानवत्त्वादौ कल्पना ऽसांख्यगा शुभा ॥
ततस्तमःस्वरूपैव माया भूतविकारिणी ।
भूतात्मकत्वं मायाया लक्षणं च ततो मतम् ॥
अथाऽपरं ममताऽहंकारकत्वं सुलक्षणम् ।
चेतनस्य विरोधित्वं मायाया लक्षणं त्वपि ॥
द्रव्यं माया विकारित्वात् प्रसारित्वाद् गुणाश्रयात् ।
कारणकार्यभावाच्च जडं तत्त्वान्तरं हि सा ॥

अथेश्वरस्वरूपं तु द्रव्यमोजः प्रतापिता ।
प्रभावः परमैश्वर्यं शाश्वतं तत्त्वमेव तत् ॥६२९॥
प्रकाशवत्प्रभावोऽयं ओज आनन्दवत् स्वयम् ।
ज्ञानवन्नित्य एवाऽस्ति स्वतन्त्रश्चाऽभिभावकः ॥
पराभवकरश्चाऽयं तत्त्वात्मा त्वीश्वरः स च ।
प्रभावा ईश्वराः सर्वे ओजांसि चेतनात्मकाः ॥
विराडादौ वपुष्येते प्रसरन्ति द्रवात्मकाः ।
द्रविणो द्रव्यरूपास्ते सामर्थ्यज्ञानसंश्रयाः ॥६३२॥
परप्रकाशसंकाशाः सृष्टिशक्तिप्रपूरिताः ।
मायाऽण्डगोलकानां तु व्यवस्थास्थापका हि ते ॥
भूतभौतिकसृष्टीनां दर्शिनो दिव्यमूर्तयः ।
महामायाप्रभोक्तारो महासृष्टिनियामकाः ॥६३४॥
बहुज्ञाश्च बहुप्रकाशान्विता बहुवृत्तयः ।
बहूद्यमाश्च सृष्टचण्डानां नियामकशक्तयः ॥६३५॥
सञ्चालका भवन्त्येते त्वोजोमात्रस्वरूपिणः ।
ऐश्वर्याणि सुमूर्तानीश्वरा अनन्तसंख्यकाः ॥६३६॥
ओजस्त्वं चेश्वरत्वं वा संप्रवृत्तिनिमित्तकम् ।
विराडादीश्वरा यावन्महामायान्तरस्थिताः ॥६३७॥
चमत्काराधिक्ययोगाः सिद्धिसामस्त्यसंश्रिताः ।
नित्या एव तु मुक्तौ ते लीनेश्वरस्वरूपिणः ॥६३८॥
आविर्भूतब्रह्मभावा मुक्ता भवन्ति काशिनः ।
षड्डैश्वर्यप्रपिण्डात्मस्वरूपा भिन्नतत्त्विनः ॥६३९॥
जडापेक्षा भवन्त्येते ब्रह्माण्डानामधीश्वराः ।
ब्रह्माण्डाभिमानिनश्च ब्रह्माण्डवर्ष्मधारिणः ॥६४०॥
भूतसूक्ष्मशरीरास्ते मायातमोऽभिभाविनः ।
प्रकाशबहुलाश्चापि निजभानकृतीश्वराः ॥६४१॥
मायातमोऽल्पताव्याप्ताः प्रकाशाऽऽधिक्यसंभृताः ।
तथापि मायिका पुत्राः पुत्तला मायिका यतः ॥
ज्ञातृत्वं दिव्यमेतेषां बलं कोटचण्डकारि च ।
प्रत्येकस्य तमोयोगो बह्वावरणको नहि ॥६४३॥

एवमीशा वसतय ईशाधिपाश्च ते तथा ।
प्रजाः प्रजेश्वराश्चापि यथा तत्र तथाहि ते ॥६४४॥
ओजोरूपं पृथकतत्त्वं सृष्टौ सर्वत्र संस्थितम् ।
यथा शक्तिः पृथग्रूपा सर्ववस्तुस्थिता तथा ॥
माया शक्तिस्ततः प्रोक्ता दिव्या ब्राह्मी ततोऽन्यथा ।
ओजो वीर्यं बलं तेजः प्रभावश्च समर्थता ॥६४६॥
चमत्कारः सत्यरूपोऽनन्तरूपोऽर्थतः पृथक् ।
एवमीश्वरभावे वै यान्ति जीवास्तु ते तदा ॥
जीवत्वं स्वं विलीयैवोपासनाप्रभवाद्वलात् ।
ईश्वराः सम्प्रजायन्ते तादृगोजःप्रतापिनः ॥६४८॥
ओजस्त्वेन तत आविर्भूतेनौजस्त्वसंभृताः ।
ओजस्विनो भवन्त्येवेश्वराश्चमत्कृतिप्रभाः ॥६४९॥
सूक्ष्माऽतिसूक्ष्मगतयः स्थूलाऽतिस्थूलकार्यकाः ।
अण्डाध्यात्मस्थिरभावा निष्पद्यन्ते ह्युपास्तितः ॥
ज्ञानाऽणुर्ज्ञानपिण्डात्मा जीवात्मा चेतनो मतः ।
ज्ञानगुणाश्रयो ज्ञानं द्रव्यं प्रसारणात्तथा ॥६५१॥
गुणाश्चात्माश्रयणाच्च ज्ञानद्वारा शरीरवित् ।
ज्ञानमालोचनशक्तिर्मननं चाऽहमात्मकम् ॥६५२॥
बुद्धिर्ज्ञानं च धीर्ह्रीश्च भीः सुषुप्त्यात्मकं ह्यपि ।
प्रातिभं योगसंसाध्यं ज्ञानं साक्षात् प्रदिव्यकम् ॥
ज्ञानत्वं जीवताऽवच्छेदकं धर्मगतं तु चेत् ।
ईशाज्ञानाद्यतिव्याप्तं तदाऽज्ञत्वं च तन्मतम् ॥
मायायामतिगं तच्चेदल्पज्ञत्वं तथामतम् ।
अल्पज्ञत्वं तु जीवानां बहुज्ञत्वं तथेशिनाम् ॥६५५॥
यावज्ज्ञत्वं ब्रह्मणश्च सर्वज्ञत्वं परात्मनः ।
अज्ञत्वं मायिकं चैषा व्यवस्था सूपपत्तिका ॥६५६॥
जीवत्वं जीवतावच्छेदकं वा सम्मतं त्विहः ।
जीवत्वं चेश्वरत्वं च मायात्वं ब्रह्मता तथा ॥६५७॥
परब्रह्मत्वमेवाऽपि सिद्धाऽवच्छेदकानि हि ।
पुण्यवत्त्वं तु जीवानां चमत्कारित्वमीशिनाम् ॥

ब्रह्मणोऽन्तर्यामिता च सार्वज्ञ्यं, परमात्मनः ।
सर्वनियामकत्वं वा परब्रह्मण ईरितम् ॥६५९॥
इत्येवं तत्तदीयस्य विशिष्टधर्मणः खलु ।
धर्मिव्यावर्तकता वै ग्राह्या युक्तिसमाश्रिता ॥६६०॥
जीवेशानां प्रमुक्तत्वे ज्ञानत्वमीश्वरत्वकम् ।
सुस्थिरं सूक्ष्मतापन्नं स्वरूपेण विराजते ॥६६१॥
तत्त्वहानिर्न वै तस्मात् प्रकाशाप्तिस्तु चोत्तमा ।
ब्रह्मताऽऽपादिका तत्र मुक्तौ सम्पद्यतेऽधिका ॥
जीवानामीश्वराणां च मुक्तानां ब्रह्मता मता ।
मुक्त्यवस्थाप्रलाभेन श्रुतिप्रमाणसम्मता ॥६६३॥
श्रुत्यनुकूलतर्काणां सत्तर्कत्वमिहेप्सितम् ।
श्रुत्योक्तो ब्रह्मलोकश्च परब्रह्मेरितं तथा ॥६६४॥
मुक्तोपसृप्यसन्देशान्मुक्तता च समीरिता ।
ईशावास्यमिदं सर्वं ततो विराडजायत ॥६६५॥
विराजोऽधिपूरुषश्चेश्वरास्तेन समीरिताः ।
कपूयचरणा योनिं कपूयां यान्ति ते तथा ॥६६६॥
वर्तमाना अविद्यायामन्तरे मूढतान्विताः ।
कर्मफलप्रभोक्तारो जीवात्मनः समीरिताः ॥६६७॥
अजामेकामितिप्रोक्तां मायां प्राह तथा श्रुतिः ।
एवं प्रमाणसिद्धत्वात्तानि तत्त्वानि पञ्च वै ॥६६८॥
तद्गुणानां च शक्तीनां कर्मणां धर्मणां तथा ।
संसर्गाणामभावानां चाऽधिकरणरूपता ॥६६९॥
भवत्येवेति संक्लृप्त्वा श्रीहर्युक्तं तु पञ्चकम् ।
तत्त्वानां सर्वथा चाऽङ्गीकर्तव्यं मुख्यवर्त्मना ॥
प्रकारान्तरतस्तत्त्वबाहुल्यं प्रतिपद्यते ।
आवश्यकं प्रमन्तव्यम् अन्तर्भाव्यं तदन्यकम् ॥
व्यवहाराऽनुकूलत्वे रक्षणीयं विशिष्टकम् ।
इत्ययं चाऽत्र सिद्धान्तः सम्मान्यो हरिसम्मतः ॥
भिन्नशब्दप्रयोगाणां पञ्चके प्रविरामणा ।
कर्तव्या, नेतरत्कल्प्यमनावश्यकमित्यलम् ॥६७३॥

वाङ् परब्रह्मणो नित्यसर्वप्रत्यक्षदर्शिनः ।
पदार्थसत्यताहेतुस्तर्कोऽप्यव्याहताऽर्थिनी ॥६७४॥
स्वबुद्धेस्तत्र चाऽस्पर्शो सत्पदार्थस्य न क्षतिः ।
संस्कर्तव्या तथा बुद्धिः प्रभा स्याद् ओं नमोऽस्त्वलम्
अथ तत्त्वत्रयं प्रोक्तं जीवो माया परेश्वरः ।
शिक्षापत्र्यामस्य बोध्योऽभिप्रायः पञ्चके यथा ॥
ऐकात्म्यमेव विज्ञेयं नारायणमहेशयोः ।
उभयोर्ब्रह्मरूपेण वेदेषु प्रतिपादनात् ॥६७७॥
इत्यत्रोक्तं ब्रह्मतत्त्वं परब्रह्माऽतिरेकि तत् ।
चतुर्थतत्त्वं विज्ञेयं धामात्मकं यदक्षरम् ॥६७८॥
सत्यं ज्ञानमनन्तं च पूर्णं चाऽखण्डमक्षरम् ।
धाम यद्वासुदेवस्य मूर्तं चाऽमूर्तमुच्यते ॥६७९॥
शुद्धं नित्यं चाऽविकारि मायादीनां प्रकाशकम् ।
तद् ब्रह्मेति विजानीहि सर्वाधारतया मतम् ॥६८०॥
सत्संगिजीवने नीलकण्ठप्रश्नोत्तरे तदा ।
मुक्तानन्देन कथितं ब्रह्मधामाऽक्षरं पृथक् ॥६८१॥
निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् ।
विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा ॥६८२
शिक्षापत्र्यामिह श्लोके ब्रह्मधामत्वरूपिता ।
निजात्मनः समुक्ता वै भेदस्तुर्यस्ततो मतः ॥६८३
मतं विशिष्टाद्वैतं मे गोलोको धाम चेप्सितम् ।
तत्र ब्रह्मात्मना कृष्णसेवामुक्तिश्च गम्यताम् ॥६८४॥
अत्र ब्रह्मात्मना सेवा प्रोक्ता ब्रह्माऽक्षरं मतम् ।
यत्र गावो भूरिशृंगा अयासः परमं पदम् ॥६८५॥
वृष्णस्तदुरुगायस्य भूर्यत्राऽऽहाऽवभाति तत् ।
प्रकाशात्माऽक्षरं धाम प्रोक्तं श्रुत्याऽत्र वै हरेः॥६८६॥
देहत्रये विराडादौ व्याप्योत्पत्तिस्थितिक्षयान् ।
करोति जगतां यस्तु सर्वज्ञो ज्ञेय ईश्वरः ॥६८७॥
बहुज्ञोऽयं वर्णितोऽस्तीश्वरः सत्संगिजीवने ।
हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः ॥६८८॥
ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः ।
ईशो विशेषितश्चात्र स्वतन्त्र इति तेन वै ॥६८९॥
अस्वतन्त्रेश्वरश्चाऽन्यो व्यावृत्तोऽण्डेश्वरः स हि ।
द्वितीयो भेद एवाऽयमोजस्तत्त्वात्मकोऽस्ति वै ॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
एतत्पुरुषसूक्तेनेश्वरो वेदे प्रवर्णितः ॥ ६९१ ॥
ततो विराडजायत विराजोऽप्यधिपूरुषः ।
इत्यत्राऽपीश्वरा उक्ता वैराजा महत्तोऽपरे ॥६९२॥
एवमीश्वरतत्त्वं वै द्वितीयं सिद्ध्यति ध्रुवम् ।
ऐश्वर्याणि समस्तानि भवन्त्योजांसि चेश्वराः ॥६९३
ज्ञानमोजस्तमःप्रकाशाऽऽनन्दा द्रव्यरूपिणः ।
धर्मिधर्मस्वरूपेण संस्थिताः सन्ति ते ततः ॥६९४॥
न भावगुणताऽऽधेयत्वादिमात्रं प्रकल्प्यते ।
धर्मिरूपाः प्रवर्तन्ते मूर्तास्तेऽवस्थयाऽन्विताः ६९५
ज्ञाता ज्ञानं ज्ञानरूपे, ओज ओजस्त्वमित्यपि ।
ओजःस्वरूपे ज्ञातव्ये, माया मायिकमित्यपि ।६९६॥
मायारूपे प्रबोद्धव्ये, प्रकाशश्च प्रकाशता ।
प्रकाशरूपे भवतः, आनन्दोऽपि तथा मतः ॥६९७॥
आनन्दश्चैवापि तत्राऽऽनन्दिरूपं तथोभयम् ।
स्वाऽपृथक्सिद्धतादात्म्यस्वात्मकस्वपदार्थता॥६९८
परिणामस्वरूपेण धर्मशब्दाः प्रयोजिताः ।
धर्मिरूपं धर्म एव तत्तत्त्वं तु तदेव वै ॥६९९॥
विजातीयगुणाश्चापि धर्मिशक्तय एव ताः ।
धर्म्यात्मका भवन्त्येव कारणात्मकरूपिणः ॥७००॥
आधेयादिस्वरूपेण पृथक्शब्दाभिधाश्रयाः ।
व्यवहारविधानार्थं जायन्ते ज्ञानगोचराः ॥७०१॥
एवमेव पदार्थानां पञ्चानां सूपपत्तयः ।
वर्तन्ते तत्त्वदाढर्यार्थं कल्प्या न क्षतयोऽत्र नु॥७०२॥
तत्त्वमेकं व्यापकं वै सर्वत्राऽऽनन्दमस्ति हि ।
चतुर्विधासु खनिषु तदानन्दो विलोक्यते ॥७०३॥

अस्यैवाऽऽनन्दस्य चाऽस्ति मात्रा प्राणिषु सर्वथा ।
अस्यैवाऽऽनन्दस्य प्रकाशस्य प्रकाशताऽभितः ७०४
प्रकाशस्तस्य सर्वत्र विद्यते व्यापकोऽभितः ।
अस्यैवाऽऽनन्दस्य चाऽस्ति ज्ञप्तिः सर्वत्र देहिषु ७०५
ज्ञानं वै व्यापकं तेन सर्वत्राऽस्ति तदीयकम् ।
अस्यैवानन्दस्य सन्ति शक्तयः सर्वसृष्टिषु ॥७०६॥
व्यापिका प्रभवन्त्येता जडचेतनवृत्तयः ।
अस्यैवाऽऽनन्दस्य सन्ति प्रवृत्तयश्च सृष्टिषु ॥७०७॥
सप्रवृत्तीनि तत्त्वानि सर्वाण्यतो भवन्ति हि ।
अस्याऽऽनन्दस्य वै सर्वतत्त्वस्य भावनाः शुभाः७०८
इच्छात्मिका महाशक्तयश्चाऽऽनन्दस्य संभृताः ।
ताभिः क्रियाः प्रवर्तन्ते जीवादीनां यथायथम्॥७०९
अस्याऽऽनन्दस्य संकल्पाः सन्ति सर्वत्र गोचराः ।
सर्वे तथा प्रवर्तन्ते जडचेतनसृष्टयः ॥ ७१० ॥
धारणं पोषणं संहारणं चाऽस्यैव योगतः ।
प्रवर्तन्ते तथाऽन्यानि परिणामानि तान्यपि ॥७११
आनन्दस्य प्रभावेण सर्वमानन्दसंभृतम् ।
ऐश्वर्याणि प्रवर्तन्तेऽस्याऽऽनन्दस्य प्रभावतः॥७१२॥
सर्वं स्वैश्वर्यसंजुष्टं सदा प्रभवतेऽहतम् ।
एवमस्य व्यापकत्वं भवत्यानन्दरूपिणः ॥७१३॥
अस्य योगेन भूतानि चेतनानीव सर्वथा ।
प्रवर्तन्ते स्वकार्येषु स्वाभिप्रेतं यथा नु किम् ? ॥७१४
पश्यन्तु स्तनयित्नूस्तथा विद्युत् स्वरश्मिरूपिणी ।
पुनः पुनः पतत्येव दग्धुं स्वेष्टं न चेतरत् ॥७१५॥
यावद्दाह्यो भवेद् वृन्दे तावद् वर्तुलकानि सा ।
रचयित्वा मुहुर्यात्यपयात्यपि भुवस्तले ॥७१६॥
अभितो बहुवारं सा दाह्यं समीक्षते पृथक् ।
बहुमध्यगतं दाह्यं यदा दूरं मनाग् भवेत् ॥७१७॥
तावदभ्रगता विद्युद् दग्ध्वा प्रयाति तं द्रुतम् ।
विद्युत्सा जडरूपाऽपि चेतना दृष्टियोगिनी ॥७१८॥
देवीवत् कार्यकुशला कार्यं सम्पादयत्यलम् ।
एवं वारि प्रवाहेण समाकर्षति देहिनम् ॥७१९॥
पृथ्वी प्रकम्पते तद्वद् वायुः झंझाऽनिलोऽपि च ।
सर्वे कार्यं प्रकुर्वन्ति चेतना इव तद्युताः ॥७२०॥
शब्दश्चाऽर्थं बोधयति विषयास्त्वप्तिदास्तथा ।
ज्ञानं सर्वं प्रगृह्णाति चात्मने प्रददाति च ॥७२१॥
एवं जडं बीजबिन्दुरूपं पुष्टिं प्रयात्यनु ।
मानवाद्याकृतिप्रख्यं जायते सूक्ष्मतोऽपि वै ॥७२२॥
स्थूलरूपं चेतनाक्तं चेतनाभं प्रवर्तते ।
काष्ठे वृष्टौ त्रिल्लीछत्रं जायते चेतनं यथा ॥७२३॥
शैवालो वर्धते वारौ क्षारः पृथ्व्यां प्रवर्धते ।
प्रेरितं केन वै सर्वं तस्माच्छ्रीहरिरस्ति हि ॥७२४॥
तत्र सर्वत्र सर्वेषां प्रवर्तकः सुचेतनः ।
ज्ञाता कर्ता तथा भोक्ता किन्तु तद्धर्मभिस्तथा ॥
तथा तथा भवत्येव नाऽस्त्यपूर्णत्वमस्य यत् ।
एवमेव हि दिव्यस्य श्रीहरेः परमात्मनः ॥७२६॥
सर्वथा सर्वतत्त्वेषु सत्क्रियासक्तताऽस्ति हि ।
सत्तादिभिश्च वै सर्वव्यापकत्वं च तस्य वै ॥७२७॥
धर्मद्वारा व्यापकत्वं यद्यद्द्वारा यथायथम् ।
भवत्येव ततः सर्वं परब्रह्म खलु स्थितम् ॥७२८॥
नेह नानाऽस्ति मुख्यं वै हरिदृष्ट्या निषिध्यते ।
यान्यतिरिक्ततत्त्वानि युक्त्या सिद्ध्यन्ति तान्यपि ॥
परब्रह्मान्वितान्येवाऽस्तितावन्ति भवन्ति हि ।
अधिकानि भवन्त्येतान्यपि पञ्चत्ववर्णने ॥७३०॥
बाधकानि न सन्त्येव पञ्चता तु ध्रुवा यतः ।
एवमेषो हि सिद्धान्तः स्वयं श्रीहरिणेरितः ॥७३१॥
आत्मनि सम्परायाते ज्ञानं चाहमिका मतिः ।
चिन्तनं मननं पुण्याऽपुण्ये वियन्ति वर्ष्मणः॥७३२
तिष्ठन्ति पञ्चभूतानि सूक्ष्मभूतानि सन्त्यपि ।
त्रिगुणं वर्तते चापि तदन्यानि वियान्ति हि॥७३३॥

अतो मयागुणो ज्ञानं नैवाऽहन्ता च चिन्तनम् ।
मनश्चित्तं ततो नैवाऽऽत्मनोऽन्यथा त्वनर्थता ७३४
ज्ञानाद्यष्टौ तु मायाया महत्तत्त्वस्य चेद् यदि ।
ज्ञात्री मायाऽऽत्मवत्स्यांद्वै चेतना साऽपि संभवेत् ॥
कर्त्री भोक्त्री तथा चात्मसमा न स्याज्जडा ततः ।
आत्मधर्मा न मायायां मायाधर्मा न चात्मनि ।७३६
द्वयोर्वै ज्ञानधर्मित्वे व्यर्थता व्याहतिस्तथा ।
निर्गुणत्वं नाऽऽत्मनोऽस्ति साद्गुण्ये किं प्रयोजनम्॥
मायाया इति सम्मर्शे भूतमात्रप्रयोजनम् ।
आत्मनः शक्तयः प्रज्ञा इन्द्रियाणि हि वृत्तयः॥७३८॥
आत्मनो विगमे यान्ति या यास्ताश्चात्मवित्तयः ।
महत्तत्त्वं वृथा चाहंतत्त्वं वृथेन्द्रियाणि च ॥७३९॥
देवताश्च वृथा तस्मादात्मकुटुम्बकं हि तत् ।
आत्मनो निर्गुणत्वे वै महत्तत्त्वादिकल्पना ॥७४०॥
आत्मनः सगुणत्वे तु नाऽन्तःकरणकल्पना ।
तस्मात्तत्त्वानि शोध्यानि यज्जीवे जीवितानि हि॥
यद्विगमे विगच्छन्ति तानि तस्येति नाऽन्यथा ।
औपनिषदमार्गोऽयं मायासत्त्वप्ररक्षणम् ॥७४२॥
ज्ञानं वाऽऽत्मगतं चापि महत्तत्त्वगतं तथा ।
रागाऽरागौ पुण्यपापे महत्तत्त्वे तथाऽऽत्मनि ॥७४३
प्रवृत्तिश्चात्मगा चेच्छा महत्तत्त्वेऽपि वै तथा ।
अहंभावश्चात्मनिष्ठोऽहंकारस्थोऽपि वै तथा ॥७४४
मननं चिन्तनं चात्मनिष्ठं च मनसि स्थितम् ।
वृत्तयश्चात्मगा ज्ञानं चेन्द्रियस्थाश्च याः पृथक् ७४५
एवं द्वेधा भवेत्सृष्टौ जडायां चेतनेऽपि च ।
तदा सर्वं समानं वै जडं वा चेतनं यतः ॥७४६॥
सांकर्यं तद्धि नैरर्थ्ये फलस्येव न भिन्नता ।
सूक्ष्मं देहं चात्मगं चेदात्माऽणुः संभवेत्कथम् ।७४७
महानात्मा तदर्थं स्याच्छ्रुतिबाधो भवेत्ततः ।
चतुर्विंशतितत्त्वानां मायाजन्यत्वपक्षके ॥७४८॥
आत्मनो विगमे चापि त्रिगुणानां स्थितौ तदा ।
महदहम्मनसां च स्थितिः स्यादिन्द्रियाऽन्विता ॥
अज्ञानं कारणं धर्मो महत्तत्त्वस्य वै यतः ।
अज्ञाने संस्थिते सृष्टेः स्थितिस्तत्र न दुःसहा ॥७५०
बन्धमोक्षौ चात्मनः स्तौ धर्माऽधर्मौ तदात्मनः ।
प्रवृत्तिश्चापि निवृत्तिर्द्वेषरागौ तथाऽऽत्मनः ॥७५१
इच्छाऽऽत्मनस्ततो ज्ञानं चेन्द्रियाण्यात्मनस्ततः ।
गोलकानि तु भूतानि विषया भौतिकास्ततः ७५२
शरीरं भौतिकं यस्मात्कारणं प्रकृतिर्जडा ।
एवमेव सुघटते नोभयं नोभयत्र च ॥७५३॥
इत्येवं शोधनीयानि तत्त्वानि शास्त्रदृष्टिभिः ।
गतानुगतिकान्यत्र मन्तव्यानि न सर्वथा ॥७५४॥
युक्तिसिद्धानि च यथाऽपेक्षाणि सकलानि च ।
यथासिद्धान्तलभ्यानि मान्यान्येव न चान्यथा ॥
श्रुतिसिद्धानि मान्यानि चाऽविरुद्धानि नाऽन्यथा ।
आत्मनो निर्गुणत्वे तु मायातत्त्वानि सन्ति वै ॥
आत्मनस्तु सद्गुणत्वे चात्मतत्त्वानि तानि हि ।
तत्र युक्तानि योग्यानि नाऽन्यानि व्याहतेर्यतः ॥
सांख्यमतं चापि विशिष्टाद्वैतमतमित्यपि ।
सर्वथा स्वीकार्यमेव चेत् कथं तत्त्वसंगतिः ॥७५८॥
उभयस्मिन्मते तत्तत्तत्त्वानुसरणं तु यत् ।
एकस्मिन् वै मते नैव योग्यं नैरर्थ्यदर्शनात् ॥
विद्वद्भिश्चिन्तनीयं वै तत्त्वज्ञानं न चेतरैः ।
संस्कर्तव्यानि तत्त्वानि ग्रन्थसांकर्यमस्तु न ॥७६०
त्रयाणां वाऽथ पञ्चानामधिकानां निरूपणम् ।
वर्ज्यानां चाप्यवर्ज्यानां न्यूनानां च निरूपणम् ॥
कर्तव्यं दोषशून्यं वै ह्यन्यथा त्वप्रमाणता ।
आपद्येत ततो हानिर्विदुषां सम्प्रदायिनाम् ॥७६२॥
जाग्रति चक्षुषा चष्टे स्वप्ने पश्यति चक्षुषा ।
समाधौ चक्षुषा सोऽपि पश्यत्येव न चेतरैः॥७६३॥

मुक्तौ पश्यति नेत्रेण तस्माद् दर्शनशक्तयः ।
आत्मन्येव भवन्त्येता ज्ञानरूपा न चेतराः ॥७६४॥
नेत्रदर्शनरीत्या वै शरीराणि भवन्त्यपि ।
जाग्रति भौतिकं स्थूलं स्वप्ने विमर्शरूपि तत् ॥७६५
समाधौ चापि निर्माणचित्तैश्वर्याऽस्मिताभवम् ।
मुक्तौ चात्मज्ञानचैतन्यात्मब्राह्मतनुप्रखम् ॥७६६॥
आत्मरूपं स्वस्वशक्तिसामर्थ्यैश्वर्यशालि तत् ।
सर्वतद्गुणसम्पन्नं श्रीहरेर्मूर्तिसदृशम् ॥ ७६७ ॥
देहव्याप्तं यतो ज्ञानं देहाकारं विराजते ।
तदेव ब्रह्मताभावे शाश्वतं मूर्तितोऽस्ति हि॥७६८॥
परब्रह्मोपासनोत्थं तद्रूपं घट्टतां व्रजेत् ।
ज्ञानादयो भवन्त्येव स्पर्शः क्ष्मादिगतो यथा ॥७६९
पञ्चतत्त्वानि नित्यानि नित्यापेक्षाणि यान्यपि ।
नित्यान्यभिप्रेयरूपाण्येतानि त्वधिकान्यपि ॥७७०
मन्तव्यानि यथापेक्षं शास्त्रदृष्टिभिरादरात् ।
तानि निरूपितान्यत्र शास्त्रताया विशुद्धये ॥७७१॥
जीवेशमायाब्रह्माणि परब्रह्म च तद्विदः ।
कालः सृष्टिप्रवाहश्चेत्यष्टावनादयो हि नः ॥७७२॥
सत्प्रमेयप्रमाणप्रमितिप्रमातृसंज्ञक— ।
खण्डचतुष्टयात्मैतत्तत्त्वप्रभावली मया ॥७७३॥
कृष्णवल्लभाचार्येण प्रतीचीकाशिवासिना ।
पदवाक्यप्रमाणादियावद्विद्याऽधियोगिना ॥७७४
नव्यन्यायाऽऽचार्य-विद्वत्सार्वभौमादिशोभिना ।
सांख्ययोगप्रवेदान्तमीमांसातीर्थशालिना ॥७७५॥
यावद्दर्शनशास्त्राऽधितलाऽतिस्पर्शिधीमता ।
भिन्नबहुलग्रन्थादिभाष्यटीकाविधायिना ॥७७६॥
शास्त्रार्थोऽध्यापनवक्तृरचनाशक्तिवार्धिना ।
व्योमगुणाकाशनेत्रमिते विक्रमवत्सरे ॥७७७॥
आषाढपूर्णिमायां संगवे पूजामहोत्सवे ।
चरमाऽक्षरसन्न्यासात्मिकेयं विपुलाकृतिः ७७८॥
अध्येतॄणां तत्त्वबुद्धिपरिष्कृत्यभिवित्तिदा ।
श्लोका अशीत्यूर्ध्वसप्तशतानि यत्र भान्ति सा॥७७९
सौराष्ट्रे पश्चिमे प्रान्ते रैवताचलपादगे ।
जीर्णदुर्गे कृता पूर्णा भक्तिमुक्तिफलाऽस्तु मे॥७८०॥
॥ श्रीश्वेतायनव्यासो विजयते ॥

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाऽऽचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाऽऽचार्य-स्वामिनारायणविरचितायां तत्त्वप्रभावल्यां चतुर्थे प्रमातृखण्डे पञ्चतत्त्वपरिच्छेदः ॥ चतुर्दशः परिच्छेदः ॥
॥ सम्पूर्णोऽयं चतुःखण्डात्मको ग्रन्थः ॥



ॐ सर्वप्रत्यक्षदर्शिने नमः

# अथ साक्षात्कारसूत्राणि कल्याणीवृत्तिसहितानि

## ॐ सर्वं साक्षात्, सरचयितृत्वात् ॥ सूत्रं-१ ॥

**मंगलम्—**

आत्मा नित्योऽणुरेषः स्वकवयुनवितत्याऽर्थरूपादिवेत्ता,
वित्तिर्धर्मस्वरूपा निजचिदधिशया धर्मिलभ्याऽऽत्मक्लृप्तिः ।
नित्याऽवस्थाऽधियोगा वितरति निजभां स्वप्रकाशेऽपि मुक्तौ,
ब्रह्मानन्दाऽशनोऽयं परमपतिमितो मोदते स्वस्वरूपे ॥ १ ॥

**कल्याणी वृत्तिः**—सूत्रे ओमिति विशिष्टः सर्वतत्त्वात्मकः परमेश्वरो मंगल—दर्शनः, । अथ—१ साक्षात्, २ अनुसाक्षात्, ३ सदृशसाक्षात्, ४ व्याहृतिसाक्षात्, ५ अर्थात्साक्षात्, ६ व्यतिरेकसाक्षात्, ७ सम्भवत्साक्षात्, ८ पारम्परिकसाक्षात्, ९ चैष्टिकसाक्षात्, १० प्रातिभासिकसाक्षात्, ११ स्वाप्निकसाक्षात्, १२ व्यूहितसाक्षात्, १३ संकरितसाक्षात्, १४ चिदाभासिकसाक्षात्, १५ चेतनीयसाक्षात्, १६ १६ सर्वज्ञीयसाक्षात्, इति षोडशविधः साक्षात्कारः । अथ—सर्वज्ञस्य साक्षात्त्वे शाब्दं सहेतुकं वा पक्षसाध्यात्मकं सूत्रं निरर्थकमिति चेत् । न । व्याहृतिसाक्षात्कारेण अनुसाक्षात्कारः साक्षात्कारस्वरूपं दर्शयति । रचयितुः सर्वज्ञीयसाक्षात्कारेण सर्वं विषयीकृतं स्वात्मकं विशिष्टं विषयीकृतमेवेति ज्ञाप्यते दर्श्यते,न अदृष्टं दर्श्यते,किन्तु दृष्टं दर्श्यते दर्शनस्याऽनिरोधात्, सातत्यात् । सावरणदृशां सापेक्षं दर्शनं तदापेक्षिकत्वमुत्सार्यते—इति प्रयासः । सापेक्षदृशं प्रति व्यवहृतिसाक्षात्कारोपयोगात् न सिद्धसाधनं नांऽशे पक्षाऽसिद्धिर्न वा सहेतुकत्वेन साक्षादन्यत्वापत्तिः, अन्यस्याऽपि साक्षात्वात् । नैतावता साक्षादेकं तत्त्वम्, विषयविषयितत्त्वद्वयात्, आधाराऽऽधेयत्वेन समावेशात्, विषयेषु दृक्, तदाधारो विषयो दृगाधेया, यदि दृशि विषयाकारास्तदा दृगाधारा विषयाकारा धार्याकारात्मका आधेयाः, धर्मिणा धर्माणां संसर्गाणां तत्त्वानां तथैव व्यवहारसमावेशात्, दार्शनिकैर्बहुधा विवेचितानि तत्त्वानि—चेतनो जडश्चेति, द्रव्यमद्रव्यमिति, भावोऽभावश्चेति, ज्ञेयं ज्ञप्तिर्ज्ञाता चेति, प्रमाता प्रमाणं प्रमेयं प्रमितिरिति, द्रव्यं गुणः द्रव्यगुणः गुणः इति, व्यक्तिर्जातिरिति, बाह्यम् आन्तरमिति, व्यापकं व्याप्यमिति, एकम् अनेकमिति, यत् किमपि भवति तद् दर्शनाद् बहिर्न भवति, यद् दर्शनाद् बहिस्तच्छून्यम् अतत्त्वमिति । यस्य तु शून्यमपि तत्त्वम् अभावश्च, तस्याऽपि साक्षाद्दर्शनमतेऽत्र व्यतिरेकसाक्षात्तत्त्वात्मकत्वम्, नाऽतो व्याप्त्यसिद्धिः, सर्वविधज्ञप्तिदृशां येषां केषाञ्चित् दृश्यत्वादेव,सर्वताऽवच्छेदकाऽवच्छेदेन वा साक्षात्त्वं पक्षतावच्छेदकम्, समानाधिकरण्येन सापेक्ष-साक्षात्त्वं साध्यम्, निरपेक्षदृक्त्वं च साधनम्, विषयत्वसंसर्गेण व्याप्तिः, नाऽतो वैयधिकरण्यम्, विशेषतायोगेन अनैकान्तिकताया वारणात् । एवं च रचयिता परमात्मा सर्वनित्यप्रत्यक्षदर्शी, तद्दृश्यत्वस्य केवलान्वयित्वात् व्यापकत्वात् व्याप्यदृश्यत्वस्य सुतरां सिद्धत्वादेव अदृक्त्वमुत्सारितमनेन सूत्रेण । रचना हि नित्याऽनित्यानां क्लृप्तिः । तत्त्वं न अदृक् व्यापकदृग्विषयत्वात् नित्यदृग्वत्-—इत्यपि फलति ॥ १ ॥

## तद्विधानां चापि तदाविर्भावात् ॥ सूत्रम्-२ ॥

रचयितृविधानामवतारिपुरुषाणां वासुदेवस्य नारायणस्य श्रीकृष्णस्य परमशिवस्य ब्राह्मीणां नारायणीनां हरिणीनां परमेश्वरीणां श्रीहर्यवताराणां चापि तस्मादेव नित्यप्रत्यक्षदर्शिपरमात्मन एव यत्र यदा यथापेक्षा तत्र तदा तथाविधरूपेण दर्शनीयाऽऽ-

विर्भावात् सार्वज्ञ्यादिसमृद्धात् सर्वेषां तेषामाविर्भावाणां तत्त्वादेव सर्वदर्शित्वं सूक्ष्मव्यवहितविप्रकृष्टलीनतिरोभूताऽणुयोग्यतावद्गौणाऽपृथग्भावाऽभावयत्किञ्चिद्यावद्व्यष्टिसमष्टिकारणाऽवस्थकार्याऽवस्थतदनावस्थसार्वदिकसदसद्वस्तुगोचरदिव्यदृग्दर्शित्वं सर्वथाऽस्तीति सर्वं साक्षाद् रचयित्राविर्भावाणां यत्सापेक्षं दृश्यमदृश्यं तत्सर्वमपि तेषां दृष्यं साक्षादित्यस्मत्कल्पितमदृश्यमुत्सार्यते–'चाऽपि' इतिना। 'स ऐक्षत बहु स्यां प्रजायेति' सर्वं पश्यन् वहुधा पश्यन्नेव स बहुरवर्तत। 'स ईक्षांचक्रे' 'यः सर्वज्ञः सर्ववित्' 'पश्यत्यचक्षुः' 'दिव्यं ददामि ते चक्षुः' 'बहिरन्तश्च भूतातानाम्' 'तान्यहं वेद सर्वाणि' 'वेदाऽहं समतीतानि वर्तमानानि चाऽर्जुन। भविष्याणि च भूतानि' 'धाता विधाता परमोतसंदृक्' 'एको देवः साक्षी' 'योऽस्याऽध्यक्षः परमे व्योमन्' 'ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणः' (मोक्षधर्मे)। 'सः साक्षादिदमद्राक्षीत् तत् यद् अद्राक्षीत् तत् साक्षिणः साक्षित्वम्' (बाकलशाखा)। 'अपश्यमप्यये मायया विश्वकर्मण्यदो जगन्निहितं शुभ्रचक्षुः' (ऋग्वेदखिलः)। 'साक्षी चेताः' 'सर्वतश्चक्षुः' 'स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम' 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' 'न तदस्ति विना यत् स्यात् मया भूतं चराचरम्'। 'विशेषका रुद्रवैन्येन्द्रदेवा राजन्याद्या अंशयुता अन्यजीवाः कृष्णव्यासौ रामकृष्णौ च रामकपिलयज्ञप्रमुखाः स्वयं सः (पैङ्गिखिलः)। वर्तमानमतीतं च भविष्यत्स्थूलमण्वपिः। तथा दूरमदूरं च निमेषः कल्प इत्यपि। चिदात्मनि स्थितान्येव पश्य मायाविजृम्भितम्' 'वेत्ताऽसि वेद्यं च परं च धाम'। 'शरीररूपिका अशरीरस्य विष्णोर्यतः प्रिया सा जगतः प्रसूतिः'। 'श्रीश्च ते लक्ष्मीश्च' सर्वद्रष्ट्री। 'परा यथा तदक्षरमधिगम्यते' इति परा नारायणी नित्यसाक्षाद्द्रष्ट्री, स्वयं दष्ट्री दर्शनकारिणी चोक्ता। 'अवतारा आविर्भावाः, ते च सर्वसाक्षाद्द्रष्टारः सर्वरचयितृतदात्मतत्त्वात् तद्वत्'। न ह्यत्र सिद्धसाधनम्, सापेक्षाणां विशेषाकारेषु रूपेष्वपि च येषां कृते तदप्राप्तिस्तेषां कृते एतत्प्रयोगात्। अत्रापि भिन्नाकारप्रयोज्यं यत् सन्दिग्धम् असाक्षाद्द्रष्टृत्वं विषयतया लौकिकानां धीगतं तदुत्सार्यते। एतेषां विग्रहिणां विग्रहिभिः सह तु अनुसाक्षात्त्वादिकं स्वैच्छिकं ताटस्थ्यात्मकम्, तत्साक्षाद् दृक्षु सामान्यविशेषात्मिकाऽस्मद्दृग् यावतीषु प्रवर्तनाऽसामर्थ्यवत्यपि दत्ताऽधिकारमात्रप्रवर्तनावत्त्वेन तत्साक्षात्त्वं विषयीकरोतीति तत्साक्षात्कृतिसामान्यलक्षणाऽन्वयेन आविर्भावसाक्षात्त्वम् अनुदर्शनीकरोतीति न तत्राऽसिद्धचवकाशः। व्यतिरेकसाक्षात्त्वेन प्रधानस्याऽप्यनुसमभिव्याहारात् न प्रकरणसमस्याऽपि समयः। मूलतत्त्वेन तादात्म्यान्न तद्बाधोऽपि। नित्येऽप्यवस्थासञ्चारान्न भेदापत्तिप्रयुक्तविरोधिता। तद्विषयकत्वेनाऽपि गतिमत्तया न शून्यनिवृत्तिसमापत्तिः। अपिना व्याप्यानां तदात्मकानां तत्तत्त्वता दर्शिता। चकारेण सुसमुच्चय आविर्भावाणां यावत्त्वेनाऽऽसाद्यते ॥ २ ॥

**॥ तत्सहस्थितानामपि तथा तत्साध्व्योदिमत्त्वात् ॥**

**॥ सूत्रं०–३ ॥**

तस्मिन्परमात्मनि तदाविर्भावेषु च सहत्वेनाऽऽधेयतया सामानाधिकरण्येन स्थिता गुणा ऐश्वर्याणि शक्त्यश्चिह्नानि भूषालंकाराश्चेतनांऽगप्रत्यंगपरिवृता रोमदन्तनखाद्याः सामर्थ्यसिद्धयुपकरणाद्या ये यावन्तोऽनवशेषास्तेषां शाश्वततदात्मकतत्त्वात्मकतया स्थितानामपि तत्साक्षात्कारात्मकदृक्त्वात् स्वकीयदृशां स्वदृक्त्वात् स्वदृशां स्वाऽऽपूरकदृक्त्वात् मिथस्त्वेऽप्येकदृक्त्वात् परमेश्वरप्रकाशस्य सर्वदृक्त्वात् ब्रह्मात्मकप्रकाशस्य सर्वप्रकाशदृक्त्वात् धामप्रकाशस्य बृहतोऽपि सर्वबृहतोऽपि सर्वदृक्त्वात् सर्वदृग्विषयत्वं साक्षात्त्वं सर्वत्र तद्दृग्विषयत्वात् सर्वं तदीयसाक्षात्कृतमिति सर्वं साक्षादिति सध्रीचीनम्। तथा च सर्वमपि साक्षात्त्वावृतसाक्षात्त्ववत् आधाराऽऽधेयैकसाक्षाद्गोचरत्वात्। आधारसाक्षात्कारस्य सत्त्वेनैव तदभिन्नाऽऽधेयसाक्षात्कारस्य सुतराम् अप्राप्तिपूर्वकप्राप्त्यतिरिक्तप्राप्तत्वेन तद्वत्त्वे तद्वत्त्वमिति सर्वत्र, तथा—साक्षात्त्ववत्त्वं दर्शितं भवति। येन प्रकारेण परमात्मनस्तेन प्रकारेण तद्गुणादीनां सर्वत्र साक्षात्कृत्वम्। आधाराऽऽधेयताकृतवैलक्षण्यनिर्वाहे विद्यमानेऽपि ग्राह्यत्वेऽवैलक्षण्यं घटादौ सूर्यदृशेर्मानवदृशेरिवेति

तत्प्रणिधानार्थमुक्तम्—'**तत्साष्टर्यादिमत्त्वादिति**' आधाराऽऽधेयानां समैश्वर्यवत्त्वं समसारूप्यवत्त्वं समाश्रयकत्वं समत्वप्राप्त्या साक्षात्त्वं समं दर्श्यते, एकं सर्वनियामकत्वं तु असार्ष्टि तत्रापि तत्साक्षात्त्वं प्रवृत्तमेवेति दर्श्यते, नाऽतोऽसार्वज्ञ्यापत्तिः, न वा तत्र भागेऽसिद्धिः, सार्ष्टिसत्त्वेन नांऽगभंगापत्तिः, न तत्र प्राधान्यहानिः, न चाऽप्राधान्यभंगः, न च तत्त्वतोऽपि हानिः। अथ सार्ष्टिप्रयुक्तत्वमनेकपरमात्मत्वमिति अर्थान्तरं चेत्। न। समत्वेनैव तन्निरासात्, पूर्वसिद्धे ततः समत्वयोगः, यः पूर्वपूर्वसिद्धः सः परः परमेश्वरः ततोऽपि ततोऽपीत्येवमन्ते एक एव सः। अन्ये तु सार्ष्टयः, तत्रेदमस्य साक्षात्त्वस्य प्रदर्शनम्। अथाऽपि सार्ष्टिनियामकत्वमेव नियाम्यसार्ष्टीन् व्यावर्तयत् समर्ष्टित्वं व्यवस्थापयति। अथ व्यावर्तनं व्यवस्थापनं चैकेन चेत्!, बाधः। न बाधः पक्षभेदात्। अथ विपरीतं भवतु—प्रकाशसार्ष्टित्वं प्रकाशिनि, तथा च मिथः साध्याऽभावेऽनैकान्तिकतेति चेत्!, न। आधेयसाक्षात्त्वस्य कारणस्य नित्ये तत्राऽस्थानात्। अथाऽवस्थापरिवर्तनादपि तत् सुघटमिति चेत्, पूर्वाऽवस्थस्य प्राधान्यात् प्रकाशिन एव तत्रापि प्राधान्यात् विपरीतत्वाऽभावात्। अथ समाने समानं स्यादिति चेत्!, तदपि प्रधानाऽनैक्ये तत्त्वभेदापत्तिबाधितमेव। अथ तर्हि कथं सार्ष्टित्वम्? । रामप्रेरितप्रधानाऽमात्यवत् सार्ष्टित्वम्। 'अन्तरो यमयति' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति स्वामित्वं प्रभुत्वं प्रधानाऽमात्यत्वं प्रधानत्वं चक्रवर्तिन्यपि चक्रेषु वृत्तं परावृत्तं भिन्नाऽवस्थायोग्यताऽर्हं चक्रवर्तिनि तु तत्र शाश्वतं परिवर्तनयोग्यताऽनर्हमिति परमेश्वरे नित्यर्ष्टिमत्त्वम् ऋष्टिषु तत्र वृत्तितया तदधीनाऽऽर्ष्टित्वम्, ऋषिरायुधं विद्युत् प्रकाशो विज्ञानं सार्वज्ञ्यम्, सूक्ष्मानप्यर्थान् पश्यतीति ऋषिः ऐश्वर्यवान्, ऋष्टिश्च आर्ष्टिश्च दिव्यदृग् दिव्यं महैश्वर्यम्, महेश्वरस्य परमेश्वरस्याऽधीनमिति निरुक्तबलेनोभयप्रधानसमतासमाधानम्। श्रुतिमूलकतर्कप्तिपदार्थप्राधान्यम्। अज्ञत्वपराहतसाम्याऽप्रसञ्जनात् परमेश्वरे तदवतारे तदैश्वर्ये तदुपकरणे तत्प्रकाशे साक्षात्त्वं सममपि प्रेर्यप्रेरकतया विशेषताऽन्वितमिति सूत्रेणाऽनेनाऽऽवेदितम्, शास्त्रमूलकतथास्थितिकत्वादेवमेवाऽऽस्थेयं भवतीति। एकमूर्तिकमिदमास्थानम्। एतेषां सर्वं प्रत्यक्षमिति सुस्थमेव ॥ ३ ॥

**॥ तद्योगिनामपि च, तत्समाधिमत्त्वात् ॥ सूत्रं-४ ॥**

अपि च विभिन्नसृष्टिषु विचरतां तेषां—परमेश्वरस्य तदायधानां तदुपकरणानां तच्चिह्नानां तद्वेषाणां तदैश्वर्यगुणादीनां तत्प्रकाशानां यत्र क्वापि मुहूर्तमप्यवस्थाने सति तदानीं तेषु सुमूर्तेषु योगसमाधिमतां तेषु सम्प्रज्ञातादिमतां तत्तदीयदृष्टिषु दृष्टितादात्म्यशालिनां चापि सिद्धानां सर्वविषयकतारकोदयितां निरपेक्षसमर्थसाक्षात्कारो वर्तते, 'भुवनज्ञानं सूर्ये संयमात्' 'ध्रुवे तद्गतिज्ञानमि'त्यादिना दिव्यसाक्षात्काराः पतञ्जलिना संकर्षणाऽवतारेण वर्णिताः, किमपि तत्त्वं तन्नास्ति यत् योगिनां योगजसाक्षात्काराऽगोचरं स्यात्, सर्वज्ञे संयमात् सार्वज्ञ्यं सर्वसाक्षात्कारात्मकमुदेत्याविर्भवति। अथाऽसमाधौ किं तत्?, साक्षादपि तत्सापेक्षं तिरोधानाऽवस्थं, पश्चात् सति परमे योगे आविर्भावाऽवस्थं साक्षात् तत्, न त्वसाक्षात्, आनुसाक्षात्त्वादि तु भवति, योग्यसर्वज्ञसापेक्षत्वात्, अगतौ तु व्यतिरेकसाक्षात्कारात्मकता युक्ता, अतः स्वरूपात्मत्वे न व्यभिचरिततेति। योगिष्वलौकिकसाक्षात्कारस्य दर्शनसम्पत्तेः, युक्तस्य सर्वदा भानात्, वामदेवादीनां तथाख्यापनात्, 'तारकं सर्वविषयं सर्वथाविषयमि'त्यादियोगसूत्रात्। प्रातिभप्रकाशस्यापि तथात्वेनाऽङ्गीकारात्। ब्रह्मसाक्षात्कारस्याऽऽत्मसाक्षात्कारस्य विमलविज्ञानोदयस्य स्वरूपाऽवस्थानप्रकाशस्य प्रतितन्त्रेऽपि प्रदर्शनात्। फलप्रकाशस्य सर्वत्र व्यापनात्। तस्मिन् तस्मिन् ब्रह्माण्डे प्रतिष्ठद्योगिसाक्षात्कारे प्रवृत्ते समष्टावपि तथाविधत्वे ब्रह्मविष्णुमहेशानां साक्षात्काराऽऽवश्यकनियमेन वैराजसाक्षात्कारनियमेन च साक्षात्कारविषयता विषयतात्वेन सम्पन्ना भवत्येवेति सर्वतत्त्वानां साक्षात्त्वं चाऽस्त्येव। समाधिसम्पत्तिरूपं साक्षात्त्वं समाधिद्वारकमनेन सूत्रेण दर्श्यते, 'ये च—मां भक्त्या नित्ययुक्ता उपासते' स्नेहेन सेवन्तेऽभ्यासमातिष्ठन्ति, परमार्थदर्शनेनाऽभ्यस्यन्ति, विश्वतोमुखं

सर्वतोमुखं मामुपासते, एकं सर्वं विशिष्टं मामुपासते, ज्ञानयज्ञेन निर्विकल्पसमाधिनेति पातञ्जलाः,एकत्वेनाऽहमेव भगवान् वासुदेव इत्यभेदेनौपनिषदाः,पृथक्त्वेनाऽयमीश्वरो मम स्वामीति बुद्धया प्राकृताः,अन्ये बहुधा सर्वतोमुखं भगवत्स्वरूपं मामुपासते, वेद्यं मां सम्यग्दर्शिनो ज्ञानिनो योगिन उपासते, मद्याजिनो मां सर्वज्ञं सत्यसंकल्पमानन्दघनमूर्तिमुपासते,उक्तोपासनानां फलम्—'एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः। एकान्तभक्तिर्गोविन्दे यत् सर्वत्राऽऽत्मदर्शनम्। भक्तियोगिनां सर्वात्मकसाक्षात्कारो भवतीति प्रोक्तम्। 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः, सोऽविकम्पेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते, सर्वसाक्षात्कारवान् भवति। 'ददामि बुद्धियोगं तम्' येन सम्यग्दर्शनलक्षणेन बुद्धियोगेन सर्वात्मभूतं मामुपयान्ति पश्यन्ति। 'ज्ञानदीपेन भास्वता' 'परेण ज्योतिषां ज्योतिषा' युनज्मि। 'मुनीनां सर्वार्थयाथार्थ्यदर्शिनाम्' 'महायोगेश्वरोऽर्जुनं सर्वात्मकतां दर्शयामास' पाण्डवः कृत्स्नं जगद्धरेर्मूर्तौ एकदेशेऽपश्यत्, इतरदेशस्याऽपि सुतरां दर्शनम्, दैवेन चक्षुषाऽपश्यत्'। अर्जुनः प्राह त्वामनन्तम् अनन्तां च सृष्टिं त्वयि पश्यामि'। 'रुद्राः सिद्धाश्चापि त्वां तथाभूतं वीक्षन्ते'। भगवत्प्रदत्तचक्षुषा सर्वसाक्षात्कारवत्त्वमर्जुनादये दर्शितम्। अतः सर्वं साक्षाद्विषयम्। अर्जुनदृष्टे सर्वविधाः साक्षात्काराः दर्शिताः। यावत्कृपासमाधिस्तावत्सर्वदर्शनमिति चापि विलक्षणताऽनेन सूत्रेण 'तत्समाधिमत्त्वादि'त्यनेनाऽऽवेदिता।'यः पश्यति स पश्यति' 'समं पश्यन् ततो याति परां गतिम्'। 'अनुपश्यति, ब्रह्म सम्पद्यते तदा' 'ज्ञानचक्षुषा विदुः' 'मद्भावं सोऽधिगच्छति' इति साक्षात्कार एतेषां कथितः॥ ४॥

**मुक्त्यात्मनामपि सर्वथा तथात्वं, तत्साद्गुण्याऽऽविर्भावात्॥ सूत्रं-५॥**

अथ ये ब्रह्मलोकस्थं स्वयं साकारं सुमूर्तमक्षरं ब्रह्म, 'यदक्षरं वेदविदो वदन्ति'। 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्। विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः'। 'यस्मिँल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म'। 'लक्ष्यन्तेऽन्तर्गताश्चाऽन्ये कोटिशो ह्यण्डराशयः। तदेतदक्षरं ब्रह्म'। 'ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि'। 'ब्रह्म ज्योतिः सनातनम्'। 'यस्य भासा सर्वमिदं विभाति'। 'यद्विपश्यन्ति मुनयः'। इति परमबृहत् सर्वसाक्षात्कारि भूमरूपममूर्तं च तदेव ब्रह्म लीलाधृतनित्यदिव्यरूपं सुमूर्तं सेवकं वर्ततेऽपि। 'एतमेव पुरुषं ब्रह्म ततमपश्यत्'। 'ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति'। द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च'। 'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना। सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि'। इत्यक्षरात्मना ईक्षणं सृष्टिविषयकं साक्षात्कारो ब्रह्मणः, सर्वं ब्रह्मसाक्षाद्गोचरम्। 'सर्वं खल्विदं ब्रह्म'। 'तद् द्रष्टृ' 'तत् साक्षि'। सर्वमस्य साक्षात्। यदन्तर्नियमयति तत्फलप्रदातृ साक्षीति सर्वदर्शीति। अपिना—सर्वथा ब्रह्मगोचरं साक्षादिति निवेद्यते, न तत्र श्रुतिषु तर्काऽपेक्षा। नित्यं विज्ञानमानन्दं ब्रह्म व्यापकं साक्षात्कारतत्त्वं सर्वं साक्षाद् विषयीकरोति। एवं च सति ब्रह्मसाधर्म्यमाप्तानां मुक्तानां ब्रह्मरूपाणां 'यत्र पूर्वे साध्याः सन्ति देवाः' इति नित्यदिव्यमुक्तानां, 'यद्गत्वा न निवर्तन्ते' इति गन्तृमुक्तानां 'स एतान् ब्रह्म गमयती'ति आतिवाहिकमुक्तानां 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति सर्वकामाशनमुक्तानां 'पूता मद्भावमागताः'। 'मम साधर्म्यमागताः' 'निरञ्जनः परमं साम्यमुपैति' 'मद्भावं याति' 'स याति परमां गतिम्' 'परं स्थानमुपैति चाद्यम्' 'मुद्भावायोपपद्यते' 'विमुक्तोऽमृतमश्नुते' 'ब्रह्मभूयाय कल्पते'। इत्येवं मुक्तिस्थानां 'सालोक्यसार्ष्टिसामीप्यसारूप्यगतानां मुक्तानां च, सर्वगोचरतात्मकसाक्षात्कारविषयता सर्वसाक्षात्कारविषयता सर्वत्राऽस्ति। मुक्तिं गतानां ब्रह्मपुरगोलोकवैकुण्ठाऽमृताऽव्याकृतादिधामस्थानां मुक्तात्मनां सुमूर्तानां ब्रह्मसमानानां सर्वथा सर्वैः प्रकारैस्तथात्वं सर्वतत्त्वसाक्षात्कारवत्त्वमस्ति, तस्य परमेश्वरस्य स्नेहध्यानोपास्तिभक्त्या साद्गुण्यं समानगुणवत्त्वं यत् ज्ञानशक्तिबलैश्वर्यवीर्यतेजोवत्त्वम् अपहतपाप्मत्वविजरत्वविमृत्युत्वविशोकत्वाऽक्षुधत्वाऽपिपासत्वसत्यकामत्वसत्यसंकल्पवत्त्वं चाविर्भवति मुक्तेषूपास्त्या

तत्प्रणिधानार्थमुक्तम्—'तत्साष्ट्यादिमत्त्वादिति' आधाराऽऽधेयानां समैश्वर्यवत्त्वं समसारूप्यवत्त्वं समाश्रयकत्वं समत्वप्राप्त्या साक्षात्त्वं समं दर्श्यते, एकं सर्वनियामकत्वं तु असार्ष्टि तत्रापि तत्साक्षात्त्वं प्रवृत्तमेवेति दर्श्यते, नाऽतोऽसार्वज्ञ्यापत्तिः, न वा तत्र भागेऽसिद्धिः, सार्ष्टिसत्त्वेन नांऽगभंगापत्तिः, न तत्र प्राधान्यहानिः, न चाऽप्राधान्यभंगः, न च तत्त्वतोऽपि हानिः। अथ सार्ष्टिप्रयुक्तत्वमनेकपरमात्मत्वमिति अर्थान्तरं चेत्। न। समत्वेनैव तन्निरासात्, पूर्वसिद्धे ततः समत्वयोगः, यः पूर्वपूर्वसिद्धः सः परः परमेश्वरः ततोऽपि ततोऽपीत्येवमन्ते एक एव सः। अन्ये तु सार्ष्टयः, तत्रेदमस्य साक्षात्त्वस्य प्रदर्शनम्। अथाऽपि सार्ष्टिनियामकत्वमेव नियाम्यसार्ष्टीन् व्यावर्तयत् समर्ष्टित्वं व्यवस्थापयति। अथ व्यावर्तनं व्यवस्थापनं चैकेन चेत्!, बाधः। न बाधः पक्षभेदात्। अथ विपरीतं भवतु—प्रकाशसार्ष्टित्वं प्रकाशिनि, तथा च मिथः साध्याऽभावेऽनैकान्तिकतेति चेत्!, न। आधेयसाक्षात्त्वस्य कारणस्य नित्ये तत्राऽस्थानात्। अथाऽवस्थापरिवर्तनादपि तत् सुघटमिति चेत्, पूर्वाऽवस्थस्य प्राधान्यात् प्रकाशिन एव तत्रापि प्राधान्यात् विपरीतत्वाऽभावात्। अथ समाने समानं स्यादिति चेत्!, तदपि प्रधानाऽनैक्ये तत्त्वभेदापत्तिबाधितमेव। अथ तर्हि कथं सार्ष्टित्वम्? । रामप्रेरितप्रधानाऽमात्यवत् सार्ष्टित्वम्। 'अन्तरो यमयति' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'ेति स्वामित्वं प्रभुत्वं प्रधानाऽमात्यत्वं प्रधानत्वं चक्रवर्तिन्यपि चक्रेषु वृत्तं परावृत्तं भिन्नाऽवस्थायोग्यताऽर्हं चक्रवर्तिनि तु तत्र शाश्वतं परिवर्तनयोग्यताऽनर्हमिति परमेश्वरे नित्यर्ष्टिमत्त्वम् ऋष्टिषु तत्र वृत्तितया तदधीनाऽऽर्ष्टित्वम्, ऋषिरायुधं विद्युत् प्रकाशो विज्ञानं सार्वज्ञ्यम्, सूक्ष्मानप्यर्थान् पश्यतीति ऋषिः ऐश्वर्यवान्, ऋष्टिश्च आर्ष्टिश्च दिव्यदृग् दिव्यं महैश्वर्यम्, महेश्वरस्य परमेश्वरस्याऽधीनमिति निरुक्तबलेनोभयप्रधानसमतासमाधानम्। श्रुतिमूलकतर्कप्तपदार्थप्राधान्यम्। अज्ञत्वपराहतसाम्याऽप्रसञ्जनात् परमेश्वरे तदवतारे तदैश्वर्ये तदुपकरणे तत्प्रकाशे साक्षात्त्वं सममपि प्रेर्यप्रेरकतया विशेषताऽन्वितमिति सूत्रेणाऽनेनाऽऽवेदितम्, शास्त्रमूलकतथास्थितिकत्वादेवमेवाऽऽस्थेयं भवतीति। एकमूर्तिकमिदमास्थानम्। एतेषां सर्वं प्रत्यक्षमिति सुस्थमेव ॥ ३ ॥

**॥ तद्योगिनामपि च, तत्समाधिमत्त्वात् ॥ सूत्रं-४ ॥**

अपि च विभिन्नसृष्टिषु विचरतां तेषां—परमेश्वरस्य तदायधानां तदुपकरणानां तच्चिह्नानां तद्वेषाणां तदैश्वर्यगुणादीनां तत्प्रकाशानां यत्र क्वापि मुहूर्तमप्यवस्थाने सति तदानीं तेषु सुमूर्तेषु योगसमाधिमतां तेषु सम्प्रज्ञातादिमतां तत्तदीयदृष्टिषु दृष्टितादात्म्यशालिनां चापि सिद्धानां सर्वविषयकतारकोदयितां निरपेक्षसमर्थसाक्षात्कारो वर्तते, 'भुवनज्ञानं सूर्ये संयमात्' 'ध्रुवे तद्गतिज्ञानमि' त्यादिना दिव्यसाक्षात्काराः पतञ्जलिना संकर्षणाऽवतारेण वर्णिताः, किमपि तत्त्वं तन्नास्ति यत् योगिनां योगजसाक्षात्काराऽगोचरं स्यात्, सर्वज्ञे संयमात् सार्वज्ञ्यं सर्वसाक्षात्कारात्मकमुदेत्याविर्भवति। अथाऽसमाधौ किं तत्?, साक्षादपि तत्सापेक्षं तिरोधानाऽवस्थं, पश्चात् सति परमे योगे आविर्भावाऽवस्थं साक्षात् तत्, न त्वसाक्षात्, आनुसाक्षात्त्वादि तु भवति, योग्यसर्वज्ञसापेक्षत्वात्, अगतौ तु व्यतिरेकसाक्षात्कारात्मकता युक्ता, अतः स्वरूपात्मत्वे न व्यभिचरितेति। योगिष्वलौकिकसाक्षात्कारस्य दर्शनसम्पत्तेः, युक्तस्य सर्वदा भानात्, वामदेवादीनां तथाख्यापनात्, 'तारकं सर्वविषयं सर्वथाविषयमि'त्यादियोगसूत्रात्। प्रातिभप्रकाशस्यापि तथात्वेनाऽङ्गीकारात्। ब्रह्मसाक्षात्कारस्याऽऽत्मसाक्षात्कारस्य विमलविज्ञानोदयस्य स्वरूपाऽवस्थानप्रकाशस्य प्रतितन्त्रेऽप्यपि प्रदर्शनात्। फलप्रकाशस्य सर्वत्र व्यापनात्। तस्मिन् तस्मिन् ब्रह्माण्डे प्रतिष्ठद्योगिसाक्षात्कारे प्रवृत्ते समष्टावपि तथाविधत्वे ब्रह्मविष्णुमहेशानां साक्षात्काराऽऽवश्यकनियमेन वैराजसाक्षात्कारनियमेन च साक्षात्कारविषयता विषयतात्वेन सम्पन्ना भवत्येवेति सर्वतत्त्वानां साक्षात्त्वं चाऽस्त्येव। समाधिसम्पत्तिरूपं साक्षात्त्वं समाधिद्वारकमनेन सूत्रेण दर्श्यते, 'ये च मां भक्त्या नित्ययुक्ता उपासते' स्नेहेन सेवन्तेऽभ्यासमातिष्ठन्ति, परमार्थदर्शनेनाऽभ्यस्यन्ति, विश्वतोमुखं

सर्वतोमुखं मामुपासते, एकं सर्वं विशिष्टं मामुपासते, ज्ञानयज्ञेन निर्विकल्पसमाधिनेति पातञ्जलाः,एकत्वेनाऽहमेव भगवान् वासुदेव इत्यभेदेनौपनिषदाः,पृथक्त्वेनाऽयमीश्वरो मम स्वामीति बुद्धचा प्राकृताः,अन्ये बहुधा सर्वतोमुखं भगवत्स्वरूपं मामुपासते, वेद्यं मां सम्यग्दर्शिनो ज्ञानिनो योगिन उपासते, मद्याजिनो मां सर्वज्ञं सत्यसंकल्पमानन्दघनमूर्तिमुपासते,उक्तोपासनानां फलम्—'एतावानेव लोकेऽस्मिन्पुंसः स्वार्थः परः स्मृतः। एकान्तभक्तिर्गोविन्दे यत् सर्वत्राऽऽत्मदर्शनम्। भक्तियोगिनां सर्वात्मकसाक्षात्कारो भवतीति प्रोक्तम्। 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः, सोऽविकम्पेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते, सर्वसाक्षात्कारवान् भवति। 'ददामि बुद्धियोगं तम्' येन सम्यग्दर्शनलक्षणेन बुद्धियोगेन सर्वात्मिभूतं मामुपयान्ति पश्यन्ति। 'ज्ञानदीपेन भास्वता' 'परेण ज्योतिषां ज्योतिषा' युनज्मि। 'मुनीनां सर्वार्थयाथार्थ्यदर्शिनाम्' 'महायोगेश्वरोऽर्जुनं सर्वात्मकतां दर्शयामास' पाण्डवः कृत्स्नं जगद्धरेर्मूर्तौ एकदेशेऽपश्यत्, इतरदेशस्याऽपि सुतरां दर्शनम्, दैवेन चक्षुषाऽपश्यत्'। अर्जुनः प्राह त्वामनन्तम् अनन्तां च सृष्टिं त्वयि पश्यामि'। 'रुद्राः सिद्धाश्चापि त्वां तथाभूतं वीक्षन्ते'। भगवत्प्रदत्तचक्षुषा सर्वसाक्षात्कारवत्त्वमर्जुनादये दर्शितम्। अतः सर्वं साक्षाद्विषयम्। अर्जुनदृष्टे सर्वविधाः साक्षात्काराः दर्शिताः। यावत्कृपासमाधिस्तावत्सर्वदर्शनमिति चापि विलक्षणताऽनेन सूत्रेण 'तत्समाधिमत्त्वादि'त्यनेनाऽऽवेदिता।'यः पश्यति स पश्यति' 'समं पश्यन् ततो याति परां गतिम्'। 'अनुपश्यति, ब्रह्म सम्पद्यते तदा' 'ज्ञानचक्षुषा विदुः' 'मद्भावं सोऽधिगच्छति' इति साक्षात्कार एतेषां कथितः॥ ४॥

**मुक्त्यात्मनामपि सर्वथा तथात्वं, तत्साद्गुण्याऽऽविर्भावात्॥ सूत्रं-५॥**

अथ ये ब्रह्मलोकस्थं स्वयं साकारं सुमूर्तमक्षरं ब्रह्म, 'यदक्षरं वेदविदो वदन्ति'। 'तदाहुरक्षरं ब्रह्म सर्वकारणकारणम्। विष्णोर्धाम परं साक्षात्पुरुषस्य महात्मनः'। 'यस्मिंल्लोका निहिता लोकिनश्च तदेतदक्षरं ब्रह्म'। 'लक्ष्यन्तेऽन्तर्गताश्चान्ये कोटिशो ह्यण्डराशयः। तदेतदक्षरं ब्रह्म'। 'ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि'। 'ब्रह्म ज्योतिः सनातनम्'। 'यस्य भासा सर्वमिदं विभाति'। 'यद्विपश्यन्ति मुनयः'। इति परमबृहत् सर्वसाक्षात्कारि भूमरूपममूर्तं च तदेव ब्रह्म लीलाधृतनित्यदिव्यरूपं सुमूर्तं सेवकं वर्ततेऽपि। 'एतमेव पुरुषं ब्रह्म ततमपश्यत्'। 'ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति'। द्वे वाव ब्रह्मणो रूपे मूर्तं चैवाऽमूर्तं च'। 'तां कालशक्तिमादाय वासुदेवोऽक्षरात्मना। सिसृक्षयैक्षत यदा सा चुक्षोभ तदैव हि'। इत्यक्षरात्मना ईक्षणं सृष्टिविषयकं साक्षात्कारो ब्रह्मणः, सर्वं ब्रह्मसाक्षाद्गोचरम्। 'सर्वं खल्विदं ब्रह्म'। 'तद् द्रष्टृ' 'तत् साक्षि'। सर्वमस्य साक्षात्। यदन्तर्नियमयति तत्फलप्रदातृ साक्षीति सर्वदर्शीति। अपिना—सर्वथा ब्रह्मगोचरं साक्षादिति निवेद्यते, न तत्र श्रुतिषु तर्काऽपेक्षा। नित्यं विज्ञानमानन्दं ब्रह्म व्यापकं साक्षात्कारतत्त्वं सर्वं साक्षाद् विषयीकरोति। एवं च सति ब्रह्मसाधर्म्यमाप्तानां मुक्तानां ब्रह्मरूपाणां 'यत्र पूर्वे साध्याः सन्ति देवाः' इति नित्यदिव्यमुक्तानां, 'यद्गत्वा न निवर्तन्ते' इति गन्तृमुक्तानां 'स एतान् ब्रह्म गमयती'ति आतिवाहिकमुक्तानां 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति सर्वकामाशनमुक्तानां 'पूता मद्भावमागताः'। 'मम साधर्म्यमागताः' 'निरञ्जनः परमं साम्यमुपैति' 'मद्भावं याति' 'स याति परमां गतिम्' 'परं स्थानमुपैति चाद्यम्' 'मुद्भावायोपपद्यते' 'विमुक्तोऽमृतमश्नुते' 'ब्रह्मभूयाय कल्पते'। इत्येवं मुक्तिस्थानां 'सालोक्यसार्ष्टिसामीप्यसारूप्यगतानां मुक्तानां च, सर्वगोचरतात्मकसाक्षात्कारविषयता सर्वसाक्षात्कारविषयता सर्वत्राऽस्ति। मुक्ति गतानां ब्रह्मपुरगोलोकवैकुण्ठाऽमृताऽव्याकृतादिधामस्थानां मुक्तात्मनां सुमूर्तानां ब्रह्मसमानानां सर्वथा सर्वैः प्रकारैस्तथात्वं सर्वतत्त्वसाक्षात्कारवत्त्वमस्ति, तस्य परमेश्वरस्य स्नेहध्यानोपास्तिभक्त्या साद्गुण्यं समानगुणवत्त्वं यत् ज्ञानशक्तिबलैश्वर्यवीर्यतेजोवत्त्वम् अपहतपाप्मत्वविजरत्वविमृत्युत्वविशोकत्वाऽक्षुधत्वाऽपिपासत्वसत्यकामत्वसत्यसंकल्पवत्त्वं चाविर्भवति मुक्तेषूपास्त्या

कृपया सार्वज्ञ्यं साक्षात्त्वं सर्वगोचरमाविर्भवतीत्यत्र प्राकरणिकम्। कदाचित्कस्यचित् असर्वथात्वे तु व्यतिरेकसाक्षात्त्वमुपावर्तते इति साक्षात्त्वस्य सर्वत्राऽबाध्यत्वम्। भगवद्द्रष्टचैकदृष्टचा ब्रह्मदृष्टचैकदृष्टचा व्यापकद्रव्यगुणात्मकसाक्षात्कारसम्पत्त्या केवलान्वय्याविर्भूतसर्वव्यापिसंसर्गवत्तया साक्षाद्ग्राहकसिद्धिशक्तिनिष्पत्त्या सर्वदृग्भवनैश्वर्यवत्तया वा चापि सर्वाऽन्यतमप्रकारवत्तया साक्षात्कारगोचरत्वं ध्रुवम्। सुमूर्तस्य परब्रह्मणोऽक्षरब्रह्मणो वा चक्षुःशक्त्यात्मा मुक्तः सर्वसाक्षाद्द्रष्टा एव मूर्तौ सर्वत्र सर्वविषयलाभात् सर्वशक्त्यात्मकमुक्तानां सर्वसाक्षाल्लाभ इव समीपमुक्तानां मण्डलानां चापि तथात्वात् तद्विधत्वात्। मुक्तानां मिथः सदृशसाक्षात्कारोऽपि चाऽस्ति, सादृश्येऽनुयोगिप्रतियोग्युभयवार्तमानिकत्वं नाऽऽवश्यकम्, पूर्वदिनीयगोदर्शनमपि पश्चाद्दिनीयगवयदर्शने प्रयोजकं भवतीतिवत् 'धाता यथापूर्वमकल्पयदि'ति पूर्वीयसदृशसाक्षात्कारस्य निर्वहणम्॥ अनेन सुमूर्तसमीपमुक्तानां सर्वसाक्षात्कारो दर्शितः॥ ५॥

**ईश्वराणां तु स्वैश्वर्यव्याप्तिकतथात्वम्॥ सूत्रम्-६॥**

अथ 'कालोऽस्मि लोकक्षयकृत् प्रवृत्तः' कालः परमेश्वरशक्तिविशेषः, कालाऽधिष्ठाता कालकालः कलनकृत् परमात्मा, परिवर्तनकृत् कालः, कालाऽधिष्ठातृत्वेनेश्वर उच्यते, सृष्टिव्यापकः काल ईश्वरः, कालात्मा सर्वप्रत्यक्षदर्शी परिणामकैश्वर्येण सर्वत्र व्याप्तिमान्, कालो महाकालः संकर्षणो रुद्रः शंकरश्च संहारदेवताः, सर्वप्रत्यक्षकर्शिनः ईश्वराः। अथप्रकृतेर्महामायाया अधिष्ठाता महामायेश्वरो महापुरुषः स्वमायिकसृष्टिसाक्षात्कारवान्। एवं प्रधानपुरुषः स्वसृष्टिसाक्षात्कारवान्। एवं सगुणेश्वरो महाविष्णुः स्वसृष्टियावत्तत्त्वसाक्षात्कारवान्। एवं वैराजपुरुषाः स्वसृष्टिसाक्षात्कारवन्तः। एवं ब्रह्मा विष्णुर्महेशाः स्वसृष्टिसाक्षात्कारवन्तः। एवम् अनिरुद्धप्रद्युम्नौ स्वाधिष्ठेयस्वानुष्ठेययावद्विधसाक्षात्कारवन्तः। एवं भूमा पुरुषः स्वविधेयतत्त्वसाक्षात्कारवन्तः। एवं महत्तत्त्वाऽहंकाराद्यधिष्ठातार ईश्वराः स्वस्वसृज्यसाक्षात्कारवन्तः। एते ब्रह्माऽपेक्षयाऽवताराद्यपेक्षयाऽनधिकैश्वर्यवन्तोऽसमैश्वर्यशालिनः स्वस्वसृज्यविधेयविनियोज्यसूक्ष्मव्यवहितविप्रकृष्टादिसर्वपरिच्छिन्नतत्त्वसक्षात्कारवन्तः, काश्चिदपि सृष्टयो नेश्वरमन्तरा सन्ति, सर्वसृष्टीनां स्वस्वसर्वविधेश्वरसाक्षाद्गोचरत्वात् विशेषसाक्षात्कारैरर्थात् सामान्यसाक्षात्कारगोचरता सृष्टित्वाऽवच्छेदेन सम्पद्यते। इत्येवं सर्वेषामीश्वराणां स्वस्वीयाऽधिकारप्रयोज्यनिजनिजैश्वर्याणां निजाऽधिकृत्येषु साक्षात्कारव्याप्तिकत्वेन सर्वसृष्टिषु साक्षात्कारतायास्तथात्वम्। ईश्वरेश्वरेश्वरवत् साक्षात्कारगोचरताया विषयतायाः सत्त्वमित्यावेदितं भवति। भवन्ति चैतेषां साक्षात् अनुसाक्षात् सदृशसाक्षात् व्यवहृतिसाक्षात् अर्थतःसाक्षात् व्यतिरेकसाक्षात् इत्येवं साक्षात्काराः, तथातथाविधस्थितिकैश्वर्यवत्त्वात् भवन्तीति सर्वसाक्षात्त्वं सम्पन्नं भवति। ऐश्वर्यघनानां त्वैश्वर्यं स्वरूपेणैवाऽऽधेयत्वं भासतेऽपि तु द्रव्यस्वरूपतया चेतनात्मनामीश्वराणामाधारत्वमप्यनादिसिद्धमिति . तत्तदाधाराऽऽधेयोभयत्वावच्छिन्नाऽन्यूनाऽनतिरिक्तव्यवस्थितविशेषविशेषस्वस्वशक्त्यात्मकसाक्षात्कारः शाश्वतो वर्तमान इति स्वस्वसृज्यसाक्षात्कारताऽत्राऽनेन रूपेणाऽऽवेदिता भवति। स्वच्छाऽत्यच्छकाचतत्त्वपुत्तली नाटके मध्यरंगे तदनुकूलविलक्षणविद्युच्छक्त्या नर्तनपरायणा परितो रंगेन वीक्ष्यमाणा आरपारमालोच्यमानाऽनवशेषतया परिमण्डलितसर्वरंगजनसाक्षाद्विषया भवतीति ततस्तत्राऽनुसाक्षात्त्वं प्रातिस्विकतया प्राप्तं भवतीति सर्वा साक्षादिति तु न व्यभिचरति, इत्येवं सर्वं साक्षादितीश्वराणां सृष्टिषु साक्षात्त्वेन न व्यभिचरति। तत्र तत्र ततस्ततोऽनुसाक्षात्त्वानां वर्तमानत्वात् तेषाम् अलौकिकसाक्षात्कारगोचरत्वे विविधाऽऽपत्त्यनुपपत्तीनां तदनुकूलगुणमात्रात्मकगणनाभिः समाधेयत्वात्। अन्धकारस्य काकानां शेषत्वेऽपि घूकानां गुणत्वात्। सिंहानामन्धतमसस्य दोषगुणत्वात्। सर्वतो यावति विश्वक् साक्षात्त्वेऽन्तर्बहिःसाक्षात्कारव्याप्त्या तत्र तत्र ततस्तेषां तेषां यथायोगविविधसाक्षात्त्वस्यैव प्रसञ्जनमावेद्यते। बहिश्चक्षुष्मतामपि तेषां सर्वग्राह्यन्तश्चक्षुष्मत्त्वस्य

स्वभाव्यात् नाऽन्यविधशंकाऽवकाशः, चाक्षुषसाक्षात्वोत्तराऽनुसाक्षात्वसदृशसाक्षात्वादीनामप्युपसर्जनात् सर्वसाक्षात्वं सध्रीचीनम् । ऐश्वर्यपार्थक्ये स्वपदस्वारस्यम् । साक्षात्वस्य सर्वविषयकत्वे व्याप्तिकत्वस्वारस्यम् , उपनयनार्थं तथात्वपदम् । तुः पूर्वसूत्रोक्तेतरतत्त्वस्याऽस्य पूर्वतो व्यवच्छेदनार्थकः ॥६॥

**तथाविधसिद्धिमतामपि च ॥ सूत्रम्—७॥**

अथ ये ये तापसा उपासकाश्च पुण्यभक्तिबलैश्वर्यवन्तः प्रोद्भूतसत्त्वप्रकर्षपराकाष्ठिनः, चिन्तासहकृतसिद्धिमन्तः, अस्मितादिसंवलिताऽनेकैश्वर्यशालिनः यावद्दिव्यदृष्टिगतिमन्तस्तावत्साक्षाच्छीलिनः अणिमादिसिद्धिमन्तस्तारसुतारादिसिद्धिमन्त ऊहशब्दब्रह्मादिसिद्धिमन्तो ब्रह्मज्ञप्तिदृक्सागरास्तेषां तेषां योगिविधानामीश्वरविधानां सिद्धिमतां सिद्धानां त्रिकालदर्शिनां खगोलभूगोलशून्यगोलादिदर्शिनां भृग्वादीनां च महर्षीणां सनकादिकानां नारदादीनां चापि सृष्टिषु विचरतां ब्रह्मर्षीणां सर्वतत्त्वविषयकसाक्षात्काराः प्रातिस्विकतया प्रत्यक्षा दृशः तद्विषयकसाक्षात्वं तदनुसाक्षात्वं सदृशसाक्षात्वं व्यवहृतसाक्षात्वम् अर्थतःसाक्षात्वं व्यतिरेकसाक्षात्वं संभवितसाक्षात्वं पारम्परिकसाक्षात्वं चैष्टिकसाक्षात्वं प्रातिभासिकसाक्षात्वमित्यादीनि वर्तन्ते । यथायोगं ततोऽपि सर्वं साक्षाद्विषयताशालीति । अत्र साक्षाद्विषयतासु सिद्धिप्रयोज्यत्वं विलक्षणमिति । चकारेण सिद्धिमतां सिद्धिप्रयोज्यानि यावद्विधानीतरेतराणि तानि संगृह्यन्ते, घटकाचकलशे दशव्यक्तीनाम् कलशेषु आरपारदृग्गतिमतां प्रतिघातरहितदृष्टीनां दशकलशानां साक्षात्वं सर्वथा साक्षात्वं भवतीतिवत् सर्वसिद्धानां सर्वतत्त्वसाक्षात्वं सर्वाऽप्रतिहतप्रविष्टदिव्यदृष्टीनां सर्वथा साक्षात्वम् अपिना सूच्यते । सर्वतत्त्वसाक्षात्कारविषयतानां विषयतात्वेनैक्यम्, साक्षात्कारनिरूप्यत्वात्, साक्षात्कारत्वेनैव सर्वभानानां सत्त्वात् , इतरत्वेनाऽभानात् । अथ सिद्धिपूर्वमितरद्विषयत्वमिति चेत् , सिद्धान्तरविषयीकृतकत्वात् भाने वैजात्यात्मकेतरत्वाऽभावात् । नहि तादृगेकमपि किञ्चिद्वस्त्ववतिष्ठते यत्र सप्तसूत्रीप्रोक्तसाक्षात्काराऽन्यतमविषयताविधुरता स्यात् । ज्ञानं हि साऽऽकारजीवनम्, यत् किमपि वाच्यं कल्प्यं तर्क्यं क्लृप्त्यं मान्यं बोध्यं वेद्यं धार्यं भोग्यं ग्राह्यं संवेद्यं भास्यम् आकांक्ष्यं प्रवर्त्यं कृत्यं वर्त्यं वर्ज्यं साध्यं सम्पाद्यं निष्पाद्यं कार्यं भाव्यं प्रस्थाप्यं स्थाप्यं प्रमाप्यं योज्यं भज्यं शब्द्यं प्राप्यं स्वप्यं वा शून्यं, सर्वमपि तत् स्वेनाऽऽकारेण ज्ञेयं चेति भवति ज्ञानविषयं साक्षाद्विषयताशालि, यद्धि ब्रह्मोद्भाव्यं ब्रह्मवेद्यं ज्ञानोद्भाव्यं ज्ञानवेद्यं चैतन्योद्भाव्यं चैतन्यवेद्यम् आत्मोद्भाव्यमात्मवेद्यम् आकारमुद्भाव्य साक्षात्कृत्य विषयं भवतीति साऽऽकाराऽऽकारिसाक्षात्कारः सहजीवनः स्वविषयतामादेदयति प्राकट्यमावेदयति व्यवसायत्वमावेदयति सत्त्वमावेदयति सुमूर्तत्वमावेदयति साऽऽपूरकजीवित्वमावेदयति ज्ञानमूर्ततामावेदयतीति सर्वविधाऽऽवेदनात्मकसाक्षात्कारः सर्वविषयो निरूप्यते सध्रीचीन इति सर्वथा सर्वस्य साक्षात्कारगोचरत्वमुपपन्नम्, समीचीनमेव सर्वस्य साक्षात्वम् । अचिन्त्या भावा एव नाऽवशिष्यन्ते एतत्सर्वसाक्षात्कारताप्रस्थाने । चित्तचैत्ताऽर्थप्रणाल्या अविद्यकार्यप्रणाल्या संकल्पेक्षणप्रणाल्या अदृष्टादिप्रणाल्या वा यथा कयाऽपि सर्वं गोचरीभूतमेव सत् तत्त्वं साक्षाद्विषयात्मकतनुकं, नाऽत्राऽन्यविधतनुकता प्रसजतीति । तत्र तत्र विषयतामात्रे जायमानघातकानि तु घातकानामपि विना साक्षाद्विषयतां न तथात्वमिति तत्प्राप्त्यैव समाधेयानि । ७ ॥

**॥ व्यूहविष्णुशिवब्रह्मयम-तदधिकृतादीनामपि च ॥**

**॥ सूत्रम्—८ ॥**

अथ सृष्टिरनन्ताऽसीमाऽपाराऽनन्तपारा, तद्गता व्यक्तयस्तु विपरीताः, विपरीता अपि क्षुद्रा मेर्वग्रे सर्षपवत्, सर्षपकल्पानां कथं साक्षात्कारता मेर्वादिपारार्ध्येषु, तथा च व्याहता साक्षात्कारता, यत्राऽप्रवेशस्तत्र नास्ति साक्षात्कारतेतिसर्वसाक्षात्कारत्वं व्याहतम् । इति चेत् ! न । सर्वसाक्षात्काराऽधिकृतानाम् एतत्साक्षात्वं केवलान्वयि न व्याहतं भवति । किञ्चपतङ्गप्रदीपविद्युतारकाशशिसूर्यमहातेजोब्रह्मतेजोऽतितेजस्कपरब्रह्मतेजस्तादात्म्यात् जीवर्षिपितृप्रजापतीश्वराऽवतारमुक्तब्रह्मपरब्रह्मसाक्षात्कारतादात्म्यात् अङ्गाऽङ्गिव्यूहरचनास्थितिकसृष्टिसत्वात् विच्छिन्नत्वाऽ-

स्थितानां प्रभाः भासन्तेऽतो नैकक्षणमपि तत्त्वं निर्भासं तिष्ठति सन्तमसमपि चाऽन्तःस्थितकलांऽशभासं भवत्येवेति तद्वत् सर्वं नित्यविज्ञानप्रकाशब्रह्मव्याप्तं तत्त्वं साक्षात्कारविषयं भवति तादात्म्यतया विषयतावद्भवति साक्षाद्भवतीति। अपि चेत्यनेन चिदाकाशसंभवो भूताकाशस्तत्परम्परासंभवस्तेजस्तत्संभवजलाऽन्न्यधिष्ठिततेजोंऽशकलादिमयं पञ्चीकरणत्रिवृतादिकरणन्यायेनाऽस्त्येवेति तद्वत् नित्यविज्ञानशक्त्यंशकलादिरूपाऽवस्थकसाक्षात्कारकृतविषयतानां साक्षात्कारनिरूप्याणां सर्वत्र सत्त्वं सुशकम् अनपह्नवमेवेति भवति साक्षात्कारविषयताऽऽवेशांऽशकलानां विषयेष्विति। किञ्च–विभूतयो मूलभूत्यपृथक्सिद्धतादात्म्येन मूलभूतिशक्त्यैश्वर्यगुणसंसर्गरूपवत्यो मूलमहाविभूतिसाक्षात्कारतादात्म्याऽधीनस्थितिकतया साक्षात्कारवत्यो भवन्ति निजाश्रयतत्त्वेषु, नाऽत्र किञ्चित्प्रतिबन्धकम्, मूलमहाविभूतेरुपस्थानात्। तादात्म्यः समवायोऽपृथक्सिद्धयोगो रूपस्वरूपभावः पारिमाण्डल्याऽनैक्यानुसरणमिति त्वन्वया अन्वयिस्वरूपा ऐवेति मूलमहाविभूतिसाक्षात्कारविषयतानामेव विभूतिविषयतात्मकतया सर्वं साक्षादिति सर्वत्र तथा तथा सत्त्वात् अनुसार्थं भवति, अयिसत्त्वेऽन्वयिता जागर्ति, अन्वयस्तावदयतत्त्वाधीनलब्धस्वरूपः, अयस्य चेतनचैतन्ये अयत्वात् गोचरतया लब्धत्वादेव तत्सहतदात्मकाऽन्वयस्याऽपि साक्षाद्विषयतावत्त्वस्य ध्रौव्यं भवति, आकांक्षाया ज्ञप्तित्वात् साक्षात्कारात्मकज्ञप्तिविषयत्वं विना प्रयासं लब्धं भवति। तथा च सूत्रेऽत्र 'अपि चे' त्यनेन तादात्म्यादिसांसर्गिकसाक्षात्कारविषयताध्रौव्यमावेद्यते। तत्त्वीयक्षणवैषम्येऽपि ज्ञानीयसाक्षात्कारीयविषयतासहोपलम्भता सर्वथा नोत्क्षिप्यते, क्वचिद्विशेषे तथोपलम्भात् साक्षात्त्वं बहुधा साक्षात्त्वेनोपावर्तते इति दर्श्यते ॥ ९ ॥

**॥ अलौकिकदृग्विभागवतां चापि ॥ सूत्रम्–१० ॥**

अथ लोकेऽत्र एकेन्द्रियं द्वीन्द्रियं त्रीन्द्रियं चतुरिन्द्रियं पञ्चेन्द्रियम् अधिकेन्द्रियं च जन्तुजातं लौकिकवृत्तिभिर्लौकिकान् विषयान् गृह्णाति, प्रसिद्धमेतत् साक्षादेव, दृग् अत्राऽऽलोचनम्, तदपि लौकिकमेव लोकसमाजदृष्टं यत्साक्षाद् दृश्यमेव, कर्णयोर्मध्ये पश्चाच्चक्षुर्भ्यां न दृश्यते तथापि परचक्षुषा गृह्यते त्वचा गृह्यते इति लौकिकमेव तत् केनचिदपि लोकेन गम्यत्वात्। यत् दृशां भागेष्वंशेषु रश्मिप्रवाहेषु न पतितं स्यात् तत् दृग्विभक्तमिति वक्तव्यं, तथापि तत् अलोकवासिनां दृग्विभागांऽशाऽऽवरितं स्यात्, अलौकिकदृग्विभागशालिनां लौकिकं स्वलौकिकं स्वाऽलौकिकं पारलौकिकं पराऽलौकिकं चापि आद्यं मध्यममन्तिमं चापि ब्रह्मजन्यं ब्रह्मोपलब्धं ज्ञानजन्यं ज्ञानोपलब्धं धर्मजन्यं धर्माभिमानिदेवतोपलब्धं तत्त्वं तत्त्वजन्यं च तत्त्वाभिमानिदेवतोपलब्धं शरीरं शरीराभिमानिचेतनाशक्तिलब्धं तल्लब्धं तद्व्याप्यलब्धं तद्व्याप्यव्याप्यलब्धं तद्व्याप्यव्याप्यव्याप्यलब्धं ततोऽप्यवरव्याप्यलब्धं तदवरव्याप्यलब्धं यावदन्यतमदृग्वतां यावदन्यतमदृग्लब्धं दृशां सन्तानानां नूतनत्वे नूतनत्वे नूतनदृग्लब्धं भवत्येव, यज्जन्यते चैतन्येन तज्जन्यते, चैतन्यं सर्वत्र तत्तत्तनूस्थितिसम्भालकं भवति, अदृशां सम्भालकत्वाऽभावात्, सम्भालनीयं सर्वम् आद्यक्षणावच्छिन्नं स्वक्षणवत् तत्पूर्वक्षणवद्वाऽलौकिकतां भजते, तर्हि तत्राऽलौकिकदृग्विषयत्वं भवेदेव, दृग्रूपत्वात् दृगात्मकत्वात् दृश्यत्वात् उत्तरक्षणादौ दृश्यार्थमुपयुञ्जानवत्त्वात् उपयोगार्थमुत्पादात् औपयोगिकाऽवस्थार्थलब्धसत्त्वात् कालेन परिच्छेद्यत्वात् अपरिच्छेद्यत्वे त्वपरिच्छेत्तृगोचरत्वात्, अन्यथा त्वतत्त्वात्, तत्त्वे तु साऽन्तानिकतायोगात्, योगे त्वन्ततस्तस्याऽऽद्यत्वे इव मध्यत्वेऽनन्तरत्वेऽन्तत्वे च स्थौल्याप्तिमत्त्वात् सार्थक्यात् यस्य कस्यापि गोचरतयाऽवस्थानात् तत्र तत्र विद्यमानानामलौकिकानां विभागानां तदवलम्बनस्वभावात् तद्गोचरतायास्तत्रोपस्थानात् तत्साक्षात्त्वं समव्याप्तं विषमव्याप्तं तत्समविषमाऽन्यतरव्याप्तं तथाऽनुसाक्षात्त्वादिव्याप्तं भवत्येवेति। चापि-पदेन सान्तानिकविभक्तसाक्षात्त्वमत्र प्रदर्श्यते। पारम्परिकसाक्षात्त्वादियोगोऽपि भवेत् मूलाऽनुसन्धानात्, ततश्चैष्टिकयोगोऽपि भवेत् मध्यत्वाद्यनुसन्धानात्, ततः प्रातिभासिकादियोगोऽपि भवेन् वैरल्याऽनुसन्धानात्, अत एव सर्वत्र यथाकथञ्चित् साक्षादालोच्य लोक-

प्रवृत्तिः, द्व्यणुकादावपि तदालोचकानां प्रवृत्तिरस्त्येव। अथ यस्य यद् ग्राह्यं तत्र तस्य लौकिकत्वम्, ततो नञ्योगेनाऽलौकिकमिति भवति, तथा चाऽग्राह्यम्, असाक्षात् यत् तन् अलौकिकम्,यद् अलौकिकं तन्नाऽस्त्येवेति शून्ये पर्यवसानात् तत्र साक्षात्त्वमपि शून्यमेव सत्त्वे साक्षात्तावत् शून्येऽपि शून्यता सर्वशून्यता प्राप्तेति विपरीतमपि स्यात्। इति चेन्न। सदिति सर्वत्र सर्वेषां प्रतीतेः साक्षात्प्रतीत्या शून्यतर्कस्य बाधितत्वात्। अबाधिते वा क्वचित् शून्ये व्यतिरेकसाक्षात्त्वस्य प्रवर्तनात् तत्सिद्ध्या विपरीतकल्पनाया नैर्बल्यात्, शून्येत्युपाख्याया अपि दशकादौ संख्यात्वेन स्वीकारात्सर्वसिद्धस्य शून्यस्य किंविधतत्त्वस्य क्वचिद्वर्धकस्य क्वचिदवर्धकस्याऽपि तत्त्वस्य साक्षात्त्वज्ञप्तावाकारतयाऽऽरूढस्य परिगणनफलकस्य तत्त्वस्य एकत्वादिवत् सक्षात्त्वगोचरतायाः सत्त्ववत्त्वात् सदिति साक्षादिति शून्यमपि सत्त्वविभागापन्नं निराबाधं विभागपदेन विशेषतः सूच्यते तस्य शून्यविभागस्याऽपि साक्षात्त्वं यथायोगमिति ॥ ११ ॥

**सुप्त्यादौ दर्शनप्रतीतेश्च ॥ सूत्रम्–११ ॥**

'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'- अयं स्वाप्ने सुप्तौ निद्रायां विज्ञानज्योतिषाऽऽत्मानं पश्यन्, 'सन्ध्ये स्वप्नस्थाने तिष्ठन् एते उभे स्थाने पश्यति' 'आनन्दाँश्च पश्यति' 'स यत्र प्रस्वपिति, स्वयं निर्माय स्वेन भाषा स्वेन ज्योतिषा प्रस्वपिति, अत्राऽयं पुरुषः स्वयंज्योतिर्भवति'–तदा दृष्टसजातीयान् व्याघ्रसर्पादीन्, अदृष्टसजातीयान् यक्षरक्षःपिशाचादींश्च पश्यति, दृष्टपत्नीपुत्रादिसजातीयानानन्दान् अदृष्टेन्द्रभवनादिसजातीयाँश्च पश्यति जाग्रद्विसजातीयं भोगायतनभोगोपकरणभोगस्थानादि धर्माधर्मबलेन निर्माय स्वेनाऽऽत्मना ज्योतिषा स्वाऽसाधारणज्ञानप्रभया स्वप्नमनुपश्यति–'अथ रथान् रथयोगान् पथः सृजते, अथाऽऽनन्दान् मुदः प्रमुदः सृजते, अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते'। तत्र उपयोगजनिता प्रीतिरानन्दः, स्वीयत्वाऽध्यवसायेन प्रीतिः प्रमुत्, दर्शनमात्रेण प्रीतिः मुत्। 'स्वप्नेन आसुप्तः सुप्तानभिचाकशीति'–प्रकाशते पश्यति। 'स्वप्नान्ते उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि'। 'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवाऽपि भयानि पश्यन्'। 'आरामम् अस्य पश्यन्ति' 'स वा एषः स्वप्नाऽवस्थः पुण्यं च पापं च रत्वा चरित्वा दृष्ट्वा ततः सौषुप्तो भवति स्वयंज्योतिः स्वद्रष्टा, अत्राऽयं सम्प्रसन्नः स्वेन रूपेण प्रकाशते अहमेव सर्वमिति पश्यति, 'यत्र देव इव राजेवाऽहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः'। 'अयं पुरुषः प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' ब्राह्मं स्वं पश्यति। पुरुषस्य सुषुप्तिः स्वस्वरूपम्, सुषुप्तिसमाश्रयस्थानं परब्रह्माऽऽनन्देन अध्यस्तस्वीयाऽऽनन्दमात्रेण परिष्वक्तः आत्मकामो ब्रह्मरूपो मोदते, दिव्यदृशः पुरुषस्य–'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्'। अलौकिकदिव्यचैतन्येन भगवद्दृशा च दिव्यं वा यथेष्टं सर्वं पश्यन् जिघ्रन् रसयन् वदन् शृण्वन् मन्वानः स्पृशन् विजानन् सर्वं तत्तत् साक्षात्करोति, अप्रच्युतविज्ञानलक्षणचैतन्यः सन्नेव पश्यति, अयं द्रष्टा प्राज्ञे प्रभौ प्रविष्टः प्रभुणा तदात्मकः सन् सर्वं पश्यति। 'अत्र ब्रह्म समश्नुते' 'तस्मिन् दृष्टे परावरे' 'यदा पश्यः पश्यते रुक्मवर्णं' ब्रह्मदर्शी ब्रह्मदृष्ट्या ब्रह्मात्मकतया च च सर्वस्मिन् साक्षात्क्रियमाणेऽवसरे मोदते। विज्ञानैकघनब्रह्मात्मकस्वात्मदृष्टौ सत्यां सर्वतत्त्वदर्शी वर्तते। 'एकधैवाऽनुद्रष्टव्यम् एतदप्रमेयं ध्रुवम्'। इत्येवमीश्वराणां स्वप्नेषु सर्वाः साक्षात्काराः स्वाप्नाकाराः सर्वतत्त्वाकाराः,महर्षिपितृदेवानां मानवानां पशुपक्षिजन्तूनामपि स्वप्ने निद्रायां हि अबाह्याकारा बाह्याऽऽकाराऽनुकारा आन्तराकारा वृत्त्युपादानकाकारा अदृष्टजन्याकारा दृश्यन्ते इति स्वाप्नमपि सर्वं साक्षात्। अथ स्वप्नोत्तरं स्वाप्नत्यागे सुषुप्तावपि आत्मन्यपीतस्य आत्मदृशा ब्रह्मदृष्ट्या च चिद्गोचरत्वं सर्वगोचरत्वं चोपपादितं श्रुतिभिर्भाष्यादिभिश्चेति दर्शनप्रतीतेः सत्त्वात् सर्वसाक्षात्कारः स्वस्थाऽऽत्मसाक्षात्कारः परमात्माऽन्वितस्य स्वस्य तु सर्वसाक्षात्कार इति प्रति प्रति प्रकाश्यते औपनिषदमन्त्रैः सर्वसाक्षात्कारताऽनुसाक्षात्कारता चेतनीयसाक्षात्कारताऽऽद्या चेति। स्वप्नोत्तरम् आदिना सुषुप्तिः, चकारेण ब्रह्मप्रीतिश्च गृह्यते ॥ ११ ॥

॥ विशिष्टे विशेषणाऽवर्ज्यत्वात् प्रकारादेरपि ॥

सूत्रम्-१२ ॥

'एकमेवाऽद्वितीयमि'तिश्रुत्या एकमित्यविभक्त-नामरूपं विशिष्टं ब्रह्मोच्यते, एवेति गगनादेः संहारो ज्ञाप्यते, अद्वितीयमिति निमित्तान्तरं निषिध्यते, अतो विशिष्टं ब्रह्म कारणं, तदेव विशिष्टं कार्यं भवति। 'बहु स्यामि'-ति सर्वं पूर्वं मध्यं चान्तं विशिष्टस्य 'ऐक्षते' ति प्रत्यक्षमेव। विशिष्टस्य विशिष्टे प्रत्यक्षे विशेषणानां प्रत्यक्षत्वं प्रसह्याऽवर्ज्यं सम्पद्यते, एकोऽपि परमात्मा विशिष्ट एव, एकमपि ब्रह्म विशिष्टमेव, मुक्ता विशिष्टाः, प्रकृतिरपि विशिष्टा, तत्त्वानि विशिष्टानि, ईश्वरा विशिष्टाः, आत्मानो विशिष्टाः, अनात्मानो जडा अपि विशिष्टाः, अन्वया विशिष्टाः, विशेषणानि विशिष्टानि,। न चैवं विशिष्टत्वाऽनवस्था, धर्मादीनां प्रान्तविशेषणानां स्वाऽऽधार-वैशिष्ट्यसत्त्वान् नाऽनवस्था। नाऽप्यन्योन्याश्रयः, ईश्वरज्ञानविषयतावैशिष्ट्ये ज्ञाननिरूपितत्ववैशिष्ट्यं ज्ञाने ज्ञानिनिरूपितमवैशिष्ट्यम्, सापेक्षं सर्वमन्वय-निरूपितवैशिष्ट्यम् इत्येवमनपेक्ष्यवैशिष्ट्येन मिथ-आश्रयणत्वाऽदोषात्, तादात्म्ये प्रकारवैशिष्यं प्रकारे प्रकारिवैशिष्ट्यं प्रकारिणी ज्ञानीयाऽऽकारविषयता-वैशिष्ट्यं प्रत्येकनिरूपितवैशिष्ट्यम् अप्रत्येकनिरूपित-वैशिष्ट्यम् अन्ततो भिन्ननिरूपितैकाधिकरणक-वैशिष्ट्यम्, एकभावनिरूपिताऽनेकाऽभावाधिकरण-कैकाधारवैशिष्ट्यं प्रातिस्विकानि च वैशिष्ट्यानीत्येवं चक्रकादेरप्यप्रसंगात्। तथा च प्रकारादेरित्यादिनाऽन्वयविशिष्टत्वमाधारविशिष्टत्वमाधेयविशिष्टत्वं स्वरूपविशिष्टत्वं रूपविशिष्टत्वं, वैशिष्ट्ये विषयता-वैशिष्ट्यं विषयतायां ज्ञानादिनिरूपितमित्येवं व्यापके वैशिष्ट्यस्य व्याप्यवैशिष्ट्याऽन्वितस्य विश्रान्तिः, व्याप्यानां तु सामानाधिकरण्यादिनिरूपितवैशिष्ट्यं, क्षणान्तरीणग्रहणाऽनपेक्षत्वादपि नाऽनवस्था, वस्तुभेद-संस्थानादिग्रहादपि च नान्योन्याश्रयः, तथा च सर्वथा विशिष्टस्य कारणस्य परमात्मनः साक्षाद्विषयं कारणं स्वं, साक्षाद्विषयं कार्यं स्वम्, ततस्तत्त्वकार्यं स्वं, ततो भौतिककार्यं स्वं, ततो मानवादिकीटान्तकार्यं स्वं, ततः स्तम्बतृणादि कार्यं स्वमिति, स्वयं स्वप्रकार-साक्षात्कारवत्त्वात् अनवशेषप्रकारसाक्षात्कारत्वं संसिद्धयत्येव, ज्ञानघनः स्वप्रकाशः ज्ञानं स्वप्रकाशं ज्ञान-ग्राह्यं ज्ञेयं ज्ञानप्रकाश्यं तत्र सर्वमपि साक्षात्कार-विषयं भवति। 'भूतयोनिं परिपश्यन्ति धीराः'। 'आत्मन्येवाऽऽत्मानं पश्येत्'। 'नानेव पश्यति'। 'इतर इतरं पश्यति'। 'तदेकं पश्यति'। 'मृत्युं पश्यति'। 'तस्मिन् दृष्टे परावरे'। 'तद्धयेतत्पश्यन् ऋषिर्वामदेवः'। 'पश्यः पश्यते रुक्मवर्णम्'। 'जुष्टं यदा पश्यत्यन्यमीशम्'। 'हिरण्मयः पुरुषो दृश्यते'। अत्र सर्वश्रुतिषु विशिष्टे विशेषणे दृग्विषयता दृश्यते। अत्र—'अपिना–विशिष्टे सर्वत्र विशेषणानां दृग्विषयत्वं विशेषणविषयताश्रयाणां साक्षात्कारत्वं दर्श्यते। क्वचित्क्षणिके सहोपलम्भेऽपि आश्रितं त्वाश्रयेण सहाऽऽलोच्यते, क्वचित् आश्रयस्य प्राथम्ये तत्र सन्निकर्षाऽपेक्षणात् सन्निकर्षस्य ज्ञानयोगस्य विषय-तायाः प्राकट्यस्य वा क्षणयोगस्य कारणयोगस्य ततस्तत्र गुणादियोगस्याऽऽलोच्यमानत्वेऽपि विशिष्ट-विषयकसाक्षात्कारः विशेषणाऽन्वितः सत्त्वोत्तरं सम्पद्यते। आद्यक्षणेऽपि सावयवस्य साऽऽधारस्य साऽऽश्रितस्य सत्तया तनुस्वरूपस्य व्यवस्थितस्यैव व्यूहस्याऽऽलोचनात् सप्रकारमेव गृह्यते, आन्तरे वा बाह्ये साकारज्ञप्तेः स्वाभाव्यात् गर्भाऽऽकाराऽऽकारि-तस्य ग्रहणात् सर्वमपि साकारं साऽन्वयं सनिजीय-व्यूहं सविशेषं सस्वभावं सस्वगुणं सस्वसामान्यविशेषं सगुणप्रधानं साऽवलम्बनं ससमयं सदिग्वृत्ति सन्नि-कृष्टं गृह्यते आलोच्यते नाक्षात्क्रियते सशक्तं सपरि-मण्डलं समालोच्यते इति यस्य कस्याऽपि तत्र प्रकार-तया साक्षात्त्वं भवति, अतः सापेक्षं सर्वं साक्षादिति। अनेन विशिष्टं गृह्यते इति ज्ञाप्यते ॥ १२ ॥

स्वप्रकाशत्वात् परप्रकाशकत्वाच्च स्वस्याऽपि ॥

॥ सूत्रम्-१३ ॥

अथ सर्वमविद्याजन्यं तद्यपि भावरूपं सकारणं सर्वं भावितज्ञप्तिग्राह्यं सत् भाव्यते ज्ञानेनाऽऽलोच्यते ज्ञानमपि स्वप्रकाशस्वभावं स्वयं स्वमेकक्षणिकमनेक-क्षणिकं सन्तानपतितं धाराधिक्यवर्धमानं पूर्वपूर्व-गर्भप्रसवपारम्परिकम् आद्यक्षणत एवाऽऽपूरकं प्रापूरकं परापूरकं प्रपरापूरकं स्तरप्रस्तरापूरकं प्राङ्-

प्राक्समान्तापूरकं विरामान्तापूरकं चापि सर्वं स्वप्रकाशं स्वीयप्रकाशं स्वान्तःप्रकाशं स्वान्तप्रकाशं च स्वमेव स्वप्रकाशं स्वान्याकारप्रकाशं स्वारूढप्रकाशं स्वावृतप्रकाशं स्वप्रतिभासप्रकाशं स्वाभासप्रकाशं स्वात्मककुर्वद्रूपप्रकाशं स्वोपचरितोद्देश्यकप्रकाशं स्वपराभावकसत्प्रकाशं स्वाऽर्पणाधिकरणप्रकाशं स्वपरमार्थप्रकाशम् अन्ततः स्वोपास्यप्रकाशं साक्षात्कृतं भवति 'सर्वं खल्विदं ब्रह्मे'ति 'सोऽहमस्मी'ति 'ब्रह्मे'ति चापि। ज्ञानं स्वयं प्रकाशते स्वेन स्वं प्रकाश्यते स्वं स्वसाजात्येन प्रकाश्यते स्वोत्तरेण प्रकाश्यते स्वनित्यरूपेण शाश्वतस्वरूपेण प्रकाश्यते। अथ सर्वं स्वयं प्रकाशते—साक्षाद्भवतीति, सर्वं साक्षादिति सर्वथोपपद्यते ॥ अथ सत्त्वप्रकर्षेणाऽपि प्रकाश्यते प्रकाशः, प्रकाशधर्मकं सत्त्वमिति तत् प्राकृतं वाऽऽत्मीयं वा ब्राह्मं वा साक्षिजं वाऽऽन्तःकरणिकं वा परब्रह्मशक्तिकं वा चिच्चैतन्यरूपं प्रकाशते प्रकाश्यतेऽपि च, परत्र गतं प्रकाशते स्वात्मस्वरूपेऽपि प्रकाशते स्वमन्यप्रयुक्तमपि प्रकाशते स्वाऽऽपादकेन प्रकाश्यते च, ततो वेदनं स्वप्रकाशं परप्रकाशकं स्वव्यापकप्रकाश्यं चेति स्वानुयोगिप्रतियोगिसयोगिव्यूहात्मकं सर्वं साक्षाद्रूपं न प्रच्छन्नं नाऽवेद्यं न वा वर्तमानतनुकं क्वापि लीनं किन्तु प्रसिद्धं प्रख्यातं प्रभासमानं प्रकृष्टप्रकाशरूपं प्रकाशकं सत् स्वाऽऽवेदकं स्वसाक्षात्कारकं स्वसाक्षाद्वर्तनकं स्वसाक्षात्फलकं च। वृत्तिव्याप्त्यंगीकारेऽपि फलसाक्षात्कारे सर्वं वार्तं साक्षात्। यावद्वृत्तिस्तावद् वृत्तिविषयचैतन्याऽभेदे विषयसाक्षात्कारो जगति प्रतिविग्रहव्याप्तः सर्वं यथाकथञ्चित् सर्वाऽन्यतमस्य सर्वान्यितमं साक्षादेव, तरस्तरेषु जायमानेषु क्वचित् प्रातिभासिकं साक्षात् क्वचित् चिदाभासीयं साक्षात् सर्वत्र व्यावहारिकं यथासंभवत्साक्षात्, क्वचित्तु चेतनीयं साक्षात्, इत्येवं सर्वं साक्षादिति न व्यभिचरति ॥ **स्वस्याऽपीति**। आकारविशिष्टस्य सविषयकस्य स्वस्य ज्ञानस्य प्रकाशस्य प्रकाशकस्य साक्षात्त्वं स्वेन स्वीयेन स्वकीयेनाऽपि च जायते। अथ जडमपि तेजस्तत्त्वं स्वयं प्रकाशते, तर्हि जडमन्धं तमः कृष्णमिति लभ्यते, समानताऽऽपद्येत। पाषाणोऽप्यन्धेन स्पृश्यते आलोच्यते, कुत्रचिज्जडचेतने मूर्छाऽपि स्वयं दृश्यते जन्मक्षणेऽर्भके, इति को विशेषो जडाऽजडयोर्ज्ञानमेव स्वप्रकाशमिति। उच्यते—पाषाणो ग्राव्णा न दृश्यते, स्वयं स्वस्मिन् न दृश्यते, किन्तु दृशि दृश्यते, मूर्च्छा द्रष्टरि दृशि दृश्यते, तमोऽपि ग्राहके तम इति ज्ञायते, तेजोऽपि चक्षुष्मतां न त्वचक्षुष्मतां, तत्रापि ज्ञानवतां ग्राह्यं, सत्यपि चक्षुष्मति कुणपे शवे ज्ञानाऽभावे तेजोऽपि तम एव तमोऽपि अतम एवाऽभाव एव शून्यमेव, यत्किमप्यवस्थावत् तत् ज्ञाननिरूप्यं ज्ञानं तु स्वनिरूप्यमिति विशेषः परमेश्वरोऽन्तिमजीवाणुचेतनपर्यन्त इति सर्वं भवत्यालोचनसाक्षात्त्ववदिति ॥ १३ ॥

**गोलकाऽनपेक्ष्यस्य तथात्वे प्रचाराच्च ॥ सूत्रम्-१४॥**

अथ बिम्बस्य प्रतिस्वरूपदर्शकं भवति गोलकम् अधिकतयाऽपि वर्धकं गोलकं विश्रान्त्यर्थमपि नियमनार्थं रचितं गोलकम्, यत्र ज्ञानगोलकत्वं तत्र ज्ञानकृतसाक्षात्त्वम्, आकारस्तु तत्र समाहर्तव्यो भवति, समानाधिकरण्यं सदपि ज्ञप्त्या विविच्यते गृह्यते उपयुज्यते च प्रतिबिम्बते, जडे तेजसि बिम्बं प्रतिबिम्बमिति यत् तदपि चैतन्यसाक्षात्कारनिर्णीतं भवति। चैतन्यं च गोलकसापेक्षं निर्णायकं यथाऽवस्थं तर्हि तत् तत्पूर्वाऽवस्थम् अनवस्थमपि चापि निर्णायकत्वे न व्यभिचरति स्वात्मकधर्मत्वात्, अविनाभावसंभावितप्रकाशकत्वतादात्म्यधर्मित्वात्, मननस्य मनो गोलकं चिन्तनस्य चित्तं गोलकं बोधनस्य बुद्धिर्गोलकं साक्षिणः आत्मा गोलकं परब्रह्मणो ब्रह्म गोलकं व्यवसायस्य विषया अपि गोलकानि प्रतिभासे पीठरमपि गोलकम्, स्वप्ने उज्ज्वलवृषादि गोलकम्, आन्तराभासेषु विमर्शो गोलकं, किन्तु गोलकाऽप्राप्तस्य नित्यदृशः किं गोलकम्?, इति चेत्!, स्वयं स्वगोलकम्। स्वगोलकत्वं स्वप्रकाशत्वं स्वप्रकाशस्वरूपत्वम्, गोलकाऽनपेक्षस्याऽपि स्वप्रकाशस्य सर्वथा सर्वविधतनुमयत्वे तथात्वे साक्षात्कारत्वे स्वप्रकाशत्वे स्वस्यैव प्रसरणं व्याप्तिः प्राप्तिः प्रचारः शक्तिः सामर्थ्यं निसर्गः तत्त्वतेति भवति हि स्वप्रकाशस्य स्वस्य गोलकाऽनपेक्षदशायामपि चैतन्यस्य शुद्धचैतन्यस्य नित्यचैतन्यस्य स्वप्रकाशत्वं सर्वविधसाक्षात्कारत्वं, स्वस्मिँस्तथाविध-

प्रचारात् स्वभाव्येष्वपि स्वप्रचारात् स्वप्रकाशत्वस्व-प्रकाशकत्वस्वान्वितस्वग्राह्याकारप्रकाशकत्वात्मक-प्रचारात् सर्वं स्वं स्वयं स्वकीयं साक्षादिति सिद्ध्यति। सूर्यकिरणं गोलकं प्राप्य प्रतिसान्द्रतां भजते, अप्राप्याऽनावरणेऽनन्ताऽवकाशे आकाशे प्रसरत् सत् यत्र क्वापि क्षीणभावं प्राप्नुवत् प्रसरणाऽशक्तं सूक्ष्मत्वे विरमति वायौ गमने विराममेति न प्रकाशते स्थौल्येन, प्रकाशते तु सौक्ष्म्येण, ततोऽपि तत् अलोकाऽन्धकारमासाद्य तु कारणतदात्मकं लीनमित्युक्तं भवति नष्टमित्युपचर्यते, विज्ञानं तु गोलकाऽनपेक्षं प्रतिनिवृत्तिस्वभावं स्वप्रकाशं च स्वापूरकान्तम् अभिगम्य नित्यविज्ञानमासाद्य तत्र विरमदपि स्वप्रकाशतां न जहाति कारणात्मकतया प्रकाशते, इति ब्रह्मपर्यन्तं परब्रह्मपर्यन्तम् आत्मतत्त्वपर्यन्तं चिदंशपर्यन्तं चैतन्यं स्वप्रकाशत्वे तथात्वे स्वभावे एव प्रतिप्रयातं सत् स्वप्रकाशत्वेनैव तत्रापि प्रचरणात् ब्रह्मचैतन्ये तादात्म्यमाप्तं चापि सर्वसाक्षात्कृदेव प्रकाशते, इत्यत्र 'प्रचाराच्चे'त्यनेनाऽऽवेद्यते, अतः सर्वं ज्ञानं स्वप्रकाशं सर्वं च साक्षाद्गोचरमिति ध्रुवमेव ॥ १४ ॥

**परिच्छिन्नस्यापि साक्ष्यन्वितत्वाद् यथायोगम् ॥**

**॥ सूत्रम्–१५ ॥**

अथाऽसंख्या आत्मनश्चेतनाः, अणुरेष आत्मा चेतसा वेदितव्यः' 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः'। 'उत्क्रान्तिगत्यादीनाम्'। 'स्वात्मना चोत्तरयोः'। 'नाणुरतच्छ्रुतेरिति चेन्न, इतराऽधिकारात्'। स्वशब्दोन्मानाभ्यां च'। 'गुणाद्वाऽऽलोकवत्'। 'एष हि द्रष्टा···विज्ञानात्मा पुरुषः' 'एवमेवाऽस्य परिद्रष्टुरिमाः षोडश कलाः'। 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'हृद्यन्तर्ज्योतिः पुरुषः'। 'अत्राऽयं पुरुषः' स्वयंज्योतिर्भवति'। 'यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षत्री तथा कृत्स्नं प्रकाशयति भारत'। 'द्वासप्ततिः सहस्राणि हृदयादभिनिःसृताः। हिताऽहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्॥ मण्डलं तस्य मध्यस्थ आत्मा दीपा इवाऽचलः'। 'स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः। एकदेशस्थितो वेत्ति हरिचन्दनबिन्दुवत्'। 'प्रभया भास्करो यद्वत् ब्रह्माण्डं व्याप्य तिष्ठति। एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते'। 'अहं मनुरभवं सूर्यश्च'। 'अहमन्नमहमन्नमहमन्नादोऽहमन्नाद अहं लोककृदहं लोककृत्'। इति श्रुतिभिरणुः परिच्छिन्न आत्मा प्रोक्तः, स्वप्रकाशः प्रोक्तः, परिद्रष्टा प्रोक्तः, नित्यज्ञानरूपः प्रोक्तः, स्वयंज्योतिरन्तर्ज्योतिरुक्तः, क्षेत्रप्रकाशकः शशिप्रभमण्डलस्थः एकदेशस्थस्त्रिकालद्रष्टा च प्रोक्तः। तामसा राजसाः सात्त्विका अप्यात्मानः साक्षिणा ब्रह्मणाऽन्विताः संसारिणोऽसंसारिणश्च प्रोक्ताः। यथायोगः शरीरस्य तथायोगास्ते 'एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः'—इति द्रष्टारः प्रोक्ताः, 'परिपश्यन्ति धीराः' इति–दृग्वन्तः, प्रोक्ताः 'अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैवैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके'। इति परिद्रष्टारः प्रोक्ताः, ब्रह्म हि सर्वद्रष्टृ, ब्रह्माऽन्वितत्वेन साक्षिदृष्टचा सर्वद्रष्टारो वर्ण्यन्ते, न ह्यात्मानं विना सृष्टिरस्ति, न हि चेतनाऽसम्बद्धमण्वाद्यस्ति, नहि प्रकाशाऽसंयुक्तं किमप्यस्ति, नहि साक्ष्यनन्वितं किमपि चैतन्यमस्ति, न ह्यवेद्यं किमपि तत्त्वं भवति, न ह्यनुपयुक्तं किमपि भवति, न ह्युपयुक्तं समर्थाऽदृश्यं भवति, न ह्यन्तर्याम्यदृश्यं किमपि किञ्चिदपि तत्त्वं भवति, यद्विधं तत्त्वं तद्विधं तच्छरीरि ब्रह्म तद्विधद्रष्टृ तद्विधचेतनचैतन्यद्रष्टृ चेतनतदात्मकं द्रष्टृ चेतनतदात्मकं द्रष्टृ चेतनदृगभिन्नदृशा द्रष्टृ सर्वत्रैवं साक्ष्यन्वितचेतनदृष्टृत्वं परिच्छिन्नस्याऽपि साक्षात्कर्तृत्वं साक्षात्कारवत्त्वं भवतीति सर्वं साक्षादिति ध्रुवम्। 'सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्याऽपरिणामित्वात्'। 'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्'। 'तदा सर्वाऽऽवरणमलाऽपेतस्य ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पम्'। 'दृग्दृष्टेः साक्षि ब्रह्म तदात्मकयावत्वेन व्यापकसर्वदृगात्मनः सर्वं ज्ञेयं दृश्यं त्वल्पं दृश्यं भवति हस्ते आमलकदर्शनमिव भवतीति परिच्छिन्नस्य सर्वत्र स्थितात्मतत्त्वस्य प्रत्येकस्य सर्वसमूहत्वेन निरूपितसाक्षात्कारस्य सर्वविषयकत्वसिद्धिः ब्रह्मदृष्टिसन्निकर्षेण सर्वं साक्षा-

त्कृतं भवतीति नैकाण्वपि चेतनदृगस्पृशं, सर्वत्र चेतनसत्त्वात् ॥ १५ ॥

**प्रातिभाद्वा सर्वं स्वव्याप्तेश्च ॥ सूत्रम्-१६ ॥**

'प्रातिभाद्वा सर्वम्' (योग सू० ३।३३)। विवेकजस्य ज्ञानस्य पूर्वरूपं तारकं नाम प्रातिभम्, यथा भास्करस्याऽग्रेऽग्रे प्रभा,—प्रकाशादिः, आत्मनां योगिनां नवनवोन्मेषशालिनी धीः प्रतिभा, प्रतिभा ऊहस्तद्भवं प्रातिभम्, ऊहो दिव्यदृक्, दिव्यदृक्सन्ततिः प्रातिभम्, गुणवैतृष्ण्ये परप्रसंख्याने एतदुदयपूर्वलिंगं प्रातिभं, तेन योगी सर्वं विजानाति साक्षात्, विरक्तो भवति, तरति संसारम् प्रातिभं संसारात्तारकं बोध्यम्। स्वग्राहकं परप्रतिभानमपि साक्षात्करं, भवति, प्रतिब्रह्माण्डं यः कश्चिद् योगप्रतिभावान्, सः स्वब्रह्माण्डं जानाति, एवमेव सर्वब्रह्माण्डानां प्रातिभविषयत्वात् सर्वाण्डानि प्रत्यक्षाणीति। धारणाध्यान समाधय एकत्र योजिता जीयन्ते, ततो जायमानः साक्षात्प्रज्ञालोकः प्रवर्धते, यथा सुवर्णस्य सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य भावान्यथात्वम् अवस्थाऽन्यथात्वं संस्थानाऽन्यथात्वभ् आकाराऽन्यथात्वं पारिमाण्डल्याऽन्यथात्वं भवति न तु सुवर्णाऽन्यथात्वं, तथा बुद्धिचैतन्यस्य स्वप्रकाशस्य सर्वथा साक्षात्कारस्वभावस्य व्यवहारभावनस्य भित्त्वाऽन्यथासंस्क्रियमाणस्य द्रव्यगुणात्मकस्य चैतन्यस्य स्वप्रकाशस्य साक्षात्कृतस्वभावस्याऽऽकाराऽधीनाऽवस्थान्तरत्वं भवति न तु स्वरूपाऽन्यथात्वम्, संविदो नित्यत्वात् चिदंशात्मनित्यत्वात् चिच्चैतन्यस्य नित्यत्वात् तस्य च सर्वत्र स्वभावादेव व्याप्तत्वात् सर्वविषयाणां साक्षात्त्वम्, साक्षाच्चिद्विषयत्वं प्रातिभविषयत्वं भवति। धर्मलक्षणाऽवस्थासु दृग्योजनात् अतीताऽनागतदर्शनम्, शब्दार्थप्रत्ययानां दृग्योजनात् सर्वभाषार्थाऽवगमः साक्षात्कारः, संस्कारसाक्षात्करणात् पूर्वजातीयतासाक्षात्कारः, भगवान् जैगीषव्य ऋषिः दशमहाकल्पीयस्वसाक्षात्कारवान् अभूत्। व्याप्नुवता बुद्धिसत्त्वेन सर्वं सम्पश्यता जैगीषव्येणाऽऽवटचो महर्षिर्वैराग्यार्थमुक्तः। प्रधानवशित्वमैश्वर्यं तृष्णाक्षयोऽपि बुद्धिसत्त्वस्य स्वप्रकाशशान्तत्वमपि वर्णितम्। प्रत्ययस्य चित्तमात्रस्य साक्षात्करणात् सर्वेषां चित्ततत्त्वानां सविषयचित्तानां साक्षात्कारता भवति। धर्माऽधर्मकर्मसंयमिनोऽपरान्तसाक्षात्कारो वर्तते। स च यमपुरुषान् पितॄन् स्वर्गादीन् सिद्धान् तत्तद्विपरीतांश्चापि पश्यति, सूक्ष्मं व्यवहितं विप्रकृष्टादि च पश्यति, भुवनानि ब्रह्माण्डानि साक्षात्करोति, ताराणां गतीः व्यूहांश्च, कायव्यूहांश्च, सुषुम्णामार्गेण सर्वतेजांसि सर्वलोकान् स्वर्गांश्च पश्यति। प्रज्ञादृक्पुरुषः प्रज्ञां सविषयां सर्वां सर्वविषयां साक्षात्करोति, चित्या जडादिः प्रकाश्यते। प्रातिभान् श्रावणवेदनाऽऽदर्शनस्वादवार्तासाक्षात्कारा वर्तन्ते, अनावरणदर्शनात् दिव्यश्रोत्रीयसाक्षात्कारः शब्दार्थन्तिसाक्षात्कारो भवति, सत्वपुरुषान्यताख्यातिमात्रदृक्प्रतिष्ठितस्य सर्वतत्वाऽधिष्ठातुरस्य सर्वसाक्षाज्ज्ञातृत्वं भवति, योगी सर्वज्ञो विहरति, योगी प्रज्ञाज्योतिष्मान् ऋतम्भरप्रज्ञः सर्वसत्यद्रष्टा वर्तते। कालोऽपि शून्यस्वरूपोऽपि वस्तुपतितक्षणरूपोऽपि वास्तवो वस्तुस्वरूपो दृश्यते योगिनः। क्षणतत्क्रमयोः साक्षात्कारो विवेकदृग् भवति योगिनः। 'तारकं सर्वविषयं सर्वथाविषयम् अक्रमं चेति विवेकजं ज्ञानम्' (३।५४) अनुपदेशिकं स्वप्रतिभोत्थं तारकम्, नाऽस्य किञ्चिदविषयीभूतम्, अतीताऽनागतप्रत्युत्पन्नसर्वपर्यायसाक्षात्कारात्मकम् एकक्षणोपारूढं सर्वं सर्वथा साक्षात्करोति, एतद्विवेकजः साक्षात्कारः पूरिपूर्णः, सोऽयं शुद्धः पुरुषोऽपि सर्वदर्श्यपि स्वरूपमात्रज्योतिरमलो वर्तते। कैवल्ये सर्वज्ञः, ऐश्वर्ये सर्वज्ञः, दिव्यत्वे सर्वज्ञः, आर्षत्वे सर्वज्ञः, सति योगे सिद्धे सर्वज्योतिरपि स्वरूपमात्रज्योतिः विशिष्टसाक्षात्कारवान् सर्वज्ञो भवति। मानवो योग्यपि सर्वं साक्षात् पश्यति, दृग् द्रष्टृस्वरूपा सती द्रष्टृत्वं सर्वद्रष्टृत्वं च पुंद्रष्टृत्वमाप्नोतीति ॥ १६ ॥

**॥ ततोऽन्यत्तु तन्मूलकं तदनुगुणसापेक्षम् ॥**

**सूत्रम्—१७ ॥**

प्रातिभं विना व्याप्तिं विना च सामान्याश्रयसंसर्गबलोद्बोध्यं यत् तत्त्वं—शुक्लः शर्करा ग्रावा, मिष्टो मधुसमुदायः रक्ता सन्ध्या, हरितमरण्यं, कृष्णः पर्वतस्तेजस्विनी तारका, स्वादिष्टं सिद्धान्नम्, अन्धं

तमः, आलोचितं मानसं, परीक्षिता प्रज्ञा, साक्षात्कृतं सुखम्, महारण्ये दावाऽग्निः, दुर्वासा अयं प्रत्यणुक्रुद्धः, इत्यादिषु चाक्षुषादिसाक्षात्कारा उपर्युपरि बाह्याऽग्राऽवच्छेदेन जायमानाः सर्वानपि प्रत्यक्षविषयताऽवच्छेदकसामान्याऽवच्छिन्नान् साक्षाद् गृह्णन्ति, प्रतीयन्ते च साक्षाद्विषयाः, कुम्भकारभ्राष्ट्राऽग्निर्होलिकाऽग्निश्चुल्लिकाऽग्निर्वीक्ष्यमाणः सर्व एव वीक्षाविषयः सामान्याश्रयतया सर्वप्रतीतिनिर्वाह्यसाक्षात्कारगोचरो भवति, तत्तत्पदार्थस्तरावृता अपि ते ते पदार्थाः साक्षाद्ग्रहगोचरा व्यवहृता भवन्ति, नैता भ्रान्तयोऽसाक्षात्तत्त्वे साक्षाद्गोचरतातिमिक्यः, साक्षात्त्वस्य निश्चयात् साक्षात्प्रमात्वात्। तत्र तत्र यद्वत् साक्षाद्भवति, तदात्मकस्तन्मूलकस्तद्व्यूहः तदात्मकगुणः तदनुप्रविष्टगुणः तत्स्वरूपात्मकैकतत्त्वगुणकः पिण्डः आवरणे व्यवधाने पृष्ठे प्रत्यभिभागे विदिशस्वरूपे वर्तुले व्यवस्थाने पारिमाण्डल्यप्रथाके सुसन्निकृष्टमिव मध्यसन्निकृष्टं प्रान्तसन्निकृष्टं दिक्षु विदिक्षु सन्निकृष्टं सन्निकर्षसन्निकृष्टं तत्सामान्यविशेषसन्निकर्षसन्निकृष्टं सर्वमपि साक्षात्कृतम् अनुसाक्षात्कृतं समानसाक्षात्कृतं व्यवहारसाक्षात्कृतम् अर्थान्वयसाक्षात्कृतं व्याप्तवृत्तिसाक्षात्कृतं चैतन्यसाक्षात्कृतं सर्वमप्यपरोक्षं साक्षात्कृतं भवति, समूहाद् विभक्तमपि विरलसंसृष्टमपि तदनुगुणताया अपेक्षावत् ईक्षणविषयतावत्—सर्वा सन्ध्या रक्तेति, सर्वमरण्यं ज्वलतीति, पर्वतो वह्निमानिति, आत्माऽहं सुखीति, सर्वसाक्षी सत्यभरः ऋतम्भर इति एवं मूलसामान्यविशेषसापेक्षं मूलसाक्षात्काराऽऽकारसाक्षात्कारचिदाकारसाक्षात्कारदृक्सापेक्षदृश्यसाक्षात्कारगोचरं सर्वं भवति, न चात्र वह्न्यादिरनुमेयः, अनुसामान्यसाक्षात्कारेण प्रमान्तराया अनावश्यकत्वात्, प्रमाणप्रबलस्याऽस्य व्याप्तत्वात् तन्मूलकस्य तर्काऽब्ध्यादिमग्नस्याऽपि नामान्तराऽवलम्बकस्याऽपि साक्षाद्विना तदनुपपत्तेः, साक्षात्त्वस्योपपत्तेश्च सर्वत्राऽसाक्षादनुन्यत्वेनोपचरितस्य साक्षात्त्वमेव ध्रुवम्। साक्षादनुगुणं साक्षात्। साक्षात्सापेक्षं साक्षात्। साक्षादपि साक्षात्। स्वयं साक्षादिति। ततो न क्रमक्रमणाऽऽश्रयादिसापेक्षोद्भाव्यदूषणानि। साक्षात्त्वे विश्रामात्, स्वप्रकाशे पराऽपेक्षाऽभावात्, स्वाऽपेक्षाया अनास्थत्वात्—इति ॥ १७ ॥

**॥ तत्राऽन्यत्वम् उपाध्युपचरितम् ॥ सूत्रम्–१८ ॥**

अथ असाक्षात्त्वगतिमतां परिच्छिन्नानां लौकिकानां चेतनानां स्वस्थित्या भवत्याशंका, नित्यविज्ञानव्यापकसर्वात्मब्रह्मतोऽज्ञानोपाधिकेशजीवानां भिन्नत्वादेव साक्षिदृशा न सर्वदृक्त्वं स्यात्, विशिष्टैकब्रह्मणोऽपि वा विशेषणभेदाद् भिन्नत्वादेव तदीयव्यापकसर्वज्ञसाक्षात्कारदृशा भिन्नपरिच्छिन्नाऽल्पज्ञचेतनानां न स्यात्सर्वसाक्षात्कारः, परात्मसाक्षात्काराऽभावात्, विशिष्टाभिप्राये वास्तवो देवदत्तात् यज्ञदत्तभेदः तद्दृग्भेदोऽपि वास्तवः तद्दृग्विषयताभेदोऽपि वास्तवः निरूपकवास्तवभिन्नत्वात्। एवं च यत् सर्वविज्ञात्रतिरिक्तं विशेषणं द्रष्ट्रपि न सर्वद्रष्टृ स्यात्, इति सर्वं साक्षादिति सर्वदर्शनव्याहतिः, अव्याहतौ तु परिच्छिन्नविशेषणैश्चेतनैः सर्वसाक्षात्कारे सर्वसृष्टिनिर्वाहादिस्तद्व्यूहैरेव निर्वाह्यमाणे कार्यमाणे च सम्पाद्यमाने पोष्यमाणे च नित्यसर्वज्ञाऽस्तित्वमेव निरर्थकम्, 'स ऐक्षतेति' 'एकोऽहमि' ति 'एको बहूनामि'-ति सर्वशब्दजालं निरर्थकं वेदान्ता अपि निरर्थकाश्च स्युरिति ॥ अत्रोच्यते चेत्,—ब्रह्मदर्शनमेव सर्वदर्शनं द्रष्टुरन्यस्य मिथ्याभूतस्याऽभावात्, तथा च आत्मा द्रष्टा, अमिथ्यात्मा सर्वद्रष्टा, मिथ्यात्मा तु मिथ्यैव तद्दृगपि मिथ्यैव दृक्त्वं द्रष्टृत्वमपि मिथ्यैव, निर्धर्मकस्य द्रष्टृत्वाऽभावात्, आन्तःकरणिकद्रष्टृत्वस्याऽपि मिथ्यात्वात्, स्वाप्नसृष्टिदृष्टिधृष्टिमिथ्या जाग्रदपि मिथ्या संसारोऽपि मिथ्या, यदादौ न अन्ते न तन्मध्येऽपि न, इति सर्वस्य मिथ्यात्वात् ब्रह्मदर्शनस्य वृत्तिव्यापनपर्यन्तमिथ्यात्वात्, सर्वस्यैवाऽभावान्मिथ्यात्वात् एकस्यैव सत्यत्वात्, स्वद्रष्टृत्वाऽप्रयोजनात् अद्रष्टृ एवेति ॥ तन्न ॥ ध्रुवा माया 'अजामेकामि'-त्याद्युक्ता, 'नित्यो नित्यानां चेतनश्चेतनानामि'ति चेतना नित्या उक्ताः, 'यदा पश्यः पश्यते रुक्मवर्णमि'-ति द्रष्ट्रात्मानो नित्या उक्ताः, 'न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति दृष्टिनित्यतोक्ता, सतां जीवमायेशानां नित्यत्वात् मिथ्यात्वं बाधितम्, 'अजो नित्यः

शाश्वतोऽयं पुराण' इति पृथक्त्वेन विशिष्टेन च स्वरूपेण नित्यत्वात्, विशिष्टं ब्रह्म सर्वं पश्यति ॥ अथ विशिष्टस्वरूपे तत्र न अन्यत्वम्, 'एकमेव' 'सदेवे'-त्यादिकथनात्, कारणात् कार्यं भिद्यते आकारान्तरात्, आकारान्तरत्वं चोपाधिकृतमिति सर्वथा भेदे सर्वं साक्षादिति हतमेवेत्यपि न । उपाधिर्न स्वरूपे, रक्तं पुष्पं न स्फटिके, उपाधेः स्वरूपेऽयोजनात्, नियाम्यं तु नोपाधिः, अपराभावकत्वात्, व्यवहारस्तु समीपस्थे आचर्यते 'पशुपालः पशुरि' ति, गगनं रक्तमिति, ब्रह्म अज्ञमिति, भिन्नं न सर्वसाक्षात्कारीति, विशिष्टं सर्वद्रष्टृ–इति त्वनुपचरितम्, वास्तवं सत्, न चौपाधिकमिति । ततः सर्वं द्रष्टृदृग्विषयमिति ध्रुवम् ॥ १८ ॥

**॥ स्मरणमपि तृतीयाऽऽकारवत्त्वात् तथा ॥**

**॥ सूत्रम्—१९ ॥**

अथाऽनुभवः संस्काराः स्मरणानीति कारणानि कार्याणि च तदन्यतमानि स्वप्रकाशानि सन्तु न तु सर्वाणि, ज्योतिः प्रदीपः स्वप्रकाशो न तु तैलवर्तिपात्राणि, एवं च कारणप्रदीपः कार्यप्रदीपः स्वप्रकाशः, न सर्वप्रदीपः, यद्वा मध्यप्रदीपः स्वप्रकाशो न तु कारणकार्यप्रदीपः, तथा च स्थितिः स्वप्रकाशा, तदन्या अप्रकाशाः, ज्ञानं स्वयमुत्पत्तिसमावृतं न प्रकाशं कुर्यात् लयक्षणे लयाऽऽवृतं च न प्रकाशं कुर्यात् प्रकाशेत च, धर्मविलयात्, एवं च सर्वथा ज्ञानं न स्वप्रकाशं प्रकाशाऽवस्थानां परिवर्तनात्, प्रकाशाऽधीनस्वप्रकाशं वा स्यात्, आधेयत्वेनाऽऽधारस्य नित्यप्रकाशस्य प्रदत्तप्रकाशेन आदर्शवत् सप्रकाशं वा स्यात्, तथा चाऽनुभवज्ञाने प्रकाश आधारलभ्योऽनुभवजसंस्कारे तु प्रकाश एव न प्रेयात्, अप्रकाशेन भावनात्मकेन जायमानं स्मरणं तु सर्वथाऽप्रकाशं स्यात्, एवं च सति सर्वं ज्ञानं स्वप्रकाशं परप्रकाशकं चेत्युभयमपि व्याहतं, स्मरणकाले प्रकाशकस्य करणस्यैवाऽभावात्, तथा च ग्राहकेण करेण घटो गृह्यते इतिवत् ग्राहकेण स्मरणेन घटो गृह्यते इत्येतावन्मात्रव्यवहारः स्यात् न तावता स्वप्रकाशत्वम्, आकारस्त्वनुभवेन सह लीनः, लीनस्याऽग्रे संक्रमाऽसंभवात्, अन्यथा ध्वस्तानां सर्वेषां सदा संक्रमणेऽध्वस्तमेव सर्वं स्यात् अध्वस्तं च विरोधि चोपस्थितं च सत् अन्योत्पादविरोध्येव प्रतिबन्धकं तत्र स्यात्, तथा च क्वचित् शून्यताऽऽपद्येत, तच्च प्रत्यक्षविरुद्धम्, प्रवाहस्याऽनाद्यनन्ताऽऽनुपूर्वीकतया संचारप्रतीतिसिद्धस्य अपह्नवाऽभावात्, इति चेत् । अत्रोच्यते। नहि प्रदीपो मध्यक्षणेऽप्रकाशः, नहि प्रकाशस्तमः, यत् उत्पद्यमानं सत् स्वरूपसत्प्रकाशम् अप्रकाशं लभ्यते, विरलाऽवस्था सा नाऽप्रकाशा, न ह्युत्पद्यमानो विद्युदग्निरनुष्णोऽरूपोऽप्रकाशोऽदाहश्च । न हि वा प्रकाशस्यैकस्य स्वात्मकप्रकाशान्तरस्याऽऽश्रयताऽऽश्रितताऽधिकरणताऽऽधेयता, स्वस्य भेदाऽभावात्, न ह्यनुभवस्याऽप्रकाशत्वम्, आकारम् आदायैवोत्पन्नत्वात्, न ह्याकारस्याऽसम्बन्धस्तदा, साक्षिचैतन्यैन सम्बन्धात्, तत्तदात्मकाकारस्य तद्वयाप्याऽनुभवे धारणस्वाभाव्यात्, ज्ञानमाकारस्वरूपं भोजनमादायैव जन्मस्थितिपरिणामाऽवस्थं भवति, साकाराऽनुभवाऽवस्थाः संस्कारा भावनावस्थाः भाविताकाराऽवस्थानि स्मरणानि साकाराणि, साकारतयैव स्वप्रकाशत्वं परप्रकाशकत्वं च, साकारसन्ततिवर्तनादेव न स्वरूपतः स्वप्रकाशतया वर्तमानस्य तत्क्षणे द्वारिणोऽनवलम्बनात् विरोधाऽभावात् शून्यत्वाऽभावात् सत्संचारात् स्मरणे ग्राह्यधार्यघटाकाराऽनवलम्बनेऽपि भोग्याऽऽकारस्याऽऽन्तरिकवेद्यस्य वर्तनात् तृतीयकक्षात्मकेन भोग्याकारेणाऽन्वितत्वात् स्मरणानां ध्यानाऽपरपर्यायाणाम् अन्तःकरणीयवृत्तिरूपाणां साक्षिदृगन्वितानां साक्ष्याधानितशक्तिमतां स्वप्रकाशत्वं स्वाकारप्रकाशत्वं स्वीयप्रकाशकत्वं साक्षितादात्म्येन सर्वप्रकाशकत्वं चेति भवति स्मरणमपि सर्वं मानससाक्षात्कृतमिति सर्वसाक्षात्कारत्वमव्याहतम् ॥ १९ ॥

**यद् यथाभोग्यं तदपि तस्य तथा ॥ सूत्रम्—२० ॥**

ननु—आत्मनामसंख्यत्वेनैकाऽदृष्टस्यैकदृशश्च सर्वत्राऽव्यापनात् एकगृहे निवसतां दशगृहिणामपि सर्वं गृहीयवस्त्वप्रत्यक्षं कुसुलखन्यादिगतं पेटिकामञ्जुषादिगतमप्रत्यक्षम् आवरणमर्यादितमप्यप्रत्यक्षमिति कथं स्यात् 'सर्वं साक्षादिति' नियमः । इति चेत् । उच्यते। स्वस्य स्वीयं सर्वं साक्षात्,यत् स्वस्याऽसाक्षाद्

तत्परस्य साक्षात् कर्णयोर्मध्यं शिरोऽन्यगोचरमिव, आन्तरं च सर्वं मानसगोचरम् , अस्थूलमावृतमगोचरं च शारीरदेवानां गोचरं तत्तद्दैवतानां तत्तदीश्वराणां तत्तदात्मनां तत्तत्साक्षिणस्तत्तदन्तर्यामिणश्चापि यस्य यथाधिकार्यं यस्य यथाव्याप्यं यस्य यथाप्रयोज्यं यस्य यथोद्भाव्यं यस्य यथा रक्ष्यं यस्य यथाऽपेक्ष्यं यस्य यथा ग्राह्यं यस्य यथाऽवस्थाप्यं यस्य यथाऽङ्गीकार्यं यस्य यथा स्वीकार्यं यस्य यथाऽऽपूर्यं यस्य यथा विकार्यं यस्य यथा परिणाम्यं यस्य यथा परावर्त्यं यस्य यथाऽऽधार्यं यस्य यथाऽऽपाद्यं यस्य यथाऽनुसन्ध्यं यस्य यथाभोग्यं यस्य यथोपमर्द्यं यस्य यस्य च यथा यथा तिरोभाव्यादि तस्य तस्य तत् तत् तथा तथा साक्षाच्छक्तिग्राह्यं साक्षाच्चैतन्यदृगाप्यं साक्षात्काराऽऽस्कन्द्यं स्वयंप्रकाशज्ञप्त्या विषयीकर्तव्यमेव भवति न किमपि भावाऽभावात्मकम् अविषयीभूयाऽवतिष्ठते, यत्तत्त्वं तच्चेतनार्थं यच्चेतनार्थं तच्चैतन्यालोच्यं यदालोच्यं तत्साक्षाद्विषयं यद्विषयं तदेव सत् इतिसत्तया साक्षात्तया सान्विततया सतादात्म्यतया साऽपृथक्सिद्धतया सात्मकतया सुविशिष्टतया साक्ष्यन्विततया सर्वव्यापकदृग्गोचरतया विशेषगोचरतया सामान्ययगोचरतया साक्षाद्द्रष्टृगोचरतया तस्य तस्य द्रष्टुः तथा तथा तदीयतयोपलब्धव्यं भवत्येव, तत्त्वत्वोपलब्धत्वयोः सहनियमात् सामान्यनियमव्याप्तेः केवलान्वयित्वात्, भवति हि कुशलस्य चन्द्रमात्रदर्शनक्षणे तद्दिग्गगनमण्डलेऽसंख्यतारकाणामपि दृग्विरलव्याप्त्या दर्शनं ततोऽपि विदिक्षु दृक्प्रान्तप्रभासु किञ्चिन्मात्रमहापरिमण्डलस्थानां पिंगलांशदर्शनं ततोऽपि प्रविदिक्षु मानससाक्षात्कारप्रभादृग्भासदर्शनं ततोऽन्यत्र सर्वत्र महाकाशे साजात्यदृशा सदृशदर्शनं चिदाकाशे हृदाकाशे ततश्चाऽलोकलोकादिस्थानां तु आत्माकाशे साक्ष्याकाशेऽन्तर्यामिप्रकाशे दर्शनम् । तथा च सर्वम् यथाभोग्यं दर्शनं साक्षादिति पारम्परिकसाक्षात्त्वमेवाऽपि व्याप्तं भवतीति सर्वं साक्षादिति सध्रीचीनं दर्शनम् ॥२०॥

**सापेक्षत्वात् अतथात्वतथात्वे लोकस्थित्यर्थम् ॥**

**॥ सूत्रम्—२१ ॥**

'पराञ्चि खानि व्यतृणत् स्वयम्भूः, ततः पराङ् पश्यति, नान्तरात्मन्' पराञ्चत्वे पराङ्पश्यत्वं, यदि स्वयंभूः खानि पराञ्चि न व्यरचयेत् तर्हि तु अपराञ्च्यपि अपराङ्पश्यत्वमपि प्रथमतः सिद्धमेवेति तत् अर्थात् आवेदितं भवति, अपराङ्पश्यत्वस्य सत्त्वेऽपि लोकानां परिच्छिन्नव्यवहारस्य सौलभ्यायाऽऽवरणाऽपेक्षा पटलाऽपेक्षाऽऽवृत्यपेक्षोद्घाटनाऽपेक्षाऽऽयोजनाऽपेक्षा सन्निकर्षाऽपेक्षा गोलकाऽपेक्षा योग्यदर्शकाऽपेक्षा शक्त्यपेक्षा संरोधकाऽपेक्षा पिधायकाऽपेक्षा द्वाराऽपेक्षा प्राथमिकपाताऽपेक्षा अवस्थाऽपेक्षाऽऽविर्भावाऽपेक्षा सहकार्य-पेक्षाऽऽपूरकाद्यपेक्षादि चेति स्वयम्भूरेवाऽरचयत् । अरचनाके दिव्यलोके दिव्यदृशामासीदेवाऽस्त्येव च सर्वसाक्षात्कारवत्त्वं, तासामेव दृशां सापेक्षत्वेऽतथात्वे परिच्छिन्नतया ग्रहणत्वे,व्यवहरणम् ब्रह्मसापेक्षत्वे साक्षिसापेक्षत्वे तु सर्वं साक्षादिति दर्शनं रचितम् , उभयमप्येतत् ब्रह्मलोकस्थित्यर्थं मायिकलोकस्थित्यर्थं चेति ॥ अथ परमात्मा सर्वदृश्योऽपि मन्तव्येऽदृश्य इति या दृक् सा यत्र पश्यति तत्र किमपि तु गृह्णाति पश्यति, तत् दृश्यं विशिष्टरूपः परमात्मा प्रतिष्ठापितदेवमूर्तिः परमात्मा देवमूर्तिविशिष्टः परमात्मा, 'सन्दृश्यते रूपमस्य' 'यस्य सर्वमात्मैवाऽभूत्' द्रष्टुर्भक्तस्याऽऽचार्यमूर्तिर्गुरुमूर्तिः पितृमूर्तिः पोष्यपोषकरक्षकरक्ष्यमूर्तयः सूर्यगोविप्रादिमूर्तयः अर्भकविश्वासुशरणागतमूर्तयः भूमिर्जलमित्याद्या मूर्तयः, दिव्या अदिव्या विभूतयो मूर्तयः, 'यद्यद्विभूतिमत्सत्त्वं तत् सर्वं विद्धि मामकम्' 'रसोऽहमप्सु कौन्तेय' 'रसो वै सः' 'रूपं रूपं प्रतिरूपो बभूव' 'सर्वात्मनाऽऽश्रितपदः' 'त्वमग्न इन्द्रो ऋषभः सतामसि त्वं विष्णुरुरुगायो नमस्यः । विश्वस्मादिन्द्र उत्तरः' 'आश्चर्यवत्पश्यति कश्चिदेनम्' 'परं दृष्ट्वा निवर्तते' 'सा निशा पश्यतो मुनेः' 'ज्ञानिनस्तत्त्वदर्शिनः' 'येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि' 'एकं सांख्यं च योगं च यः पश्यति स पश्यति' 'आदित्यवज्ज्ञानं प्रकाशयति' 'पण्डिताः समदर्शिनः' 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः' 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति' 'सर्वत्र समं पश्यति' 'स वाऽयं पुरुषः सर्वासु पूर्षु पुरिशयः नैनेन किञ्चनाऽनावृतं नैनेन किञ्चनाऽसंवृतम्' 'सन्मूलाः

सदायतनाः सत्प्रतिष्ठाः' 'तत्त्वज्ञानार्थदर्शनम्' 'कर्मकृच्चाऽपि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति। श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति। अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते ( गौपवन-श्रुतिः )। 'एकस्थमनुपश्यति' 'पश्यन्ति ज्ञानचक्षुषः' इत्येतत्तु सर्वं साक्षादिति वास्तवम्। सापेक्षत्वम् अतथात्वं तु लोकस्थित्यर्थं, यो लोक एकान्तसेवी तस्य सापेक्षताऽसर्वग्राहकता, यो लोकोऽनैकान्तसेवी तस्य सर्वसाक्षात्ता तथात्वता। अत उभयलोकस्थित्यर्थं परमात्मना ब्रह्मणा दृशां दिव्यत्वं सर्वग्राहित्वम्, अदिव्यत्वं चाऽसर्वग्राहित्वं रचितम्। वस्तुतो न किञ्चिदसाक्षात्, साक्षादेव यथाकथञ्चिद् यस्य कस्यचिदिति सर्वं साक्षात्सध्रीचीनम् ॥ २१ ॥

**तत्तु भाषाभेदवत् अविघातार्थम् ॥ सूत्रम् ॥ २२ ॥**

विघातो व्यवहारपराभवः, अविघातो व्यवहाराऽपराभवः, पशुपक्ष्यादिभाषैक्ये कुत्रचिदपि भाषोच्चारणं निर्भयं निःशंकं न स्यात्, मानववत् सर्वैः सर्वेभ्यः सर्वथा कथ्यमानत्वे गोपनं किमपि नाऽवशिष्येत, पिपीलिकाऽपि गन्धेन रसेन कक्षान्तरादिगतस्वभक्ष्यमिव द्रव्यादि प्रच्छन्नमपि चौरादिभ्यः कथयेत्, ग्रामीणा आरण्यकाः पश्वाद्या अपि प्रच्छन्नं सर्वं भाषाभिः प्रकाशितं कुर्युः, अमर्यादितं सर्वमापद्येत, मरणादि क्लेशादि शकुनादि सर्वं प्रकाशमेव सम्पद्येत, राज्यादिव्यवहारा नश्येयुः, पालितहंसवत् चटकाद्या अपि गत्वा राजानं प्रजागोप्यं कथयेयुः, कथयेच्च गृहगोधा मक्षिका च शत्रुभ्योऽपि गृहवृत्तान्तमिति। तन्मा स्यात्। इत्येवं व्यवहारस्य मर्यादितस्य सर्वथाऽविघातो हि भिन्नजातीनां भिन्नभाषादिभिः सुरक्ष्यो भवति, तद्वत् तत् सापेक्षत्वमपि दृक्सापेक्षत्वं परिच्छिन्नदृग्वत्त्वं सन्निकर्षद्वारसहायादिसापेक्षत्वं गोलकसापेक्षत्वं पराऽञ्चकतासापेक्षत्वं रूपगुणादिसापेक्षत्वम् आश्रयादिसापेक्षत्वं महत्त्वपरिमाणसापेक्षत्वं समानप्रदेशसापेक्षत्वं दिगैक्यसापेक्षत्वं तत्क्षणीयतासापेक्षत्वं स्थौल्यादिसापेक्षत्वं निरावरणसावरणतादिसापेक्षत्वं स्वरूपयोग्यतासापेक्षत्वं तत्तच्छक्तिसापेक्षत्वं तत्तत्साजात्यसापेक्षत्वं तत्तदुद्बोधकसापेक्षत्वं तत्तद्व्याप्तिसापेक्षत्वं तत्तत्सन्ततिसापेक्षत्वं तत्तदप्रतिघतासापेक्षत्वं तत्तत्स्थितिसापेक्षत्वं तत्तदपराभवसापेक्षत्वं तत्तद्विकृतिसापेक्षत्वं तत्तत्कारणकार्यभावादिसापेक्षत्वं तत्तन्निमित्तोद्भावकादिसापेक्षत्वं तत्तद्विरोधवैपरीत्यादिनिरपेक्षत्वं तादात्म्यादिसापेक्षत्वं यावद्युक्तोपपन्नतासापेक्षतादि च, यत्किमपि यत्रोपयुक्तम् अनवरोधेऽवरोधे वा तत्तत्सर्वमपि तु मुखे ओष्ठयोर्नेत्रयोः पक्ष्मणोस्तथा जिह्वाया रसनाया वायोः प्राणस्य काचस्य प्रकाशस्याऽच्छताया आर्द्रतायाः प्रतिबिम्बाधानतादेश्चोपपन्नतासापेक्षता रचिता सर्वव्यवहाराणाम् अविघातार्थम्। अस्तु तु सर्वमर्थज्ञानं भाषालभ्यं तथापि भाषासु भिन्नताऽविघातार्थमिव, अस्ति तु सर्वं साक्षादिति, तथापि सापेक्षता विभिन्ना रचिता अविघातार्थम्,– मर्यादासुखार्थं जीवानाम्। अतः साक्षाद्विषयता व्याप्ता, सैवाऽनुसाक्षाद्विषयता, सदृशदृग्विषयता, व्यवहारदृग्विषयता, अर्थादिदृग्विषयता, व्यतिरेकदृग्विषयता, संभवद्दृग्विषयता, पारम्परिकदृग्विषयता, चैष्टिकदृग्विषयता प्रातिभासिकदृग्विषयता, आवस्थिकदृग्विषयता, व्यूहितदृग्विषयता मिश्रितदृग्विषयता, इत्येवं सापेक्षक्लृप्तता सृष्टिसापेक्षा तनुसापेक्षा समुपयुक्ता कृतेति। तत्तद्द्वाराणां करणानां व्यपाराणां निमित्तानां सहकारिणामपि साक्षाद्विषयता, न व्यभिचरति, साक्षात्त्वे सत्येव ततोऽन्यत्रोपयोजनात्, उपयोजनस्य निश्चयाऽधीनत्वात्, निश्चयस्याऽभ्यासाऽधीनत्वात्, अभ्यासस्य विरलप्रत्यक्षाधीनत्वादिति, स्फीतसाक्षाद्विषयता सर्वा परैर्निर्विकल्पा सा गण्यते, ततः सर्वं साक्षादिति न व्यभिचरति ॥ २२ ॥

**सृष्टिव्यवस्थार्थं भिन्नरचनाऽऽवश्यकत्वात् ॥**

**॥ सूत्रम्—२३ ॥**

अथ—एकस्मिँस्तत्त्वे विघातो नास्ति, सदैकरूपत्वात्, रूपद्वये सति विघातः, तत्रैकस्मिँस्तादात्म्यम्, एकत्वप्रहाणे तत्राऽनेकत्वं गौणाऽगौणं साक्षाद्रूपं व्यज्येत, संयोगो वा विभागः पार्थक्यम् अतादात्म्यं सम्पद्येत, 'एकोऽहं बहु स्यां प्रजायेये'-ति तदानीं तथैव संभूतम्, एकस्मिँस्तत्त्वे सर्जनमुपक्रान्तम्, उपक्रमणेऽनुपक्रमो वा स्थैर्यं न, क्रमणादेव विकासो विस्तारो विकारः परिणामः कार्यं कार्या-

न्तरं सृष्टं भवति, यदि सति कार्ये विषयविशीर्णतायां दृशोऽपि तथा स्थितिस्तदा दृशोऽपि सर्जनमुपक्रान्तम्, दृशि स्वप्रकाशे मूलाऽमूलमुख्यगौणादिभावः सान्निध्याऽसान्निध्यादिभावः प्रसक्तः, व्यवधाने पूर्वः पश्चात् अन्तरितम् अनन्तरितमिति सर्जनव्यवस्था लग्नाऽभवत्, एवं च सति सूर्यप्रकाशसर्जने सत्येव चक्षुःप्रकाशसर्जनमुपक्रान्तम्, चक्षुःप्रकाशसर्जने यत्र न सर्जनं तत्र विपरीतं स्यादप्रकाश इति, प्रकाशाऽनस्तित्वम् अन्धं तम इति, अचक्षुष्ट्वेऽन्धता, अप्रकाशेऽप्यन्धता, इति प्राप्तं रात्रिन्दिवं सर्जनन्यायात्सर्वेषां जाग्रदजाग्रदिति च स्वप्नः सुषुप्तिश्च, दर्शनम् अदर्शनं च, नित्यैका दृगपि सर्जनयोगे परिच्छिन्नोपचारिता सम्पन्ना, परिच्छेदे एव लौकिकता लग्ना, लोके लोकप्रकाशे लोकदृशि च यत्राऽपेक्षा तत्र सर्जनं निरपेक्षत्वे तावदसर्जनम्, सत्यामपि दृशि विरमितवृत्तिर्निद्राति दृक्सर्जनं निवर्तते, निवृत्तेऽपि दृक्सर्जने सत्यां बाह्यप्रवृत्तौ तत्राऽपेक्षितं दृक्सर्जनमावश्यकमुपतिष्ठते, अथ यस्मादुपतिष्ठते तन्मूला आत्मदृक् सा शाश्वती, तस्याः शाश्वतसाक्षात्कारोऽपि अवर्ज्यः, तया सिद्धं सर्वं साक्षादिति, एकं शाश्वतं साक्षात् यत्र तदा ततस्तत्राऽनेकमपि तद्वत् साक्षादेव, यदि सर्जने सावरणव्यवस्था तर्हि दृश्यपि सर्वस्य साक्षात्त्वेऽपि सर्जनयोगे सति पार्थक्ये न्यूना व्यवस्था न्यूनसाक्षाद्व्यवस्था, ततोऽपि ततोऽपि ततोऽपीति पाषाणपर्यन्तं पाषाणमध्ये तेजःसत्त्वेऽपि कर्णपृष्ठे प्रकाशचैतन्यसत्त्वेऽपि अतेजस्कत्वम् अप्रभावत्त्वम् असंज्ञानवत्त्वम् अदृक्त्वमारोप्यते, सत्यपि अर्भकाणामालोचने अनालोचनपरिगणनावत् आरोप्यते, अर्भकवत् अनर्भका अपि गृहजनाः सदृशोऽपि अदृश इव वर्तन्ते, तत् सृष्टिस्थितिमर्यादार्थं तथा वर्तन्ते, पश्यन्तोऽपि न पश्यन्ति, तत्र कारणं भिन्ना रचना, गृहकुटुम्बे माता पिता भ्राता भ्रातृजाया भगिनी भार्या पुत्रीत्याद्या भिन्ना व्यवस्था भिन्ना च व्यवहाररचना, व्यवस्थानां रचनानां चाऽपरिहेयत्वात् आवश्यकतया निर्वाह्यत्वात् शदृशामपि अदृक्त्वं स्वीकृतं योजितं भवति, तथा सर्वं साक्षादिति मूलत एव शाश्वतिकमपि व्यवस्थार्थम् अदृशमिति स्वीकारः, वस्तुतो न तथा, सर्वदृग्वत्त्वात्, तथा च सर्वं साक्षादिति सध्रीचीनम् ॥ २३ ॥

**चिदाकाशे सर्वाऽन्वयेऽपि शक्तिभिरसांकर्यात् ॥**

**॥ सूत्रम्—२४ ॥**

ब्रह्म स्वयं स्वद्रष्टृ सर्वद्रष्टृ, चिदाकाशो ब्रह्मचैतन्यं स्वद्रष्टृ सर्वद्रष्टृ च, स्वस्मिन्नेव स्वात्मकं स्वेतरत् दुग्धे नवनीतमिव समुपलभ्यं दुग्धशक्तितो नवनीतशक्तेर्नूतनतयोपलम्भवत् प्रागेकत्वादेवाऽनन्वितेऽपि व्यवस्थानेऽनेकत्वाक्रमणेऽन्वितत्वव्यवस्थानं, स्वात्मका एव सर्वे स्वान्विता भवन्ति, सत्त्वं चित्त्वमानन्दत्वं च ब्रह्मणि आत्मनि एकस्मिन्नेवाऽनेकेषामन्वयित्वम्, सदेव ब्रह्म चित् नित्यज्ञानं तदेव नित्यज्ञानमानन्दं श्रुतिमालम्ब्याऽस्मद्भाषया त्रित्वोपचारः, प्रकृतावेकस्यां सत्त्वरजस्तमसां साम्यावस्थाया मते त्रित्वोपचारः, गुणवत्त्वे तु विशिष्टव्यवहारः, विशेषणभेदेऽपि विशेष्यभेदाऽभावात्, व्यवहारस्तूपचारः सारल्यार्थः । एवं चिदाकाशादान्तराकाशस्ततो भूताकाशस्ततो घटाकाशादिः कोशाकाशादिश्च, स एवैकश्चिदाकाशो द्रव्यं प्रकाशश्च, प्रकाशप्रभावादेवाऽऽकाराऽऽकर्षणादि आकारानुकारादि, ब्रह्माकाश ईश्वराकाशः शुद्धसत्त्वाकाशो मलिनाकाशो भूताकाशो हृदाकाशादिश्च, आकाश एक एव, अवस्थाः स्वोद्भाव्यद्रव्यान्तरयोगजाः, चिदाकाश आनन्दगुणकः स एवैश्वर्यगुणकः शुद्धसत्त्वगुणकः शब्दगुणकोऽभ्रादिमत्तयाऽपि प्रतीयते नीलादिमत्तयाऽपि प्रतीयते, अप्रतिघाततयाऽपि प्रतीयते, वायुरच्छिद्रपात्रभृतः पात्रेण सह याति चन्द्रादिलोकयाने, आकाशोऽपि वाय्वन्वितः पात्रे पात्रपरिच्छिन्नः खण्डाकाशः सन् लोकान्तरे याति, पात्रोद्घाटने वायुना सह स आकाशो निर्याति तत्रत्यवाय्वन्वित आकाश अन्तः प्रतिष्ठति, नेत्राऽग्राह्यत्वात् स्पर्शाऽभावात् सः खण्डाकाशो निःसृतो महदाकाशे मिलितो महाकाशखण्डश्च पात्रे प्रविष्ट एवाऽपि न लक्ष्यते, अशक्तत्वात्, योगिनां तु 'श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम्'. 'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानमि'ति आकाशशब्दोऽवकाशोऽर्थोऽवकाश-

प्रत्ययस्तेषां संसर्गः स्वरूपाणि धर्माश्चेति तत्र तत्र संयमात् सर्वेषां भूतानां शरीरधारिणां या या वाग् रुता भवति तद्रुतार्थादिसाक्षात्कारो भवतीति, हृदयाकाशेऽप्येवं सुषुम्णाकुहूपिंगलेडादिनाड्यवकाशादावप्येवं सृष्टित्वादेव सांकर्यं तत्र तत्राऽसंकरं तत्त्वं परिगृह्य धारणया ध्यानेन समाधिना सर्वार्थज्ञानं साक्षात्कारो भवति, असांकर्यं संकरितानां ग्राह्यं तत्र ग्राहिकाः शक्तयोऽपेक्ष्यन्ते, ता अपि चिदाकाशादावन्वितपदार्थानां योगिग्राह्या भवन्ति साक्षात्कार्या भवन्ति, ततः असांकर्यं पृथक्त्वता गृह्यते प्रकाशेन दृशा गृह्यते असांकर्यकरणशक्तिमतश्चेतनस्य योगिनः क्षीरनीरविवेकशक्तिशीलहंसस्येव पृथगपि तत्त्वं व्यूहितमपि पृथगेव स्वरूपतो भातं यथा यथाऽधिकं भातं भवति तथा तथा साक्षात्कृतं भवत्येवेति न्यायेन 'सर्वं साक्षादि'ति सुष्ठूच्यतेऽत्र साक्षात्कारदर्शने परिशोधितम्। अन्वयेऽपि असांकर्यात् स्वरूपाणां साक्षाद्दर्शनमिति ॥ २४ ॥

**नित्यविज्ञानाऽभेदे सर्वतिरोधानात् ॥ सूत्रम्—२५ ॥**

अथ भवतु शाश्वतमेवैकरूपस्वरूपं निरपेक्षं नित्यविज्ञानं मुक्तिस्थानं ब्रह्म च मोक्षलोकः परब्रह्माऽन्वितं ब्रह्मैवैकं नित्यविज्ञानं नित्यप्रकाशं शाश्वतं स्वरूपं निरपेक्षं निरन्वयं केवलतादात्म्यान्वयं ब्रह्मलोक एव 'त्रिपादस्याऽमृतं दिवि' त्रिपादूर्ध्वमुदैत्पुरुषः' परमपुरुषस्य परब्रह्मणो ब्रह्मणो नित्यसाध्यमुक्तानां देवनां सर्वं हि साक्षात्, इदं सर्वमपि तदेव तदात्मकं तद्रूपं भवतु, न त्वाविद्यकं न तु मायिकं न तु प्राकृतिकवैकृतिकं न तु अण्वादिभौतिकं न तु शाक्तेयं न वा क्षणव्याप्यं न वा ज्ञानव्याप्यं न वा कर्मलभ्यं न वा जन्ममरणात्मकं न वा परिणामो विवर्तोऽवयवी संघातः प्रचयो वा प्रत्यक्षः परोक्ष इति विभिन्नं माऽस्तु, अनावश्यकत्वात्, एतदभावे एतच्छून्ये एतदनस्तित्वे एकनित्यविज्ञाने तत्त्वे साक्षादितरप्रत्यवस्थानमेव न स्यादिति शोभनः पन्थाः कथं विसृष्टोऽशोभनपथेन संसृष्टेनेति चेत्। तत्रोच्यते—**नित्येति**। रमणं प्रियमिति नियमः, स्वार्थं परार्थं वोभयमन्यतरद्वा रमणं प्रियम् , ब्रह्मणः आनन्दस्वरूपं प्रियं न त्वनानन्दं, समश्च समाधिः प्रियत्वे, 'श्रेयश्च प्रेयश्चेष्टम् , न त्वश्रेयोऽप्रेयश्च, 'स एकाकी न रमते द्वितीयमैच्छत्' लोकवत्तु लीलाकैवल्यम्' 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः। मात्रार्थं च भवार्थं च ह्यात्मने कल्पनाय च' 'न वैषम्यनैर्घृण्ये, सापेक्षत्वात्' कर्माऽपेक्षा हि चेतनानां योग्यतापेक्षा, यथायोग्यता रमणार्हता तथा रचना, किं वाऽऽनन्दातिव्यञ्जकतार्थमनानन्दाऽल्पानन्दादिप्रचुरतरं शाक्तेयं शिवब्रह्मरचितं, शक्तिमुक्तानिकाऽऽनन्दार्थं रचितम्, स्वांऽशानन्दार्थं स्वरचना, नित्यविज्ञानेन ब्रह्मणाऽभेदे सत्येव भेदरचना, स्वशक्तीनां स्वप्रकृतीनां भेदरचना। यदिच्छेन्न रचयामि, तर्हि न रचयेत्, सः स्वराड् भवति, यदिच्छेत् रचयामि, तर्हि रचयेत् परराड्भवति, 'भूतानि अस्याऽऽनन्दस्यैव मात्रामनुभवन्ति' सुखदुःखं जगत्, तर्हि असुखम् अदुःखम् अजगत् , अदुःखं नित्यसुखं तत् जगत् , अजगति नित्यविज्ञानात्मनां सत्त्वात्, जगति तु राजसतामसवेगानां मोहानां च सतृष्णानां दर्शनात् सत्त्वात् सुखार्थं दुःखाविर्भावबाहुल्यम्, कामनार्थं गार्हस्थ्यभारबाहुल्यमिति न परोक्षम् , तृप्तानां वीतरागाणां प्रतिलोमभावे योगे स्वरूपाऽवस्थाने ऊर्ध्वे ततोऽपि परदेवतायामर्पणे सकारणदुःखविगमे नित्यविज्ञाननित्यानन्दब्रह्मार्पणे सापेक्षाणां तिरोधानात्, भेदीयानां यावतां तिरोधानात्, अभेदीयस्य 'सोऽश्नुते सर्वान् कामान् सहब्रह्मणा विपश्चिता' 'अनन्तधा भवनात्' श्रौती व्यवस्थेयं, न काल्पनिकी, तत्र तत्र तथापि 'सर्वं साक्षादि'-ति न व्यभिचरति, साक्षाद्भोगार्थं रचनोद्भावनात्। अत्रेष्टस्यैव तत्राप्यावेदनात् तथा ध्रौव्यम् ॥ २५ ॥

**भेदेऽपि तदन्वये तथात्वाऽवर्ज्यत्वम् ॥ सूत्रम्—२६॥**

कृतं रचितं व्यवस्थितया क्लृप्तमपि भिन्नं स्वान्वितं भवति न त्वनन्वितम् , अनन्वितस्याऽशक्तस्याऽतत्त्वस्याऽरूपस्य शून्यस्य प्रवेशाऽनर्हत्वेन परिगणितत्वात् रूपं रूपं प्रतिरूपभवनस्यैव वर्णनात्, 'सच्च त्यच्चाऽभवदि' त्यन्वयस्य कथनात्, यस्याऽक्षरं शरीरं यस्यात्मा शरीरं यस्य विज्ञानं शरीरं यस्याऽऽकाशादि शरीरं, यस्य नियाम्यं सर्वं, योऽन्तःप्रविष्टः सन्नियमयति, इति तस्य नियामकत्वं भिन्नेष्वन्वि-

तत्वेन 'स त आत्मा, तत्त्वमसी'ति तथात्वस्य निजस्य नित्यविज्ञानस्य सर्वदृक्त्वस्याऽवर्ज्यत्वं तत्तते, स हि सर्वद्रष्टा'। शरीरतिरोधानेऽपि तस्याऽतिरोधानात् एकत्राऽनेकतत्त्वात्मकशरीरसत्त्वात् अतिरोधानत्वं चोपपद्यते, नित्यविज्ञानदृक्त्वमपि अवर्ज्यं भवति, आश्रितेष्वपि दृक्प्रदानं तस्य संभवति, अन्यथाकर्तृत्व-शक्तिमत्त्वात्, अविद्ययाऽज्ञानेनाऽन्धतमसेनाऽपश्ये-नाऽपि पश्येत्। क्षीणचक्षुर्वृत्तिजनाः काचादिसाहा-य्येन अदृशा अन्धेनापि अधिकं पश्यन्ति, परमात्मा स्वात्मशक्तिमाययाऽपि सत्त्वात्मिकया पश्येत्, ईश्वराः शुद्धसत्त्वाः शुद्धसत्त्वप्रकाशेन पश्यन्ति, जडप्रदीप-प्रकाशेन सर्वे पश्यन्ति, 'अहमिदं कर्तुं शक्त' इति साक्षिणा शक्तिद्वारेण सर्वे कार्यं भाव्यपि पश्यन्ति प्रस्थानाऽऽरूढाश्च जायन्ते, पश्यन्तः स्वाप्ने वा जाग्रति मानसे आकारे रचिते सति ततः सर्वोऽपि जन-स्तन्निष्पत्तये प्रवर्तते, कारणव्यापारैर्व्यापृता भवन्ति, मानसमाकारं बहिरुपस्थापयन्ति सर्वदृग्विषयं निर्वर्तयन्ति, अतः सर्वं साक्षादित्यवर्ज्जम्, विशेषत-स्तत्त्वात्, तव वा ममेति विवादोऽस्थानहतः। तव मम विशिष्टस्य तथात्वेऽव्यभिचारात्, तत्प्रदत्तदृष्ट्या च तव ममापि सर्वं प्रत्यक्षं न व्यभिचरति, व्याप्य-दृष्टेर्व्यापकदृष्ट्या केवलान्वयित्वात्। दृशां तादात्म्यं प्रवाहितं विद्युद्दीपतदात्मकतावत्, प्रकाशानां समभि-हारो मेलनम् अन्तर्भावनं तदात्मकत्वं च स्वभावा-द्वर्तते- सूक्ष्मविद्युतो विशालविद्युति समाकर्षणेन तादात्म्यं, शारीरविद्युतो यान्त्रिकविद्युदाकर्षणमैक्यं च प्रसिद्धम्, शारीरदृशां नित्यव्यापकदृगन्तर्गतत्वं तच्छक्त्या दृष्टियुक्तत्वं च भवति, विकासप्रदत्वं ज्ञानस्य स्वभावः, परिच्छिन्ने भिन्नेऽपि शिष्यज्ञाने शिक्षकज्ञानस्याऽन्वये सति शिक्षकज्ञानदृग्दृश्यदृग्दृश्य-त्वं शिष्यदृश्ये भवति शिक्षकदृशा पश्यति, एवं च आत्मनां दर्शनं सर्वं साक्षादिति परात्मप्रहितम् अवर्ज्यं निष्पद्यते, ब्रह्मदृष्ट्या पश्यामीति निर्विकल्प-योगिजनाऽनुसन्धानं योगिप्रक्रियासु ब्रह्मसाक्षात्कारो-पास्तिप्रक्रियासु च व्यासादिभिर्लिखितम्। 'दिव्यं ददामि ते चक्षु'रिति श्रीकृष्णनारायणप्रदत्तस्वीय-शक्तिसंभृच्चक्षुषाऽर्जुनो नारायणस्यैश्वरं योगं पश्यन् सर्वं साक्षात्कृतवानिति ॥ २६ ॥

तन्मूलकविभक्तानाम् ऐक्यप्रावण्ये प्रामाणिकत्वात् ॥

**॥ सूत्रम्—२७ ॥**

अनाद्यनन्तं साक्षाद्दृष्टृ नित्यविज्ञानमानन्दघनं स्वप्रकाशं सदेव परंब्रह्म स्वप्रमाणं स्वप्रामाणिकं सर्वमूलम् 'सन्मूलाः सौम्येमाः सर्वा प्रजाः सदायतनाः सत्प्रतिष्ठाः' सर्वसत्ताशक्तिकब्रह्ममूलिका एताः सृष्टयः सतो ब्रह्मतो विभक्ताः श्रुतिवाक्यं श्रावण-व्यवहारसाक्षात्कारफलकं स्ववर्ण्यपरमात्मनि स्वय-मुपासनां कुर्वत्प्रमाणं, भगवतो विभक्तानां पदार्थानां सत्त्वेऽपि तदेवप्रमाणं, यद् यस्मादुद्भवति तत् ततोऽ-विभक्तं कार्पासस्य रूपं श्वैत्यमिव, ब्रह्मतोऽविभक्तं विशिष्टं सर्वं ब्रह्म साक्षाच्छक्तं स्वप्रमाणम्। अथ घटाकारो मृदाकाराद्विभक्तो मृदाकारमूलकोऽपि मृदाकार एव स बुध्नाकारः, विभक्त इति तूपचार-मात्रम्, घटे सम्पन्ने न मृत् निवर्तते घट एव मृत् मृदेव घटः, जलभरणार्थं मृत् घटः, आवरणार्थं मृत् भित्तिः, भोजनार्था मृत् कणाः धान्यानि, अविभक्तेऽपि विभक्तव्यवहार उपचर्यते, अहं मानवो मम वक्षो विशालमितिवत्, अंशांऽशिनोर्वास्तवविभागाऽभावात्, यद् वक्षः तत् अहम्, करोऽहं पादोऽहमुदरमहं शिरोहं समस्ततनुरहम्, तथापि विशिष्टोऽहम्, चेतनस्तु पृथग्विभक्त इति, जडचेतनयोर्विभागः प्रत्यक्षः, जडं प्रत्यक्षं भेदः प्रत्यक्षः प्रतियोगी मानस-प्रत्यक्षः, मानसी वृत्तिरेव चाक्षुषी, तथा गृह्यतेऽतो मूलतोऽविभक्तानामपि पार्थिवानां पदार्थानां पृथिवी-रूपाणां भिन्नाकृतीनां तत्रोपचरितविभक्तत्ववतां वस्तुतस्त्वैक्यात् ऐक्यप्रावण्यमेव वर्तते बीजानि अंकुराः पत्राणि ग्रन्थयः काण्डा नालाः शाखा-प्रशाखोपशाखाप्रान्ताः पुष्पाणि फलानि पुटकानि त्वचो नाडिकास्तन्तवो रोमाणि कण्टकाः स्तम्बाः स्कन्धाः गर्भस्थाणवो रसनालिकाः कन्दा उपकन्दा जटाः शलाका अंकुराऽक्षिकुक्षयश्चामरा गंजनाः शिम्ब्यः काण्डिकाः संपुटाः पक्षाः नखाः पादानि कोशाः दुग्धानि शाकरसाश्चर्माणि गुच्छाः कलिकाः छद्मानि शृंगाणि कुर्वद्रूपाणि भवद्रूपाणि ऐन्धन-रूपाणि तुषा पलालः कडङ्गरो बुसम् मञ्जरी शुक इत्यादीनि हि पृथिवीतत्त्वानि भस्मानि मृदन्तानि

मृदेव विभक्तोपचरिता अपि तेऽविभक्ताः पार्थिवैक्यप्रवणाः पृथिवीत्वेन प्रामाणिकाः, सर्वेऽप्याकारा ग्राह्या धार्या भोग्या बाह्या आन्तरा मानसा वार्तया वा सर्वेऽपि साक्षाच्चिच्चैतन्यविषया भवन्ति ते साक्षात्सिद्धा आलोक्यन्ते, ऐकप्रावण्यम् एकरसात्मकत्वम् एकदृग्ग्राह्यत्वं रूपरूपिणोरिव रूपरूप्यन्वयधर्मकर्मादीनां क्षरत्तारकायामिव सगगनदिक्समयान्वितायां धावल्यगोलकतत्संसर्गतद्धर्मतत्पतनतद्विशीर्णताद्यन्वितायां सर्वव्यूहसाक्षात्कारोऽन्धकारोपयुक्तश्च भवति, इत्येवम् आश्रयैकप्रावण्यं विशेष्यैकप्रावण्यं तत्त्वैक्यप्रावण्यं भावैकप्रावण्यम् आभासैकप्रावण्यं सर्वसाक्षात्काराणां तत्रोपपन्नानामेकसाक्षात्त्वं प्रतीयते इति सर्वं साक्षाद् भवति ॥ २७ ॥

**जडे वा चेतने यथामतं चैतन्यात् ॥ सूत्रम्—२८ ॥**

चैतन्यं विना साक्षात्कारो न भवतीति साक्षात्कारचैतन्यव्याप्तिः सर्वतत्त्वेषु भावाऽभावात्मकेषु भवत्येव। व्यवहारे विलोक्यते पाषाणो जडः, पृथिवीगर्भखनिस्थाश्छिन्ना अपि पाषाणा विवरेषु वर्धन्ते पक्वा भवन्ति चिरेण खनयोऽपि समतलाः सभूतला भवन्ति विविधा मृत्स्तरा दिव्याः पाषाणाः सम्पद्यन्ते विविधा धातवः सम्पद्यन्ते शिलाजिताख्यो रसो गैरिकाद्यास्ताम्रलोहाद्याः स्वर्णवालुका हीरकाद्या मणयश्चापि पक्वरूपा उपलभ्यन्तेऽतस्तत्र पृथिवीदेवतात्मा पृथिव्यधिकृतश्चेतनः परमपुरुषयोजितश्चेतनो वर्तते जले वरुणात्मा तेजसि वह्न्यात्मा वायौ मरुदात्मा गगने चिदात्मा विकृतिषु भिन्नात्मानो मायायां तदधिष्ठात्री तदधिमन्त्री परमेशमहाशक्तिश्चिच्चैतन्याचेतना मुक्तरूपा वा परमेशनियुक्ता भवत्येव, कुण्डदेवता स्थण्डिलदेवता स्तम्भदेवताः शाखादेवास्तोरणदेवा आयुधदेवता वास्तुदेवता भुवनदेवता आधारमहाधारशिरःस्तम्भतिरश्चीनदेवता भारधृग्देवता अन्नदेवा अरण्यदेवा गोपुरदेवा ध्वजतद्दण्डादिदेवाः पर्वताऽद्रिनदीसरोवरदेवताः वनदेव्यः प्रस्थदेव्यः सीमादेव्यः प्रसाददेवताः शस्त्राऽस्त्रादिदेवताः रणदेव्य उद्यानदेव्यो दिग्देवता योगिन्यो मुहूर्तादिदेवता युगादिदेवताः दिनरात्रिसन्ध्यादिदेवताः क्षेत्रपालाः कृषिसाधनसीतासीरादिदेवाः खलक्षेत्रादिदेवताः सागरदेवता हिमालयादिदेवाः गृहादिदेवाः श्मशानादिदेवा मन्त्रदेवा यन्त्रदेवता इत्येवं चेतनाधिष्ठातारं विना किमपि जडं न शिष्यते, अन्ततो व्यापकचैतन्यं सूक्ष्मस्वेदजाऽण्डजाऽणुकणकणिशजरायुजबीजद्विदलमूलतन्तुस्तम्बादिष्वपि तत्तदधिष्ठातृतया वर्तते, जलाऽवनिक्लेदेऽसंख्यजन्तवो जायन्ते रमन्ते नश्यन्ति चेति, जडेषु तत्त्वेषु यथादृष्टिपरिगणितेषु चेतनेषु तत्त्वेषु प्राणचेष्टादिमत्तया गणितेषु सञ्चारितत्त्वेषु चापि तथा कन्दादिष्वपि सरससदुग्धसाऽर्द्रभावसविकारसपरिणामादितत्त्वेष्वपि यथाभासं चैतान्यांशान्विततया गणितेषु तत्र तत्र चेतनेष्वपि यथा यैर्मतं तथा तेषां दृष्ट्या मत्या चैतन्यस्याऽस्तित्वमस्त्येव, मूर्छितं वा मुग्धं, जडीभूतम् वाऽज्ञम्, अक्रियम् वाऽचेष्टम्, असंज्ञं वा चैतन्यं तत्तत् जीवनसूक्ष्मशक्त्यंशयुक्तं भवत्येवेति, तत्र तत्र सर्वत्र यथावस्था दृक् तत्तच्चैतन्यात्मिका ससंज्ञा भवतीति, मूर्छायां सुषुप्तौ जडीभावेऽपि चिच्चैतन्यांऽशः स्वसाक्षाद्वृत्तिकसञ्चरणलीनीभाव इव जलानां करकाणां पाषाणानां श्वेतहिमशिलानां सञ्चरणलीनीभाव इव भवतीति, सर्वं यथाकथञ्चित् साक्षाद्विषयं भवतीति ॥ २८ ॥

**साक्षिचैतन्यखनेरेव सर्वप्रमाणप्रचारात् ॥**
**॥ सूत्रम्—२९ ॥**

अथाऽऽत्मा हि सर्वसम्मतश्चेतनश्चिद्रूपो द्रव्यं ज्ञानं ज्ञाता ज्ञानभृत्, ज्ञानं चित् चैतन्यमाविर्भावं जननं वोपलभते प्रसरणमाप्नोति, तिरोभावं लयं नाशं भिन्नाविभिन्नावस्थां लभते, विषयग्राहकं सविषयं विषयाकारं ज्ञानं सप्रकाशं स्वप्रकाशं परप्रकाशकं चेति; तत्कथं सर्वत्र स्वतःप्रमाणं सर्वथा प्रमाणं सर्वदा प्रमाणं सर्वप्रमाणं सर्वप्रमात्मकं सर्वप्रामाण्यनिरूपकं चाऽप्रमाणतां भ्रमं विषयवैधुर्यं विपर्ययरूपत्वं विकल्परूपत्वं मुग्धत्वम् अनिश्चयत्वं सन्दिग्धत्वं बाध्यत्वं तत्तदंशाऽनवग्राहकत्वं विमर्शितेऽपि विषये विशयभावं प्राप्नोतीति, दर्शनैरपि एतद्विधा निरुपिता, 'संशयविपर्ययतर्काः' 'विपर्ययविकल्पौ' 'अज्ञानाऽविद्यामिथ्याज्ञानानि' 'भ्रान्तिमोहाऽऽभासाः' 'निर्विकल्पाऽऽहार्याऽयथार्थानि' 'निरालम्बनकल्पनाऽस्फुटानि' चेति ॥ अत्रोच्यते ।—आत्मचित् नित्य-

स्वरूपा स्वप्रकाशपरप्रकाशिका शाश्वती न कदाचित् संशयदादिरूपतां लभते, नित्यज्ञानस्यैकस्वरूपत्वात् तत्रेतरभावत्वाऽसंभवात्, परमात्मा नियामको ब्रह्म साक्षि चात्मनि नित्यं स्थितम् 'अनशनन्नन्योऽभिचाकशीति' न तत्रापि संशयादिप्रसंगः,साक्षिदृक् सा सर्वज्ञा सर्वप्रकाशा स्वप्रकाशा प्रमा चिति आत्मनि सर्वप्रकाशिका भवतीति तत्र न संशयादिप्रसंगः। अथ साक्षिणो ज्ञानशक्तिश्चिति आत्मनि प्रसरत्स्वभावा निहिता, सा देहिनोऽन्तःकरणानि बाह्यकरणानि प्रति प्रसरत्स्वभावा व्याप्नोति, करणाधारा करणात्मकाधाराधीनभावा करणसन्निकृष्टविषयग्रहणनिसर्गिणी सम्पद्यते, आदर्शस्य सन्निधिगतग्रहणदर्शनकारकत्वं स्वच्छद्रव्यत्वात् इवेन्द्रियवृत्तीनां सन्निकृष्टविषयग्राहकत्वमपि नवं नवं सम्पद्यते, स्वप्रकाशे स्वग्राहके परप्रकाशकेऽपि गोलकाऽधीनविषयाधीनप्रकाशकत्वम् अयथावस्थितविषययावत्वाऽयावत्वप्रसरणवत्त्वादि नूतनं नूतनं सम्पद्यते, तेन दर्शनैः संशयाद्या लोकदृष्टया लोकशिक्षणार्थं निरूपिताः, उपचरितास्ते, वस्तुतश्चित्स्वरूपे न सन्ति। अतः साक्षिणो ब्रह्मणो नित्यस्वप्रकाशदृक्स्वात्मत्वनेरेव स्वप्रकाशप्रमात्मकदृशां प्रसरणात् सर्वदृशां प्रमाणत्वं प्रामाणिकत्वं प्रमात्वं यथार्थत्वं विषयग्राहकत्वं यथावस्थितवस्तुविषयकत्वं सर्वसाक्षात्कारस्वरूपत्वं स्वस्वरूपशाश्वतं नित्यात्मदृशि अन्तर्बहिर्व्याप्ताऽपि न विजहाति, अतः संशयादि बाह्यादिसापेक्षोपचारमात्रमिति ॥ २९ ॥

**अत एव तदग्रेऽतथात्वस्याऽप्रचारात् ॥ सूत्रम्–३०॥**

स्वप्रकाशस्वयम्प्रमाणप्रमात्वाद्यात्मकत्वादेव तदात्मकहेतोः निसर्गहेतुतः, स्वप्रकाशचिदग्रे स्वप्रकाशत्वप्रतितर्काद्युपस्थाने सत्यपि कल्पितवृतावाक्षेपित्वप्रतितर्काद्युपस्थापितायां सत्यामपि कल्पितया तथा स्वकायामुपस्थापितायां सत्यामपि कल्पितया तथा स्वमात्रप्रकाशिकया पराधीनया मानसाऽनवधानदोषसंकरितया, चिच्चैतन्ये स्वप्रकाशे, अतथात्वस्य अस्वप्रकाशतादेः संशयादिविषयत्वादेः परब्रह्मणि ब्रह्मणि मुक्तेषु नित्यसाक्षाज्ज्ञानेषु तद्दृक्षु, अप्रचारात् अव्यापनात् साधनार्थम् अचिरवर्तिन्या अशक्तत्वात्, स्वनिर्णयेऽप्यसमर्थायाः संकरिततन्वाः शुद्धस्वरूपमवगन्तुमप्रचारात्, प्रचारे वा स्वस्यामेव विश्रामात्' अन्यत्र गतौ लयोन्मुखाया मूर्छायां तदकरणात्। अथ तर्हि सर्वेषां ज्ञानानां सर्वसाक्षात्कारगोचरित्वं व्याहन्येत, संशयादीनां सत्त्वात् इति चेन्न। तत्र तत्र वस्तुस्थित्या स्वप्रकाशदृक्त्वस्य सत्ख्यातित्वस्य ध्रौव्यात्, तथाहि—रज्ज्वां सर्पज्ञानस्य याथार्थ्यं रज्जुसर्पावयवानां पार्थिवतया भिन्नकाले भिन्नपदार्थारम्भकतया दोषसहकृताऽवयवैः क्षणिकसर्पोत्पादात् तेन भयजननात् सर्पः सन्निति दृग्भवति॥ मरुमरीचिकासु किरणैः सह भूमेराकृष्टजलावयवजन्यजलस्य यानं सदिति दृग्भवति॥ शुक्तिरजतभाने विरलानां रजतावयवानां पार्थिवानां विरलतेजोभागानां च सत्त्वात् तज्जन्यं विरलं रजतं सदिति दृग्विपदम्॥ स्वाप्नपदार्थानां संस्कारसहकृतधर्मादिजनितानां तदानींमात्रभोग्यतया भानात् तद्दृग् सती॥ रंगे रजतमित्यत्र मीमांसकानामपि बहिर्दृक् आन्तरी स्मृतिर्दृक् सत्या॥ सांख्यानां पौरुषेयो बोधः फलं प्रमा॥ क्षणिकवादिनां सर्वं क्षणिकं ज्ञानं ज्ञानमिति दृक् सर्वा सर्वविषया सहोपलम्भनियमिता सती॥ अद्वैतिनां वृत्तिव्याप्तिर्ब्रह्मात्मनि स्वस्मिन् साक्षात्कारिणी अंगीकृता दृक् सा प्रमा सति॥ दिग्भ्रमोऽपि एकस्यां दिशि कल्पितविदिशां व्यवहारात् तत्र विदिशः सत्त्वात् तावज्ज्ञप्तिः सती॥ संशये भावाऽभावयोः प्राधान्येन सा दृक् तद्विषयिणी सत्या॥ पुद्गलवादिनां सम्यग् ज्ञानं दृक् सती॥ स्फोटब्रह्मणि स्फोटगोचरा दृक् सती॥ विवर्ते अविद्योपादानकेऽपि तदानीं या दृक् सा साकारा सती॥ शैवानां स्वप्रकाशः शिवः शक्तियुक्तः सर्वात्मकः,तत्स्फूर्तिः चित् चैतन्या सर्वगोचरा दृक् सती॥ अन्यविशिष्टादिशैवानामपि शक्तिर्महाज्ञप्तिस्वरूपा दृक् शिवस्था सर्वगोचरा सती॥ शक्तिब्रह्मवादिनां सा ब्रह्मत्वादेव साक्षाद्दर्शिनी सत्या दृक्॥ कालीवादिनां महाकाली महाशक्तिश्चितिस्वरूपिणी सर्वसाक्षाद्दृग्रूपाऽतो विकल्पनास्वपि सा सती दृक्॥ भैरवीचक्रपराणामपि परब्रह्मैव परानन्ददृक् सत्स्वरूप एव सर्वत्र व्याप्तस्तस्य दृक् सती सा भैरवीदृक्॥ ब्रह्मात्मनः सर्वाः ज्ञप्तिसत्ताः,प्रातिभासिक्याद्याः सत्ता ब्रह्ममय्य इति सती दृक् औपाधिक्यपि सत्स्वस्वरूपाऽ-

व्यभिचारिणी ॥ नामभेदेऽपि ख्यातित्वेनैका ज्ञप्तिः ज्ञातृमूलिका स्वव्यापकप्रयोज्या स्वस्वरूपिसम्पोष्या स्वकारणाभिगामिनी च सा दृक् साकारा बाह्याकारा धार्याकारा आन्तराकारा भोग्याकारा कारणाकारा दृगाकारा ब्रह्मात्माकारा च सती दृगेव प्रचर्यमाणा भवति। तस्यां तदग्रे सर्वसाक्षित्वध्रौव्यात्, असाक्षात्त्वस्य अप्रचरणात् ॥ ३० ॥

**कृपया दिव्यदृष्टिलाभेऽपि तावत्कालं सार्वज्ञ्यम् ॥**

**सूत्रम्—३१ ॥**

अथ कपिलो मुनिरश्वशिरोनामकंराजानं दिव्यदृष्टिमन्तं कृत्वा नैजं लोकव्यापकरूपं दर्शयामास, अर्जुनं श्रीकृष्णनारायणो 'दिव्यं ददामि ते चक्षु'रिति दिव्यनेत्रं विधापयित्वा नैजं वैराजदर्शनं सर्वलोकमयं कारयामास, वामनो बलये वैराजदर्शनं ददौ, श्रीहरिर्ब्रह्मणे सृष्टिविज्ञानं ददौ, श्रीमन्नारायणो लक्ष्म्यै साक्षात्सार्वज्ञ्यं प्रददौ, भगवान् मार्कण्डेयाय प्रालेयविज्ञानं प्रददौ, इत्येते साक्षात्काराः भक्त्या कृपया दिव्यदृष्टिलाभेन भवन्ति, यावती कृपा तावती दिव्या दृष्टिः, यावत्प्रयोजनं तावद्दृष्ट्यवतरणम्, दृष्टिलाभः कृपापूर्वं न, कृपापूर्णत्वेऽपि ततो निवृत्तप्रयोजने सत्यपि न, अतो यावत्कृपा यावत्कालं दृशो दिव्यदृशो लाभः सार्वज्ञ्यं सर्वसाक्षात्कारो भवति। ब्रह्ममुक्तानां तु शाश्वतसाक्षात्कारो धनम्, ऐश्वर्यं दिव्यत्वम्, ब्रह्मलोकस्य धाम्नाम् ईश्वराणां सृष्टीनां ब्रह्मणां वेधसाम् अण्डानां च सामान्यविशेषसृष्टीनां सम्यग्दर्शनवत्त्वं सार्वज्ञ्यं सर्वसाक्षात्कारः कराऽऽमलकवत् प्रवर्तते, करतलस्थजलाञ्जलिसाक्षात्कार इव सः प्रवर्तते अनण्वाद्यवशेषः साक्षात्कारः प्रवर्तते, सूक्ष्मदशानि तत्त्वानि कारणात्मकानि तत्त्वानि समानावस्थात्मकानि तत्त्वानि लीनदशापन्नानि तत्त्वानि त्रिगुणसाम्यावस्थापर्यन्तानि 'तमः परे देवे एकीभवति'तावत्पर्यन्तानि तत्त्वानि, ब्रह्मपर्यन्तानि तत्त्वानि मोक्षीयतत्त्वानि साकारसगुणधामधामितत्त्वानि अमायिकात्मकानि निर्गुणनिराकाराणि स्वरूपसाकाराणि सन्ति तत्त्वानि परब्रह्मान्वितानि यावन्ति तत्त्वानि तद्योग्यदिव्यदृशः पश्यन्ति, परमेशस्य ब्रह्मणो मुक्तानामवताराणां नित्यदिव्यदृग्वत्त्वात् केवलान्वयिदृष्ट्या केवलान्वयिदर्शनम्, अन्येषां सार्वज्ञ्यं यथापेक्षं गतानां मुक्तानां तु उत्तरकालीनं सार्वज्ञ्यं निरवच्छिन्नं, गतिपूर्वं तु नासीदिति सर्वकालीयप्रवाहव्याप्तं न, भूतकालीनप्रवाहाऽव्याप्तत्वात्। इति शास्त्रेषु विज्ञैर्निर्णीतं भूतकालीनं नैतावताऽप्रत्यक्षम्, तत्पूर्वगतानां साक्षात्कारात्, तत्पूर्वतत्पूर्वतरतत्पूर्वतमानां 'यत्र पूर्वे नित्याः साध्या परमात्मसमानस्थितयो मुक्ता विराजन्ते' तेषां सर्वविधसाक्षात्कारवत्त्वात् सर्वं साक्षादिति सर्वथाऽव्याहतम्। मायाया नित्यायास्तमोमय्या अपि सर्वसाक्षात्कारकः सत्त्वप्रकर्षः शास्त्रदर्शितः, तस्मात् सत्त्वस्याऽपि प्रकाशकत्वमिति ॥ ३१ ॥

**अथाऽनुमेयोपि भवतु, न, तत्परिकरस्याऽनुसाक्षात्त्वात् ॥ ३२ ॥**

उपादानोपादेययोस्तादात्म्यात् उपादानसाक्षात्कारे उपादेयस्य साक्षात्त्वात्। अथ 'पर्वतो वह्निमान् धूमादि'ति तादृशस्थले वह्निश्चक्षुःसंयुक्तो न, द्रोणीषु चक्षुषोरगमनात्, वृत्तेश्च मध्योच्चदीर्घकूटादिनिरोधात्, व्याप्त्या धूमसाक्षात्कारे धूमकारणवह्नेरनुमानात्, इत्यनुमेयो भवतु वह्निः, क्वचित्सन्निकर्षे साक्षात्, असन्निकर्षे तु अनुमेय इति॥ तन्न॥ **तत्परिकरस्येति।** अनुमायाः परिकरः परामर्शो हेतुसाक्षात्कारः पर्वतसाक्षात्कारोऽन्वयसाक्षात्कारश्च। पर्वतः प्रत्यक्षः, तत्र धूमः प्रत्यक्षः, धूमलेखया धूमजनको वह्निरिति क्व दृष्टम्? महानसादाविति चेत्!, वह्निधूमतादात्म्यादि तत्र प्राग् दृष्टम्, वह्नित्वं दृष्टं च, तद्वह्नौ दृष्टमेव, तत् सर्वेषु वह्निष्वस्ति, अद्रिवह्निरद्रिसम्बन्धेन धूमोत्पादकत्वेन च भोग्याकार आत्मनि भुज्यते ज्ञानधारया दृश्यते च स एव मानसवृत्तिदृश्योऽनुसाक्षात्कारगोचर एव, भवताऽङ्गीकृते स्मरणे पिशंगाकारो ज्वालामालो धूमोत्पादको वह्निरेव महानसे चक्षुषा इव मानसे मनसा धीवृत्त्याऽऽन्तरदृशा दृश्यते, पर्वते वह्नेः संयोगो वह्नौ धूमसंयोगोऽपि सम्बन्धिप्रत्यक्षे सम्बन्धप्रत्यक्षात् उभयसंयोगी वह्निस्तत्राऽनुसाक्षाद्विषयो भवति, महानसीयवह्निस्वरूपो वह्निरेव हृदि आन्तरदृग्विषयो जात्या सामान्यविशेषो दृश्यते, दृक्प्रभा पर्वतवह्निधूमप्रमात्मिकाऽऽलोकरूपा

भवति, तत्र वह्निज्ञप्तौ नहि पर्वतो धूमश्च वर्ज्येते, अतो धूमोऽपि सदृशसाक्षात्त्वेन वह्निरनुसाक्षात्त्वेन पर्वतश्च साक्षात्त्वेन त्रिपिण्डा सान्वया सपरिकरा साक्षाज्ज्ञप्तिरूपा भवति सा। नहि कदाऽप्यदृष्टं साधनं साध्यमुद्देश्यं वा त्रिपिण्डप्रमाविषयं भवति, मेघवृष्टिपूराणि वीक्ष्य पश्चादन्यत्र प्रतिवर्षासु आन्तर-त्रिपिण्डाकाराऽवलोकनं बाह्यतादात्म्यान्वितं करोति, यज्ञशालास्वपि बाह्यसाक्षात्कारे सति आन्तरत्रि-पिण्डदर्शनं लभतेऽनुसाक्षात्कारं करोति, एकत्राऽन्वये दृष्टेऽलौकिकसन्निकर्षेण त एवाऽन्वया आन्तरदृशा पश्चाद्विलोक्यन्ते। पश्यन्तु अरौ दृष्टे नेत्रपिधाने सति अन्तर्दृश्यते पुनर्नेत्रेण पुनरान्तरेण पुनर्नेत्रेण पुनरान्तरेण चक्षुषा दृशा वारंवारमवलोक्यते, प्रातः-कार्यार्थं प्रयातस्याऽपशकुना रण्डा दृश्यते सा दिवसान्तमान्तरे वारंवारं दृश्यते साकारस्वरूपा, अतस्तत्र संस्कारश्चिच्चैतन्यं स्मरणं चाऽनुचिच्चैतन्यं साक्षात्कारात्मकं सविषयं भवति, तत्र परामर्शस्याऽनपेक्षणात्, अपेक्षणत्वेऽपि धूमपर्वतप्रत्यक्षतया वह्निर्मध्येऽवस्थितः आन्तरदृशा गृहीत एव पर्वतो वह्निमानिति विशिष्टसाक्षात्कारस्य गोचरः। इन्द्रिय-सन्निकृष्टा मानससाक्षात्कारगोचरीकृता एव हेतवः प्रयोज्यन्ते, नाऽसाक्षान्निश्चितो हेतुर्भवति, बहिः साक्षात् आन्तरमानससाक्षात् स्वाप्नसाक्षात् चिच्चेतन-साक्षात् ब्रह्मसाक्षिचैतन्यसाक्षात् एव पदार्थः अनुसाक्षाद्रूपतया गोचरो भवतीति। प्रत्यक्षकरणप्रत्यक्षद्वार-प्रत्यक्षफलप्रमाः सर्वे साक्षात्कारा एवेति ॥ ३२ ॥

**अपि च समधर्माऽनुयोगी उपमित इति चेन्न, साक्षाद्वृत्त्युद्भवात् ॥ सूत्रम् ॥ ३३ ॥**

गौतमेन उपमानं प्रमाणमुपमाप्रमाफलं वर्ण्यते प्रत्यक्षमूलकम् उपदेशमूलकं च, प्रत्यक्षो गोपिण्डः, गोसदृशो गवय इत्युपदेशः, गोसमानधर्मादिमत्त्वात् कथितो यः स एवाऽयं गवयः, गवयपदवाच्योऽयम्, मदीया गौरनेन सदृशी, इत्येवं वा गवयप्रमा साक्षाद्भवति, चाक्षुषोपयोगं विना न भवति, उभयत्र चाक्षुषम्, मानसं च प्रत्यक्षम्, शब्दस्तु प्रत्यक्षोत्तरम् अनुवादकः दृष्टा ये धर्मास्तेषां समानतयाऽन्यत्र मनसाऽऽकांक्षिता धार्याकारानुकारा अपि बुद्ध्या दृशात्मिकया आन्तःकरणिकया साक्षात्तयाऽऽलोचिता ये बुद्धिवृत्त्या उद्भाविताः ते च गवयसन्निकर्षे सति बाह्ये साक्षात्कृताः, महानदीसेत्वादिर्बुद्ध्या क्लृप्यते आलोच्यते आलोक्यते साक्षात्क्रियते सपरिकरः, ततो बहिः प्रतिकृतिः संरच्यते, ततः स्वरूपमारभ्यते, सर्वत्र बहिरान्तरं वा दर्शनं तदाकारनिर्णयात्मकं निश्चयात्मकं प्रोद्भाव्यते। ब्रह्मणा सृष्टिर्बुद्ध्याऽऽलोकिता ततः सा रचिता, कुम्भकाराद्याः पात्राणि बुद्ध्या संघट्टय तत आरचयन्ति मदादिना। लेखका विषयान् बुद्धिदृशि विमर्श्य लिखन्ति। शास्त्रचिन्तका इतिहासकारा नाट्यादिकुशला इतिकर्तव्यतां भावयित्वा रचयन्ति, याज्ञिका मन्त्रैरितिकर्तव्यतां बुद्धिदृशि वीक्ष्याऽनुगुणं कर्म कुर्वन्ति विगुणमपि दृशि बुद्धौ आन्तरे वीक्ष्यैव परिहरन्ति, विगुणानामाचार-विध्यभावात् आन्तरमेव दर्शनम्। अतः सदृशधर्मानुयोगी गवयो वा गवयसादृश्यानुयोगी गौर्वा प्रतियोगी निरूप्यो यः कोऽपि भवतु सः साक्षाद्बुद्ध्या निरूप्यो भवति, न ह्यन्धस्य जन्मान्धस्यैन्द्रियकसादृश्यमुपदिश्यते, ऐन्द्रियिकेऽपि स्पर्शादौ आलोचितमेव वह्न्यादिर्जलादिवोपदिश्यते, आन्तरदृशा तस्य तद्विधाकार-स्योद्भवनात्। विरुद्धधर्माध्यासादावपि जडे न चेष्टा चेतने नाऽचेष्टा शवे न ज्ञानवत्ता सचेतने ज्ञानवत्ता, ज्ञानेनाऽऽकांक्षा तया भोक्तुं साक्षात्कर्तुं यतते, आत्मदृशा साक्षात्त्वं तत्र, अगम्ये तु आन्तरसाक्षिदृशा क्लृप्तना पदार्थस्य तत्पदार्थमदृष्टमश्रुतमपि स्वप्ने पश्यति, तस्मात् सर्वं सदृशं सूक्ष्मं स्थूलम् असन्निकृष्टं सन्निकृष्टं वा वृत्तिगोचरं वृत्त्युद्भवं पुण्यादिभवं वा चैतन्योद्भूतं दृग्दृष्टमेव तत्र क्लृप्तेनाऽलंकारेणाऽऽकारशृङ्गारेण विविच्यते, अतोऽन्ततः पौरुषेयबोधीय-प्राक्स्थितवृत्त्युद्भवम् आत्मदृगात्मकसाक्षाद्वृत्तिग्राह्यं सदृशं भवतीति सर्वं साक्षात् सदृशसाक्षादिति ॥३३॥

**शाब्दिकं तु भिन्नं स्यात्, इति चेन्न, साक्षान्निश्चितेतत्त्वात् ॥ सूत्रम् —॥ ३४ ॥**

सर्वेऽपि देहिनः शब्देन प्रेर्यन्ते व्यवहार्यन्ते स्वयमपि वक्ता शब्देन व्यवहरति, शब्दस्य श्रावणं, तथा ततोऽर्थे शक्तिर्लक्षणा वा वृत्तिरूपा बुद्ध्याऽऽधीयते, सा, योग्यमर्थं निश्चाययति, अर्थाकारः आत्मदृशि

पौरुषेयबोधे चिच्चैतन्ये आन्तरे स्थले समुद्भूतो दृश्यते, बुद्धौ स्फोताकारता अवश्यं स्वाभाव्यात् समुद्भवनि, आकारं विना बुद्ध्यनवस्थानात्, स बोधः बाह्यप्रत्यक्षे प्रेरितेन शब्देन यद्वाऽऽन्तरेण क्लृप्तेनाऽऽकारेण प्रेरितो यो वाङ्मयस्तेन विस्तरेणोद्भवत्यतः पृथग्गण्यते प्रमा शाब्दिकैः, मूलं तु प्रत्यक्षमेव, वेदा अपि प्रत्यक्षद्रष्ट्रा उपदिष्टा आनुपूर्वीतयोच्चारिताः, तदर्थाननुवीक्ष्य स्मृतयः शास्त्राणि संहिता इतिहासा आगमा निगमास्तन्त्राणि रात्राणि पुराणानि च प्रवृत्तानि, तानि सर्वाणि समर्थप्रत्यक्षमूलकानि, परब्रह्मणा ब्रह्मणा मुक्तैरवनारैः ऋषिभिराचार्यैर्गुरुभिराप्तवृद्धैर्जनन्यादिभिः शिक्षकैः प्रयोजकैः परप्रेरणार्थं बाह्यान्तरान्यतरसाक्षाद्गोचरीकृता एव दृक्स्फूर्तिस्थिता एवोच्चार्य प्रयोज्यन्ते, अतः आन्तरसाक्षादर्थाकार एव शाब्दविषय आन्तरदृग्विषयः। शब्दः श्रूयते साक्षात्, शक्तिश्चिन्त्यते आलोच्यते मनसा, अर्थो दृश्यते दृशा, आकारो वीक्ष्यते वृत्त्याऽपि ध्यानेनाऽपि संयमेनाऽपि तत्रापि धारणया वृत्त्या धार्यते गम्यते वीक्ष्यते आन्तराकारः साक्षिणाऽपि ख्याप्यते स आकारः, अतो वीक्षणपूर्वकः शब्दव्यवहारः, पश्यन्ती वाणी चापि सूक्ष्मानर्थान् आत्मस्थान् वीक्ष्य मध्यमाकारांस्तानाकृष्य स्वयं नादध्वनिद्वारा स्फुटा वैखरी भवति, विमर्शेन विमृश्याऽर्थान् बिन्द्वाकारान् विरचय्य ततः स्थूलतां भजते वाणी सर्वदर्शिनी परास्वरूपा, दृष्टत्वात् परात्वं कल्पितत्त्वात्तु परात्वं विगुणं स्याच्चेत् भाषैव सा प्रतारणमयी आपद्येत, यथार्थो लोकाऽलोकव्यवहारो भज्येत, ऋषयः साक्षात्कृत्य दिव्यार्थान्मानवादौ योजयन्ति, वेददृष्टार्थान् वीक्षितानेव पुनरिन्द्रियं रीक्षणगोचरान् परार्थप्रयोजनकान् कुर्वन्ति, अतःपराभिमतायां शाब्दिक्यां प्रमायां योग्यताऽर्थगता वीक्षिताऽर्थगता, आकांक्षाऽन्वयनिर्धारणी अन्वयवीक्षणाऽनुगामिनी, आसत्तिः कर्णादिसमालोचनलब्धव्या, तात्पर्यं त्वान्तरवीक्षणे सति अभिप्रायात्मकं बुद्धिप्रयोज्यं साक्षिशिक्षितं चिच्चैतयदृष्टमेव तत्र तत्राऽर्थे ज्ञाप्यते, लक्षणाऽपि योग्याऽर्थघटितसम्बन्धावलम्बिनी निश्चितार्थपरायणा भवति, निश्चयो बाह्यो वाऽऽन्तरः साक्षात्काररूपः, अतः शाब्दिकं ज्ञानं प्रमा न साक्षात्कारभिन्नम्, सर्वथा सर्वत्राऽऽन्तरे वा बाह्ये साक्षात्कृतेऽर्थे शाब्दिकत्वव्यवहारख्यापनात्॥ ३४॥

**आपाद्यमानस्य पृथक्प्रमात्वं स्यादिति चेत्, तत्रापि तदालोचनात्॥ सूत्रम्--३५॥**

अथाऽर्थापत्तिः स्यात्प्रमान्तरम्, तत्करणं प्रमाणं च, आपत्तिलभ्याऽर्थो न साक्षाद्गोचरः, अर्थात् प्राप्त एव सः, प्रत्यक्षोत्तरं च शास्त्रयुक्त्युत्तरं च जायमानत्वात्। आपाद्यमानं रात्रिभोजनं प्रमाप्यते, केन?, दिवा न भुंक्ते—इत्यनेन, अत्र कालः परिच्छेद्यते, पीनः—इत्यनेन कारणमापाद्यते, देवदत्तो दृष्टो पीनो दिवसाऽभोजी चेति दर्शनमुभयम्, परिच्छिन्नं च गृह्यते। अथ पीनत्वे भोजनमेवेति क्व निश्चितम्?, शोफरुग्णस्य वातुलरुग्णस्य पीनत्वोपदर्शनात्, श्वयथूः शोथः मृतशवेऽपि प्रफुल्लता दिनत्रये धनञ्जयेन दृश्यते, तस्मादनैकान्तिकतेति चेन्न। जीवति पीनताया विलोकनेन निदर्शनात्, अरुग्णस्याऽत्र दृष्टान्तात्। अथ तर्हि दृष्टान्तो निश्चितश्चक्षुषा, स्वजने नीरुग्णे सुभोजनयोगे पीनता दृष्टा, 'वपुराख्याति भोजनमि'ति तु वपुष्पीनतास्वरूपभोजनस्य अदिवा दर्शनं दिवेव भवत्येव, सा कल्पना मानससाक्षात्काररूपा, यथा येन दिवाऽभोजनं वीक्ष्यते, स एव अदिवा भोजनं चक्षते, सहयोगात्, तर्हि सहयोगो दिवाऽदिवा अभोजनं भोजनं सर्वं प्रत्यक्षमेव, एवं प्रयोगान्तरमपि स्यात् 'अपीनो देवदत्तो रात्रावपि न भुंक्ते न च मरणमाप्नोति तत्र सन्ध्यांशे स्वल्पग्रासपानमात्रं ख्यायते, एषः मानससाक्षात्कारः व्यक्तिभोजनसमयसाक्षात्कारश्चानुवाद्यते साक्षादनुसाक्षात्त्वेन व्यवहारसाक्षात्कारो ह्यर्थसाक्षात्कारो वर्ण्यते—पीन इति, पीनत्वनिर्वचनं प्यायते—भोजनेन वर्ध्यते, भोजनरसवृद्धिमत्त्वं पीनत्वमिति, भोजनं तद्रसास्तत्पुष्टयश्च स्वदेहेऽपि दृष्टास्ततः रात्रिभोजनरसपुष्टितत्त्वानि प्रत्यक्षाणि तत्र न अर्थादाक्षेपः, किन्तु यत्र क्वापि साक्षात्कृतस्याऽनुसाक्षात्स्वरूपस्य 'दिनं नास्ति तर्हि रात्रिरस्ति साक्षात्' 'रात्रिस्तत्र न भवति, तर्हि प्रकाशो भवति साक्षात्' इत्येवं प्रत्यक्षदृष्टस्यैवाऽऽन्तरसाक्षात्कारो भवति तत्र, 'घटः' 'घटं पश्यामि'

'घटदर्शनं मानसे भाति' 'मानसाकारो घटाकारो यथावद् दृश्यते, अनुव्यवसायविशिष्टानुव्यवसायानां स्वरूपत एवाऽनुसाक्षात्कारो विशिष्टानुसाक्षात्कारोऽर्थतः साक्षात्कारो मानससाक्षात्कार एव तथाविधनाम्ना दर्शितः। अतः आपाद्यमानस्य साक्षादर्थस्यैव उभयतो बन्धात्मकार्थक्लृप्त्या निर्बन्धोऽर्थः मानसः साक्षाद्भवतीति, न पृथक्प्रमात्वं, किन्तु तत्राऽऽपातार्थवेदनमपि तदाकारालोचनरूपं साक्षिणा निरीक्षितम् आत्मना चित्तेन चिन्तितम् अहम्भावेनाऽवशेषस्य भागस्य गोचरीकृतोऽर्थश्चाक्षुषो निरूप्यते सन्निधानेऽसन्निधाने त्वनुसाक्षाद्वा व्यवहारार्थीकृतः सः नाऽन्यालोचनं तत्र, किंतु पीनत्वकारणस्य मानसदृशाऽऽलोचनात् साक्षादर्थ इति ॥ ३५ ॥

**अभावे दृष्टेऽनुपलब्धिः प्रमाणं स्वीकृतमिति न, अनुपलम्भसाक्षात्कारात् ॥ सूत्रम्—३६ ॥**

अथाऽभावो वस्तुनोऽसत्त्वम् अनुपस्थितिरवर्तमानताऽनस्तित्वम् अनुपलब्धिरप्राप्तिरिति वर्ण्यते नञ्पदवाच्यः शून्यमिति सर्वपर्यायरूपम् दार्शनिकैर्व्यवहारबलेन तत्त्वमंगीकृतं वाच्यं नञः। न केवल मंगीकृतं किन्तु यत्र यन्नास्ति तत्र तदभावो गृह्यते चक्षुषा, सन्निकर्षः संयुक्तविशेषणतादिर्बहुविधो यथा-पदार्थास्तथा। अरूपमपि। चक्षुषा गृह्यतेऽद्रव्यगुणाद्यपि अभावपदार्थश्चक्षुषा गृह्यते, गुणाद्यभावा इन्द्रियैर्गृह्यन्ते, तत्र तत्र यदि पदार्थो योग्यश्चाक्षुषादिगोचरस्तदा तदभावोऽपि योग्यतावलेन प्रतिद्वन्द्विन्या अयोग्यतायाा यत्र भासस्तत्र योग्यो घटो नास्तीति घटाभावो गृह्यते, अनुपलब्धिः उपलब्धिर्ग्रहणं साक्षात्प्राप्तिः घटस्याऽनुपलब्धिः, यत्र क्वापि उपलभ्यते साक्षात्क्रियते भावः, अत्र साक्षात्क्रियते तदभावः, तथा च उपलब्धि,, भावाऽभावयोः संयोगतदभावयोस्तन्तूनां वस्त्रभावे मध्ये मध्येऽस्ति, इति भावऽभावौ गृह्येते, अव्याप्यवृत्तीनां तथात्वेन, तथा चेन्द्रियैर्मनसाऽऽन्तरचक्षुषा बुद्धिवृत्त्या साक्षिवृत्त्या च भावाऽभावोभयग्रहणेऽनुपलब्धिर्न स्वतन्त्रं प्रमाणं स्वीकार्यम्, निर्वाहिका भवतु सा इन्द्रियाद्यधीना सा सहकारिणी भवतु। चाक्षुषादीनां कथञ्चिदपि यत्र न प्राप्तिस्तत्र स्वीकृतिः सफला स्यात्, परं त्वेवंविधा नास्त्येव, अतो योग्याऽभावग्रहणे योग्यकरणकृतसाक्षात्कारोऽनुसाक्षात्कारो। विसदृशसदृशसाक्षात्कारो व्यवहारसाक्षात्कारोऽर्थात्साक्षात्कारोऽसत्त्वसाक्षात्कारो मानसबौद्धपौरुषेयसाक्षिकृतसाक्षात्कारो वा तत्र वर्तते, यत्र प्रतियोगी नोपलभ्यते तत्रापि प्राप्तीच्छुकस्य प्रतियोग्याकारो मानसस्तूत्पन्नो वर्तते तद्दृशाऽनुपलब्धिस्थले प्रतियोग्यनुपलब्धिरसत्त्वं साक्षात्क्रियते, परमाणूनामपि तत्त्वज्ञानाऽवसरे सूक्ष्माकारो बद्धचते निष्पन्नाकारयोः परमाण्वोर्बुद्धौ तत्संयोगेन द्वित्वत्रित्वादिसंख्यया वा द्वचणुकस्वरूपनिस्पन्नता इत्यादि धीसाक्षात्कारो वृत्तिसमालोचनरूपो भवत्यान्तरस्तस्मात्, अनुपलम्भसाक्षात्कारादेव तत्र तत्र निर्वाहः, सूक्ष्मया दृष्टया दृश्यते इति ब्रह्मविद्वचवहारः, चक्षुर्निरपेक्षः सर्वोऽपि महायोगिमहासिद्ध-देवेश्वरादिव्यवहार आन्तरदृशा तत्त्वसाक्षात्कारात्मको भवति। समाधिमतां तु सर्वलोकसृष्टि-चतुरशीनिखनिशारीरसृष्टि-जडतत्त्वमायिकसृष्टि-मायापारब्रह्मसृष्टिचादि साक्षात्कारो भवति, इति आत्मचिच्चैतन्यसाक्षिदृशा तेषामस्माकं तु यथायथं दृशा साक्षात्त्वं यत्किमपिप्रकारकं भवतीति नाऽनुपलब्धिः पृथक्प्रमा ॥ ३६ ॥

**॥ संभवितमपि उत्प्रेक्ष्यते ततो द्वीक्षणे गतं भवति ॥**

**॥ सूत्रम्—३७ ॥**

सर्वेषां स्वजातिवृत्तान्तानुकूलः सम्भवो भवति, चक्रवर्तिनृपेश्वरे समागच्छति सति शतसहस्राधिराजकीयमानवानामागमनसंभवो भवत्येव, तथैव तस्य व्यूहख्यातेः, अतिझंझावातेऽतिवृष्टया च पक्ष्यादीनां विनाशसम्भवः, सुवृष्टौ सुपाकतासम्भवः, सति पतियोगे गर्भसंभवः, सति आकस्मिके उपद्रवे प्राणाभयसंभवः, सति सुविमर्शितोत्तरलेखने परीक्षोत्तीर्णतासंभवः, सत्यामतिवृद्धरुग्णतायां तनूत्यागसंभवः, सति शते गणिते तदन्त संख्यासंभवः, संभवोऽनेकविधः सति दुर्वाससि क्रुद्धे शापसंभवः, सति गुरौ प्रसन्ने आशीर्वादजपुण्यसंभवः, सति अपराधे दण्डसंभवः, सति सपुच्छायाः सशेखरायाा वा तारकाया उदये भूभूधरभूपतिभूजनताभयसंभवः, संभवाः सर्वे सामानाधिकरण्ये प्रागेव निश्चिते

ततो भवन्ति, समानाधिकरणनिश्चयः प्राग्दृशा कृतः, महोत्सवभोजने मिष्टान्नसंभवः, सर्वथा क्वचिद्दृष्टो भवति, सति विवाहोत्सवे शृंगारादिसंभवः, सति मरणे रोदनसंभवः, सति दुःस्वप्ने दुःखादिसंभवः, सति अपशकुने कार्याऽसिद्धिसंभवः, एते संभवाः पूर्वमन्यत्र साक्षात्कृता भवन्ति, ततः कल्प्यन्ते, तत्रापि साक्षाद्रूपाः कल्पना भवन्ति, एकांततः शतपर्यन्तेऽधीते व्यवहारे च नवाऽधिकनवतिपर्यन्तांऽकानां शतगर्भपतितता, शिक्ष्यते, सा बाह्या वा मानसी दृष्टिरूपाऽधीतिः, तज्जन्यः संभवो निर्णीत एवेति न पृथक्प्रमाणता, शते पञ्चाशदिति शिक्षणकाले एवांऽकाः रेखाभिः श्रोत्रेण चाऽवगतास्त एव वारंवारं संभाव्यन्ते, उत्प्रेक्ष्यन्ते ईक्ष्यन्ते आलोच्यन्ते विमृश्यन्ते चेति संभवत्साक्षात्कारोऽयम् ईक्षणात्मकः, अंशिनामंशसमूहसंभवात् अंशिसाक्षादालोचितैंऽशास्तत्र गता आलोच्यन्ते, आलोचिता अंशाः अंशिसमालोचनक्षणे पुनर्द्रागेव अंशतया चक्षुषा वा मानसदृशा अधीतिबोधाऽऽचरणप्रचारणविधिभिर्विलोक्यन्तेऽभ्यस्यन्ते विज्ञायन्तेऽनुव्यवसायीक्रियन्ते समूहप्रत्यक्षे तत्र प्रत्येकप्रत्यक्षस्य सत्त्वध्रौव्यात्। उत्प्रेक्षा ईक्षा ईक्षणेऽन्तर्गता भवति। यद् भवति तत्संभवति, यन्न भवति तन्न संभवति, भवति चाऽस्ति सन् पदार्थः, सन्निप्रतीतिविषयः सः, प्रतीतिश्च साक्षात्परीक्षणेन भवति, साक्षात्त्वं बाह्यं वा मानसं घटादौ स्वाप्नपदार्थादौ स्वर्गादावपि, आत्मीयं सुखादि, साक्षिवीक्ष्यं धर्मादि, अन्तर्यामिब्रह्मवीक्ष्यं कर्मतत्फलादि, परब्रह्मवीक्ष्यं संसारिपरिकरादि, तथा च संभवितं सर्वं संभवत्साक्षात्कारानुसाक्षात्काराद्यन्यतमं संभवत्साक्षात्कारपरिचेयं भवतीति।। असंभवोऽपि संभवत्साक्षात्कारगोचरः, एकशफवत्त्वस्य गवि अभावात्, एवमन्यत्राऽपि, असंभवोऽपि परीक्षितो भवतीति ।। ३७ ।।

**ऐतिहासिकं वृद्धोक्तमपि दर्शनमूलकं प्रवर्तते तत्तथा**
**।। सूत्रम्—३८ ।।**

'इति ह 'आसीदित्यूचुर्वृद्धाः'—इह वटे यक्षस्तिष्ठति, इह रैवताचले स्वर्णरसकुण्डो वर्तते, इह कुंकुमवापीक्षेत्रे लोमशो महर्षिर्विराजते, अयं सौराष्ट्रः आनर्तराजद्वारा मणिविकसितदेशः, अत्र सप्त द्वारिका आसन्, समुद्रो विश्वकर्मकृतां द्वारिकां प्लावयामास, इन्द्रद्युम्नः स्वर्गादागत्य नूतनां कीर्तिं कृत्वा स्वर्गं जगाम, तोण्डमान्नृपतिर्वाराहं भगवन्तं ददर्श, रुक्मांगदेन एकादशीव्रतं पालितं तेन मोहिनी वेधःपुत्री वेश्रातिथिदेवना कृता, एकोदशदाकृष्याऽन्योदरे संकर्षणः प्रावेशितः, शंकरजटांऽशजातो वीरभद्रो दक्षयज्ञं नाशयामास, हिमालयस्याऽऽत्मजा पार्वती, समुद्रस्याऽऽत्मजा लक्ष्मीः, पशुपालपुत्री गायत्री जाता, शंकरो दर्भशलाकया कर्तितलिंगोऽपि प्रतिष्ठया सलिंगोऽभूत्, वामनेन बलिः सुतले प्रावेशितः, गंगा ब्रह्मकमण्डलुतः आयाति, इन्द्रो वज्रेण विश्वरूपं जघान, वम्रीभिर्मुखदन्तैः कर्तितरज्जुकया धनु-कोट्या ऊर्ध्वोत्क्षेपवत्या विष्णुकन्धरं छिन्नम्, गौरीचर्मरूपया महाकाल्या सिंहवाहनया महिषासुरो हतः, भस्माऽसुरो निजमस्तके करतलस्थापनेन भस्मितः, ब्रह्माः पुनःपुनः तनूः प्रजहौ, ब्रह्मणाऽसंख्या रुद्रा विनाशिता, समुद्रमथनादनेकानि रत्नानि निर्ययुः, राहोरमृतांऽशयोगात् कर्तितेऽपि शिरसि चिरञ्जीविता ग्रहणग्रासनिमित्तता च, चन्द्रमसि देवाः सन्ति अथ प्रजाः न सन्ति, क्षीरसागरे विष्णुर्निवसति,पर्वताः सपक्षा आसन्, वसुन्धरा सप्तद्वीपा,ब्रह्माण्डं चतुर्दशभुवनान्वितम् प्रतिष्ठापितमूर्तिषु भगवद्वासः, विधिकर्मानुष्ठानेन पुण्योदयः, भक्त्या मोक्षः, नित्यो दिव्यो ब्रह्मलोकः, इत्येतानि सर्वाणि स्वरूपाणि रूपाणि वृत्तान्ताश्च कैश्चिदपि तत्कालीनैर्वृद्धैरवलोकिताः, ततस्तैः कथिता, प्रजासु प्रवृत्ताश्च वार्ताः, इदानीमपि वृद्धावलोकितं गगनयानेन ग्रहेषु गमनं लोके प्रवर्तते, एतत्संभावनातो बलवत्साक्षात्कृतं दर्शनमूलकम् ऐतिह्यं यथार्थवादकं तत् ऐतिह्यं तथा साक्षान्मूलकत्वात् प्रवर्तते मानससाक्षात्कारात्मकं वाऽऽत्मसाक्षिसाक्षात्कारात्मकं प्रवर्तते, रासायनशास्त्राऽभ्यासिनस्तु ऐतिह्यं परम्परया साक्षात्कुर्वन्ति अधीत्य च साक्षात्प्रवर्तन्ते मन्वते मानयन्ति प्रावर्तयन्त्यपि दर्शयन्त्यपि तत्सिद्धिं साक्षाद्रूपाम्, यन्मानसे आलोच्यन्ते तद् बहिः साक्षात्कर्तुं यतन्ते, क्लृप्तं सम्पन्नं च दर्शयन्त्यपि, इत्याप्तसन्ततिसम्प्राप्तं सर्वं

साक्षात्पारम्परिकसाक्षादिति, विमानाद्याविष्कार ऐतिहासिकः साक्षादिति ॥ ३८ ॥

**बहुधा चेष्टाभिर्वर्त्यते तदपि साक्षादेव ॥सूत्रम्–३९॥**

मूकाः प्राणिनः विरावाऽऽगर्जनरम्भणादिमात्रपराः श्रृगालसिंहधेन्वाद्याः न प्रायो भाषाधाराः किन्तु चेष्टाधारास्तेषां शरीरे विधांऽगेषु विविधाश्चेष्टा मिथः संज्ञानकारिण्यो जायन्ते, मानवा अपि हस्ति-वाज्युष्ट्रवृषभादिवाहनानाम् अंकुशरज्ज्वादि संज्ञान-विशेषव्यापारैर्व्यवहरन्ति, अर्भकेष्वपि चेष्टया भानं विकसति, आकारविकारस्तम्भनप्रवर्तनाऽऽह्वान-विसर्जनकार्यसञ्चालननिरोधनाऽरोधनतृप्त्यतृप्त्यादि-निर्वर्तननिद्रालस्यादिसञ्चारप्रवासाऽऽवासविवासाऽऽ-हारनियमनाद्यपाराश्चेष्टाः प्रत्यक्षसिद्धाः यथाजोषं यथाज्ञानं यथाप्रयोजनं यथापरिकरं जायन्ते, ताश्च साक्षाद्भवन्ति, परम्परासु तासामुपयोगः, उपयुक्ताः सर्वा एव बाह्यसाक्षात्कृताः, आन्तरसाक्षात्कृता मानसदृष्टाश्चात्मदृगालोकिता एव यथाकालं यथा-वश्यकं सर्वा आवर्त्यन्ते, अत एव चैष्टिकं प्रमाणमपि साक्षादेव सफलं भवति, घटानयने हस्तस्य द्वारता जलद्रोण्यानयने शिरसो द्वारता तद्वत् चेष्टादार्ढ्ये दृशो द्वारता त्वगादिद्वारता मानसद्वारता साक्षात्कारा एव सर्वे द्वाराणि द्वारीणि चापि भवन्ति, ततोऽ-न्वालोचने सदृशालोचने व्यवहारालोचनेऽर्थतआलोचने व्यतिरेकालोचने संभवदालोचने पारम्परिकालोचने क्रियाऽनुकरणालोचने साक्षदालोचनं प्रथमं ततो मध्येऽपि प्रान्तेऽपि. तथाविधमेवाऽऽलोचनमावश्यकं भवति, स्फोटकधूष्कृत्यादियन्त्राणां राजभृत्यैः सदा स्वरक्षितानामपि तदंगप्रत्यक्षं तदंशालोचनं प्रत्यहं प्रत्युपयोगकाले क्रियन्ते, अनैष्फल्यार्थमेषा साक्षा-त्करणी प्रक्रिया पाल्यते, चेष्टा हि सर्वाश्चेतनो-द्भाविता जडे प्रहिता अपि तद्वर्तमानेऽपि साक्षात्त्वम-पेक्षन्ते, अनिरीक्षणे निरीक्षकाऽनुपस्थितौ वा घातक-विपरीतपरिणामापत्तेः, अतश्चेष्टाः सर्वा अपि साक्षात्प्रकाऽपेक्षिताः साक्षादेव भवन्ति, अन्धस्य सचक्षुनरदर्शनचेष्टया 'पंग्वन्धवदपि द्वयोः संयोगा-च्चेष्टया मार्गोऽतिपारयातो भवति, चक्षुर्भ्यां वीक्ष्यते मार्गः पङ्गूचामागम्यते आक्रम्यते उल्लंघ्यते पार्यते च सः । दर्शनं तत्र कारणम्, अज्ञानेनाऽऽवृत्यते ज्ञानेन प्रकाश्यते विषयः, सर्वेऽपि कर्मकाण्डाश्चेष्टात्मका आन्तरदृशा संक्लृप्य ते दृश्यन्ते बाह्यदृशा ततः प्रेर्यन्ते प्रवर्त्यन्ते सम्पूर्णाः सफलाश्चापि जायन्ते, दृष्ट-चेष्टानन्तरम्, भावनाचेष्टा विलासचेष्टा मानसा-लोचनार्हचेष्टाः साक्षिदर्शनार्हचेष्टाः प्रजायन्ते, सेनासु ध्वजपतनसंकेतेन पराजयचेष्टाः प्रवर्तन्ते, शत्रुतो भयाऽऽगमनाऽऽलोचने संभवसाक्षात्कारे नगरेष्वन्ध-कारपटलचेष्टाः प्रवर्तन्ते:, सति बलिनि सामर्थ्ये चमत्कारे यौवने साधनसमृद्धेऽनेकाश्चेष्टा दृष्टपूर्वाः पुनर्दर्शनाकारा मानसालोचितवत्यः साकाराः सर्वाः प्रवर्तन्ते, तस्माच्चेष्टावर्तनं सर्वं सूक्ष्मं स्थूलं स्वल्पं बहुलं वा साक्षादेव गोचरं भवति, अतो न पृथक्-प्रमाणता स्वतन्त्रा चेष्टानामिति ॥ ३९ ॥

**प्रातिभासिकमपि साक्षाद् बाह्यमान्तरं वा**

**॥ सूत्रम्–४० ॥**

भासमानं भासते प्रभासते चाक्षुषप्रभायां गोचरतां लभते, प्राकट्यं ददाति, यस्यां प्रतिष्ठितायां चाक्षुष-प्रभायां मानसप्रभायां वा प्रकाशमानायां स्वस्वरूपं स्वस्य रूपं वा भासयति यत्तत्त्वं वस्तु सूक्ष्मं विरलं प्रचयितं पुञ्जायितं समूहितं वर्धितं विकसितं वा, तत् भासयित्वा भासते, तत्त्वं स्वरूपतोऽस्तीति प्रभासते, प्रकाशे लोक्यते लोच्यते, आभासो दृक्, आभासेनःप्रतिभासेन साक्षाद् दृश्यते, तत् साक्षादिति । अथ प्रातिभासिकी सत्ता—यत्र शुक्तौ शुक्तिप्रत्यक्षं तत्राऽन्यस्य चाकचक्येन रजतं क्षणं भासते प्रतिभासते चेत् अविद्यया प्रातिभासिकी रजतसत्ताऽन्यस्य, शुक्तिसत्ता तु पूर्वस्य, पूर्वस्याऽन्तःकरणावच्छिन्न-चैतन्य शुक्त्यवच्छिन्नचैतन्यस्य चाऽभेदः शुक्त्य-वच्छेदेन भवतीति दृग्द्वयाऽभेदेन शुक्तिप्रत्यक्षम्, अन्यस्य तु शुक्तावविद्यया तत्क्षणीयं जायमानं यत् प्रातिभासिकं दोषेण भासमानं रजतं तदवच्छिन्न-चैतन्यस्याऽन्तःकरणावच्छिन्नचैतन्यस्याऽभेदेन साक्षा-त्कारो भवति, एवं यत्र यत्र क्षणं दोषेण समधर्मादिना यदन्यत् तदधिष्ठाने भासते चाक्षुषवृत्त्या दृश्यते तत्राऽ-न्तःकरणावच्छिन्नं चैतन्यमेव चक्षुर्द्वारा गतमभिन्नतां प्राप्तं द्रष्टृ स्वयं क्षणिकं प्रातिभासिकं तत्त्वं दर्शयति,

मिथ्यातत्त्वस्याऽपि दृग्गोचरत्वमस्ति, व्यावहारिकसतो हट्टस्थरजतस्याऽपि विषयस्य प्रत्यक्षे स्वावच्छिन्नचैतन्यस्याऽन्तःकरणावच्छिन्नचैतन्यस्य द्रष्टुरभेदो रजते व्यावहारिकसत्ये भवतीत्यभेदः प्रत्यक्षत्वप्रयोजकः, व्यावहारिकाणां प्रत्यक्षं शुद्धाऽन्तःकरणावच्छिन्नचैतन्यस्याऽखिलव्यावहारिकसृष्ट्यवच्छिन्नचैतन्येन सहाऽभेदात् सगुणेश्वरस्य सगुणब्रह्मणः सर्वसृष्टिप्रत्यक्षं भवति, वैराजस्य ब्रह्मणः स्वसृष्टिप्रत्यक्षं वेधोब्रह्मणो निजसृष्टिप्रत्यक्षं कुलालप्रजापतेर्निजसर्जनप्रत्यक्षम् एवं स्वस्वसर्जनप्रत्यक्षं सिद्ध्यत्येव, महाविष्णुप्रधानपुरुषप्रकृतिपुरुषादीनां स्वसर्जनप्रत्यक्षंतदुभयचैतन्याऽभेदेन प्रयोजकेनाऽवश्यं स्यात्, इति सर्वं प्रत्यक्षं साक्षादिति प्रातिभासिकसत्तादिप्रक्रिययाऽपि सिद्धमेव, मीमांसकानां साक्षाद्विषये बाह्यप्राकट्यं जन्यते, अन्यत्र मानसप्राकट्यं जन्यते, सति चमत्कारे तु पुण्यजं प्राकट्यं प्रकाशते समाधिना चिच्चैतन्यप्राकट्यं जायते तथा च सर्वमपि सूक्ष्मं स्थूलं भूतं वर्तमानादि च दृक्प्राकट्यान्वितं भवतीति तन्मतेऽपि सिद्ध्यति सर्वं साक्षादिति ॥ अथ क्षणिकप्रतिभासस्थलेऽपि सहोपलम्भनियममतेऽपि सहप्राकट्यं क्षणिकानां सर्वथा भवति व्यूहानामपि सुतरां दक्साक्षात्त्वं सहैव भवतीति तन्मतेऽपि सर्वं साक्षादिति सिद्ध्यति । प्रत्यक्षतदितरप्रमावादिनामपि सर्वत्र प्रत्यक्षमूलकप्रमात्वात् प्रत्यक्षोत्तरज्ञानव्याप्त्यादिसम्बन्धद्वारकप्रमात्वात् असन्निकृष्टे आर्षविषयेऽपि मानससाक्षात्कारव्याप्तेरनिरोधात् योगीश्वरादिसाक्षात्कारध्रौव्यात् सर्वं साक्षादिति न व्यभिचरति । ब्रह्मव्यापकसत्तया केवलान्वयिन्या सर्वं स्वं स्वीयं दृश्यते, स्वात्मकदृक्त्वात्, ततः सर्वं साक्षादिति सिद्ध्यति ॥ ४० ॥

**स्वाप्निकं तु सन्निकृष्टत्वात् स्वदृक्त्वात् तथा ॥**

**॥ सूत्रम्—४१ ॥**

यस्य स्पप्नं न, निद्रा न, स्वप्नदृश्यं न, विश्रान्तिर्न,—इति तु ब्रह्मसृष्टीतरसृष्टिषु कुत्रापि नास्ति, यत्र देहो भोजनं परिश्रमः पानं सेवा सम्पत्तिः सत्त्वं रजस्तमः शुद्धा वा मलिनाऽविद्या शुद्धाऽन्तःकरणं वा मलिनाऽन्तःकरणं यत्राऽऽवरणं यत्र च विजातीयद्वितीयं भोग्यभोगोपकरणभोक्तृत्ववृत्तयो यत्र चाऽदिव्यत्वम् अधामत्वं मायिकत्वं विषमावस्थत्वं शुद्धं प्रतिबिम्बम् अशुद्धं वा प्रतिबिम्बं यत्र जाग्रत्स्वप्नसुषुप्तयोऽवस्थाः यत्र स्थूलसूक्ष्मकारणाद्याऽवस्थाः यत्र ब्रह्मेतरसृष्टित्वं मुक्तीतरस्थितित्वं लौकिकत्वं तत्र सर्वत्र विरामवृत्त्या निद्रावृत्त्या स्वस्थत्वापादकस्वप्नावस्थावत्त्वम् , ततः सुषुप्तिः ब्रह्मापीतिरित्यवस्थाः । यत्र विश्वतैजसप्राज्ञाऽभिधानं यत्र विराट्सूत्रात्माऽव्याकृताऽभिधानं यत्र वैराजहिरण्यगर्भेश्वराभिधानं तावत्तत्र सर्वत्र स्वप्नाऽवस्थावत्त्वं वेदान्ते दर्शितम् । तत्र स्वाप्ननिद्रायां स्वाप्नसाक्षाद्दृशा पश्यति, स्वारोपितं भारं स्वं पश्यति स्वप्नारोपितं भारं स्वप्ने पश्यति, ब्रह्मणि चेदध्यारोपो जगतस्तर्हि ब्रह्म जगत्पश्यति, अहमज्ञ इत्यज्ञानं पश्यति अज्ञाने तदात्मकं जगत् अपि पश्यति, सकलाऽज्ञानाऽवभासक ईश्वरः 'लोकाश्च भान्ति परमे मयि मोहजन्याः स्वप्नेन्द्रजालमरुनीरसमा विचित्राः' । 'मनसैवाऽनुद्रष्टव्यम्' । 'मनसैवेदमाप्तव्यम्' । 'दृश्यते त्वग्रचया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः' । 'आभासेन घटः स्फुरेत्' । 'दृशिस्वरूपं साक्षिस्वरूपं सर्वम् अवभासयति पश्यति । प्रातिभासिकं स्वाप्नप्रपञ्चमीश्वरः सर्वज्ञः स्वस्वप्नं जगत्पश्यति, सूत्रात्मा हिरण्यगर्भः प्राणश्चेति स्वसूक्ष्मविषयाननुभवति 'प्रविविक्तभुक् तैजस' इति स्वप्ने वेद्यं सविषयप्रत्ययरूपवेदनवेद्यं स्वप्नं स्वाप्नं च, एका संवित् स्वयंप्रभा, त्रिपादस्ति स्वयंप्रभः, स भूमिं विश्वतो वृत्त्वा ह्यतिष्ठत्' । साक्षिरूपो बोधः सर्वमालोचयति, सः स्वप्रकाशः प्रकाशकश्च । सर्वार्थप्रकाशिका धीः सर्वाकाशा सर्वान्स्वाप्नान्पश्यति । धीस्थपदार्थाकाराः साक्षिभास्याः, स्वप्रकाशाऽपरोक्षात्मनः सर्वं दृश्यं जगत् बाह्यमान्तरं च । 'अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत्' 'स्वयंप्रकाशचैतन्यमपरोक्षं सदा यतः' । 'साक्षात्कृतात्मधीः, जगत् स्वात्मा पश्येत्' 'यत्र यद् दृश्यते द्रष्टा जाग्रत्स्वप्नसुषुप्तिषु' 'जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते' । 'कूटस्थभासितो देहो धीस्थजीवेन भास्यते' । 'घटे ज्ञातत्वं ब्रह्मणा भास्यम्' । 'आभा-

सस्य हि ता वृत्तयः स्वस्वभासिकाः'। 'सन्धयोऽभावाश्चाऽवभासिताः'। 'प्रतिबिम्बो बिम्बवद्भासते'। 'स्वप्रभः शिवः, जीवेशौ स्वच्छौ, मनः स्वच्छं, चित्त्वेन प्रकाशनात् चिद्रूपत्वम्, निद्रा स्वप्नगौ जीवेशौ चेतनौ सृजेत्'। 'स्वप्नादावपि ध्यानं लभते' 'साक्षी अहंकारं बुद्धिं मनो विषयांश्च भासयति'। 'सुप्तेः स्वप्रभत्वम्' 'स्वप्ने सर्वं वीक्षते'। 'शून्यमेवेति तादृग्विभाति'। 'असाधारण आकारो मनसा विभाव्यः'। 'स्वप्ने वियद्गतिं पश्येत् स्वमूर्धच्छेदकं यथा। मुहूर्ते वत्सरौघं च मृतपुत्रादिकं पुनः'। 'निद्रा स्वप्नं बहुविधं सृजेत्'। एतत्स्वाप्निकमात्मदगादिसृष्टं सन्निकृष्टं सर्वं साक्षादिति ॥ ४१ ॥

**पुञ्जाद्यपि व्यूहितं बाह्यमान्तरं सर्वं साक्षात् ॥**

**॥ सूत्रम्—४२ ॥**

परमाणुपुञ्जो धान्यराशिरिव घटादिर्बाह्यः परस्परमाकृष्टो घट इति, धान्यराशिरपि धान्यानि परस्परमन्वितानि, पटोऽपि तन्तूनां मिथो योगात् व्यूहः, रजोऽपि अणूनां मिथः अन्वितत्वं व्यूहः, मानसमपि व्यूहितं धर्माऽधर्माद्या अपि पुद्गलाव्यूहाः,आत्माऽप्युपचितो व्यूहितः प्रचयितः,दृगप्यात्मचिद्रूपा, अनवयव्यपि व्यूहितं तु पुञ्जरूपं बाह्यं दृग्गोचरम्, अब्भ्राणि गगने, इन्द्रधनुर्मेघे, प्रकाशस्तारकासु, नैल्यमवकाशे, तत्त्वानि शून्ये, फलानि कर्मसु, कल्पितानि मानसे, सुखानन्दाद्या आत्मनि, परिणतय आवृतौ, पदार्थाः संवृतौ, संवृतिः सम्यग्ज्ञाने, ज्ञानं दृगात्मा सर्वदर्शि, ततो बाह्यं पुञ्जादि अबाह्यमान्तरं धर्मादि सर्वं स्वात्मतादात्म्यात् स्वात्मदृग्गोचरम्, तथा च यथा—'यत्सत् तत्क्षणिकं चेत्' 'यत् सत् तद् दृश्यमपि, यद् दृश्यं तत्सर्वम्, यत् सर्वं तच्छून्यम्, यच्छून्यं तदान्तरम्, यदान्तरं तत्क्वचिद्बाह्यम्, यद्बाह्यं तद्भोग्यं, यद्भोग्यं तत्स्वर्गम्, यदस्वर्गं तन्मोक्षणम्, यन्मोक्षणं तच्छाश्वतं, यच्छाश्वतं तद्व्यापकं, यद् व्यापकं तत्प्रकाशकं, यत्प्रकाशकं तत्सप्रकाशं, यत्सप्रकाशं तत्साक्षात्, यत् साक्षात्तत् सर्वात्मकम्, 'यत्सर्वात्मकं तत्तत्त्वम्, तथा च सर्वं साक्षादिति तद्युक्त्यैवाऽपि सिद्ध्यति, ज्ञाने केषामपि नाऽनैकान्तिकत्वम्, स्वप्रकाशे परप्रकाशकेऽपि नाऽनैकान्तिकत्वं, दर्शनार्थं दृशां दृक्साफल्यार्थं प्रकाशानां प्रकाशोपयोगार्थं पदार्थानां पदार्थार्थं भोगानां भोगार्थं करणानां करणार्थं वृत्तीनां वृत्त्यर्थं धियां, बुद्ध्यर्थं चितां, चिदर्थं साक्षिणः, साक्ष्यर्थं नियामकद्रष्टुर्व्यवस्थानात्, तत्परम्परया दृशां स्थूलाऽस्थूलानां लौकिकानां सापेक्षाणाम् अलौकिकानां दिव्यानां व्यवस्थानाच्च, सर्वं यदि सत् भोग्यं च तर्हि सर्वमपि साक्षात् भोग्यं च, भोग्यं च साक्षाद्विषयमिति अर्थतः साक्षात्कारविषयम्, व्यूहतोऽपि साक्षात्कारविषयम्, व्यूहे प्रविष्टं सर्वं दृग्गोचरम्, अव्यूहितमपि अव्यूहितदृग्गोचरम्, सर्वविदृशां स्वपरप्रकाशरूपत्वात्। व्यूहो बहूनां प्रचयपिण्डः, प्रचयपिण्डे दृशामन्तःप्रवेशेनाऽऽरपारगमनात् व्यूहांगानां दर्शनमानुषंगिकम्, व्यूहांगत्वेन तदंगतदंगतदंगानामन्तिमानामपि दर्शनमानुषंगिकम्, शून्यं चेद् दृश्येत, अशून्यं सुतरां दृश्येत, उभयत्र दृशां व्यापनात्, दृगपि व्यूहरूपा, व्यूहान्तर्ग्रहणे व्यूहान्तिमः सुतरां गृहीतो भवति व्यूहाऽन्तःस्थितत्वात्। सत् क्षणिकमितिवत् एता व्याप्तयः। यदि तत्तथा, तर्ह्येता अपि तथा, तथाविषयिण्यश्च, ततो दृक् सर्वा सर्वविषया, सर्वं साक्षादिति ॥ ४२ ॥

**अपि सर्वं मिश्रितमेकजत्वात् ततोऽपि साक्षात् ॥**

**॥ सूत्रम्—४३ ॥**

एकस्मात्सर्वं जन्यते—इति तु कस्याऽपि दर्शने नास्ति, ब्रह्मजन्येऽप्यविद्या जनिका, शिवजन्ये शक्तिर्जनिका, विशिष्टजन्ये शरीरं जनकम्, मायाजन्ये कर्माण्यदृष्टादीनि च जनकानि, विषमावस्थायां तत्र पुरुषार्थहेतुः, अणुजन्ये भिन्नाः परमाणवो हेतवः, द्रव्यजन्ये द्रव्यगुणादिमिश्रणं जनकं भवति, उपादानसहकारिनिमित्तानि वा कारणानि, समवाय्यसमवायिनिमित्तानि वा कारणानि, जडान्यपि मिश्रितानि कारणकार्याणि भवन्ति नैकतत्त्वात्मकानि, अभावाद्भावोत्पत्तावपि भावाऽभावोभयं वा मिश्रणं कारणकार्यात्मकं, क्षणिकविज्ञानहेतुकत्वेऽपि क्षणादिमिश्रणं सहोपलम्भनियमेनाऽवर्ज्यं भवति, ईश्वरतत्त्वान्यपि जीवतत्त्वात्मकानि भूत्वा सर्जनास्पदानि वर्तन्ते, आन्तराणि वा बाह्यानि भौतिकानि तु

मिश्राण्येव जायन्ते, यद्यात्मनो मनसश्चक्षुषो वैक-तत्त्वग्रहणे शक्तिमत्त्वं तत्र योग्यमिश्रितग्रहणं भव-त्येव, वृत्तीनां विभिन्नगोलकवशाद्विभिन्नग्रहणेऽपि, वृत्तिरेका साऽहंकारात्प्रवृत्ता मनस्यागता ततश्चे-च्चक्षुषि प्रवर्तते अथ प्रत्यक्षं भवति, कीदृशीयं सृतिः स्वप्रकाशद्रष्टृनिर्गता दृक् चक्षुरागता घटादि पश्यति, घटं रूपं धर्मान् अन्वयान् अंशान् आकारान् परिमाणं प्रकाशसंयोगान् संसृष्टप्रभादिक्कालगगना-दीन् तत्र प्राप्तान् परप्रतियोगिताकाऽभावान् तत्सं-सर्गान् उपाधीन् प्राकटयं विषयताः क्रियाश्चापि चाक्षुषान् विषयान् व्यूहितान् मिश्रितांश्चाऽन्वितान् समानाधिकरणत्वानि तादात्म्यांश्च स्वरूपान् सर्वा मुख्यघटाधारा दृक् पश्यति, यद्येवं तर्हि तान् सर्वान् ग्राह्यान् अपि वृत्त्यारूढाकारान् मानसाकारान् ज्ञप्त्याकारान् भोग्याकारान् व्यूहितान् मिश्रितान् अन्वितान्पिण्डान् पिण्डीभूतान् आश्रयाश्रयिभाव-स्थितान् पृथक्पदव्यवहार्यान् वेद्यान् सैव दृगेका सन्तति-रूपाऽऽन्तरवाह्यतन्तुस्वरूपाऽभिन्नाऽर्थान् अर्थात् गृह्णाति समालोचयति चिन्तयति विवेचयति विमर्श-यति बोधयति प्रकाशयति स्वं च प्रकाशते प्रत्यक्ष-यति चक्षते पश्यति साक्षात्करोति आत्मनि भाव-यत्यपि विराममेत्यपि च, इत्येवं सर्वथा मिश्रितं पदार्थतत्त्वजातम् एकविषयत्वात् सर्वं प्रत्यक्षम्, सर्वमप्येकजन्यम्, अज्ञानजन्यं मायाजन्यं महत्तत्त्वाऽ-हंकाराऽऽकाशजन्यमापृथिव्यन्तं सर्वमेकं कारणात्मना मानसगोचरं तत् पृथिव्यात्मना चक्षुरादिगोचरमिति साक्षादेव भवति यथाकथञ्चित् यस्य कस्याऽपि यद-वस्थं तदवस्थमपि न त्वसाक्षादिति मिश्रितं भोजन-मिव सर्वं साक्षात्, एकजत्वात् एकवृत्तिग्राह्यत्वाच्च, क्षेत्रेषु वहुधाऽपि महानदजलमेकमिव महावृत्तिर्दृगेका ततोऽपि सर्वं साक्षात् एकगोचरत्वादिति ॥ ४३ ॥

**चिदाभासस्य व्यापकत्वात् सर्वं तत्तथा ॥**

**सूत्रम्—४४ ॥**

अथाऽद्वैतं परब्रह्म, विरचय्य जगत् प्राविशत्, सः चिद्वपुर्भवति साक्षी भवति सर्वं भासयति, सर्वाऽ-वभासकः साक्षी, प्रविष्टः सोऽविनाशी मूर्धसीमानं कपालत्रयं विदार्य प्रविष्टः सः कूटस्थः स ब्रह्म सत्यं चैतन्यं चितिरूपमधिष्ठानं वाग्गाऽगोचरम्, कृत्स्न-जगत्कल्पनाऽधिष्ठानं तद्ब्रह्म. आनन्दरूपः स्वप्रभः कूटस्थः ईशः सगुणेश्वरः, ईश्वरकृता सृष्टिः, बुद्धेर्मन-सश्च साक्षी सः कूटस्थः,अन्तःकरणवृत्तीनां वृत्तिसन्धी-नामभावानां च साक्षी कूटस्थोऽविकारी, ब्रह्म शुद्ध-चैतन्यं सच्चिदानन्दमखण्डमेकरसं नित्यज्ञानमात्र-मनन्तं वस्तु सर्वाऽऽकाशस्थानीयम्, तदेव चित् चिच्चैतन्यं, सः प्रविष्टः सृष्टौ सृष्टचाकाशस्थानीय ईश्वरः कूटस्थः स आत्मा स्वप्रकाशः स्वयंज्योतिः, सः सर्वज्ञो जगद्योनिः, सोऽन्तर्यामी, अशेषप्राणि-बुद्धीनां वासनाभिर्विषयीकृतं सर्वं जगज्जानाति स ईश्वरोऽन्तर्नियमयन् अन्तर्यामी, यत्र शुद्धमायायां कूटस्थ आत्मा ईश्वरस्तत्र चिद्ब्रह्मणश्छाया प्रति-विम्बः सः चिदाभासः, चिदाभासप्रवेशात् जडाऽपि माया चेतनेव भवति, ब्रह्मचैतन्यसदृशश्चिदाभासश्चि-त्सदृशः, चिदाभासो बुद्धिवासनासु प्रतिबिम्बतं चैतन्यं बुद्धौ प्रतिभासते, मायाऽधीनश्चिदाभासः, कूटस्थे चिदाभासः साक्षिगतं सत्यत्वमध्यवस्यति, कूटस्थगतमिव जीवगतमपि सत्यत्वमवभासयत्य-ध्यवस्यति । चिदाभासान्ता धीवृत्तयः, चिदा-भासोऽहंवृत्तौ व्याप्य वर्तते, चिदाभाससहिता वृत्तयः स्वस्वभासिका भवन्ति, ईषद्भासनम् आभासः, चिदाभासः स्फुरणरूपो विकारो विम्बाभासः प्रति-विम्बः 'रूपं रूपं प्रतिरूपो बभूव' इत्युक्तश्चिदाभासः, चिदाभासस्य जन्यत्वविनाशित्वे, जन्यनाशविकारवां-श्चिदाभासः, अतः सः कूटस्थात्मनो भिन्नः, अयं मायिकचिदाभासो मृषा, 'जीवेशौ आभासेन करोती' ति श्रुतेः, चिदाभासेन जीवेशौ कल्पितौ भवतः, जीवेशौ मायाधीवशौ, ईशः आनन्दमयः, जीवो विज्ञानमयः, तदधिष्ठानं कूटस्थ आत्मा ब्रह्म, धीमय आलोकः साक्षिभास्यः, कूटस्थभास्या बुद्धिः, सर्वाऽ-वभासकः साक्षी बहिरन्तश्च प्रकाशयति, मायया ब्रह्म ईश्वरतां व्रजेत्, कोशोपाधिभिरीश्वरो जीवतां व्रजेत्। 'अद्वितीयब्रह्मतत्त्वे स्वप्नोऽयमखिलं जगत्। ईशजीवा-दिरूपेण चेतनाऽचेतनात्मकम्' (पंचद० ६।११)। अधिष्ठानचैतन्यं लिङ्गदेहश्चिदाभासश्चेति त्रयं जीवपदवाच्यम्, ईशकृता सृष्टिः, जीवकृतः संसारः, मायावृत्तिरीशसंकल्पः, मनोवृत्तिर्जीवसंकल्पः, ब्रह्मणा

चिदा भास्यो भातो ज्ञातो घटादिर्बुद्ध्या प्रकाशते, घटादिरयमित्याभासः, विज्ञातो घटादिरिति ब्रह्मानुग्रहः, चैतन्यं त्रिगुणं घटादौ स्फुरति सोऽनुव्यवसायः, घटाकारधीस्था चित् घटमवभासयति, ब्रह्म चैतन्यं घटे ज्ञाततां जनयति नामवभासयति च. चिदा धीवृत्त्याभासकुम्भसमहो भास्यते, ब्रह्म कूटस्थ ईशो जीव इति चिच्चतुर्विधा, आत्मा बुद्धिः आभासो जगत् इति कथमित्यनिर्णयो मोहो भ्रमः संसारः, तत्तत्त्वविन्मुक्तः, 'अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते'। वृत्तिव्याप्तिर्मता, फलव्याप्तिर्नास्ति। अत्र सर्वं साक्षादिति पर्यवस्यति ॥ ४४ ॥

**चेतनीयं सर्वमिति तत् साक्षात् ॥ सूत्रम्—४५ ॥**

चेतनाः सर्वे साक्षाद् द्रष्टारः, दग्रूपायाश्चेतनाशक्तेस्तेषु सर्वप्रकाशिकायाः स्वप्रकाशिकायाः स्वाश्रयप्रकाशिकायाः स्वविषयप्रकाशिकायाः स्वयंप्रकाशरूपाया वर्तमानत्वात् सदा सत्त्वात्, यच्चेतनीयं तत् सर्वं चेतनागोचरम्, साक्षी हि चेताः, सः सर्वान् चेतयति, चेतनात् कर्मफलप्रदानद्वारा भोग्यान् प्रति योजयति, अतः साक्षिव्यापार्यं सर्वं साक्षिगोचरम्। अथ संसारप्रवाहोऽनादिः. संसारस्य कर्ता परमात्मा परमात्मज्ञानं परमात्मकृतिः परमात्मेच्छा कालो धर्माऽधर्मौ दिक् प्रागभावः प्रतिबन्धकाऽभावः कार्ये साधारणा मताः,—इति गौतमीयाः काणादाश्च, किञ्चिदंशे माध्वा अपि, नित्यपरमाणुवादित्वात्। उपादानानि परमाणवः, चेतनः परमाण्वादिसकलद्रष्टा स्वेच्छया परमाणून् सक्रियान् करोति, द्व्यणुकादीन् जनयति, गुणकर्माणि जनयति, पदार्थतत्त्वानि व्यवस्थापयति, आत्मनो योजयति, ब्रह्माण्डानि रचयति, विश्वस्य कर्ता भुवनस्य गोप्ता सः, यो गप्ता कर्ता स द्रष्टा, नित्यद्रष्टा, चेतनीयं सर्वं जडं च चेतनं चेति सर्वं तस्य साक्षात्, त्रिगुणसाम्याऽवस्था माया तदधिष्ठातृमहापुरुषेण चेतनीया, महत्तत्त्वाद्यास्तत्तदधिष्ठातृचेतनैश्चेतनीयाः, प्रकृतिविकृतयो विकाराश्च तत्तदधिष्टातृचेतनैश्चेतनीया दिव्यदृशा साक्षाद्विनिमयितव्याश्च भवन्ति, तस्माच्चेतनवच्चेतनीयं सर्वमपि साक्षात्। कर्तुमकर्तुमन्यथाकर्तुमाकस्मिककर्तुं समर्थः परमात्मा, सः यदिच्छति तत् करोति, न करोति, विपरीतं करोति, अभावाद्भावं भावादभावं चोत्पादयति, आकाशाद्भूतानि भूतेभ्यः शून्यं शून्याच्चैतन्यं चैतन्याज्जाडयं तमसोऽपि तेजस्तेजसश्च तमः सृष्टेः प्रलयं प्रलयात् अप्रलयं सर्जनं च करोति, सर्वेऽपि चेतनाः सच्चिदानन्दाः सदिति सदंशः स्वप्रकाशः, चिदंशस्तु स्वप्रकाश एव विविच्यते सर्वत्र, आनन्दांऽशोऽपि स्वप्रकाशः य आनन्दः सः चित्, या चित् सा सत्, यत् स आनन्दः, एकमेव तत्त्वम्, आनन्दात्खल्विमानि भूतानि जायन्ते, तत्साक्षाद्दग्रूपं दृग्वच्चेति विशेषतः कथनार्थमेतत्सूत्रम्, त्र्यंशानां संसर्गो न पृथक्, तादात्म्यः संसर्गः, सोऽपि स्वात्मकः स्वप्रकाशः साक्षादिति। चेतनासम्बन्धवती माया चेतनीया सा सत्त्वप्रकर्षवती प्रकाशवती साक्षाद्धर्मिणी ज्ञानगोलकरूपा भवत्यहंकारमनइन्द्रियाणामिवेति। उपचारो वा व्यवहार इति त्वन्यदेतत्, महापुरुषस्तु द्रष्टा मायापुरुषः ॥ ४५ ॥

**अन्ततः सर्वज्ञीयं सर्वं साक्षादिति ॥ सूत्रम्—४६ ॥**

उपसंहारार्थमिदम्, सर्वज्ञः परमेश्वरः, तत्सम्बन्धि सर्वं तत्त्वजातं, तत् तस्य साक्षाद्गोचरम्, तत्स्वरूपे ब्रह्मणि सर्वाऽवस्थानात्, 'तज्जलानि'-ति—शान्त उपासीत'। 'यतो वेमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रत्यभिसंविशन्ति तद् ब्रह्म' एवंविधान्विनं तत्त्वमात्रं तस्य सर्वं साक्षात्। अथ चारचक्षू राजा चारैश्चक्षुर्भिः राजकीयं सर्वं पश्यति, यज्ञपतिर्यजमानो ब्रह्महोतृयज्वहर्तृगातृकर्मकर्त्रादिभिर्ज्ञातृभिः कृतकारितचक्षुर्भिर्यज्ञीयं सर्वं पश्यति, आचार्य उपाध्यायादिभिरध्यापकैः सारस्वतेयं सर्वं पश्यति, आथर्वणिको मन्त्राद्यैः सर्वाऽर्थान् पश्यति, मान्त्रिकः कृताभिचाराद्यैस्तद्विषयं सर्वं पश्यति, भिषग्वरः भिषग्भिः कृतौषधाद्युपयोगान् चिकित्सकैश्च गदान् वैद्यकशास्त्रैश्च वनस्पत्यादीन् तद्रसादीन् तद्गुणादींश्च पश्यति, ज्योतिश्चक्रवित् ज्योतिषा खगोलं ग्रहतारकानक्षत्रादिव्यापारान् गणितेन स्थानस्थितिप्राप्तियोगादीन् फलितेन फलानीति च पश्यति, भौतिकरासायनवेत्ता भूस्तरादिशास्त्रैः शोधनप्रकारकलाभिः विविधनूतनसंशोधितसर्जनानि पश्यति, आन्ध्रसिको रासायनीकलाभिर्महानसीयपक्वान्नादीनि मानससाक्षात्कारविषयाऽपि पश्यति, कृषिकारः क्षेत्रादिसमीकरणसंस्करणबीजवपनादिजलसेचनलवनादिक्रियाभिः कृषिं पश्यति, विप्रो भिक्षां समालोच-

यति, क्षत्रशूरो निजीयरक्ष्यान् पश्यति, वैश्या धनोपायान् पश्यन्ति, अन्ये तु निर्वाहजीविकास्वास्थ्यादीनि पश्यन्ति, सर्वेऽपि स्वार्थान् पश्यन्ति, सन्तः सद्ब्रह्म पश्यति, सकामाः कामनाः पश्यन्ति, निष्कामा विरतिं पश्यन्ति, भक्ताः सेवां पश्यन्ति, ज्ञानिन आराधनामुपासनां ध्यानमात्मस्मरणं चेत्यादीनि ध्येयानि च पश्यन्ति, वासनिका वासितं पश्यन्ति, धार्मिका धर्मान्, अधार्मिका अधर्मान्, अज्ञानिनो मोहान्, मुनयो दिव्याऽर्थान्, संयमिनः समाधिं, निराशो निधनं, बालः क्रीडनं, युवा रमणं, वृद्धो विरामं, विरागी सुखं, योगी महानन्दम्, अयोगी संसारं, प्रपञ्ची कुटुम्बं, गुरुः शिक्ष्यान्, न्यायकर्ता दण्डान्, बुभुक्षितो भक्ष्यान्, अपूर्णः प्राप्यान्, उदासीनोऽरण्यं, क्षीणो मरणं, मुमुक्षुर्मोक्षं, चेति सर्वेऽपि मानससाक्षात्कारेण साक्षिणा द्वारेण च पश्यन्ति। तस्मात् सर्वं साक्षादिति ॥ ४६ ॥

**तच्च विशिष्टे ब्रह्मण्यपि, श्रुत्युक्तत्वात् ॥**

**॥ सूत्रम्—४७ ॥**

परब्रह्म स्वतन्त्रं द्रष्टृ, परब्रह्मविशिष्टं ब्रह्माऽपि तदन्वयिचापि द्रष्टृ, केवले परस्मिन् ब्रह्मणि, केवले ब्रह्मणि, विशिष्टेऽपि ब्रह्मणि पुरुषे तत्—सर्वद्रष्टृत्वम्, श्रुतिभिरुच्यते। 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माऽध्यक्षः सर्वभूताऽधिवासः साक्षी चेता केवलो निर्गुणश्च' ( श्वे० ६।११ ) ॥ 'द्वे वाव ब्रह्मणो रूपे मर्तं चैवाऽमर्तं च मर्त्यं चाऽमृतं च स्थितं च, यच्च सच्च त्यच्च' ( बृ० २।३।१ ) ॥ 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति'। 'तत् सृष्ट्वा तदेवाऽनुप्राविशत्, तदनुप्रविश्य सच्च तच्चाऽभवत् निरुक्तं चाऽनिरुक्तं च' ( तै० ब्र० अ० ६ ) ॥ आत्मा वा इदमेकमेवाऽग्रे असीन्नाऽन्यत् किञ्चनमिषात्'। 'स ईक्षत लोकान्नु सृजा इति, स इमाँल्लोकानसृजत' ( ऐ० १।१। ) ॥ 'एतस्मादात्मन आकाशः संभूतः' ( तै० ) ॥ 'तदेतत्सत्यं यथा सुदीप्तात् पावकात् विस्फुल्लिंगाः सहस्रशः प्रभवन्ते सरूपाः, तथाऽक्षरात् विविधाः सौम्यभावाः प्रजायन्ते चैवापियन्ति' ( मु० २।१। ) ॥ 'यथोर्णनाभिः सृजते गृह्णते च, यथा पृथिव्यामोषधयो भवन्ति, यथा सतः पुरुषात् केशलोमानि भवन्ति तथाऽक्षरात् संभवतीह विश्वम्' (मु० १।७ ) ॥ 'यः पृथिव्या तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः' ( बृ० ३।७।३ ) ॥ यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुः' 'यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' 'तदेव द्रष्टृ मन्तृ विज्ञातृ' ॥ 'लक्ष्यन्तेऽन्तर्गताश्चाऽन्ये कोटिशो ह्यण्डराशयः। तमाहरक्षरं ब्रह्म सर्वकारणकारणम्' ( भाग० ) ॥ 'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ( बृ० ३।८।९। ) ॥ 'एतावानस्य महिमातो ज्यायाँश्च पुरुषः। पादोस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि। त्रिपादूर्ध्वंमुदैत्पुरुषः पादोऽस्येहाऽभवत्पुनः' ( यजुः ३१।३।४ ) ॥ 'येनाऽक्षरं पुरुषं वेद' ( मु० १।२।१३ ) ॥ 'अचिन्त्यमक्षरं यत्तु तुरीयं च तदा स्थितम्। यद्गत्वा न निवर्तन्ते नरास्तत्रैव तत्पदम्। अनेकसृष्टिरचनाः सन्ति तस्यैव लीलया' ( भवि० पु० २५।५२ ) ॥ 'एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः' ( बृ० ३।८ ) ॥ 'एतदक्षरं गार्गि अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तपते बहूनि वर्षसहस्राणि अन्तवदेवाऽस्य भवति' (बृ० ३।८) ॥ द्वाविमौ पुरुषौ लोके क्षरश्चाऽक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मा ह्युदाहृतः' ॥ 'तानहं वेद सर्वाणि' (गीता०) ॥ अत्र विशिष्टब्रह्मतः सृष्टिर्विशिष्टब्रह्माऽन्वयिनी विशिष्टब्रह्मप्रत्यक्षा विशिष्टात्मिकेति विशिष्टमविशिष्टं च सर्वमपि साक्षादिति व्याप्तिः सुस्थिरा भवीति ॥

**अर्प्यते भगवद्दृष्ट्या साक्षात्कारविवेचनम्।**
**दर्शनेष्वन्ततः प्राप्यं फलसाधनसारधृत् ॥१॥**

इति श्रीमद्दार्शनिकपञ्चानन-षड्दर्शनाचार्य-नव्यन्यायाऽऽचार्य-सांख्ययोगवेदान्तमीमांसातीर्थ-काव्यकुशल-वैष्णवविद्वत्सार्वभौम-पण्डितश्रीकृष्णवल्लभाऽऽचार्य-विरचितानि कल्याणीवृत्तिसहितानि साक्षात्कारसूत्राणि ॥

# तत्त्वप्रभावल्याः शुद्धिपत्रम्

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| २ | ३१ | परमाण | परमाणु |
| २ | १० | द्वचणक | द्वचणुक |
| ४ | २६ | वच्छोदक | वच्छेदक |
| ५ | ३० | र्वति | र्वर्ति |
| १५ | २१ | भवन्त्वे | भवत्वे |
| १६ | ८ | श्रायतया | श्रयतया |
| २० | २० | पाधित्वम् | पाधिमत्त्वम् |
| २० | २१ | तत्त्वमात्रं | तद्वत्त्वमात्रं |
| २१ | १२ | स्वावच्छेदकावच्छिन्नप्रतियोगिता | स्वावच्छेदकावच्छिन्नतादात्म्याऽनवच्छिन्नप्रति-योगिता |
| २२ | ३७ | यदाकदाचिदपि घटवति | 'यदाकदाचिदपि घटाधिकरणतायाः सत्त्वान्न घटात्यन्ताऽभावः, नन्वेवं संयोगेन यदाकदा-चिदपि घटवति |
| ३० | ३३ | राख्यानि | राख्याणि |
| ३० | १४ | त्वाच्या | त्वाच्चा |
| ३५ | ४ | दव | दाव |
| ३६ | ३२ | तत्ते | तत्रे |
| ३६ | १६ | ऽवऽष्ट | ऽवष्ट |
| ३८ | ३० | वाप्व | वाय्व |
| ४६ | १८ | अन्य | जन्य |
| ४७ | १ | द्वेधाऽयं | द्वेधेयं |
| ५४ | १ | तावत् | यावत् |
| ५७ | १३ | मिनो | मनो |
| ६२ | २२ | चणादौ | चरणादौ |
| ६२ | २६ | ऽजन्याश्च | ऽजन्यश्च |
| ६७ | २ | गहसह | गसह |
| ६८ | ४ | णकादौ | णुकादौ |
| ६९ | १३ | पूर्वज्ञानेन | पूर्वज्ञानस्य |
| ७१ | १ | सर्वं | खर्वं |
| ७२ | २ | थोगे | योगे |
| ७९ | ६ | स्वश्रय | स्वाश्रय |
| ८० | १५ | संभावात् | संभवात् |
| ८२ | २३ | पुरुषार्थे हि | पुरुषार्थो हि |

| पृष्ठं | पंक्तिः | अशुद्धम्, | शुद्धम् |
|---|---|---|---|
| ८३ | २९ | द्वेषत्व | द्वेष्मीत्यनुभवसिद्धद्वेषत्व |
| ८३ | ३४ | विषय | विषयक |
| ८३ | ३१ | क्रियया | क्रियायाः |
| ८४ | ४ | अशौचादि | आशौचादिः |
| ८४ | १५ | कानाया | कामनाया |
| ८४ | १७ | अशौचा | आशौचा |
| ८५ | १९ | ज्ञानं प्र | ज्ञानं न प्र |
| ८६ | १६ | नुमितिः | न चेदमप्रयोजकम्, 'सः स्वर्गः स्यात्सर्वान्प्रत्य-विशिष्टत्वात्' इति अ० । |
| ८७ | १५ | पापऽजनिस्तु | पापाऽजनिस्तु |
| ८९ | १२ | षाणादि | बाणादि |
| ८९ | २६ | अथ— | अर्थ— |
| ९० | १५ | निवर्तर्ते | निवर्ते |
| ९५ | ११ | वच्छिन्नप्रतियोगिता, | वच्छिन्नप्रकारताऽन्या स्वसमानाधिकरणाऽभावीय-यत्सम्बन्धावच्छिन्नप्रतियोगिता, |
| १०५ | २५ | स्थभाव | स्वभाव |
| १०५ | ३३ | वपत्तौ | प्रपत्तौ |
| १०६ | २ | किन्तु फेन | किन्तु शून्यत्वभावनानिवर्त्या अबाध्यता व्यावहारि-क्यस्त्येव, तथा चोक्तं फेन— |
| १०८ | १७ | परिच्छेदः ५. | परिच्छेदः—६, |
| १०८ | ३२ | निर्विकल्पं | निर्विकल्पक |
| १०९ | १३ | घटतदभाववदिति | घटतद्भावाऽभाववदिति |
| ११० | १७ | यक्ष | पक्ष |
| १११ | ७ | आरोहः | आरोपः |
| १११ | ९ | छेदक | छेदकक |
| ११२ | १४ | तदपेक्षापेक्षितत्व | तदपेक्षाऽपेक्षाऽपेक्षितत्व |
| ११३ | २० | जन्यत्वाऽभावेन | जन्यत्वाऽभावाऽभावेन |
| ११४ | १९ | तद्वत्त्वस्य | तद्वत्त्वस्य तादृशसमुदायत्वसत्त्वेन तेन सम्बन्धेन तादृश |
| ११४ | ३० | जकभूत | जकीभूत |
| ११६ | २४ | तस्य | ज्ञस्य |
| ११६ | १३ | ग्राह्यं | ग्राह्यत्वम् |
| ११६ | १४ | मनस्त्वेत | मनस्त्वेन |
| ११७ | २ | त्वात्त | त्वात्म |
| ११७ | १९ | वयाश्च | वयाच्च |
| ११८ | ३५ | मतेत | मतेन |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ११८ | २१ | जाग्रति | सुषुप्तावपि स्वभानसंभवात्, स्वप्ने चर्ममनःसंयोगस्य ज्ञानकारणत्वम्, जाग्रति तु |
| ११९ | १३ | ऽथा | ऽर्था |
| ११९ | ३२ | परपरा | परम्परा |
| ११९ | ३६ | घर्मी | धर्मो |
| १२० | ११ | अन्येऽप्म | अन्येऽप्य— |
| १२० | २४ | द्वारं | द्वारं |
| १२० | २८ | प्रष्टा | द्रष्ट्रा |
| १२० | ३४ | करणम | करणम् |
| १२३ | १५ | पिशाचाऽ | पिशाचाऽभावोऽ- |
| १२३ | २९ | त्वमसि | त्वमसि हर्ता त्वमसि उ- |
| १२३ | २३ | सूर्य | सूर्प |
| १२४ | १० | अमान | अभान |
| १२४ | २८ | वृत्तान्ता | वृत्तान्ताः |
| १२५ | २१ | ५५९ | ३५९ |
| १२६ | २६ | रूपाऽऽत्य | रूपाऽऽत्म |
| १३० | ३९ | शिष्टचावैशिष | शिष्टवैशिष्टचा |
| १३० | १४ | दृष्टाति | दृष्टाकृति |
| १३१ | १ | यानेन | मानेन |
| १३१ | ३५ | असर्वज्ञनां | असर्वज्ञानां |
| १३१ | ३२ | साध्याऽनधिकरणत्वं | साध्याऽनधिकरणाऽनधिकरणत्वम्, |
| १३२ | १३ | हेतुत्वम् | हेतुत्वम् ॥ यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदके धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वम् अवच्छिद्यते तद्रूपवत्त्वं हेतुत्वम् ॥ |
| १३६ | ३३ | व्यभिचारि | व्यभिचारिव्यभिचारि |
| १३६ | २१ | वच्छिन्न | वच्छेदकावच्छिन्न |
| १३७ | २५ | विलोकजम् | विलोकनम् |
| १३८ | २ | धर्मान्नरा | धर्मान्तरा |
| १३८ | २७ | जन्यत्वाऽभावेन | जन्यत्वाऽभावाऽभावेन |
| १३९ | १८ | धूमभाव | धूमाऽभाव |
| १४० | १० | ज्ञनिः | हानिः |
| १४० | १० | सिद्धरेव | सिद्धेरिव |
| १४२ | ३५ | न्यभाव | न्याऽभाव |
| १४२ | ३७ | विशेषण | विशेषणताविशेषेण |

| पृष्ठं | पंक्तिः, | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १४२ | १२ | धूमभ्रमेण | धूलिपटले धूमभ्रमेण |
| १४२ | २२ | वत्त्वेन | वत्त्वेन घटत्वं |
| १४३ | ८ | वस्थैव | वस्तथैव |
| १४३ | १७ | पदर्थं, | यदर्थं |
| १४४ | ३२ | यद्व्याप्यत्वस्य | यदव्याप्यत्वस्य |
| १४४ | ६ | हेतु स | हेत्वस |
| १४४ | २६ | यद्भावेन | यदभावेन |
| १४४ | २८ | हेतुमवृ | हेतुमद्वृ |
| १४४ | ३१ | वा | वा हेतौ तद्वति वा |
| १४७ | ३५ | तल्लिगाऽनु | तल्लिगकाऽनु |
| १४८ | ४ | सिद्ध | सिद्धि |
| १४८ | ३८ | करणवृ | करणक्षणवृ |
| १४९ | १ | भावः | साहचर्यनियमोऽविनाभावः, समानाधि- करण्यं जन्यजनकभावः, सह |
| १४९ | २५ | ज्ञानविशे | ज्ञातविशे |
| १५१ | १३ | अन्यथा | अन्यदा |
| १५२ | ८ | नाऽभावात्मकः | नाऽभावाऽभावात्मकः, |
| १५२ | ६ | असत्यस | असत्य |
| १५६ | ८ | दानं | मानं |
| १५६ | १७ | इत्यत्रापि भुंक्ते | भुंक्ते इत्यत्रापि |
| १५७ | ३५ | वर्त्यासं | वर्त्यंसं |
| १५८ | ९ | त्वाऽनिपत | त्वनियत |
| १६१ | ९ | ऽवृत्तिना | ऽवृत्तिता |
| १६३ | १० | साधारण | साधारण्य |
| १६४ | ११ | प्रत्यक्षः प्रत्यक्षः | प्रत्यक्षः . |
| १६५ | ३८ | पक्षवृत्ति | पक्षाऽवृत्ति |
| १६५ | १० | ऽसिद्धश्च | असिद्धिश्च |
| १६५ | १६ | मानमपि . | भानमपि |
| १६५ | १८ | दोश | दोष |
| १६५ | ३६ | स्पर्शत्वात् | स्पर्शवत्त्वात् |
| १६८ | ६२ | वाह्निनो | वादिनो |
| १६८ | २७ | प्राप्तं | ( प्राप्तं ) |
| १६८ | ३१ | प्रयोगत | प्रयोग |
| १७० | ३७ | हेतुता | हेतुना |
| १७१ | २५ | विषयती | विशेषयती |
| १७२ | २५ | ऽनुद्धति | अनुदघृति |

| पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|
| १७५ | ३ | रतया | रताया |
| १७५ | ११ | कांक्षिता, | कांक्षिताः |
| १७६ | १० | विहितम् | विदितम् |
| १७६ | १५ | परं | पटं |
| १७६ | १५ | यन्तीति रिक्त | । अवच्छेद्याऽवच्छेदकभावो ज्ञाननिरूप्यस्ततोऽन्यूनाऽनतिरिक्त |
| १७७ | १५ | पार्चा | पचार्या |
| १७७ | ३६ | प्रकारका | प्रकारता |
| १७७ | ७ | भेदो | भेदेऽ |
| १८० | ३ | ४५६ | ४५१ |
| १८१ | २५ | भावानमैक्यात् | ऽभावानामैक्यात् |
| १८३ | २६ | ज्ञानाऽग | ज्ञानांऽग |
| १८३ | २९ | प्रत्य | प्रत्यक्ष |
| १८३ | २३ | धर्मभिन्न | धर्मिभिन्न |
| १८४ | २० | अथाऽवेद | अथाऽभेद |
| १८५ | १० | प्येति वार्थः | प्येतीति 'अयमात्माब्रह्मेति' च ब्रह्म विशिष्टं ब्रह्म ब्राह्मणः साधुरिति वाऽर्थः |
| १८५ | ३२ | धर्मादि | धामादि |
| १८८ | १० | शरीरित्वेन | शरीरत्वेन |
| १८८ | १७ | योगतैश्वर्य | योगजैश्वर्यं |
| १९० | ६ | उपवाने | उपमाने |
| १९० | २७ | कुलालाघव | कुलालाद्यव |
| १९१ | ३७ | काण्ठस्था | काण्डस्था |
| १९२ | ३६ | ४६२ | ४६३ |
| १९३ | २४ | कुण्ठारात् | कुठारात् |
| १९६ | ३० | ध्वंसे | ध्वंसो |
| १९९ | २८ | मोहते | मोदते |
| २०१ | १३ | निरूपितप्रकारत्वा | निरूपित संसर्गतानिरूपितप्रकारत्वा |
| २०२ | २१ | द्यनु | द्यु |
| २०३ | २७ | तद्धितोक्तं | तद्धितात्क्तं |
| २०४ | ३६ | करणता | कारणता |
| २०४ | ३६ | प्रमाणां | प्रमाणं |
| २०६ | ३६ | ङ्च | ङ्घ |
| २०७ | ३ | मतार्थे | गतार्थे |
| २०७ | ३२ | ठक् इञ् | ठक् , ठञ् |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| २०७ | ७ | क्षत्र | क्षेत्र |
| २०७ | ३६ | एद्यपि | एद्यवि |
| २०९ | २२ | स्राक् | द्राक् |
| २०९ | २२ | ह्राय | ह्लाय |
| २०९ | | अग्रम् | साचि-तिरः तिर्यगर्थौं, पाट् प्याट् अहे है भोः सम्वोधनार्थाः समयानिकषाहिरु सामीप्यार्थकाः, सहसा त्वरिताऽविचारिताऽतर्कितार्थकः, अग्रम् |
| २१० | २३ | वाई | वा ३ |
| २१२ | २१ | ण्यभावस्य | ण्यमभावस्य |
| २१३ | १२ | वच्छिन्नाऽव | वच्छिन्नावच्छेदकताऽव |
| २१२ | २२ | न्वयः। | तथा साश्रयत्वघटकभार्यात्वनिरूपकत्वोभयसंसर्गेणाऽन्वयः। |
| २१६ | ८ | विघोः | विधिः |
| २१७ | २ | शट | शकटः |
| २१७ | २७ | अभिघात्री | अभिधानी |
| २१८ | २४ | ऋतुरपि | क्रतुरपि |
| २१९ | ३० | सजर्थं | सनर्थं |
| २२० | १८ | सक्ता | शक्ता |
| २२२ | ६ | नीतां | नीलो |
| २२२ | ३३ | प्रताय्यते | प्रत्याय्यते |
| २३० | १ | भोज्य | भोऽय |
| २३२ | १४ | गृता | गृहा |
| २३३ | ३६ | भव | भाव |
| २३४ | ११ | पट्टस्य | पदस्य |
| २३५ | १० | कूल | अनुकूल |
| २३६ | ७ | घात्वर्थी | धात्वर्थी |
| २३६ | ५ | गोपदार्थे | गोपदार्थो |
| २३८ | १३ | तदिष्टयोः | तन्निविष्टयोः |
| २३९ | १० | देहत्रयम् | दोहनम् |
| २४० | ३३ | लोता | लोहिता |
| २४० | ९ | वानिति | मानिति |
| २४२ | २० | प्राक्ति | प्रकृति |
| २४२ | १६, १७ | अर्घो | अर्घो। अर्घ |
| २४३ | १३ | सम्बन्धे न | सम्बन्धेन |
| २४५ | १० | विशयत्व | विषयत्व |

| पृष्ठं | पंक्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| २४६ | ३ | तायस | तापस |
| ३४७ | ४ | रन्धाय | रन्धनाय |
| २४७ | ३४ | शुद्र | शूद्र |
| २४७ | ३५ | पक्वासन्न | पक्वान्न |
| २४८ | ५ | मिति | मति |
| २४८ | २२ | ऽविशिष्टा | विशिष्टा |
| २४८ | ३४ | शुलस्य | शूलस्य, |
| २५० | ४ | प्रत्ययो | प्रत्यययो |
| २५१ | १९ | व्यापार्थता | व्यापार्यता |
| २५१ | २६ | फलान्वयः | कालान्वयः |
| २५२ | २६ | अवाक्षीत् | अपाक्षीत् |
| २५२ | २७ | कृत्पादा | कृत्यादा |
| २५२ | ५ | बलपद | बलवद |
| २५२ | २७ | ज्ञाने | ज्ञानेन |
| २५४ | ७ | भावित | भाविन |
| २५५ | ३ | महिंसं | महीनं |
| २५६ | २५ | विपक्षा | विवक्षा |
| २५६ | ७ | गुरुमत | गुरुतम |
| २५६ | ११ | तिपा | तिपा कर्तुरुपस्थापनमिति चेन्न, चैत्रः पचतीत्यादौ सुपा चैत्रादौ, तिपा च |
| २५७ | १४ | कर्तरि | कर्तुरि |
| २५८ | ११ | अष्टमत्वच | अष्टम च |
| २५९ | २६ | लिङ्ग | लिङ् |
| २६० | ७ | वध्यस्ता | वध्यस्तां |
| २६१ | १५ | वक्ति | वक्ति, आवागामः सत्यापयति अर्थापयति । प्रियं स्थिरं वा वक्ति । |
| २६२ | २१ | कामयियता | कामयिता |
| २६२ | ३३ | तपस्या | तस्या |
| २६२ | ४ | प्रापच्यते | पापच्यते |
| २६३ | ९ | मिनादेयः | मिनादेशः |
| २६३ | १३ | हरण | एरण् |
| २६३ | ३६ | इतिः | इनिः |
| २६४ | २३ | साध्यं | सान्ध्यम् |
| २६४ | २६ | औधषम् | औषधम् |
| २६५ | २६ | अभावास्यः | अमावास्यः |
| २६५ | २७ | आमा | वस्यः अमा |

| पृष्ठं | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २६५ | ३४ | शत | अण् शत |
| २६५ | ३८ | हस्ति | हास्ति |
| २६५ | ३ | माशब्द | ठक् माशब्दः |
| २६५ | २० | ङीप् | ङीष् |
| २६५ | ३७ | एनावान् | एतावान् |
| २६६ | १ | थक् | थुक् |
| २६७ | १३ | सतन्त्रं | सततं |
| २६७ | ३५ | मालाः | मालः |
| २६७ | ३० | सुराष्ट | सुराष्ट्र |
| २६८ | ५ | रच | स्व |
| २६८ | १४ | पुंसा | पुंसां |
| २६९ | १५ | ज्ञानः | ज्ञानः । तद्भिन्नः दृष्टसागरम् आनयेत्यत्र अतद्गुणसंवि |
| २६९ | २० | तङ्घः | जङ्घः |
| २६९ | १५ | श्वश्रु | श्वश्रू |
| २६९ | १७ | तथ | तथा |
| २७० | २० | स च यौ | स च देवदत्तश्च तौ |
| २७० | ३५ | तिङा | तिङां |
| २७० | २८ | स्वम्बे | स्तम्बे |
| २७१ | ५ | ब्राह्मणीबुवा | ब्राह्मणीब्रुवा |
| २७१ | २१ | विश्वसेनः | विश्वक्सेनः |
| २७१ | २८ | दूणशः | दूणाशः |
| २७१ | ६ | शक्प | शक्य |
| २७१ | ७ | कल्य | कल्प |
| २७२ | १० | स्कार्थम् | स्वीकार्यम् |
| २७५ | २७ | संभवेन | असंभवेन |
| २७५ | ३२ | सम्पत्यो | दम्पत्यो |
| २७६ | २४ | निरूढा | पिप्पलीपदस्य निरूढा |
| २७६ | ३५ | बोधेन | बोधने |
| २७६ | ३६ | आकांक्षः | आकांक्षा |
| २७७ | २३ | सानुद | सामुद |
| २७७ | २४ | नीलत्यादौ | नीलत्वादौ |
| २७९ | ८ | ऽर्थे | ऽर्घं |
| २८४ | ४ | शक्त्या | शक्या |
| २८४ | ५ | द्वाटतावत् | द्वाटतावत् |
| २८४ | २८ | स्माद्वै | स्याद्वै |

| पृष्ठं | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८४ | ३२ | मतिभा | प्रतिभा |
| २८७ | ३ | क्षयन्ते | क्षमन्ते |
| २८८ | २६ | प्रकाशस्याऽपि | प्रकाश्यस्यापि |
| २८८ | २ | भावात् | भावात् स्वयंप्रकाशत्वाभावात् |
| २८८ | १३ | प्रकाशत्वं | प्रकाश्यत्वं |
| २८८ | १४ | प्रदीपा | प्रदीप |
| २८९ | २९ | ताग्रत् | जाग्रत् |
| २८९ | १४ | वर्त्ततत्तैव | वर्त्ततैव |
| २९० | १९ | ऽऽधीः | ऽऽद्यधीः |
| २९७ | २६ | मिन्द्रिपं | मिन्द्रियं |
| २९७ | ३४ | पूर्व्यशा | पूर्व्यंशा |
| २९८ | ९ | रूपिता | रूपितत्व |
| २९८ | १९ | क्षणाय | क्षणया |
| २९८ | १९ | क्लृप्तातया | क्लृप्तया |
| २९८ | २६ | विगतानि | विमतानि |
| २९८ | २७ | वादोऽत्र दर्शितः | वादेऽत्र दर्शिताः |
| २९९ | २२ | रूपणां | रूपाणां |
| ३०० | २४ | प्रीतीतिक | प्रातीतिक |
| ३०१ | ८ | यर्थानां | यथार्थानां |
| ३०२ | २८ | प्रतीतिकं | प्रातीतिकं |
| ३०३ | ७ | सिद्धिः | सिद्धि |
| ३०३ | १५ | त्वन्ता | त्यन्ता |
| ३०३ | ३० | तद्भाववर्ति | तदभाववति |
| ३०४ | २४ | संसगं | संसर्ग |
| ३०४ | १५ | तीतेषु | तीयेषु |
| ३०५ | १२ | निरुपा | निरूपा |
| ३०६ | १६ | निरूवित | निरूपित |
| ३०६ | ४ | ऽमीकारः | ऽगीकार |
| ३०६ | ११ | विषत | विषय, |
| ३०७ | ६ | यत्तु | तत्तु |
| ३०९ | ३६ | अनुभवेषां | अनुभयेषां |
| ३०८ | ३८ | हार्यात् | हार्दात् |
| ३१० | १९ | र्मामान्तरम् | र्नामान्तरम् |
| ३११ | १८ | प्राक् | द्राक् |
| ३११ | १० | मुभवः | नुभवः |
| ३१२ | २० | सुधुम्नस्य | सुद्युम्नस्य |
| ३१३ | ११ | प्रमिताख्ये | प्रमित्याख्ये |

| पृष्ठं | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१३ | १६ | स्तद्वय | स्तद्व्य |
| ३१५ | ४ | ज्ञप्नीनां | ज्ञप्तीनां |
| ३१५ | १३ | स्वी | स्वोय |
| ३१७ | १२ | ष्टाक्त | ष्टाऽऽत्म |
| ३१७ | १८ | वेधऽपर्य | वेध:पर्य |
| ३१८ | २८ | चोभौ | जागरितान्तं चोभौ |
| ३१८ | ३ | स | ज्ञः |
| ३१९ | ५ | ज्ञानशक्तिभ्यां | ज्ञानक्रियाभ्यां |
| ३१९ | ३२ | कालावती | कालवती |
| ३२० | २४ | वद्वय | वद्व्य |
| ३२० | ५ | कारणाम् | कारणम् |
| ३२१ | २२ | च | च प्रमेयं च |
| ३२१ | २४ | ओं | 'यत्तदीश्वरपूजनम्'। 'यज्ञन्तं विभुमीश्वरम'। 'आत्मा जीवेश्वरात्मना' 'ओं |
| ३२१ | ८ | पुजक्ति | भुनक्ति |
| ३२१ | १९ | सत्त्वस्यैवः | सत्त्वस्यैषः |
| ३२२ | ३२ | शुक्रं | शुभ्रं |
| ३२३ | १८ | द्वष्ट्व | द्रष्टृ |
| ३२४ | १५ | मपजन्त | मयजन्त |
| ३२४ | १६ | साकारस्त्वै | साकारास्त्वै |
| ३२५ | ६ | मन्युक्त | मन्मुक्त |
| ३२५ | १८ | पत्यगा | प्रत्यगा |
| ३२५ | १७ | कमेणैव | क्रमेणैव |
| ३२५ | १० | चोपास्थः | चोपास्यः |
| ३२५ | १४ | बाह्यारा | बाह्याऽऽ |
| ३२६ | १८ | चाऽगि | चांऽगि |
| ३२६ | ३४ | जाडच्युता | जाडचयुता |
| ३२७ | १७ | व्रह्म | ब्रह्म |
| ३२८ | २० | परव्रह्मण | परब्रह्मण |
| ३३२ | ४ | प्रभा | प्रमा |
| ३३४ | १ | मया | माया |
| ३३५ | ११ | तद्रुपं | तद्रूपं |
| ३३४ | ३७ | ब्रह्माप्रीति | ब्रह्माऽपीति |
| ३३७ | ९ | प्रजाये'ति | प्रजायेये'ति |
| ३३८ | ,, | तदाय | तदायु |
| ३३८ | ७ | व्रह्म | ब्रह्म |

| पृष्ठं | पंक्ति | अशुद्धं | शुद्धम् |
|---|---|---|---|
| ३३८ | ७ | भाषा | भासा |
| ३४१ | ३ | ग्राह्मं | ग्राह्यं |
| ३४५ | १९ | नपेक्ष्य | नपेक्ष |
| ३४५ | २१ | प्रकारिणी | प्रकारिणि |
| ३४५ | २६ | नाक्षात् | साक्षात् |
| ३४७ | ७ | गमने | गगने |
| ३४७ | ३७ | दीपा | दीप |
| ३४७ | २५ | द्रष्टृ | तथाविधयथायोगद्रष्ट |
| ३४७ | ३२ | ब्रह्म | ब्रह्मदृष्टि |
| ३४७ | ३३ | यावत्त्वेन | भावत्त्वेन |
| ३४८ | ६ | तृष्णये | तृष्ण्ये |
| ३५२ | १४ | अविद्याता | अविघाता |
| ३५२ | ३७ | तत्तद्वाप्ति | तत्तद्व्याप्ति |
| ३५२ | १० | अविद्यातार्थं | अविघातार्थं |
| ३५५ | २ | ततंते | वर्तते |
| ३५६ | १६ | सभूतला | समभूतला |
| ३५७ | २ | संशयदादि | संशयादि |
| ३५७ | ११ | यानं | भानं |
| ३५७ | १४ | विषदम् | विषयम् |
| ३५७ | २२ | सति | सती |
| ३५७ | ३६ | दक | दृक् |
| ३५८ | ५ | निर्णीतुं | निर्णीतं |
| ३५९ | ६ | मदादिना | मृदादिना |

श्रीमद्वैष्णवविद्वत्सार्वभौम,–दार्शनिकपञ्चानन,–षड्दर्शनाऽऽचार्य,–नव्यन्यायाऽऽचार्य,–सांख्ययोग-वेदान्तमीमांसातीर्थ,–काव्यकुशलैः, ENG–AM. A, पण्डितवर्य,–श्रीकृष्णवल्लभाचार्य्यैः–विरचितानि संस्कृतादिपुस्तकानि—

| | | | | |
|---|---|---|---|---|
| १—न्यायसिद्धान्तमुक्तावल्याः किरणावली | ... | ... | ... | संस्कृतम् |
| २—तर्कसंग्रहदीपिकायाः······किरणावली | ... | ... | ... | ,, |
| ३—न्यायबोधिनीपदकृत्ययोष्टिप्पणी | ... | ... | ... | ,, |
| ४—सांख्यकारिकायाः स्वामिनारायणभाष्यम् | ... | ... | ... | ,, |
| ५—सांख्यतत्त्वकौमुद्याः······किरणावली | ... | ... | ... | ,, |
| ६—सांख्यकारिकागौपडपादभाष्यस्य···किरणम् | ... | ... | ... | ,, |
| ७—योगसूत्राणां······स्वामिनारायणभाष्यम् | ... | ... | ... | ,, |
| ८—योगसूत्रभोजवृत्तेः किरणम् | ... | ... | ... | ,, |
| ९—श्रीस्वामिनारायणवेदान्तसारः | ... | ... | ... | ,, |

१०—हितोपदेशे मित्रलाभस्य किरणावली ... ... ... संस्कृत-हिन्दी
११—शिक्षापत्र्याः......किरणावली ... ... ... संस्कृत-गुजराती
१२—श्रीगुणातीतानन्दस्वामिवार्तोपदेशपञ्चप्रकरणानि ... ... संस्कृत-हिन्दी
१३—श्रीगोपालानन्दस्वामिवार्तोपदेशत्रिप्रकरणानि ... ... ,,
१४—श्रीस्वामिनारायणवचनामृतानि ... ... ... हिन्दी
१५—शिक्षापत्री ... ... ... ... ,,
१६—अखिलभूमण्डलीयसम्प्रदायिकमुक्तिव्यवस्था ... ... ... संस्कृत-गुजराती
१७—तत्त्वप्रभावली, श्वैतायनीयं विशिष्टं न्यायशास्त्रं,–प्रमाणप्रमेयप्रमितिप्रमात्रात्मक-चतुःखण्डात्मकम् ... ... ... ... संस्कृतम्
१८—श्रीगुणातीतब्रह्मोपनिषत् ... ... ... ... ,,
१९—विशिष्टाऽद्वैतेऽपि विशिष्टब्रह्माऽद्वैतत्वम् ... ... ... ,,
२०—ख्यातिविमर्शः......त्रिंशदधिकख्यातयः ... ... ... ,,
२१—प्रमात्वविमर्शः......प्रमात्वाऽप्रमात्वविचारः ... ... ... ,,
२२—जातिविमर्शः......जातिपरिवर्तनादिविचारः ... ... ... ,,
२३—वचनामृतप्रामाण्यहेतवः......२६२ स्तबकसद्धेतवः ... ... ,,
२४—सुधासिन्धुसूत्राणि २०५१ संख्यकानि ... ... ... ,,
२५—श्रुतितात्पर्यनिर्णयः वेदान्तग्रन्थः ... ... ... ,,
२६—साकारत्वविमर्शः सर्वं साकारमितिसूक्ष्मविचारः ... ... ,,
२७—श्रीहरिस्वरूपनिर्णयस्य सत्संगभाष्यम् ... ... ... ,,
२८—अवताराऽवतारित्वे पुराणादिवचनानि ... ... ... ,,
२९—श्रीहरिवाक्यसुधासिन्धोः ब्रह्मरसायनभाष्यम् ... ... ... ,,
३०—चित्सुखीटिप्पनी ... ... ... ,,
३१—कविकाव्यगौरवम् ... ... ... संस्कृतम्
३२—श्रीस्वामिनारायणदर्शनं कल्याणीवृत्तिसहितम् सप्तमं दर्शनशास्त्रम्, सूत्रात्मकम्, ,,
३३—श्रीसत्संगिजीवनस्य सारबोधिनी पारायणी टीका, एतत् धर्मशास्त्रं धर्मज्ञानवैराग्यभक्ति-निरूपकं श्रीमद्भागवतसदृशं पञ्चप्रकरणात्मकं अष्टादशसाहस्रश्लोकात्मकम् ... ,,
३४—साक्षात्कारसूत्राणि, सर्वं साक्षादितिप्रतिपादकम् ... ... ,,
३५—तत्त्वमुक्ताकलापस्य पञ्चसरात्मकस्य किरणावली ... ... ,,
३६—भगवतो भगवतीनां हनुमदादीनां च स्तोत्राणि ... ... ... ,,
३७—मीमांसाया अर्थसंग्रहस्य किरणावली ... ... ... संस्कृत-हिन्दी
३८—मीमांसायाम् अंगत्वादिपरिस्कृतिः ... ... ... संस्कृतम्
३९—सुधासिन्धुसारसन्दोहनम् ... ... ... ,,
४०—दर्शनतत्त्वसारः ... ... ... ,,
४१—भक्तिरससरित् ... ... ... ,,
४२—सामान्यनिरुक्तिगादाधारीक्रोडपत्रम् ... ... ... ,,
४३—श्वेतायनसंहिता ( लक्ष्मीनारायणसंहिता १,२६००० श्लोकात्मिका ) ... ,,
४४—विविधाविप्रतिपत्तयः, ... ... ... ,,
४५—पञ्चतत्त्वनिर्णयः ... ... ... ,,

प्राप्तिस्थान—

**चौखम्भा ओरियन्टालिया**

प्राच्यविद्या एवं दुर्लभ ग्रन्थों के प्रकाशक तथा विक्रेता

पो० आ० चौखम्भा, पो० बा० नं० ३२

गोकुल भवन के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी-२२१००१ ( भारत )